146-14 ...निर्वृत्तय इति । परमात्मा हि
148-18 उपक्रमश्च महावाक्या–
152-16 हेतुत्वेनोपन्यासात् [भा. प्र.]
152-19 निर्देशहेतुपरत्वं [भा. प्र.]
159-16 सद्द्रव्यस्य तत्तच्छब्दवाच्यत्वाभावात् [भा. प्र.]
167-24 बहुष्वधिकरणेषु [भा. प्र.]
171-22 निमित्तत्वमात्रे [भा. प्र.]
172-10 योनिष्ट इन्द्र सदने अकारि
177-27 कनकमभेदमपीष्यते (पा.)
183-15 ...विषयतासमर्थनपरत्वं [भा. प्र.]
186- 1 'क्षत्रादिविभागवत्तदभिमानि...' इति समस्तं पदम् ।
189- 7 'अपुनर्भवाय कोशं भिनत्ति' इति आमृत्युपक्रमाधिकरणे पाठः। श्रुतिरियमैतरेयोपनिषत् ।
193- 9 'विरूपाक्षाय दत्ताञ्जये' इति श्रुतिः मन्त्रब्राह्मणे (२-४) द्रष्टव्या । 'कस्योदरे' (श्लो. १४) इत्यत्र स्तोत्ररत्नभाष्ये एतद्वाक्यं पूर्वापरसन्दर्भप्रदर्शनपूर्वकं आचार्यैर्व्याख्यातम् । तत्रात्र च भूयान् पाठभेदः । [संपादकः]
194-26 एष हि देवः [पा ]
195-14 परमं पवित्रं भगवान् वासुदेवः[पा.]
199-20 परमसात् कृताः (पा.)
201-16 विराजो अधि पूरुषः
210-32 यद्वै किञ्च मनुरवदत्
212-14 सर्ववेदवदान्त–
220-19 भोगाश्रयत्वेन्द्रियाश्रयत्वोक्तेः (भा. प्र.)

222- 9 प्राणसम्भवेऽपि...धारणार्थत्वेनावस्थानं नास्ति । (न्यायसिद्धाञ्जने जडद्रव्यपरिच्छेदे वायुनिरूपणे आचार्यो पात्तः पाठ एवम्) [सं.]
228- 4 ...क्षपणेन शिष्टाश्च वेदापरिगृहीताः [पा.]
245- 9 स्वस्तिकाश्रितहेम्नोऽप्यनुवृत्तेरविरुद्धा (भा. प्र.)
246-32 ऊहस्तर्कोऽनुमा युक्तिः
250-23 'इदमिदं न भवतीति हि वस्तुपरिच्छेदः । इदमिदं भवतीति निर्देशयोग्यत्वं वस्त्वपरिच्छेदः' इति श्रुतप्रकाशिका । अत्र विशेषविचारः श्रीमद्भिः वत्सकुलतिलकैः वात्स्यवरदाचार्यैरनुगृहीतायां श्रीभाष्यप्रमेयमालायां 'त्रिविधपरिच्छेदराहित्यम्' इति नामके सप्तमे वादे द्रष्टव्यः । (सम्पादकः)
252-18 अजहल्लक्षणयेदम् (पा.)
264- 6 अभिप्रेत्येमं भेदं (शतदूषणी (६६ वादे) दृष्टः पाठ )
264-10 शुक्तिकारजत-मरीचिकाजलादिभेदवत् [शतदूषणी (६६ वादे) दृष्टः पाठः)
264-22 प्रतिपाद्यमानस्य [पा.]
264 27 भेदप्रतिपत्तेः [भा. प्र.]
265-30 ...दधिकरणशेष इत्यर्थः । (पा.)
266- 1 उपसंहारदर्शनाधिकरणम्
278-15 'भेदानां परिमाणात्' [श्लोकोऽयं सर्वार्थसिद्धौ[श्लो. ११] विस्तरेणाचार्यैः खण्डितः]

279-13 'चकारादन्वयस्य...' (वाक्यमिदं न्यायसिद्धाञ्जनव्याख्याने विस्तरेण व्याख्यातम्)

284- 4 'दया हि नाम स्वार्थनिरपेक्षा परदुःखासहिष्णुता' [अत्र 'दया दुःखासहिष्णुत्वम्' [३१-१९] इति अहिर्बुध्न्यसंहितावचनं मूलमिति अवधेयम् । [सं.]

296-15 'इति समुदायाधिकरणम्' इत्येतत् निष्कास्यम् ।

299-26 चाक्षुषत्वे

299-28 निर्वाणस्येति ।

303-11 ज्ञानस्य द्रव्यमेव । (न्यायसिद्धाञ्जने बुद्धिपरिच्छेदे पाठ एवम्)

308-33 अपरमिति । शरीरसंस्थानं

310-28 'यद्वा विकारो जन्मादिः' इत्येव तत्त्वमार्ताण्डे (पु- ५४५) पाठः ।

310-30 निरुपाधिकधर्मरूपत्वादिति [तत्त्वमार्ताण्डे (पु. ५४५) पाठः ।

311- 9 'अन्त्यपरिमाणस्य नित्यत्वे' इत्यत्र श्रुतप्रकाशिकायां बहुधा पाठभेदाः श्रीरङ्गरामानुजमहादेशिकैः भावप्रकाशिकायां प्रदर्शिताः इहावधेयाः ।

315-29 'शरीरमपि—' इत्यारभ्य आगमप्रामाण्यवाक्यानीति ज्ञायते । ईदृशानि वाक्यानि प्रकृतप्रकरणे आगमप्रामाण्ये नोपलभ्यन्ते । कोशा निरीक्ष्याः । [सं.]

318-22 यष्टव्य इति यजनरूपतोक्तिः

319-30 एवमुक्तस्नन्तेन [भा. प्र.]

329-20 'इत्युक्तम्' [आरम्भणाधिकरणे इति शेषः । (सं. ]

324- 6 'सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते' इति आगमप्रामाण्यवाक्यम् । (सं.)

325- 3 'विभवार्चनात् व्यूहं प्राप्य, व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यते' इत्यत्र श्रीमन्न्यायसिद्धाञ्जने नित्यविभूतिपरिच्छेदान्ते तद्व्याख्यातृभिः श्रीरङ्गरामानुजमुनिभिः 'अर्चोपासनया क्षीणे कल्मषेऽधिकृतो भवेत् । विभवोपासने पश्चात् व्यूहोपास्तौ ततः परम् । सूक्ष्मं तदनु शक्तः स्यात् अन्तर्यामिणमीक्षितुम्' इति श्रीपाञ्चरात्रवचनान्युपात्तानि मूलभूतानी-त्यवधेयम् । ते, अन्ये च श्लोका सर्वदर्शनसङ्ग्रहे भगवद्रामानुजदर्शनप्रस्तावे उपात्ताः । (सम्पादकः, चेट्लूर् वा. श्रीवत्साङ्काचार्यः)

326- 4 'प्रातः प्रातरनृतं ते वदन्ति' इति वाक्यं ऐतरेयब्राह्मणे ५-३१-६ द्रष्टव्यम् ।

332-22 'पूर्वमेव प्रपञ्चेन कृताः' । पूर्वमेव-पूर्वाधिकरण एवेत्यर्थः । (सं.)

340- 7 ब्रह्मकार्यतयाऽभिहित...(पा.)

344- 7 पूर्वपक्षितम्; नापि तूत्पत्ति...
(भा. प्र.)

345-25 'नाप्युत्पत्तिश्रुतिः दिक्कालादिदेवतामात्रविषयेति वाच्यम्' इति श्रुतप्रकाशिकायां वर्तते । वस्तुतः इदमेवास्मत्सिद्धान्तत्वेनाभिमतमिति न्यायसिद्धाञ्जने स्पष्टम् । (सं.)

352-27 विनाशयोर्जीवगतत्वशङ्कया[भा.प्र.]

356-20 'न जायते म्रियते' इत्यादिश्रुतेः

367- 7 न कारकव्यापारवैयर्थ्यमिति ।
[भा. प्र.]

375-21 'निस्स्पन्दत्वं हि' इति शुद्धः पाठः। 'निःष्पन्द इति षत्वं चिन्त्यम्' इति वामनालङ्कारसूत्रमिहावधेयम्।[सं.]

377-27 साधारणोपकारासाधारणोपकार-वैषम्येण–(तत्त्वमार्ताण्डे [पु. ५९३] दृष्टः पाठः)

377-28 सर्वसाधारणः (,, ,,)

377-29 भवति तन्मुखेन (,, ,,)

377-31 गुणत्रयोद्भवाभिभवविशेषो (,, ,,)

378- 6 ईश्वर एव फलप्रदः, विषयसन्नि-धानादेरपि[तत्त्वमार्ताण्डदृष्टः पाठः]

378- 7 अभिसन्धिविशेषादिति ब्रूमः । [,,]

378-11 प्रवर्तकत्वनिवर्तकत्वयोरुभयोरप्य-भावात् (,, ,,)

378-14 इच्छोत्पत्तेः प्रवृत्ति(निवृत्ति) साम-र्थ्येऽपि निवारकत्वाभावात् । जीव-नेच्छायां सत्यामपि तस्य विषसम्पृ-क्तत्वज्ञाने सति ( ,, ,, )

378-15 काष्ठविक्रायको महानिधिलाभज्ञाने सति [,, ,,]

378-18 अत एव कृत्याकरण... [तत्त्वमार्ता-ण्डे (पु. ५९४] दृष्टः पाठः)

378-19 एवापराधो दण्डयत्वे हेतुः । [, ,]

378-22 प्रयत्नादिषु तु परमात्मा अभिमन्धि-मानेव हेत्वन्तरासन्निधाने तमपि
[तत्त्वमार्ताण्डदृष्टः पाठः]

3,8-25 करोति; तत् प्रयोजकत्वम् [,, ,,]

378-27 नतु तत् कल्प्यते । [ ,; ,, ]

378-30 न तदनिष्टम् । नियन्तृत्वश्रुतेस्ता-वान् सङ्कोचोऽभिमतः; [,, ,,]

379- 5 सङ्कोच एवानिष्टः । ( ,, ,, )

379-18 ...निवारणात् । इति । (,, ,,)

379-19 विधिनिषेधशास्त्रावैयर्थ्यं (,, ,, )

379-20 निरङ्कुशस्वातन्त्र्यवत्त्वम् अवस्था-त्रयवैषम्यं दयादिगुणापौष्कल्यं [,, ,,]

388- 7 ...थाभावरूपोत्पत्तिरपोदिता [पा.]

394- 1 द्वितीयाध्याये चतुर्थपादे

394-50 'सिद्धान्ते स्वधयेत्यनेने'ति । अत्र चतुःश्लोकीभाष्ये [श्लो. २]आचार्यैः श्रीमन्निगमान्तमहागुरुभि — "अथ स्यात् -'आनीदवातं स्वधया तदेकम्' (तैत्तिरीयब्राह्मणे २-८-९) इति प्रलयदशायां स्वधाशब्दवाच्यया कयाचित् परस्य ब्रह्मणोऽननं श्रूयते। सा चात्र 'स्वधा त्वं लोकपावनी' (विष्णुपुराणे १-९-१०९) इति पुराणोक्तेः, महाभारते च श्रीवास-वसंवादे 'अहं स्वाहा स्वधा चैव' इति स्वयमेवोक्तत्वात्, औचित्याच्च लक्ष्मीरेव । अतस्तदधीनप्राणनत्वं ब्रह्मण इति ।। तन्न । स्वाधीनसर्व-सत्ताकस्य तस्य अन्याधीनप्राणन-त्वासम्भवात् । स्वधाशब्दस्य अत्र प्रयोगदर्शनमात्रेण लक्ष्मीविषयत्व-कल्पनादपि, स्वस्मिन् धीयते इति व्युत्पत्त्या स्वसत्ताविषयत्वस्य कल्प-यितुं युक्तत्वात् । स्वकीयं विश्व-

धारणसामर्थ्यमेव वा स्वधा । तथा 'श्रेष्ठश्च' (२-४-७) इत्यत्र भाष्यम्— 'आनीदवातम्,' [ऋक् ८-१०-१२९-२] इति तु न जैवं श्रेष्ठं प्राणनमभिप्रेत्योच्यते । अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते ।' इति । अत्रानन्याधीनसत्ताकत्वमेव ह्यभिप्रेतम् । अस्तु वा 'स्वधया' इति पदं लक्ष्मीविषयम् । तथाऽपि सहयोगविवक्षैवात्र युक्ता । यथा महाभारते (मोक्षधर्मे ३४७-७२) 'कृत्वा मत्स्यानि भूतानि चराणि स्थावराणि च । एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम' इति ।। ननु 'ततो भूयो जगत्सृष्टिं करिष्यामीह विद्यया' (मोक्षधर्मे ३४७-७३) इति वाक्यशेषेण औचित्यात् तत्र विद्याशब्दः प्रकृतिविषयः स्यात् ।। भवत्वेवम् । तथाऽपि प्रस्तुतसहोक्तिमात्रसम्भवोदाहरणमिदं युज्यत एव । यद्वा, 'तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति' [सुन्दरकाण्डे १५-२५] इतिवत् 'स्वधया आनीत्' इति प्रेमपारतन्त्र्ये तात्पर्यम् ।।' इति विस्तरेणायं भाष्यभागो व्याख्यातोऽवगन्तव्यः । [संपादकः]

397-29 न तथाऽस्य वाक्यस्य निर्वाहः (भा. प्र.)

398- 3 एवमेवैष एतत् (पा.)

400- 5 परमात्मायत्तमिति [अधिकरणचिन्तामणि [श्लो. २६३] पाठः]

497- 4 प्रश्ननिरूपणाभ्याम् । पञ्चाग्निविद्यायामेवं

407- 7 पृष्ट्वा इममर्थं (भा. प्र.)

408-13 'स्मर्यते च' । (अत्र 'स्मर्यते च' इति श्रीभाष्यकृद्वाक्यमिति स्पष्टम् । परं तु श्रुतप्रदीपिकायाम् [३-१-१ अधिकरणे] 'प्राणगतेश्च' 'स्मर्यते च' इति सूत्रे उपादाय 'सूत्रद्वयं स्फुटम्' इति व्याख्यातम् । तत् कथमिति विमृष्टव्यम् । 'सौत्री संख्या शुभाशीः—' इति अधिकरणसारावल्यां प्रतिपादनात् तत् न सङ्गतमिति भाति । विद्वांसः प्रमाणम्] सम्पादकः—चेट्टलूर् वा. श्रीवत्साङ्काचार्यः ।

408-18 वागप्येति, वायुं प्राण...

409-23 अस्मिन्नेव वाक्ये ह्युत्तरत्र(भा. प्र.)

409-34 इष्टापूर्ते दत्तमित्युपासते—

410- 4 परिष्वजते (भा. प्र.)

410-10 पूर्वपक्षसूत्राणि ,, ,,

413-18 विषयशुद्ध्यर्थं

416- 5 नेति संशय्यते । [अधिकरणचिन्तामणिपाठोऽयम्] ।

416-31 निमित्तसप्तमी [भा. प्र.]

417-23 यमसदनप्राप्तिपराणि वचनानि [भा. प्र.]

418-23 जज्ञे ममार ,, ,,

419-27 नरकेषु याम्या यातना अनुभूय [भा. प्र.] ('यामीश्चिर यातनाः'

इति मुकुन्दमालामनुसृत्य श्रुतप्रकाशिकायां 'यामीर्यातना:' इति प्रयुक्तमिति भाति । 'यमाच्चेति वक्तव्यम्' इति काशिकावचनात् याम्या: इत्येव साधुरिति भावप्रकाशिकाकाराणामाशय: स्यात्—सम्पादक:)

425-27 वाक्यस्य वैयर्थ्यम्,

428.20 जीवसृष्टत्वस्य

428-27 मिथ्यात्वानुपयुक्तस्य 'पराभिध्यानात्' इति सूत्रितत्वादेव (भा. प्र.)

430- 4 इदमाम्नायते—'तद् यत्रैतत् सुप्त:.. (भा. प्र.)

433-16 अर्थान्तरप्रत्यभिज्ञाधारत्वं ,, ,,

439- 1 ४३९

445-15 अतत्प्रधानेभ्योऽपि भा. प्र.

451- 6 भूयोऽपीत्युपादानात् भा. प्र.

457-14 कृष्यादिकं गात्रमर्दनादिक च भा. प्र.

457-20 कल्याणगुणगण इति ,, ,,

462-14 देवोपपद्यते ।

463-20 ...विद्योत्पादकत्वमिति चेन्न—

464-14 वाजसनेयकोक्तानुवाद:;

475-12 लोकान्न् सृजै

480-27 भुञ्जीतेति विधिवत् भा. प्र.

486-30 मन्त्रावगतवस्तुसामर्थ्यरूपाल्लिङ्गादित्यर्थ: भा. प्र.

487-17 अरण्येऽनुवाक्यत्वपदम् भा. प्र.

488-11 'कुशा वानस्पत्या:' इति । अत्र उद्यानपत्रिकायाम् (Nov. 1940) श्रीमद्भि: V. R. S. ताताचार्यै: 'कुशाशब्द: साधु:' इति शीर्षके यद् विवृतम्, तत् तथैवात्र विषये सन्दर्भशुद्ध्यर्थमस्माभिरुपस्थाप्यते । —संपादक: ।

'शारीरकमीमांसायां तृतीयाध्याये तृतीयपादे हान्यधिकरणे 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम्' इति सूत्रे प्रदेशान्तराम्नातवाक्यशेषत्वे 'कुशाच्छन्दस्स्तुत्युपगानवत्' इत्येवं चत्वारो दृष्टान्ता उपन्यस्यन्ते स्म । तत्र प्रथमदृष्टान्तविषये शाङ्करभाष्ये 'कुशा वानस्पत्या: स्थ ता मा पात' इत्येतस्मिन् निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणे शाट्यायनिनाम्, 'औदुम्बरा:' कुशा:' इति विशेषवचनात् औदुम्बर्य: कुशा आश्रीयन्ते' इत्यभाष्यत ।। तद्व्याख्यानभामत्यां 'छन्द एव आच्छन्द:, आच्छादनात् छन्दो भवति' इति प्रत्यपाद्यत ।। तद्व्याख्याने कल्पतरौ "कुशशब्दो हि न स्त्रीलिङ्ग:, 'अस्त्री कुशं—' इति अमरसिंहेनानुशिष्टत्वात् । अत: तदविरोधेन सूत्रेण पदं चिछनत्ति—आच्छन्द इति । आङुपसर्गस्यार्थमाह—आच्छादनादिति । अनुष्ठातारं पापादाच्छादयतीति आच्छन्द इत्यर्थ: । श्रूयते हि 'छादयन्ति ह वा एनं छन्दांसि पापात् कर्मण:' इति । अत्र समिध: कुशा इत्युच्यन्ते, 'औदुम्बरा:' इति विशेषणात्। 'समिद्वाची कुशाशब्द: अन्य एव स्त्रीलिङ्ग इति लिङ्गानभिज्ञानात् वाचस्पति: पदं चिच्छेद' इति केचित् । तदतिमन्दम् । अनेकशब्दत्वस्यान्याय्यत्वात् । कुशसंबन्धात् समित्सु कुशशब्दस्य तु लाक्षणिकत्वोपपत्ते:, यज्ञसम्बन्धादिव गार्हपत्ये इन्द्रशब्दस्य । यदि तु कस्यांश्चित् श्रुतौ 'औदुम्बर्य:' इति प्रयोग: स्यात्, तर्हि स:

च्छान्दसो भवेत् । भाष्ये च तस्यानुकारमात्रम् तस्मात्,

पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः ।
वाचस्पतेरियत्यर्थेऽप्यबोध इति साहसम् ॥'

इति व्याख्यानेन कुशाशब्दसद्भावो निराक्रियत।

सिद्धान्तकौमुद्यां लिङ्गानुशासने पुंनपुंसकाधिकारे कुशशब्दलिङ्गनिरूपणावसरे 'शलाकावाची तु स्त्रियाम् । तथा च 'जानपद–'आदिसूत्रेण अयोविकारे ङीषि कुशी । दारुणि तु टाप् । 'कुशा वानस्पत्याः स्थ ता मा पात' इति श्रुतिः । 'अतः कृकमि–' इति सूत्रे 'कुशाकर्णीषु' इति प्रयोगश्च । व्याससूत्रे च 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्द–' इति। तत्र शारीरकभाष्येऽप्येवम् । एवं श्रुति-सूत्र-भाष्याणामेकवाक्यत्वे स्थिते 'आच्छन्दः' इति आङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः' इति कुशाशब्दसद्भावः प्रमाणपुरस्सरम् असाध्यत ॥

अत्र श्रुतप्रकाशिकाव्याख्यानभावप्रकाशिकाविचारग्रन्थवाचने सिद्धान्तकौमुद्युक्तमेव प्रामाणिकं भाति । भावप्रकाशिकायां कुशाशब्दसद्भावे प्रतिपादिता हेतवस्त्विमे—

१. 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति पाणिनीयसूत्रे कुशाशब्दनिर्देशः। २. अयस्कुशा–इत्युदाहरणम् । ३. 'जानपद–' इत्यादिसूत्रे स्त्रीलिङ्गकुशशब्दात् ङीष्विधौ, अर्थान्तरे ङीष्व्यावृत्तिफलकं अयोविकाररूपार्थविशेषोपादानम् । ४. 'कुशी भवति अयोविकारश्चेत्, कुशाऽन्या' इति काशिकावृत्तौ उदाहरणप्रत्युदाहरणयोः प्रदर्शनम् । ५. कुशाऽन्या इत्यत्र 'छन्दोगाः स्तोत्रीयागणनार्थान् औदुम्बरान् शङ्कून् 'कुशाः' इति व्यवहरन्ति' इति तद्व्याख्यातॄणां व्याख्यानम् । ६ः श्रुतिषु 'औदुम्बर्यः कुशाः' इति सर्वत्र स्त्रीलिङ्गतयैव पाठः । ७ः क्वापि 'औदुम्बराः कुशाः' इति वा, 'औदुम्बराणि कुशानि' इति वा पाठाभावः । ८ः 'अस्त्री कुशं कुशो दर्भः पवित्रम्–'इति दर्भार्थे एव अमरसिंहेन स्त्रीलिङ्गत्वस्य अननुशिष्टत्वेन विरोधाभावः । ९. 'चदेरादेश्च छः' इति सूत्रेण 'चदि आह्लादने दीप्तौ च' इत्यस्मात् चन्दतीति छन्दः इत्यसुनि चकारस्य च छकारे निष्पन्नत्वेन 'आच्छादयतीत्याच्छन्दः' इत्यस्मिन् अर्थे तस्य रूपस्यासिद्ध्या 'आच्छादयतीत्याच्छन्दः' इत्यर्थकथनस्यासम्भवः । १०. 'छादयन्ति ह वा' इत्यादिश्रुतौ च आङः प्रयोगाभावात् छन्दस्सु आच्छन्दशब्दस्य प्रयोगाभावः । ११ः अर्थभेदेन शब्दभेदस्य लिङ्गभेदस्य च मित्र-भूत-सैन्धवादिशब्देषु, 'मित्रशब्दः सखिपर्यायः नपुंसकलिङ्गः, सूर्यवाची पुंल्लिङ्गः, भूतशब्दः पिशाचे उभयलिङ्गः, क्रियावचनस्तु अभिधेयवल्लिङ्गः, सैन्धवशब्दः लवणे उभयलिङ्गः, यौगिकस्तु अभिधेयवल्लिङ्गः' इत्याद्युक्तरीत्या दर्शनम् । १२. लक्षणायाश्च अतिप्रसङ्गात् प्रमाणाभावाच्च अयुक्तता । १३. शाङ्करभाष्ये स्त्रीलिङ्गस्य दृष्टप्रयोजनत्वात् तस्यानुकरणत्वेन शिक्षणायोगश्च, इति।

तत्रैव विचारान्ते 'अतः कुशाशब्दः समित्सु स्त्रीलिङ्ग एवाकारान्तः । अयोविकारार्थे

कुशीशब्द ईकारान्तः स्त्रीलिङ्ग एव, दर्भे तु अकारान्तोऽस्त्रीलिङ्ग एव। जले नपुंसकलिङ्गः। क्षत्रिये पुंल्लिङ्ग एव इति व्यवस्था' इति न्यगम्यत ।

अतः कुशाशब्दो भामती-कल्पतरुग्रन्थकाराभ्यामनङ्गीकृतोऽपि पाणिनीयसूत्र-शाङ्करभाष्यादिनिखिलप्रमाणानुगुण इति भावप्रकाशिका-सिद्धान्तकौमुदीकाराभ्यां स्थापितत्वात् साधुरेवेति विदुषामपि प्रयोगमर्हत्येव ।।''

—संपादकः चेट्लूर् वा. श्रीवत्साङ्काचार्यः।

491-10 ब्रह्मलोकमभिसम्भवानि [पा.]

494- 1 ९४४ इत्येतत् ४९४ इति पाठ्यम्

494-23 गन्तृपुरुषसमवायित्वाभावेन(भा.प्र.)

499- 8 वस्तुनो ग्रहणम् ।

501- 3 इयच्छब्दो हि [भा. प्र.]

504-32 प्रष्टृभेदाच्चेति ।

509-32 गुणनिषेधोऽपि

512- 9 कर्मणां प्रयोजकत्वाभावात्, भा. प्र.

512-12 ...भावादाद्यवचनस्यापि ,, ,,

513- 3 यथा 'इन्द्राय'

513-26 वर्तमानो निर्देशो (भा. प्र.)

514- 9 'पृथक् हि अप्रतिबन्धः फलम्' इति। [अत्रत्यो हिशब्दः, उपरि अग्निहोत्राधिकरणे श्रुतप्रकाशिकायाम् 'यदेव विद्ययेति हि' [४-१-१८] इत्यस्य व्याख्यानावसरे 'सूच्यते हीति । अयं हिशब्दः 'पृथक् हि अप्रतिबन्धः फलम्' इत्यत्र हिशब्दवत् न उपपत्तिप्रसिद्धिद्योतकः, किन्तु उपपादितप्रसिद्धिद्योतकः' इत्यनेन व्याख्यातः । —सम्पादकः]

518-29 नहि होमसाधनमात्रस्य (भा. प्र.)

519-15 वाङ्मनश्चक्षुरादि...

519-24 मानसत्वम्; स हि स्वरूपेण विद्यते [भा. प्र.]

521-31 'पृ पालनपूरणयोः' इत्यस्य स्थाने अस्मद्गेहे विद्यमाने तालपत्रे 'पृण प्रीणने' इति पाठः । [सम्पादकः वा. श्रीवत्साङ्काचार्यः]

523- 5 'यथोपासनमेव हि प्राप्तिः श्रूयते' इति भाष्यम् । अत्र तत्क्रतुन्यायविषये वैशद्यार्थं, तथा 'उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया । सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम्' इति उपायविभागाधिकारे श्रीमन्निगमान्तमहागुरुश्रीसूक्तितात्पर्यार्थं च 'तत्क्रतुन्यायविचारः' इति ग्रन्थो विद्वद्भिरवश्यं सेव्यः । श्रीपरमहंसेत्यादि श्रीपादुकासेवकरामानुजमहादेशिकैरनुगृहीतोऽयं ग्रन्थः । —सम्पादकः ।

525-12 ...प्रत्ययन्यायेन वा [भा. प्र.]

541-18 'अध्ययनमात्रवतः' । इदं सूत्रं तत्त्वटीकायामेवं विस्तरेण व्याख्यातम्— 'यत्तु कैश्चित् प्रत्यवस्थीयते-अध्ययनविधेः अर्थज्ञानपर्यन्तत्वात् 'आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इत्यादिभिः श्रुतिभिः

'अधीत्य स्नायात्' इत्यादिभिः स्मृतिभिश्च आत्मरूपार्थज्ञानस्यापि कर्मार्थतया तत्कर्तृसंस्कारत्वेन विनियोगात्, 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति जिज्ञास्यतयोक्तस्य आत्मनः, अवहन्तव्यव्रीहिवत् स्वरसावगतसंस्कार्यत्वाबाधेन कर्मशेषत्वसिद्ध्या 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिभिः कर्मवश्यस्यैव ब्रह्मत्वोक्तेः, विश्वकर्तृत्वस्य च कर्मद्वारोपपत्तेः, क्लृप्तकल्प्यविरोधे क्लृप्तगृहीतेः न्याय्यत्वात् जीवस्य कर्मसु कर्तृतया प्राप्तस्य तदर्थं संस्कारार्हत्वाच्च जीवपरे वेदान्ते सति तदतिरिक्तेश्वरविषयशास्त्रसम्भवात् कस्यैकशास्त्र्यं क्रमश्च कल्प्यते? इति ।

तदपि अक्षरग्रहणमात्रपर्यवसानभाषणात् प्रत्युक्तम् । सूत्रकारोऽपि एतदेव चोद्यम् 'तद्वतो विधानात्' इत्यनूद्य 'अध्ययनमात्रवतः' इति परिहरिष्यति; अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि, 'अधीत्य, अभिसमावृत्य' इत्यादिभिर्नार्थज्ञानस्य कर्मशेषत्वेन विनियोगः, क्त्वाश्रुतेः समानकर्तृत्वादिमात्रे विश्रमात् । तथा विनियोगेऽपि कर्मानुष्ठानोपयुक्तार्थज्ञानात् अन्यदेव उपासनात्मकं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् । उपास्यश्चात्मा जीवातिरिक्तः श्रुत्यैव सिद्धः, न तु कल्प्यः । जीवब्रह्मसामानाधिकरण्यं च अचिद्-ब्रह्मसामानाधिकरण्यवत् ऐक्यविरोधादन्यार्थम् । तिष्ठतु च तथाविधज्ञानम्, तथाऽपि न विरोधः; कर्तुरिव आराध्यस्यापि कर्मार्थत्वेन विचार्यत्वात्, तस्य च कर्मवश्यादन्यत्वेन श्रुतिसिद्धत्वात् तद्विचारार्थकाण्डान्तरादिसिद्धः ।

यद्यपि अत्रापि अर्थज्ञानस्य अनुष्ठानशेषत्वेऽपि यथांशं परब्रह्मोपासनशेषत्वमपि स्यादित्युत्तरं प्राप्तम्; तथाऽपि अर्थज्ञानपर्यन्तताभूले चोद्ये प्रथमपर्वस्थोद्भटापराधोपेक्षायोगात् अन्वारुह्यवादमनादृत्य मूलच्छेद एवात्र कर्तव्य इत्यभिप्रायेण सूत्रभाष्ययोः मात्राशब्दः ॥' इति । (सम्पादकः)

541-28 श्रुतिर्न सम्भवतीत्यर्थः । (पा.)
543- 4 न चायं नियमः (पा.)
543- 7 इति वाक्यस्यार्थमाह– ,, ,,
543-11 वाक्यशेषश्च तदेव दर्शयति– ,,
546-28 विद्याङ्गकर्मपरत्वेनापि (पा.)
546-29 व्याख्यातुं (पा.)
549- 5 विद्याविशेषप्रतिपत्त्यर्थमिति (भा. प्र.)
549- 6 विद्याप्राधान्यं ,, ,,
549-27 हिरण्यस्यादक्षिणात्ववाक्येन (भा.प्र)
551-30 "अन्ये तु" इति । "सर्वापेक्षा-इति सूत्रमङ्गाङ्गिभावपरम्" इति यादवप्रक्रिया या लघुपूर्वपक्षे श्रुतप्रकाशिकायामभिहिता (I. I - 44 पुटे), साऽप्यत्र निरुक्तदिशा समीक्ष्या । (सम्पादकः)
555 30 "समुच्चयव्यावृत्त्यर्थम्" इति । इदं सूत्रं समसमुच्चयप्रतिपादकमिति यादवप्रकाशपक्ष इति लघुपूर्वपक्षोक्तम् [पु. I. I. 44] इहावधेयम् ।
557-18 "भूयोधर्मक–" इत्यादिभाष्यं न्यायसिद्धाञ्जने जीवपरिच्छेदे आचार्यैरेवं व्याख्यातम्–"यथा उपाय-

भक्तिष्वेव तत्तच्छाखाभेदेन वर्णाश्रमभेदेन च अङ्गभूतानां कर्मणां गुरुलघुतारतम्येऽपि फलमविशिष्टम्, तथेहापि। कथं तर्हि 'अतस्त्वितरज्ज्यायो लिङ्गाच्च' इति सूत्रे 'भूयोधर्मकाल्पधर्मकयोः अतुल्यकार्यत्वात्' इति भाष्यम्? । इत्थम् — एकाधिकारिगोचरमुख्यगौणविषयं हि तत्। अन्यथा, अधिकधर्मकाश्रमान्तर-सूत्रान्तरादिष्वपि फलवैषम्यप्रसङ्गेन तदनुप्रवेशस्य ज्यायस्त्वप्रसङ्गात्' इति । [सं.]

564-16 स्थितस्य एव विदुषो (पा.)

564-35 'अप्राप्तमिति तालकोशे' इति। अत्र उद्यानपत्रिकायां (May 1939) श्रीमद्भिः मधुरान्तकम् ति.ई. वीरराघवाचार्यैरेवमाशयः प्रकटितः— 'सहकार्यन्तरविध्यधिकरणश्रीभाष्ये 'पाण्डित्यं निर्विद्य ... श्रवणमननाभ्यां प्राप्तं वेदनं प्रतिलभ्येत्यर्थः' इति दृश्यते । अत्र 'प्राप्तं' इत्यस्य स्थाने 'अप्राप्तं' इति पाठो युज्यते । श्रवणमननाभ्यां अप्राप्तस्य औपदेशिकार्थाधिगमस्यैवात्र विधानात् इति प्रतीयते ।' इति।–संपादकः ।

566-31 द्वितीयसूत्रनिर्वाहस्योत्तरं दत्तम् [भा. प्र.]

573-24 विहितपृथक्त्वानुसन्धानविधिविरोधः (भा. प्र.)

575- 9 'अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् ।' इति भाष्यम् । एतदधिकरणसिद्धमेव वाक्यकारैः 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इत्युक्तमित्यवधेयम् । —संपादकः ।

577-24 प्रतीकगतद्वितीयादिविभक्तिरपि हेतुः । [भा. प्र.]

580-30 धिकरणे समर्थितत्वात् (भा. प्र.)

582- 5 'शास्त्रार्थस्य कृतत्वात्' इति भाष्यम् । अत्र श्रीभाष्ये लघुसिद्धान्ते उपात्तं 'सकृत् प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्' इति वाक्यकार [पूर्वपक्ष] वचनमनुसन्धेयम् । —सम्पादकः ।

585-18 तर्ह्यश्लेषवचने सङ्कोचः स्यात् । (भा. प्र.)

589-25 ततोऽपि वरं ,, ,,

601-61 उच्छ्वयत्याध्मातः

610- 8 प्रारब्धकार्यस्य कर्मणः चरम... (भा. प्र.)

610-16 पितृणामेव

620- 9 वितव्यमिति ।

626-22 दध्याद्यवस्थाप्राप्तिवच्च

631-14 तदुपलक्षणार्थेति कार्ष्णाजिनिः

635-26 प्राप्यप्रागभावप्रध्वंसाभावात्यन्ताभाव... [भा. प्र.]

640-28 'अन्येषां पक्षे' इति। 'चिति तन्मात्रेण...,' 'एवमपि...' इति सूत्रद्वयस्यापि यादवप्रकाशकृतं व्याख्यानं पूर्वं वाक्यान्वयाधिकरणश्रुतप्रना-

शिकायाम् (पु. १५८)
उपादाय विमृष्टमिहानुसन्धेयम् ।
[सम्पादकः]

645- 4 द्वादशाहवदुभयविधं बादरायणोऽतः । अत्र द्वादशाहशब्दस्यार्थव्यक्त्यै, 'इह अहश्शब्दः... सोमयागवचनः । द्वादश अहानि - यागाः यस्य सः द्वादशाहः । ... द्विरात्रप्रभृतयः एकादशरात्रान्ताः अहीनात्मकाः । त्रयोदशरात्रप्रभृति आ शतरात्रात् सत्रात्मकाः' इति आपस्तम्बपरिभाषाभाष्ये [४-४] कपर्दिस्वामिभाष्यवाक्यान्यनुसन्धेयानि ।
[सं. चेट्टलूर् वा. श्रीवत्साङ्काचार्याः।]

650-25 तदा अनावृत्त्यनुबन्धिनी। (अत्रेदमवधेयम् । 'विभेदजनके' इति श्लोकव्याख्यानावसरे श्रुतप्रकाशिकायाम् [प्रथमसम्पुटे १-२५५ पृष्ठे] 'विभेदजनके—इत्यादिश्लोकेन 'अनावृत्तिः शब्दात्,—इत्यधिकरणार्थं उच्यते' इत्युक्तम्। तेन ज्ञायते तेषामिदमधिकरणान्तरमित्याशय इति सूच्यते इति। आचार्यैस्तु 'अधिकृतिगणना चिन्मयी ब्रह्मकाण्डे' इति अधिकरणसारावल्यामभिहितत्वात् तदनुरोधेनास्मदाचार्यवर्यैः तत्र टिप्पणे 'अधिकरणार्थः - अधिकृतसूत्रार्थः इत्यर्थः। सिद्धान्ते तस्य पृथगधिकरणत्वाभावात्' इति श्रुतप्रकाशिकापदविवरणं कृतमिति ।
(संपादकः)

653-24 सवितृमण्डलादिस्थाधीनभोगोक्तेः,
(भा. प्र.)

656-15-16 'इति हरितकुलतिलक' इति वाक्योपक्रमात् पूर्वं २२ तमायां पङ्क्तौ स्थितः 'गुरवे वरदार्याय—' इति श्लोकोऽनुसन्धेयः ।

**ब्रह्मसूत्रार्थपद्यमालिका**

9- 7 सर्वस्याधिप इत्यादि
10-29 इत्यप्युदीरणात् ।
20-28 द्वितीयाध्यायः ।
31-26 ब्रह्मचर्येण श्रद्धया चेति च श्रुतेः ।
31-29 जैमिनेरपि
34-28 तेन याति परां गतिम् ।

श्रीरङ्गलक्ष्मणाभिख्यसंयमीन्द्रकटाक्षभाक् ।
श्रीवीरराघवाचार्यकृपासम्प्राप्तसन्मतिः ॥
अघमर्षणवंश्योऽसौ श्रीवत्साङ्कः सदीरणात् ।
श्रुतप्रकाशिकायुक्ते भाष्येऽकृत परिष्क्रियाम् ॥
श्रीमते रामानुजाय नमः ।

—×—

श्रीः

# श्रीभगवद्रामानुजविरचितं

# श्रीभाष्यम्

---

प्रथमाध्याये तृतीयः पादः

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १-३-१॥

आथर्वणिका अधीयते, "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ; अमृतस्यैष सेतुः" इति। तत्र संशयः—किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीवः उत परमात्मेति। किं युक्तम्? जीव इति। कुतः?

---

श्रीः

श्रीमते रामानुजाय नमः

# श्रीसुदर्शनसूरि विरचिता

# श्रुतप्रकाशिका

---

प्रथमाध्याये तृतीयः पादः

एवमस्पष्टजीवलिङ्गकानि वाक्यानि परमात्मपरत्वेन निर्णीतानि; अथ स्पष्टजीवलिङ्गकानि विचार्यन्त इति पादसङ्गतिः। पूर्वस्मिन्नधिकरणे द्युपृथिव्यादिसंबन्धिनः परमात्मत्वमुक्तम्; द्युपृथिव्यादिसम्बन्धित्वं परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कया अनन्तराधिकरणसङ्गतिः। यद्वा, 'अदृश्यत्वादिगुणक' इत्यधिकरणे त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तच्छरीरकत्वमपरमात्मनोऽपि दृश्यत इति शङ्कायां वैश्वानराधिकरणं प्राप्तम्। अथास्यामेवोपनिषदि कतिपयवाक्यानां परमात्मव्यतिरिक्तपरत्वशङ्कायामदृश्यत्वादिगुणकचिन्तनस्यासमाप्तिबुद्ध्या तृतीयपादाद्याधिकरणारम्भ इत्यवान्तरसङ्गतिः। अत्र निरसनीयजीवलिङ्गानां स्पष्टत्वादिदमधिकरणमदृश्यत्वादिगुणकनिरूपणात् पृथक्कृत्य तृतीयपादे निवेशितम्; पादभेदस्य स्पष्टास्पष्टजीवलिङ्गतानिबन्धनत्वात्। **द्युभ्वाद्यायतनं स्वशब्दात्**। द्य्वाद्यायतनमित्येतावति वक्तव्येऽपि **द्युभ्वादी**त्युक्तेरयं भावः—ऊर्ध्वा अधराश्चेति कोटिद्वयान्तर्गता लोकाः; तत्प्रदर्शनार्थौ द्युभूशब्दाविति। विषयमाह **आथर्वणिका** इति। **तत्रे**ति। द्युपृथिव्याद्यायतनं जीवः, उत परमात्मेति विचारः। तदर्थं **यस्मिन्द्यौरि**त्यादिवाक्यजातं किमदृश्यत्वादिगुणकप्रकरणाद्भिन्नम् उताभिन्नम्, तदर्थं मनःप्राणादिसंबन्धः किमुपकरणोपकारित्वलक्षणः उताधाराधेयभावलक्षणः, तदर्थं द्युपृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः किं कर्मफलात्तुर्जीवस्य संभवन्ति उतानश्नतः इति। यदा कर्मफलात्तुर्जीवस्य संभवन्ति (दुर्भवन्ति), तदा मनआदिसंबन्धस्य करणतद्वत्तारूपतया तस्य परप्रकरणविच्छेदकत्वेन द्युभ्वाद्यायतनं जीवः स्यात्। यदाऽमृतसेतुत्वादयोऽनश्नतो धर्माः तदा मनआदिसंबन्धस्य आधाराधेयभावरूपत्वेन परप्रकरणा-

„अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः" इति परस्मिन् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं 'यत्र' इति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा, पुनरपि, 'स एषोऽन्तश्चरते बहुधा जायमानः' इति तस्य बहुधा जायमानत्वञ्चोच्यते; नाडीसंबन्धः, देवादिरूपेण बहुधा जायमानत्वञ्च जीवस्यैव धर्मः। अस्मिन्नपि श्लोके, "ओतं मनः सह प्राणैश्च सर्वैः" इति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं जीवधर्म एव। एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यमिति।

एवं प्राप्ते प्रचक्ष्महे—द्युभ्वाद्यायतनं स्वशब्दात्। द्युपृथिव्यादीनामायतनं परं ब्रह्म; कुतः? स्वशब्दात्—परब्रह्मासाधारणशब्दात्। 'अमृतस्यैष सेतुः' इति परस्य ब्रह्मणोऽसाधारणः शब्दः। "तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते" इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुः श्रूयते। सिनोतेश्च बन्धनार्थत्वात् सेतुः—अमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः। नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः; संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक

---

विच्छेदात् द्युपृथिव्याद्यायतनं परमात्मेति फलितं स्यात। अरा इवेत्यादेरनन्तरश्लोकस्य द्युभ्वाद्यायतनविषयत्व दर्शयन् जीवलिङ्गमाह **पूर्ववाक्ये**ति। लिङ्गान्तरमाह **पुनरपि स एष** इति। ततः किमित्यत्राह **नाडीसंबन्ध** इति। नाडीनामिन्द्रियसंबन्धित्वेन जीवस्य ज्ञानप्रसरहेतुत्वात्, "ताभिः प्रत्यवसृप्य पुरीतति शेते", तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति", इत्यादिश्रुतिभिर्जीवस्य नाडीसंयोगप्रसिद्धेश्च तत्संबन्धो जीवलिङ्गमिति भावः। **देवादिरूपेणेति** बहुधाशब्दविवरणम्। अन्तरादित्यविद्यायामकर्मकृतस्वेच्छागृहीतदिव्यविग्रहयोगः समर्थितः; न तु देवादिसजातीयरूपैर्बहुधाजायमानत्वं बहुधाशब्दार्थ इति सूत्रकारेण निरूपितम्। अतस्तस्य जीवत्वशङ्का युक्तेति भावः। यस्मिन् द्यौरिति पूर्वश्लोके जीवधर्मं दर्शयति **अस्मिन्नपीति**॥ ननु कथं मनःप्राणसंबन्धस्य जीवत्वसाधकतयोपन्यासः; स हि परस्य संभवतीति "सर्वत्र प्रसिद्धोपदेशात्" इत्यत्रोक्तम्॥ सत्यम्; तथापि मनःप्राणैरुपकरणोपकरणित्वलक्षणसंबन्धस्य स्वरसतः प्रतीतेः, तस्य चापवादाभावे सति कार्यकरत्वेन प्रागुक्तनिर्वाहायोगाच्च युक्ता शंका। अतो नाडीसंबन्धबहुधाजायमानत्वमनःप्राणाधारत्वजीवलिङ्गैः पूर्वपक्षोत्थानं युक्तम्। तत्रैव श्लोके द्युपृथिव्याद्यायतनत्वरूपपरमात्मलिङ्गं च दृश्यत इत्यत्राह **एवं जीवत्वे निश्चिते** इति। द्वयोरपि जीवपरयोर्लिङ्गप्रतिभासेन विरोधादन्यतरलिङ्गभङ्गेऽवश्यंभाविनि, यल्लिङ्गस्योत्तरश्लोकप्रतिपन्नलिङ्गद्वयानुगुण्यम् तल्लिङ्गानुसारिण्यर्थनिर्णये कर्तव्ये सतीत्यर्थः। **यथाकथञ्चित्सङ्गमयितव्यमिति**। जीवस्य द्युपृथिव्याद्याधारत्वं स्वरूपेण वा, कर्मद्वारा वा, मुक्तावस्थायां विकसितेन ज्ञानेन वा संभवतीति भावः।

**द्युपृथिव्यादीना**मित्यादि। **सेतुशब्दस्य** सलिलनिरोधके प्रसिद्धत्वेनामृतस्य निरोधकत्वप्रसङ्गेन रूढा(ढ्य?)र्थानुपपत्तौ सत्यामस्वारस्यसाम्यात् उभयथा व्याचष्टे **सिनोते**रिति, **सेतुरिव** वेति च। प्रथमनिर्वाहे रूढिपरित्यागादस्वारस्यम्; द्वितीये त्वगत्या रूढार्थगतगुणयोगपरत्वादस्वारस्यम्। गुणयोगफलितमर्थमाह **संसारे**ति। श्येनसादृश्यात् यागे श्येनशब्दवत् सेतुसादृश्यात परमात्मनि सेतुशब्दः। **विहङ्गयागैर्यैर्हि**

इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः। आप्नोतीति ह्यात्मा। स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव संभवति ; अतः सोपि तस्यैव शब्दः। "यः सर्वज्ञः सर्ववित्" इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणः शब्दाः। नाड्याधारत्वं तस्यापि संभवति, "सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभम्" इत्यारभ्य, "तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" इति श्रवणात्। 'बहुधा जायमानः' इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते ; "अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" इति, देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणकर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात्। स्मृतिरपि, "अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया" इति। मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥ १ ॥

इतश्च परमपुरुषः—

## मुक्तोपसृप्यव्यपदेशाच्च ॥ १-३-२ ॥

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते, "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति। संसारबन्धनाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विनिर्मुक्ताश्च। पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः। अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥

---

निपत्याऽऽदानं साम्यम्। "अन्तः प्रविष्टश्शास्ता जनानाँ सर्वात्मा" इति श्रुत्यनुसारेणाऽऽत्मशब्दं व्याचष्टे **आत्मशब्दश्चेति**। आत्मशब्दो न व्याप्तृमात्रवाची; किन्तु व्याप्तृविशेषवाची; योगरूढत्वात्। न हि गगनादिष्वात्मशब्दप्रयोगः। अतो नियन्तृरूपव्याप्तृविशेषवाचीत्यर्थः। 'अमृतस्यैष सेतुः', 'आत्मानम्', 'यः सर्वज्ञःसर्ववित्' इत्यादयः स्वशब्दा इत्यर्थः। परोक्तहेतुनिर्वाहमाह **नाड्याधारत्वमित्यादिना**। नाड्याधारत्वं हृदयद्वारा परमात्मनः संभवतीत्यर्थः। **अजायमान** इति। जन्मनो हेतुविशेषः[1] फलविशेषश्चेति भावः। तद्वैशद्यायाह **स्मृतिरपीति**॥-१॥

**मुक्तोपसृप्यव्यपदेशाच्च** ॥ नामरूपप्रहाणमात्रं प्रलयदशायामप्यस्तीति तद्व्यावृत्त्यर्थं विधूतपुण्यपापत्वपूर्वकत्वं नामरूपप्रहाणस्य दर्शयितुं श्रुतिवाक्यद्वयोपादानम्। उपात्तश्रुतिवाक्ये बन्धान्मुक्त इति शब्दस्य श्रुतत्वात् मुक्तिप्रतिपादनं दर्शयन्ति वाक्यद्वयोक्तविशेषणान्याह **विधूतेति**। मुक्तत्वमुपपादयति **पुण्यपापेति**। वाक्यद्वयोक्तविशेषणानि विशदीकुर्वन् सूत्रार्थं परमसाम्येन घटयति **अत** इति। निरञ्जनशब्दव्याख्यानं **प्रकृतिसंसर्गरहितै**रिति पदम्। **परमसाम्यमिति**। येन गुणेन साम्यम्, तस्यापरिच्छिन्नत्वं परमसाम्यम् ; न तु सर्वथा साम्यम् ॥-२-॥

---

1. **विशेषः—विशेषश्चेति** प्रथमान्तपाठे सूच्यत इत्यध्याहारः। द्वितीयान्तपाठे योनिमिति श्रौतपदव्याख्यानमिदम्।

परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य, प्रत्यगात्मासाधारणशब्दाभावा-च्चायं पर एवेत्याह—

## नानुमानमतच्छब्दात् प्राणभृच्च ॥ १-३-३ ॥

यथाऽस्मिन् प्रकरणे प्रधानप्रतिपादकशब्दाभावात् प्रधानं न प्रतिपाद्यम्; एवं प्राणभृद-पीत्यर्थः। अनुमीयत इत्यनुमानं परोक्षं प्रधानमुच्यते; अनुमानप्रमितत्वादानुमानमिति वा। अतच्छब्दात् तद्वाचिशब्दाभावादित्यर्थः। 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः ॥ ३ ॥

इतश्चायं न प्रत्यगात्मा—

## भेदव्यपदेशात् ॥ १-३-४ ॥

" समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीश-

---

उत्तरसूत्रमवतारयति **परब्रह्मेति**। पूर्वमन्वय उक्तः, अथ तद्दाढर्याय व्यतिरेक उच्यत इत्यर्थः। **नानुमानमतच्छब्दात्प्राणभृच्च** ॥ सूत्रसङ्गतेर्बुद्धिस्थत्वाय प्रथमं सङ्गच्छमानं सूत्रस्य वाक्यार्थमाह **यथे**ति। मुक्तोपसृप्यत्वेऽभिहिते प्रधानशङ्कानुदयेन तस्य व्युदसनीयत्वाभावात् तदुपन्यासो दृष्टान्त-तयेति भावः। किमत्र प्रधानोपस्थापकं पदमित्याकांक्षायां व्याख्येयं पदं व्याचष्टे **अनुमीयत** इति। 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् कर्मणि ल्युडिति भावः। **अनुमाने**ति। "शेषे" इत्यण्प्रत्यये आदिवृद्धौ च सत्यामा**नुमान**मिति रूपं भवति। तद्व्यतिरिक्तवाचिशब्दादिति प्रतीतिशङ्कानिवृत्त्यर्थ-**मतच्छब्दा**दिति पदं व्याचष्टे **तद्वाची**ति। अर्थाभावे यदव्ययमिति न सूत्रोपादानम्; अपि त्वर्थो-पादानम्; सूत्रस्य द्राघीयस्त्वात्। अयमभिप्रायः—**अतच्छब्दा**दिति बहुव्रीहिस्तावदनुपपन्नः। तदा तच्छब्दरहितादिति स्यात्। ततश्च विशेष्यान्तरं हेतुतयाऽन्वेष्टव्यम्, तच्चानुपलम्भहतम्। तत्पुरुषत्वे नञस्तत्पदेन शब्दपदेन वा समासः स्यात्। तत्र प्रथमे असः क इत्यपेक्षायां प्रकृतात्परमात्मनोऽन्यत् प्र-धानं जीवो वा यदि **अत**च्छब्दार्थः, तदा प्रधानपुरुषवाचिशब्दादित्युक्तं स्यात्। ततश्चासिद्धिः, प्रतिज्ञा-तार्थविरोधश्च स्यात्। असः प्रधानादिव्यतिरिक्तः परमात्मा चेत्, तद्वाचिशब्दादित्युक्ते **स्वशब्दा**दित्य-नधिकार्थत्वं स्यात्। तथा च सति नानुमानमत एव प्राणभृच्चेत्यार्जवेन शक्ये सूत्रप्रणयने कुटिलोक्तिर्विफला स्यात्। नञस्तच्छब्दपदेन समासपक्षेऽपि तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं स्यात्। तदा तच्छब्दः प्रधानजीवपरश्चेत्, तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं भवति। तत् **स्वशब्दा**दित्यनधिकार्थम्। तच्छब्दः परमात्मपरश्चेत्, तद्वाचिशब्दव्यतिरिक्तादिति हेतुः प्रतिज्ञातार्थविरुद्धार्थः स्यात्। अतः पारिशेष्यादर्थाभा-वेऽव्ययीभाव इति ॥-३-॥

**इतश्चायं न प्रत्यगात्मेति**। प्राणभृत्प्रतिषेधकसूत्रानन्तर्यात् तदनन्तरसूत्रस्यापि प्राणभृत्प्रतिक्षेपः साध्य इत्यर्थः। **अयंशब्दो** द्युभ्वाद्यायतनात्मविषयः। मुक्तोपसृप्यसूत्रविषयवाक्ये, 'पश्यते रुक्मवर्णम्' इत्युक्तम्; 'जुष्टं यदा पश्यती' ति तत्तुल्यश्रुतया बुद्धिस्थत्वाद्वाक्यान्तरप्रतिपन्नं हेतुमाह **भेदव्यपदेशात्**।

मस्य महिमानमिति वीतशोकः" इत्यादिभिर्जीवाद्विलक्षणत्वेनायं व्यपदिश्यते । अनीशया - भोग्यभूतया प्रकृत्या मुह्यमानः शोचति जीवः । अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणम्, अस्य ईश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति, तदा वीतशोको भवति ॥ ४ ॥

## प्रकरणात् ॥ १-३-५ ॥

प्रकरणञ्चेदं परस्य ब्रह्मण इति, "अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यत्रैव प्रदर्शितम् । नाडीसंबन्धबहुधाजायमानत्वमनःप्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामात्रमत्र परिह्रियते ॥ ५ ॥

## स्थित्यदनाभ्यां च ॥ १-३-६ ॥

---

'समाने वृक्षे' इति मन्त्रे अन्यशब्दार्थो **भेदव्यपदेश**शब्देन विवक्षितः । अत्रान्यशब्दस्य द्युभ्वाद्यायतनविषयत्वं कथमिति शङ्कायां मन्त्रं व्याचष्टे **अनीशयेति** । स्त्रीलिङ्गसामर्थ्यात् प्रकृतेर्विशेष्यत्वमुक्तम् । अन्यशब्दसामर्थ्यलब्धं प्रतियोगिनं निर्दिशति **स्वस्मादिति** । ईशशब्दसामर्थ्यप्राप्तमीशितव्यं मानान्तरानुरोधेनाह **सर्वस्येति** । जुष्टशब्दं व्याचष्टे **प्रीयमाण**मिति । आदिकर्मणि क्तः इति भावः । समुच्चेतव्यसामर्थ्यप्राप्तः चशब्द इत्यभिप्रायेण **महिमानश्चेति** । **इति**शब्दार्थमाह **निखिलजगन्नियमनरूपमिति** । **इतिशब्दो** बुद्धिस्थप्रकारपरः । ईशशब्दश्रवणान्नियमनरूपप्रकारो बुद्धिस्थ इति भावः । यत्तदोर्नित्यसंबन्धादाह **तदेति** । **इतिशब्दः** कालसम्बन्धरूपप्रकारवाची ; अतस्तदर्थस्तदाशब्दविवक्षितो वा स्यात् । द्रष्टृत्वसमानाधिकरणं **मुह्यमान**त्वादिकं दृश्यत्वसमानाधिकरणं **जुष्टत्वादि**कमन्यत्वं च व्यपदिशन्तीयं श्रुतिः, "तमेवैकं जानथ" इति ज्ञेयतया निर्दिष्टं द्युभ्वाद्यायतनमात्मानमन्यशब्दवाच्यत्वेन प्रत्यभिज्ञापयन्ती तस्य जीवत्वं वारयतीति वाक्यार्थः ॥ ४. ॥

द्वितीयचतुर्थसूत्रविषयाभ्याम्, 'यदा पश्यः पश्यते' 'जुष्टं यदा पश्यति' इतिवाक्याभ्यामदृश्यत्वादिगुणकविषयस्य, यद्भूतयोनिं परिपश्यन्तीतिवाक्यस्य समानार्थत्वात् बुद्धिस्थप्रकरणमेव हेतुं **स्थित्यदनाभ्यां** पूर्वमेवाह **प्रकरणात्** ॥ भाष्ये अस्य सूत्रस्य साध्यनिर्देशाभावः प्रकरणाख्यस्य हेतोः प्राणभृत्प्रतिक्षेपे परमात्मसाधने च सामर्थ्यात् पूर्वत्रोत्तरत्र चान्वयो भविष्यतीत्यभिप्रायनिबन्धनः । उत्तरसूत्रव्याख्याने **ह्युभयमपि** साध्यत्वेन निर्दिश्यते । **अदृश्यत्वादी**त्यस्मिन्नधिकरणे, "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" इति सूत्रव्याख्यानावसरे **तथाहीत्यादिनोपसंहृत**मित्यन्तेन भाष्येण प्रकरणस्य परब्रह्मपरत्वं प्रतिपादितमित्यर्थः । पूर्वमेवास्य प्रकरणस्य परमात्मपरत्वं साधितञ्चेत्, किमेतदधिकरणारम्भेणेत्यत्राह **नाडीसंबन्धेति** । प्रकरणस्य लिङ्गेन बाधः परिहृत इत्यर्थः । **नाड्याधारत्वं तस्यापि संभवती**त्यादिना भाष्येणास्याधिकरणस्य लिङ्गबाधपरिहारत्वं हि दर्शितम् ॥ ५-॥

अनुक्तं प्रधानभूतं हेतुमाह **स्थित्यदनाभ्यां** च ॥ "अल्पाच्तरम्" इति [1]**स्थितिशब्दस्य** पूर्वनिपातः। अभ्यर्हितं पूर्वं प्रयोक्तव्यमिति वा; अभ्यर्हितत्वं परमात्मप्रत्यभिज्ञापनेन प्रकरणाविच्छेदहेतुत्वात्

---

1. **इतिशब्दः** प्रकारवचनः; घित्वादपीति भाष्यम् । **स्थितिः** गतिनिरोधः-निर्व्यापारता—अनशनमेवेत्यपि विवक्षितं स्यात् ।

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" इति एकस्य कर्मफलादनम् अन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तस्स्थितिमात्रं प्रतिपाद्यते। तत्र कर्मफलमनश्नन् दीप्यमान एव सर्वज्ञोऽमृतसेतुः सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति, न पुनः कर्मफलमदन् शोचन् प्रत्यगात्मा।

---

स्थितेः। भाष्ये श्रुतिक्रमेण व्याख्यातम्; न पुनः सूत्रक्रमेण। अस्मिन् मन्त्रे जीवस्यापि प्रस्तुतत्वात् 'यस्मिन् द्यौः' इति मन्त्रोऽपि तत्प्रतिपादकः स्यात्, अत्रादनशब्दवाच्यभोगोपकरणमनःप्राणसंबन्धदर्शनादित्यत्राह **तत्र कर्मफल**मिति सर्वज्ञोऽमृतसेतुरित्यादिविशेषणानि प्राकरणिकतयोक्तानि। उभयोः प्रस्तुतत्वेऽपि सार्वज्ञ्यादिसमानाश्रयत्वात् स्वयंयोग्यत्वात् मनःप्राणसम्बन्धादेः परमात्मन्यमुख्यत्वाभावाच्च द्युभ्वाद्यायतनत्वं परमात्मधर्म इत्यर्थः। जीवान्वयायोग्यत्वमाह **न पुन**रिति। **कर्मफलमनश्नन्**निति, **कर्मफलमदन्**निति च सौत्रहेत्वनुवादः। **शोचन्**नित्यनेन **भेदव्यपदेशा**दिति सौत्रहेतोरिहान्वयोऽभिप्रेतः। "शोचति मुह्यमानः" इति हि तद्विषयवाक्यम्। तदपि प्रत्यगात्मपरत्वप्रतिक्षेपद्वारा परमात्मपरत्वसाधकम्; व्यतिरेकस्यान्वयशेषत्वादिति भावः। अस्मिन् सूत्रे परमात्मपरत्वं श्रुत्या साध्यम्, प्रत्यगात्मपरत्वप्रतिक्षेपस्त्वार्थ इति न वाक्यभेदः। 'अभिचाकशीती'ति परस्य दीप्यमानत्वे हि मन्त्रस्य तात्पर्यमवगम्यते - जीवस्यात्तृत्वं तदुपयोगितया प्रतीयते॥

ननु कथं द्वा सुपर्णेति मन्त्रस्य जीवपरमात्मभेदपरत्वम्? अन्तःकरणजीवपरो ह्ययं मन्त्रः; पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात्। तथा हि, "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्; अनश्नन्नन्यो अभिचाकशीतीति [1]अनश्नन्नन्योऽभिपश्यति ज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ इति। अत्र स्वाद्वत्तीत्येतदन्तस्य वाक्यस्य सत्त्वपरत्वम्, अनश्नन्नित्यादेः क्षेत्रज्ञपरत्वं च प्रतीयते। न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरमात्मपराविति वाच्यम्; तयोः शब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात्, "तदेतत् सत्त्वम्, येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा, स क्षेत्रज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ" इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवशब्दाभ्यां पैङ्गिश्रुत्यैव व्याख्यातत्वाच्च। येन पश्यतीति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणम्; स्वप्नद्रष्टृत्वाच्च क्षेत्रज्ञो हि जीवः। अतोऽयं मन्त्रोऽन्तःकरणजीवपर इति॥

उच्यते; न तावत् जीवपरमात्मपरत्वमस्यापवदितुं शक्यते। अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने, "समाने वृक्षे पुरुषो निमग्नः" इत्यनन्तरे मन्त्रे जीवपरयोः प्रतिपन्नत्वात्; अस्य मन्त्रस्य तदैकार्थ्याच्च। "समानं वृक्षं परिषस्वजाते" "समाने वृक्षे पुरुषो निमग्नः" इति तयोरैकार्थ्यं हि प्रतीयते। अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात, "शोचति मुह्यमानः', 'पश्यति वीतशोकः' इति पदानामस्वारस्यप्रसङ्गाच्च। अन्यश्च परमात्मा; ईशशब्दोक्तत्वात् स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च। न केवलमनन्तरमन्त्रैकार्थ्यात् द्वा सुपर्णेतिमन्त्रस्य जीवपरमात्मपरत्वम्, किन्तु 'स्वाद्वत्ति, अनश्नन्नन्यः' इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते। चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवत् अन्तःकरणस्यापि

---

1. अभिचाकशीति, अनश्नन्नन्योऽभिपश्यतीति ज्ञः इति पाठः श्रीदेशिकसूक्तौ।

अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥ ६ ॥ इति द्युभ्वाद्यधिकरणम्

करणत्वादेव भोक्तृत्वं हि न संभवति। जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेवानश्नत्त्वमपि नोपपद्यते॥

तर्हि पैङ्गिश्रुतेः कोऽर्थः? ॥ उच्यते ; सत्त्वं बद्धजीवः। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति नामानुशासनाज्जन्तुपरत्वावगतेः। जन्तुश्च चेतनः। 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इति नामपाठात् ; "वन्यान् वनेष्यन्निव दुष्टसत्त्वान्" इति प्रयोगात् ; "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः" इति दर्शनाच्च। क्षेत्रज्ञशब्दश्चात्र परमात्मपरः, अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवत् अर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः। 'विष्णोर्नामसहस्रं मे' इत्युपक्रम्य, "क्षेत्रज्ञोऽक्षर एव च" इति प्रयोगात् ; क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च। मोक्षधर्मे, "ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा। प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥ सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः" इति, तत्रैव "विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः। एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ क्षेत्राणि च शरीराणि ज्ञानानि च शुभाशुभे। तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥" इति प्रयोगात्। तत्रैव कपिलासुरिसंवादे, "ज्ञानानामासुरे! क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षकः[1]। ज्ञातृको बुध्यमानाप्रतिबुद्धयोः परममृतं विदित्वा निरवयवमनामयमस्माद्दुःखाद्विमुच्यत एव" इति बुद्ध्यमानाप्रतिबुद्धशब्दाभिहितयोश्चिदचितोः परस्य क्षेत्रज्ञशब्देनाभिधानात्। तत्रैव पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा, "एतस्माद्वर्गादपवृत्तोऽपवर्गदः क्षेत्रज्ञः शुचिरुपेक्षको बुध्यमानाप्रतिबुद्धयोः परस्तात्" इति। तत्रैव, "अन्यदुदकमन्यत् पुष्करपर्णम्—तथाऽन्यत् क्षेत्रमन्यः पुरुषः पञ्चविंशकः अन्यश्चास्मात् क्षेत्रज्ञः" इति। पुनस्त(श्च त)त्रैव, "एवमासुरे! अन्यद्द्रव्यमन्यः पुरुषः पञ्चविंशतितत्त्वमन्योऽस्मात् क्षेत्रज्ञः" इति पञ्चविंशात्परस्मिन् क्षेत्रज्ञशब्दप्रयोगात्। सनत्कुमारनारदसंवादे च, "पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति। पश्यन्तं पश्यपश्यत्वात् पश्यापश्ये न पश्यतः" इति श्लोकमुक्त्वा, "प्रकृतिं क्षेत्रं क्षेत्रज्ञं चापरः क्षेत्रज्ञः षड्विंशकोऽवपश्यति ; न तु पञ्चविंशकः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति" इति प्रयोगाच्च। अत्र ह्यात्मशब्दवत् क्षेत्रज्ञशब्दस्य जीवपरसाधारणस्य पञ्चविंशकपरशब्दविशेषितस्य जीवपरमात्मविषयत्वदर्शनाच्च। "योऽस्याऽऽत्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति तु कर्माणि स भूतात्मेति चोच्यते" इति मानवप्रयोगाच्च ॥ येन स्वप्नं पश्यतीत्यत्र येनेतीत्थम्भावे तृतीया ; येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते। ततश्च "काठिन्यवान् यो बिभर्ति" इति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्वं जीवद्वारा परमात्मविशेषणं भवतीति न विरोधः। शारीरशब्दश्च, "तस्यैष एव शारीर आत्मा" इतिवदत्रैव स्वव्यतिरिक्तसमस्तचिदचिच्छरीरके परमात्मन्युपपद्यते। उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च तस्यैवोपपद्यते। एवं शारीर उपद्रष्टेति पदद्वयेन परस्य क्षेत्रज्ञशब्दवाच्यत्वमुपपादितं भवति। अतो द्वा सुपर्णेति मन्त्रो जीवपरमात्मपरः ॥ अधिकरणार्थमुपसंहरति अत इति ॥

1. उपेक्षकइत्यन्तं परमात्मपरम् ज्ञातृको जीवः। उपरितनवाक्यत इदं स्पष्टम्।

**इह** कैश्चिदेवं पूर्वपक्षितम्—द्युभ्वाद्यायतनस्य सेतुत्वश्रवणात् सेतोश्च पारवत्त्वेन परस्य च 'अनन्तमपारम्' इत्यपारत्वश्रवणात् द्युभ्वाद्यायतनं प्रधानं वायुर्वा जीवो वा स्यात्, एषां धारकत्वयोगादिति—तदयुक्तम्; पारवदर्थोपस्थापकस्य सेतुत्वव्यपदेशस्य पूर्वपक्षहेतोरस्मिन्नधिकरणे परिहृतत्वे सति उत्तरत्र, "परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" इत्यधिकरणे सेतुत्वव्यपदेशस्य पूर्वपक्षहेतुत्वेनोपन्यासायोगात्। न हि परिहृतस्य हेतोः पुनः परिहारो न्याय्यः; कृतकरत्वापत्तेः॥ अत्र सेतोः परिच्छिन्नत्वं पूर्वपक्षशङ्काबीजम्; तत्र तु कूलान्तरप्रापकत्वमिति मुखभेदोऽस्तीति चेन्न—कूलान्तरप्रापकत्वं च सेतोः कूलावधिकत्वनिबन्धनमिति परिच्छिन्नत्वे परिहृते तस्यापि परिहृतत्वात्। परिहारहेतुसाम्याच्च; विवरणार्थतयैव ह्युभयत्र परिहारः। अत उत्तरत्र पूर्वपक्षबीजतयोपन्यासान्यथानुपपत्त्या अस्मिन्नधिकरणे सेतुत्वव्यपदेशः सूत्रकारेण न पूर्वपक्षबीजतया विवक्षितः। प्रधानवाय्वोः शङ्का चानुपपन्ना; "तमेवैकं जानथात्मानम्" इत्यात्मशब्दश्रवणात्, "गौणश्चेन्नात्मशब्दात्" इत्यत्र आत्मशब्दस्याचिद्व्यावर्तकतोपपादनाच्च अचेतनशङ्कोत्थानासंभवात्। स्वशब्द[शब्द?]स्य 'सदायतनाः सत्प्रतिष्ठाः' इति सद्विद्यावाक्यविषयत्वं चायुक्तम्, अपक्षधर्मत्वात्। सद्विद्यावाक्यं हि नात्र श्रूयते॥ इह तदैकार्थ्यं हेतुतया विवक्षितमिति चेत्—तर्हि विगीतस्य हेतुतयोपन्यासो न घटते। द्युपृथिव्याद्यायतनप्रतिपादकवाक्यस्य परमात्मप्रतिपादकवाक्यान्तरैकार्थ्यं हि पूर्वपक्षिणो विमतिपदम्। द्वितीयसूत्रस्य च 'अन्या वाचो विमुञ्चथ' इति श्रवणात् वाग्विमुक्तै(क्त?)ज्ञेयत्वव्यपदेशपरत्वमयुक्तम्; "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति" इति वाक्यस्थविमुक्तशब्दार्थस्य उपैतिशब्दार्थस्य च स्वरसतः प्रत्यभिज्ञापकत्वान्मुक्तोपसृप्यशब्दस्य। विमुञ्चथेति श्रुतस्य वाक्कर्मकस्य मुचिधातोः प्रत्ययविपरिणामेन अवाक्कर्मकमुक्त[पदेन?]प्रत्यभिज्ञानं ह्यस्वरसम्। उपसृप्यशब्दस्य ज्ञेयवाचित्वं चास्वारसिकम्, स्वारसिकार्थानुपपत्त्यभावे अस्वरसार्थौचित्यातिशयाभावे वाऽस्वरसार्थस्वीकारोऽनुपपन्नः॥ प्राणभृच्चेति सूत्रपृथक्त्वकल्पनं चायुक्तम्, हेतुवैषम्याभावात्; उभयव्यावर्तकहेतूपादानवतैकेन सूत्रेणैवोभयव्युदासदर्शनाच्च; यथा 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ', 'अत एव न देवता भूतं च' इति च॥ उपरितनसूत्रोक्तहेतूनां नानुमानमिति प्रतिज्ञायामनन्वयात् पृथग्योगकरणमिति चेन्न—नानुमानमित्युपादानस्य दृष्टान्तार्थत्वात्। दृष्टान्तार्थत्वाभावेऽपि जीवव्यावर्तकानामुत्तरसूत्रहेतूनां किम्पुनर्न्यायेन प्रधानव्यावर्तकत्वाच्च। भेदव्यपदेशादिति सूत्रस्य च तमेवैकं जानथेतिवाक्यविषयत्वादपि, जुष्टं यदा पश्यत्यन्यमीश'मितिवाक्यविषयत्वमुचितम्; व्यपदेशशब्दस्वारस्यात्। कर्मकर्तृभावो हि भेदगमकः; अन्यशब्दश्च भेदाभिधायकः। द्वा सुपर्णेतिवाक्यस्य च बुद्धिजीवपरत्वपक्षोऽनुपपन्नः; प्राणभृच्चेति जीवव्यावृत्तिं प्रतिज्ञाय बुद्धिव्यावृत्त्युपपादनस्यासंगतत्वात्॥ जीव एवोपाधिव्यवच्छेदविरहितः परमात्मा भवतीति नासङ्गतिरिति चेन्न—वृक्षशब्दविवक्षितदेहोपाधिपरिष्वङ्गवेलायामेवानश्नतोऽन्यस्य स्थितेर्हेतुतयोपन्यासायोगात्॥ अनश्नन्नित्यनेन, प्रतीयमानस्याप्युपाधिपरिष्वङ्गस्यापारमार्थ्यं विवक्षितमिति चेत्—तर्ह्यनेन वाक्येन अपरमार्थोपाध्य-

## भूमा संप्रसादादध्युपदेशात् १-३-७

इदमामनन्ति च्छन्दोगाः, 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमा। अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति, तदल्पम्' इति। अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते। तथा हि—पृथ्वादिषु बहुशब्दः पठ्यते; "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्यये कृते, "बहोर्लोपो भू च बहोः" इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति।

न्वयो न प्रतिषिद्धः स्यात्; किन्त्वनुमतःस्यात्। द्युभ्वाद्यायतनं न प्राणभृत् स्थित्यदनाभ्यामित्युक्ते परमार्थतोऽनश्नतया स्थितेरपमार्थतोऽत्तृत्वाच्चेत्युक्तं भवति। अपरमार्थोपाध्यवच्छिन्नात्मत्वमेव हि त्वन्मते जीवत्वम्। ततश्च जीवव्यावृत्तिं प्रतिज्ञाय जीवत्वाविरुद्धतदुपपादकहेतूपन्यासो न घटते। उपाधिमिथ्यात्वमेवाधिकरणप्रतिपाद्यमिति चेत्—तर्हि स्वशब्दमुक्तोपसृप्यत्वभेदव्यपदेशादिहेतवो न घटन्ते; तेषां मिथ्यात्वसाधकत्वाभावात्। भवत्पक्षे विश्वमिथ्यात्वस्य प्रथमाधिकरणसिद्धत्वेन इहोपाधिमिथ्यात्ववर्णनवैयर्थ्याच्च। द्वासुपर्णेतिमन्त्रार्थस्य च हेतुत्वोक्तिरयुक्ता; अत्रोपाधिमिथ्यात्वाप्रतीतेः। न ह्येकवृक्षाधिरूढयोः पक्षिणोर्मिथो विरुद्धाकारयोर्भेदेऽभिहिते वृक्षमिथ्यात्वमुक्तं भवति।

यदपि कैश्चिदुत्प्रेक्षितम्—**द्युभ्वाद्यायतन**मित्यादिसूत्रद्वयमात्मविषयत्वप्रतिपादकम्; **नानुमानमतच्छब्दा**दिति प्रधानव्युदासकमिति—तदयुक्तम्। तथा हि—आद्यस्य सूत्रद्वयस्य निरसनीयशङ्काभावात् तत्प्रणयनवैयर्थ्यं स्यात्। न च तृतीयसूत्रं प्रधानव्यावृत्तिपरम्; मुक्तोपसृप्यतया व्यपदिष्टस्यात एव जीवादपि व्यावृत्तस्य प्रधानत्वशंकानुदयात्। अत **आनुमानो**पादानं दृष्टान्तार्थम्। अत **एव** पृथग्योगकरणं चानुपपन्नमित्युक्तम्। अतस्तृतीयसूत्रं व्यतिरेकेण जीवव्यावृत्त्युपपादनपरम्॥ 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति', 'तद्यदात्मविदो विदुः' इति भेदव्यपदेशेन मुक्तव्यावृत्तिपरं चतुर्थसूत्रमित्यप्ययुक्तम्। मुमुक्षुभिर्ज्ञातव्यत्वं मुक्तव्यावर्तकम्, न वा। प्रथमे, तमेवैकं जानथेति वाक्यादेव मुक्तव्यावृत्तिसिद्धेः भेदव्यपदेशादिति वाक्यान्तरविषयसूत्रप्रणयनवैयर्थ्यम्। द्वितीये सुतरां वैयर्थ्यम्; तमेवैकं जानथेतिवाक्योदितज्ञातृज्ञेयभाववत् परिपश्यन्तीत्यादिवाक्योक्तद्रष्टृदृश्यभावस्यापि मुक्तव्यावर्तनासामर्थ्यात्। अतो यथोक्त एव सूत्राणामर्थः॥ १-३-१

**भूमा**....। परमात्मप्रकरणाविच्छेदेन परमात्मपरत्वं साधितम्; तर्हि जीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कोत्थानात् सङ्गतिः। इयं प्रमाणद्वारिका। पूर्वम्, 'ओतं मनः सह प्राणैश्च सर्वैः' इति प्राणसंबन्धिनः परमात्मत्वमुक्तम्, अत्र प्राणसंबन्धिन एव हिंसायोग्यत्वश्रवणात् जीवत्वं प्रतीयत इत्यर्थद्वारा च सङ्गतिः। विषयमाह **इद**मिति। भूमशब्दस्य रूढितोऽवयवशक्त्या वा जीवपरमात्मोपस्थापकत्वसंभवे हि प्रत्यगात्मा वा परमात्मा वा भूमशब्दवाच्य इति संशयोदयः। अन्यथा भूमशब्दस्य कोऽर्थ इति हि वक्तव्यम्। अतो विशेषविषयसंशयसंभवप्रदर्शनाय भूमशब्दव्युत्पत्तिप्रकारमनुसरन् विचारविषयसंशयसिद्धिं दर्शयति **अत्रायं भूमशब्द** इति। भावप्रत्ययान्तत्वमुपपादयति **तथाही**ति। आकृतिगणत्वव्यावृत्त्यर्थं **पठ्यत** इत्युक्तम्। **बहोरित्यादि**। बहु-

**भूमा—बहुत्वमित्यर्थः। अत्र चायं बहुशब्दो वैपुल्यवाची; न सङ्ख्यावाची; 'यत्रान्यत्पश्यति ...तदल्पम्' इत्यल्पप्रतियोगित्वश्रवणात्। अल्पशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते; न धर्ममात्रपरः। तदेवं भूमेति विपुल इत्यर्थः। वैपुल्यविशेष्यश्चेह आत्मो-त्यवगतः, "तरति शोकमात्मवित्" इति प्रक्रम्य भूमविज्ञानमुपदिश्य, "आत्मैवेदं सर्वम्' इति तस्यैवोपसंहारात्। अत्र संशय्यते-किमयं भूमगुणविशिष्टः प्रत्यगात्मा, उत परमात्मेति।**

**किं युक्तम्? प्रत्यगात्मेति। कुतः? "श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्म-विदिति' इत्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषु उपास्यतयोपदिष्टेषु, 'अस्ति भगवो नाम्नो भूयः,' 'अस्ति भगवो वाचो भूयः" इत्यादयः प्रश्नाः, "वाग्वाव नाम्नो भूयसी", "मनो वाव वाचो भूयः" इत्यादीनि च प्रतिवचनानि प्राणात् प्राचीनेषु दृश्यन्ते; प्राणे तु न पश्यामः। अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते, तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी**

---

शब्दात्परस्य प्रत्ययस्याऽऽदेरचो लोपः—"आदेः परस्य" इति सूत्रवशात्—बहुशब्दस्य भूशब्दादे-शश्चेत्येवं प्रकृतिप्रत्यययोर्विकारः। 'बहवः पुरुषा राजन् उताहो एक एव नु', "द्व्येकयोर्द्विवचनैकवचने" 'बहुषु बहुवचनम्' इति सङ्ख्यायामपि प्रयोगो दृश्यते।'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यत्(यः?)' इति वैपुल्येपि प्रयोगोऽस्ति; तस्मात् सङ्ख्याव्यावृत्त्यर्थमाह **अत्र चाय**मिति। कथं वैपुल्यपरत्वमित्यत्राह **यत्रान्य**दिति। ननु सङ्ख्यावाचिशब्दप्रतियोगित्वादल्पशब्दोऽपि सङ्ख्यापरः स्यात्॥ नैवम्; बहुशब्दस्य सङ्ख्याविपुलत्वयोः प्रयोगदर्शनादल्पशब्दस्य सङ्ख्यायां प्रयोगादर्शनाचानन्यथासिद्धाल्पशब्दानुगुणार्थो **बहुशब्द** इति। धर्मिपरत्वमुपपादयति **अल्पे**ति॥ धर्मवाचि**भूम**शब्दप्रतियोगित्वाद**ल्प**शब्दोऽपि धर्मपरः स्यादिति चेन्न—तत्रापि धर्मिवाचिषष्ठ्यन्तपदान्तराभावात्; 'यत्र नान्यत् पश्यती' तिश्रुतेश्च। न हि धर्ममात्रे ज्ञाते धर्मिस्वरूपं ज्ञातं भवतीति। एवं सिद्धमर्थमाह **तदेव**मिति। वैपुल्यविशेष्यः क इत्याकांक्षायामाह **वैपुल्ये**ति। कथमात्मनो विशेष्यत्वमित्यत्राह **तरती**ति। उपक्रमोपसंहारयोरात्मशब्ददर्शनादित्यर्थः। **अत्रे**ति। किं भूमा प्रत्यगात्मा, उत परमात्मा? प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि प्रश्नप्रतिवचनसमाप्त्या भूमशब्दस्तत्र पर्यवसितः, उतातिरिक्तविषयः? किम् 'एष तु वा अतिवदति, यः सत्येनातिवदति' इति, प्राणातिवादिनोऽङ्गतया सत्यवचनं विधत्ते, उत सत्यशब्दवाच्यपरोपासकस्यातिवादित्वं वदति? किमस्मिन् वाक्ये प्राणातिवादिनः प्रत्यभिज्ञाऽस्ति, नेति। **तु**शब्दः किं प्रत्यभिज्ञाविरोधी, नेति। यदा **तु**शब्दः प्रत्यभिज्ञाविरोधी न भवति, तदा प्राणातिवादिनः प्रत्यभिज्ञासंभवात्, 'एष तु वा' इति वाक्यं तदङ्गभू-तसत्यवचनविधिपरमिति प्राणातिरिक्तवस्त्वभावात् भूमशब्दः प्राणे पर्यवसित इति **भूमा** प्रत्यगात्मेति पूर्वः पक्षः। यदा तुशब्दः प्रत्यभिज्ञाविरोधी भवति, तदा प्राणातिवादिनः प्रत्यभिज्ञानाभावेन 'सत्येनाति-वदति' इतिवाक्यस्य सत्योपासकातिवदनपरत्वेन प्राणातिरिक्तवस्तुसद्भावेन प्रश्नप्रतिवचनसमाप्तावपि **भूम-शब्दस्य** प्राणपर्यवसितत्वाभावात् **भूमा** परमात्मेति राद्धान्तः। **तेने**ति। **तेन**—आत्मजिज्ञासया प्रक्रान्ते **प्रकरणे** प्राणपर्यन्तोपास्योपदेशेन हेतुनेत्यर्थः। प्राणशब्दः कथमात्मनि वर्तेत इत्यत्राह **प्राणसहचारी**ति।

प्रत्यगात्मैव ; न वायुविशेषमात्रम्।

"प्राणो ह पिता प्राणो ह माता" इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति ; "पितृहा मातृहा" इत्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात्, तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषु उपमर्दभावाभावयोर्हिंसातदभावदर्शनादयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत एव च अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः परः इति न भ्रमितव्यम्; जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च।

---

इतरव्याख्यातृषु कैश्चित्, 'पञ्चवृत्तिः प्राणः प्राणशब्दवाच्यः' इत्युक्त्वा तत्प्रकरणाविच्छेदेन भूमा प्राण इति पूर्वपक्षं कृत्वा प्रकरणविच्छेदेन भूमा परमात्मेत्युक्तम्। कैश्चिच्च पञ्चवृत्तिप्राणस्य प्राणशब्दवाच्यत्वमभ्युपगम्य पूर्वपक्षे सिद्धान्ते च तत्प्रकरणविच्छेदं वदद्भिः भूमा प्रत्यगात्मेति पूर्वपक्षं कृत्वा परमात्मेति सिद्धान्तितम्। तदुभयमाशङ्क्याह **न वायुविशेषमात्रमिति**। उपक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वसिद्धेः प्राणस्य चात्मत्वयोगादिति भावः। हेत्वन्तरमाह **प्राणो** हेति। न हि केवलं देहस्य वायुविशेषस्य वा पितृत्वादिकं वेदान्तिषु कश्चिदभ्युपगच्छति। हेत्वन्तरमाह **पितृहे**ति। अत्र प्रकरणेषु हिंसके हिंसानिमित्तोपक्रोशवचनं दृश्यते। अप्राणेषु हिंसके हिंसानिमित्तोपक्रोशाभावश्च दृश्यते। लोके च सजीवनिर्जीवशरीरयोरुपमर्दकारिषूपक्रोशतदभावौ दृश्येते। न हि निष्क्रान्तात्मनः केवलस्य शरीरस्य वा हिंस्यत्वम्; अपि त्वचिद्विशिष्टस्यैव चेतनस्य। तस्मात् सप्राणनिष्प्राणविषयोपमर्दतदभावयोः सजीवनिर्जीवशरीरोपमर्दनिमित्तहिंसातदभावश्रवणात् हिंसाकर्मत्वं प्राणशब्दवाच्यस्य जीवत्वसाधकमित्यर्थः। उपक्रोशतदभावौ पञ्चवृत्तिप्राणवत्त्वतद्रहितत्वनिबन्धनौ स्याताम्; न तु सजीवत्वनिर्जीवत्वकृतावित्यत्राह **अप्राणेष्विति**। **स्थावरेष्वपि चेतनेष्विति**। "ओषधिवनस्पतयो यच्च किञ्चित् प्राणभृत् स आत्मानमाविस्तरां वेद," "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादिश्रुतिस्मृतिभिः स्थावराणां ज्ञातृत्वकर्मफलभोक्तृत्वावगमात् तेषां चेतनत्वं वेदान्तान् स्मृतिवचनानि च प्रमाणयद्भिरभ्युपेत्यमिति भावः। प्रक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वं मातृत्वपितृत्वादिकं हिंसायोग्यत्वं चेति त्रितयं जीवत्वसाधकं पूर्वपक्षे; सिद्धान्ते तु पितृत्वादिकं हिंसाकर्मत्वं च द्वयमेव जीवत्वसाधकमिति भिदा। अरनाभिदृष्टान्तपूर्वकसर्वाधारत्वोपन्यासेन प्राणशब्दनिर्दिष्टः परमात्मेति प्रतीयत इत्यत्राह **अतएवेति**। **दृष्टान्तादी**त्यादिशब्देन धारकत्वम्। प्राणशब्दनिर्दिष्टस्य मुख्यप्राणत्वशङ्कानिरासहेतुरेव परमात्मत्वशङ्काया अपि निरासहेतुरिति सूचयत्येवकारः। कुत इत्यत्राह **परस्येति**। हिंसाया अभावो मुक्तस्याप्यस्तीति तद्व्यावृत्त्यर्थं **हिंसाप्रसक्त्यभावादित्युक्तम्**। तर्ह्यरनाभिदृष्टान्तः कथमित्यत्राह **जीवादितरस्येति**। एवं हिंसायोग्यत्वं पञ्चवृत्तिप्राणात् परमात्मनश्च व्यावर्तकमित्युक्तं भवति।

**अयमेव च प्राणशब्दनिर्दिष्टो भूमा; 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य, 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्य चाभावाद्भूमसंशब्दनात्प्राक् प्राणप्रकरणस्याविच्छेदात्। किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तमेव, 'एष तु वा अतिवदति' इति प्रत्यभिज्ञाप्य, 'यः सत्येनातिवदति' इति तस्य सत्यवदनं प्राणोपासनाङ्गतयोपदिश्य, उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानम्, 'यदा वै विजानाति, अथ सत्यं वदति' इत्युपदिश्य, तत्सिध्यर्थं च मनन-श्रद्धा-निष्ठा-प्रयत्नान् उपदिश्य, तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य, तस्य च सुखस्य विपुलता, "भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्यते। तदेवं प्रत्यगात्मन एवाविद्यावियुक्तं रूपं विपुलसुखमित्युपदिष्टमिति, 'तरति शोकमात्मवित्' इत्युपक्रमाविरोधश्च; अतो भूमगुणविशिष्टः प्रत्यगात्मा। अत एवाहमर्थे प्रत्यगात्मनि, 'अहमेवाधस्तादहमुपरिष्टात्' इत्यारभ्य, 'अहमेवेदं सर्वम्' इति प्रत्यगात्मनो वैभवमुपदिशति। एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति॥**

**एवं प्राप्तेऽभिधीयते—भूमा संप्रसादादध्युपदेशात्। भूमगुणविशिष्टो न प्रत्यगात्मा; अपि तु परमात्मा। कुतः? संप्रसादादध्युपदेशात्—संप्रसादः प्रत्यगात्मा, 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युपनिषत्प्रसिद्धेः। संप्रसादात्—प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः। सत्यशब्दाभिधेयश्च**

---

एवं जीवः प्राणशब्दवाच्योऽस्तु, ततः किं भूमविशिष्टस्य जीवत्वे इत्यत्राह-**अयमेव** चेति। प्रकरणाविच्छेदं हेतुमाह **अस्ति भगव** इति। प्रश्नप्रतिवचनाभावः प्रकरणाविच्छेदहेतुः; तदविच्छेदो भूमविशिष्टस्य जीवत्वहेतुरित्यर्थः। तुशब्दस्य प्रकरणविच्छेदकत्वमाशङ्क्याह—**किञ्चेति**। 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्यत्र अग्निहोत्रिवत् प्राणातिवादिनः प्रत्यभिज्ञानात् तस्यैव तदङ्गतया सत्यकथनमुक्तमित्यर्थः। कथं जीवस्वरूपस्य विपुलसुखत्वम्? तद्धि शोकप्रचुरमित्यत्राह **अविद्यावियुक्तं रूपमिति**। उपक्रमे, 'तरति शोकमात्मवित्' इति शोकाविष्टत्वं जीवस्य प्रतिपन्नम्, तत् कथं विपुलसुखत्वमित्यत्राह **उपक्रमाविरोधश्चेति**। बद्धो हि सशोकः; मुक्तस्वरूपं विपुलसुखमित्यर्थः। अहंशब्दनिर्देशं च हेतुमाह **यत एवमिति**। कथमहंशब्दनिर्देशः प्रत्यगात्मत्वसाधक इत्यत्राह **अहमर्थे प्रत्यगात्मनीति**। अहमर्थस्य प्रत्यगात्मत्वादित्यर्थः। **तदनुगुणतयेति**। स्वमहिमप्रतिष्ठितत्वादिपराणि वाक्यानि अस्वरसं योजनीयानीत्यर्थः॥

सूत्रं व्याचष्टे **भूमेति**। शुद्धस्वरूपाभिप्रायेण सूत्रे **संप्रसाद**[शब्द?]निर्देशः कृतः। **संप्रसादशब्दस्य** प्रत्यगात्मपरत्वं कथमित्यत्राह **एष** इति। हेतुवाचिपदेषु संप्रसादशब्दो व्याख्यातः; पदान्तरद्वयं व्याचष्टे **संप्रसादादिति**। न हि प्राणकथनानन्तरं भूमविशिष्टस्याधिकत्वं श्रूयत इत्यत्राह **सत्यशब्दाभिधेयस्येति**। **सत्यशब्दात्** पश्चात्प्रकरणविच्छेदाभावेन **सत्यशब्दवाच्य** एव भूमविशिष्ट इति भावः। भूमविशिष्टः **सत्यशब्दाभिधेयोऽस्तु**; ततः किं तस्य भूम्नः परमात्मत्वसिद्धेरित्यत्राह **सत्यशब्दाभिधेयं चेति**। **सत्य-**

परं ब्रह्म । एतदुक्तं भवति—यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात् पूर्वेभ्य उत्तरेषामर्थान्तरत्वम्—एवं प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽधिकतया निर्दिष्टः सत्यशब्दाभिधेयस्तस्मादर्थान्तरभूत एव; सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यत इति । तदाह वृत्तिकारः, "भूमा त्वेवेति भूमा ब्रह्म; नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्" इति ॥

प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत्—'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति प्राणविदोऽतिवादित्वमुक्त्वा, 'एष तु वा अतिवदति, यस्सत्येनातिवदति' इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति । अत एव, 'एष तु वा अतिवदति' इत्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा ।

---

शब्दाभिधेयस्य तुशब्दोपेतातिवादिशब्देनाधिकतयोपदेशोऽस्तु आधिक्यस्य च प्राणशब्दवाच्यजीवप्रतियोगिकत्वं कथम् ? न हि, 'मनो वाव वाचो भूयः' इत्यादिवत् पञ्चम्यन्तः प्राणशब्दः श्रुतः । अतो न सत्यस्य प्राणशब्दवाच्याज्जीवादर्थान्तरत्वम्; अपि तु पूर्वनिर्दिष्टाया आशाया अधिकतयोपदिष्टः प्राणः सत्यशब्दवाच्यः; परिशुद्धप्रत्यगात्मस्वरूपस्यापि, 'सत्यं चानृतं च सत्यमभवत्' इत्यादाविव सत्यशब्दवाच्यत्वं संभवेदित्यत्राह **एतदुक्तं भवती**ति । पूर्वनिर्दिष्टादूर्ध्वमभिधानं हि पूर्वनिर्दिष्टप्रतियोगितयोत्तरोत्तरेषामधिकतयाऽर्थान्तरत्वे हेतुः । तस्य हेतोः सपक्षे व्याप्तिं दर्शयति **यथे**ति । **एवं**शब्देन हेतुरभिप्रेतः । उत्तरोत्तरनिर्दिष्टानां पूर्वपूर्वनिर्दिष्टादधिकतया **अर्थान्तर**प्रतिपादनप्रकरणत्वात् प्राणशब्दनिर्दिष्टादूर्ध्वं निर्दिष्टः सत्यशब्दवाच्यः तस्मात् प्राणादधिकतया अर्थान्तरभूत एवेत्यर्थः । ततः किं भूमशब्दवाच्यस्य परमात्मत्वे इत्यत्राह **सत्यशब्दे**ति । अनेन पूर्वं सूत्राक्षरयोजनायामुक्तस्य **सत्यशब्दाभिधेयस्ये**ति पदस्याभिप्रायो विवृतो भवति । **तदाहे**ति । पूर्वनिर्दिष्टादधिकतयोत्तरोत्तरनिर्देशप्रकरणत्वात् प्राणशब्दवाच्याज्जीवादूर्ध्वमुक्तः सत्यशब्दवाच्य उपास्यो भूमा ततोऽधिकं परं ब्रह्मेति **वृत्तिकार**ग्रन्थस्यार्थः । **आत्मन ऊर्ध्व**मित्यनेन, प्राणशब्दनिर्दिष्टस्य जीवात्मत्वं **वृत्तिकारा**भिमतम्; न तु पञ्चवृत्तिप्राणपरत्वमित्यवगतम् । अतः प्राणशब्दवाच्यस्य जीवत्वमाश्रित्यैव पूर्वपक्षसिद्धान्तवर्णनं **वृत्तिकारा**भिमतमिति ज्ञापनं **वृत्तिकारग्रन्थो**पादानफलम् । एवमधिकतयोपदेशसिद्धवत्कारेण सत्यस्य प्राणादधिकतया अर्थान्तरत्वमुक्तम् । अथ प्राणप्रतियोगिकार्थान्तरत्वहेतुत्वेनोक्तोऽधिकतयोपदेश एव कथम्? सत्यवचनं हि प्राणोपासनाङ्गतयोपदिष्टमित्युक्तम्—इति पराभिप्रायं शङ्कते **प्राणशब्दे**ति । **तुशब्देन** प्रकरणविच्छेदान्नाङ्गविधिरिति प्रतिवदति **स वा एष** इति । **व्यावर्तयति**—अधिकतया व्यावर्तयतीत्यर्थः । पूर्वनिर्दिष्टादुत्तरनिर्दिष्टस्याधिकत्वोपदेशपरप्रकरणत्वादिति भावः । उपासकाधिक्यात् तन्निमित्तोपास्याधिक्यं वक्तुं **तुशब्द**स्वारस्येनोपासकवैलक्षण्यमुक्तम् । **तुशब्दो** ह्यसङ्कुचितवृत्तिः धर्मधर्मिणोरविशेषेण भेदकः । ननु कथं तुशब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिः? **एत**च्छब्दसामर्थ्येन पूर्वातिवादी हि प्रत्यभिज्ञायत इत्यत्राह **अत एवे**ति । प्रकृतप्रकरिष्यमाणसाधारण **एतच्छब्दः**; **नायमेकान्ततः प्रकृतमभिनिविशते** । पाश्चात्ययद्वृत्तप्रतिनिर्देशरूपत्वाच्च नायं

अतोऽस्यातिवादित्वनिमित्तं सत्यं पूर्वातिवादित्वनिमित्तात् प्राणादधिकमिति विज्ञायते ॥ ननु च 'प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम्; अतः प्राणप्रकरणाविच्छेदः' इत्युक्तम् ॥ नैतद्युक्तम्; तुशब्देन ह्यतिवाद्येवान्यः प्रतीयते; न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम्। "एष तु वा अग्निहोत्री, यः सत्यं वदति" इत्यादिष्वग्निहोत्र्यन्तराप्रतीतेः प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते। अत्र त्वतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते। सत्यशब्दश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः। अतस्तन्निष्ठ-

---

प्रकृतपरः। तुशब्दस्वारस्यं च प्रकरणविच्छेदकम्। अतः पूर्वातिवादिनः प्रत्यभिज्ञा नास्तीत्यतिवाद्यन्तरं प्रतिपन्नमित्यर्थः। अतिवाद्यन्तरप्रतिपत्तिरस्तु; ततः किं सत्यस्य प्राणशब्दवाच्यादधिकत्वे इत्यत्राह **अतोऽस्येति**। **तुशब्दः** पूर्वातिवादिनोऽतिशयितोपास्यान्तरविशिष्टमेवातिवाद्यन्तरं भिनत्ति, स्वोपास्यवस्त्वाधिक्यं ह्यतिवदननिमित्तम्। अतः प्राणातिवादिनोऽतिवदननिमित्तात् तदुपास्यात् प्राणादपि तदुत्तरवाक्यनिर्दिष्टस्य सत्यातिवादिनोऽतिवदननिमित्तं तदुपास्यं सत्यमधिकमित्यर्थः। अग्निहोत्रिवाक्यदृष्टान्ते तुशब्दस्य व्यभिचारं हृदि निधायातिवाद्यन्तराप्रतिपत्तिमुखेन चोदयति **ननु चेति**। परिहरति **नैतद्युक्त**मिति। अग्निहोत्रिवैषम्यं वक्ष्यन् तुशब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिमाह **तुशब्देने**ति। अग्निहोत्रिवाक्यदृष्टान्तात् दार्ष्टान्तिकस्य सत्यातिवादिवाक्यस्य वैषम्यं वक्तुं दृष्टान्ते स्वारस्यहानिमाह **एष त्विति**। **अग्निहोत्र्यन्तराप्रतीते**रिति। अतिवादिस्थानीयोऽग्निहोत्री; उपासनस्थानीयमग्निहोत्रम्; द्रव्यदेवतास्थानीयमुपास्यम्। अत्र अग्निहोत्र्यन्तराप्रतीतिरग्निहोत्रान्तराप्रतीतेः; सा च द्रव्यदेवताविशेषाप्रतीतेः; सा च सत्यवचनशब्दस्य दध्यादिद्रव्यदेवताविशेषोपस्थापनासामर्थ्यात्। एवमग्निहोत्र्यन्तरसमर्पकशब्दाभावात् तत्र तुशब्दस्वारस्यं भग्नमित्यर्थः। इहापि तर्ह्यतिवाद्यन्तराप्रतीतेरग्निहोत्रिन्यायो भवतीत्यत्राह **अत्र त्विति**। अत्र त्वतिवाद्यन्तरत्वनिमित्तमुपासनान्तरं तद्धेतुभूतमुपास्यान्तरं च प्रतीयते,। इह तत्समर्पणसमर्थस्य सत्यशब्दस्य सद्भावात् शब्दस्वारस्यं न भञ्जनीयम्। अतः अतिवाद्यन्तरं सिद्धमित्यर्थः। किञ्च- न परं द्रव्यदेवतोपस्थापकशब्दाभावादग्निहोत्र्यन्तराप्रतीतिः; किन्तु कर्मस्वरूपोपस्थापकशब्दाभावाच्च। न हि जुहोत्यादिपदान्तरं श्रूयते। न च श्रूयमाणो वदतिशब्दो जुहोत्यर्थः। अतश्चाग्निहोत्रान्तराप्रतीतेरग्निहोत्रशब्द सजातीयव्यक्तिमलभमानः प्रकृतमेवाग्निहोत्रमवलम्बते, इह तु—न परमुपास्यान्तरसमर्पणक्षमः सत्यशब्द एव; 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपासनान्तरोपस्थापकशब्दश्च श्रूयते। अत उपासनान्तरप्रतीतेरुपासकान्तरप्रतीतिसद्भावादतिवादिशब्दस्तद्विषयो भवितुमर्हतीति तुशब्दस्वारस्यं न भञ्जनीयम्। अतः प्रकरणविच्छेद इति चाभिप्रायः॥ तुशब्दस्य धर्मिभेदकत्वे सिद्धे सत्यशब्दस्योपास्यान्तरसमर्पकत्वम्, सत्यशब्दस्योपास्यान्तरसमर्पकत्वे तुशब्दस्य धर्मिभेदकत्वमित्यन्योन्याश्रयमाशङ्क्य सत्यशब्दस्योपास्यान्तरपरत्वप्रसिद्धिं दर्शयति **सत्यशब्दश्चेति**। ततः किमित्यपेक्षायां तुशब्दस्वारस्यफलितमर्थमाह **अत इति**। न हि तुशब्दस्य धर्मिभेदकत्वस्वारस्यं सत्यशब्दापेक्षम्। सत्यशब्दस्योपास्यान्तरसमर्पणक्षमत्वं श्रुतिसिद्धम्, न तुशब्दापेक्षम्। सत्यशब्दस्य न जीवपरसाधारण्यम्; परस्यैव निरुपाधिकसत्यत्वात्। साधारण्येऽपि

स्यातिवादिनः पूर्वस्मादधिकत्वं संभवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम् । अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतया अतिक्रान्तस्वोपास्यवस्तुवादित्वम ; नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात् प्राणविदोऽतिवादित्वम् ; तस्यापि सातिशयपुरुषार्थत्वात् निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति, 'एष तु वा अतिवदति यस्सत्येनातिवदति' इत्युक्तम् । सत्येनेतीत्थम्भूतलक्षणे तृतीया ; सत्येन—परेण ब्रह्मणोपास्येनोपलक्षितः योऽतिवदतीत्यर्थः । अत एवैवं शिष्यः प्रार्थयते, "सोऽहं भगवः सत्येनातिवदानि" इति । आचार्यश्च, 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्याह । "आत्मतः प्राणः" इति च प्राणशब्दनिर्दिष्टस्यात्मन उत्पत्तिरुच्यते ; अतः 'तरति शोकमात्मवित्' इति प्रक्रान्त

---

विलक्षणोपास्यवाचकत्वमपि सम्भवति । तथा सति न तुशब्दस्वारस्यभङ्गः, अतोऽन्योन्यसापेक्षत्वाभावात् नान्योन्याश्रय इत्यभिप्रायेण **पूर्वस्मादधिकत्वं संभवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्य**मित्युक्तम् । प्राणोपासकस्यासाधारणमतिवादित्वं नातिवाद्यन्तरं सहते ; अतोऽतिवादिशब्दस्वारस्यार्थं तुशब्दस्वारस्यभङ्ग इत्यत्राह **अतिवादित्वं ही**ति । न हि प्राणातिवादिन्येवातिवादिशब्दो रूढः, "क्लृप्तावयवशक्त्यैव लब्धे स्वार्थावबोधने । नष्टावयवनामत्वं प्रत्याचष्टे हि सूत्रकृत्" इति दर्शितात् , "प्रोक्षणीष्वर्थसंयोगात्" इति सूत्रितात् प्रोक्षणीनयादवयवशक्त्या स्वार्थबोधे संभवति रूढिकल्पनाऽयोगात् । अतो न प्राणातिवादिन्येवातिवादिशब्दस्वारस्यमित्यर्थः । अतिक्रान्तस्वोपास्यवस्तुवादित्वम**तिवादि**शब्दप्रवृत्तिनिमित्तमितीममर्थं प्राणातिवादिनि दर्शयति **नामादी**ति । अस्य प्रवृत्तिनिमित्तस्य परमात्मोपासक एव पुष्कलत्वात् तस्मिन्नेव **अतिवादि**शब्दो मुख्य इति , 'यः सत्येनातिवदति' इति वदत आचार्यस्याभिप्राय इत्याह **तस्यापी**ति । तुशब्दस्या**तिवादि**शब्दस्योभयस्याप्यस्मत्पक्ष एव स्वारस्यमिति भाव । 'सत्यमुपास्यं चेत्, 'स वा एष एवं पश्यन्' इतिवत् सत्यं पश्यन्अतिवदतीति वक्तव्यम्; न तु **सत्येने**ति'इति शङ्कायां तृतीयाया अर्थमाह **सत्येने**ति । सत्यवदनपक्ष एव तृतीयानुपपत्तिः, उपसर्गवैयर्थ्यं चेति भावः । उपास्यान्तरत्वमुपपादयति **अत एवैव**मिति । **अत एव**—सत्यशब्दस्योपास्यान्तरपरत्वादेव । 'सोऽहं भगवःसत्येनातिवदानि' इति शिष्यः प्रार्थयते, न तु प्राणेनातिवदानीतीत्यर्थः । **आचार्यश्चे**ति । 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्याह; न तु प्राण एवेतीत्यर्थः । यद्वा—अतिवादिशब्दस्य यौगिकत्वमुपपादयति **अत एवैव**मिति । अतिवादिशब्दस्य यौगिकत्वादेव हि अतिवदानीत्याख्यातनिर्देश इत्यर्थः । यद्वा अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैवातिवादिशब्दप्रवृत्तिनिमित्तत्वादेव हि शिष्यप्रार्थनमित्यर्थः । अयमर्थः पूर्वोक्तार्थफलम् । **आचार्यश्चे**ति । **अत एवे**त्यनुषङ्गः । अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैव प्रवृत्तिनिमित्तत्वादेव हि **सत्य**शब्दाभिप्रेयम् , **सत्यं त्वेव विजिज्ञासितव्यम्** इत्युपास्यतयोक्तमित्यर्थः । किञ्च सत्यवदनमङ्गतया विहितं चेत्, सत्यं संपाद्यमित्युक्तं स्यात् । तदानीं विजिज्ञासितव्यशब्दास्वारस्यं भवेत् । सत्यं **विजिज्ञासितव्यम्**—वदनार्थं ज्ञातव्यमित्यर्थ इति चेत्—अध्याहारप्रसङ्ग इति भावः । सूत्राभिप्रेतेन हेत्वन्तरेणाप्यधिकतयोपास्यान्तरत्वमुपपादयन् **संप्रसादादध्युपदेशं** विवृणोति **आत्मन** इति ।

आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते ॥

यत्तूक्तम्—अस्ति भगवः प्राणाद्भूयः इति प्रश्नस्य, अदो वाव 'प्राणाद्भूयः इति प्रतिवचनस्य चादर्शनात् प्रक्रान्त आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यत इति—तदयुक्तम्, न हि प्रश्नप्रतिवचनाभ्यामेवार्थान्तरत्वं गम्यते ; प्रमाणान्तरेणापि तत्सम्भवात् । उक्तं च प्रमाणान्तरम् । 'अस्ति भगवः प्राणाद्भूयः' इत्यपृच्छतोऽयमभिप्रायः—नामादिष्वाशापर्यन्तेष्वचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वप्युत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिन आचार्येणातिवादित्वं नोक्तम् ; प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति अतिक्रान्तवस्तुवादित्वमुक्तम् । अतोऽत्रैवात्मोपदेशः समाप्त इति मत्वा शिष्यो भूयो न पप्रच्छ । आचार्यस्त्विदमपि सातिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म, "एष तु वा अतिवदति यः सत्येनातिवदति" इति स्वयमेवोपचिक्षेप । शिष्योऽपि परमपुरुषार्थरूपे परस्मिन् ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया 'सोऽहं भगवः सत्येनातिवदानि' इति प्रार्थयामास । ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूत ब्रह्मोपासनम्, 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य, तदुपायभूत ब्रह्ममननम् 'मतिस्त्वेव विजिज्ञासितव्या' इत्युपदिश्य, श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धाम्, 'श्रद्धा त्वेव विजिज्ञासितव्या' इत्युपदिश्य, तदुपायभूतां तदुद्योगप्रयत्नरूपां कृति-

---

पूर्वपक्षयुक्तिमनुवदति **यत्त्विति** । परिहरति **तदयुक्तमिति** । **उक्तं चेति** । प्रश्नप्रतिवचने हि लिङ्गम् ; तदभावेऽपि तुशब्दश्रुतिरात्मनः प्राणोत्पत्तिश्च लिङ्गमिति प्रमाणान्तरमुक्तमित्यर्थः । तत्र प्रश्नाभावः किंनिबन्धन इत्यत्राह अस्तीति । **पुरुषार्थभूयस्त्वातिशयं मन्वानेन;** आत्मोपदेशस्य तत्पर्यन्तत्वं मन्वानेनेत्यर्थः । **स्वयमेवोपचिक्षेपेति** । **भगवद्गीतायामपि,** "तस्माद्योगी भवार्जुन"- इति जीवात्मयोगं परिसमाप्य, "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इति परमात्मोपासनं भगवानेव ह्युपक्षिप्तवान्, तद्वदिति भावः । **ततो ब्रह्मेति** । **ब्रह्मसाक्षात्कारनिमित्तेत्यनेन**, "यद विजानात्यथ सत्यं वदति" इत्यस्य वाक्यस्यार्थ उक्तो भवति । **विजानाति**शब्दः साक्षात्कारपरः ; न तु शास्त्रजन्यज्ञानपरः; "यदा वै मनुते अथ विजानाति" इति जानात्यर्थस्य मननसाध्यत्वावगमात् । **सत्यं वदति** सत्यमतिवदतीत्यर्थः । अतिवादस्य प्रकृतत्वात् । यदा ब्रह्म साक्षात्करोति, तदाऽतिवदति । तस्मादतिवादित्वनिमित्ततत्साक्षात्काराय तदुपायभूतं सत्योपासनं कुर्यादित्यर्थः । **श्रवणोपायभूतां ब्रह्मणि श्रद्धामिति** । श्रवणमनननिदिध्यासनप्राप्तिविषयो हि ब्रह्म । तद्विषयश्रद्धा च तत् श्रोतुं मन्तुं द्रष्टुं प्राप्तुं च भवति । तत्र श्रवणोपायभूतां श्रद्धामित्यनेन श्रोतुं श्रद्धा विवक्षिता । **श्रद्धा-त्वरा** । **तदुपायभूतां च तन्निष्ठाम्** तस्मिन् ब्रह्मणि निष्ठा **तन्निष्ठा** । ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायो **निष्ठा** । श्रोतव्यत्वनिश्चये हि श्रोतुं त्वरा भवति । **तदुद्योगप्रयत्नरूपां कृतिमिति** । **उद्योग**शब्दवाच्यप्रयत्नरूपां कृतिमित्यर्थः । सा च श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसो नियमनरूपा अन्यस्मिन्नुपादेयत्वबुद्ध्या प्रवणमनस्कस्य हि, 'ब्रह्मैव श्रोतव्यम्, नान्यत्' इ

मपि, 'कृतिस्त्वेव विजिज्ञासितव्या' इत्युपदिश्य, श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति, 'सुखं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य, निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य, निरतिशयविपुलता ज्ञातव्येति, 'भूमा त्वेव विजिज्ञासितव्य' इत्युपदिश्य, निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते ; "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमा" इति । अयमर्थः—अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत् किमपि न पश्यत्यनुभविता, ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य । अत ऐश्वर्यापरपर्यायविभूतिगुण-

---

त्यध्यवसायो न भवति । **श्रवणा**दीति । जिज्ञासितस्य पुरुषार्थत्वे तस्य निरतिशयत्वे च ज्ञाते सति मनसः सातिशयपुरुषार्थान्तरवैमुख्यकरणं संभवतीत्यभिप्रायः । निरतिशयपुरुषार्थत्वावगमश्च शास्त्रादेवाऽऽपातप्रतीतिदशायां भवति; यादृच्छिकसज्जनसंवादादिना च सिध्यति । "यदा वै श्रद्दधात्यथ मनुते । यदा वै निस्तिष्ठत्यथ श्रद्दधाति । यदा वै करोत्यथ निस्तिष्ठति " इति मननादीनां श्रद्धाद्यानन्तर्यश्रवणात् भाष्ये तेषामुपायोपेयभाव उक्तः । ' यदा वै सुखं लभते ' इति श्रुतौ **लाभ**शब्दो बुद्धिवाची; लभतेः प्राप्त्यर्थत्वादित्यभिप्रायेण **सुखरूपता ज्ञात**व्येत्युक्तम् । न हि श्रवणादेः पूर्वमेव निरतिशयसुखप्राप्तिरुपपद्यते । सत्यव्यतिरिक्तविषयाणि **जिज्ञासितव्य**पदानि संपाद्यत्ववाचीनि । **यत्र नान्य**दिति वाक्येऽन्यदर्शनश्रवणादिनिषेधात् दृश्यमिथ्यात्वशङ्का स्यादिति तद्व्युदासाय तस्य वाक्यस्यार्थमाह **अयमर्थ** इति । अर्थस्वभावात् **अनुभूयमाने** इत्यध्याहारः कृतः । न हि ब्रह्मसद्भावाद्दुःखरूपवस्त्वन्तरादर्शनं भवति । **ततोऽन्यत्**—सुखरूपात् ब्रह्मणोऽन्यत् । **न पश्यति**—दुःखरूपं तद्व्यतिरिक्तं च किञ्चिन्न पश्यतीत्यर्थः । 'यो वै भूमा तत् सुखम्' इत्युक्तनिरतिशयसुखरूपब्रह्मलक्षणपरत्वाद्वाक्यस्य । तत्र दुःखदर्शनाभावहेतुरनवधिकातिशयसुखरूपत्वम् । अनवधिकातिशयसुखरूपत्वाद्दुःखं न पश्यतीत्यर्थः । अन्यदर्शनाभावे हेतुमाह **ब्रह्मस्वरूपे**ति । **कृत्स्नस्य वस्तुजातस्ये**ति । स्वरूपान्तर्गताः ज्ञानादिगुणाः , विभूत्यन्तर्गतं जगदखिलमित्यभिप्रायः । अभिप्रेतहेतुसमुच्चयार्थः चशब्द । ननु **यत्रे**ति पदं ब्रह्मपरम्; न तु विभूतिपरम् । न च तद्विषयं पदान्तरमस्ति । अतो **ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वा**दित्ययुक्तम् । अस्तु वा तद्वाचिशब्दः ; **नान्यत् पश्यती**त्ययुक्तम्, विभूतिर्हि ब्रह्मणोऽन्येति शङ्कायामुक्तं विवृणोति **अत ऐश्वर्ये**ति । **अतः**— ब्रह्मणः सुखरूपतायाः कृत्स्नविभूतेस्तदन्तर्भावस्य च प्रामाणिकत्वात् । विभूतिविषयो गुणः विभूतिगुणः ; स एव ऐश्वर्यापरपर्यायं नियमनम्; तद्विशिष्टं ब्रह्म । न हीशितव्यज्ञानं विनैश्वर्यविशिष्टानुभवसंभवः ; निरूपकेण विना निरूप्यज्ञानायोगादिति भावः । यद्वा अत्रैवोपनिषदि , "स भगवः कस्मिन् प्रतिष्ठित इति । स्वे महिम्नि । यदि वा न महिम्नीति । गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति । नाहमेवं ब्रवीमि ; अन्यो ह्यन्यस्मिन् प्रतिष्ठितः " इति श्रूयते । अत्र **स्वे महिम्नि प्रतिष्ठित** इत्युक्ते , हस्त्यादीनां नियाम्यानां महिमशब्दवाच्यत्वात् तत्प्रतिष्ठितत्वशङ्कायां ' यदि वा न महिम्नीति हस्तिहिरण्यादिमहिमनिष्ठत्वं निषिद्धम् ; तदेव शङ्काबीजमुपन्यस्य व्युदस्यति—गोअश्वमित्यादिना ।

विशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवन् तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति ; अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति । तदेव हि सुखम्, यत् अनुभूयमानं पुरुषानुकूलं भवति ॥

ननु चेदमेव जगत् ब्रह्मणोऽन्यतया अनुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत् कथमिव ब्रह्मविभूतित्वेन तदात्मकतयाऽनुभूयमानं सुखरूपमेव भवेत् ॥ उच्यते । कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत् तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति । अतो ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात् कर्मरूपाविद्याविमुक्तस्य तदेव जगत् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति । यथा—पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति, तदेव पयः पित्तानुपहतस्य सुखायैव भवति—यथैव राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेनानुसन्धीयमानं प्रियत्वमनुपगत तथात्वानुसन्धाने प्रियतमं भवति—तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं चानुसन्धीयमानं जगत् निरतिशयप्रीतये भवत्येव। अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूपं ब्रह्मानुभवन् ततोन्यत् किमपि न पश्यति, दुःखं च न पश्यति । एतदेवोपपादयति वाक्यशेषः, "स वा एष एवं पश्यन्नेवं मन्वान एवं

---

"अस्य महिमानमिति वीतशोकः", "एतां विभूतिं योगं च" इत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमादिह न महिमनिषेधः, अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेध इत्यवगम्यते । अतो महिमविभूत्यादिशब्दाश्च न स्वरूपमात्रपराः, "विभूतिर्भूतिरैश्वर्यम्" इत्यैश्वर्यपर्यायत्वादिति महिमापह्नवशङ्काव्युदासाय **ऐश्वर्यापरपर्याये**त्युक्तम् । इदानीं विभूतिरेव **गुणाः** । **गुण**शब्दो विभूतेरपृथक्सिद्धत्वाभिप्रायः । विभूत्या गुणैश्चेति वाऽर्थः । **विभूतिगुणविशिष्ट**मिति । यच्छब्द एव विशिष्टब्रह्मपर इति भावः । पूर्वं **विभूत्यन्तर्गत**त्वादिति अन्वयहेतुरुक्तः; व्यतिरेकरूपं हेतुमाह **तद्व्यतिरिक्तस्ये**ति । विशिष्टब्रह्मणोऽन्यदर्शनं निषिध्यते; न त्वन्यदर्शनमित्यर्थः । विभूतिविशिष्टं ब्रह्म अनुभाव्यं चेत्, विभूतेः दुःखरूपत्वदर्शनात् दुःखादर्शनमनुपपन्नमित्यत्राह **अनुभाव्यस्ये**ति । **सर्वस्य** सर्वविभूतिकस्येत्यर्थः । पूर्वाभिप्रेतादेव हेतोरित्ये**व**काराभिप्रायः । सर्वस्य सुखरूपत्वं कथम् ; आत्मगुणविशेषो हि सुखमित्यत्राह **तदेव हि सुख**मिति । अनुकूलत्वं नाम स्वत इष्टत्वम् । तच्चानिष्टनिवृत्तिरूपतयेष्टसाधनतया च विनाऽपीष्टत्वम् । अनुभवविरोधेन चोदयति **ननु** चेति । न ह्येकमेकदैव सुखदुःखात्मकविरुद्धस्वभावालिङ्गितमिति युज्यते । न हि निम्बपत्रं कस्यचिन्मधुरं भवति । न च सर्पः कस्यचिदनुकूलबुद्धिबोध्यो भवति । न च जगतः शक्यं दुःखरूपत्वमपह्नोतुम्; तस्य सर्वैरभ्युपगन्तव्यत्वात् । इतरथा तज्जिहासया ब्रह्मजिज्ञासानुपपत्तेः । अतः परिशेषात् सुखरूपत्वमेव त्यक्त[व्यः?]मित्यभिप्रायः । स्वतोऽपरिच्छिन्नसुखरूपस्याप्युपाधितोऽन्यथारूपसंभवादविरोध इति परिहरति **उच्यत** इति । कर्म, तत्तिरोधानकृतम् अब्रह्मात्मकत्वज्ञानं चोपाधिः । ततः किमित्यत्राह **अतो ब्रह्मण** इति । स्वतो मधुरस्यापि दोषसंबन्धादननुकूलत्वे, अनुकूलबुद्ध्यविषयस्य केनचित् संबन्धित्वज्ञानादनुकूलत्वे च दृष्टान्तद्वयमाह **पित्तोपहतेने**ति । दार्ष्टान्तिकेऽपि तादृक्त्वमाह **तथे**ति । **यत्र नान्य**दिति वाक्यस्यार्थं निगमयति **अत** इति । **एतत्** औपाधिकदुःखरूपतायास्तद्विगमेऽनवस्थानम् । **स वा एष**

विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः; स स्वराड्भवति; तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथाऽतो विदुरन्यराजानः ते क्षय्यलोका भवन्ति; तेषां सर्वेषु लोकेष्वकामचारो भवति" इति। स्वराट्—अकर्मवश्यः। अन्यराजानः—कर्मवश्याः। तथा, "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च। निरतिशयसुखरूपत्वं च ब्रह्मणः, "आनन्दमयोऽभ्यासात्" इत्यत्र प्रपञ्चितम्। अतः प्राणशब्दनिर्दिष्टात् प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशात् भूमा परं ब्रह्म' ॥ ७ ॥

## धर्मोपपत्तेश्च ॥ ८ ॥

अस्य भूम्नो ये धर्मा आम्नायन्ते, तेऽपि परस्मिन्नेवोपपद्यन्ते। 'एतदमृतम्' इति स्वाभाविकममृतत्वम्, 'स्वे महिम्नि' इत्यनन्याधारत्वम्, 'स एवाधस्तात्' इत्यादि—'स एवेदं सर्वम्' इति सर्वात्मकत्वम्, 'आत्मतः प्राणः' इत्यादिप्राणप्रभृतिसर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव। यत्तु—'अहमेवाधस्तात्' इत्यादिना सर्वात्मकत्वमुपदिष्टम्, तत् भूमविशिष्टस्य ब्रह्मणोऽहंग्रहेणोपासनमुपदिश्यते; 'अथातोऽहङ्कारादेशः' इत्यहंग्रहोपदेशोपक्रमात्। अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम्। अतः प्रत्यगर्थस्य परमात्मपर्यवसानादहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थोऽयमहंग्रहोपदेशः। परमात्मनः सर्वशरीरतया सर्वात्मत्वात् प्रत्यगात्मनोऽप्यात्मा परमात्मा। तदेव, 'अथात

---

इति। **रत्यादि**शब्दानां प्रीतिपरत्वे व्यधिकरणबहुव्रीहिः; अनुकूलविषयपरत्वे साक्षाद्बहुव्रीहिः। **आत्म**शब्दो विभूतिगुणविशिष्टब्रह्मपरः। **रतिः** स्रक्चन्दनादिजन्या प्रीतिः। **क्रीडा** उद्यानादिजन्या। **मिथुनं** स्त्रीसम्भवा। **आनन्दः** विभूतिजन्या। एवं सर्वविधसुखानुभव उक्तः। 'स्वराड् भवति', 'अन्यराजानस्ते क्षय्यलोकाः' इति च परमात्मप्रतिक्षेपः प्रतीयत इत्याशङ्क्याह **स्वराडिति**। **अन्यराजानः स्वराडिति** पदद्वयेन उपाधितद्विगमौ दर्शितौ। दुःखरूपतया प्रतिपन्नस्यापि स्वतःसुखरूपत्वे श्रुतिमाह **न पश्य** इति। सर्वं पश्यति; न तत्र दुःखतां पश्यति; सुखरूपतामेव पश्यतीत्यर्थः। उदाहृतवाक्ये विभूत्यादिविशिष्टस्याऽऽनन्दरूपत्वमस्पष्टमिति तद्वैशद्यायाऽऽह **निरतिशये**ति। "तदात्मानँ स्वयमकुरुत; तस्मात् तत्सुकृतमुच्यत इति। यद्वै तत् सुकृतम्, रसो वै सः। रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति", "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इति च वाक्येषु कार्यकारणावस्थविभूत्यादिविशिष्टस्यैव आनन्दत्वं हि स्फुटतरम्। सूत्रार्थमुपसंहरति **अत** इति ॥ ७ ॥

**धर्मोपपत्तेश्च** ॥ कस्य धर्मा इत्याकांक्षां पूरयन् व्याचष्टे **अस्येति**। पूर्वपक्षयुक्तिं परिहरति। **अहङ्ग्रहेणोपासनम्**—अहमर्थशब्दयोः परमात्मपर्यन्तत्वबुद्ध्योपासनम्। तद्भिन्नतस्मिंस्तद्बुद्धिः स्यादित्यत्राह **अहमर्थस्येति**। न केवलमन्तर्यामिब्राह्मणादिषु; अस्मिन् प्रकरणेऽपि सर्वात्मत्वमुक्तमिति दर्शयिष्यन् तत्प्रतिपादकस्य **अथात आत्मादेश** इति वाक्यस्यार्थमाह **परमात्मन** इति। उपासकात्मनोऽप्यात्मत्वं

आत्मादेशः' इत्यादिना, आत्मैवेदं सर्वम्' इत्यन्तेनोच्यते। एतदेवोपपादयितुं प्रत्यगात्मनोऽप्यात्मभूतात् परमात्मनः सर्वस्योत्पत्तिरुच्यते, "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आकाशः" इत्यादिना। उपासकस्यान्तर्यामितया अवस्थितात् परमात्मनः सर्वस्योत्पत्तिरित्यर्थः। अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहोपासनं कर्तव्यम्। तस्मात् भूमविशिष्टः परमात्मेति सिद्धम् ॥ इति भूमाधिकरणम् ॥ ४ ॥

## अथाक्षराधिकरणम् १-३-३

### अक्षरमम्बरान्तधृतेः ॥ ९ ॥

वाजसनेयिनो गार्गीप्रश्ने समामनन्ति, "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यादि। तत्र संशयः, किमेतदक्षरं प्रधानम् जीवो वा, उत परमात्मेति। किं युक्तम्? प्रधानमिति। कुतः? "अक्षरात्परतः परः" इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शनात् अस्थूलत्वादीनां च तत्र समन्वयात्॥ 'यया तदक्षरमधिगम्यते' इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यत इति चेत्—न; प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः

---

फलितमित्युक्तम्; अथ कण्ठोक्तमिति दर्शयितुं कण्ठोक्तिमद्वाक्यस्यार्थमाह **एतदेवेति**। **विजानत** इति पदस्य षष्ठ्यन्तत्वज्ञापनाय व्याचष्टे **उपासकस्येति**। पूर्वपक्षयुक्तिं परिहरन्निगमयति **अत इति**। अधिकरणार्थमुपसंहरति **तस्मादिति**॥ ८ ॥

**अक्षरमम्बरान्तधृतेः** ॥ पूर्वाधिकरणे स्वे महिम्नि प्रतिष्ठितत्वमुक्तम्। तत्तु परमात्मव्यतिरिक्तस्य श्रूयत इति शङ्कया सङ्गतिः। वर्णो वा परमेश्वरो वेति विचार इति परैर्यदुक्तम्, तदयुक्तम्; वर्णानामह्रस्वत्वादीर्घत्वाद्यनुपपत्तेः, स्नेहलौहित्यच्छायादिधर्माप्रसङ्गाच्चेत्यभिप्रायेण **अच्छाय**मित्यन्तं विषयवाक्यमुपात्तम् ॥ प्रसङ्गाभावेऽपि प्रतिषेधः संभवति, यथा, 'नान्तरिक्षे न दिवि' इत्यग्निचयननिषेध इति चेन्न; निषेधस्य प्रसक्तविषयताया एव स्वतःप्राप्तत्वात्। गत्यन्तराभावे ह्यप्रसक्तविषयत्वाश्रयणम्, नान्यदा ॥ संशयमाह **तत्रेति**। अक्षरं प्रधानं वा जीवो वा परमात्मा वेति संशयः। तदर्थं लौकिकप्रमाणाविषये शब्दप्रतीतिशैघ्र्यमस्ति, नेति। 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्राकाशशब्दनिर्दिष्टः किं भूताकाशः उताव्याकृताकाशः इति। धारणञ्च किं सत्तामात्रेण, उत प्रशासनेन इति च। यदा प्रतीतिशैघ्र्यमस्ति, आकाशशब्दवाच्यश्च भूताकाशः, धारणं च सत्तया स्यात्—तदा तद्धारणस्य प्रधाने संभवात् तद्धारकमक्षरं प्रधानम्। यदा आकाशशब्दवाच्योऽव्याकृताकाशः, धारणं च सत्तामात्रेण—तदा जीवेऽपि तत्संभवात् तद्धारकमक्षरं जीवः ॥ यदा शब्दप्रतीतिशैघ्र्यस्य लौकिकप्रमाणगोचरत्वमप्रयोजकम्, आकाशशब्दवाच्यश्चाव्याकृताकाशः, धारणं च प्रशासनेन—तदा तस्य जीवेष्वसंभवात् तदाधारभूतमक्षरं परमात्मेति राद्धान्ते (?) फलफलिभावः। सिद्धान्ती शङ्कते **यया तदक्षर**मिति। अथवा पार्श्वस्थचोद्यम्, तदा परस्मिन्नित्युपलक्षणम्; जीवेऽपीति द्रष्टव्यम्; "कूटस्थोऽक्षर उच्यते" इत्यादिदर्शनात्। परिहरति **न प्रमाणान्तरेति**। अनुमानस्य प्रत्यक्षमात्रापेक्षा, श्रुतेस्तु व्युत्पत्त्यादौ उभयापेक्षाऽस्ति।

प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः, प्रतीतपरिग्रहे विरोधाभावात्। किञ्च " यदूर्ध्वं गार्गि दिवो यदर्वा(वा)क् पृथिव्याः" इत्यारभ्य सर्वस्य कालत्रितयवर्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते, "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्युच्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं प्रधानमिति प्रतीयते। अतोऽक्षरं प्रधानम्॥

इति प्राप्ते उच्यते-अक्षरमम्बरान्तधृतेः। अक्षरं परं ब्रह्म। कुतः? अम्बरान्तधृतेः-अम्बरस्य—आकाशस्य अन्तः पारभूतम् अव्याकृतमम्बरान्तः तस्य धृतेः। तदाधारतयाऽस्याक्षरस्योपदेशादिति यावत्। अयमर्थः—'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम्; अपि तु तत्पारभूतमव्याकृतम्। अतस्तस्याव्याकृतस्याप्याधारत्वेनोच्यमानमक्षरं नाव्याकृतं भवितुमर्हतीति॥

नन्वाकाशशब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते? उच्यते। 'यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतं च" इत्युक्ते त्रैकाल्यवर्तिनो विकारजातस्याऽऽधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति, तस्यापि विकारान्तर्गतत्वात्। अतोऽत्राऽऽकाशशब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते। ततस्तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति पृच्छ्यते, "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति। अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति।

---

अत आनुमानिकादक्षरात् श्रुतिप्रतिपन्नस्य विलम्ब इति लौकिकालौकिकयोर्लौकिकस्य प्रसिद्धिप्राथम्यात् प्राबल्यम्। श्रुतिलिङ्गादिष्वपि हि शीघ्रधीहेतुत्वात् प्राबल्यमिति भावः। ननु 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यत्र आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्येऽपि ब्रह्मविषयत्वं दर्शितम् अत्राप्यक्षरशब्दे किं न स्यादित्यत्राह **प्रतीते**ति। अक्षरशब्दस्य प्रधाने प्रयोगदर्शनात्, अस्थूलत्वाद्यन्वयात्, परब्रह्मणि प्रसिद्धत्वे सत्यपि प्रमाणान्तरप्रसिद्ध्या प्रथमप्रतीतस्य परिग्रहे विरोधाभावात्, आकाशकारणप्रश्नस्योत्तरत्वेनोच्यमानत्वाच्च प्रधानपरत्वमित्यर्थः॥

राद्धान्तमाह **अक्षर**मित्यादिना। **अम्बरान्त**शब्दं केचित् बहुव्रीहितया व्याचक्षते; अम्बरम् आकाशः, **अन्तः** अवसानं येषां तेषां पृथिव्यादीनां धृतेरिति हेत्वर्थ इति; तत् प्रधानव्यतिरेकप्रतिज्ञायामकिञ्चित्करमित्यभिप्रायेण षष्ठीतत्पुरुषं व्याचष्टे **अम्बरस्य आकाशस्ये**ति। **अन्त**शब्दोऽवधिवचनः। कार्यस्याम्बरस्य देशतः कालतश्चावधिः कारणम्; नियतपूर्वभाविनः कारणत्वात्, कार्यं प्रति कारणतत्त्वानामावरणतया बहिर्विद्यमानत्वाच्च। अतो**ऽम्बरान्त**शब्दोऽव्याकृतवाचीति भावः। न ह्यत्राम्बरान्तवाचिशब्दः श्रूयत इत्यत्राह **अयमर्थ** इति। **नन्वि**ति। व्युत्पत्तिसिद्धार्थलङ्घनमयुक्तम्, अपवादाभावादित्यर्थः। परिहरति **उच्यत** इति। अर्थविरोधान्न वायुमदम्बरग्रहणमित्यर्थः। न हि स्वयं विकारान्तर्भूतः कृत्स्नविकारजातस्याधारो भवितुमर्हति।

**यत्तु श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति—तन्न ; अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्। सम्बन्धग्रहणदशायामर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत् प्रतिपादनदशायामपेक्षणीयम् ॥ ९ ॥**

---

**यत्त्वि**त्यादिना पूर्वपक्षयुक्तिमनूद्य परिहरति **तन्ने**ति। रूढिशक्त्या अवयवशक्त्या वा शब्देन स्वार्थप्रतिपादनं स्यात्। तत्र वक्ष्यमाणपरिहारस्य पक्षद्वयसाधारण्येऽपि, "प्रोक्षणीष्वर्थसंयोगात्" इति न्यायेन अवयवशक्त्या अर्थप्रतिपादनसंभवे समुदायशक्तिकल्पनाऽयोगात् अयमक्षरशब्दो न रूढ्या वर्तत इत्यभिप्रेत्य यौगिकत्वपक्षे परिहार उच्यते। तत्र व्युत्पन्नानां पदावयवानां संहत्य स्वार्थप्रतिपादने किं प्रमाणान्तरापेक्षा, उत तत्तत्पदावयवव्युत्पत्तिवेलायामिति विकल्पं हृदि निधाय प्रथमे कल्पे परिहारमाह—**अक्षरशब्दस्ये**ति। अवयवशक्तिरेवार्थप्रतीतिकारणमिति न प्रमाणान्तरमपेक्षितम्; न हि दण्डिशब्दः स्वार्थप्रतिपादने दण्डदेवदत्तग्राहिप्रत्यक्षापेक्षः। द्वितीयं परिहरति **संबन्धेति**। पदावयवानां व्युत्पत्तौ प्रमाणान्तरापेक्षाऽस्त्येव। प्रतिपादनदशायां तु न तदपेक्षा। यथा चक्षुरादीनां तिमिरादिदोषापनयनस्यौषधाद्यपेक्षत्वेऽपि घटादिपरिच्छित्तौ न भेषजग्राहिप्रमाणापेक्षा। यथाऽऽहुः, "अर्थबोधेऽनपेक्षत्वान्मानान्तरमनादृतम्। व्युत्पत्त्युपायभूतं यत् तच्च तन्मात्रवर्ति-तु" इति। व्युत्पन्नानां पदावयवानां प्रतिपादनकालेऽपि व्युत्पत्त्यपेक्षितमानान्तराकाङ्क्षाऽस्ति चेत्, दण्डिनमाह्वय, गामानयेत्यादिवाक्यानामसंनिकृष्टार्थविषयाणां प्रत्यक्षसाचिव्याभावेन स्वार्थाप्रतिपादकतया गवानयनादिप्रवृत्त्युच्छेदप्रसङ्गः; अलौकिकार्थप्रतिपत्त्यनुपपत्त्या शास्त्रवैयर्थ्यप्रसङ्गश्च। अतो मानान्तरापेक्षाभावात् तन्निबन्धनमर्थप्रतिपत्तौ प्राथम्यचारम्यरूपवैषम्यं नास्तीत्यर्थः। किञ्च यौगिकानां शब्दानामवयवार्थयोगिवस्तुसामान्यप्रतिपादने किं मानान्तरापेक्षा, उत विशेषपर्यवसाने इति विकल्पे, प्रथमे शिरसि परिहारोऽ**क्षरशब्दस्ये**ति ग्रन्थेन फलितः। द्वितीये तु विशेषपर्यवसानस्य प्राकरणिकलिङ्गाद्यधीनत्वान्न मानान्तरापेक्षेति च **संबन्धे**त्यादिग्रन्थेऽर्थसिद्धम्; **न तत् प्रतिपादनदशायामपेक्षणीय**मिति ह्युक्तम्। विशेषपर्यवसाने सति हि प्रतिपादनं निराकाङ्क्षं भवति। अत्र परमात्मलिङ्गं दर्शितम्। अपि च अवयवार्थपौष्कल्यं यत्र संभवति, तदेव यौगिकशब्देन स्वरसतः प्रतीयते; यथा ईश्वरशब्दो लौकिकपार्थिवादिषु सत्स्वप्यलौकिकमीश्वरं शीघ्रं प्रत्याययति। अतश्च न क्षरतीत्यवयवशक्तिः परमात्मानमेव शीघ्रमुपस्थापयति। एतदुक्तं भवति—प्रतिपाद्यस्य लौकिकालौकिकप्रमाणगोचरत्वं शाब्दप्रतीतिविलम्बाविलम्बयोरप्रयोजकम्; धर्माधर्मेश्वरादिशब्दैः शौक्ल्यादिभ्यः पार्थिवादिभ्योऽप्यलौकिकार्थे प्रतिपत्तिशैघ्र्यस्य दर्शनात्। अत एव प्रयोगप्राचुर्याद्यधीनं प्रसिद्धितारतम्यमेव तयोः प्रयोजकम्। यौगिकशब्दानां च असङ्कुचितावयवार्थगोचरत्वेन स्वतोऽवसितत्वात् तद्वत्येव प्रसिद्ध्यतिशयात् प्रतीतिशैघ्र्यमिति॥ नन्ववयवशक्त्याऽर्थप्रतिपादनेऽपि प्रधानस्यानेकप्रमाणगम्यतया अभ्यस्तत्वादस्ति प्रथमावगतिः; यथा गोशब्दस्य सामान्यनिमित्तत्वेऽपि गोशब्दोच्चारणात् स्वाभ्यस्तायामेव गवि प्रथममेव प्रतीतिः॥ तदसत्; प्रधानस्यानेकप्रमाणगम्यत्वान-

एवं तर्ह्यक्षरशब्दनिर्दिष्टो जीवोऽस्तु ; तस्य भूतसूक्ष्मपर्यन्तस्याचिद्वस्तुन आधारत्वोपपत्तेः, अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च । "अव्यक्तमक्षरे लीयते", "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्" "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादिषु प्रत्यगात्मन्यप्यक्षरशब्द-प्रयोगदर्शनादित्यत्रोत्तरम्—

सा च प्रशासनात् ॥ १० ॥

सा चाम्बरान्तधृतिरस्य प्रशासनादेव भवतीत्युपदिश्यते, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः सम्वत्सरा इति विधृतास्तिष्ठन्ति" इत्यादिना । प्रकृष्टं प्रशासनं प्रशासनम् । न चेदृशं स्वशासनाधीनसर्ववस्तु-विधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनः संभवति । अतः पुरुषोत्तम एव प्रशासितृक्षरम् ॥

---

भ्युपगमात् । न हि प्रत्यक्षेण जगत्कारणभूतं सूक्ष्मं वस्तु निरीक्ष्यते ; नापि श्रुतिविरोधिनोऽनुमानस्य तत्र प्रामाण्यं संभवतीति वक्ष्यते । ततश्च श्रुतिरेव तत्रापि प्रमाणं वक्तव्यम् ; तथाच श्रुतिप्रसिद्धात् परमात्मनः प्रमाणान्तरप्रसिद्धस्य प्रधानस्य प्रथमप्रतिपत्तिरित्यसिद्धम् । किञ्च प्रथमप्रतीतस्यापि प्रधानस्य विरोधेन त्यक्तव्यतैव । विरोधश्चात्र स्पष्टः ; एकस्यैवाधाराधेयभावानुपपत्तेः ॥९

उत्तरसूत्रशङ्कामाह एवं तर्हीति । 'अव्यक्तमक्षरे' इत्यव्यक्तस्य पृथगुपादानादक्षरशब्दो जीवपरः, न प्रधानपर इति ज्ञापनायाव्यक्तमुपात्तम् ॥ सा च प्रशासनात् ॥ ननु नात्राम्बरान्त-धृतेः परमात्मप्रशासनाधीनत्वं साक्षाच्छ्रुतमिति शङ्कां परिजिहीर्षन्, कतिपयवस्तुशासनस्य जीवेऽपि संभवात् तद्व्यावृत्तिं च दर्शयन् प्रशासनशब्दं व्याचष्टे प्रकृष्टमिति । क्वचिदप्यप्रतिहतत्वेन विषयप्रकर्षात् शासनस्य प्रकर्षः । प्रकर्षस्य निवारकाभावात् शासनस्याम्बरान्तविषयत्वमपि सिध्यतीति हृदयम् । ततः किमि-त्यपेक्षायाम्, प्रकृतेः परमात्मशासनकर्मत्वे हेत्वन्तरं च द्योतयन्, जीवव्यावृत्तिसिद्धिं दर्शयति न चेदृशमिति । स्वशासनाधीनसर्ववस्तुविधरणमिति । अयमभिप्रायः— न केवलं शासनप्रकर्षादनपोदितात् प्रकृतेः प्रशासनकर्मत्वसिद्धिः, किन्तु "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति" इत्यादिश्रु-त्यन्तरेषु शासनकर्मोपस्थापकसर्वशब्दासङ्कोचाच्च तत्सिद्धिः । किञ्च सत्यशब्दनिर्वचने (छा. 8.3.) "तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति । तद्यत् सत् तदमृतम्, अथ यत् तन्मर्त्यम्, अथ यत् यम् तेनोभे यच्छति' इति मर्त्यशब्दवाच्याचेतनस्य तन्नियाम्यत्वं च प्रतीयते । मर्त्यशब्दो ह्यवयवशक्त्या पूर्वपूर्वावस्थाभाजि अचेतने वर्तते, न [नर] शरीरमात्रे; द्यावापृथिव्यादीनां तन्नियाम्यत्वाभावप्रसङ्गात् । किञ्च 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्' इति प्रधानस्य परशरीरत्वश्रवणा-दत्यन्तनियाम्यस्यैव शरीरत्वाच्च नियाम्यत्वसिद्धिः । इह च 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति पृष्टे, 'एतद्वै तदक्षरं गार्गि' इत्यारभ्य, 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्यक्षरे-णाव्याकृतस्य धारणं श्रूयते । अतः शासनस्य प्रकर्षात् श्रुत्यन्तरानुग्रहाच्चाम्बरान्तधृतिरपि प्रशासनाधी-नेति । सौत्रश्चशब्दो ह्यर्थतया हेतुवाचीत्यभिप्रायेणाऽऽह अत इति । अम्बरान्तधृतिः प्रशासनादेव सिद्ध्य-

## अन्यभावव्यावृत्तेश्च ॥ ११ ॥

अन्यभावः—अन्यत्वम्, प्रधानादिभावः। अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते, "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ, अश्रुतं श्रोतृ अमतं मन्त्रविज्ञातं विज्ञातृ। नान्यदतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति। अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याचेतनभूतप्रधानभावो व्यावर्त्यते। सर्वैरदृष्टस्यैव सतः सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते। अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति।

---

तीति यतः, तत एवेत्यर्थः। "प्रशासितारं सर्वेषाम्....विद्यात्तु पुरुषं परम्" इति, "उत्तमः पुरुषस्त्वन्यः" इत्यादिवचनाभिप्रायेण पुरुषोत्तम एव प्रशासित्रक्षरमित्युक्तम् ॥१०॥

एवं प्रधानपुरुषव्यतिरेकौ सूत्रद्वयेन पृथगुपपादितौ; अथैकसूत्रेण प्राकरणिकचरमवाक्यविषयेणोभयव्यतिरेकमाह—**अन्यभावव्यावृत्तेश्च**॥ **व्यावर्त्यते**—निवर्त्यते; निवर्तकधर्मः प्रतिपाद्यत इत्यर्थः। ततश्च सूत्रस्थव्यावृत्तिशब्दो व्यावर्तकधर्मपर इति दर्शितं स्यात्। तेन विषयवाक्यानुगुण्यं सूत्रस्य स्यात्। तत्र ह्यन्यनिवर्तकधर्मो द्रष्टृत्वादिरवगम्यते। द्वितीययोजनायै अपेक्षितत्वात् **नान्यदतो**ऽस्तीत्यादिकमुदाहृतम्। अस्मिन् वाक्ये प्रधानव्यावृत्तिसिद्धिं दर्शयति अत्रेति। **अत्र**=**अदृष्ट**मिति वाक्ये। द्रष्ट्रादिशब्दाः रूपशब्दप्रभृतिबाह्याक्षविषयाणां मन्तव्याध्यवसेयाद्यन्तःकरणविषयाणां च साक्षात्कर्तृवाचकाः। शासनस्य शासितव्यवस्तुदर्शनसाकाङ्क्षत्वात्; 'न दृष्टेर्द्रष्टारम्', 'न श्रुतेः श्रोतारम्', 'न मतेर्मन्तारम्'' इत्यादिना परस्य श्रवणमननादिकर्तृत्वनिषेधेन तेषामयोग्यत्वात्, 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति रूपादिसाक्षात्कर्तृत्वश्रवणाच्च। जीवव्यावृत्तिं दर्शयति **सर्वै**रिति। **सर्वैः** अयोगिभिः (योगिभिः)। **सर्वस्ये**ति। रूपतदाश्रयादिष्वेकैकवर्गकात्स्न्यपरः **सर्व**शब्दः, अस्यासङ्कुचितवृत्तितया द्रष्टृशब्देन सर्वसाक्षात्कारस्याभिहितत्वे सति **आदि**शब्दोपात्तश्रोतृत्वादीनां निर्विषयत्वप्रसङ्गात्। सर्वैरदृष्टत्वादिमात्रं प्रधानादीनामपि संभवतीति तद्व्यावृत्त्यर्थम**दृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्चे**त्युक्तम्। अदृष्टत्वादिविशेषितं द्रष्टृत्वादिकं प्रत्यगात्मव्यावर्तकमित्यर्थः। प्रत्यगात्मानः सर्वे प्रत्येकं स्वस्वाहम्प्रत्ययवेद्याः, रूपादिविज्ञातारश्च। परस्तु रूपादिज्ञानवेलायां योगिभिरपि स्वस्वरूपवत् रूपादिवच्च न ज्ञायते। निष्ठान्तैः पदैः तत्तद्विषयप्रतिपत्तिवेलायां परमात्मनोऽनवगतत्वं विवक्षितम्। **अश्रुतम्**—शब्दश्रवणदशायामज्ञातम्। **अमतम्**—स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयवत् अप्रतिपन्नम्। **अविज्ञातम्**—अध्यवसायदशायां घटादिवत् स्वस्वरूपवच्चानवगतम्। अत एव हि विशेषितं द्रष्टृत्वादिकं परमात्मासाधारणम्। यद्वा रूपशब्दाद्यर्थवेदिभिः सर्वैरवेद्यत्वेन विशेषितं तत्तदर्थद्रष्टृत्वं समुच्चित्य चिदचिद्व्यावर्तकमित्यर्थः। **अन्यभावव्यावृत्ते**रित्युक्तहेतोःसाध्याविशिष्टत्वशङ्कां च शमयन्निगमयति **अत** इति। इयं व्यावर्तकधर्मान्वयरूपा व्यावृत्तिः परमपुरुषत्वं साधयति, अतः साध्याविशिष्टत्वव्युदासः। अस्यां योजनायां प्रधानेपुरुषव्यावर्तकसकलधर्मवाचिवाक्यानि विषयीभूतानीति चिदचिद्व्यावृत्तिः कण्ठोक्ता स्यात्। **च**शब्द उक्तहेतु-

श्रीः ।

एवं वाऽन्यभावव्यावृत्तिः । अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः । यथैतदक्षरमन्यैर-दृष्टं सत् अन्येषां द्रष्टृ च सत् स्वव्यतिरिक्तस्य समस्तस्याऽऽधारभूतम्, एवमनेनादृष्टमेतस्य द्रष्टृ

---

समुच्चये । मुखान्तरेण सूत्रं योजयति **एवं वेति** । अक्षरार्थमाह **अन्यस्येति** । **नान्यदित्यादि**वाक्यस्य सूत्रविषयत्वं हृदि निधाय तस्यार्थमाह **यथैत**दिति । यथा 'अस्मिन् ग्रामे देवदत्त एव पुरुषः, नान्यः' इत्युक्ते, न पुरुषमात्रनिषेधः, अपि तु प्रस्तुततुल्यपुरुषान्तरनिषेधः स्यात्; पुरुषान्तराणां प्रमाण-सिद्धतया निषेद्धुमशक्यत्वात्—एवमिहापि द्रष्ट्राद्यन्तराणां प्रामाणिकत्वात् प्रकृततुल्यद्रष्ट्रादिनिषेधपर-मिदं वाक्यमित्यभिप्रायेण प्रकृतगुणविशिष्टत्वमुक्तम् । **आधारभू**तमिति । समस्तस्य प्रशासनेनाऽऽधारभूत-मित्यर्थः । निषेधविषयं दर्शयति **एव**मिति । **एतस्य** अक्षरस्य । **आधारभूतम्**—प्रशासनेन धारकम् । एवं परमात्मनो नियन्तृतयाऽऽधारभूतद्रष्ट्रन्तराभावादधिकनिषेधपरमिदं वाक्यं व्याख्यातम् । एवं वा—**एतस्येति** पदं **व्यतिरिक्तस्य समस्तस्येति** पदप्रकृतजगत्परम् । अक्षरादन्यत् समस्तजगतः प्रशासनेन धारकं तेनादृष्टं द्रष्टृ नास्तीत्यर्थः । तदा समनिषेधपरो वाक्यशेषः स्यात् ॥

ननु 'नान्यदतोऽस्ति द्रष्टृ'इति वाक्यं द्रष्टॄणां पुरुषाणां ब्रह्मतादात्म्येन अतदात्मकत्वनिषेध-परं किं न स्यात् ॥ न; ऐक्यविधानस्याप्रकृतत्वात् । ऐक्यविधिशेषो हि भेदनिषेधः; व्यति-रेकस्यान्वयशेषत्वात् । यदि क्वचिदैक्यविधानाभावेऽपि भेदनिषेधः संभवति, तत्र तु (स?) निर्वाहा-न्तरासंभवादभ्युपगन्तव्यः; इह तु गत्यन्तरसम्भवादैक्यविध्यभावे भेदनिषेधपरत्वाश्रयणमयुक्तम् । किञ्च, 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्युपक्रम्य, 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्युपक्रमोपसंहाराभ्यां प्रकरणस्य परमात्मनो विश्वधारकताप्रतिपादनपरत्वमवगम्यते; न त्वैक्यप-रत्वम् । धारकत्वे अभिहिते तस्यापि धारकान्तरशङ्का स्यात्; लोके धारकाणामपि धार्यत्वदर्शनात् । यथा कारणानामपि कार्यत्वदर्शनेन परमात्मनोऽपि जगत्कारणत्वेनान्यकार्यत्वशङ्कायां तद्व्यावर्तनेन परमकारणत्व-सिद्धये, "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति कारणान्तरनिषेधः परमकारणत्वापेक्षितत्वात् क्रियते—एवमिहापि परमात्मनः परमाधारत्वसिद्धये धारकरूपद्रष्ट्रन्त-रनिषेधोऽपेक्षितः । भेदनिषेधस्तु प्रकृतार्थानपेक्षितः । अपेक्षितविधेरनपेक्षितविधानदौर्बल्यमविगीतम् । किञ्च 'नान्यदतोऽस्ति द्रष्टृ; नान्यदतोऽस्ति श्रोतृ' इति द्रष्टृश्रोत्रादीनां पृथक्पृथक् भेदनिषेधश्च विफलः; द्रष्टुरेव श्रोतृत्वसंभवात् । यथा, "तदेवाग्निस्तद्वायुः", "ज्योतींषि विष्णुर्भुवनानि विष्णुः" इत्या-दिष्वग्निवायुज्योतिर्भुवनवनगिरिदिगादीनामन्योन्यभिन्नजातीयतया तेष्वन्यतमस्य ब्रह्मात्मकत्वोपदेशोऽपि तदन्यस्य ब्रह्मात्मकत्वासिद्ध्या प्रत्येकं ब्रह्मात्मकत्वोपदेशः सफलः—एवं द्रष्टृश्रोतृमन्त्रादीनां भिन्नजातीय-त्वाभावात् पृथग्भेदनिषेधवैयर्थ्यम् । न च वाच्यम्—'ब्रह्म दाशा ब्रह्म दासाः' इत्यादौ दाशेष्वेव दासत्व-कितवत्वादिसंभवेऽपि पृथक् तादात्म्योपदेशवत् इहाप्युपपद्यत इति; दाशेभ्यो भिन्नजातीयानामपि दासकितवादीनां संभवेन श्रुतिवाक्यस्थपदानां तद्विषयत्वोपपत्तेः । अन्यथा तत्रापि वैयर्थ्यप्रसङ्गस्य दुर्निवार-त्वात् । अत इदं वाक्यं प्रकृततुल्यद्रष्ट्रन्तरनिषेधपरम् ।

च सत् एतस्याऽऽधारभूतमन्यन्नास्तीति वदन् 'नान्यदतोऽस्ति द्रष्टृ' इत्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन् अस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति ।

किञ्च, "एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति ; यजमानं देवाः ; दर्वीं पितरोऽन्वायत्ताः" इति, श्रौतं स्मार्तं च यागदानहोमादिकं सर्वं कर्म यस्याऽऽज्ञया प्रवर्तते, तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते । अपि च, "यो वा एतदक्षरं गार्गि अविदित्वाऽस्मिन् लोके जुहोति, यजते, तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति । यो वा एतदक्षरं गार्गि अविदित्वाऽस्माल्लोकात् प्रैति, स कृपणः । अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति, स ब्राह्मणः" इति यदज्ञानात् संसारप्राप्तिः, यद्ज्ञानाच्चामृतत्वप्राप्तिः, तदक्षरं परं ब्रह्मैवेति सिद्धम् ॥ इति अक्षराधिकरणम् ॥

---

**अन्यस्य सद्भावं व्यावर्तयन्निति ।** सूत्रस्थैरन्य-भाव-व्यावृत्तिशब्दैः श्रुतिवाक्यस्थाः **अन्यत् अस्ति ने**तिशब्दाः प्रत्यभिज्ञाप्यन्त इति भावः । **व्यावर्तयन्नि**त्यन्तेनाक्षरार्थ उक्तः । फलितमाह **अस्याक्षरस्येति ।** अस्यां योजनायां सूत्राक्षरानुरूप्यं दर्शितम् । नियन्तृरूपधारकान्तरराहित्यमेव कण्ठोक्तं भवति ; चिदचिद्व्यावृत्तिरर्थसिद्धा स्यात् । **च**शब्दः पूर्ववदुक्तसमुच्चयपरः ; अपि त्वनुक्तसमुच्चयपर इत्यभिप्रायेण चशब्दार्थमाह **किञ्चेति ।** **अन्वायत्ता** इति पदं देवमनुष्यपितृसाधारणम् । **अन्वायत्ताः**— अनुवशा इत्यर्थः । द्वितीयान्तपदानां **प्रशंसन्तीत्य**नेनान्वयः । वाक्यप्रतिपन्नार्थस्य परमात्मलिङ्गतां दर्शयति **श्रौतं स्मार्तं चे**ति । चशब्दसमुच्चेतव्यं हेत्वन्तरमाह **अपि चेति ।** उदाहृतवाक्यसिद्धं हेतुं वदन् अधिकरणार्थमुपसंहरति **यदज्ञाना**दिति ।

**नान्यदतोऽस्ति द्रष्ट्रि**ति वाक्यस्य ब्रह्मव्यतिरिक्तद्रष्टृमात्रनिषेधपरत्वमयुक्तम् । तथा सति हि ब्रह्मैव द्रष्टृ, नान्यदित्युक्तं स्यात् । तत् परमते विरुद्धम् , ब्रह्मणो द्रष्टृत्वानभ्युपगमात् । तन्मते, नैतदक्षरं द्रष्ट्रिति हि वक्तव्यम् । यदि द्रष्टृमिथ्यात्वमात्रपरम् , तदा अतोऽन्यदिति निर्देशवैयर्थ्यम् ; द्रष्टृ नास्तीत्येतावता तन्मिथ्यात्वसिद्धेः ॥ ननु ब्रह्मैव द्रष्ट्रित्यर्थः ; ततश्च ब्रह्मणि द्रष्टृणां कल्पितत्वं सिद्ध्यतीति चेन्न—अयमेव पुरुषः, नान्योऽतोऽस्ति पुरुष इत्युक्ते पुरुषत्वमस्मिन् कल्पितमित्यर्थाप्रतीतेः । एततुल्यपुरुषान्तरनिषेधो हि प्रतीयते ॥ **अतः** ब्रह्मणोऽन्यः द्रष्टृवर्गो मिथ्येत्यर्थ इति चेन्न ; अदृष्टं द्रष्ट्रिति पूर्ववाक्ये ब्रह्मण एव द्रष्टृत्वप्रतिपादनात् ब्रह्मव्यतिरिक्तस्यैव द्रष्टृत्वमिति वक्तुमयुक्तत्वात् ; द्रष्टृमिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् ; तस्मिन् परिजिहीर्षिते सति 'अदृष्टं द्रष्टृ'इति पूर्ववाक्यप्रतिपाद्यस्याब्रह्मत्वप्रसङ्गाच्च ॥ ब्रह्मणो द्रष्टृत्वेऽपि ब्रह्मव्यतिरिक्तत्वाभावान्न मिथ्यात्वमिति चेत्—तर्हि परमार्थतो ज्ञातृत्वमभ्युपगतं स्यात् ॥

यत्तु **भास्करेणो**क्तम् , प्रधानव्यावृत्तिरनेन सूत्रेण क्रियते, प्रधानस्य शासितृत्वसंभवेऽपि द्रष्टृत्वाभावात् प्रधानव्यावृत्तिरिति—तदयुक्तम् ; द्रष्टृविशेषो हि प्रशासिता । शिंशुपात्वसंभवेऽपि वृक्षत्वासंभववत् प्रशासितृत्वसम्भवेऽपि द्रष्टृत्वासम्भवः कथमुच्यते ? प्रधानस्येश्वरत्वसंभवेऽपि क्षेत्रज्ञत्वं न संभवतीत्यनुन्मत्तः को ब्रवीति ॥ इति अक्षराधिकरणम् ॥

## ईक्षतिकर्म व्यपदेशात् सः १-३-१२

आथर्वणिकाः सत्यकामप्रश्नेऽधीयते, "यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये संपन्नः, यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं हवै स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकम्ः स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति। अत्र ध्यायतीक्षतिशब्दावेकविषयौ, ध्यानफलत्वादीक्षणस्य; "यथाक्रतुरस्मिन् लोके पुरुषः" इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्, "परं पुरुषम्" इति उभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च। तत्र संशय्यते—किमिह 'परं पुरुषम्' इति निर्दिष्टः जीवसमष्टिरूपोऽण्डाधिपतिश्चतुर्मुखः, उत सर्वेश्वरः पुरुषोत्तमः इति। किं युक्तम्? समष्टिक्षेत्रज्ञ

---

**ईक्षतिकर्म व्यपदेशात् सः।** अत्र स इत्युक्तिः अस्मिन् पादे सर्वाधिकरणेषु साध्यप्रतिज्ञानुवृत्त्यर्था; यथा प्रथमपादे, 'भेदव्यपदेशाच्चान्यः' इति अन्यशब्दोक्तिः, यथा च द्वितीये, 'अत एव च स ब्रह्म' इति ब्रह्मशब्दोक्तिः, यथा चतुर्थे, "वदतीति चेन्न प्राज्ञो हि प्रकरणात्' इति प्राज्ञशब्दोक्तिश्च—तद्वत्। पूर्वम् अदृष्टं द्रष्टृति परमात्मनो द्रष्टृत्वमुक्तम्, तर्हीक्षतिकर्मत्वेनोक्तो न परमात्मेति शङ्कया सङ्गतिः। यद्वा—पूर्वाधिकरणे अर्थविरोधेनाकाशशब्दस्याम्बरान्तपरत्वमुक्तम्; तथा अन्तरिक्षशब्दस्य न मुखान्तरेण निर्वाहः सुवच इति शङ्कया संगतिः। यद्वा आकाशशब्दस्य अम्बरान्तपरत्ववत् ब्रह्मलोकशब्दस्य नान्यथा निर्वाहोऽस्तीति शङ्कया सङ्गतिः। **ससामभिरुन्नीयते।** "एतत्साम गायन्नास्ते" इतिवत् सामगानसहितैरित्यर्थः। यद्वा सान्त्ववादयुक्तैरातिवाहिकैरुन्नीयत इत्यर्थः। **परै**रीक्षतिकर्मणः परमात्मत्वं व्यवस्थाप्य, ध्यायतेस्ततो भिन्नविषयतया पूर्वपक्षं कृत्वा, एकविषयतया सिद्धान्त उक्तः; तदनुपपन्नमित्यभिप्रायेणाह-**अत्र ध्यायतीति।** यथोपासनफलप्राप्तिन्यायात् ध्यायतिकर्मैवेक्षतिकर्म। एकत्र **परं पुरुषम्** अन्यत्र **परात्परं पुरुष**मिति च श्रूयते; अतो न विषयैक्यमित्यत्राह **परं पुरुष**मिति। यत्र पञ्चम्यन्तपदं नास्ति, तत्राप्यर्थसामर्थ्यात् तत् प्राप्नोतीति भावः॥ **यादवप्रकाशीये** तु, 'जीवो हि ध्यातव्यः; तस्मात् पर ईक्षितव्यस्तु मुक्तजीवः' इति पूर्वपक्षितम्—तदप्यनेनायुक्तमिति दर्शितम्। अभिध्यातव्यात् परो मुक्तजीव इत्युक्ते बद्धजीवो ध्यातव्य इत्युक्तं स्यात्। बद्धावस्थजीवध्यानात् मुक्तावस्थस्य प्राप्तिरित्यनुपपन्नम्। तस्मात् ध्यायतीक्षत्योरुभयोरपि चतुर्मुखविषयत्वमेव पूर्वपक्षीकर्तुं युक्तम्॥

संशयमाह **तत्रे**ति। किं ध्यायतीक्षतिकर्म चतुर्मुखः, उत परमात्मा? तदर्थम् शान्तत्वाजरत्वादयः किं मुख्याः, उतामुख्याः? तदर्थम् किं **जीवघन**शब्देन चतुर्मुखव्यतिरिक्तस्य ग्रहणम्, उत तस्यापि ग्रहणमिति; किमत्र ब्रह्मलोकशब्दश्चतुर्मुखस्थानपरः, उत परमव्योमपरः? किमीक्षतिकर्मविषये वाक्ये, **यत्तत् कवयो वेदयन्ते** इति वैष्णवं पदं प्रत्यभिज्ञाप्यते, नेति। यदा प्रत्यभिज्ञानासंभवात् ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वम्, यदा च जीवघनशब्देन चतुर्मुखस्याग्रहणम्-तदा शान्तत्वादीनाममुख्यत्वात् ध्यायतीक्षतिकर्म चतुर्मुखः स्यात्। यदा वैष्णवपदप्रत्यभिज्ञानेन ब्रह्मलोकशब्दः परमव्योमवाची, यदा च जीवघनशब्देन चतुर्मुखस्यापि ग्रहणम्, तदानीं शान्तत्वाजरत्वादीनां मुख्यत्वात् ध्यायतीक्षतिकर्म परमा-

इति। कुतः? "स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयति" इति प्रक्रम्य, एकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय, द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतया अभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात् परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते। तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव। 'एतस्माज्जीवघनात्परात्परम्' इति च देहेन्द्रियादिभ्यः परात् देहेन्द्रियादिभिस्सह घनीभूताज्जीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते। अतोऽत्र निर्दिश्यमानः परः पुरुषः समष्टिपुरुषश्चतुर्मुख एव। एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथा कथञ्चिन्नेतव्याः॥

इति प्राप्ते प्रचक्ष्महे—**ईक्षतिकर्म व्यपदेशात् सः।** ईक्षतिकर्म सः—परमात्मा। कुतः? **व्यपदेशात्।** व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन। तथा हि ईक्षतिकर्मविषयतयोदाहृते श्लोके, 'तमोङ्कारेणैवाय[त]नेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च' इति। परं शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम्; "एतदमृतमभयमेतद्ब्रह्म" इत्येवमादिश्रुतिभ्यः। "एतस्माज्जीवघनात्परात्परम्" इति च परमात्मन एव व्यपदेशः; न चतुर्मुखस्य; तस्यापि जीवघनशब्दगृहीतत्वात्। यस्य हि कर्मनिमित्तं देहित्वम्, स जीवघन इत्युच्यते। चतुर्मुखस्यापि तच्छ्रूयते, "यो ब्रह्माणं विदधाति पूर्वम्" इत्यादौ।

---

त्मेति सिद्धान्तः। **चतुर्मुखस्येति**। भूम्यन्तरिक्षक्रमप्राप्तश्चतुर्मुखलोक इत्यर्थः। ततः किमित्यत्राह **तद्गतेन चेति**। **जीवघनात्परात्परम्** इति निर्देशः कथमुपपद्यत इत्यत्राह **एतस्मादिति**। **जीवघनपरशब्दयोः** सामानाधिकरण्येनोपपद्यत इत्यर्थः। ब्रह्मणः समष्टिपुरुषत्वं देवतिर्यग्भावाद्यपेक्षया। **अजरत्वादयो यथाकथञ्चिन्नेतव्या** इति। चिरकालस्थायित्वाभिप्रायेण वा, चतुर्मुखस्यैव परिशुद्धावस्थस्वरूपपरत्वेन वा निर्वाह इति भावः। अत एवोपक्रमे, **परं चापरं च** इति निर्देशश्च कृतनिर्वाहः॥

सिद्धान्ते **परमात्मन एवैतद्रूप**मिति। **एतद्रूपम्**—नपुंसकान्तशब्दनिर्दिष्टं स्वरूपम्। चतुर्मुखपरत्वे हि पुंलिङ्गान्तता स्यात्। यद्वा एतद्रूपम्—एतद्वाक्यप्रतिपादितं रूपम्। एवमर्थद्वयेऽप्यनुगुणं श्रुत्यन्तरवाक्यमाह **एतदमृत**मिति। अनेन **स** इति सौत्रपदस्य प्रयोजनं दर्शितं भवति। अधिकारादेव साध्यप्रतिज्ञासिद्धेस्तस्य प्रयोजनं हि वक्तव्यम्। **शान्तमजरममृतमभय**मिति व्यपदेशस्य कथं परमात्मसाधकत्वमित्यपेक्षायां श्रुत्यन्तरेषु परमात्मनः तादृक्त्वेन प्रसिद्धेरिति वक्तव्यम्। अतस्तथात्वेन श्रुत्यन्तरप्रसिद्धिद्योतनं **स** इति पदस्य प्रयोजनमिति। **व्यपदेश**शब्दविवक्षितं हेत्वन्तरमाह **एतस्मादिति**। कथं चतुर्मुखस्यैतद्व्यपदेशासंभव इत्यत्राह **तस्यापीति**। कथं तस्य **जीवघन**शब्दगृहीतत्वमित्यत्राह **तस्य हीति**। कर्मकृतदेहं दर्शयति **चतुर्मुखस्यापीति**। सशरीरत्वादेव हि चतुर्मुखत्वमिति भावः। ननु कथम् "यो ब्रह्माणम्" इति श्रुत्या चतुर्मुखदेहस्य कर्मनिमित्तत्वावगमः? न ह्यत्र कर्मसंबन्धः श्रूयते॥ उच्यते, कारणवाक्येषु, "ब्रह्म वा इदमग्र आसीदेकमेव" (बृ. 3. 4.) इत्यारभ्य "यान्यन्यानि देवत्रा क्षत्राणि इन्द्रो वरुणःसोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः" इति सृज्यतया श्रुताना-

यत् पुनरुक्तम्—अन्तरिक्षलोकस्योपरिनिर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयते; अतस्तत्रस्थश्चतुर्मुखः—इति। तदयुक्तम्; "यत्तच्छान्तमजरममृतमभयम्" इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सति ईक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति। किञ्च, "यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकम्" इति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्; अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते, "यत्तत् कवयो वेदयन्ते" इति। कवयः—सूरयः। सूरिभिर्दृश्यं च वैष्णवं पदमेव; "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्येवमादिभ्यः। न चान्तरिक्षात्परश्चतुर्मुखलोकः; मध्ये स्वर्गलोकादीनां बहूनां सद्भावात्। अतः "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः; तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति" इति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टम्, तत् ऐहिकामुष्मिकत्वेन द्विधा विभज्य एकमात्रं

---

मिन्द्रवरुणसोमयमादीनां कर्मवश्यत्वमवतिष्ठते; एवमेव चतुर्मुखस्याप्यपवादश्रुत्यभावात् सृज्यत्वेन स्वतःप्राप्तकर्मवश्यत्वमवतिष्ठत इति। **आदिशब्देन,** "यो वै वेदांश्च प्रहिणोति तस्मै" इति पादोपि विवक्षितः। तेनोपदेशसापेक्षज्ञानप्रसरतया सङ्कुचितज्ञानत्वं स्वतःप्राप्तम्। इन्द्रविरोचनादीनामुपदेशसापेक्षतया हि सङ्कुचितज्ञानत्वावगमः। भगवतः सान्दीपनिप्रभृतिगुरूपदेशसापेक्षत्वं लीलावचनैरपोदितत्वान्न ज्ञानसङ्कोचसाधकम्। इन्द्रविरोचनादीनामिव चतुर्मुखस्याप्यपवादरहितमुदेशसापेक्षत्वं सङ्कुचितज्ञानत्वसाधकमिति तेनापि सङ्कोचककर्मसंबन्धसिद्धिः। एवं सृज्यत्वादुपदेशसापेक्षज्ञानप्रसरत्वाच्च कर्मवश्यत्वात् चतुर्मुखस्य **जीवघन**शब्दगृहीतत्वसिद्धिः। **यत्पुन**रित्यनूदितं पूर्वपक्षहेतुं परिहरति **तदयुक्त**मिति। परमात्मलोकत्वे हेतुत्रयमाह—**यत्तदि**त्यादिना। **कवयः सूरय** इति। **कवयः**—क्रान्तदर्शिनः। अकर्मवश्यत्वादसङ्कुचितज्ञानाः। सूरयश्च ज्ञानाधिकाः प्रसिद्धाः। अतोऽर्थवशात् सूरिप्रत्यभिज्ञानमित्यर्थः। ततः किमित्यत्राह **सूरिभिरि**ति। **एवमादिभ्य** इति। आदिशब्देन 'तद्विप्रासो विपन्यवः', "यत्र ऋषयः प्रथमजा ये पुराणाः', 'यत्र पूर्वे साध्याः सन्ति देवाः" इत्यादिवाक्यानि विवक्षितानि। अजरत्वादिभिर्निश्चितपरमात्मभावस्य स्थानत्वात्, सर्वकर्मविनिर्मुक्तस्य प्राप्यस्थानत्वात्, सूरिभिर्दृश्यत्वप्रत्यभिज्ञानाच्च न चतुर्मुखलोक इत्यर्थः। लोकक्रमप्रत्यभिज्ञानभङ्गस्यास्वरसत्वमाशङ्क्याह **नचे**ति। अस्वारस्यं तुल्यमित्यर्थः। ननु नास्माकं व्यवहितत्वादस्वारस्यम्; अन्तरिक्षशब्दस्य ब्रह्मलोकादर्वाचीनलोकानां प्रदर्शनार्थत्वात्। ब्रह्मलोकश्च प्राकृतलोकद्वयसाहचर्यात् प्राकृतलोक एव स्यादित्यत्राह **अत एतद्वै सत्यकामेति।** **अतः**—उदाहृतबहुवाक्यस्वारस्यानुगुण्यात्। **परं चापरं च ब्रह्म यदोङ्कारः** इति सामानाधिकरण्यं वाच्यवाचकभावनिबन्धनम्। ओङ्कारवाच्यं परापररूपं ब्रह्मेति वा, परापररूपब्रह्मवाचक ओङ्कार इति वाऽर्थः; अनन्तरम् **एतेन एकतर**मितिपदाभ्यामोङ्कारस्य ब्रह्मणश्च निर्देशात्। **अयनेन**—उपायभूतेन। **एकतरम्**—कार्यकारणब्रह्मणोरन्यतरत्। **यदपरं कार्यं ब्रह्मेति।** चतुर्मुखलोकस्यापरब्रह्मशब्दवाच्यत्वमेव युक्तम्; न तु परब्रह्मलोकत्वम्;

**प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परं पुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम्। अतः ईक्षतिकर्म परमात्मा ॥ इतीक्षतीकर्माधिकरणम् ॥**

---

"कार्यं बादरिः", "कार्यात्यये", "परं जैमिनिः" इति तस्य कार्यलोकत्वव्यपदेशात्, ततः पृथगेव परब्रह्मव्यपदेशाच्चेति दर्शितं कार्यब्रह्मशब्देन। **ऐहिकामुष्मिकत्वेन द्विधा विभज्येति।** उपरि पृथक्फलत्वेन कीर्तनात् विभागोऽभिप्रेत इत्यर्थः। **परापर**शब्दयोः कार्यकारणपरत्वात् कार्यलोकस्य प्राकृतत्वं सिद्धमिति कारणब्रह्मलोकस्याप्राकृतत्वमकार्यत्वादेव सिद्धम्। अतः प्राकृताप्राकृतरूपेण प्राप्यलोकविभागः। प्राकृतेऽप्यैहिकामुष्मिकरूपेण विभागश्च श्रुत्यभिप्रेतः; उपरि पृथक्फलत्वेन कीर्तनाविशेषात्। अतः ऐहिकामुष्मिकविभागोक्तिः। प्राकृताप्राकृतविभागस्य प्रदर्शनार्थत्वमाह **आमुष्मिक**मिति। चतुर्मुखलोकस्याप्यन्त**रिक्ष**शब्दोपलक्ष्यत्वे सङ्ग्राहकमामुष्मिकत्वमस्ति। चतुर्मुखलोकव्यतिरिक्तोपलक्षणे सङ्ग्राहकाकारो नास्तीति वैषम्यमभिप्रेतम्। **अन्तरिक्षशब्दोपलक्षित**मिति। उपलक्षणतया व्यवधानपरिहारस्तुल्यः; सङ्ग्राहकलाभो ह्यधिक इति भावः। **परं पुरुषं ध्यायता**मिति, **परं पुरुषमभिध्यायीत** इतिवाक्यं स्मारितम्। तेन चतुर्मुखलोकप्राप्तेस्तत्क्रतुन्यायविरोधः सूचितः। **परमेव ब्रह्मे**ति चतुर्मुखलोकस्य प्राप्यत्वे, 'परात्परं पुरिशयं पुरुषमीक्षते' इति फलवचनस्थपुरुषशब्दविरोध **एव**काराभिप्रेतः। एवं कार्यब्रह्मान्तर्गतस्य चतुर्मुखलोकस्य ततः पृथक्करणम्, परब्रह्मशब्दाविषयस्य तस्य परमात्मप्राप्तुः प्राप्यत्वाश्रयणम्, तत्क्रतुन्यायविरोधः, फलवचनविरोधश्चेत्यनेकयुक्तिभिः प्राकृतलोकद्वयसाहचर्यं निरस्तम्। आदावेव **परं चापरं च** इति प्राप्यविभागस्याभिहितत्वात् प्राकृतसाहचर्ययुक्तिरुपक्रमोन्मूलिता चेत्युक्तं भवति। **सर्वं समञ्जस**मिति। परपक्षस्थानुपपत्तयः स्वपक्षे न सन्ति। उपलक्षणतया व्यवधानपरिहारः समानः। **अजरमभयम्, परात्परं पुरिशयं पुरुषम्, यथा पादोदरस्त्वचा विनिर्मुक्तः, यत्तत्कवयो वेदयन्ते** इत्यादीनि च वाक्यानि स्वरसानीति वैषम्यमित्यर्थः। अधिकरणार्थमुपसंहरति **अत** इति ॥ इति ईक्षतिकर्माधिकरणम् ॥ ४ ॥

**दहर उत्तरेभ्यः** ॥ पूर्वाधिकरणे 'परात्परं **पुरिशयं** पुरुषम्' इत्युक्तस्य परमात्मत्वं साधितम्; अत्र **पुरिशयस्याकाश**शब्दवाच्यस्यापरमात्मत्वं निरस्यते इति सङ्गतिः। पूर्वं **ब्रह्मलोक**शब्दस्य परमात्मस्थानपरत्वमुक्तम्; तद्वदिहापि **ब्रह्मलोक**शब्द**ब्रह्मपुर**शब्दयोः स्थानपरत्वं स्यादिति शङ्कया सङ्गतिः। पूर्वत्रान्त**रिक्ष**शब्दस्य प्रसिद्धान्तरिक्षपरत्वं व्यावर्तितम्; एवं **दहराकाश**शब्दस्य प्रसिद्धाकाशादन्यपरत्वमुच्यत इति सङ्गतिः॥ तर्हि 'अक्षरमम्बरान्तधृतेः' इत्यस्यानन्तरं दहराधिकरणं प्राप्तम्; उभयत्राकाशशब्दस्य विषयवाक्येषु श्रुतत्वात्। ईक्षतिकर्मेत्यधिकरणं दहराधिकरणानन्तर्यमर्हति; तत्र ह्यन्तरिक्षशब्दः श्रूयते, न त्वाकाशशब्द इति चेन्न—अक्षरेक्षतिकर्माधिकरणयोः आकाशान्तरिक्षशब्दवाच्यादर्थान्तरस्य परमात्मत्वनिर्णयेन परस्परसङ्गत्यतिशयात्। दहराधिकरणे त्वाकाशशब्दवाच्यस्यैव परमात्मत्वं विवक्षितमिति अस्य पूर्वाधिकरणद्वयानन्तरत्वं युक्तम्।

## दहर उत्तरेभ्यः १-३-१३

इदमामनन्तिच्छन्दोगाः, "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तः, तदन्वेष्टव्यम्; तद्वाव विजिज्ञासितव्यम्" इति। तत्र सन्देहः, किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः, उत प्रत्यगात्मा, अथ परमात्मेति। किं तावत् युक्तम्? महाभूतविशेष इति। कुतः? आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षात्; 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च॥ इत्येवं प्राप्तेऽभिधीयते—

दहर उत्तरेभ्यः। दहराकाशः परं ब्रह्म। कुतः? उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः।

---

विषयादिकं दर्शयति इदमित्यादिना। परस्मिन् अन्वेष्टव्यान्तरप्रतीत्यनुपपत्तेः पक्षान्तरद्वयेऽप्युपमानोपमेयभावाद्यनुपपत्तेश्च संशयः। किं दहराकाशो भूताकाशः, उत जीवः, अथ परमात्मेति। तदर्थम् अन्वेष्टव्यान्तरनिर्देशः किं दहराकाशस्य परमात्मत्वविरोधि, उत न? तस्मिन् यदन्तरिति निर्देशः किं दहराकाशस्य गुणजातविषयः, उतार्थान्तरपरः? एष आत्मेति वाक्योक्तमपहतपाप्मत्वादिकं किं प्रजापतिवाक्योक्तजीवधर्मः, उत न? जीवधर्मत्वेऽपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति, न—इति विचारः। यदा 'तस्मिन् यदन्तः' इति निर्देशोऽर्थान्तरपरः, तदा अन्वेष्टव्यशब्दस्य गुणविषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात्। यदा, एष आत्मेति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्मत्वे स्वारस्यमस्ति, तदानीम् एष आत्मेतिवाक्यस्य जीवविषयतया दहराकाशो जीवः स्यादिति पूर्वपक्षे फलफलिभावः। यदा तस्मिन्यदन्तरिति गुणजातविषयोक्तिः, तदा अन्वेष्टव्यशब्दस्य गुणजातविषयत्वात् दहराकाशो भूताकाशातिरिक्त इति स्यात्; यदा 'एष आत्मा' इति वाक्यस्य प्रजापतिवाक्योक्तजीवधर्मविषयत्वे स्वारस्यं नास्ति, तदा स्वरसतो गुणाष्टकविशिष्टपरमात्मप्रतिपादकतया दहराकाश. परमात्मा स्यादिति राद्धान्ते फलफलिभावः। आकाशशब्दस्य क्वचित्परमात्मपरत्वं दृष्टमिति तद्व्यावृत्त्यर्थं **प्रसिद्धिप्रकर्षादि**त्युक्तम्। "एष आत्माऽपहतपाप्मा" इत्यादिभिरस्याकाशस्य परमात्मगुणेषु श्रूयमाणेषु सत्सु कथं प्रसिद्धिप्राचुर्यात् भूताकाशत्वेन प्रत्यवस्थानमित्यत्राह **तस्मिन् यदन्त**रिति। एतच्चोत्तरत्र **अथ स्यादि**त्यादिना व्यक्तीभविष्यति॥

राद्धान्तमाह **एवं प्राप्त** इति। न हि परमात्मधर्माणामुत्तरत्वाधरत्वादिकमस्ति। तस्मात् हेतोरुत्तरत्वं वाक्यद्वारकमित्याह **वाक्यगतेभ्य** इति। **उत्तरेभ्य** इत्युक्ते चतुर्थ्यन्तत्वशङ्का मा भूदिति पञ्चमीस्फुटीकरणाय **हेतुभ्य** इत्युक्तम्। "षष्ठी हेतुप्रयोगे" इति नियमः [1]प्रयोजनतया हेतुत्वविवक्षायाम्; न सर्वदा;

---

1. अत्र **भावप्रकाशिकायां** केषाञ्चिद्वादोऽनूदितः। हेतौ द्योत्ये वा इति वाकारप्रयोगोपि तद्वादानुरोधेन। स्वाशयस्त्वेवं स्यात्—ननु सूत्रे उत्तरेभ्य इति पञ्चमी सर्वसूत्रेष्विव भवितुमर्हति; हेतुशब्दप्रयोगाभावेन षष्ठ्याः, सर्वनाम्नस्तृतीया चेति तृतीयाया वा अप्रसक्तेः। **उत्तरेभ्य** इति व्याख्येयं निर्दिश्य तस्य व्याख्यानरूपे तु भाष्ये हेतुभ्य इति हेतुशब्दप्रयोगात् वाक्यगतेभ्यः इत्यसर्वनाम्नः हेतुशब्दाच्च षष्ठ्येव

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणाः गुणाः दहराकाशं परं ब्रह्मेति ज्ञापयन्ति। "अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादिना, "यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठति। तेन संपन्नो महीयते" इत्यन्तेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति। "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते॥ हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्—तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते॥ ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति, "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्" इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात्॥ नैवम्; दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य; यथा अधिकजवेऽपि सवितरि, 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम्।

अथ स्यात्—'एष आत्माऽपहतपाप्मा' इत्यादिना दहराकाशो न निर्दिश्यते, दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्, इति दहराकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृत-

---

यथा, "अल्पस्य हेतोर्बहु हातुमिच्छन्" इति। उत्तरवाक्यगतहेतून् दर्शयति **एष** इत्यादिना। **निरुपाधिकात्मत्व**मिति। जीवस्यापि व्यावर्तनक्षममात्मत्वमित्यभिप्रायेण **निरुपाधिक**शब्दः। देवादिकतिपयशरीरविशेषानवच्छिन्नत्वं **निरुपाधिकत्वम्।** अपहतपाप्मत्वादेरपि निरुपाधिकत्वमभिप्रेतम्। यद्वा आकाशस्यापि स्वकार्यव्याप्त्या यौगिक आत्मशब्द उपपन्न इति शङ्काव्यावृत्त्यर्थो **निरुपाधिक**शब्दः। यौगिकत्वाश्रयणं च क्लिष्टम्; स्वतः शरीरप्रतिसम्बन्धिनियन्तृरूपव्यापरि ह्यात्मशब्दप्रयोग इति भावः। **अपहतपाप्मत्वादिकमित्यादि**शब्देन सत्यकामत्वादिग्रहणे शक्येऽपि गुणानां विधिनिषेधरूपेण द्वैविध्यज्ञापनाय सत्यकामत्वादेः पृथगुपादानम्। **उपमाने**ति। एकस्यैवोपमानोपमेयभावो न संघटत इत्यर्थः। उपमानोपमेयभावस्य हृदयावच्छेदनिबन्धनत्वमाशङ्क्य परिहरति **हृदये**त्यादिना। अत एवेदमपि नाशङ्कनीयम्, 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवदुपमानशून्यताज्ञापनपरं वाक्यमिति; **याव**च्छब्दानुपपत्तेः; अंशभेदोक्तेश्च। न्यूनपरिमाणस्येव अधिकपरिमाणस्यापि न मध्यमपरिमाणेन साधर्म्यं युक्तमिति चोदयति **ननु** चेति। अन्यूनपरिमाणत्वमात्रं साधर्म्यमिति परिहरति **नैव**मिति।

**अथ स्या**दिति। यद्यपि, 'यावान् वा अयमाकाशः'' इति मध्यगतवाक्यस्थाकाश एव प्रश्नमानिर्दिष्टत्वादासन्नत्वाच्च **एष** इति परामर्शनीयः, तथाऽप्युपक्रमे "तस्मिन् यदन्तस्तदन्वेष्टव्यम्"

---

स्यादिति शङ्कायामियं टीका। 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति वार्त्तिके सर्वविभक्त्यनुमतिः सर्वनामविषये वा सर्वत्रैव वेति विचारस्तावदास्ताम्। तत्र पर्यायशब्दव्याख्यातृभिः प्रयोजनपदस्यापि ग्रहणात् प्रयोजनपर्यायहेतुशब्दप्रयोगमूलकहेतुत्वद्योतन एव, षष्ठीहेताविति सूत्रप्रवृत्तेर्ज्ञायमानतया अत्र प्रयोजनविवक्षाविरहात् भाष्ये न पञ्चम्यनुपपत्तिप्रसक्तिरिति परिहार इति।

त्वादिह, "एष आत्माऽपहतपाप्मा" इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् ।

स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभक्ष्यत्; व्यभाक्षीत्तु सा । तथा हि—अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति ब्रह्मपुरशब्देनोपास्यतया संनिहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य, तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतया अभिधाय, सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन् वेश्मनि संनिहितं सूक्ष्मतया ध्येयं दहराकाशशब्देन निर्दिश्य, तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतो निरस्तनिखिलहेयत्वं सत्यकामत्वादिस्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं 'तदन्वेष्टव्यम्' इत्युपदिश्यते । अत्र 'तदन्वेष्टव्यम्' इति तच्छब्देन दहराकाशं तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते—" यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म "

---

इत्यन्वेष्टव्यतया प्राधान्येनावगतत्वात्, 'आत्मा वा अरे द्रष्टव्यः, सोऽन्वेष्टव्यः' इत्यादिष्वात्मनोऽन्वेष्टव्यत्वनिश्चयादिहाप्यन्वेष्टव्यस्य तदन्तर्वर्तिनः आत्मत्वावगमात् "एष आत्मा" इति तदन्तर्वर्तिनोऽन्वेष्टव्यस्यात्मनः परामर्शः । अत आत्माधिकरणतयाऽवगतत्वेन तद्व्यतिरिक्तत्वाद्युपपत्त्यनुरोधेन भूताकाश एवायं दहराकाश इत्यर्थः । पूर्वपक्षे, 'अन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च' इत्यनेन वाक्येनाभिप्रेतोऽर्थ इह **अथस्या-**दित्यादिना कण्ठोक्तो भवति । परिहरति **स्यादेतदि**ति । ब्रह्मपुरशब्दार्थमाह **उपास्यतये**ति । न केवलं ब्रह्मणः सर्वव्यापित्वात् शरीरेण साधारणं सम्बन्धमात्रम्, अपि तूपासनस्थानभूतहृदयाधारत्वात् संबन्धविशेषश्च विद्यते । ब्रह्मशब्दश्च परस्मिन् मुख्यः । अतो ब्रह्मपुरं शरीरमित्यर्थः । अत्रेदमप्यर्थसिद्धम्—दहराकाशो जीव इति पूर्वपक्षस्य साधकतया ब्रह्मपुरशब्दनिर्देशः परैरुक्तः ; तदयुक्तमिति ॥ कथम् ॥ उच्यते । ब्रह्मणः सर्वविकारसाधारणत्वादसाधारणेन व्यपदेशस्य युक्तत्वात् जीवस्य भोगोपकरणतया संबन्धविशेषसद्भावात् जीवशरीरमेव ब्रह्मपुरमिति तद्विधेयपुराधिपो जीव इति शङ्कितम्——तदयुक्तम् ; मुख्यार्थस्य स्वतो ग्राह्यत्वात्, परमात्मन उपास्यत्वाय शरीरान्तरवस्थानस्य "निचाय्यत्वादेवम्" इत्यत्र दर्शिततया संबन्धविशेषसद्भावाच्च जीवसाधकत्वशङ्कानुत्थानादिति । **अल्पपरिमाण**मित्यनेन 'दहरं पुण्डरीकम्' इत्यत्र दहरशब्दो व्याख्यातो भवति । सत्यकामत्वसत्यसङ्कल्पत्वसिद्धान् गुणानाह **स्वाभाविके**ति । ननु आकाशशब्दवाच्यस्य गुणित्वेन तस्य ध्येयत्वं वक्तव्यम् ; तेन विना गुणध्यानायोगात् । तच्छब्दस्य तदन्तर्वर्तिपरत्वात् नाकाशाभिधायित्वम् । गुणिनो ध्येयत्वे कथिते गुणानां ध्येयत्व-[1]मर्थसिद्धं स्यात् ; न तु गुणानां ध्येयत्वे कथिते गुणिनोऽन्तर्भावः । अतोऽन्वेष्टव्यमिति पदं गुणिपरम्, न तु गुणपरमित्यत्राह **अत्रे**ति । तच्छब्द एवोभयपरामर्शीत्यर्थः । ननु यच्छब्दनिर्दिष्टं हि तच्छब्देन परामृश्यते । यच्छब्दस्त्वन्तर्वर्तिपरः, नाकाशपरः । तत् कथमुभयपरामर्शित्वं तच्छब्दस्येति शङ्कायाम्, अस्य वाक्यस्य परोक्तार्थपरत्वं च व्युदस्यन् तच्छब्दस्य उभयपरामर्शित्वमाह **यदिदमस्मिन्नि**ति ।

---

1. अर्थसिद्धमिति । विशिष्टे विशेषणस्यान्तर्गतत्वात् विशिष्टस्य ध्यानविधाने विशेषणध्यानविधानमार्थिकमिति भावः ।

इत्यनूद्य, तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशः यच्च तदन्तर्वर्तिगुणजातम्, तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः ॥

---

**तस्मिन्** दहरपुण्डरीकवेश्मनि **यत्** अन्तर्गतं दहराकाशाख्यं वस्तु तदन्वेष्टव्यम्—इति परैरुच्यते। तद् व्युदस्यति **यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्ये**त्यादिना[1]। अयमर्थः—यदिदं दहरं पुण्डरीकं वेश्म तस्मिन् दहराकाश इति दहराकाशस्य पुण्डरीकवेश्माधारत्वस्योक्तत्वात् पुनरपि, 'तस्मिन् यदन्तः' इति आकाशस्य पुण्डरीकवेश्माधारत्वकथनवैयर्थ्यं स्यादिति। तस्मिन् यदन्तरिति गुणविषयत्वे तु न वैयर्थ्यम्; पूर्वमनुक्तत्वात्। अतोऽपेक्षितविधेरनपेक्षितविधानं दुर्बलम्। अत्र दूषणान्तराण्यप्यभिप्रेतानि—अव्यवहितदहराकाशं विहाय व्यवहितपुण्डरीकवेश्मपरामर्शोऽनुपपन्नः। पुंलिङ्गशब्दनिर्दिष्टस्य दहराकाशस्य यदिति नपुंसकलिङ्गान्तपदेन परामर्शानुपपत्तिश्च। किञ्च—तस्मिन् यदन्तरिति वाक्यं दहराकाशस्य पुण्डरीकवेश्माधारकत्वप्रतिपादनपरं चेत्, अनन्तरवाक्यस्य तदाक्षेपपरतया व्याख्यानं चानुपपन्नम्। परमात्मनोऽन्तर्वर्ति [2]तत्कारणं सूक्ष्मं किमपि न संभवतीति, 'किं तदत्र विद्यते' इति वाक्येनाऽऽक्षिप्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति हि परैर्वर्ण्यते। दहराकाशः पुण्डरीकवेश्मवर्तीत्युक्ते किमत्राऽऽक्षेप्यम्। तथा "अस्मिन् कामाः समाहिताः", "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति गुणानां तदन्तर्वर्तित्वमुक्त्वा गुणगुणिनोरुभयोरप्युपासनतत्फलप्रतिपादकोपरितनवाक्यस्वारस्यभङ्गश्च भवेत्। अतः परोक्तार्थोऽनुपपन्न इत्यभिप्रायः॥ **दहरोऽस्मिन्निति** वाक्यं व्याचष्टे **तस्मिन् दहरेति**। पुँल्लिङ्गयच्छब्दाध्याहारेण योजनायां यच्छब्दद्वयनिर्दिष्टमुभयं तच्छब्देन प्रतिनिर्दिश्यत इत्यभिप्रायेण **यो दहराकाशः यच्च तदन्तर्वर्ति गुणजातं तदुभय**मित्युक्तम्। [3]यद्वा पुंलिङ्गयच्छब्दानध्याहारेण दहरोऽस्मिन्नित्यादेरेकवाक्यत्वं मन्वान आह—**तस्मिन् दहरेति**। श्रुतिवाक्ये **अन्तः**शब्दोऽन्तर्वर्तिपरः। अस्मिन् वर्तमानो दहराकाशस्तदन्तर्वर्ति च यत् तदुभयमन्वेष्टव्यमिति वाक्यस्यार्थ इत्यर्थः। "त्यदादीनि सर्वैर्नित्यम्" इति पुँल्लिङ्गनपुंसकलिङ्गयोरेकशेषः। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकान्तत्वमेकवचनान्तत्वं च। तस्मात् आकाशतदन्तर्गतान्वेष्टव्यगुणपरं

---

1. अनूद्येत्यादिनेति। अनूद्येत्यन्तेनेति पाठान्तरमपि निरूढं भावप्रकाशिकायाम्।

2. तत्कारणमिति। सूक्ष्मं किमस्तीति एतावानेवाक्षेपः परग्रन्थाल्लभ्यताम्। अथापि कारणस्यैव मुमुक्षुध्येयत्वात् तेन सूक्ष्मेण कारणेन भाव्यमित्यपि आक्षेप्तुराशयस्य परिपोषः क्रियते। परिहारस्तु—आकाशं विहाय तन्मात्रोपासनमित्यस्यानभिमतत्वात् आकाशे परमात्मनि स्थितं यत् किमपि अन्तर्वर्तितया सुवचमिति।

3. यद्वेत्यारभ्य एकशेष इत्यन्तमेका फक्किका। एवञ्च त्यदादीनीत्यादिना यद्वेतिपक्षे तदित्येकशेषनिर्वाह उक्तः; आकाशश्च तच्च तदिति विग्रहस्वीकारात्। पक्षद्वयेऽपि सः तच्चेति विग्रहे तु अनायासेन नपुंसकसूत्रेणैवैकशेषः; एवञ्चैकवचननिर्वाहोऽपि सुकर इत्याशयेनाह नपुंसकमिति। एवं तत्पदमात्रैकशेषेणैव निर्वाहात्; तस्मिन् यदन्तः' इति वाक्ये तच्छब्दस्य वेश्माकाशोभयपर-

दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वम्, "तस्मिन् यदन्तः" इति निर्दिष्टस्य च तद्गुणत्वम्, तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत्—

तदवहितमनाः शृणु—"यावान् वा अयमाकाशः, तावानेषोऽन्तर्हृदय आकाशः" इति दहराकाशस्यातिमहत्तामभिधाय, "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते ; उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि" इति प्रकृतमेव दहराकाशम् अस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय, "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" इति पुनरपि अस्मिन्निति तमेव दहराकाशं परामृश्य, तस्मिन् अस्य उपासकस्येह लोके यद्भोग्यजात-

---

पुन्नपुंसकान्तयच्छब्दद्वयार्थविषयं तदिति पदमित्यभिप्रायः। एवं तदन्वेष्टव्यमिति तत्पदेनैवात्मनोऽप्युक्तत्वादन्वेष्टव्यतया प्राधान्यावगतिरन्वेष्टव्यस्यात्मत्वप्रसिद्धिश्चोपपन्ने इति चोद्यपरिहारसिद्धिः।

---

दहराकाशेति। विवक्षितार्थस्य प्रामाणिकत्वे सिद्धे हि क्लिष्टनिर्वाहाश्रय उपपद्यते; तस्मात् दहराकाशस्य परब्रह्मत्वे, तदन्तर्वर्तिनो गुणजातत्वे, तयोरन्वेष्टव्यत्वे च प्रमाणं वक्तव्यमित्यर्थः।

प्रतिवक्ति तदवहितेत्यादिना। 'तदन्वेष्टव्यम्', 'यावान् वा अयमाकाशः' इति वाक्ययोर्मध्ये, 'किं तदत्र विद्यते' इति वाक्यं श्रूयते। परमात्मनोऽन्तर्वर्तिनः कस्यचिदसंभवात् किं तदत्र विद्यते इति वाक्यमाक्षेपपरमित्याहुः परे। प्रश्नपरमिदं वाक्यमित्युचितम्। बुभुत्साख्यापनमात्रं प्रश्नः। अनुपपत्त्युद्घाटनेनार्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनं चोद्यम्। अबुभुत्सितपरिहारेण वक्त्रा प्रतिषेधः प्रतिक्षेपः, 'कुतस्तु खलु सोम्य' इतिवत्। न प्रतिक्षेपपरमिदम्; परिहारस्य वक्ष्यमाणत्वात्। न केवलः प्रश्नः, अनुपपत्तेर्विद्यमानत्वात्। सर्वान्तरस्य परमात्मनो ह्यन्तरभूतं तत्त्वान्तरमसंभावितम्। अनुपपत्त्युद्घाटनमुखेनाक्षेपस्य कण्ठोक्त्यभावान्न, केवलं चोद्यमित्यप्युचितम्। अतो विनयं प्रकाशयता शिष्येणानुपपत्तिमभिप्रेत्य तामस्फुटं ब्रुवता बुभुत्साख्यापनं क्रियत इति प्रश्नवाक्यतुल्यं फलतश्चोद्यपरमिदं वाक्यम्। तच्छब्दनिर्दिष्टयोराकाशतदन्तर्वर्तिनोरन्तर्वर्तिविशेषानवगमादुक्तानुपपत्तिगर्भः तदन्तर्वर्त्यंशविषयः प्रश्नः **किं तदत्रेति**। **स ब्रूयात्**— आचार्यो ब्रूयादित्यर्थः। प्राकरणिकानामिदमेतच्छब्दानामाकाशपरामर्शपरत्वार्थं तस्याव्यवहितत्वज्ञापनार्थं शब्दतोऽर्थतश्चाकाशस्य प्राधान्यज्ञापनार्थं च **यावान् वा अय**मित्यादि प्रदर्श्यते। इदं वाक्यं दहराकाशस्याल्पत्वनिवृत्तिपरमित्यभिप्रायेणा**तिमहत्ता**मित्युक्तम्। **प्रकृतमेवे**ति। अन्तर्वर्त्यन्वेष्टव्यम् आकाशशब्दव्यवहितत्वान्नेदंशब्दविषय इति भावः। दहराकाशस्यानुगत्यविच्छेदं दर्शयति **तमेवे**ति। **अस्येति** व्याख्येयम्, **उपासकस्ये**ति व्याख्यानम्। **इदंशब्दः** षष्ठ्यन्तो बुद्धिस्थपर इत्यर्थः। अन्वेषणाविजिज्ञासयोः कर्तृत्वेन उपासको हि बुद्धिस्थः। अस्येहास्ति, नास्तीति अस्तित्वनास्तित्वयोः सप्रतियोगिकत्वावगमात् अनन्तरं

---

त्वेन यच्छब्दस्य आकाशतदन्तर्वर्त्युभयपरत्वेन चैकशेषो नेष्टः। तच्छब्दस्यान्तर्वर्तिमात्रपरत्वमिष्ट्वा आकाशस्तच्चान्वेष्टव्यमित्युक्तौ तद्भावविजिज्ञासितव्यमित्यत्र तच्छब्दस्योभयपरत्वात् तदानुरूप्याभावः चकाराध्याहारश्चेति गौरवमिति तदिति प्रथमपदेऽप्येकशेषः।

4. आकाशशब्दव्यवहितत्वादिति। तावानेषोऽन्तर्हृदय आकाश इति वाक्यनिर्दिष्टत्वादाकाशः संनिहितः, तदन्वेष्टव्यमिति तु तेनाकाशशब्देन व्यवहितमिति।

**मस्ति, यच्च मनोरथमात्रगोचर[1]मिह नास्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय, तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि**

---

चोदयितुरनुभाषणवाक्ये 'सर्वे च कामाः' इत्यनुभाषणात् यच्छब्दो भोग्यजातपर इत्यभिप्रायः। फलितमर्थमाह **निरतिशयभोग्यत्व**मिति। यथा समुद्रे गोष्पदपल्वलादीनामन्तर्भाववचनात् समुद्रस्यानवधिकजलौघत्वं सिद्ध्यति, एवं 'सर्वं तदस्मिन् समाहितम्' इत्यनेन निरतिशयभोग्यत्वसिद्धिरित्यर्थः॥

ननु कथमस्य वाक्यस्यामुख्यार्थत्वमाश्रीयते? जीवभोग्यवस्तूनामाधारत्वमुक्तं किं न स्यात्॥ उच्यते। अस्येतिपदं तावन्न ब्रह्मपरम्; यच्चास्य नास्ति, सर्वमस्मिन् समाहितमिति व्याघातात्। न च जीवमात्रपरम्, जीवविशेषस्योपासकस्य बुद्धिस्थत्वात्। उपासकस्य स्वर्गपश्वादिकं न भोग्यमिति तदाधारत्वकथनमनुपपन्नम्। तस्य च ब्रह्मैव प्राप्यम्। तस्यापरिच्छिन्नत्वमितरफलान्तवत्त्वं चेहैवानन्तरमुच्यते। अतो निरतिशयभोग्यतापरत्वम्। अन्वेष्टव्यतोपयुक्तत्वाच्च निरतिशयभोग्यतापरत्वं युक्तम्॥ नन्वानन्दत्वस्य स्वरूपनिरूपकधर्मतया सर्वविद्यानुयायित्वादर्थसिद्धमिति निरतिशयभोग्यत्वं न पृथग्वाच्यम्॥ नैवम्; स्वरूपनिरूपकस्य सत्यत्वस्यात्र पृथगुक्तत्वात्। अपेक्षितेष्वर्थेषु अनुक्तस्य ह्यन्यतो ग्राह्यत्वम्; न तूक्तपरित्यागेनान्यतो ग्राह्यत्वं युक्तम्[2]। अतो यथोक्त एवार्थः।

अथ 'तं चेद्ब्रूयुः' इत्यादिचोद्यपरिहारवाक्यानामर्थं हृदि निधायाह **तस्य दहराकाशस्येति**। अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि भूतानि सर्वे च कामाः, यदैनत् जराऽवाप्नोति प्रध्वंसते वा, किं ततोऽतिशिष्यते' इति चोद्यम्। किं तदत्र विद्यत इति प्रश्नस्य प्रतिवचनम्, अस्मिन् कामाः समाहिता इति वक्ष्यते। मध्ये चोद्यान्तरमिदमुत्थितम्—शरीरान्तर्वर्तिनि दहराकाशे सर्वं द्यावापृथिव्यादिकं स्थितं चेत्—देहप्रध्वंसे तदन्तर्गतस्याकाशस्यापि हृत्पुण्डरीकस्येव प्रध्वंससंभवात् तस्य द्यावापृथिव्याद्याश्रयत्वमनुपपन्नम्, देहप्रध्वंसेऽपि द्यावापृथिव्याद्यवस्थानात्। अस्थिरत्वादेव निरतिशयभोग्यत्वं च अनुपपन्नमिति। एवं चोद्योत्थानबीजं सूचयति **देहावयवभूतहृदयान्तर्वर्तित्वेऽपीति**। 'यदैनत् जराऽवाप्नोति' इत्येतच्छब्दः पूर्वप्रक्रान्तं व्यवहितमपि ब्रह्मपुराख्यं शरीरं परामृशति; जरादिस्पर्शाभिधानात्; न तु तदन्तर्वर्तिपरामर्शी; तस्य सत्यत्वस्य वक्ष्यमाणत्वादित्यभिप्रायेण **देहावयव**इत्युक्तम्। चोद्यपरे श्रुतिवाक्ये **सर्वं समाहित**मिति द्यावापृथिव्याद्युपलक्षितभोग्यभोगोपकरणभोगस्थानाधारत्वमनूदितम्; सर्वाणि भूतानीति सूर्याचन्द्रमोनक्षत्रोपलक्षितभोक्तृवर्गाधारत्वमनूदितम्; सर्वे च कामा इति निरतिशयभोग्यत्वमनूदितम्; पुरोवादिवाक्यानुगुणत्वादनुवादिवाक्यस्य॥ ननु सर्वशब्दसङ्कोचेन जीवभोग्याधारपरमिदं वाक्यम्, मुख्यत्वोपपत्तेरिति॥ नैवम्; अमुख्यत्वं सोढव्यम्, प्रथमश्रुतसर्वशब्दसङ्कोचस्यायुक्तत्वात्; पुरोवाद्यानुरूप्यसिद्धेः; उपासकफलस्य निरतिशयतया वक्ष्यमाणत्वा(स्या?)नुगुणत्वाच्च।

---

1. **मूले गोचरमिति। मनोरथमात्रे गोचरो विषयता यस्येति बहुव्रीहिः। अतः क्लीबता।**

2. **युक्तमिति। द्यावापृथिव्याद्याधारत्वोपपादितयाऽतिमहत्तया अनन्तत्वस्य, उपरि सत्यत्वस्य च विवेचनवत् यच्चास्येत्यादिना आनन्दत्वविवरणमिति भावः।**

देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतयाऽतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा, तत एव, "एतत् सत्यं ब्रह्म पुरम" इति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य, "अस्मिन् कामाः समाहिताः" इति दहराकाशमस्मिन्निति निर्दिश्य, काम्यभूतांश्च गुणान् कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा, तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्याऽऽत्मत्वं च, "एष आत्माऽपहतपाप्मा" इत्यादिना "सत्यसङ्कल्पः" इत्यन्तेन स्फुटीकृत्य, 'यथा ह्येवेह प्रजा अन्वाविशन्ति' इत्यारभ्य, "तेषां सर्वेषु लोकेष्वकामचारो भवति" इत्यन्तेन तदिदं गुणा-

---

न च गुणाष्टकविषयोऽयं चोद्यवाक्यस्थः **कामशब्दः ; अस्मिन् कामा** इति तस्य वक्ष्यमाणस्य पूर्वमुक्तत्वा-योगात् । उक्तानुभाषणरूपत्वाच्चास्य वाक्यस्य । अतः 'सर्वे च कामा' इति निरतिशयभोग्यत्वानुवादः । 'न जीर्यति', 'न हन्यते' इत्यनेन प्रतिवचनवाक्येनार्थसिद्धमाकारमाह **परमकारणतयाऽतिसूक्ष्मत्वे-नेति** । कार्यात् वाय्वादेः कारणमाकाशादिकं हि सूक्ष्मम् ; तत एव वाय्वादिविकारेऽप्याकाशस्य न तादृशविकारसंभव इति तत्तत्कारणतत्त्वान्तरात्मनो निरतिशयसूक्ष्मत्वान्निर्विकारत्वमिति भावः । **तत एवेति** । श्रुतिवाक्यस्थसत्यशब्दस्य निर्विकारत्वमर्थ इति भावः । षष्ठीतत्पुरुषव्यावृत्त्यर्थमाह **ब्रह्माख्य-मिति** । सत्यशब्दसामानाधिकरण्यान्न प्राकृतशरीरमित्यभिप्रायः । पुरशब्दविषयत्वहेतुं [1]गुणमाह **निखिल-जगदिति** । 'सत्यं ब्रह्म पुरम्' इत्यन्तमवान्तरचोद्यपरिहारपरम् । **अस्मिन् कामा** इति तु प्रथमचोद्य-प्रतिवचनम् । **दहराकाशमस्मिन्निति निर्दिश्येति** अव्यवहित-**एतत्सत्यंब्रह्मपुर**मित्यादिशब्दोपस्था-पितत्वादस्येति भावः । गुणानां कामशब्दवाच्यत्वमुपपादयति **काम्यभूता**निति । अवयवशक्त्येत्यर्थः । **समाहिता** इति पदस्यार्थमाह **दहराकाशान्तर्वर्तित्व**मिति । एवं दहराकाशस्य कामवैशिष्ट्यमुक्तम् । **तदेवेति** । को दहराकाशः, स च कैः कामैर्विशिष्टः इत्यपेक्षायाम्, **एष आत्मेति** वाक्यं गुण-विशेषविशिष्टधर्मिविशेषप्रतिपादकमित्यर्थः । **अपहतपाप्मेत्यादिवाक्ये सत्यकाम**शब्दो न कामनायाः सत्यत्वपरः ; अमोघाशत्वस्य सत्यसङ्कल्पशब्देनापि सिद्धत्वात् । नापि भोगानां सत्यत्वपरः ; इच्छा-विशेषवाचकतया व्युत्पन्नस्य कामशब्दस्य भोगवाचित्वाभावात् । नापि काम्यन्त इति व्युत्पत्त्या गुणमात्र-परः ; कतिपयगुणान्तराणां पृथगुक्तत्वात् असङ्कुचितावयवार्थसंभवे गोबलीवर्दन्यायेनानुक्तगुणविषयतया सङ्कोचायोगाच्च । अतो भोग्यभोगोपकरणभोगस्थानरूपाः नित्याः काम्या अस्य सन्तीत्युच्यते । 'तत्, अक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थः । **स्फुटीकृत्येति** । आकाङ्क्षितगुण-गुणिविशेषप्रदर्शनं स्फुटीकारः । गुणगुणिनोरुभयोरप्युपास्यत्वं फलवाक्ये दर्शयिष्यन् मध्यगतवाक्यानामर्थं वदति **यथा ह्येवेति** । 'यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति, यं जनपदं यं क्षेत्रभागम्, तं तमेवोपजीवन्ति। तद्यथेह कर्मचितो लोकः" इत्यादि । प्रथमस्य **यथा**शब्दस्य [2]तथोपजीवन्तीत्यन्वयः । इह लोके प्रजाः **यथानुशासनम्** राजशासनं यथा, तथा **अन्वाविशन्ति**

---

1. विषयत्वहेतुमिति । पुरशब्दो ब्रह्मणि गौणः इति गौणताप्रयोजकमिति यावत् ।
2. तथोपजीवन्तीति । यथाशब्दप्रतिसंबन्धी तथाशब्दः उपजीवन्तीत्यत्राध्याहार्य इति भावः ।

ष्टकं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेतद्व्यतिरिक्तभोग्यसिद्धये च कर्म 'कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय, "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तवर्तिनश्च काम्यभूतान् अपहतपाप्मत्वादिकान् गुणान् विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः सत्यसङ्कल्पता चोच्यते ।

अतो दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादि काम्यगुणजातम्, तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यते इति निश्चीयते। तदेतद् वाक्यकारोऽपि स्पष्टयति,

---

लभन्ते । किमित्यत्राह **यं यमन्त**मिति । **अन्तः** फलम् ; साधनानुष्ठानावसानभावित्वात् । **यं यम् अन्तं** फलं क्षेत्रजनपदादिकं प्रति **अभिकामाः** अभ्यर्थिनो भवन्ति, तत्तत्फलं तथोपजीवन्तीति। लौकिकराजसेवादिप्रवृत्त्या लौकिकफलभोगावुक्तौ ; तस्य क्षयित्वमाह—**तद्यथेह कर्मचितो लोक** इति । अलौकिकफलस्यापि तद्वत् क्षयित्वमाह—**एवमेवामुत्रे**ति। दहराकाशतद्गुणानुपासकानामन्तवत्फलभाक्त्वमाह **तद्य इहात्मानमननुविद्ये**त्यादिवाक्येन । **अननुविद्य** अनुपास्य । **व्रजन्ति** ; परलोकमिति शेषः। भाष्ये **कर्म कुर्वता**मिति, **तद्यथेह कर्मचित** इत्यादिश्रुत्यर्थोऽभिप्रेतः। **अकामचार**शब्दार्थमाह **असत्यसङ्कल्पत्वञ्चे**ति। अनाविर्भूतगुणाष्टकत्वं विवक्षितम् । **अथ य इहात्मानमनुविद्ये**ति। अत्रात्मा**नमेतांश्च सत्यान् कामा**निति दहराकाशतदन्तर्वर्तिशब्दार्थानुवादः। **कामचारो भवती**ति सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकाविर्भावो विवक्षितः। **एतांश्च सत्यान् कामा**निति वाक्ये **काम**शब्दोऽपहतपाप्मत्वादिगुणाष्टकपरः, न तु **सत्यकाम**पदोक्तकामपरः, एतांश्चेत्येत**च्छब्दस्य प्रकृतगुणविषयतया कामशब्दस्य कायन्त इत्यवयवशक्त्या वृत्त्युपपत्तेः ; **अस्मिन् कामाः समाहिता** इति वाक्यस्थ**काम**शब्दैकार्थ्याच्च ॥ सत्यशब्दविशेषितत्वं प्राक्तननिर्विशेष**काम**शब्दार्थप्रत्यभिज्ञाविरोधि ; **सत्यकाम**पदवाच्यप्रत्यभिज्ञापकं चेति चेन्न ; ततः पूर्वं श्रुतस्यैतच्छब्दस्य प्रकृतगुणपरामर्शक्षमतया पश्चाच्छ्रुतस्य सत्यशब्दस्य तदनुविधायित्वात् ; 'त इमे सत्याः कामाः' इति प्रकृतानां कामानां सत्यशब्दविशेषितत्वाच्च। अनेन श्रुत्यर्थोपन्यासेन पूर्वप्रस्तुतशङ्कायाः परिहृतत्वं दर्शयति **अतो दहराकाश** इति ॥ ननु प्रक्रमानुगुणमुपसंहारो वर्णनीयः ; तत् कथमुपसंहारानुगुणमुपक्रमार्थवर्णनमिति चेन्न—उपक्रमावगतस्य तदन्तर्वर्तिनोऽन्वेष्टव्यत्वस्य बाधाभावात्। उपसंहारावगतस्यात्मनोऽप्यन्वेष्टव्यत्वस्य उपक्रमे विवक्षितत्वमात्रं ह्युक्तम् ; न तु उपक्रमावगतप्रहाणम् ॥ ननु उपक्रमवाक्यमन्तर्वर्तिन एव अन्वेष्टव्यत्वपरं स्यात् ; आत्मनोऽन्वेष्टव्यत्वं तु उपसंहारवाक्यादेव अवगतं स्यात् ; किं क्लिष्टनिर्वाहेणेति चेन्न—फलवाक्यगतोपासनानुवादस्य पुरोवादस्य चैकरूपताया अवश्याभ्युपगन्तव्यत्वात् । न ह्यप्राप्तं गुण्युपासनमनुवदितुं शक्यम्। न च **अथ य इहात्मान**मिति वाक्यं विशिष्टविधिपरम् ; गुणांशस्य प्राप्तत्वात्। नापि गुणानुवादेन गुण्युपासनविधायकम् ; उभयानुवादेन फलप्रतिपादनपरत्वात् । अतोऽप्राप्तस्यानुवादायोगात् फलवाक्यानूदितस्य गुण्युपासनस्य गुणोपासनस्येव तदन्वेष्टव्यमिति वाक्येनैव विहितत्वमवश्याभ्यु-

"तस्मिन् यदन्तरिति कामव्यपदेशः" इत्यादिना। अत एतेभ्यो दहराकाशः परमेव ब्रह्म ॥ १३ ॥

इतश्च दहराकाशः परं ब्रह्म—

## गतिशब्दाभ्याम् ; तथा हि दृष्टम् ; लिङ्गं च । १ । ३ । १४ ॥

'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति; अनृतेन हि प्रत्यूढाः" इति एतमिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहः सर्वेषां क्षेत्रज्ञानां गमनम्, गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोक-शब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः॥ कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह तथाहि दृष्टम् इति। परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहस्सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम्—"एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः, सति संपत्स्यामहे इति" इति, "सत आगम्य न विदुः, सत आगच्छामह इति" इति च। तथा ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्टः, "एष ब्रह्मलोकः सम्राडिति होवाच" इति। मा भूदन्यत्र ब्रह्मणि गमनदर्शनम्; एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं श्रूयमाणम् अस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्। तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्याऽस्मिन्

---

पगन्तव्यमिति दहराकाशगुणाष्टकयोरुभयोरप्युपासनं **तदन्वेष्टव्य**मिति विहितम्। अथान्तर्वर्तिनः कामत्वं संप्रदायतो द्रढयति **तदेत**दिति। सूत्रार्थमुपसंहरति **अत एतेभ्य** इति॥

**गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च** ॥ अहरहर्गच्छन्त्य इति सुषुप्तौ गमनं विवक्षितम्। तच्च पृथक्प्रतिपत्तिव्यवहारानर्हतया स्थितिः। निर्गमनं पृथक्प्रतिपत्त्यर्हतापत्तिः। **कथमनयो**रिति। **कथम्**। श्रुतिषु परमात्मधर्मत्वेन अन्वयदर्शनाद्वा जीवादिप्रतिपादकवाक्येष्वदर्शनेन जीवादिष्वसम्भावितत्वाद्वा गतिशब्दयोः परमात्मसाधकत्वमित्यर्थः। **तथाहिदृष्ट**मिति सूत्रखंड परमात्मपरसपक्षवाक्येषु अन्वयदर्शनपरं व्याचष्टे **तथा ही**ति। गतेः श्रुत्यन्तरप्रसिद्धिं दर्शयति **परस्मि**न्निति। शब्दस्यान्यत्र प्रसिद्धिं दर्शयति **तथे**ति। **लिङ्गं चे**ति सूत्रखण्डं जीवादिप्रतिपादकविपक्षभूतवाक्येष्वदर्शनरूप-व्यतिरेकात् गतिशब्दयोः *साध्यसाधकत्वपरं व्याचष्टे **माभू**दिति। तत्र गतेः श्रुत्यन्तरेऽन्वयदर्शननैरपेक्ष्येण साधकत्वमाह **एतदेव**त्विति। **श्रूयमाण**मिति। निधिदृष्टान्तसचिवमिति भावः। तद्यथेत्यादेः वाक्यस्योदाहृतत्वात्, अत्र निधिदृष्टान्तस्य श्रुतत्वात्, **निधिदृष्टान्तावगतपरमपुरुषार्थभावस्ये**ति योजनान्तरेऽनन्तरमेवोच्यमानत्वाच्च। निधिदृष्टान्तश्च परमपुरुषार्थत्वज्ञापकः। अतो दृष्टान्तानुगृहीतमहरहर्गमनमेकं पर्याप्तं लिंगमित्यर्थः। शब्दस्य च न्यायविशेषानुगृहीतस्य श्रुत्यन्तरेऽन्वयनिरपेक्षं साध्यसाधकत्वमाह **तथा ब्रह्मलोके**ति। ननु कथं ब्रह्मलोकशब्दस्य समानाधिकरणवृत्तित्वावगमः; व्यधिकरणवृत्तावपि तदेव हि शब्दरूपमिति शंकायाम्, विवक्षितमनुग्राहकं दर्शयति—

---

1. कामत्वमिति। द्युपृथिव्यादिकमेवान्तर्वर्तितया उभे अस्मिन्निति वाक्यादवगम्यते। तस्यापि परमात्मसंबन्धितयाऽनुकूलत्वादुपास्यत्वमस्त्विति शंकायां संप्रदायप्रदर्शनमिति भावः। उपरि सत्यानामेव कामानामुपास्यत्वकथनात् उपक्रमेऽपि अस्थिरद्युपृथिव्यादि न ग्राह्यमिति भावः।

दहराकाशे प्रयुज्यमानः अस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह लिङ्गं चेति। निषादस्थपतिन्यायाच्च षष्ठीसमासात् समानाधिकरणसमासो न्याय्यः।

अथवा,—"अहरहर्गच्छन्त्यः" इति न सुषुप्तिविषयं गमनमुच्यते; अपितु अन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपरि अहरहर्गच्छन्त्यः—सर्वस्मिन् काले वर्तमानाः तमजानन्त्यः तं न विन्दन्ति—न लभन्ते; यथा हिरण्यनिधिं निहितं तत्स्थानमजानानाः तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः। सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति। तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टम्। यथा अन्तर्यामिब्राह्मणे "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति" इति, "अदृष्टो द्रष्टा अश्रुतः श्रोता" इति च। मा भूदन्यत्र दर्शनम्; स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतया अहरहः सर्वदा सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे

---

**निषादे**ति। एतया निषादस्थपतिं याजयेत् इत्यत्र कर्मधारयपरिग्रहे निषादजातीयस्य स्थपतेरग्निविद्ययोरसंभवेन स्वतो निरधिकारत्वात्, षष्ठीसमासपरिग्रहे च त्रैवर्णिकान्तर्भूतस्थपतिकटाक्षेणापि निषादस्थपतिशब्दनिर्वाहसंभवात् षष्ठीसमासपरिग्रहेणापशूद्राधिकरणन्यायानुरोधो युक्त इति प्राप्तेऽभिहितम्, "स्थपतिर्निषादः स्यात् शब्दसामर्थ्यात्" (पू.मी. 6-1-51) इति। अयमर्थः—षष्ठीसमासपक्षे निषादसंबन्धविशिष्टोऽभिधेयः। कर्मधारयपक्षे निषादत्वविशिष्टः। तत्र षष्ठ्या अश्रवणात् निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः। न चेदं युक्तम्; श्रौतार्थपरिग्रहे विरोधाभावात्। न चाग्निविद्याराहित्यं दोषः; द्रव्यवत् एतदुपयोग्यग्निविद्ययोरपि यथाकथंचिदार्जनस्य विध्यनुमतिसंभवात्। तस्मात् कर्मधारय एव न्याय्य इति। एतन्न्यायानुगृहीतो **ब्रह्मलोकशब्दः** श्रुत्यन्तरेऽन्वयनिरपेक्षः परमात्मत्वसाधक इत्यर्थः। तर्हि "स सामभिरुन्नीयते ब्रह्मलोकम्" इत्यत्र कथं ब्रह्मलोकशब्दस्य वैयधिकरण्यम्॥ उच्यते। नयतिः प्राप्तिवचनः। नित्यप्राप्तस्य ब्रह्मणः प्राप्तिर्नामानुभवः। स च "परात्परं....पुरुषमीक्षते" इत्युक्तः। अतो ब्रह्मानुभवः पुनर्न वक्तव्य इति। उन्नीयत इति उत्पूर्वनयतिरुपस्थितप्राप्तिवाची; न बुद्धिवाची; प्राप्यश्च लोक इति वैयधिकरण्यम्। अत्र तु तादृशानुपपत्त्यभावात् सामानाधिकरण्यमिति। ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशंकानिवर्तकलिंगमहरहर्गमनम्; न हि प्रजाः प्रत्यहं चतुर्मुखलोकं गच्छन्तीत्येतदर्थपरं लिंगञ्चेति सूत्रखण्डमन्यैर्व्याख्यातम्। तदानीं गतिशब्दयोः परस्परोपपाद्योपपादकभावेन समुच्चित्य परमात्मत्वसाधकत्वं स्यात्; न त्वेकैकस्य। ततोऽपि वरं प्रत्येकपर्याप्तलिंगसिद्धिरित्यभिप्रायेण तदनादृत्यैवं व्याख्यातम्। गतिशब्दमात्रस्य योजनान्तरमाह—**अथवे**ति। पूर्वयोजनायां दृष्टान्त एवोपरिशब्दान्वयः। अत्र तु दार्ष्टान्तिकेऽपि। **दहराकाशस्योपरी**ति। धर्म्यैक्याभिप्रायेणैवमुक्तम्। अन्तरात्मतया स्थितत्वेन ह्याधारः; न तूपासकानुग्राहकतया स्थितत्वेन। **उपरि तन्नियमितानामि**ति। अस्मिन् प्रकरणे सत्यशब्दनिर्वचनावगतं हि चेतनाचेतनयोर्नियन्तृत्वं परस्य, "य आत्मानमन्तरो यमयति" इत्यादि-

पर्याप्तं लिङ्गम् ॥ १४ ॥

इतश्च दहराकाशः परं ब्रह्म—

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । १ । ३ । १५ ।

"अथ य आत्मा" इति प्रकृतं दहराकाशं निर्दिश्य, "स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इति अस्मिन् जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति; जगद्विधरणं हि परस्य ब्रह्मणो महिमा; "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभ्यः। स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन् दहराकाशे उपलभ्यते । अतो दहराकाशः परं ब्रह्म ॥ १५ ॥

प्रसिद्धेश्च । १ । ३ । १६ ॥

आकाशशब्दश्च परस्मिन् ब्रह्मणि प्रसिद्धः, "को ह्येवान्यात्, कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्", "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिषु । अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ॥ १६ ॥

एवं तावत् दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

इतरपरामर्शात् स इति चेन्नासंभवात् । १ । ३ । १७ ॥

यदुक्तम्-वाक्यशेषवशात् दहराकाशः परं ब्रह्मेति—तदयुक्तम्, वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात्, "अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुप-

---

श्रुत्यन्तरप्रसिद्धञ्चेत्यभिप्रेतम् । **अस्य परब्रह्मत्वे पर्याप्तं लिंग**मिति **लिंग**मित्यस्यैवार्थः ॥

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः—अस्य** परमात्मनो महिमा धृतिः । तस्या**स्मिन्** दहराकाशे उपलब्धेरित्यर्थः । **धृतिः** विधृतिः । **अतो दहराकाशः परं ब्रह्मे**ति । भूताकाशादन्यत्वे तात्पर्यम् । **भूताकाशत्वं प्रतिक्षिप्त**मिति हि वक्ष्यते । स एव वस्तुगत्या परमात्मेति **परं ब्रह्मे**त्युक्तम् ।

**प्रसिद्धेश्च** । प्रसिद्धिप्राचुर्ये हि भूताकाशे इत्यत्राह **अपहते**ति ॥ १६॥ पूर्वसूत्रचतुष्टयकृत्यं वदन्नुत्तरेषां सूत्राणां कर्तव्यमाह **एवं तावदि**ति । पूर्वोक्तहेतूनां स्वरसतो जीवव्यावर्तनक्षमत्वेऽपि वक्ष्यमाणशंकाप्रतिक्षेपानन्तरमेव स्वारस्यस्यानपोद्यत्वसिद्धिः । अतो भूताकाशत्वव्युदसने तात्पर्यमिति भावः ।

तत्परत्वे व्युदस्ते हेत्वन्तरेण जीवपरत्वमाशंक्य उक्तहेतुभिरेव तत् निराक्रियतेऽनन्तरसूत्रेण । **उपक्रमत** इत्यनेनानन्तरसूत्रं नाधिकरणान्तरमिति सूचितम् ; अविच्छेदप्रतीतेः । **इतरपरामर्शात् स इति चेन्नासंभवात्** ॥ **इतर**शब्दस्य प्रतिसंबन्धिसापेक्षत्वादाह **परस्मा**दिति । **जीवस्यैवे**ति । दहराकाशस्य परमात्मत्वं वदतोऽप्यस्य वाक्यस्य जीवपरत्वं संप्रतिपन्नमिति **एव**काराभिप्रायः । **साक्षात्परामर्शा**दिति । न जीवसंबन्धिलिंगद्वारा परामर्शः ; किन्तु तद्वाचकशब्देन परामर्शः ; तस्मादित्यर्थः । अथ य एष इति एतच्छब्दो हि प्रकृतपरामर्शी । अतः पूर्ववाक्येष्वपि जीव एव प्रतिपाद्यत इति **परामर्शशब्दा**भिप्रायः । जीवपरामर्शसहकारिणी तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतिश्च जीवत्वहेतुरनुसन्धेयः । अणोर्जीवस्य

संपद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्म' इति । यद्यपि, दहरोऽस्मिन्नन्तराकाशः' इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसंभवात् भूताकाशत्वं न संभवति, तथापि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम्। आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत्- अत्रोत्तरम्—नासंभवात् इति । नायं जीवः; न ह्यपहतपाप्मत्वादयो गुणा जीवे संभवन्ति ॥ १७ ॥

उत्तराच्चेत् आविर्भूतस्वरूपस्तु । १ । ३ । १८ ॥

उत्तरात् प्रजापतिवाक्यात् जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत्—

एतदुक्तं भवति-प्रजापतिवाक्यं जीवपरमेव। तथा हि, 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, सोऽन्वेष्टव्यः; स विजिज्ञासितव्यः। स सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति'इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्य अन्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिः जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयोपदिश्य, तत्रतत्र भोग्यमपश्यते परि-

---

विपुलतरप्रसिद्धाकाशोपमेयत्व-सर्वाधारत्वाद्यनुपपत्तेर्भूताकाशप्रतिक्षेपयुक्तिभिरेव जीवत्वशंकाऽपि प्रतिक्षिप्तेत्यत्राह **यद्यपीति** । उपमानोपमेयभावाद्यस्वारस्यं वाक्यशेषवशात् सोढव्यमिति भावः । **नह्यपहतेति** । परामर्शान्यथासिद्धेर्वक्ष्यमाणत्वादपहतपाप्मत्वादिश्रुतिस्वारस्यमनपोदितमिति भावः ॥

**उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥** सूत्रे शंकाखण्डस्याक्षरार्थमाह **उत्तरादिति** । उत्तरवाक्यानुसारेण दहरवाक्येऽपि जीवस्यैवेति निश्चीयत इत्यर्थः । किमिदं प्रजापतिवाक्यम् ? तत्र अपहतपाप्मत्वादिः प्रतीतोऽपि परमात्मन एव स्यादित्यत्राह **एतदुक्तमिति** । **जीवपरमेवेति** । "स उत्तमः पुरुषः" इत्यनेन परमात्मपरत्वं न शंक्यम् ; तदुक्तिः प्रासंगिकीति भावः । **मघवत इति** । यद्यपि विरोचनोऽपि प्रजापतिमुपासदत्—तथापि छायापुरुषाधिगममात्रतृप्ततयाऽपक्रान्तः ; अतस्तदनुक्तिः । इन्द्र एवार्थतत्त्वबुभुत्सया स्थित इति सच्छिष्यत्वात् तन्निर्देशः । खण्डपञ्चकस्यार्थं संक्षेपेणाह **जागरितेति** । नाहमत्र भोग्यं पश्यामीत्यस्यार्थमाह **तत्र तत्र भोग्यमपश्यत** इति । [1]य आत्मेत्यादि प्रजापतिवाक्यं परिशुद्धजीवस्वरूपाभिप्रायम् । तच्छ्रुत्वा पश्चादुपसन्नयोरिन्द्रविरोचनयोः प्रजापतिरुपदिशति, 'य एषोऽक्षिणि पुरुषो दृश्यते'इति, नेहाक्षिपुरुषः परमात्मा, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रम्य स्वप्नाद्यवस्थाभिधानात् । न चेह जीवस्य अक्षिणि स्थितिरुपदिश्यते । किन्त्वक्षिविकाराविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते । अतोऽक्ष्णो जीवस्थितिगतिसूचकत्वात् **अक्षिणि दृश्यत** इत्युक्तम् । अस्मिन् कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषो यथा गृहादन्यः, एवं शरीरे स्थितिगतिमान् आत्मा देहातिरिक्त इत्युक्तं भवति । **अमृतमिति** निरतिशयसुखरूपत्वम् ; **अभयमिति** दुःखासंभिन्नत्वम्, **ब्रह्मेति** असंकुचितज्ञानतया बृहत्त्वं ब्रह्मात्मकत्वं वोक्तम् ।

---

1. यथावस्थितात्मस्वरूपजिज्ञासयोपसत्तौ सत्याम्, औपाधिकच्छायास्वप्नसुषुप्तिमत्त्वकथनेन वञ्चनं गुरोरयुक्तमिति शंकायाम्, तदाशयापरिज्ञानं शिष्यस्यैव दोष इत्युपपादयन् प्रघट्टार्थमाह य आत्मेत्यादीत्यादिना ।

शुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते, "मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना ; तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानम्" इति शरीरस्याधिष्ठानताम् आत्मनश्चाधिष्ठातृताम्, अशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधाय, "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं

---

एवं प्रजापतिहृदयानभिज्ञानेन छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः, "कतम एष" इत्यादिना । सर्वेष्वेतेषु नेत्रादिस्थानेषु परिख्यायते कतम एष इत्यर्थः । पुनश्चाक्षुषदेहस्यानात्मत्वमिदन्तयाऽवभासनात् अन्वयव्यतिरेकाभ्यां च दर्शयितुम् उदशरावब्राह्मणेन केवलदेहस्य वसनाभरणाद्यलंकृतदेहस्य च छायादर्शने प्रजापतिनियोगः तयोस्तद्दर्शनं चोक्तम् । यथा वसनाभरणादिरन्वयतिरेकाभ्यामनात्मा, एवं चाक्षुषत्वात् इदङ्कारगोचरत्वाच्च देहोऽनात्मेति प्रजापतेरभिसन्धिः । विरोचनोऽपक्वकषायत्वात् तावता तृप्तो जगाम । इन्द्रस्तु प्रजपतेरभिसन्धिमजानन्नपि देहस्यामृतत्वाभयत्वानुपपत्तिं दृष्ट्वा, 'नाहमत्र भोग्यं पश्यामी'ति पुनरुपससाद । प्रजापतिस्तु जाग्रद्दशायां वसनादीनामिव जीवात् शरीरस्यापगमाभावात् व्यतिरेको दुर्दर्शइति मत्वा स्वाप्नदेहाभिमानिन आत्मनः शयानदेहव्यतिरेकस्य स्ववगमत्वात् स्वप्नावस्थामुपदिदेश । तदभिप्रायानभिज्ञः इन्द्रः स्वप्नेऽमृतत्वाभयत्वानुपपत्तिं जानन्, 'नाहमत्र भोग्यं पश्यामी'त्युपासदत् । बाह्याभ्यन्तरदेवत्वमनुष्यत्वरागद्वेषाद्यौपाधिकाकारकालुष्यविरहेण स्वयम्प्रकाशमात्मानं दर्शयितुं सुषुप्त्यवस्थामुपादिशत् । तदानीमपीन्द्रः तदभिप्रायाज्ञानेनामृतत्वाभयत्वाद्यनुपपत्त्या, "नाहमत्र भोग्यं पश्यामी"त्युपसन्नोऽभूत् । एवमनतिस्फुटं गहनमुपदिशतः प्रजापतेस्तात्पर्यमुक्तं शुश्रूषुयोग्यतापरीचिक्षिषयेति । "मघवन्मर्त्यं वा इदं शरीरम्" इत्यादिना निष्कृष्टात्मस्वरूपं स्फुटतरमुपादिक्षत् ; तदुपदेशप्रकारमाह **शरीरस्याधिष्ठानता**मित्यादिना । अथ मुक्त्यवस्थोपदेशं दर्शयति **एवमेवैष संप्रसाद** इति ।

**एवमित्यादि**[1]कमुपाददानस्यायमभिप्रायः—अस्माच्छरीरादित्यादिवाक्यस्य परोक्तार्थो दार्ष्टान्तिकवाक्यानानुगुणत्वादिदोषविध्वस्त इति । तथाहि—"शरीरात्समुत्थानं नाम श्रवणमननध्यानाभ्यासरूपविवेकः । स्वेन रूपेणाभिनिष्पत्तिर्नाम प्रपञ्चविलापको वृत्तिरूपसाक्षात्कारः । तेन परंज्योतिर्भवति । उपसंपद्येति निर्देशो मुखं व्यादाय स्वपितीतिवत्" इति **केचित्** [2]व्याचक्षते । तदयुक्तम् ; समुत्थान-

---

1. एवमित्यादिकम्—एवमेवेतिपदद्वयघटितम् ।

2. केचित् भामतीकाराः । व्यादानं स्वापानन्तरमिव अभिनिष्पत्त्यनन्तरं संपत्तिरिति । समुत्थानमपि च तथोक्तम् । "शरीराद्यभिमानात् समुत्तिष्ठन्" इति शांकरभाष्यमवलम्ब्य शंकते शरीराभिमानादिति । शरीराद्वात्मन इति । अयं भावः शरीराभिमानादुत्थानमित्येव वक्तव्यम् अभिमानराहित्यसाहित्ययोरेवाशरीरत्वसशरीरत्वरूपत्वात् । तद् विहाय वस्तुतः शरीरवत्त्वस्य वास्तवोत्थानस्य च संमतौ स्थूलशरीरात् समुत्थानस्य सूक्ष्मशरीरसहितेऽपि सत्त्वात् समुत्थायेतीदं मुक्तिविषयं न भवेदिति । परिहारहेतुमाह अर्चिरिति । समुत्थायेत्यस्य स्थूलदेहराहित्यमात्रपरत्वेऽपि वाक्यस्य मुक्तिविषयकत्वमक्षतम् ; ल्यपा सूक्ष्मदेहत्यागादिव्यवहितोत्तरत्वस्याप्यभिप्रेतत्वादिति भावः । व्यवहितोत्तरत्वं प्रामाणिकत्वात् युक्तम् । श्रुतस्योत्तरकालीनत्वस्य भंगस्तु भामतीपक्षेऽन्यत्र चेत्याह

ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति जीवात्मनः स्वरूपमेव शरीरवियुक्तमुपदिदेश। "स उत्तमः पुरुषः। स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं

शब्दस्य विवेकवाचित्वाभावात्॥ शरीरविषयो विवेक इति चेत्, पञ्चमी न घटते। तस्याः द्वितीयार्थत्वाभावात्॥ शरीरादात्मनो विवेकश्चेत्—आत्मानमित्यध्याहारः; 'तयोर्ध्वमायन्नमृतत्वमेती'त्यादिश्रुत्यन्तरैकार्थ्यप्रत्यभिज्ञाविरोधश्च॥ शरीराभिमानादुत्थानमिति चेत्—शरीरशब्दस्य लक्षणा॥ 'शरीरादात्मन उत्थानं विवक्षितं चेत्, सशरीरस्य तत्संभवात् मोक्षस्य चाशरीरतालक्षणत्वादस्य वाक्यस्य मोक्षविषयत्वं न स्यात्' इति चेत्—अर्चिरादिमार्गगमनस्य सूक्ष्मदेहसापेक्षत्वात् तेन गतवत एव सवासनसर्वहेयप्रहाणाच्च मुख्यार्थपरत्वे सत्येव मुक्तिविषयत्वोपपत्तेः। ल्यबन्तपदस्याविवक्षितक्रमत्वं च क्लिष्टं गत्यभाव(क्लिष्टभाव) द्योतकम्:, "संपद्याविर्भाव" इति सूत्रविरोधश्च; न ह्याविर्भूय संपत्तिरिति सूत्रितम्। भेदप्रविलयातिरेकेण परज्योतिर्भावात्मकार्थान्तरासंभवात् परंज्योतिरुपसंपद्येति निर्देशवैयर्थ्यञ्च। परज्योतिर्भावो नाम न धर्मान्तरं निर्विशेषवस्तुन्युत्पद्यते; न चाविर्भवति॥ ननु परज्योतिर्भावो नाम अद्वितीयत्वम्। तेन निवर्तकज्ञानसद्वितीयत्वव्युदास इति चेन्न—संपत्तिशब्दस्येतरनिवृत्तिवाचित्वाभावात्। न हि घटो भवतीत्युक्ते दण्डचक्रादिद्वितीयनिवृत्तिरुक्ता भवति। उपसंपत्तेः सकर्मकत्वप्रतीतिस्वारस्यविरोधश्च। अस्य वाक्यस्य एवमर्थपरत्वे दृष्टान्तोपस्थापकपूर्ववाक्यविरोधश्च स्यात्। पूर्वं हि "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्युक्त्वा, "अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः" इति वाय्वादीनां कर्मकृतशरीराभावेन प्रियाप्रियानन्वयं दर्शयित्वा, "तद्यथैतानि अमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते" इत्युक्तम्। न हि वाय्वादीनामाकाशात् समुत्थानं नाम विवेकज्ञानरूपम्; अपितु स्थितिवेलायां स्वकार्यकरणायोर्ध्वदेशेऽभिवृद्धिः। परशब्दो वाय्वादीनां कारणवस्तुवाची; ज्योतिश्शब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः। वाय्वादीनि च स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति। वायुर्हि आवह प्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते; विद्युच्च विद्युत्त्वं हित्वा तेजस्त्वेन; अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण। एवं जीवश्च मार्गविशेषेण गत्वा परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेणाऽऽविर्भवतीत्येवमर्थे सति हि दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति।

अस्य वाक्यस्य सुषुप्तिविषयत्वेऽप्युक्तदूषणानतिवृत्तिरनुसंधेया।

यतः, अस्माच्छरीरादिति वाक्यं न मुक्तस्य जीवस्य स्वरूपैक्यप्रतिपादकम्, अत एव— "नासंभवात् इति सूत्रकारेण भेदनिर्देशो न जीवपरयोर्वास्तवभेदाभिप्रायः; अपितु व्योम्नि मालिन्यादिकमिव परस्मिन् अविद्याकल्पितजीवभावमपनेतुं जीवस्वरूपवैलक्षण्याभिप्रायः" इतीदमपि निरस्तम्। नैवं स्वरूपमपनिनीषोर्भेदनिर्देशे किं फलम्?॥ यावत् भेदनिर्देशेन ईश्वरस्यासंसारित्वमप्रतिपन्नम्, न तावत् तदैक्यापत्तिः पुरुषार्थः स्यात्। अतस्तद्रूपापत्तेः पुरुषार्थत्वाय तस्यासंसारित्वप्रतिपत्तये भेदनिर्देशः इति चेत्—तर्हि पश्चाच्चिकीर्षितेनैक्यावबोधनेन तस्य संसारितया तदैक्यापत्तेरपुरुषार्थत्वं को वारयेत्?॥

ल्यबन्तेति। वृत्तिरूपसाक्षात्कारः स्वरूपेणाभिनिष्पत्तिरिति भामतीपक्षे वाक्यस्य मुक्तिविषयकत्वाञ्जस्यविरहश्च भाव्यः।

स्मरन्निदं शरीरम्" इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वम्, निवृत्ततिरोधानस्य परं ज्योतिरुपसंपन्नस्यास्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिम्, प्रियाप्रियावियुक्त-कर्मनिमित्त-शरीराद्यपुरुषार्थाननुसन्धानं चाभिधाय, "स यथा प्रयोग्यः आचरणे युक्तः, एवमस्मिन् शरीरे प्राणो युक्तः" इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं युग्यशकटयोगदृष्टान्तेनाभिधाय, 'अथ यत्रैतत् आकाशमनु विषण्णं चक्षुः स चाक्षुषः पुरुषः ; दर्शनाय चक्षुः। अथ यो वेद इदं जिघ्राणीति, स आत्मा ; गन्धाय घ्राणम्। अथ यो वेद इदमभिव्याहराणीति, स आत्मा ; अभिव्याहाराय वाक्। अथ यो वेदेदं शृणवानीति, स आत्मा ; श्रवणाय श्रोत्रम्। अथ यो वेदेदं

---

अविद्यानिवृत्तौ तत्कल्पितापुरुषार्थत्वं निवर्तत इति चेत्—पुरुषार्थत्वप्रतिपत्तेर्जीववैलक्षण्यप्रतिपत्तिमूलकत्वात् वैलक्षण्यस्याविद्यानिवृत्तौ निवृत्तेः पुरुषार्थत्वप्रतिपत्तिरपि निवर्तेत। अनभिरूपेऽभिरूपताबुद्धौ निवृत्तायां तस्मिन् स्पृहणीयताबुद्धिनिवृत्तिवत्। ततश्च तद्भावापत्तिरपुरुषार्थ एव स्यात्। किञ्च—ऐक्यमुपदिदिक्षोर्भेदवादमुखेनासंसारित्वं दर्शयतः प्रतारकत्वं च स्यात्। 'भेदवादोऽनुवादरूपः प्रतिषेधार्थः क्रियते' इतीदमत्यन्तमयुक्तम् ; जीवपरयोर्नियन्तृनियाम्यतादिलक्षणभेदस्यालौकिकत्वात्। अतः श्रुतिसूत्रासामञ्जस्यमेव मृषावादिनां स्थितम्।

'स उत्तमः पुरुष' इति शब्देन परमात्मपरत्व[1]शंकायां तत्परिहारायाह **प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वमिति**। जीवस्य प्राप्यतया पुरुषोत्तमप्रसंगः ; न तु प्रकरणप्रतिपाद्यतयेति भावः। "स उत्तमः पुरुष इति। यदुपसंपद्यते, स उपसदनीयः पुरुष उत्तम इत्यर्थः। स तत्र पर्येतीति। स उपसंपत्ता तत्र परमात्मनि पर्येति—तं परितोऽनुभवति। यद्वा—अनुसंचरति ; 'कामरूप्यनुसञ्चरन्', "येन येन धाता गच्छति" इति श्रुत्यन्तरात्॥ ननु य उपसंपद्याभिनिष्पद्यते स उत्तमः पुरुष इति युक्तम् ; तच्छब्देन प्रथमानिर्दिष्टप्रकृतपरामर्शस्वारस्यात् ; स तत्र पर्येतीत्यनन्तरवाक्यस्थप्रथमान्ततच्छब्देनैकार्थत्वप्रतीतेश्च॥ नैवम्। उपसंपत्तव्यस्यापि प्रकृतत्वात्। प्रथमानिर्दिष्टेतरविषयत्वे तच्छब्दस्वारस्याभावेऽप्युत्तम-पुरुषशब्दयोरुभयोरपि स्वारस्याच्च। न ह्युत्तमपुरुषशब्दो जीवेश्वरसाधारणः। पुरुषत्वमपि हि भगवत्येव स्वरससिद्धम्। केवल एकवचनान्तः पुरुषशब्दोऽपि हि भगवत्येव स्वरसः ; कुतः[2] उत्तमपुरुषशब्दः ? "उत्तमः पुरुषस्त्वन्यः" इति स्मृत्यर्थस्य झटिति प्रत्यभिज्ञानाच्च। एवं च सति, स तत्रेति सप्तम्यन्ततच्छब्दस्याव्यवहितोत्तमपुरुषपरामर्शित्वं च स्यात्। न तु व्यवहितपरञ्ज्योतिःपरामर्शस्वारस्यम्॥ ननु 'स उत्तमः पुरुष' इति मुक्तस्य ब्रह्मात्मकत्वपरं स्यात्। तदा तच्छब्दस्वारस्यं च स्यात् ; प्रकृताप्रहाणात्॥ नैवम्। स तत्रेत्यनन्तरवाक्ये स इति पदस्य वैयधिकरण्येन जीवपरामर्शे रीतिभेदेनास्वारस्यापातात्॥ तदपि पदं समानाधिकरणमस्त्विति चेन्न ; तत्रेति परमात्मनो वैयधिकरण्येनोपादानात्। तत्रेति पदस्य स्वस्मिन्नित्यर्थोऽपि क्लिष्टः। अतो यथोक्तार्थविषयम्, 'स उत्तमः पुरुषः' इति वाक्यम्।

नोपजनं स्मरन्नित्यस्यार्थमाह **प्रियाप्रियेति**। अनुभूतस्य हि स्मरणम्। पूर्वम् अब्रह्मात्मकतया दुःखात्मकत्वेन ह्यनुभूतम्। न तथा स्मरति ; कृत्स्नस्य भगवदात्मकत्वेनानुभाव्यत्वादित्यर्थः। **प्रयोग्यः** युग्यः ;

---

1. परमात्मपरत्वेति। प्रकरणस्य प्रधानतया परमात्मविषयकत्वेत्यर्थः।
2. कुत इति। सुतरामिति यावत्।

मन्वानीति, स आत्मा ; मनोऽस्य दिव्यं चक्षुः'' इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वम् अस्य च ज्ञातृत्वं प्रदर्श्य, तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य, ''स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके'' इति तस्यैव विधूत-कर्मनिमित्तशरीरेन्द्रियस्य मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा, ''तं वा एतं देवा आत्मानमुपासते। तस्मात् तेषां सर्वे च लोका आत्ताः, सर्वे च कामाः'' इति एवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय, ''सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्, यस्तमात्मानमनुविद्य विजानाति—इति ह प्रजापतिरुवाच'' इति एवंविधमात्मानं विदुषः सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम्। अतस्तत्रापहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो जीव एवेत्यवगतम्। अतो जीवस्यापहतपाप्मत्वादयः संभवन्ति। अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसंभवात् स एव दहराकाश इति निश्चीयते—इति चेत्-इति।

तत्राह— आविर्भूतस्वरूपस्तु इति । पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात् समुत्थितः परं ज्योतिरुपसंपन्नः आविर्भूतस्वरूपः सन् अपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते ; दहरवाक्ये तु अतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्यासंभावनीयाः सेतुत्वसर्वलोकविधरणत्वादयः सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न संभवन्तीति ''जगद्व्यापारवर्जम्'' इत्यत्रोपपादयिष्यामः ॥ १८ ॥

यद्येवम्, दहरवाक्ये ''अथ य एष संप्रसादः'' इत्यादिना जीवप्रस्तावः किमर्थः इति चेत्— तत्राह—

अन्यार्थश्च परामर्शः । १ । ३ । १९ ॥

दहराकाशस्यैव अपहतपाप्मत्वजगद्विधरणत्वादिवत्, मुक्तस्य तदुपसंपत्त्या अपहतपाप्मत्वादि-

---

आचरणं शकटम्। 'अथ यत्रैतत्' इत्यादिश्रुतेरर्थमाह **चक्षुरादीनामिति**। **आकाशं** प्रकाशकमालोकादि ; प्रकाशमानं रूपं वा। प्रकाशयति यः, स **चाक्षुषः** चक्षुरुपकरणकः। तत्फलितमर्थमाह **तत एवेति**। **इति चेदितीति**। **एतदुक्तं भवतीत्यनेनान्वयः**।

**अविर्भूतस्वरूप** इति सूत्रखण्डं व्याचष्टे **आविरिति**। तुशब्दसिद्धमर्थमाह **आविर्भूतस्वरूपस्यापीति**। आविर्भूतस्वरूपस्य प्रजापतिवाक्योक्तत्वात् दहराकाशस्य स्वत एव अपहतपाप्मत्वादिप्रतिपादनात् तच्छरीरान्तःस्थितस्यैव गुणाष्टकप्रतिपादनात् मुक्तेष्वसंभावितसर्वलोकविधरणादिश्रुतेश्च दहराकाशः परं ब्रह्मेत्यर्थः ॥

उत्तरसूत्रशंकामाह **यद्येवमिति** ; **किमर्थ** इति। दहरवाक्ये जीवप्रस्तावो न पृष्टप्रतिवक्तृभावेन ; तथा श्रवणाभावात्। नाप्यंगोपासनविषयतया ; दहरविद्यायामुपासनविध्यन्तराभावात्। अतः प्रकृतोपासनकर्मत्वेनैव जीवपरामर्शः। अन्यथा तत्प्रतिपादनवैयर्थ्यात्। प्रकृतोपासनकर्मत्वे च दहराकाशो जीवः स्यादित्यभिप्रायः। **अन्यार्थश्च परामर्शः** ॥ दहरविद्यैव मोक्षोपायश्चेत्, कथं जीवोपासनविधिः ?

कल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन, तद्धेतुत्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः। प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम् ; ब्रह्मप्रेप्सोर्हि जीवात्मनः स्वरूपं च ज्ञातव्यमेव ; स्वयमपि कल्याणगुण एव सन् अनवधिकातिशयासंख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात् स्वरूपयाथात्म्यविज्ञानस्य। "सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्", "स तत्र पर्येति जक्षत् क्रीडन्" इत्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥ १९ ॥

## अल्पश्रुतेरिति चेत्—तदुक्तम् । १ । ३ । २० ॥

"दहरोऽस्मिन्' इत्यल्पपरिमाणश्रुतिः आराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्—तत्र यत् उत्तरं वक्तव्यम्, तत् पूर्वमेवोक्तम्, "निचाय्यत्वादेवम्" इत्यनेन। अतो दहराकाशः अनाघ्राताविद्याद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्य-

---

कथं च तस्य फलकथनमित्यत्राह **प्रजापतिवाक्ये चे**ति। परमात्मोपासने परस्य रूपं हि वेद्यम् ; तत् कथमनुपास्यजीवात्मविज्ञानोपयोग इति शंकायां तदुपयोगित्वमुपपादयति **ब्रह्मप्रेप्सो**रिति। ब्रह्मणः प्रेप्सितव्यत्वे जीवात्मस्वरूपस्य कथं ज्ञातव्यत्वमित्यत्राह **स्वयमपी**ति। प्राप्यान्तर्भावात् तस्य ज्ञातव्यत्वम्। अतः तज्ज्ञानं दहरविद्योपयोगीत्यर्थः ॥ ननु तर्हि विशेषणतयोपास्यत्वाज्जीवस्य ज्ञातव्यत्वे वक्तव्ये, प्राप्यान्तर्भावात् ज्ञातव्यतोक्तिः किंनिबन्धना ॥ उच्यते। "आत्मेति तूपगच्छन्ति" इति वक्ष्यमाणस्य जीवात्मवेदनस्य प्राप्यान्तर्भावनिबन्धनत्वं हि, 'व्यतिरेकस्तद्भावभावित्वात्' इत्यत्र वक्ष्यते ; तस्मादिति। ननु जीवात्मज्ञानं दहरविद्याङ्गं चेत्, कथं पृथक्फलकीर्तनम् ? 'फलवत्संनिधावफलं तदंगम्' इति हि न्याय इत्यत्राह **सर्वांश्चे**ति। अंगिनः फलमेव अंगे कथितमित्यर्थः। अनेन सूत्रेणोपसंहारगतहेतुः प्रत्युक्तः ॥

अथोपक्रमगतहेतुं प्रतिवक्ति **अल्पश्रुतेरिति चेत् तदुक्तम्** ॥ अर्भकौकस्त्वादित्यस्य सूत्रस्य विषयवाक्ये, सर्वं खल्वित्यादौ, 'अणीयान् व्रीहेर्वा यवाद्वा' इति वाक्यं नोपक्रमस्थम्। उपक्रमे हि तत्र सर्वात्मत्वमवगतम्, आकाशात्मत्वञ्च। उपसंहारे च ज्यायस्त्वमवगतम्। अतोऽल्पश्रुतिः तदनुरोधेन वर्णितेति युक्तम्। दहरविद्यायां तूपक्रम एवाल्पत्वं श्रुतमिति तदनुरोधेन, 'यावान् वा अयम्' इत्यादिकं नेयम् ; उपसंहारे च जीवपरामर्शस्तदुत्तम्भक इत्यधिकाशंका। आकाशोपमानत्व-सर्वाधारत्व - निरतिशयभोग्यत्व- निरुपाधिकगुणाष्टक - गतिशब्द- विधरणत्व-फलविशेषपरमहावाक्यस्वारस्य-दर्शनात् जीवपरामर्शकोपसंहार एव परामत्मनिर्देशमिश्रत्वाच्च परनिर्देशमिश्रोपसंहारस्योत्तम्भकत्वायोगात् उपक्रममात्रं महावाक्यस्वारस्यबाध्यमित्यधिकः परिहारः। उपसंहारे जीवपरामर्शात्, परमात्मनिर्देशमिश्रतया परिहाराच्च 'प्राणस्तथानुगमात्' इत्यधिकरणवैषम्यम्। एवमुपक्रमोपसंहारगतहेतुनिरसनानन्तरं वक्ष्यमाणयोः सूत्रयोः परमप्रकृतार्थेन संगतिः, न त्ववान्तरार्थविशेषेणेति दर्शयितुं परमप्रकृतदहराकाशस्यार्थविरोधेन जीवादन्यत्वं स्फुटयति—**अतो दहरे**ति। यद्वा इह वाक्यशेषसहकृताल्पत्वश्रुतेरल्पत्वं स्वाभाविकमित्यधिकाशंका ; न हि शाण्डिल्यविद्यायां वाक्यशेषसहकृताल्पत्वश्रुतिः। प्रकरणरूपवाक्यशेषापेक्षयाऽपहतपाप्मत्वादिलिंगं प्रबलमित्यधिकः परिहारः। वस्तुसामर्थ्यं दर्शयति **अनाघ्राते**त्यादिना। अत्र ज्ञानशक्त्यादयः सत्यसंकल्पत्वफलितत्वादुक्ताः।

वीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव । प्रजापतिवाक्यनिर्दिष्टस्तु, "घ्नन्ति त्वेवैनं विच्छादयन्ति" इत्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात् परं ज्योतिरुपसंपद्य आविर्भूतापहतपाप्मत्वादिगुणकस्वस्वरूप इति न [स] दहराकाशः ॥ २० ॥

इतश्चैतदेवम्—

## अनुकृतेस्तस्य च १-३-२१

तस्य दहराकाशस्य परस्य ब्रह्मणः अनुकारात् अयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा; न दहराकाशः । तदनुकारः—तत्साम्यम् । तथा हि प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारः श्रूयते, "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति । अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः, अनुकार्यं ब्रह्म दहराकाशः ॥ २१ ॥

## अपि स्मर्यते १-३-२२

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते, "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति ॥ २२ ॥

केचित्—'अनुकृतेस्तस्य च', 'अपि स्मर्यते' इति सूत्रद्वयमधिकरणान्तरम्, "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यस्याः श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति । तत्तु, 'अदृश्यत्वादिगुणको धर्मोक्तेः', 'द्युभ्वाद्यायतनं स्वशब्दात्' इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात्, 'ज्योतिश्चरणाभिधानात्' इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम् ; सूत्राक्षरवैरूप्यं च (स्याच्च) ॥ इति दहराधिकरणम् ॥ ५ ॥

---

एवमुपक्रमोपसंहारनिर्वाहः प्रमाणान्तरेण परमात्मात्मनोरपहतपाप्मत्वादीनां स्वाभाविकत्वास्वाभाविकत्वे सिद्धे ह्युपपद्यते । अन्यथा 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायात् दहरवाक्येऽपि मुक्तावस्थस्य गुणाष्टकान्वयो विवक्षितः स्यादिति शंकायामाह—**अनुकृतेस्तस्य च** ॥ अतथाभूतस्य तथाभावाभिनयशंकाप्रतिक्षेपार्थमाह **तदनुकारस्तत्साम्य**मिति । तद्वत् वृत्तिः इहानुकारो विवक्षितः । तेन तन्मूलभूतं गुणसाम्यमपि लक्षितं भवति । **सारे** तु स्वच्छन्दवृत्तिरूपस्तदनुकारः श्रूयत इत्युक्तिर्गुणसाम्योपलक्षणार्था ॥

**अपि स्मर्यते** ॥ साम्यमुपैतीत्युक्ते, केन धर्मिणा साम्यमित्यपेक्षापूरणार्थम् "मम साधर्म्यमागताः" इति वचनमुपात्तम् ।

परैः कृतमधिकरणभेदमनूद्य दूषयति **केचि**दित्यादिना । भारूपत्वश्रवणात् प्राकृतज्योतिष्ट्वशंकानिवृत्त्यर्थमधिकरणारम्भो युक्त इत्यत्राह **ज्योतिश्चरणाभिधानादित्यादि**ष्विति । एकप्रकरणस्यानेकाधिकरणनिरूप्यत्वं ह्यधिकाशंकायां सत्यामुचितम् ; अत्र तदभावादयुक्तमित्यभिप्रायः । हेत्वन्तरमाह **सूत्राक्षरे**ति । अनुकृतिरनुभानमिति हि **परैरुक्तम्** । तदयुक्तम् ; करोतिभात्योरेकार्थत्वाभावात् । '**तस्य** चेति श्रुतिप्रतीकोपादानम्' इत्युक्तम्, तदप्ययुक्तम्:—'यदेव विद्ययेतीहि'इतिवत् इतिकरणाभावात् । तस्यानुकृतेरित्यन्वये स्वारसिकेऽपि तत्प्रहाणेनार्थवर्णनं च क्लिष्टम् ।

**यादवप्रकाशीये** तु "अनुकृतिः अनुशब्दस्य करणम्"इत्युक्तम् । तदयुक्तम् ; यथा "स्वं रूपं शब्दस्याशब्दसंज्ञा" इति परिभाषासिद्धं व्याकरणे शब्दस्वरूपोपादानम्, एवमस्मिन् शास्त्रे परिभाषाया अभावात् ; शब्दस्वरूपविवक्षायामितिकरणस्य दर्शितत्वाच्च । "अन्तस्तद्धर्मोपदेशात्", "आकाशस्तल्लिंगात्" इत्यादिष्विव प्रतिज्ञाखण्डाभावः, चशब्दवैयर्थ्यञ्चेति दूषणद्वयं सर्वसाधारणमभिप्रेतम् ॥ दहराकाशो भूताकाशः, तदन्तवर्ती जीव इति पूर्वपक्षं कृत्वा, दहराकाशः परमाकाशः ; तदन्तर्वर्ती परमात्मेति सिद्धान्तितम्[1] । तत्र तावत् पूर्वपक्षस्थितिरनुपपन्ना । भूताकाशान्तर्वर्तित्वस्य जीवासाधारणत्वाभावात्, 'यस्य वायुः शरीरम्'(?), 'य आकाशे तिष्ठन्....यस्याऽऽकाशः शरीरम्' इत्यन्तर्यामिब्राह्मणे भूताकाशान्तर्वर्तिनः परमात्मत्वनिश्चयात् । सिद्धान्ते च, 'किं तदत्र विद्यते यदन्वेष्टव्यम्, यद्वाव विजिज्ञासितव्यम्' इति प्रश्नस्य प्रतिवचनसामञ्जस्यं न भवति । न तावत् 'उभे अस्मिन् द्यावापृथिवी' इत्यादिवाक्योक्तद्यावापृथिव्यादिकं तदन्तवर्तीति प्रतिवचनं युक्तम् ; तस्य विजिज्ञास्यत्वाभावात् । न ह्यन्तर्वर्तिमात्रविषयः प्रश्नः ; किन्तु उपास्यभूतान्तर्वर्तिविषयः । "अस्मिन् कामाः समाहिताः' इति च नोत्तरम् । अस्मिन्निति पदं तावत् प्रकृतब्रह्मपुरविषयम् । "एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः" इति हि श्रूयते ।"परमाकाश एव ब्रह्मणः पुरम् ; शरीरस्य ब्रह्मपुरत्वं तत्संबन्धादौपचारिक"मिति षष्ठीतत्पुरुषं वदद्भिर्ब्रह्मपुरशब्दो दहराकाशसंज्ञकपरमाकाशपर इति व्याख्यातम् । ततश्च अस्मिन्निति परमाकाशनिर्देशः स्यात् । एवं च सति, कामशब्दः किं परमात्मपरः, उत तद्गुणपरः, उत द्यावापृथिव्यादिपरः ? न प्रथमः ; बहुवचनान्तत्वात् ; 'आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति भेदनिर्देशाच्च । न द्वितीयः ; परमात्मगुणाधारतया प्रतीयमानस्य परमात्मत्वापत्तौ अस्मदीयपक्षपरिग्रहः स्यात् । न हि परमात्मगुणानां धर्मी परमाकाशः । न तृतीयः ; उपास्यरूपतदन्तर्वर्तिप्रश्नस्योत्तरत्वायोगात् ॥ अन्तर्वर्तिप्रश्नस्योत्तरम् एष आत्मेति वाक्यमिति चेन्न ; एकवचनान्तस्यैतच्छब्दस्य ब्रह्मपुरविषयत्वेन तदन्तर्वर्तिविषयत्वायोगात् ॥ परमाकाशशरीरः परमात्मैवैतच्छब्देन परामृश्यत इति चेत्—तदप्ययुक्तम् ; परमाकाशान्तर्वर्तिविषयप्रश्नप्रतिवचनस्य परमाकाशविशिष्टविषयत्वायोगात् । न हि गृहविशिष्टस्य गृहमधिकरणम् ॥ **एष** इति पदं न प्रकृतविषयम् ; किंतु बुद्धिस्थविषयमिति चेत्—प्रकृतपरामर्शित्वस्वारस्यभंगः । स च प्रकृतपरामर्शित्वसंभवेऽनुपपन्नः ॥ किंतदत्रेति वैयधिकरण्येन प्रश्नस्य, **एष आत्मा**—परमाकाशशरीरक आत्मेति सामानाधिकरण्येनोत्तरम् । ततश्च तदन्तर्वर्तित्वं फलितमिति चेत्—न ; वैयधिकरण्येन प्रश्नस्य वैयधिकरण्येन प्रतिवचने संभवति, सामानाधिकरण्येन प्रतिवचनकल्पनायोगात् । असंभवे हि तथा निर्वाह उपपद्यते । न केवलं परमाकाशशरीरस्य हृदयान्तर्वर्तित्वमेतत्प्रकरणपर्यालोचनविरुद्धम् ; संवादिप्रमाणान्तराभावविध्वस्तं च । 'यो वेद निहितम्' इति वाक्यमन्यथासिद्धम् ; परमे व्योमन् सोऽश्नुत इत्यन्वयसंभवात् । शाण्डिल्यविद्यायां च, "आकाशात्मा

---

1. सिद्धान्तितमिति । अत्र यादवप्रकाशीयैरित्यध्याहार इति भावप्रकाशिका । यादवप्रकाशीयस्यैव प्राक् प्रस्तुतत्वादत्र तदनुक्तिः ।

### प्रमिताधिकरणम् १.३.६.

## शब्दादेव प्रमितः १-३-२३

कठवल्लीषु श्रूयते, "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत्", "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वै तत्", "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतम्" इति। तत्र संदिह्यते—किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मा, उत परमात्मेति। किं युक्तम्? प्रत्यगात्मेति। कुतः? जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः, "प्राणाधिपः संचरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः" इति। न चान्यत्रोपासनार्थतयाऽपि परमात्मनोऽङ्गुष्ठमात्रत्वं

---

....एष म आत्मा अन्तर्हृदये" इत्यादिवाक्यैराकाशवत् सूक्ष्मस्वच्छव्यापिस्वरूपस्य हृदि वर्तमानत्वमुच्यत इत्यन्यथासिद्धम्। अतोऽनुपपन्नमिदम्॥ इति दहराधिकरणम्॥

**शब्दादेव प्रमितः॥** अल्पश्रुतेरिति चेदित्यत्राल्पपरिमाणत्वं भगवत इत्युक्तम्; अथाल्पपरिमाणत्वविशेषः परमात्मव्यतिरिक्तस्य दृश्यत इति शंकया संगतिः। शुक्रममृतमित्यन्तं विषयवाक्यमुपाददानस्यायं भावः—अंगुष्ठप्रमितत्वमात्रं श्रुतम्; न तु स्थानविशेषः; न चोपासनम्; अतः परमात्मपरत्वानादरेण जीवपरत्वं शंक्यत इति पूर्वपक्षं केचिदाहुः। तदयुक्तम्; "सदा जनानां हृदये संनिविष्टः....'तं विद्याच्छुक्रममृतम्' इत्यनन्तरवाक्ये स्थानोपासनावगमात् तदनवगमस्य हेतुत्वकथनायोगादिति। परमात्मनोऽङ्गुष्ठपरिमितत्वानुपपत्तेर्जीवस्य सर्वेशानत्वानुपपत्तेश्च संशयः—अंगुष्ठप्रमितः किं प्रत्यगात्मा, उत परमात्मेति; तदर्थमीशानत्वं किं देहेन्द्रियाद्यपेक्षम्, उत सर्वापेक्षमिति; उपक्रमावगतं प्रमितत्वं किमीशानत्वलिंगस्वारस्यविरोधि, उताविरोधीति; तत्प्रमितत्वं किं जीवे समञ्जसम्, उतोभयत्रासमञ्जसमिति। यदा जीवे समञ्जसम्, तदानीं स्वसामञ्जस्यसिद्ध्यर्थमुपक्रमावगतं प्रमितत्वमीशानत्वलिंगस्वारस्यविरोधीति ईशानत्वस्य देहेन्द्रियाद्यपेक्षत्वादंगुष्ठप्रमितो जीव इति पूर्वः पक्षः। यदोभयत्र प्रमितत्वमसमञ्जसम्, तदा प्रत्यगात्मन्यपि स्वारस्यासिद्धेः तदर्थमीशानत्वलिंगस्वारस्यानुपरोधकत्वादीशानत्वं सर्वापेक्षमिति अंगुष्ठप्रमितः परमात्मेति राद्धान्ते फलफलिभावः। कृत्वाचिन्तेयम्; परमात्मनोऽन्यत्रांगुष्ठप्रमितत्वश्रवणाभावमभ्युपगम्य अनेनैव वाक्येनांगुष्ठप्रमितत्वं किं सिद्ध्यति, उत नेति विचार्यते। अन्यत्रांगुष्ठप्रमितत्वं भगवतः श्रूयते—श्वेताश्वतरे, "अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति", 'अङ्गुष्ठमात्रः पुरुषोंऽगुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' इति। अन्तरात्मत्वं मोक्षप्रदत्वं सर्वस्य जगत ईशत्वमपि हि तत्र श्रुतम्। यदा सर्व-जगच्छब्दादिकमपि क्लिष्टं कृत्वा तावपि मन्त्रौ विवादास्पदीकृतौ, तदानीं न कृत्वाचिन्तेयम्। ननु जीवस्यापि आराग्रमात्रस्यांगुष्ठमात्रत्वममुख्यम्। अत उपासनार्थमिति निर्वाह्यम्। तत् परमात्मपरत्वेऽपि संभवति। उपासनार्थमल्पपरिमाणत्वं परस्यापि हि श्रुतम्; तत् कथं जीवत्वशंकेत्यत्राह नचेति। प्राणाधिपस्य कर्मवश्यस्यांगुष्ठमात्रत्वममुख्यमपि हि श्रुतम्। न तु परमात्मनः।

श्रूयते । एवं निश्चिते जीवत्वे ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षयाऽपि भविष्यति—

इति प्राप्ते ब्रूमः—शब्दादेव प्रमितः । अङ्गुष्ठ[मात्र]प्रमितः परमात्मा ; कुतः ? "ईशानो भूतभव्यस्य" इति शब्दादेव ; न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ॥२३॥

कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् १-३-२४**

परमात्मनः उपासनार्थमुपासकहृदये वर्तमानत्वात्, उपासकहृदयस्याङ्गुष्ठप्रमाणत्वात् तदपेक्षयेदमगुष्ठप्रमितत्वमुपपद्यते। जीवस्याप्यंगुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात् तदपेक्षमेव ; तस्याऽऽराग्रमात्रत्वश्रुतेः । मनुष्याणामेवोपासकत्वसंभावनया शास्त्रस्य मनुष्याधिकारत्वात् मनुष्यहृदयस्य च तत्तदंगुष्ठप्रमितत्वात् खरतुरगभुजगादीनामनङ्गुष्ठप्रमितत्वेऽपि न कश्चित् दोषः।

स्थितं तावदुत्तरत्र समापयिष्यते ॥

---

अतो जीवस्य बुद्धिस्थत्वात् तस्य प्रतिपाद्यत्वशंकेत्यर्थः । ईशानत्वं कथमित्यत्राह **एवं निश्चित** इति ।

राद्धान्ते—ननु 'भूतभव्यस्येशान' इति वाक्यम् । तच्च प्रमितत्वलिंगात् दुर्बलम् ॥ नैवम् । ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात् । ईशानशब्दस्य देहेन्द्रियाद्यपेक्षया संकोचस्यानुपपत्तिस्फोरणार्थम् **ईशानो भूतभव्यस्येति शब्दादेवेति भूतभव्य**शब्दोपादानम्[1] । किमीश्वरः, किं जीव इति विचारे नेश्वरसंबन्धिलिंगान्निर्णयः ; किन्त्वीशत्ववाचिशब्दादेवेत्येव**कारा**भिप्रायः। यद्वा पूर्वपक्ष्यभिप्रेताया ईशानशब्दान्यथासिद्धेः प्रतिक्षेप **एवका**राभिप्रेतः। तं दर्शयति **न च भूतभव्यस्येति** ॥

उत्तरसूत्रस्य शंकामाह **कथं तर्हीति । हृद्यपेक्षया तु मनुष्याधिकारत्वात्** । वर्तमानत्वादित्यध्याहारेण योजना। यद्वा हृदीति विषयसप्तमी, हृद्विषयापेक्षयेति। सूत्रार्थं वक्तुमर्थसिद्धमर्थमाह **वर्तमानत्वादिति** । यदपेक्षया परस्यांगुष्ठप्रमितत्वव्यवहारः, तस्य हृदयस्य तत्परिमाणत्वमाह **हृदयस्येति**। अंगुष्ठमात्रत्वस्यास्वारस्यमुभयत्र तुल्यम् ; को भेदः परमात्मपरिग्रहे इत्यत्राह **जीवस्यापीति** । अंगुष्ठप्रमितस्य जीवत्वपक्षे अंगुष्ठप्रमितेशानशब्दयोरुभयोरप्यस्वारस्यम् । परमात्मत्वपक्षेऽङ्गुष्ठप्रमितशब्दस्यैकस्यैवास्वारस्यमिति भावः । खरतुरगादीनामनंगुष्ठत्वेन तद्धृदयानां तत्तदंगुष्ठप्रमितत्व मननुयायीति शंकायां **मनुष्याधिकारत्वादिति** पदम् । व्याचष्टे **मनुष्याणामेवेति** । अत्रांगुष्ठप्रमितस्य जीवत्वमभ्युपगम्यैव जीवस्य परमात्मैक्योपदेशपरतया प्रकरणस्य परमात्मप्रतिपादकत्वं यत् परैरुक्तम्, तदयुक्तम् ; जीवत्वेश्वरत्वयोरुभयोरपि कल्पितत्वाभ्युपगमात् सर्पभूदलनयोरिव काल्पनिकयोरर्थयोरैक्योपदेशानुपपत्तेः । जीवत्वेशानत्वाद्यनादरेण [2]वस्तुमात्रैक्यपरत्वे ईशानादिशब्दानां लाक्षणिकत्वप्रसंगात् । प्रासंगिकार्थस्य निरूपयिष्य-

---

1. उपादानमिति । निर्वाहसौकर्यादेवमुक्तम् । वस्तुतः रूढस्येव यथा यौगिकपदस्यापि श्रुतित्वम्, तथा व्यस्तानेकपदस्थलेऽपि मिथोऽन्वयसंभवे विशिष्टार्थप्रतिपत्तिशैघ्र्यात् श्रुतित्वमिष्टमेवेति ईशानोभूतभव्यस्येति समुदायः श्रुतिरेव। को भेद इति । यद्यपि भेदसाधकं पदं भाष्ये न दृश्यते, अथापि अङ्गुष्ठमात्रपदस्यैकत्र प्रयोगमात्रेण रूढ्ययोगात् योगशक्तिचिन्तने येन योगेन जीवपरत्वम्, तेनैवेशानपरत्वस्यापि संभवे कथमीशानश्रुतिकदर्थनमिति भाष्याशयः।

2. वस्तुमात्रैक्येति। भावप्रकाशिकानुसारे अत्र पाठान्तरम्।

### १४ एतद्गर्भे देवताधिकरणम् १.३.७

## तदुपर्यपि बादरायणः संभवात् १-३-२५

परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम् । तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति नास्तीति विचार्यते । किं तावत् युक्तम् ? नास्ति देवादीनामधिकार इति । कुतः ? सामर्थ्याभावात् । न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति । न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे । यद्यपि परिनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसंभावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति—तथापि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किंचिदपि वाक्यमुपलभ्यते । मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वात् न देवादिविग्रहसाधने प्रभवन्ति । कर्मविधयश्च स्वापेक्षितो-

---

माणत्वं बुध्द्वाऽऽह **स्थितंतावदिति** ।

**तदुपर्यपि बादरायणः संभवात्** । प्रसंग (गात्) संगतिमाह **परस्येति** । "मनुष्याधिकारत्वादित्यत्र मनुष्यशब्देन तिर्यङ्मात्रं व्यावर्तितम्; उत देवादिरपीति बुभुत्सया संगतिरित्यर्थः । किं ब्रह्मविद्यायां देवादीनामधिकारोऽस्ति, नेति विचारः । तदर्थम्—किं तेषां सांगब्रह्मविद्योपसंहारसामर्थ्यमस्ति, नेति । तदर्थं किं तेषां विग्रहवत्त्वं संभवति, नेति । किं मन्त्रार्थवादानामनुष्ठेयार्थप्रकाशनस्तुतिपरत्वं विग्रहादिविवक्षाविरोधि, उत नेति । किं विग्रहादिमत्त्वमनुष्ठेयार्थप्रकाशनस्तुत्योरुपयोगि, नेति । यदाऽनुपयोगि, तदा अनुष्ठेयप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षाविरोधितया मन्त्रर्थवादानां देवताविग्रहादिपरत्वाभावेन देवानां विग्रहविरहेण सामर्थ्याभावात् तदनधिकार इति फलितम् । यदोपयोगि, तदा अनुष्ठेयप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षानुगुणतया मन्त्रार्थवादानां तत्परत्वेन देवानां विग्रहवत्तया सांगब्रह्मविद्योपसंहारसामर्थ्यादस्ति ब्रह्मविद्याधिकार इति फलितम् । **सामर्थ्याभावादिति** । अर्थित्वाभावस्याप्युपलक्षणमेतत् । सामर्थ्याभावमुपपादयति **न हीति** । **उपसंहारः** अनुष्ठानम् । अशरीरत्वं कथमित्यत्राह **नचेति** । वेदान्ताः प्रमाणं स्युरित्यत्राह **यद्यपीति** । प्रयोजनपर्यवसायित्वैव हि शब्दस्य प्रामाण्यम् । तत्र पूर्वभागवचसां प्रवृत्तिनिवृत्तिरूपप्रयोजनपर्यवसानात् तत्र तात्पर्यम् । ब्रह्मणः पुरुषार्थरूपतया तत्र वेदान्तानां तात्पर्यम् । देवादीनां विग्रहेषु तथात्वाभावान्न तात्पर्यमित्यर्थः । पूर्वभागे मन्त्रार्थवादास्तत्र प्रमाणमित्यत्राह **मन्त्रार्थवादास्त्विति** । मन्त्राश्चार्थवादाश्चेत्यर्थः । **अन्यपरत्वादिति** । अनुष्ठेयार्थप्रकाशनस्तुत्योरन्य[तर?] परत्वादित्यर्थः । मा सैत्सीदन्यपरेण मन्त्रार्थवादेन देवताविग्रहादि; किंतु कर्मविधिभिस्त्वेव सेत्स्यति । कर्मणो द्रव्यदेवतानिरूप्यत्वात्; क्षणध्वंसिनः कर्मणः कालान्तरभाविफलसाधनत्वनिर्वाहाय देवतैश्वर्यस्यापेक्षितत्वात्; श्रुतहानेनाश्रुतापूर्वकल्पनायोगाच्चेत्यत आह **कर्मविधयश्चेति** ।

अयमभिप्रायः—यद्यपि देवतावत्सु यागहोमादिकर्मसु देवतैश्वर्यांगीकारेणापि फलप्रदत्वनिर्वाहसंभवः, तथापि दानतपःप्रभृतिषु देवतानामभावात् कल्पनीयमेवापूर्वम् । तथा च समानन्यायतया याग-

द्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति। अत एव तासामर्थित्वमपि न संभवति। अतः सामर्थ्यार्थित्वयोरभावात् देवादीनामनधिकार इति—

एवं प्राप्ते प्रचक्ष्महे—तदुपर्यपि बादरायणः संभवात्। तदुपर्यपि—तत् ब्रह्मोपासनम्, उपरि—देवादिष्वपि संभवतीति भगवान् बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोः संभवात्। अर्थित्वं तावत् आध्यात्मिकादिदुर्विषहदुःखाभितापात्, परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धेऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च संभवति। सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया संभवति।

देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषु उपासनप्रकरणेषु च श्रूयते। तथा हि, "सदेव सोम्येदमग्र आसीत्...तदैक्षत बहु स्यां प्रजायेयेति। तत् तेजोऽसृजत" इत्यारभ्य सर्वमचेतनं तेजोबन्नप्रमुखावस्थाविशेषवत् व्याकृत्य, "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति संकल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक् च अयमकरोदित्युक्तम्। एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते। देवादिभेदश्च तत्तत्कर्मानुगुण-ब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादियोगायत्तः; आत्मनां स्वतो देवादित्वाभावात्। तथा, "तद्धोभये देवासुरा

---

होमादावपि अपूर्वमेव कल्प्यताम्; किमर्धवैशसेन? किञ्च—तत्रैव कल्पे सर्वकर्मफलभोगनियमाभावात् देवतानां सृष्टिप्रलयाभ्युपगमाच्च फलप्रदातुरभावात् केषांचित् कर्मणां नैष्फल्यमेव स्यात्॥ अथ तत्तद्देवताशरीरकः परमात्मा तत्तत्कर्मभिराराधितो नित्यैश्वर्यतया फलप्रद इति मतम्—तथासति प्रतिमाप्रतिमेयन्यायः स्यात्। यथा प्रतिमोद्देशिभिरुपचारैर्देवताप्रीतिः, एवं देवतोद्देशिभिर्द्रव्यत्यागैः परमात्मप्रीतिः स्यात्। ततश्च प्रतिमाया इव देवताया अप्युद्देश्याकारत्वमात्रं विवक्षितम्; नैश्वर्यमपीति अनपेक्षितं देवतैश्वर्यं न कल्प्यमिति॥

उक्तोपजीवनेनार्थित्वाभावमाह **अत एवेति**। यत एव न विग्रहवत्त्वं देवतानाम्, अत एवार्थित्वमपि न संभवति; दुःखस्य तज्जिहासायाश्च देहसंबन्धमूलत्वादर्थित्वस्य दुःखजिहासारूपत्वाच्चेत्यर्थः।

**एवं प्राप्त** इति। अक्षरार्थमाह **तदुपर्यपीति**। अर्थित्वमुपपादयति **अर्थित्वमिति**। सामर्थ्यमुपपादयति **सामर्थ्यमपीति**। **पटुतर**शब्दो मनुष्यदेहादपि पटुत्वातिशयपरः। प्रमाणाकांक्षायामाह **देहेति**। तत्त्वोपदेशप्रधानमन्त्रब्राह्मणरूपवेदभागा उपनिषदः। ताश्च द्विविधाः, तत्त्वपरा उपासनपराश्चेति। उभयीष्वपि तासु देवतानां विग्रहादिमत्त्वमवगम्यत इत्यर्थः। कानि तत्त्वप्रतिपादकवचांसि। कथं तैर्विग्रहवत्त्वप्रतिपादनमित्यत्राह **तथाहीति**। **सदेवेत्यादि**। नामरूपव्याकरणस्य कण्ठोक्त्या, नामरूपाणां चातुर्विध्यस्य प्रमाणसिद्धत्वात् नामरूपव्याकरणश्रुत्यैव देवताविग्रहवत्त्वं सामान्येन सिद्धमित्यर्थः। 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः', 'नारायणात् ब्रह्मा जायते' इत्यादीनि विशेषोक्तिमन्ति च वाक्यान्यभिप्रेतानि। चतुर्विधसृष्टिराम्नाता भवतु; ततः किमित्यत्राह **देवादीति**। उपासनदशायां परमकारणभूतस्योपास्यस्य लक्षणत्वेन[1] प्राप्यदशायां प्राप्यविशेषणत्वेन विग्रहादिमत्त्वं सिद्धमित्यर्थः। उपासनप्रकरणेषु दर्शयति **तथेति**।

अनुबुबुधिरे। ते होचुः।...इन्द्रो हवै देवानामभिप्रवव्राज, विरोचनोऽसुराणाम्। तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः। तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच" इत्यादिना स्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते ॥ कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि "वज्रहस्तः पुरन्दरः", "तेनेन्द्रो वज्रमुदयच्छत्" इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव।

न च अनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वाभ्याम्, प्रतीयमानर्थान्तराविवक्षा शक्यते वक्तुम्; स्तुत्याद्युपयोगित्वात्; तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन हि स्तुतित्वम्। गुणानामसद्भावे स्तुतित्वमेव हीयेत। न चासता गुणेन कथितेन प्ररोचना जायते। अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः। मन्त्राश्च कर्मसु विनियुक्तास्तत्रतत्र किञ्चित्करत्वायानुष्ठेयमर्थं

---

कर्मविधिशेषत्वेनापि सिद्ध्यतीत्याह **कर्मविधी**त्यादिना। तत्र प्रथमसूत्रे सिद्धवस्तुनि तात्पर्यसंभवस्य फलत्वेन सिद्धिरुक्ता; अत्र स्तावकत्वप्रकाशकत्वहेतुतया; फलमतउपपत्तेरित्यत्र फलसाधनत्वेनेति त्रिधा विभागः। आदित्यो यूप इत्यादिव्यावृत्त्यर्थमाह **प्रमाणान्तराविरुद्ध**मिति।

अन्यपरत्वमनूद्य निरस्यति **नचे**त्यादिना। **स्तुत्याद्युपयोगित्वा**दिति आदिशब्देनानुष्ठेयार्थप्रकाशनम् मन्त्रकृत्यं गृह्यते। **मन्त्रार्थवादे**ष्वित्युद्देशे, **अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्या**मित्यनूद्देशे चावगतक्रमोऽत्र परित्यक्तः। तत्र कारणं मन्त्रैरपि क्वचित् स्तुतिदर्शनेन स्तुतेर्व्यापकत्वम्। दृश्यते हि मन्त्रैः स्तुतिः। 'नकिरिन्द्र त्वदुत्तरो न ज्यायोऽस्ति वृत्रहन्', तथा, 'अर्हन् बिभर्षि सायकानि धन्वन्नर्हन्निष्कं यजतं विश्वरूपम्। अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति' इत्यादिभिः। अर्हन् बिभर्षीत्यादिमन्त्रस्य स्तुतिपरत्वं ब्राह्मणेनैवावगम्यते, 'अर्हन् बिभर्षि सायकानि धन्वेत्याह; स्तौत्येवैनमेतत्' इति। **तेन विना**—प्रतीयमानार्थेन विना। तत्र स्तुत्यनुपपत्तिं विवृणोति **गुणकथनेने**ति। व्यतिरेकेणोपपादयति **गुणाना**मिति। **स्तुतित्वमेव हीयेते**ति। प्ररोचकत्वमेव हीयेतेत्यर्थः। शेषभूतस्य शेषिणं प्रति किंचित्कारोऽपेक्षितः। स न सिद्ध्यतीति यावत्। ननु यदि गुणकथनेन स्तुतित्वम्, तथासति गुणकथनाभावे स्तुतित्वहानिः स्यात्; न गुणानामसद्भावे इत्यत्राह **न चासते**ति। अनेन, 'नासता स्तुतिरुपपद्यते' इति **द्रमिडभाष्यं** स्मार्यते। अर्थप्रकाशनानुपपत्तिं विवृण्वन् मन्त्राणां विग्रहादिमत्त्वे प्रामाण्यमुपपादयति **मन्त्राश्चे**त्यादिना। द्रव्यदेवते हि कर्मनिरूपके। एतद्देवत्यमिदं कर्मेति प्रतिपत्तौ देवताविशिष्टत्वेन हि कर्मप्रतिपत्तिः। 'यस्यै देवतायै हविर्गृहीतं स्यात्, तां ध्यायेद्वषट्करिष्यन्' इति देवता ध्यातव्येति श्रूयते। देवता चेदृशीत्येव प्रतिपत्तव्या; निर्विशेषवस्तुनः प्रतिपत्तुमशक्यत्वात्। इन्द्रत्वादिकं च न शुद्धात्मस्वरूपस्य विद्यते। अतो विग्रहादौ विवक्षितत्वम् ॥ प्रतीतेरालंबनमात्रमपेक्षितम्; नार्थसद्भावः इति चेन्न—न ह्यतस्मिंस्तद्दृष्टिः फलाय विधीयते। अपितु यथावस्थितकर्मस्वरूपप्रबोधनं हि क्रियते। तस्मादनुष्ठेयार्थप्रकाशकत्वसिद्ध्यर्थं मन्त्राणां विग्रहादिमत्त्वे च प्रामाण्यमस्त्येवेत्यर्थः ॥ अर्थसद्भावाभावेऽपि प्ररोचना दृश्यत इति चेन्न-इष्ट-

---

1. लक्षणत्वेनेति। देवादिरूपजगत्कारणत्वस्येति शेषः।

**प्रकाशयन्तो देवादिगतविग्रहादिगुणविशेषमभिदधत एव तत्र किञ्चित्कुर्वन्ति ; न च निर्विशेषा देवता धियमधिरोहति ।**

---

साधनत्वाभावेऽपि बालातुरादिषु विप्रलम्भवाक्यानां प्रवृत्तिहेतुत्वं दृश्यत इति विधिवाक्यस्याप्ययथार्थत्वप्रसंगात् । अपौरुषेयतया निर्दोषं विधिवाक्यं [1]निरूपकविषयमिति याथार्थ्यमिति चेत्—तर्हि मन्त्रार्थवादानामप्यपौरुषेयतया निरूपकविषयत्वादतस्मिंस्तद्दृष्टिविधानपरत्वाभावाच्च स्वार्थे प्रामाण्यमस्तीति भावः ।

एवमर्थशिक्षाप्रदर्शनेन प्रयोगप्रकारोऽर्थसिद्धः—विमता इन्द्रादिशब्दाः स्वरूपातिरिक्तपदार्थप्रतीतिहेतवः, अपारिभाषिकत्वे सति बोधकत्वात् निर्दोषवाक्यस्थत्वात्, विधिपदवत् । विमता चतुर्थी प्रकृत्यतिरिक्तार्थनिष्ठस्वार्था—अपारिभाषिकशब्दस्थविभक्तित्वात्, दध्नेतिविभक्तिवत् । विमता संप्रदानकारकबुद्धिः शब्दातिरिक्तविषया कारकबुद्धित्वात् करणकारकबुद्धिवत् । विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि साधकबाधकागोचरार्थबोधकत्वात् विधिवाक्यवत् । विमतशब्देन 'आपो वै शांताः' । 'आदित्यो यूपः' इत्यादिव्यावृत्तिः । विमतानि पदानि मुख्यार्थसंसर्गे प्रमाणानि साधकबाधक गोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत् । विमतानि पदानि परमार्थभूतप्रतीयमानार्थसंसर्गाणि साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत् ॥ न च—अर्थवादानां वाक्यत्वमसिद्धम् ;[2] प्रवर्तकार्थानवबोधनात् । अतः पदशब्दवाच्या अर्थवादाः इति वाच्यम्-अर्थवादाः न पदशब्दवाच्याः तिङ्कारकरूपसंघातरूपत्वात् विधिवाक्यवत् । अर्थवादाः प्रमाणभूतवाक्यरूपाः साधकबाधकागोचरसंसर्गप्रत्यायकतिङन्तकारकपदात्मकत्वात् विधिवाक्यवत् । विमता मन्त्रार्थवादाः प्रतीयमानार्थविवक्षान्विताः साधकबाधकागोचरार्थत्वे सति विधिनैकवाक्यत्वात् प्रयाजादिवाक्यवत् ॥ न च प्रवर्तकवाक्यत्वमुपाधिरिति बाच्यम् ; साधिकारविधिवाक्यत्वेन तस्यापि सोपाधिकत्वप्रसंगात्[3] ॥ प्रयाजादिविधीनामविवक्षितार्थत्वेऽनुष्ठानविरोधात् साधिकारविधिवाक्यत्वं न विवक्षितार्थत्वे प्रयोजकमिति चेत्—अनुष्ठानस्य प्रामाणिकतया हि तद्भंगस्यानिष्टता । एवमपवादाभावे सति स्वतः सिद्धस्यतः प्रमाणभावस्य भंगप्रसंगात् प्रवर्तकवाक्यत्वमप्रयोजकम् । तस्मान्निरुपाधिको हेतुः । विगीता अर्थवादाः

---

1. **निरूपकेति । स्वार्थं कर्मादि प्रति निरूपकभूतेत्यर्थः ।**

2. **असिद्धमिति । अनेकपदार्थसंसर्गावगाहिबोधजनकत्वे हि वाक्यत्वम् । अर्थवादपदसमुदायस्य प्रशस्तमित्येकपदोपस्थाप्ये प्राशस्त्यरूपेऽर्थे लक्षणास्वीकारात् तस्य च प्राशस्त्यस्य विधिवाक्यावगतकर्मादावन्वयेन पदैकवाक्यताभ्युपगमान्न पृथगस्य वाक्यत्वमिति वहुमीमांसकमतम् ।**

3. **प्रसंगादिति । हेतोः सोपाधिकत्ववर्णनं हि—हेतुरयमुपाधिगतसाध्यव्याप्त्युपजीवक एव, न तु स्वयं साध्यव्याप्तिमानिति बोधनार्थम् । एवञ्चोपाधिरेव साध्यव्याप्य इत्युक्तं भवति । उपाधेः सोपाधिकत्वोद्भावने च उपाधेरपि उपाध्यन्तरगतसाध्यव्याप्त्युपजीवित्वज्ञापनात् स्वयमव्याप्यत्वान्नोपाधित्वमिति स्यादिति भावः । प्रामाणिकतया हीति । औत्सर्गिकं स्वतःप्रामाण्यमुपेक्ष्य कयाचित् युक्त्या अर्थाविवक्षानुमाने प्रामाण्यासिद्ध्या अनुष्ठानस्य का प्रसक्तिरिति भावः ।**

तत्र प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति ; गुणविशिष्टं वा प्रकाशयन्ति ; प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशने कुर्वन्ति ; विरुद्धत्वे तु तद्वाचिभिः शब्दैरविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति ।

कर्मविधेश्च देवताया ऐश्वर्यमपेक्षितमेव । कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेः साधकमपेक्षते । मन्त्रार्थवादयोश्च, "वायुर्वै क्षेपिष्ठा देवता । वायुमेव स्वेन भागधेयेनोपधावति । स एवैनं भूतिं गमयति", "यदनेन हविषाऽऽशास्ते तदश्यात् । तदृध्यात् । तदस्मै देवा राधन्ताम्" इत्यादिषु देवतायाः कर्मणाऽऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते ॥ देवपूजाभिधायिनो यजिधातोश्च यागाख्यं कर्म स्वाराध्यदेवताप्रधानं प्रतीयते ॥

---

परमार्थस्वार्थोपस्थापकाः । निरूपकपुरुषप्ररोचकत्वात् रसायनायुष्यताप्रतिपादकवाक्यवत् । कारणदोषबाधकप्रत्ययविरहितत्वाद्वा ; स्वर्गयागयोः साध्यसाधनभावप्रतिपादकवाक्यवत् । विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि विध्यपेक्षितार्थसमर्पकत्वात् । 'छागस्य वपायाः' इति मन्त्रवत् ; रात्रिसत्रार्थवादवच्च । विमता प्राशस्त्यबुद्धिः, प्राशस्त्यहेतुभूतार्थपारमार्थ्यनिबन्धनाः निरूपकपुरुषाश्रयप्राशस्त्यबुद्धित्वात् औषधविषयप्राशस्त्यबुद्धिवदिति च ।

'आपो वै शान्ताः' 'आदित्यो यूपः' इत्यादिषु प्रमाणान्तरसिद्धस्य तद्विरुद्धार्थस्य चाप्युच्यमानत्वान्न सर्वत्र प्रामाण्यमिति शंकायामाह **तत्र प्रमाणान्तरे**ति । **बोधयित्वा**—विधाय । **प्ररोचयन्ति** । अर्थवादाः **प्ररोचयन्ति** ; मन्त्राः **प्रकाशयन्ति** । **लक्षयित्वा कुर्वन्ती**ति । प्ररोचनप्रकाशने कुर्वन्तीत्यर्थः ।

विध्यपेक्षितत्वं कथमित्यत्राह **कर्मविधेश्चे**ति । 'फलमत उपपत्तेः' इत्यधिकरणार्थो बुद्धिसौकर्यार्थमत्र संगमय्य कथ्यते ; न चैतदधिकरणासाधारणार्थतया । असाधारणस्तु स्तावकत्वानुष्ठेयप्रकाशकत्वसिद्धयथ प्रतीयमानार्थे प्रामाण्यमस्तीत्ययमर्थः । स च पूर्वमेवोक्तः । कृष्यादेरंकुरादिद्वारकत्वमिवाचेतनद्वारकत्वं कर्मणः स्यादित्यत्राह **वायुर्वा** इति । श्रुतहानमश्रुतकल्पनं चानुपपन्नम्, रात्रिसत्रादिष्विवेति भावः । **वाक्यार्थे समन्वीयत** इति । आर्थवादिकार्थानां श्रूयमाणत्वात् तद्विशिष्टे वाक्यतात्पर्यमिति निश्चिते सति रक्तः पटो भवतीतिवत् उत्थापिताकांक्षत्वेन विधिनैकवाक्यतया समन्वयोऽर्थवादानामिति भावः । यत्र वाक्यशेषवशादपेक्षितदेवताप्रीतिद्वारकत्वं न सिद्ध्यति, तत्रापि यजिसामर्थ्यात् तत् सिध्यति, अर्थवादाभावेऽपि विधिसामर्थ्यात् स्तुतिरिवेत्याह **देवपूजाभिधायिन** इति । न च यत्र देवपूजासंगतिकरणदानेष्विति शाब्दिकानां स्मरणं [1]भ्रान्तिमूलमिति वाच्यम् ; विध्यपेक्षितार्थसमर्पकतया स्वार्थे प्रमाणभूतत्वान्मन्त्रार्थवादानामस्य स्मरणस्य तन्मूलत्वोपपत्तेः । विमतो विधिप्रत्ययः चेतनप्रीत्यतिरिक्तफलसाधनकल्पननिराकांक्षः, चेतनप्रीत्यतिरिक्तफलसाधनवाचकत्वकल्पननिराकांक्षश्च कृतिसाध्यचेतनप्रीत्यवगमकवाक्यस्थत्वात् । राजानं सेवेतेति वाक्यस्थविधिप्रत्ययवत् । विमतशब्देन जुहुयादित्यादिव्यावृत्तिः । जुहुयादित्यादिषु विधिप्रत्ययेषु विधिप्रत्ययत्वलिंगेन पूर्वोक्तसाध्यद्वयं समर्थनीयम् ॥

---

1. भ्रान्तिमूलमिति । औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिवचनवदिति भावः ॥

तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया, कल्प्यतया वाऽऽश्रयितव्यम् ॥

तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु ब्रह्मादीनां देवासुरप्रभृतीनाञ्च

---

**तदेव**मिति । **कृत्स्न**शब्देन मन्त्रार्थवादविधयो विवक्षिताः ॥ वाच्यापूर्ववादपक्षे, अश्रुत-कल्पनं नास्तीति चेन्न ; वाच्यत्वस्यापि कल्प्यमानत्वात् ; कल्प्यापूर्ववादे अपूर्वमेव कल्प्यम्; वाच्यपक्षे वाच्यत्वमपि कल्प्यमिति अभिप्रायेण **व्युत्पत्तिसमयानवगत**मित्युक्तम् ।

**तथे**त्यादि । **ब्राह्मण**शब्देन विध्युद्देशग्रहणम् । विध्यर्थवादमन्त्ररूपेण विभागवतामस्मदादि-भिरनधीतासु अधीतासु च शाखासु तत्राप्यन्यपरप्रकरणेषु प्रसंगादनुप्रविष्टानां भगवता व्यासेन व्यस्तेष्वव्यस्तेषु च वेदभागेषु विप्रकीर्णानां वाक्यानामर्था इतिहासादिषु संकलय्य कथ्यन्त इति भावः । **संकीर्ण**शब्देन नित्यानुमेयश्रुतिमूलत्वोत्सन्नशाखामूलत्वव्युदासः । तदुभयमपि ह्यनुपपन्नम् ।

तत्र यस्तावत् नित्यानुमेयतयाऽभिमतो वर्णसमुदायः, स किं वर्णमात्रसंघातः? उतानुपूर्वीविशेष-विशिष्टः? प्रथमे कचटतपादिवदर्थावबोधकत्वाभावेन वाक्यत्वाभावाद्वाक्यविशेषत्वरूपवेदत्वासिद्धेः स्मृतीनां वेदमूलत्वं न स्यात । द्वितीये नित्यानुमेयत्वं व्याहतम् । स्वतःक्रमरहितानां वर्णानामुच्चारणेन विना आनुपूर्वीविशिष्टत्वायोगात् ॥ उच्चारणयोग्यतास्तीति चेन्न; उच्चारणयोग्यता नाम पटुतर-वागिन्द्रियपुरुषबुद्धिस्थितिः । सा च योग्यता, किं वर्णमात्रगता? उतानुपूर्वीविशेषविशिष्टवर्णगता? न प्रथमः ; वर्णमात्रस्यार्थानवबोधकतया स्मृतेर्निर्मूलत्वप्रसंगात ॥ सत्यामानुपूर्व्यां स्मृतिप्रतिपन्नार्थाव-बोधनक्षमत्वं वर्णेष्वस्तीति चेत्—तेष्वेव वर्णेष्वानुपूर्व्यन्तरे सति चैत्यवन्दनकर्तव्यताद्यर्थबोधनक्षमत्व-मप्यस्तीति बुद्धस्मृतेरपि वेदमूलत्वप्रसंगः ॥ वेदबाह्यतया संप्रतिपन्नत्वात् न तस्या वेदमूलत्वानुमान-शंकोदय इति चेत्—मेघसंदेशस्य वेदमूलत्वप्रसंगः ॥ प्रवर्तकार्थपरत्वाभावान्न वेदमूलत्वा-नुमानमिति चेत्—"कार्या सैकतलीनहंसमिथुन(ना)स्रोतोवहा मालिनी" इति वाक्यस्य वेदमूलत्वप्रसंगः ॥ आनुपूर्वीविशेषविशिष्टवर्णगता योग्यतेत्यप्ययुक्तम् । पूर्वं केनचिदुच्चरितत्वाभावा-दानुपूर्व्यसिद्धेः । ततश्चानाद्यानुपूर्वीविशिष्टतारूपवेदत्वं दूरोत्सारितम् ॥ आनुपूर्वीविशेषेणोच्चारण-योग्यत्वं वर्णानामनादीति चेत्-तत् चैत्यवन्दनप्रतिपादनानुगुणानुपूर्व्या अपि तुल्यम् । अतः तत्रापि वेदमूलत्वं स्यात् ॥ [1]कर्तृसामान्याभावान्न तत्र वेदमूलत्वानुमानम् । श्रुतिस्मृत्यर्थयो-स्तुल्यतया कर्तृसामान्यात् स्मृतेर्वेदमूलत्वानुमानमिति चेत्—मा भूत् कर्तृसामान्यम् । तेन मन्वादिस्मृतीनां वेदमूलत्वेऽनुमिते तुल्यन्यायतया आपतितं वेदमूलत्वं को वारयेत् । स्वावगतार्थ-प्रतिपादनानुगुणानुपूर्वीविशेषेण अनादिसंबन्धयोग्यवर्णास्तित्वज्ञानं हि सर्वत्र समानम् ॥ तज्ज्ञाननियमो बुद्धादीनां ग्रन्थनिर्माणदशायां नास्तीति चेत्—"तद्ज्ञानपूर्वकमेवेदानीम्,

---

1 कर्तृसामान्येति । अपि वा कर्तृसामान्यादिति मीमांसोक्तं कर्तृसामान्यं वेदाध्ययन तदर्थानुष्ठानकर्तुः स्मृतिकर्तुश्चैक्यरूपम् ।

'रथ्यातृणानि गणयेत् स्वर्गकामः' इत्युक्तस्य वाक्यस्य वेदमूलत्वप्रसंगः ॥ नन्वनेनैव स्मृत्यवगतार्थविशेषेणावच्छिन्नानुपूर्वीविशिष्टानां वर्णानां वेदत्वमिति चेन्न—मन्वादिवाक्यस्यापि तदर्थावच्छिन्नानुपूर्वीविशिष्टवर्णसमुदायात्मकतया वेदत्वप्रसंगेनानुमेयान्तराभावान्नित्यानुमेयश्रुतिमूलत्वासिद्धेः । अतो नित्यानुमेयश्रुतिमूलत्वमनुपपन्नम् ॥

उत्सन्नशाखामूलत्वपक्षेऽपि, अधीयमानशाखास्वेव प्रमादात् कतिपयवाक्यानां क्वचित् क्वचिद्देशे प्रलीनत्वात् तन्मूलाः स्मृतयः प्रणीता इत्यप्ययुक्तम् । पदवाक्यसंख्यानियमेन बहुभिरध्येतृभिरस्खलितमधीयमानत्वात् कतिपयवाक्यानां प्रलीनत्वानुपपत्तेः ॥ स्मृतीनां मूलभूतशाखा कात्स्न्र्येन क्वाचिदुत्सन्ना; तन्मूलाः स्मृतय इत्यप्ययुक्तम् । तथाहि—शाखाया उत्सादो नाम किं कतिपयदेशेष्विदानीं अध्येतृविरहः ? उत सर्वदेशेष्वप्यध्येतृविरहः ? प्रथमः कल्पोऽभ्युपगतः । न द्वितीयः । तपःप्रभावाधिगतसार्वज्ञ्यादीनां व्यासादीनां तत्तच्छाखाविशेषाभिज्ञानां तदध्ययनपरित्यागे कारणाभावात्; स्वशिष्याध्यापनसंभवाच्च । न चेदानींतनशिष्यबुद्धिमान्द्यादिदानीं तदध्यापनासंभवः । बहुशाखाध्ययनासामर्थ्येऽप्यस्मदादेरिव तत्तदेकशाखाध्ययनसमर्थशिष्यसंभवात् । अतः प्राचीन एव पक्षः परिशिष्यते ।

अतः स्मृतीनां संकीर्णवेदभागमूलकत्वमेव युक्तम् ॥ स्मृतिमूलभूतवेदभागसद्भावे स्मृतिप्रणयनवैयर्थ्यमिति चेन्न; तच्छाखाध्येतृपुरुषविरहितदेशेषु, तद्युक्तदेशेष्वपि बहुशाखाध्ययन-धारण-तदर्थनिरूपण-निर्णयासमर्थपुरुषेषु च सफलत्वात् । अतः स्मृतीनां संकीर्णवेदभागमूलत्वं युक्तम् । **कर्मविधेश्चेत्यादौ** भाष्ये इदमर्थसिद्धम् ॥

यदुक्तम्—यागादौ दानादौ चार्थवैरूप्याश्रयणादर्धवैशसमिति—तदसत्; सर्वत्राप्यपूर्वकल्पनानभ्युपगमात् । न च फलसाधनतानुपपत्तिः । कर्मोपजनितप्रीतेः परमात्मन एव तत्सिद्धेः । "वासो ददाति । सर्वदेवत्यं वै वासः । सर्वा एव देवताः प्रीणाति" इत्यादिभिः दानादीनामपि देवताप्रीतिहेतुत्वावगमाच्च । न च परमात्मप्रीत्या फलसंभवे देवतैश्वर्यानुपयोगः । प्रधानावान्तरापूर्वकल्पनान्यायस्यात्रापि इष्टत्वात् । यथा हि पूर्वापरभूतानामंगप्रधानरूपाणामनेकेषां कर्मणां यौगपद्याभावादवान्तरापूर्वनिष्पत्तिरंगीक्रियते—एवमेव तत्तत्कर्मजनितप्रीत्यतिशयाभिर्देवताभिः परमात्मन्यखण्डैकप्रीतिजननमातिष्ठामहे । इदमेव देवतायाः फलदानानुगुणमैश्वर्यम् । यत् फलप्रदे परमात्मनि स्वप्रीतिद्वारा प्रीतिजननम् । उक्तं हि भगवता—"योयो यांयां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति" इत्यारभ्य, "लभते च ततः कामान् मयैव विहितान् हि तान्" इति । तेन फलोपभोगस्थानियतकालत्वेऽपि न दोषः । न चैवं सति प्रतिमाप्रतिमेयन्यायेन देवताप्रीतिरनाश्रेया; "यस्यै देवतायै हविर्गृहीतं स्यात्, तां ध्यायेद्वषट्करिष्यन्", "साक्षादेव देवताः प्रीणाति", "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति, । त एनं तृप्ता आयुषा तेजसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ।", "ये चैव देवाः सायंयावानो ये च प्रातर्यावाणः, तानेवोभयांस्तर्पयति । त एनं तृप्ताः प्रजया पशुभिस्तर्पयेयुः" इति देवतातृप्तेः श्रुतत्वात्

देहेन्द्रियादयः, स्वभावभेदाः, भोगाः, कृत्यानि चेत्येवमादयः सुव्यक्ताः प्रतिपाद्यन्ते। अतो विग्रहादिमत्त्वात् देवादीनामप्यधिकारोऽस्त्येव ॥ २५ ॥

तत्प्रहाणानुपपत्तेः । "पितरि प्रीतिमापन्ने सर्वास्तुष्यन्ति देवताः", इति न्यायात्, भृत्यप्रीणनेन भूभृत्प्रीणनन्यायाच्च देवताप्रीतेः परमात्मप्रीतिहेतुत्वोपपत्तेश्चेति ॥

सूत्रार्थमुपसंहरति अत इति ॥ ननु कथं देवतानां ब्रह्मविद्याधिकारः? न ह्यत्रैवर्णिकानां तेषामुपनयनाभावेनाध्ययनसिद्धस्वाध्यायलब्धविद्यत्वम् । न च तेषां विद्यांगभूतकर्मानुष्ठानयोग्यत्वम्; अग्निनिष्पत्त्यनुपपत्तेः । "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत" इति त्रैवर्णिकविषयाधानविधिः कथं देवान् अधिकरोति? अत्र्यार्षेयस्य[1] चानधिकारोऽधिकरण(पू.मी. 6-1-11) सिद्धः । देवानां देवर्षीणां च मूलभूतऋष्यन्तराभावादत्र्यार्षेयतया चानधिकारः । अग्नीन्द्रादीनामग्नीन्द्रादिदेवताऽभावादग्न्याद्युद्देशेन हविःप्रक्षेपणानुपपत्तिश्चेति— उच्यते । न तावत् उपनयनाभावात् सांगविद्यानधिकारः; तस्याध्ययनांगत्वात् यज्ञादिकर्म-ब्रह्मोपासनयोरंगत्वाभावात् । अध्ययनाभावेऽपि देवतानां सुकृतप्रकर्षेण पूर्वजन्मविशेषाधीतस्वाध्यायतदर्थस्मरणोपपत्तेश्च । पिशाचादयोऽपि हि पूर्वजातिं स्मरन्ति । किंपुनर्देवाः देवर्षयश्च । न चोपनयनविरहाच्छूद्रादिवद्विद्याकर्मणोरनधिकारः । शूद्रादीनामपि उपनयनविरहप्रयुक्तत्वाभावादनधिकारस्य । स खलु तेषां सामर्थ्याभावानुगृहीतशास्त्रनिषेधप्रयुक्तः । देवतानां हि विद्याकर्मणी न क्वचित् प्रतिषिद्धे । प्राक्तनज्ञानाप्रमोषात् सामर्थ्यं च स्थितम् ।

न चात्रैवर्णिकत्वादग्न्याधानाभावादत्र्यार्षेयतया च विद्यांगकर्मानधिकारः । मनुष्यकर्तृकाधानस्यैव त्रैवर्णिकत्र्यार्षेयाधिकारित्वनियमात् ॥ किमत्र नियामकमिति चेत्— "देवा वै सत्रमासत", "विश्वसृजः प्रथमाः सत्रमासत" इत्यादिश्रुतिभिर्देवादीनां क्रत्वनुष्ठानदर्शनात्, विशेषत इन्द्रादीनां वृत्रवधादिजनितकलुषक्षालनाय क्रत्वनुष्ठानस्मरणाच्चेति ब्रूमः । यद्वा— ब्राह्मण्यादिकं देवतादीनामप्यस्ति । तत् खल्वदृष्टविशेषसंबन्धरूपम्; न तु जातिरूपम्, ब्राह्मणादिभिः ब्राह्मण्यादिषूत्पत्तिमात्रं वा । अन्यथा आदिकाले ब्रह्मणो मुखबाहूरुप्रभवानां पश्चाद्विश्वामित्रप्रभृतीनां च ब्राह्मण्याद्यभावप्रसंगात् । सन्तानविशेषप्रसूतत्वं च तादृगदृष्टवत्त्वसूचकम्; सन्तानविशेषोत्पत्तेः प्रकृष्टादृष्टकार्यत्वात् । अलौकिकप्रकर्षविशेषकारणत्वाच्च । ईदृशं ब्राह्मण्यादिकं देवतास्वपि संभवति । अवगम्यते च तत् वाजपेयं प्रकृत्य, "तं बृहस्पतिरुदजयत् । तेनायजत । तेनेन्द्रमयाजयत्" इति बृहस्पतिनेन्द्रेण च वाजपेयस्यानुष्ठितत्वमुक्त्वा तत एव हेतोः, "स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः" इति वाजपेयस्य ब्रह्मक्षत्राधिकारित्वमुच्यमानं बृहस्पतेर्ब्राह्मण्यमिन्द्रस्य क्षत्रत्वमपि ह्यवगमयति । "ब्रह्म बृहस्पतिः क्षत्रमिन्द्रः" इति च श्रूयते ।

1. अत्र्यार्षेयस्येति। दर्शपूर्णमासयोरार्षेयवरणं विहितम् । आर्षेयो नाम (यजमान)गोत्रप्रवर्तकः ऋषिः। 'त्रीन् वृणीते' इति आर्षेयत्रयवरणविधानात् त्रयरहितो नाधिकारीति ।

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् १-३-२६

देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते ; बहुषु यागेषु युगपदेकस्येन्द्रस्य, विग्रहवत्त्वे (वतः) "अग्निमग्न आवह", "इन्द्रागच्छ हरिव आगच्छ" इत्यादिना आहूतस्य [तस्य] संनिधानानुपपत्तेः। दर्शयति चाग्न्यादीनां तत्रतत्राऽऽगमनम्, "कस्य ह वा देवा यज्ञमागच्छन्ति; कस्य वा न, बहूनां यजमानानाम्। यो वै देवताः पूर्वः परिगृह्णाति, स एनाः श्वोभूते यजते" इति, अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेत्—तन्न—अनेकप्रतिपत्तेर्दर्शनात्। दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः॥ २६॥

---

तथा "मरुतो वै देवानां विशः" इति मरुतो विशः श्रूयन्ते। अतो देवताविशेषाणां ब्रह्मक्षत्रविड्भागसिद्धेरग्निसंबन्धो युक्तः। विद्यानुग्राहकं ब्रह्मचर्यादिकं च देवानां श्रूयते। "एकशतं हवै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास" इत्यादिषु। अतो विद्यांगकर्मगुणपौष्कल्यात् सामर्थ्यं सिद्धम्॥

न च यष्टव्यदेवतान्तराभावात् यजनानुपपत्तिः। अग्नीन्द्रादिशब्दप्रवृत्तिनिमित्तानां ज्ञानशक्त्यैश्वर्यविशेषाणां निरुपाधिकाश्रयतया तच्छब्दवाच्यस्य परमात्मनोऽव्यवधानेन[1] देवताभिराराध्यत्वात्। अग्नीन्द्रादीनां तु तत्तद्यज्ञभागभागित्वं स्वाराधनप्रीतेन भगवता दत्तम्; न तु स्वाभाविकम्। यथोक्तं भगवता व्यासेन कृष्णद्वैपायनेन **मोक्षधर्मे यज्ञाग्रहराध्याये**—"ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः। वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्। तस्मिन् सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत्। देवा महर्षयश्चैव स्वयं भागमकल्पयन्। ते कार्तयुगधर्माणो भागाः परमसत्कृताः। प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्" इति अव्यवधानेन भगवतो यष्टव्यत्वमुक्तम्। तत्र भगवद्वचः, "येन यः कल्पितो भागः स तथा समुपागतः। प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम्।" तत्र—"यज्ञैर्येचापि यक्ष्यन्ति सर्वलोकेषु वै सुराः! कल्पयिष्यन्ति वो भागान् ते नरा वेदकल्पितान्॥ यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ। स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः" इत्यत्र भगवता यज्ञभागभाक्त्वं देवानां दत्तमिति स्पष्टतरम्। अतो देवानां कर्मानधिकाराभ्युपगमेन विद्यामात्राधिकारवादोऽनुपपन्नः। अतः सांगब्रह्मविद्योपसंहारसामर्थ्यं देवादीनामस्तीति, सिद्धं देवानां ब्रह्मविद्याधिकारित्वम्॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्**॥ विग्रहाभ्युपगमे तद्वत् आर्थवादिके आह्वानागमने चाभ्युपेये। तदा युगपदनेककर्मस्वाह्वाने विरोधः। शरीराधीनत्वादागमनस्येत्यर्थः। आगमनमात्रे प्रामाणिके सति हि तद्यौगपद्ये विरोध इति, आगमने प्रमाणमाह **दर्शयति चेति**। नेत्यादिकं व्याचष्टे **तन्नेति**। दर्शनादित्येतत् व्याचष्टे—**दृश्यते हीति**। "आत्मनो वै शरीराणि बहूनि मनुजेश्वर। योगी कुर्यात् बलं प्राप्य तैश्च सर्वां महीं चरेत्" इति भारतवचनादि द्रष्टव्यम्।

---

[1]. **अव्यवधानेनेति। अनन्यथासिद्धजीवादिलिङ्गसद्भावे तु जीवादेः प्रकारत्वेऽपि उपलक्षणत्वमेवेति परमात्मैवाराध्यः।**

[1]योग्यानुपलम्भस्तु मन्त्रौषधादिभिर्मनुष्याणामिव शक्तिविशेषैर्देवानामपि संभवतीति न विरोध इति भावः ॥

नन्नु यदि देवा इहागत्य हविरदन्ति, तर्ह्यन्यत्र मन्त्रार्थवादप्रतिपन्नमग्नेर्हव्यवाहत्वं भज्येत । अवगम्यते च तत्—"हव्यवाडग्निरजरः पिता नः" इति, "अवाड्ढव्यानि सुरभीणि कृत्वा प्रादाः पितृभ्यः स्वधया ते अक्षन्" इति, "अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त" इत्यादिषु । इह प्रक्षिप्तस्य हविषो लोकान्तरप्राप्तिश्च श्रूयमाणाऽनुपपन्ना । अग्निहोत्राहुती प्रकृत्य, "ते वा एते आहुती हुते उत्क्रामतः । ते अन्तरिक्षमाविशतः । ते अन्तरिक्षं तर्पयतः । ते दिवमाविशतस्ते दिवं तर्पयतः । ते तत आवर्तेते । ते इमामाविशतः" इति । स्मर्यते च—"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इति । 'तत आवर्तेते' इति इह हविषोरावृत्तिश्चानुपपन्ना । कथं देवैर्भक्षितस्यावृत्तिः ? प्रत्यक्षेण दग्धस्य हविषः कथं देवैर्भक्ष्यमाणत्वं च युक्तमिति ॥—उच्यते—"अवाड्ढव्यानि सुरभीणि कृत्वा प्रादाः" इति श्रवणादग्निना परिणाम्यमानस्य हविषः सूक्ष्मं रूपं किमप्यलौकिकं विद्यत इत्यभ्युपेत्यम् ; श्रेयस्साधनत्ववत् । तच्च देवानामिच्छावशादतीव वर्धते । तथाहि ब्राह्मणम्—"यद्वै देवा हविर्जुषन्ते अल्पमप्येकामाहुतिमपि, तद्गिरिमात्रं वर्धयन्ते" इति । अतोऽपरिमितत्वेन किंचिद्भुज्यते किञ्चिन्नीयत इति सर्ववाक्यानुगुण्येन कल्प्यम् । यद्वा—इह सन्निधायापि हविर्गृहीत्वा तत्स्वस्थानं गत्वा भुञ्जताम् ; को बाधः ? हविषोरिह आवृत्तिर्नाम तत्फलभूतवृष्ट्यादेरिह संभव उपचारादुक्तः । यद्वा—"इन्द्र आगच्छ हरिव आगच्छ मेधातिथे", "अग्निमग्न आवह सोममावह" इति येष्विष्ट्यादिकर्मसु देवताह्वानतदागमने श्रुते, तेष्वेव कर्मस्विहागत्य हविरदनम् । अन्यत्र त्वग्निभिर्हविष उन्नयनमिति विभागः । "ते वा एते आहुती हुते उत्क्रामतः" इति वाक्यमपि ह्यग्निहोत्राहुतिविषयम् । न तत्र देवताह्वानागमने ॥ ननु तत्रापि सायंयावप्रातर्यावसंज्ञानां देवानामागमनं श्रूयते । "सायंयावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ति" इति ॥ सत्यम् ; ते तु नाग्निहोत्राहुतिभोक्तारः । "सजूर्देवैः सायंयावभिरिति सायं संमृशति, सजूर्देवैः प्रातर्यावभिरिति प्रातः । ये चैव देवाः सायंयावानो ये च प्रातर्यावाणः, तानेवोभयांस्तर्पयति" इति संमर्शनमात्रतृप्तिश्रवणात् तेषाम् । हुतहविर्भोक्तृत्वं तु सूर्यादीनामेव । न च तत्र सूर्यादीनामाह्वानम् । अतो देवताह्वानवत्सु कर्मस्विहागत्य हविरदनम् , अन्यत्र हविष उन्नयनमिति विभाग उपपन्नः । अतोऽग्नेर्हव्यवाहत्वश्रुतिः, "अग्नौ-प्रस्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते" इति स्मृतिश्च चरितार्था । अतोऽनेकशरीरप्रतिपत्त्या देवानां सन्निधानान्न कर्मणि विरोधः ।

इतरैस्तु—"कति देवाः" इत्युपक्रम्य, "त्रयश्च त्री च शता, त्रयश्च त्री च सहस्रा" इति निरुच्य कतमे ते इत्यस्यां पृच्छायाम् "महिमान एवैषामेते । त्रयस्त्रिंशत्त्वेव देवाः" इति निर्ब्रुवन्ती श्रुतिरेकैकदेवताया

---

1. योग्येति । यागयुद्धादिषु संनिहितानां देवानां प्राक् बहुभिर्दृष्टत्वस्मरणात् योग्यत्वमनपलभ्यम् । एवमप्यनुपलम्भ इत्यर्थः ।

## शब्द इति चेन्न, अतः प्रभवात् प्रत्यक्षानुमानाभ्याम् १-३-२७

विरोध इति वर्तते । मा भूत् कर्मणि विरोधः, अनेकशरीरप्रतिपत्तेः । शब्दे तु वैदिके विरोधः प्रसज्यते ; अनित्यार्थसंयोगात् । विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यम् । ततो देवदत्तादिशब्दवत् इन्द्राद्यर्थजन्मनः प्राक्, विनाशादूर्ध्वं चेन्द्रादिशब्दानां वैदिकानामर्थशून्यत्वम्,

---

अनेकरूपतायां प्रमाणत्वेनोपन्यस्ता । अत्र त्रयस्त्रिंशतो देवानां प्राधान्यमितरेषां तद्गुणभावश्च प्रतीयते । "महिमान एवैषामेते" इति हि श्रूयते । महिमशब्दस्य शरीरवाचित्वेन व्युत्पत्त्यभावात् । 'एते' इति च न शरीरमात्रनिर्देशः । अपितु सशरीरचेतनव्यपदेशः । "कति देवाः" इत्युपक्रमस्थ-देवशब्दसामानाधिकरण्यात् एत इति पदस्य । न हि देवशब्दो देहमात्रपरः । न च देवशब्द-निर्दिष्टा देवा जीवान्तराणां शरीरभूताः । शरीरलक्षणस्य सर्वथाऽनुपपत्तेः । "कतम एको देवः" इति पृष्ट्वा "प्राणः" इति प्रतिवचनवाक्येऽपि प्राणशब्दो न प्रसिद्धप्राणपरः ; अपितु परमात्मपरः । अतोऽस्याः श्रुतेरेकैकदेवताया अनेकरूपताप्रतिपादकत्वानुपपत्तिमभिप्रेत्य अत्र सैषा श्रुतिरनुदाहृता ।

व्याख्यात्रन्तरैः, **अनेकप्रतिपत्तेरित्यस्य** शब्दस्य युगपदनेकार्थोपलंभसामर्थ्यपरत्वेन व्याख्या-तत्वेऽपि "आगच्छन्ति"इति श्रुत्यक्षरस्वारस्यानुगुणं अनेकशरीरप्राप्तिपरतया व्याख्यातम् ।

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्** ॥ शब्दशब्दं विशिनष्टि—**वैदिक** इति । अभिप्रेतं हेतुमाह **अनित्यार्थसंयोगादिति** । हेत्वर्थं विवृणोति—**विग्रहवत्त्वे हीति** । **अर्थशून्यत्वमनित्यत्वं** वेति । देवदत्तादिविनाशे देवदत्तादिशब्दस्येवानर्थकत्वम् ; अनित्यत्व-मनुच्चार्यमाणत्वम् । नित्यत्वे अर्थशून्यत्वम् ; विग्रहादिमदिन्द्राद्यर्थस्य यावच्छब्दभावित्वाभावात् । अर्थवत्त्वे अनित्यत्वं वा ; शब्दस्य यावदर्थभावित्वादर्थानां चानित्यत्वादित्यर्थः ॥ ननु कथमर्थशून्यत्वं शब्दानाम्? अतीतानागतभूतभविष्यदादयः शब्दा ह्यर्थसमकालत्वाभावेप्यर्थवन्त एव । न हि तेषां कदाचिदपि अर्थसमकालत्वसंभवः । न च तेषामर्थशून्यत्वम् । यथा विन्ध्यस्थेनोच्चारितो मेरुशब्दो देशविप्रकर्षेऽपि अर्थवान् भवति, एवमिन्द्रादिशब्दाश्चेन्द्रादिव्यक्तीनां कालविप्रकर्षे-ऽप्यर्थवन्तः कस्मान्न भवन्ति? क्वचित् कदाचिदर्थस्य प्रामाणिकत्वं हि शब्दस्यार्थवत्त्वनिबन्धनमिति ॥ उच्यते—अनभिज्ञा भवन्तो भाष्यहृदयस्य, य एवं परिचोदयन्ति । एतदपाकरणाय हि,'शब्दे तु वैदिके' इति विशेषितं सौत्रं पदम् । इहापि, इन्द्रादिशब्दानां वैदिकानामित्युक्तम् । अयमभिप्रायः—"इन्द्र आगच्छ हरिव आगच्छ" इत्यादिकं मन्त्रजातं वैदिककर्मसु विनियुज्यते । तत्र पूर्वमेवेन्द्रव्यक्तौ विनष्टायां इन्द्रशब्दवाच्यव्यक्तेः पाश्चात्ययज्ञकर्मण्यागमनाभावात् इन्द्र आगच्छेत्यादिशब्दानामुच्चार्यमाणानामर्थशून्यत्वं अनुच्चार्यमाणत्वं वा स्यादिति ॥ इन्द्रव्यक्त्यन्तरेणार्थव-त्त्वमिति चेत्—तद्व्यक्त्यन्तरं पूर्वव्यक्तिसमानाकारायुधपराक्रमविभूतिकं वा, न वा । प्रथममनुपपन्नम्, स्रष्टृस्वातन्त्र्यस्यानिवार्यत्वात् सरूपसृष्टिनियमानुपपत्तेः वैरूप्यसंभवात् । ततश्चान्याकारवाचिनामिन्द्रादि-शब्दानां प्रवृत्तावाकारान्तरस्य निमित्तत्वायोगादर्थशून्यत्वमवर्जनीयम् । द्वितीये तु या व्यक्तिरिन्द्र-

अनित्यत्वं वा वेदस्य स्यादिति चेत्—तन्न ; अतः प्रभवात्--अस्मादिन्द्रादिशब्दादेव पुनः पुनरिन्द्राद्यर्थस्य प्रभवात् ।

एतदुक्तं भवति-न हि देवदत्तादिशब्दवत् इन्द्रादिशब्दाः वैदिकाः व्यक्तिविशेषमात्रे संकेतपूर्वकाः प्रवृत्ताः। अपि तु स्वभावत एव गवादिशब्दवत् आकृतिविशेषवाचित्वेन । ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायाम्, अत एव वैदिकादिन्द्रशब्दात् मनसि विपरिवर्तमानात् अवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं सृजति ; यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात् तदाकारमेव घटम्--इति । कथमिदमवगम्यते ? प्रत्यक्षानुमानाभ्याम् । श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावत्, "वेदेन रूपे व्याकरोत् सतासती प्रजापतिः" इति ; तथा, "स भूरिति व्याहरत्, स

---

शब्दविषयत्वेनाभिमता स्यात्, तस्यां व्यक्तौ तच्छब्दप्रवृत्तिनिमित्तस्य कस्यचिदभावादेव तदवाचकतयाऽर्थशून्यत्वम् ॥ तथापि सृष्टृपुरुषबुद्ध्यधीनसंकेतवशात् प्रयोगश्चेत्, शब्दसंकेतगोचरस्यार्थस्य संकेतयितृपुरुषबुद्ध्यगोचरत्वे संकेतानुपपत्तेः देवदत्तादिशब्दानामिवेन्द्रादिशब्दानां पुरुषान्तरबुद्धिसापेक्षप्रवृत्तित्वाद्वेदस्यानपेक्षत्वलक्षणं प्रामाण्यं न स्यात् । यदि प्रधानकालपरमात्मशब्दवदेकैकव्यक्तिवाचित्वमिन्द्रादिशब्दानां स्यात्, तदा संकेतनैरपेक्ष्येण निरपेक्षत्वलक्षणंप्रामाण्यं स्यात् । अत इन्द्रादीनां प्रधानादीनामिव नित्यत्वाभावात् तन्नाशेऽर्थशून्यत्वानुच्चार्यमाणत्वयोरन्यतरप्रसंगो दुर्वार इति ॥

**नातः प्रभवा**दित्येतद्व्याचष्टे **तन्नेत्या**दिना । शब्दादर्थस्योत्पत्तिः कथम् ? ततश्चार्थशून्यत्वानित्यत्वपरिहारः कथमित्यत्राह **एतदुक्त**मिति । **धाता तदाकारमेवे**ति पदैः "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"इति श्रुतिः, "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" इति स्मृतिश्च स्मार्यते । धीस्थस्य शब्दस्य तत्तदाकृतिस्मारकतया हेतुत्वम् । तदेव दृष्टान्तेन विशदयति **यथे**ति । **मनसि विपरिवर्तमान**त्वम् आलोच्यमानत्वम् । **श्रुतिस्मृतिभ्यामि**ति । प्रत्यक्षग्राह्यो वेदः **प्रत्यक्ष**शब्दवाच्यः । स्वानुरूपवेदानुमापिका स्मृतिर**नुमान**शब्दवाच्येत्यर्थः । **सतासती**—चिदचिती रूपे **व्याकरोत्** विविधमकरोदित्यर्थः ।

**परैस्तु** अनित्याच्छब्दात् जगतः प्रभवानुपपत्तेरनित्यवर्णातिरिक्तो नित्यः शब्दस्फोट इति एकदेशिमतेनोपन्यस्य तद्व्युदस्य वर्णानां नित्यत्वं प्रसाध्य वर्णानित्यत्वेऽपि तद्गतजात्या संबन्धग्रहणादिकम्, जगतस्ततःप्रभवादिकं चोपपन्नमित्युक्तम्—तदयुक्तम्— इहानुपयोगाद्विरोधाच्च । तथा हि—न तावत् शब्दो जगदुपादानम् । ब्रह्मोपादानत्वाभ्युपगमात् । निमित्तत्वं च न दण्डचक्रादित् कारकतया ; किंतु बुद्धिस्थित्या अर्थस्मारकतया । तत्र च धर्माधर्मयोरनित्ययोरपि विषमजगदुत्पत्तौ निमित्तत्वमभ्युपगतम् । दण्डचक्रादीनां चानित्यानामपि निमित्तत्वं दृश्यते । किं कार्यमात्रस्यानित्यादुत्पत्तिरनुपपन्ना, उत जगद्रूपकार्यविशेषस्य ? न प्रथमः, दण्डचक्रादीनां घटादिकारणत्वदर्शनात् । न द्वितीयः, धर्माधर्मयोर्जगन्निमित्तत्वाभ्युपगमात् । एवं सत्तयोपकारकाणामप्यानित्यानां कारणत्वं यदा संभवति, तदा स्मर्यमाणतयोपकारकाणां शब्दानामनित्यत्वेऽपि कारणत्वसंभवः किंपुनर्न्यायसिद्धः । अतो नित्यत्वस्यानुपयोगात् स्फोटवादो न प्रस्तोतव्यः । दूरे तस्य निरसनीयता । वर्णानां च नित्यत्व-

भूमिमसृजत। स भुव इति व्याहरत्, सोऽन्तरिक्षमसृजत" इत्यादिः। वाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन् तत्तदर्थसंस्थानविशिष्टं तंतमर्थं सृष्टवानित्यर्थः। स्मृतिरपि, "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः" इति, "सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे" इति। संस्थाः=संस्थानानि; रूपाणीति यावत्। तथा, "नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति। अतो देवादीनां विग्रहवत्त्वेऽपि वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते॥ २७॥

---

समर्थनमत एव निष्फलम्। किंच नित्यानामपि वर्णानां न वर्णत्वाकारेणार्थवाचित्वम्; किन्त्वानुपूर्वीविशेषविशिष्टपदवाक्यरूपेण। विभुतया, नित्यतया च देशतः कालतश्च क्रमरहितानामानुपूर्व्याः उच्चारणनिबन्धनत्वात् तस्य च क्षणभंगुरत्वादर्थावबोधं प्रयोजनमपेक्ष्य वर्णनित्यत्वसाधनं तद्गतजात्यवस्थानवचनं च विफलम्। अर्थाववोधकरूपस्यानित्यत्वस्थितेः। यथोदकाहरणरूपं प्रयोजनमपेक्ष्य पृथिवीस्थिरत्वसमर्थनं पृथिवीत्वजात्यवस्थानवचनञ्च नोपयुज्यते; पृथिव्या घटरूपेण उदकाहरणसाधनत्वात्। पार्थिवावयवरचनाविशेषलब्धरूपस्य घटस्य चानित्यत्वात्—तद्वत्। किंच - वर्णानां नित्यत्वं नाम किमाप्रलयावस्थायित्वम्, उतोभयावधिराहित्यम्? प्रथमे पूर्वोक्तं वैयर्थ्यं स्थितम्। पृथिव्या आप्रलयावस्थायित्वसमर्थनस्य घटेनोदकाहरणेऽनुपयोगात्। द्वितीये शब्दगुणकाकाशसृष्टिप्रलयश्रुतिविरोधः। वर्णानित्यत्वेऽभ्युपगम्यमानेऽपि तद्गतजात्यभ्युपगमश्च विरुद्धः। कृत्स्नव्यक्त्यनवस्थाने जात्यवस्थानानुपपत्तेः। महाप्रलये कतिपयव्यक्त्यवस्थानं तु कारणवाक्यविरुद्धम्। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति हि श्रुतिः। अवधारणद्वितीयनिषेधौ कथं कतिपयव्यक्त्यवस्थानं जात्यवस्थानं च सहेते। किंच वर्णनित्यत्वादिकं किं बोधकत्वोपयोगितया समर्थ्यते, किंवा जगतः प्रभवोपयोगितया? प्रथमे वर्णनित्यत्वादिकं सर्वमपि, "अथातो ब्रह्मजिज्ञासा" इत्यत्रैव वक्तव्यम्। अनवबोधकत्वस्य शास्त्रानारंभहेतुत्वात्। द्वितीये च जन्मादिसूत्रैः तत् सर्वं समर्थनीयम्; लक्षणसिद्ध्युपयोगित्वात्। किञ्च वर्णनित्यत्वादिकं सर्वाधिकरणेषु यथाकथंचित् घटयितुं शक्यते। अत एवैतदधिकरणासाधारणार्थानुपयोगाद्विरोधाच्च अत्र वर्णनित्यत्वादिप्रपञ्चनमयुक्तम्।

**प्रत्यक्षानुमानाभ्या**मिति सौत्रपदमन्यथा व्याख्यातम्। घटादिनिर्माणस्य शब्दपूर्वकत्वस्य प्रत्यक्षसिद्धत्वात् जगत्सृष्टावपि एतदनुमानादिति। तथासति न तयोः समुच्चित्य हेतुत्वं एकसाध्ये सिद्ध्यति। जगत्सृष्टेः शब्दपूर्वकत्वे अनुमानस्यैवाव्यवधानेन प्रवृत्तेः। प्रत्यक्षस्य व्याप्तिग्रहणौपयिकत्वेन तच्छेषभूतत्वात्। ततश्च प्रत्यक्षानुमानाभ्यामिति द्विवचनं क्लिष्टं स्यात्। न हि दण्डपरशुभ्यां वृक्षश्छिद्यत इति व्यपदिश्यते; दण्डस्य परशूपकरणत्वात्। अतः प्रत्यक्षमूलानुमानादिति निर्देष्टव्यम्। तथाच न निर्दिष्टम्। यदि क्वचिदेवमपि दृष्टम्, तद् गत्यभावात् स्यात्। इह च गत्यन्तरसंभवादयुक्तम्। कल्पादिकालीनसृष्टेः शब्दपूर्वकत्वं सृष्टित्वादनुमातुं न शक्यम्; मूककर्तृकघटादिसृष्टौ हेतोरनैकान्त्यात्। अतो यथोक्त एवार्थः॥ २७॥

## अत एव च नित्यत्वम् १-३-२८

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वम्, तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिः, तत एव "मन्त्रकृतो वृणीते", "नम ऋषिभ्यो मन्त्रकृद्भ्यः", "अयं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति" इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वऋषित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते। एभिरेव, "मन्त्रकृतो वृणीते" इत्यादिभिर्वेदशब्दैः तत्तत्काण्ड-सूक्त-मन्त्र-कृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिः तानेव तत्तन्मन्त्रादिकरणे नियुङ्क्ते। तेऽपि प्रजापतिना आहितशक्तयः तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्ववसिष्ठादिदृष्टान्, तानेव मन्त्रादीन् अनधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति। अतश्च वेदानां नित्यत्वम्, एषां च मन्त्रकृत्त्वमुपपद्यते॥ २८॥

---

एवमर्थद्वारकमनित्यत्वमाशंक्य परिहृतम्; अथ शब्दद्वारकमनित्यत्वं परिह्रियते—

**अत एव च नित्यत्वम्**॥ उक्तसंगतिः "मन्त्रकृतो वृणीते" इत्यादिनाऽभिप्रेता। **यत एवेति**। अर्थवादानां प्रतीयमानार्थे तात्पर्यमस्ति चेत्, "मन्त्रकृतः" इत्यादिवाक्येष्वपि मन्त्रकृत्त्वे तात्पर्यसंभवादनित्यत्वमिति शंका; इयमपीन्द्रादिशब्दानामाकृतिवाचित्वात् तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकतत्तदर्थसृष्ट्या परिहृतेत्यर्थः। उक्तशंकापरिहारपरं सूत्रं ये न व्याचक्षते, तेषां मते सूत्रवैयर्थ्यं स्फुटम्। शंकायाः परिहृतत्वं स्पष्टयति **एभिरेवेति**। मन्त्रकृत्त्वं नाम अनधीत्यैव मन्त्राणामस्खलितक्रमस्वरवर्णतया दर्शनम्। तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथापूर्वं सृष्टैः तत्तन्नामरूपभाग्भिः प्रवाहपरंपरया आगतैर्वसिष्ठादिभिः क्रियत इति वेदनित्यत्वमन्त्रकृत्त्वाविरोध इत्यर्थः। **नियुंक्ते** मन्त्रदर्शनानुगुणं तपश्चरतेति नियुंक्त इत्यर्थः। **अस्खलितान् पश्यन्ति**। पूर्वकल्पाधीतवेदमन्त्रत्वप्रत्यभिज्ञापूर्वकं पश्यन्ति; न त्विदम्प्रथमतयेत्यर्थः। श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्राणामनुष्ठानं दर्शयति, "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा—स्थाणुं वर्च्छति, गर्तं वा पद्यते, प्र वा मीयते, पापीयान् भवति, यातयामान्यस्यच्छन्दांसि भवन्ति। अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति, श्रेयांश्च भवति, अयातयामान्यस्य छन्दांसि भवन्ति। तस्मादेतानि मन्त्रेमन्त्रे विद्यात्" इति। शौनकादिभिश्च स्मर्यते, "दाशतय्यो मधुच्छन्दप्रभृतिभिर्दृष्टाः" इति। उक्तं च भगवता व्यासेनैव, "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा" इति। एवमादि चात्र प्रमाणं द्रष्टव्यम्॥ नन्वितिहासानामप्यपौरुषेयत्वं वेदस्य वा पौरुषेयत्वं प्रसजेत्; अस्मिन् वचने वेदानामितिहाससहपाठेन तुल्ययोगक्षेमत्वादिति चेन्न—इतिहासशब्देन वेदशब्दान्तर्गतानां पुरावृत्तानां विवक्षितत्वात्। यथा, "वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभूवुः॥", "पृथुर्वैन्योऽभिषिच्यते", "उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ" इत्यादीनि पुरावृत्तानि हि श्रूयन्ते। अतश्च सेतिहासान् इत्यनेन वेदानामर्थज्ञानेन सह लब्धत्वमुक्तं भवति। अतो न प्रबन्धविशेषवाचकोऽयमितिहासशब्दः। अंगेषु धर्मशास्त्रादिषु च सत्स्वपीतिहासमात्रोपादानस्य प्रयोजनाभावात्।

अथ स्यात्—नैमित्तिकप्रलयादिषु इन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम ; प्राकृतप्रलये तु स्रष्टुः प्रजापतेः, भूताद्यहङ्कारपरिणाम-शब्दस्य च बिनष्टत्वात् कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते ? कथन्तरां विनष्टस्य वेदस्य नित्यत्वम् ? अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमेऽपि लोकव्यवहारस्य प्रवाहा-नादिताऽऽश्रयणीयेति । अत्रोत्तरं पठति—

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च १-३-२९**

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात् समाननामरूपत्वादेव न कश्चिद्विरोधः । तथा हि—स भगवान् पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत् स्मरन्, "बहु स्याम्"

---

तथान्यत्र—"ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ।" इति वेददर्शनप्रदानं च स्मर्यते । काठकादिशब्दश्च कल्पादावृषिभिस्तपसा लब्धवेदभागानां प्रवर्तितत्वमुत्तभ्नाति । न तावत् कठेनादौ प्रोक्तं काठकमिति वेदपौरुषेयत्ववादिनोप्यभीष्टम् ; ईश्वरप्रणीतत्वविरोधात् ॥ अथ काठकादिसमाख्याः प्रवचननिमित्ताः ॥ न, इदानींतनप्रवक्तृसंज्ञाभिश्च व्यपदेशप्रसंगात् । काठकादिभ्यः पूर्वपुरुषसंज्ञाभिश्च समाख्यानप्रसंगात् ॥ पूर्वे त्वनेकशाखाध्यायिनः, कठादयस्त्वेकशाखाध्यायिन इति तन्नाम्ना समाख्यानमिति न वाच्यम्; सर्वेषां तत्पूर्वपुरुषाणां बहुशाखाध्यायित्वनियमस्यामानकत्वात् । दृष्टविपर्ययेण कल्पनानुपपत्तेश्च ॥ अथ कल्पादिषु प्रथमप्रवचननिबन्धनाः कठादिसमाख्याः ॥ तन्निबन्धनत्वं च जगन्नित्यत्ववादेऽनुपपन्नम् ; प्रथमप्रवचना-संभवात् । अतः कठादिसमाख्यान्यथानुपपत्तिश्च महर्षीणां तपसा दृष्टवेदभागत्वे प्रमाणम् । एवम्, "यो वै वेदांश्च प्रहिणोति", "ब्रह्म स्वयंभु अभ्यानर्षत्" इत्यारभ्य "त एतं ब्रह्मयज्ञ-मपश्यन्", "वाचा विरूप नित्यया", "वेदेन रूपे व्याकरोत्", "अनादिनिधना ह्येषा", "याश्च वेदेषु दृष्टयः", "वेदशब्देभ्य एवादौ", "युगान्तेऽन्तर्हितान् वेदान्" इत्यादिवचनैः. आद्ये कल्पे प्रथमं वेदोच्चारणं यथापूर्वकमविशेषविशिष्टं वेदोच्चारणत्वात् इदानीन्तनवदित्यादिभिरनुमानै-उपपत्तिभिश्च बेदनित्यत्वस्याप्रकम्प्यत्वात् तदनुरोधेन मन्त्रकृत्त्वा(दा?)दिपदानि अस्मारस्येन व्याख्यातानि ॥

उत्तरसूत्रं शंकयाऽवतारयति—**अथस्यादि**ति । महाप्रलये तत्तदर्थस्मृतिपूर्वकस्रष्टृसंप्रदायप्रवर्तकस्य प्रजापतेः तत्तत्प्रवर्त्यस्य शब्दस्य चाभावान्न शब्दनित्यत्वमिति प्रपञ्चप्रवाहानादित्वमाश्रयणीयमिति चोद्यपरिहारार्थमिदं सूत्रमित्यर्थः ।

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च** ॥—**पूर्वोक्तात् समाननाम-रूपत्वादेवे**ति । पूर्वसूत्रद्वयोक्तया तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विकया तत्तदाकृतिविशिष्टवस्तुसृष्ट्या समाननामरूपत्वमुक्तमिति फलितम् । अतः **पूर्वोक्ता**दित्युक्तम् । **एव**कारेण सूत्रस्थः चशब्दोऽवधारणार्थ इति गम्यते । समाननामरूपत्वमनुपपन्नम्, तत्तच्छब्दस्मृतिपूर्वकतत्तदर्थस्रष्टुरभावादित्यत्राह **तथाही**ति । **स** इति श्रुतिप्रसिद्धिं द्योतयति । **भगवा**निति ज्ञानशक्त्यादिवैचित्र्यम् । **भगवत्पुरुषोत्तम**-शब्दाभ्याम्, "सर्वव्यापी च भगवान्", "महान् प्रभुर्वै पुरुषः" इत्यादिश्वेताश्वतरवाक्यं स्मारितम् ।

इति संकल्प्य, भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य, महदादि ब्रह्माण्डं (ण्ड?) हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा, वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितान् आविष्कृत्य हिरण्यगर्भायोपदिश्य , पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतयाऽवतस्थे । अतो यथोक्तं सर्वमुपपन्नम् ।

एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च, यत्—पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्य[माण]त्वम् ; तदस्मासु सर्वेश्वरेऽपि समानम् । इयांस्तु

---

**शक्तिमात्रावशेष**मिति । विद्यमानस्यैव भोग्यभोक्तृवर्गस्य भोग्यत्वाद्यनुगुणशक्तिरस्ति, न तु तत्कार्यं भोक्तृत्वादिकमिति भावः । चतुर्मुखादेरेव स्वतन्त्रस्रष्टृत्वभ्रमनिरासायाह **स्वयमपी**ति । "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्" इति चतुर्मुखवचनम्, "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते"इति भगवद्वचनम्, "तदनुप्रविश्य"इति सामान्यविषयां श्रुतिं च प्रमाणमभिप्रेत्याह **तदन्तरात्मतये**ति । अनेन चतुर्मुखपरमात्मनोः कर्तृत्ववचसामैककण्ठ्यसिद्धिः । **सर्वमुपपन्न**मिति । समाननामरूपत्वतत्कृतवेदनित्यत्वतत्सार्थकत्वानि उपपन्नानीत्यर्थः । शब्दस्योत्पत्तिविनाशाभ्युपगमेऽपि कथं वेदनित्यत्वसिद्धिरित्यत्राह **एतदेव चे**ति । अक्षराणां पदानां वा नित्यत्वं वेदनित्यत्वं चेत्—कालिदासादिवाक्यानामपि नित्यत्वप्रसङ्गः ॥ वर्णानुपूर्वीनित्यत्वं चेत्, तदप्यनुपपन्नम् । युगपत् सर्वप्रलयमनभ्युपगच्छद्भिर्वर्णानां विभुत्वाभ्युपगमात् न देशत आनुपूर्वी संभवति । नित्यत्वाभ्युपगमाच्च न कालतः । तस्मादुच्चारणगतः क्रम इति तैरभ्युपेत्यम् । उच्चारणं तु उत्पत्तिविनाशवदेवेति क्रमनित्यत्वमप्यनुपपन्नम् । तस्मात् पूर्वपूर्वोच्चारणक्रमविशेषो यादृशः; तादृशेनैव क्रमेणोत्तरोत्तरमुच्चार्यत्वं नित्यत्वमित्यस्मदभिमतमेव तैरपि स्वीकर्तव्यमित्यभिप्रायेण**एतदेवे**त्युक्तम् ॥

ननु पूर्वान्ताभावः पुरुषकृतत्वाभावो वा स्यादपौरुषेयता । उत्तरान्ताभावः, उभयान्तविरहो वा नित्यता । क्रमविशेषेणोच्चार्यत्वं तु वेदस्य स्वरूपम् । कथमेषामेकत्वम् ? सत्यम् । द्विविधावधिवैधुर्यरूपनित्यत्वमेव वेदे विवक्षितम् । तथापि पूर्वावधिधूननं प्राधान्येन सिषाधयिषितम् ; स्वतन्त्रपुरुषविश्रान्तेर्निरसनीयत्वात् ; तन्निरसने च प्रतिकल्पं तथाभावेनोत्तरावधिवैधुर्यसिद्धेश्च । अतो वेदस्य नित्यत्वं अपौरुषेयत्वं चैकमिति फलितम् ॥ तच्चापौरुषेयत्वं नित्यत्वं वा वेदक्रमविशेषविशिष्टोच्चारणभावत्वे पर्यवसितम् ; अपूर्वक्रमविशिष्टोच्चारयितृपुरुषसद्भावातिरेकेणानित्यत्वपौरुषेयत्वयोरभावात् ; नित्यत्वापौरुषेयत्वयोस्तद्विपरीतरूपत्वाच्च । यद्वा—तेनैव क्रमेण सर्वदोच्चार्यमाणत्वमपौरुषेयत्वनित्यत्वयोः साधकमिति हेतुहेतुमद्भावादभेदव्यपदेशः । एवमेव भगवताऽप्युच्चार्यमाणत्वात् युगपत् सर्वोत्पत्तिसंहारेऽपि नित्यत्वमुपपन्नमित्यभिप्रायेणाह **तदस्मास्वि**ति । सर्वेश्वरोऽपि पूर्वक्रमविशेषं स्मृत्वोच्चारयति चेत्, तत्संस्कारोद्बोधात् पूर्वमज्ञत्वमन्याधीनज्ञानत्वं च स्यादित्यत्राह **इयांस्त्वि**ति । अस्माकं स्वोच्चारणजनितसंस्कारानपेक्षोच्चारणमध्यापयितृसापेक्षम् ; अध्यापयितृनिरपेक्षोच्चारणं स्वोच्चारणजनित-

विशेषः—संस्कारानपेक्षमेव स्वयमेवानुसंधत्ते पुरुषोत्तमः।

कुत इदं यथोक्तमवगम्यत इति चेत्, तत्राह—दर्शनात् स्मृतेश्च। दर्शनं तावत्,

---

संस्कारसापेक्षम्। एतदुभयं व्यावर्तयति **संस्कारानपेक्षं स्वयमेवेति**। स्वयमेवेत्यध्यापकोच्चारण-जनितसंस्कारापेक्षाव्यावृत्तिः। यद्वा **संस्कारानपेक्षम्**—अध्यापकोच्चारणस्वोच्चारणजनितसंस्कारानपेक्ष-मित्यर्थः। स्वतन्त्रस्येश्वरस्य क्रमान्तरापरिकल्पनेन पूर्वक्रमेणैवोच्चारणे को नियामक इत्यत्राह **स्वयमेवेति**। वेदाख्यं शब्दराशिं पूर्वपूर्वक्रमविशिष्टमेवोच्चारयेयम्, न तु क्रमान्तरं कल्पयेयमिति, बहुस्यामितिवत् स्वसंकल्पादेव क्रमान्तरमपरिकल्पयन् यथापूर्वमनुसन्धत्ते; न त्वन्यपरतन्त्रतयेत्यर्थः। **अनुसन्धत्ते** जानातीत्यर्थः। स्मरणार्थत्वे संस्कारानपेक्षत्वव्याघातात्॥ ननु "संस्कारास्तेऽभवन् वेदाः"(रा.यु.१२०) इति स्मृत्या वेदानामीश्वरस्मृतिविषयत्वमवगम्यते॥ नैवम्; संस्कारशब्दस्य स्मृतिविषयवाचित्वाभावात्॥ स्मृतेः संस्कारकार्यतया तद्विषयो लक्षितलक्षणया प्रतिपाद्यत इति चेत्, तर्हि प्रमाणविरुद्धलक्षणायाः प्रमाणानुसारिणी लक्षणा बलीयसी। ईश्वरस्य च स्वतः सर्वदा सम्यक् सर्वार्थसाक्षात्कारित्वम्, "यः सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"-इति श्रुतिसिद्धम्। ज्ञानस्य स्वाभाविकत्वं इन्द्रियादिनैरपेक्ष्यम्। विविधत्वं विषयवैविध्यात्। परत्वं याथार्थ्यापरोक्षत्वरूपप्रकर्षः। अतः तदनुगुणया लक्षणया भवितव्यम्। ततश्च 'संस्कारा' इति संस्कारबोध्याः (?) यथापूर्वं बुद्धिस्था इत्यर्थः। यद्वा संस्कारवत् स्वस्मिन्नवस्थिता इत्यर्थः।'

नन्वीश्वरस्य सर्वज्ञतया सर्वा अप्यानुपूर्व्यः सदा बुद्धिस्था इति सर्ववाक्यानामनाद्यानु-पूर्वीविशिष्टतया वेदत्वं स्यात्; पौरुषेयापौरुषेयविभागश्च न स्यात्॥ नैवम्; ईश्वरस्य सार्वज्ञ्यादेव सर्वविभागसिद्धेः। सर्वासामानुपूर्वीणां तद्बुद्धिस्थत्वेऽपि यादृशक्रमविशिष्टशब्दराशेर्याथार्थ्यं स्वरादिनियमवत्त्वं देशकालादिनियमवत्तयैवोच्चार्यत्वं च, तमेव शब्दराशिं वेदाख्यं मन्वानः तादृशक्रम-विशिष्टं तमेव प्रतिब्रह्माण्डसर्गं प्रमाणतया प्रवर्तयति; न त्वन्यच्छब्दजातम्। अतो याथार्थ्यसनिय-मकोच्चार्यत्वाभ्यां वेदावेदविभागसिद्धिः। सर्वदा पूर्वपूर्वक्रमपरामर्शसापेक्षोच्चारयितृकत्वं, तन्निरपेक्ष-वक्तृकर्तृकत्वं चेति पौरुषयापौरुषेयवैषम्यमिति न काचिदनुपपत्तिरिति।

**दर्शनात्स्मृतेश्चेति** सौत्रपदद्वयस्य शंकामाह **कुत इति**। युगपत् सर्वसृष्टौ भगवतो यथापूर्ववेदसंप्रदायप्रवर्तकत्वे च श्रुतिस्मृती दर्शयति **दर्शनं तावदित्यादिना**। उदाहृतश्रुतिस्मृति-वाक्येषु सर्वेषु चतुर्मुखस्य भगवता स्रष्टृत्वं दृश्यते। वेदोपदेशस्तु केषुचिन्न दृश्यते। तत्र अनुक्तमन्यतो ग्राह्यमिति न्यायात् वेदोपदेशोऽपि सृष्ट्युपयोगित्वात् सिद्ध्यतीति भावः। संप्रदायप्रवर्तकसद्भावमात्रे प्रमाणं वा स्यात् तद्वचनजातम्। उदाहृतवचनजातं प्रदर्शनार्थम्। ईदृशानि वचनान्तराण्यपि अस्मिन्नर्थे द्रष्टव्यानि। यथा, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः।", "यथर्तुष्वृतुलिंगानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु"इति श्रुतिस्मृत्योर्वेदान्तसारे दर्शितत्वात्। "हिंस्राहिंस्रे मृदुक्रूरे

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । स्मृतिरपि मानवी, 'आसीदिदं तमोभूतम्" इत्यारभ्य, "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपा(वा)सृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व-

धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात् तत् तस्य रोचते" इत्यनेन पूर्वसृष्टिसारूप्यं प्रतीयते । किंच "तथाभिमानिनो नीतास्तुल्यास्ते सांप्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च । यस्मिन् यो यः पुरा क्लृप्तो यस्मिन् देशे यथास्थितिः । तस्यतस्यानुरूप्येण प्रजासर्गः प्रवर्तते । "ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः" इत्यादि । किंच "अग्निर्वा अकामयत, अन्नादो देवानां स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् । ततो वै सोऽन्नादो देवानामभवत्", "अग्निर्वै देवानामन्नादः" । तथा, "इन्द्रो वा अकामयत ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपत महाव्रीहीणाम् । ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत्" इत्यादिना पूर्वपूर्वाग्नीन्द्रादियजनेन पाश्चात्याग्नीन्द्रादीनामैश्वर्यप्राप्तिरित्यवगम्यते । प्रथमान्ताग्न्यादिशब्दा यजमानं चेतनं सिषाधयिषितरूपेण निर्दिशन्ति । इदानीमिन्द्रः पूर्वस्मा इन्द्राय निरवपदित्यर्थः । अतः पूर्वपूर्वाग्नीन्द्रादिसरूपतया उत्तरोत्तराग्नीन्द्रादिसृष्टिरिति निश्चीयते । किंच कर्मविधानमिष्टप्राप्त्यनिष्टनिवृत्तिफलम् । पुरुषप्रवृत्तिश्च सुखलिप्सादुःखजिहासामूला । रागद्वेषौ च दृष्टानुमितश्रुतसुखदुःखतत्साधनभूतभोग्यतदुपकरणतत्स्थानविषयौ ; न त्वप्रतिपन्नविषयौ । अतः पूर्वकल्पावगतेन्द्रादिपदकामनासंचितधर्मफलभोगानुगुणोत्तरोत्तरसृष्टिश्च पूर्वसृष्टिसजातीया भवितुमर्हति । अतो वेदनित्यत्वं नाम प्रत्युच्चारणं पूर्वपूर्वक्रमसुसदृशानुपूर्वीविशिष्टतयोच्चार्यमाणत्वम् । अर्थनित्यत्वं नाम प्रतिसर्गमिन्द्राद्यर्थानां पूर्वपूर्वार्थाकारसुसदृशसंस्थानविशिष्टत्वम् । तथाविधार्थप्रतिपादकत्वमेव वेदस्य नित्यार्थसंयोगः ।

ननु प्रलयदशायामेकस्य प्रतिभातो वेदः कृतकादविशिष्टः स्यात् ; एकस्य प्रतिभातः कुमारसंभवो हि कृतक इति चेत्—उच्यते—कृतकादविशिष्टत्वं वदतः कोऽभिप्रायः ? एकस्य प्रतिभातत्वं कृतकत्वव्याप्तमिति वा, कृतकत्वशंकाजनकमिति वा । न प्रथमः ; बहुषु सुप्तेषु जाग्रत एकस्य प्रतिपन्ने स्वात्मनि व्यभिचारात् । न ह्यात्मा कृतकः ॥ एकस्य प्रतिभातवाक्यत्वं विवक्षितमिति चेत्—किं एकस्य प्रतिभातत्वं नाम एकस्य प्रतिपन्नत्वम्, उत एकस्य प्रथमप्रतिपन्नत्वम् ? न प्रथमः ; दृष्टान्तस्य साधनविकलत्वात् । न हि **कुमारसंभवो**ऽस्माकमन्येषां च कदाचिदप्रतिपन्नः । द्वितीये हेत्वसिद्धिः । पक्षीकृतेषु वेदेषु ह्येकस्य प्रथमप्रतिपन्नत्वं नास्ति ; सर्गप्रवाहस्यानादित्वात् । यस्य कल्पस्यादौ प्रतिभानं प्रथममिति विवक्षितम्, ततः पूर्वकल्पेऽपि तेषामेव वेदानां प्रतिभातत्वात् प्राथम्यासिद्धिः । तेषामेव वेदानां तत्तत्पूर्वकल्पेऽपि प्रतिभातत्वं वेदोच्चारणत्वेन लिंगेन सिद्धम्—विगीतं वेदोच्चारणं पूर्वाध्ययनसिद्धक्रमविशिष्टविषयं वेदोच्चारणत्वात्, संप्रतिपन्नवदिति । न च वाच्यम्—वेदाः कृतकाः, कल्पादावेकस्य प्रतिभातत्वात् ; चतुर्मुखवक्तृकप्रथमवाक्यवदिति ;

लोकपितामहः" इति। तथा पौराणिकी, "तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत। तस्मिन् पद्मे महाभाग! वेदवेदाङ्गपारगः। ब्रह्मोत्पन्नः, स तेनोक्तः, प्रजाः सृज महामते।", तथा, "परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः" इति। तथा "आदिसर्गमहं वक्ष्ये" इत्यारभ्योच्यते—"सृष्ट्वा नारं तोयमन्तस्स्थितोऽहं येन स्यान्मे नाम नारायणेति। कल्पेकल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजं स्यात् यथाऽब्जम्॥ एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः। उत्पन्नः; स मया चोक्तः प्रजाः सृज महामते" इति॥

---

दृष्टान्तस्य साधनविकलत्वात्। चतुर्मुखस्य प्रथमवाक्यं हि स्वतः सर्वज्ञेन तदन्तरात्मना ज्ञायते॥ कल्पादौ एकक्षेत्रज्ञस्य प्रतिपन्नत्वं हेतुरिति चेन्न; असिद्धेः। असिद्धिश्च, यौगपद्येन प्रवाहतश्चांड-बाहुल्येन चतुर्मुखतत्सृष्टमहर्षिबाहुल्यात्॥ एकस्मिन् ब्रह्माण्ड इति हेतुर्विशेष्यत इति चेत्—तर्ह्येकस्मिन् गृहे दिवसादावेकस्य प्रतिपन्नत्वादुपाध्यायवक्तृकप्रथमवाक्यवत् वेदस्य तदुक्तत्वं किं न स्यात्॥ देशकालान्तरवर्तिपुरुषप्रतिपन्नत्वात् तेनाप्युपाध्यायेन पूर्वसिद्धत्वेन प्रतिपन्नत्वाच्च तद्वक्तृकत्वस्य बाधितत्वादिति चेत्—तुल्यम्। तथा हि—एकस्मिन्नण्डे कल्पादावेकक्षेत्रज्ञप्रतिपन्नत्वरूपहेतुसिद्धिः कुतः?॥ "यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेरिति चेत्—तर्हि सैव श्रुतिर्वेदानां पूर्वसिद्धत्वमवगमयतीति हेतुग्राहकप्रमाणेन बाधितविषयता स्यात्॥ एकस्य प्रतिभातवाक्यत्वं कृतकत्वशंकावहमिति चेत्, न; आप्ततया परिज्ञातेन तेनैव पुरुषेणानादिसिद्धतयोपदिष्टवाक्ये कृतकत्वशंकानुदयात्। ईश्वरेण प्रथमसृष्टाश्चतुर्मुखादयः प्राचीनसुकृतातिशयादीश्वराप्त्यवगमानुगुणज्ञानान्विता एव जायन्त इति न शंकोदयः। नन्वीश्वरसिद्धौ वेदसंप्रदायाविच्छेदसिद्धिः; तत्सिद्धौ वेदनित्यत्वसिद्धिः; तत्सिद्धौ वेदप्रामाण्यसिद्धिः; तत्सिद्धावीश्वरसिद्धिरिति चक्रकमिति॥ एवं तर्हि पूर्वमीमांसायामपि वेदप्रामाण्यसमर्थनपरे प्रथमेऽध्याये प्रथमे पादे बाह्यहेतूत्थाप्रामाण्यं निराकृत्य त्रिपाद्या अवान्तर-हेतूत्थाप्रामाण्यनिरासे क्रियमाणे त्वदुक्तं प्रसजेत्। तथाहि—"संदिग्धे तु वाक्यशेषात्" (*1-4-29.*) इत्यादिषु, "अक्ताश्शर्करा उपदधाति" इत्यादिवेदवाक्यानामञ्जनसाधनद्रव्यविशेषानुपस्थापनेन सन्देहलक्षणाप्रामाण्ये पूर्वपक्षिणोक्ते, तेजो वै घृतमित्यादिवाक्यशेषावगतद्रव्यविशेषसिद्ध्या तन्निरासः सिद्धान्तिना क्रियते। तत्र तेजोवैघृतमित्यादिवाक्यशेषप्रामाण्यसिद्धौ "अक्ताः शर्कराः" इत्यादिवाक्य-विशेषस्य सन्देहलक्षणाप्रामाण्यनिराससिद्धिः, तत्सिद्धौ कृत्स्नवेदप्रामाण्यसिद्धिः, तत्सिद्धौ कृत्स्नवेदान्तर्गत-वाक्यशेषप्रामाण्यसिद्धिरिति चक्रकं प्रसज्यत एवेति॥ न प्रसज्यते। प्रथमे पादे शब्दस्य स्वतः प्रामाण्यसमर्थनात् अपवादहेतोश्चापूर्वकमविशेषविशिष्टोच्चारयितृविशेषरूपकर्तुः स्मर्तव्यत्वे सति अस्मर्यमाण-त्वलक्षणयोग्यानुपलब्धिनिरस्तत्वाद्वेदप्रामाण्यसिद्धौ, तदन्तर्गतवाक्यविशेषस्याभिधानवृत्तिः प्राक्सिद्धप्रामाण्य-विरोधिनीव प्रतिभातीति शंकामात्रस्य, वाक्यशेषादिकृत्स्नपदान्वितवाक्यपर्यालोचनान्नाभिधानवृत्तिस्तथा प्रतिभातीति परिहारमात्रस्य क्रियमाणत्वादिति चेत्—तदस्मत्पक्षेऽपि समानमिति परितुष्यतामायुष्मता। ये तु "अक्ताः शर्कराः" इत्यादिवाक्यमात्रस्याप्रामाण्यशंका, न तु कृत्स्नवेदस्य; तावन्मात्रस्य परिहारश्चेति वदन्ति, तन्मतेऽपि इयमेव प्रतिबन्दी, "अक्ताः शर्कराः" इत्यादिकतिपय-

**अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद् ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥ २६ ॥**

**इति देवताधिकरणम् ॥ ७ ॥**

## २५ मध्वधिकरणम् १-३-८

मध्वादिष्वसम्भवात् अनधिकारं जैमिनिः ॥१।३।३०॥

**ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम् ; इदमिदानीं चिन्त्यते-येषूपासनेषु याः देवता एवोपास्याः, तेषु तासामधिकारोऽस्ति, नेति । किं प्राप्तम् ? नास्त्यधिकारस्तेषु मध्वा-**

---

वाक्याप्रामाण्येन कृत्स्नाप्रामाण्यशंका हि दुर्निवारा ; वेदत्वाविशेषात् । "अक्ताःशर्कराः"इति वाक्याप्रामाण्यनिरासे, कृत्स्नवेदाप्रामाण्यशंकानिवृत्तिः, तन्निवृत्तौ "तेजोवैघृतम्" इत्यादिवाक्यशेषाप्रामाण्यशंकानिवृत्तिः, तन्निवृत्तौ अक्ताः शर्कराइत्यादिवाक्यस्य सन्देहलक्षणाप्रामाण्यनिवृत्तिरिति परिहारस्तुल्यः । अधिकरणार्थमुपसंहरति **अत** इति ।

**मध्वादिष्वसंभवादनधिकारं जैमिनिः** । पूर्वाधिकरणे उपासनसामान्ये देवतासामान्यस्याधिकारोऽस्तीत्युक्तम् । अथोपासनविशेषे देवताविशेषस्याधिकारो निरूप्यत इति संगतिः । इममर्थमाह **ब्रह्मविद्यायामित्यादिना** । इदमधिकरणं न मधुविद्यामात्रविषयम् ; अपित्वीदृशसर्ववाक्यविषयम् । अत एव हि **मध्वादिष्विति आदि**शब्दप्रयोग इत्यभिप्रेत्योक्तम् **येषूपासने**ष्विति । मधुविद्यादिषु या देवता उपास्या, तासु किं तस्या अधिकारोऽस्ति, नेति विचारः । तदर्थम्, 'य एतदेवममृतं वेद' इति यच्छब्दः किं संकोचेन वस्वादिव्यतिरिक्तविषयः, उतासंकुचितवृत्तिरिति ; किं तस्या देवतायाः तद्विद्योपसंहारसामर्थ्यमस्ति, नेति ; किं मधुविद्यायां वस्वादिदेवतामात्रमुपास्यम्, उत तदवस्थं ब्रह्मेति ; किं वसुत्वमात्रं मधुविद्याफलम्, उत ब्रह्मप्राप्तिपर्यन्तं वसुत्वमिति । यदा वसुत्वमात्रं फलम्, तदा वस्वादिदेवतामात्रस्योपास्यत्वेन तस्या देवतायास्तद्विद्योपसंहारसामर्थ्याभावात् यच्छब्दस्य तद्व्यतिरिक्तविषयत्वात् तत्रानधिकार इति । यदा ब्रह्मप्राप्तिपर्यन्तं वसुत्वं फलम्, तदा तदवस्थब्रह्मण उपास्यत्वेन तद्विद्योपसंहारसामर्थ्यात् यच्छब्दस्य तद्व्यतिरिक्तविषयत्वाभावात् तस्या देवतायास्तस्यां विद्यायामस्त्यधिकार इति ।

ननु तदवस्थब्रह्मण उपास्यतया सिद्धान्तश्चेत्, प्रतर्दनविद्यान्यायेन गतार्थत्वादारम्भवैयर्थ्यम् ॥ नैवम् ; तत्र प्रतिपाद्यविशेषस्यैव निरूप्यत्वात् । न हि इन्द्रस्य तस्यां विद्यायामधिकारोऽस्ति, नेति निरूपितम् । अतोऽधिकारनिरूपणार्थमारम्भणीयत्वमिति । किञ्च तत्रोपक्रममात्रे जीवलिङ्गम्, अवयविनो महावाक्यस्य परमात्मलिंगभूयस्त्वात् अवयविविरोधे अवयवमात्रस्य दुर्बलत्वात् राद्धान्त उक्तः ; इह तु उपसंहारमात्रे परमात्मलिङ्गम्, न तु महावाक्यरूपेऽवयविनि । अतोऽधिकरणमारम्भणीयम् ॥ नन्वेवमुपक्रमापेक्षया उपसंहारदौर्बल्यात् राद्धान्तानुपपत्तेरनारम्भणीयता स्यात् ॥ नैवम् । उपक्रमोपसंहारयोर्मिथोविरोधेनोपक्रमावगतार्थपरित्यागे प्राप्ते हि तत्प्राबल्येनोपसंहारबाधः । इह तूपक्रमावगतार्थपरित्यागहेत्वभावान्नोपसंहारबाधः ॥ कथं तर्हि संशयोत्थानम् ॥ अर्थित्वाद्यसंभव-ब्रह्मोपनिषत्त्वश्रवणाभ्यां संशयः ।

दिष्विति जैमिनिर्मन्यते । कुतः? असंभवात् । न ह्यादित्यवस्वादिभिरुपास्याः आदित्यवस्वादयोऽन्ये संभवन्ति । न च वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति ; प्राप्तत्वात् ।

मधुविद्यायाम्—ऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वं च प्राप्यं श्रूयते, "असौ वा आदित्यो देवमधु" इत्युपक्रम्य, तत् यत् प्रथमममृतं तद् वसव उपजीवन्ति" इत्युक्त्वा, स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" इत्यादिना॥३०॥

---

असंभवादिति । अर्थित्वसामर्थ्ययोरिति शेषः । कर्मकर्तृविरोधात् सामर्थ्याभाव इत्याह **नहीति** । प्राप्तफलत्वादर्थित्वाभाव इत्याह **नचेति** । **आदित्यवस्वादय** इति **आदि**शब्देन मरुद्रुद्रसाध्याः विवक्षिताः । वस्वादित्यमरुद्रुद्रसाध्यगणाः एकैकं प्रतिदिशमुपरि च स्थित्वा आदित्यं प्रधानमनुभवन्ति ; वस्वादीनामेवोपास्यत्वं वस्वादित्वस्यैव प्राप्यत्वं च किं श्रूयत इत्यपेक्षायाम्, कर्मकर्तृविरोधं प्राप्तफलत्वञ्च श्रुत्यर्थोपन्यासेन विशदयति **मधुविद्यायामित्यादिना** । **ऋग्वेदादीति** । "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते" इति वचनार्थोऽभिप्रेतः । **आदित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वमिति** । वस्वादिभिर्भोक्तृभिः सह तद्भोग्यभूताः आदित्यांशा उपास्या इत्यर्थः ॥ ननु कथं कर्मकर्तृविरोधः । स्वात्मविषयमपि ह्यनुसंधानं सुकरम् । भूमविद्याधीतायां प्राणविद्यायाञ्च कर्मकर्तृविरोधाभावश्च भवदभिमतः ॥ उच्यते । न तावत् स्मृतिसंततिमात्रमुपासनम् ; घटादिस्मृतिसंततेरप्युपासनशब्दवाच्यत्वप्रसंगात् । अतः प्रकृष्टवस्तुविषयस्मृतिसंततिरेवोपासनम् । नामाद्याशापर्यन्तोपासनेषु नामादीनामन्तवत्फलप्रदानामपि प्रकर्षवत्त्वं विवक्षितम् । वस्वादीनां तु स्वस्मात् प्रकृष्टत्वाभावात् स्वापेक्षया प्रकृष्टविषयमुपासनं स्वस्मिन् कर्तुं न शक्यते । प्राणविद्यायामप्यवस्थाभेदेनोपास्यप्रकर्षः संभवति । बद्धावस्थ उपासकः, निरतिशयभोग्यं मुक्तावस्थस्वरूपं ह्युपास्यम् । तच्च बद्धादतीव प्रकृष्टम् । उभयविषयपरविद्यास्वपि स्वात्मांशे कर्मकर्तृविरोधोऽप्यवस्थाभेदेनैव परिहृतः । मधुविद्यायां तु वस्वादीनामेवोपास्यत्वम्, न परिशुद्धावस्थानाम्, अतोऽवस्थाभेदेनाप्यविरोधस्य दुर्वचत्वात् कर्मकर्तृविरोध इति । यद्वा— स्वयमेव स्वाभीष्टसंप्रदानाशक्तेन फलार्थिना पुरुषेणोपास्या देवता स्वोपासनप्रीता फलार्थिने फलं दिशति । वस्वादीनां तु स्वोपासनजनितस्वप्रीत्या स्वस्य फलप्रदत्वमयुक्तमिति उपासनप्रीणनीयत्वाकारेण कर्मकर्तृविरोध इति । यद्वा—एकस्यैव फलप्रदत्वफलार्थित्वरूपप्रकर्षापकर्षरूपविरोधगर्भत्वात् कर्मकर्तृविरोध इति स्थिते सामर्थ्याभावः । अतः शक्तत्वाशक्तत्वविशेष-प्रीणनीयत्वप्रीणयितृत्वफलप्रदत्वार्थित्वरूपविरोधगर्भत्वात् कर्मकर्तृविरोधः । ईदृशविरोधः प्राणविद्यायामपि स्थित एवात्र वक्ष्यमाणन्यायेनोपजीवनेन परिहार्य इति । प्राणविद्यायां ब्रह्मात्मकत्वेनोपासनस्याविवक्षितत्वेऽपि वस्तुतो जीवान्तर्यामिणः परस्य प्रीतिजननद्वारा स्वर्गार्थयज्ञादेरिव फलप्रदत्वमित्येतावता वैषम्यम् । प्रकर्षापकर्षगर्भकर्मकर्तृविरोधस्य ब्रह्मात्मकतया परिहारस्तु समानः । अतः प्राणविद्याऽप्येतन्न्यायसापेक्षेति तत्र विरोधस्यापरिहृतत्वात् तन्निबन्धनस्य सामर्थ्याभावस्यात्र हेतुतयोपन्यासः । **इत्यादिना** । यथोक्तार्थः **श्रूयत** इत्यन्वयः ॥

ज्योतिषि भावाच्च ॥ १ । ३ । ३१ ॥

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषि—परस्मिन् ब्रह्मणि उपासनं देवानां श्रूयते । देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं देवानामितरोपासननिवृत्तिं द्योतयति । अत एव वस्वादीनामनधिकारः ॥ ३१ ॥ इति प्राप्तेऽभिधीयते—

भावं तु बादरायणः; अस्ति हि ॥ १ । ३ । ३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान् बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासंभवः । इदानीं वस्वादीनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति । अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते, "असौ वा आदित्यो देवमधु" इत्यारभ्य, "अथ तत ऊर्ध्व उदेत्य" इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते; "अथ तत ऊर्ध्व उदेत्य" इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्म उपास्यमुपदिश्यते । तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । "न ह वा अस्मा उदेति, न निम्रोचति; सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद" इति कृत्स्नायाः मधुविद्यायाः ब्रह्मोपनिषत्त्वश्रवणात् ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलस्य श्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्थ विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते । अत एवंविधमुपासनमादित्यवस्वादीनामपि संभवति । एवञ्च ब्रह्मण एवोपास्यत्वात्, "तं देवा ज्योतिषां ज्योतिः" इत्यादि उपपद्यते । तदाह वृत्तिकारः, "अस्ति हि मध्वादिषु संभवः; ब्रह्मण एव सर्वत्र निचाय्यत्वात्" इति ॥ ३२ ॥ इति मध्वधिकरणम् ॥ ८ ॥

---

**ज्योतिषि भावाच्च** । ततः किमित्यत्राह **देवमनुष्ये**ति । देवा एव ज्योतिरुपासते, देवा ज्योतिरेवोपासते इति वा वाक्यभङ्गी स्यात् । तत्र न प्रथमः कल्पो युज्यते; मनुष्याणामनधिकारप्रसङ्गात् । तस्मात् ज्योतिरेवोपास्यमित्यर्थः । अन्यथा विशेषवचनवैयर्थ्यं स्यादित्यभिप्रायः ॥

**भावं तु बादरायणोऽस्ति हि** । अक्षरार्थमाह **आदित्ये**त्यादिना । अर्थित्वसामर्थ्याभावं परिहरति **अस्ति ही**ति । **स्वावस्थब्रह्मोपासन**शब्देन कर्मकर्तृविरोधः परिहृतः । वस्वादित्वस्य प्राप्तत्वात् नार्थित्वसम्भव इत्यत्राह **इदानी**मिति । उपासनस्य ब्रह्मपर्यन्तत्वे, फलस्य ब्रह्मप्राप्तिपर्यन्तत्वे च प्रतिपाद्ये सति हि, कर्मकर्तृविरोधाभावः प्राप्तफलत्वाभावश्च । तत् कथमित्यत्राह **अत्र ही**ति । आदित्यादिनामतद्रूपविशिष्टजीवशरीरकं ब्रह्म कार्यावस्थम्; तदुपासनं विहितमित्याह **असौ वा इत्यादिना** । इदानीमादित्यादिनामरूपभाजोऽपि सृष्टेः पूर्वमादित्यादिनामरूपरहितजीवमात्रस्यान्तर्यामि ब्रह्म कारणावस्थम्; तदुपासनं विधीयत इत्याह **अथ तत ऊर्ध्व उदेत्येत्यादिने**ति । ब्रह्मोपासनं विहितं चेत्, कथं तद्विरुद्धफलश्रवणमित्यत्राह **तदेव**मिति । उदाहृतवाक्ये कार्यकारणावस्थादित्यस्यैवोपासनं वस्वादित्वमात्रफलप्राप्तिश्च प्रतीयते; न त्वादित्यादिशरीरकब्रह्मोपासनं तत्प्राप्तिश्चेत्यत्राह **न ह वा** इति । **ब्रह्मोपनिषदं वेद**—ब्रह्मविद्यां वेद; ब्रह्मोपासनं करोतीत्यर्थः । ओदनपाकं पचतीतिवत् । **अत एवमि**ति । अब्रह्मोपासनपरत्वेन यैर्व्याख्यातम्, तन्मतादस्य प्रामाणिकत्वं दर्शयति तदाह **वृत्तिकार** इति ॥

परेऽन्ये च मध्वादिष्वसंभवादित्यादिसूत्रत्रयं तदुपर्यपीत्यादिभिः सूत्रैरेकाधिकरणं मन्वाना एवं व्याचक्षते—ब्रह्मव्यतिरिक्तविषयेषु मध्वादिविद्याविशेषेषु अर्थित्वाद्यसंभवात् सर्वासु विद्यास्वनधिकारं जैमिनिर्मन्यते ॥ कथं क्वचिदनधिकारादन्यत्राप्यनधिकारः । न हि राजसूयानधिकारिणो ब्राह्मणस्य बृहस्पतिसवानधिकार इति शङ्कायाम्, आदित्यादिज्योतिषि मण्डलाद्याकारत्वात् अचेतनेऽपि सवित्रादिशब्द-प्रयोगसद्भावात् अग्न्यादीनां चाचेतनत्वात् मन्त्रार्थवादयोरन्यपरत्वेन विग्रहादिमत्त्वाभावेन च अर्थित्व-सामर्थ्याभावान्नाधिकारः इति सूत्रद्वयं व्याख्याय, भावंत्विति तृतीयसूत्रेण मन्त्रार्थवादयोरपि प्रतीय-मानार्थे प्रामाण्योपपादनमुखेन अर्थित्वादिसद्भावात् विद्याधिकारोऽस्तीत्युच्यत इति ।

तदयुक्तम्; वृत्तिकारानभिमतत्वात्, अध्याहारसापेक्षत्वात्, अपेक्षितार्थापरीक्षणायोगात्, कृतकरत्वप्रसङ्गात्, अधिकरणान्तरवैरूप्याच्च । तत्र वृत्तिकारानभिमतिर्भाष्ये कण्ठोक्त्या दर्शिता । तत्र हेतुरितरहेतुजातम् । असंभवान्मध्वादिष्वनधिकारं मन्यत इति अनध्याहारेण योजनासंभवेऽपि मध्वादिष्वसंभवात् कुत्रानधिकार इत्यपेक्षायां सर्वासु विद्यास्वप्यनधिकार इत्यध्याहारेण योजनाऽनुपपन्ना । 'सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद'' इति ब्रह्मविद्यात्वं तदनुगुणफलं चावगम्यते; वस्वादीनामुपास्यत्वं च प्रतीयते; कथमिदं घटते इति व्युत्पन्नशब्दस्य संशयो भवति । तस्मादियम् अब्रह्मविद्या वा ब्रह्मविद्या वेति निरूपणमपेक्षितम् । तस्यानिरूपितत्वात् बुभुत्सितापरीक्षणं स्यात् । तदुपर्यपीति सूत्रेणैव मन्त्रार्थवादयोर्विग्रहादावप्रामाण्यस्य परिहृतत्वेन ज्योतिषीत्यादिसूत्रद्वयस्यान्यपरत्व-शङ्कापरिहारपरत्वेन व्याख्यानस्य कृतकरत्वं चं स्यात् । संभवादित्युक्तस्यार्थित्वादिसंभवरूपस्य हेतोर-संभवव्युदासाधीनात्मलाभत्वादाद्यसूत्रेण परिहृतत्वमवगम्यते । अनन्तरमेव युगपदनेकत्र संनिधिविरोधा-दिपरिहारश्च विग्रहादिसिद्धिनिबन्धनत्वादन्यपरत्वस्य परिहृततत्वमवगमयति । यद्याद्यसूत्रेणासम्भवशङ्का-परिहारौ न विवक्षितौ, तर्हि तच्छङ्कापरिहारपरेण ज्योतिषीत्यादिसूत्रद्वयेनाद्यसूत्रानन्तरेण भवितव्यम् । स्वपक्षसाधकोपन्यासानन्तरमेव तद्दौःस्थ्यशङ्कापरिहारस्याधिकरणान्तरेष्वपि दृश्यमानत्वात् । यथा 'ईक्षतेर्नाशब्दम्', 'गौणश्चेन्नात्मशब्दात्', यथा 'ज्योतिश्चरणाभिधानात्', 'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्' इति, 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च', 'सूक्ष्मं तु तदर्हत्वात्' इति च । ततो भिन्नाधिकरणत्वं युक्तम् । अधिकरणभेदमभ्युपगम्य वसुसमुदाय-स्योपास्यत्वम् एकैकवसोरुपासकत्वम्, रुद्रादिष्वप्येवं समुदायप्रत्येकभेदादुपास्योपासकभावः; उपास्यत्वं च वस्वादिभोग्यादित्यांशमात्रस्य[1], न तु ब्रह्मणः; फलं च वस्वादित्वमात्रमिति कैश्चिदुक्तम् । तत् अपवर्गरूपफलब्रह्मोपनिषत्त्वश्रवणविरुद्धत्वात् वृत्तिकारस्यानभिमतमित्यनादरणीयम् ॥

ननु 'तदुपर्यपि', 'मध्वादिष्वसंभवात्' इत्यधिकरणद्वयेन किं प्रयोजनम्? देवानां देवताविशेषाणां च अर्थित्वसामर्थ्यसंभवनिर्णयान्न मनुष्याणां प्रयोजनम्, तेन विनाऽप्यमीषामुपासनोपपत्तेः । न च

---

1 मात्रस्येति । भोग्यत्वेनोपास्यत्वमादित्यस्यैव; भोक्तृत्वेन तु वसुसमुदायस्योपास्यत्वं पूर्वोक्तमिति भावप्रकाशिका ।

### २६. अपशूद्राधिकरणम् १-३-९ (छा. ४)

**शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १ । ३ । ३३ ॥**

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति, न वेति विचार्यते । किं युक्तम्? अस्तीति । कुतः? अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्संभवात् । यद्यप्यग्निविद्यासाध्येषु कर्मसु अनग्निविद्यत्वात् शूद्रस्यानधिकारः—तथापि मनोवृत्तिमात्रत्वाद्ब्रह्मोपासनस्य, तत्राधिकारोऽस्त्येव। शास्त्रीयक्रियापेक्षत्वेऽप्युपासनस्य, तत्तद्वर्णाश्रमोचितक्रियाया एवापेक्षितत्वात् शूद्रस्यापि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति । "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इत्यपि, अग्नि-

---

देवानां किमपि प्रयोजनम्, तेषां स्वकीयपटुतरदेहादिमत्त्वे अर्थित्वसद्भावे चाधिकरणन्यायनिरपेक्ष-निर्णयकत्वादिति ॥ उच्यते—परं ब्रह्म सामान्येन देवानामप्युपास्यं फलप्रदञ्च ; देवताविशेषाणामप्युपासनविशेषैरुपास्यं फलविशेषप्रदञ्चेत्येवंविधैश्वर्यविशिष्टत्वेन मनुष्यैरुपासकैर्ब्रह्मणोऽनुसन्धेयत्वात् तथानुसन्धानमेव प्रयोजनमिति ॥

**शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि** । मनुष्यव्यतिरिक्तवस्वादिदेवताविशेषाणामर्थित्वसामर्थ्यसंभवादधिकारोऽस्तीत्युक्तम् । अथार्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्राणामप्यधिकारः स्यादिति शङ्कया सङ्गतिरित्याह **ब्रह्मविद्यायामिति** । किं ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति, नेति विचारः । तदर्थं तस्य तदुपसंहारसामर्थ्यमस्ति, नेति । किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्मविद्याऽनधीतवेदस्यापि संभवति, नेति । किं वेदादेव ब्रह्मावगतिः, उत इतिहासपुराणाभ्यामपि संभवतीति । किं तयोर्वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्वम्, उत स्वातन्त्र्येणेति । किं जानश्रुतेः शूद्रेत्यामन्त्रणमितिहासपुराणयोर्निरपेक्षब्रह्मावबोधकत्वमुपोद्बलयति, नेति । किं तत्र शूद्रशब्दो रूढ्या जातिपरः, उत यौगिकतया शोकवत्परः इति ॥ यदा रूढः, तदा शूद्रशब्दस्य इतिहासपुराणयोर्नैरपेक्ष्योत्तम्भकतया तयोः स्वातन्त्र्येण ब्रह्मावगतिहेतुत्वात् ब्रह्मविषयस्मृतिसन्ततिरनधीतवेदस्यापि संभवतीति सामर्थ्यलाभात् शूद्रस्याप्यधिकारः संभवतीति पूर्वः पक्षः । यदा शूद्रशब्दो यौगिकः, तदा शूद्रेत्यामन्त्रणस्य इतिहासपुराणयोर्ब्रह्मावबोधननैरपेक्ष्यानवगमकतया स्वातन्त्र्येण ब्रह्मावबोधकत्वाभावात् वेदादेव ब्रह्मावगतिरिति अनधीतवेदस्य तदसंभवेन सामर्थ्याभावान्न ब्रह्मोपासनाधिकार इति राद्धान्तः ।

ननु कर्मकाण्डापशूद्राधिकरणे शूद्रस्य वैदिकसर्वकर्मस्वनधिकार उक्तः ; तत् कथमत्र तत्संभव इत्यत्राह **यद्यपीति** । **विद्या**—वेदविद्या—(अध्ययनम्)। **अग्निः** आहितः । परिहरति **तथापीति** । ननु विद्यायाः कर्माङ्गकत्वं वक्ष्यते; तत् कथं साङ्गब्रह्मविद्यायां सामर्थ्यमित्यत्राह—**शास्त्रीयेति**। ननु तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इत्यत्र यज्ञग्रहणस्योपलक्षणार्थत्वाद्विद्यायामप्यनधिकारः सिध्यति । न ह्यसावर्थः श्रुत्येकसमधिगम्यः ; येन यावद्वचनता स्यात्, परिसंख्या वा ; किंतु न्यायसिद्धः । न्यायश्च अग्निविद्यासाध्येषु अनग्निविद्यस्याधिकारानुपपत्तिरूपः कर्मोपासनसाधारणः । अतोऽनधिकार इत्यत्राह **तस्माच्छूद्र इति** । सत्यमसावनुवादः । नैतावता ब्रह्मविद्यानधिकारः, अग्निविद्यासाध्यकर्मविषयत्वात् न्यायस्य ; यज्ञादिकर्मणामेव अग्निविद्यासाध्यत्वात् ब्रह्मविद्यायास्तन्निरपेक्षत्वाच्चेत्यर्थः । अत्रार्थात् हेत्वन्तरं

विद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोऽनूद्यते ।

ननु अनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं संभवति ॥ उच्यते—अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि इतिहासपुराणश्रवणेनापि ब्रह्मस्वरूपतदुपासनज्ञानं संभवति । अस्ति च शूद्रस्यापि इतिहासपुराणश्रवणानुज्ञा, "श्रावयेत् चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इत्यादौ । दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः। तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते—शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वः शूद्रेत्यामन्त्रय तस्मै ब्रह्मविद्यामुपदिशति, 'आजहारेमाः शूद्र! अनेनैव मुखेनालापयिष्यथाः" इत्यादिना । अतः शूद्रस्याप्यधिकारः संभवति—

इति प्राप्ते उच्यते—न शूद्रस्याधिकारः संभवति, सामर्थ्याभावात् । न हि ब्रह्मस्वरूपतदुपासनप्रकारमजानतः तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्य उपासनोपसंहारसामर्थ्यसंभवः। असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न संभवति । असामर्थ्यं च वेदाध्ययनाभावात् । यथैव हि

---

चोक्तं भवति । यज्ञाधिकारो नास्तीत्यनेन उपासनाधिकारोऽनुमतो भवतीत्यभिप्रायेण **यज्ञादिकर्मानधिकार एवे**त्युक्तम् । **न्यायसिद्धोऽनूद्यत** इति । कर्मकाण्डापशूद्राधिकरणन्यायसिद्ध इत्यर्थः । मा भूदग्नि[विद्या]साध्ययज्ञापेक्षा ब्रह्मविद्यायाः, तथाप्यध्ययनसाध्यवेदजन्यज्ञानापेक्षाऽस्तीति चोदयति **नन्वि**ति । **श्रावयेदि**ति । प्रयोज्याभावे प्रयोजकासिद्धेः प्रयोज्योपादानमर्थसिद्धमिति भावः । न च "अन्नाद्यकामं याजयेत्" इतिवत् प्रयोज्यव्यापारविधिः; अधिकारविशेषाश्रवणात् । एतदभिप्रायेण **इतिहासपुराणश्रवणानुज्ञे**त्युक्तम् । यदा चैवं सिद्धं श्रवणम्, तदा सामर्थ्याद्विचारोऽपि सिद्धः; इतिहासपुराणयोःसंशयविपर्ययग्रस्तत्वे सति सम्यङ्निश्चयानुपपत्तेः । अतो निरपवादः शूद्रस्याप्यधिकारो ब्रह्मविद्यायाम् । न च वाच्यम्—यज्ञादिकर्मणामपीतिहासपुराणेषूपदिश्यमानत्वात् तत्रापि शूद्राधिकारप्रसङ्ग इति; कर्मणामितिहासपुराणेषु सामान्यतः कीर्तनेऽपि विशेषोपदेशाभावात् वैदिकेषु विशेषोपदेशेषु शूद्रस्यानधिकारस्थितेरिति । यदि ब्रूयात्—नेदमितिहासपुराणविषयं श्रवणानुज्ञानमर्थज्ञानावधिकम्; किंतु, "श्मशानवच्छूद्रपतितौ" इति प्रतिषिद्धस्य समीपपाठस्य प्रतिप्रसवमात्रमिति—तन्न; "य इदं शृणुयान्नित्यम्" 'इत्युपक्रम्य,' 'शूद्रःसुखमवाप्नुयात्' इति श्रवणफलनिर्देशात् । श्रवणकीर्तने हि यथायोग्यमन्वीयेते । "शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे" इति ह्युक्तम् । हेत्वन्तरमाह **दृश्यन्ते चे**ति । कर्मकाण्डेऽपशूद्राधिकरणे अधिकारो निर्णीतश्चेत्—किमत्र चिन्तनीयमिति शङ्कायां ब्रह्मोपासनेऽपशूद्राधिकरणन्यायप्रवृत्तौ तत्रापरिहृतामधिकयुक्तिमाह **तथोपनिषत्स्वपि संवर्गे**ति ॥

राद्धान्तमारभते—**इतिप्राप्त** इति संवर्गविद्यावाक्यगतशूद्रशब्दनिर्वाह इव सौत्रः । अन्यत् पूर्वपक्षहेतुजातं सूत्रकाराभिप्रेतं स्वयमुपन्यस्तं प्रथमं व्युदस्य पश्चात् सूत्रमवतारयिष्यन् प्रथमं पूर्वपक्षहेतून् प्रतिक्षिपति **न शूद्रस्ये**त्यादिना । सामर्थ्याभावमुपपादयति **नही**ति । अर्थित्वं ह्यस्तीत्यत्राह **असमर्थस्य चे**ति । उपासनोपायश्रवणधारणादिक्षमत्वलक्षणं सामर्थ्यं तस्यापि लोकसिद्धमित्यत्राह **असामर्थ्यञ्चे**ति । अलौकिकसामर्थ्याभावादित्यर्थः । ब्रह्मोपासनविधिना शूद्रस्याप्यधिकारः कल्प्यः; यथा रथकारादीनां विधिबलेन तत्तत्कर्माधिकारः तदपेक्षितमन्त्राध्ययनाधिकारश्च सिध्यतीत्यत्राह **यथैव ही**ति ।

त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसंपाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीन् अपरान् न स्वीकुर्वन्ति, तथा ब्रह्मोपासनविधयोऽपि । अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वात् शूद्रस्य ब्रह्मोपासनसामर्थ्यासंभवः ।

इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतः ; न स्वातन्त्र्येण । शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थम् , नोपासनार्थम् । विदुरादयस्तु भवान्तराधि-

---

**ज्ञानतदुपायादी**निति । **आदि**शब्देन अध्ययनव्रतोपनयनादय उच्यन्ते । **अपरान्**—अत्रैवर्णिकमतान् ज्ञानतदुपायादीन् नापेक्षन्त इत्यर्थः । विधयः स्ववैयर्थ्यपरिहारायानुष्ठातृसापेक्षास्सन्तः अनुष्ठानस्य ज्ञानपूर्वकतया ज्ञानतद्धेतुभूताध्ययनव्रतोपनयनादीन् अपेक्षन्ते, तत्रानन्यार्थम् , स्वयं क्लेशसाध्यतया प्रयोजनसाकाङ्क्षं संनिहितत्रैवर्णिकगतज्ञानं क्लृप्तत्वात् कर्मविधिभिः संबध्यते । तेन कर्मविधयोऽत्रैवर्णिकगतज्ञानादिनिरपेक्षत्वात् तदधिकारं न कल्पयन्ति ; एवं ब्रह्मोपासनविधयोऽपि त्रैवर्णिकगताध्ययनसिद्धानन्यार्थसाकाङ्क्षज्ञानतो लब्धानुष्ठानतयाऽन्यथासिद्धत्वान्न शूद्राधिकारं कल्पयन्ति । अनन्यथासिद्धं हि कल्पकम् । किञ्च अध्ययनस्यापि प्रयोजकतया कल्पनागौरवं स्यात् । "रथकारोऽग्नीनादधीत" इति विधिरध्ययनसिद्धज्ञानत्रैवर्णिकैरनिर्वृत्तानुष्ठानतया अनन्यथासिद्धत्वादधिकारं कल्पयतीति वैषम्यम् । किञ्च रथकारादीनां 'रथकारोऽग्नीनादधीत' इति विधिवाक्येनैवाधिकारित्वेन विशेषतः श्रुतत्वात् तदपेक्षितमन्त्रभागाध्ययनाधिकारमात्रं कल्प्यम् । इह तु विशेषतः शूद्राद्युद्देशेनोपासनविधानाभावादुपासनाधिकारस्तदौपयिकाध्ययनाधिकारश्च कल्प्य इति गौरवं स्यात् । अतोऽनधिकार इति । संवर्गविद्यायां शूद्रशब्दश्च नोपासनाधिकारज्ञापकः ; रथकारादिशब्दवत् विधिवाक्यगतत्वाभावात् । तथा सति ह्यधिकारः कण्ठोक्तः स्यात् । शूद्रशब्दो ह्यर्थवादगतः ॥ नन्वर्थवादस्यापि स्वार्थे प्रामाण्यमुक्तम् । तत्तु बाधकाभावे सति भवति । वैदिकविधीनामध्ययनसिद्धस्वाध्यायजन्यज्ञानसापेक्षत्वं बाधकम् । अध्ययनस्यापि प्रयोजकत्वे गौरवं स्यादित्युक्तम् । वक्ष्यमाणो रूढिप्रतिकूललिङ्गसद्भावोऽवयवशक्त्यनुकूललिङ्गसद्भावश्च बाधकः । रूढिप्राबल्यमर्थाविरोधेऽनुकूललिङ्गसद्भावे च भवति ; न त्वर्थविरोधे । अत एव हि गङ्गायां घोष इत्यत्र गङ्गापदस्य लक्षणा । 'रथकारोऽग्नीनादधीत' इत्यत्रापि, "सौधन्वनाः ऋभवः शू (सू )रचक्षसः" इति सौधन्व त्वमनुकूललिङ्गं दृश्यते । ब्राह्मणादेश्च शिल्पनिषेधोऽवगम्यते । अतोऽर्थविरोधात् शूद्रशब्दस्य रूढिर्दुर्बला । अतोऽनधिकारः । अयञ्चार्थः **शुगस्ये**ति सूत्राभिप्रेत इह प्रतिपत्तिसौकर्यायोक्तः ।

ननूक्तमितिहासपुराणद्वारा शूद्रस्यापि ब्रह्मज्ञानं संभवतीतीत्यत्राह **इतिहासे**ति । उपबृंहणीयवेदज्ञानानधिकारादुपबृंहणमात्रेणोपासनोपयोगिज्ञानपौष्कल्यं न संभवति; न हि व्याख्येयानधिकारिणो व्याख्यानमात्रेण पुष्कलज्ञानसम्भवः इति दृष्टसामर्थ्यवैकल्यम् । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् " इति वेदार्थविशदीकारहेतुतयैव तदवगमविधानात् अङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपाठादिलब्धवेदार्थज्ञानस्येव शास्त्रविरोधाददृष्टसामर्थ्यवैकल्यञ्च । अतस्तदविरोधस्य न्याय्यत्वात् श्रावणविध्यवैयर्थ्याच्च शूद्रस्य श्रवणानुज्ञानं पुण्यकथावगतिद्वारेण पापक्षयफलार्थम् ; न तूपासनार्थमित्यर्थः । यद्येवं **वेदवाक्यार्थज्ञानमुपासनाङ्गम् ,** कथं तर्हि विदुरादीनामुपासनसंभव इत्यत्राह **विदुरादयस्त्वि**ति ।

गतज्ञानाप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेद्दशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम्।

यत्तु—संवर्गविद्यायां शुश्रूषोः शूद्रेति संबोधनं शूद्रस्याधिकारं सूचयतीति—तन्नेत्याह—शुगस्य तदनादरश्रवणात् तदाद्रवणात सूच्यते हि। शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात् तदैव ब्रह्मविदो रैकस्य सकाशं प्रति आद्रवणात् शुक् अस्य सञ्जातेति सूच्यते; अतः स शूद्रेत्यामन्त्र्यते; न चतुर्थवर्णत्वेन। शोचतीति हि शूद्रः; "शुचेर्दश्च" इति रक्(र)प्रत्यये धातोश्च दीर्घे चकारस्य च दकारे शूद्र इति भवति। अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते; न जातियोगः।

जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव। तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोः, अस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोः हंसरूपेण निशायामस्याविदूरे गच्छतोरन्यतर इतरमुवाच—"भो भो अयि भल्लाक्ष ! भल्लाक्ष ! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम्। तन्मा प्रसाङ्क्षीः। तत् त्वा मा प्रधाक्षीत्" इति। एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य परो हंसः प्रत्युवाच—"कम्वरे एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ" इति। कं सन्तमेनं जानश्रुतिं सयुग्वानं रैक्वं ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ; स ब्रह्मज्ञो रैक्व एव लोके गुण-

---

तेषामप्युपासने प्रथमप्रवृत्तिर्न शूद्रजन्मनि, अपि तु पूर्वजन्मसिद्धैव। पाश्चात्त्ये तु जन्मनि प्राक्तनज्ञानप्रमोषाभावादवर्जनीयं तदनुवृत्तिमात्रमेवेत्यर्थः। विदुरादीनामपि इतिहासपुराणश्रवणात् ज्ञानसिद्धिरिति यत् इतरैरुच्यते, तदयुक्तम्; "धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते। वर्णावरत्वे संप्राप्ताः संसिद्धिं श्रमणी यथा" इति शौनकवचनविरोधात।

एवमर्थसिद्धः सूत्रकाराभिप्रेतो हेत्वन्तरपरिहार उक्तः। अथ प्रधानयुक्तिपरिहारपरं सूत्रमवतारयितुमाह **यत्त्विति**। शोचितृत्वं शूद्रशब्दार्थः; तत्र शोककारणं शोककार्यञ्च हेतुत्वेनाह **शुश्रूषो**रित्यादिना। अनादरवाक्यश्रवणं शोककारणम्; आद्रवणं तत्कार्यम्। शूद्रशब्दस्य शोचितृत्ववाचकत्वं कथमित्यत्राह **शुचेर्दश्चे**तीति। रक्प्रत्ययः प्रकरणसिद्धश्चकाराकृष्टः; "अमितम्योर्दीर्घश्च" इति सूत्रे दीर्घश्चेत्यंशोऽनुवर्तत इति भावः। परै**र्निरुक्त**प्रक्रियया आद्रवणमप्यन्तर्भाव्य शूद्रशब्दनिर्वाहः कृतः; मुख्यनिर्वाहे संभवति सोऽनुपपन्न इति भावः। पाणिनीयनिर्वाहो मुख्यः। तदनन्तरमौणादिकः। ततो नैरुक्तः। तत्रौणादिकनिर्वाहस्य संभावितत्वात् स एवात्र कृतः। अनादरवाक्यश्रवणस्येव आद्रवणस्यापि शूद्रशब्दवाच्यत्वं न सूत्रविवक्षितम्। उपपादकतयोपादानस्य द्वयोरपि तुल्यत्वात्। शुच एव ह्युपपाद्यत्वं प्रतीयते; प्रथमान्तनिर्देशात्। श्रवणाद्रवणशब्दौ हि पञ्चम्यन्तौ। तस्माच्छोक एव शूद्रशब्दप्रवृत्तिनिमित्तम्। अनादरवाक्यश्रवणादीनां वैशद्यार्थमुपन्यस्यति **जानश्रुतिः किलेति**। **भल्लाक्षः**—हंसः। **समं दिवा**—स्वर्गेण समम्, स्वर्गेऽपि तत्तेजः प्रसृतमित्यर्थः। यद्वा दिवसेन सममित्यर्थः, निशायामित्युक्तत्वात्। **मा प्रसाङ्क्षीः**—मा प्रसक्तः स्याः। **मा प्रधाक्षीत्**—त्वां मा दहेदित्यर्थः। **परो हंस** इति। श्रुतौ **पर**शब्दो हंसवाचीति भावः। हंसान्तरवाक्यस्यानादरगर्भतां व्यनक्ति **कं सन्त**मिति। सयुग्वानमित्यस्यार्थमाह **गुणश्रेष्ठ**मिति। यद्वा युग्वा—शकटम्, तद्वन्तमित्यर्थः। **गुणश्रेष्ठ**मिति प्रकरणसिद्धार्थोक्तिः।

वत्तरः; महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणः; यद्गुणजनितं तेजो रैक्वतेज इव मां दहेदित्यर्थः। एवमुक्तेन परेण, कोऽसौ रैक्व इति पृष्टः, 'लोके यत् किंचित् साध्वनुष्ठितं कर्म, [1]यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्भूतम्, स रैक्वः' इत्याह। तदेतत् हंसवाक्यं ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य, तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेषयन्, तस्मिन् विदित्वा आगते, स्वयमपि, रैक्वमुपसद्य गवां षट्छतं निष्कमश्वतरीरथं च रैक्वायोपहृत्य रैक्वं प्रार्थयामास, "अनु मे एतां भगवो देवतां शाधि, यां देवतामुपास्से" इति। त्वदुपास्यां परां देवतां ममा(माम)नुशाधीत्यर्थः। स च रैक्वः स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजिज्ञासया उद्योगं च विदित्वा अस्य ब्रह्मविद्यायोग्यतामभिज्ञाय, चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाणस्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन्, तस्य शोकाविष्टतामुपदेशयोग्यताख्यापिकां शूद्रशब्देनाऽऽमन्त्रणेन ज्ञापयन्निदमाह, "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" इति। सह गोभिरयं रथस्तवैवास्तु; नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः। स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदायोपससाद। रैक्वः पुनरपि तस्य योग्यतामेव ख्यापयन् शूद्रशब्देनामन्त्र्याह "आजहारेमाः शूद्र अनेनैव मुखेनाऽऽलापयिष्यथाः" इति। इमानि धनानि शक्त्यनुगुणानि आजहर्थ; अनेनैव द्वारेण, चिरसेवया विनाऽपि, मां त्वदभिलषितं ब्रह्मोपदेशरूपवाक्यमालपयिष्यसीत्युक्त्वा तस्मा उपदिदेश। अतः शूद्रशब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितः; न चतुर्थवर्णत्वम्॥ ३३॥

**क्षत्रियत्वगतेश्च । १ । ३ । ३४ ॥**

"बहुदायी" इति दानपतित्वेन, "बहुपाक्यः" इत्यादिना "सर्वत एव मे अन्नमत्स्यन्ति" इत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेः, "स ह संजिहान एव क्षत्तारमुवाच" इति क्षत्तृप्रेषणात्, बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम्॥ ३४॥

---

**उपास्स** इति मध्यमपुरुषनिर्देशाभिप्रायं व्यञ्जयन्नाह **त्वदुपास्या**मिति। यदुपासनात् तवेदृशी प्रशस्तिर्जाता, तं (तां ?) मे ब्रूहीत्यभिप्राय इत्यर्थः। **चिरकाले**ति। चिरकालसेवा यावच्छक्तिप्रदानं वा ब्रह्मविद्याप्रतिष्ठाहेतुरित्यर्थः। **तमनुगृह्णन्**। न तु रागादित्यर्थः। **आजहर्थे**ति। आजहार भवानिति भवच्छब्दाध्याहारेण, छान्दसव्यत्ययेन वा श्रुतियोजनेत्यभिप्रायः। यद्यपि दशाश्वमेधानाजहारेत्यादिष्वाङ्पूर्वस्य हरतेरर्थान्तरदर्शनेन, नानार्थत्वसंभवाद्धातूनाम्, प्रतिगृहीतवानस्मीत्युत्तमपुरुषतया व्याख्यातुं शक्यते—तथापि "अग्नये समिधमाहार्षम्", "अथामेध्ये नो मध्वाजहार" इति दानार्थतया वैदिकप्रयोगप्राचुर्यदर्शनात्, "अनेनैव मुखेनालापयिष्यथाः" इत्यालापनहेतुतया प्रतिसन्धीयमानस्याऽऽहरणस्य स्वरसत आलापनसमानकर्तृकताप्रतीतेश्च मध्यमपुरुषत्वेन व्याख्यातम्॥ ३३॥

शूद्रशब्दस्य यौगिकार्थानुकूलहेतुरुक्तः। अथ रूढिसिद्धहेतुरुच्यते। **क्षत्रियत्वगतेश्च**॥ **संजिहानः**—आसनमुज्झन्; उत्तिष्ठन्नेवेत्यर्थः॥

---

1. यच्चेति 'यत्किञ्च प्रजाः' 'यस्तद्वेद' इत्येतदुपनिषद्वाक्यार्थः लघुसिद्धान्तटीका-उपनिषद्भाष्यपरिष्कारभाष्यार्थदर्पणादौ द्रष्टव्यः।

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता ; उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह—

**उत्तरत्र चैत्ररथेन लिङ्गात् । १ । ३ । ३५ ॥**

अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेन अभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेण अस्य क्षत्रियत्वं गम्यते ॥ कथम् ; "अथ ह शौनकं च कापेयम् अभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना, "ब्रह्मचारिन्निदमुपास्महे" इत्यन्तेन कापेयाभिप्रतारिणोः, भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासंबन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रियः, इतरौ ब्राह्मणौ । अतोऽस्यां विद्यायां ब्राह्मणस्य, तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते ; न शूद्रस्य । अतोऽस्यां विद्यायामन्वितात् रैक्वाद् ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तम् ; न चतुर्थवर्णत्वम् । नन्वस्मिन् प्रकरणे अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम् ; तत् कथमस्याभिप्रतारिणश्चैत्ररथत्वम्, कथं वा क्षत्रियत्वम् ? तत्राह लिङ्गात् इति । "अथ ह शौनकं च कापेयमभिप्रतारिणञ्च काक्षसेनिम्" इत्यभिप्रतारिणः कापेयसाहचर्यालिंगात् अस्याभिप्रतारिणः कापेयसंबन्धः प्रतीयते ; अन्यत्र च, "एतेन वै चि(चै)त्ररथं कापेया अयाजयन्" इति कापेयसंबन्धिनः चि(चै) त्ररथत्वं श्रूयते ; तथा चैत्ररथस्य क्षत्रियत्वम्, "तस्माच्चैत्ररथीनामेकः (रथो नामैकः) क्षत्रपतिरजायत" इति । अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ ३५ ॥

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम् ; इदानीं न्यायसिद्धः शूद्रस्यानधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह—

**संस्कारपरामर्शात् तदभावाभिलापाच्च । १ । ३ । ३६ ॥**

ब्रह्मविद्योपदेशप्रदेशेषूपनयनसंस्कारः परामृश्यते, "उप त्वा नेष्ये", "तं होपनिन्ये" इत्यादिषु । शूद्रस्य चोपनयनादिसंस्काराभावोऽभिलप्यते, "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति", "चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति" इत्यादिषु ॥ ३६ ॥

---

उत्तरसूत्रमवतारयति **तदेवमिति** । **उत्तरत्र चैत्ररथेन लिङ्गात्** ॥ **कथमिति** । चैत्ररथः क्षत्रियश्चेत्, जानश्रुतिरपि क्षत्रियः स्यादिति न हि नियम इत्यर्थः । उत्तरमाह **अथ हेति** । **परिविष्यमाणौ**—सूदेन भोज्यमानौ । ब्रह्मचारिणो भिक्षणं कापेयाभिप्रतारिणोस्त्रैवर्णिकत्वलिङ्गमित्यर्थसिद्धम् । एकत्र ब्राह्मणक्षत्रियजातिद्वयसम्बन्धितयाऽवगतायाम् अन्यत्रापि ब्राह्मणसम्बन्धितया निर्णीतायां तत्सम्बन्धिपुरुषान्तरविषयसन्देहे सति अग्रचमायन्यायात् तस्य पुरुषस्य ब्राह्मणक्षत्रिययोरन्यतरत्वम् , परिशेषेण क्षत्रियत्वं च निश्चीयत इत्यर्थः । सौत्रं **लिङ्गादिति** पदं व्याख्यातुं चोद्यमुखेनाकाङ्क्षां दर्शयति **नन्विति** । अभिप्रतारिणश्चैत्ररथत्वं तस्य क्षत्रियत्वं च नावगतमित्यर्थः । किमत्र लिङ्गं विवक्षितमित्यत्राह **अथ हेति** । **कापेयसाहचर्यात्**—कापेयसहपाठादित्यर्थः । कापेयसहपाठबलेन कापेयसम्बन्धः सिद्धः । तेन तत्पुरोहितकस्य चैत्ररथत्वं सिद्धम् । तेन क्षत्रियत्वमवगतमित्यर्थः ॥

उत्तरसूत्रसङ्गतिमाह **तदेवमिति** । शूद्रशब्दस्य रूढिसिद्धार्थविरोधिलिङ्गं यौगिकार्थानुगुणलिङ्गं चेत्युभयविधं लिङ्गमपि शूद्रानधिकारज्ञापकमित्यर्थः । **इदानीमिति** । अयमनधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याहेत्यर्थः ॥

**तदभावनिर्धारणे च प्रवृत्तेः । १ । ३ । ३७ ॥**

"नैतदब्राह्मणो विवक्तुमर्हति । समिधं सोम्याहर" इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥ ३७ ॥

**श्रवणाध्ययनार्थप्रतिषेधात् । १ । ३ । ३८ ॥**

शूद्रस्य वेदश्रवण-तदध्ययन-तदर्थानुष्ठानानि प्रतिषिध्यन्ते, "पद्यु ह वा एतच्छ्मशानम्, यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येतव्यम्", "तस्माच्छूद्रो बहुपशुरयज्ञीयः" इति । बहुपशुः—पशुसदृश इत्यर्थः । अनुपशृण्वतोऽध्ययन-तदर्थज्ञान-तदर्थानुष्ठानानि न संभवन्ति । अतः तान्यपि प्रतिषिद्धान्येव ॥ ३८ ॥

**स्मृतेश्च । १ । ३ । ३९ ॥**

स्मर्यते च श्रवणादिनिषेधः, "अथ ह्यस्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इति, "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्"इति च । अतः शूद्रस्यानधिकार इति सिद्धम् ॥ ३९ ॥

---

**संस्कारपरामर्शात् तदभावाभिलापाच्च** ॥ संस्कारः परामृश्यताम्, ततः किमित्यत्राह **शूद्रस्येति** । **न शूद्रे पातकं किञ्चित्**—सन्ध्योवन्दनाद्यभावनिमित्तं पापं नास्तीत्यर्थः । **चतुर्थो वर्ण एकजातिः** । न तु द्विजातिरित्यर्थः ॥ ३७ ॥

**तदभवानिर्धारणे च प्रवृत्तेः** ॥ तच्छब्दस्य पूर्वसूत्रप्रकृतसंस्कारवाचितायामेतत्सूत्रविषयवाक्यानुगुण्याभावात् **तच्छब्दः** परमप्रकृतपरामर्शीति आह **शूद्रत्वाभावेति** ॥

**श्रवणाध्ययनार्थप्रतिषेधात्** ॥ **अर्थ**शब्देन तदनुष्ठानं विवक्षितम् । **पद्यु**—जङ्गमम् । समीपोच्चारणप्रतिषेधादेव श्रवणाध्ययनप्रतिषेधोऽर्थसिद्धः । अर्थानुष्ठानप्रतिषेधं दर्शयति **तस्माच्छूद्र इति** ॥ ननु तत एवार्थानुष्ठाननिषेधोऽपि सिद्धः ॥ सत्यम्; साक्षादेव त्वसौ श्रूयते, तत्र किं प्रणाड्युपजीवनेनेति पृथगुच्यते । पशुबाहुल्यवत्त्वं यज्ञाद्यर्हत्वौपयिकम्; कथमनेनायज्ञीयत्वसिद्धिरित्याशङ्काव्यावृत्त्यर्थं **बहुपशुशब्दं** व्याचष्टे **पशुसदृश इत्यर्थ इति** । ईषदसमाप्तपशुत्व इति वक्तव्ये सदृशशब्दग्रहणम् ईषदसमाप्तेः सादृश्यपर्यवसानज्ञापनार्थम् । "विभाषा सुपो बहुच् पुरस्तात्तु" इति पाणिनीयसूत्रेण ईषदसमाप्त्यर्थे बहुच्प्रत्ययस्तस्य पुरस्तात् प्रयोगश्च विहितः । अध्ययनादिनिषेधोऽर्थसिद्धोपीत्याह **अनुपशृण्वत इति** । "शूद्रो नाधीयीत" इति वाक्यमप्यनुसन्धेयम्; अनेन यज्ञे विशेषनिषेधादन्यत्र वैदिके कर्मणि शूद्रस्याधिकारशङ्का च निरस्ता भवति ॥

**स्मृतेश्च** ॥ **अथ हेत्यादि** अध्ययनादौ प्रायश्चित्तस्मरणमुपदेशनिषेधस्मरणञ्च । अनधिकारज्ञापकत्वात् [तत्] उभयमपि स्मृतिशब्दविवक्षितमिति भावः । "रथकारोऽग्नीनादधीत" इत्यादिषु "रूढिर्योगमपहरति" इति न्यायेन रूढा(ढ्य?)र्थः स्वीकृतः । तदपवादोऽर्थविरोधः । अनुकूललिङ्गसद्भावे विरोधिलिङ्गाभावे च रूढेः प्राबल्यम्; विरोधिलिङ्गसद्भावस्तदपवाद इत्युक्तं भवति । 'रथकारोऽग्नीनादधीत' इत्यत्रापि, सौधन्वना ऋभव इत्यनुकूललिङ्गं ह्युपलभ्यत इति ॥

ये तु—निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः; अन्यत् सर्वं मिथ्याभूतम्; बन्धश्चापारमार्थिकः; स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः; तन्निवृत्तिरेव मोक्षः—इति वदन्ति—तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते; अनुपनीतस्य अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि यस्मात् कस्मादपि, 'निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः; अन्यत् सर्वं तस्मिन् परिकल्पितं मिथ्याभूतम्' इति वाक्यात् वस्तुयाथात्म्यज्ञानोत्पत्तेः; तावतैव बन्धनिवृत्तेश्च। न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या, न वाक्यान्तरेणेति नियन्तुं शक्यम्; ज्ञानस्यापुरुषतन्त्रत्वात्; सत्यां सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः। न च वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति शक्यं वक्तुम्; येन केनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः। पौरुषेयादपि, निर्विशेषचिन्मात्रं ब्रह्म परमार्थः; अन्यत् सर्वं मिथ्याभूतमिति वाक्यात् ज्ञानोत्पत्तेः, तावतैव भ्रमनिवृत्तेश्च। यथा पौरुषेयादप्याप्तवाक्यात् शुक्तिकारजतादिभ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्तते—तद्वदेव शूद्रस्यापि वेदवित्संप्रदायागतवाक्यात् वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति। "न चास्योपदिशेद्धर्मम्" इत्यादिना, वेदविदः शूद्रादिभ्यो न वदन्तीति च न शक्यं वक्तुम्; तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रकिङ्करत्वाभावात्। अतिक्रान्तनिषेधैर्वा कैश्चिदुक्तात् वाक्यात् शूद्रादेः ज्ञानमुत्पद्यत एव। नच वाच्यम्—शुक्तिकादौ रजतादिभ्रमनिवृत्तिवत् पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्तत इति; तत्त्वमस्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः॥ निदिध्यासनेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादयतीति चेत्—पौरुषेयमपि वाक्यं शूद्रादेस्तथैवेति न कश्चिद्विशेषः। 'निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायि वाक्यं यदर्थप्रतिपादनयोग्यम्, तदर्थभावना। सैव विपरीतवासनां निवर्तयति इति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे।

---

अस्मिन्नधिकरणे परेषामनवकाशं दर्शयति **ये त्वि**त्यादिना। **अनुपनीतस्ये**ति। न हि, नायं सर्पो रज्जुरेषेति वाक्यात् भ्रमनिवृत्तेरुपनयनादिसंस्कारापेक्षेति भावः। तत्त्वमस्यादिव्यतिरिक्तवाक्येन ज्ञानं नोत्पद्यत इत्यत्राह **न चे**ति। अपुरुषतन्त्रत्वे हेतुमाह **सत्या**मिति। व्यतिरिक्तवाक्येनोत्पन्नमपि ज्ञानं न निवर्तकं भवतीत्यत्राह **न च वेदवाक्या**दिति। येन केनापीति सामान्येनार्थशरीरोक्तिः। पक्षमाह **पौरुषेयादपी**ति। **भ्रमनिवृत्तेः**। भ्रमनिवृत्तेर्न्याय्यत्वादित्यर्थः। सपक्षमाह **यथे**ति। ततः किमित्यपेक्षायां दृष्टान्तोक्तमर्थं पक्षेऽतिदिशति **तद्वदि**ति। शङ्कान्तरमुक्त्वा परिहरति **न चे**त्यादिना। **वेदशिरसि [वर्तमानतया?]**—वेदान्तनिष्ठत्वात्। यद्वा वेदस्यापि शिरसि निहितचरणत्वादिति यावत्। **निषेधशास्त्रकिङ्करत्वाभावा**दिति। अनेन, "दग्धाखिलाधिकारत्वाद्ब्रह्मज्ञानाग्निना मुनिः। वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः" इति **नैष्कर्म्यसिद्धि**ग्रन्थः स्मार्यते।

मुखान्तरेण ज्ञानोदयसंभवमाह **अतिक्रान्ते**ति। प्रत्यक्षविरोधमाशङ्क्य परिहरति **नचे**त्यादिना। शूद्रस्य निदिध्यासनेऽनधिकारान्न वाक्यार्थज्ञानोत्पत्त्या बन्धनिवृत्तिरित्यत्राह **निदिध्यासनं ही**ति। न हि निदिध्यासनमदृष्टद्वारा किञ्चित् करोति; निवर्त्यसत्यत्वप्रसङ्गात्। अदृष्टद्वारा किञ्चित्करत्वे सति हि यज्ञादाविव शूद्रस्यानधिकारः। न च तदस्ति। अतो नायं सर्प इति वाक्येन सर्पमिथ्यात्ववासनायामिव

वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्ते-इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यात् निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते; तेनैवापारमार्थिको बन्धो निवर्तिष्यते।

अथवा तर्कानुगृहीतात् प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुनि अज्ञानसाक्षित्वं तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्य, एवम्भूतपरिशुद्धप्रत्यग्वस्तुनि अनवरतभावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्यविचित्रसृष्ट्याद्यलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किञ्चित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव ब्रह्मविद्यायामधिकारः सुशोभनः। अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मबोधनसिद्धेरुपनिषच्च तपस्विनी दत्तजलाञ्जलिस्स्यात्।

न च वाच्यम्—नैसर्गिकलोकव्यवहारे भ्राम्यतोऽस्य केनचित्, अयं लौकिकव्यवहारो भ्रमः, परमार्थस्त्वेवमिति समर्पिते सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति; यतो भवभयभीतानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति; बुभुत्सायां च जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्याम्, 'नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत्; अन्यत् सर्वं तस्मिन् अध्यस्तम्' इति सुविवेचम्। एवम्भूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यं विशेषान्तरं च नाभ्युपगम्यते; अध्यस्ततद्रूपनिवर्तिनी हि श्रुतिरपि त्वन्मते। न च सत आत्मनः आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपतया एव सकलेतरातद्रूपव्यावृत्ताया आनन्दरूपत्वात्॥

---

शूद्रादेरपि निदिध्यासनेऽधिकारो न निषेद्धुं शक्यत इति भावः। शूद्रस्य यज्ञादिकर्मानधिकारात् तत्सापेक्षं वाक्यार्थज्ञानं न जायत इत्यत्राह **वेदानुवचनादीन्य**पीति। शूद्रस्यापि जन्मान्तरानुष्ठितयज्ञादिकर्मणः सञ्जातविविदिषस्य शूद्रजन्मनि निदिध्यासनमाप्तवाक्यावगताद्वैतविषयं कर्तुं शक्यमिति भावः।

मुखान्तरेण ज्ञानसंभवमाह **अथवे**ति। **तर्कानुगृहीता**दिति। त्वदुक्तानां प्रमाणानुपपत्तिप्रमेयानुपपत्त्यादीनां तर्काणामवगमो हि न श्रुत्यपेक्ष इति भावः। **सुशोभन** इति। इतःपूर्वमविद्यमानमीश्वरेशितव्यादिभेदज्ञानं जनयद्वेदवाक्यं हित्वा केवलाद्वैतज्ञानजनकतर्कावलम्बिनामेव ब्रह्मविद्याधिकारः सुलभ इत्यर्थः। श्रुतिवैयर्थ्यमनुपपत्त्यन्तरमाह **अनेनैवे**ति। "अप्राप्ते हि शास्त्रमर्थवत्"। अतः प्राप्तार्थत्वात् भेदज्ञानजनकत्वाच्च ब्राह्मणादेरपि श्रुतिरनादरणीयेत्यर्थः। **तपस्विनी**—शोचनीया; देशकालव्रताद्यनेकनियमवतीति भावः(वाऽर्थः?)। **नचेति**। **नैसर्गिक**शब्दोऽनादित्वपरः। प्रसञ्जकत्वेन श्रुतिरपेक्षितेति शङ्काग्रन्थार्थः। दूषयति **यत** इति। साङ्ख्यहैरण्यगर्भनैयायिकवैशेषिकबौद्धार्हतादिभिरेव प्रत्यक्षानुमानादिमुखेन वस्तुनिरूपणं प्रसक्तम्; अतो न श्रुत्यपेक्षेत्यर्थः। **सुविवेचमिति**। त्वयैव हि युक्तय उपन्यस्ता इति भावः। तर्कागोचरविशेषान्तरसिद्ध्यर्थं श्रुत्यपेक्षेत्यत्राह **एवम्भूत** इति। श्रुतेस्तात्त्विकविशेषानवबोधकत्वमुपपादयति **अध्यस्ते**ति। आनन्दत्वज्ञानाय तदपेक्षेत्यत्राह **न चे**ति। असुखव्यावृत्तिर्ह्यानन्दत्वम्; तत् सकलेतरव्यावृत्तिसाधकयुक्त्यैव सिध्यतीत्यर्थः।

यस्य तु—मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपम्; तच्च परब्रह्मभूतपरमपुरुषप्रीणनम्; तच्च शास्त्रैकसमधिगम्यम्; उपासनशास्त्रं चोपनयनादिसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति; एवंरूपोपासनप्रीतः पुरुषोत्तमः उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन् बन्धान्मोचयति--इति पक्षः, तस्य यथोक्तया नीत्या शूद्रादेरनधिकार उपपद्यते ॥ (३९) इति अपशूद्राधिकरणम् ॥ ९ ॥

प्रमिताधिकरण ६. शेषः

तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह--

**कम्पनात् । १ । ३ । ४० ॥**

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति", अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा" इत्यनयोर्वाक्ययोर्मध्ये, "यदिदं किञ्च जगत् सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदु-

---

स्वपक्षे सर्वमुपपन्नमित्याह **यस्य त्विति** ॥ ३९ ॥

**तदेवमिति** । देवादीनामधिकारनिरूपणं **प्रसक्तम्**; इतराधिकरणद्वयमनु**प्रसक्तम्** । **परब्रह्मभावोत्तम्भन**मिति । "ईशानो भूतभव्यस्य" इत्यवगतस्य नियमनस्य जगत्सर्वमेजतीति सर्वविषयत्वतत्कार्यकम्पनज्ञापनादुत्तम्भनम् ईशानशब्दस्य अस्वरसनिर्वाहे चिकीर्षितेऽपि तस्य विरोधीत्यर्थः ॥ नन्वधिकारनिरूपकं 'तदुपर्यपी'त्याद्यधिकरणत्रयं तृतीयस्य चतुर्थे पादे निवेश्यम् ॥ सत्यम् । तथापि सङ्गत्यतिशयात् समन्वयाध्याये निवेशितम् । मनुष्याधिकारत्वप्रसङ्गेन तावत् सङ्गतिः स्थिता । कार्यभूतदेवादीनां प्रामाणिकत्वसमर्थनं ब्रह्मणः परमकारणत्वोपयोगि; कार्यकारणावस्थादित्यादिचेतनान्तर्यामिण उपास्यत्वं मधुविद्यायामुक्तम्; अपशूद्राधिकरणे च संवर्गविद्यायाः परमात्मविषयत्वं ज्ञापितम्; अतः कारणानुबन्धिनो निरूपणस्य समन्वयलक्षणसङ्गतत्वात् तत्राप्यस्मिन् पादे मनुष्याधिकारप्रस्तावाच्चाधिकरणत्रयं निवेशितमिति ॥

**कम्पनात्** ॥ इदं सूत्रं "प्राण एजति" इति वाक्यविषयमधिकरणान्तरं ये वर्णयन्ति, तान् प्रतिक्षिपति **अनयोर्वाक्ययोर्मध्य** इति । परमात्मपरत्वेनोपपादितवाक्यद्वयमध्यगतत्वादस्य वाक्यस्य, अस्मिन्नेव मन्त्रे, "य एतत् विदुरमृतास्ते भवन्ति" इति अमृतत्वप्राप्तिहेतुत्वावगमात्, प्राणशब्दस्य परमात्मवाचकत्वस्यानेकाधिकरणन्यायसिद्धत्वाच्च पूर्वपक्षानुदय इति भावः । प्राणः कम्पनादित्यश्रवणात् सूत्रास्वारस्यं च ॥ ननु प्रकरणात् प्राणशब्दश्रुतिर्बलीयसी । धूमतेजोजलमरुत्सन्निपातरूपमेघात्मना परिणतस्य वायोरशनिरूपेण विवर्तनात् वज्रशब्दश्रुतिश्च तत्साधिका । वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यत इति ह्यर्थः । अमृतत्वहेतुता चोपपद्यते; "वायुरेव व्यष्टिर्वायुः समष्टिः । अप पुनर्मृत्युं जयति, य एवं वेद" इति श्रुतेः । अतोऽधिकरणान्तरं कार्यमिति ॥ उच्यते; पूर्वापरपर्यालोचनेन परमात्मपरतया निर्णीतेषु प्रकरणेषु मुख्यप्राणलिङ्गे तद्वाचकशब्दे सत्यपि परमात्मन एव प्रतिपाद्यत्वम्, 'प्राणस्तथाऽनुगमात्' इत्यत्र निर्णीतम् । अचेतनरूपप्रधानस्यापि मोक्षहेतुत्वानुपपत्तिः, "तन्निष्ठस्य मोक्षोपदेशात्" इत्यत्रोक्ता, । तत् कथं तत्कार्यैकदेशप्राणज्ञानस्य मोक्षहेतुत्वशङ्कोदयः? वायोरशनिकारणत्वेपि प्राणशब्दस्य वायुमात्रवाचित्वा-

रसृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात् तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिन् अङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात् सञ्जातमहाभयनिमित्तम् एजनं--कम्पनं श्रूयते । तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयात्, वज्रादिवोद्यतात्, कृत्स्नं जगत् कम्पत इत्यर्थः । "भयादस्याग्निस्तपति" इत्यनेनैकार्थ्यात् "महद्भयं वज्रमुद्यतम्" इति पञ्चम्यर्थे प्रथमा।

---

भावात् तन्मुख्यार्थस्य मुख्यप्राणस्याशनिकारणत्वाभावाच्च वज्रशब्देन न पञ्चवृत्तिप्राणशङ्का भवति । उद्यतशब्दोऽप्यशनिशङ्काविरोधी, अशनिर्हि निपतति, आयुधमेव ह्युद्यतं भवति; यथा 'तेनेन्द्रो वज्रमुदयच्छत्" इति। अतोऽधिकरणान्तरत्वमयुक्तम्। नन्वेवं परमात्मपरत्वनिश्चयात् त्वत्पक्षेऽपि सूत्रवैयर्थ्यमिति चेन्न—उक्तहेतूत्तम्भनरूपप्रयोजनस्य दर्शितत्वात् । सूत्रे चशब्दाभावोऽनन्तरपूर्वाधिकरणशेषत्वभ्रमानुदयार्थः ; न त्वधिकरणान्तरत्वात्।

**प्राण** इति सप्तम्यन्तपदसामर्थ्यात् स्थितानामित्यध्याहारः। कुतो निस्सृतमित्यपेक्षायां प्रकृतस्यैवापादानत्वमाह **तत** इति। कुत एजतीत्यपेक्षायां प्रकृतस्यैव भयनिमित्तत्वमाह **तस्मा**दिति । **भयम्**—आगाम्यनिष्टापत्तिज्ञानरूपं दुःखम्। **एजनम्**—तत्कार्यम्। श्रुतिसूत्रयोरभिन्नार्थत्वं ज्ञापयति **एजनं कम्पन**मिति। "एजृ कम्पने" इति हि धातुः। प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः **कम्पनम्**। तथेहाप्यवगम्यते, 'भयादस्याग्निस्तपति' इति । तपनं ह्यग्न्यादित्ययोः कार्यम्। धावतिशब्द इन्द्रादीनां स्वस्वव्यापारपरः। भयं विवृण्वन् वाक्यार्थं योजयति **तच्छासने**ति। **महतो भया**दिति। भयशब्दो न भयानकपरः, लक्षणाप्रसङ्गादिति भावः। **वज्रादिवोद्यता**दिति। वज्रशब्द आयुधपरः ; न त्वशनिपरः, उद्यतशब्दविशेषितत्वादिति भावः। **वज्रादिवे**ति **इव**शब्देन श्रुतिवाक्ये वज्रशब्द उपचाराद्वज्रतुल्ये वर्तते, अध्याहारादपि गौणवृत्तेरुचितत्वादिति **वज्र**शब्दस्य तत्तुल्यार्थत्वं फलतो दर्शितम्। कथं हेतुत्वावगम इत्यत्राह **भयादस्ये**ति। कथं प्रथमायाः पञ्चम्यर्थत्वमित्यत आह **महद्भयं वज्रमुद्यतमि**तीति। न वज्रं भयदृष्टान्तः, दृष्टान्तदार्ष्टान्तिकवैघर्म्यात्। भयमव्यवधानेन कम्पनहेतुः ; वज्रं तु भयद्वारा तद्धेतुः। अतो वज्रं भयहेतुदृष्टान्तः। उद्यताद्वज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थः; **तस्मात्सञ्जातमहाभयनिमित्तमेजन**मिति पूर्वग्रन्थैकार्थ्यात्। एवं तर्हि प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्गः, इवशब्दाध्याहारश्च स्यात्। तदुभयानादरेणार्थवर्णनं किंनिबन्धनमित्यत्राह **भयादस्ये**ति। अनन्तरवाक्ये **भयादस्ये**ति भयतद्धेतुवाचिपदयोर्वैयधिकरण्यदर्शनात्, भयपदस्य पञ्चम्यन्तत्वदर्शनात्, पूर्वापरवाक्ययोरैकार्थ्यस्य न्याय्यत्वात् दृष्टान्तदार्ष्टान्तिकसामञ्जस्याच्चेत्यर्थः। ननु भयशब्देन भयानकलक्षणा न्याय्या, गङ्गापदादिषु प्रकृत्यंशेन प्रकृत्यन्तरार्थलक्षणाया दृष्टत्वात् । प्रथमाया हेत्वर्थलक्षणा त्वयुक्ता ; विभक्तीनां विभक्त्यन्तरार्थे लक्षणाया अदर्शनात्। तच्चानुशासनविरोधात्। पाशाधिकरणेऽपि हि बहुत्वाविवक्षामात्रम् ; न तु विभक्त्यन्तरार्थलक्षणा। अतो भयानकं वज्रमिव ब्रह्म यत्, तस्मात् कृत्स्नं जगत् कम्पत इत्येव हि योजना युक्ता ; अत आह **महद्भयं वज्रमुद्यतमि**तीति। 'सुपां सुलुक्' इत्यादिसूत्रेण

अयश्च परस्य ब्रह्मणः स्वभावः; एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः ॥ ४० ॥

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

## ज्योतिर्दर्शनात् १ । ३ । ४१ ॥

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं च अङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति ।

---

सर्वविभक्तिषु प्रथमायाः विहितत्वात् इयं प्रथमा पञ्चम्यर्थवाचिनीत्यर्थः । वचनव्यत्ययो वा । अयमभिप्रायः- योजनाद्वयेऽपि इवशब्दाध्याहारो वज्रशब्दस्यामुख्यत्वं वाऽवश्यं भवेत् । प्रथमान्तयोजनायां प्रथमाविभक्तिस्वारस्यं सामानाधिकरण्यस्वारस्यञ्चाभग्नं स्यात् । भयशब्दस्य तद्धेतुलक्षणाश्रयणं यत्तच्छब्दाध्याहारः पदैकवाक्यतायां सम्भवन्त्यां तत्प्रहाणेन वाक्यैकवाक्यभावाङ्गीकार इति त्रयो दोषाः । योजनान्तरे प्रथमायाः पञ्चम्यर्थताश्रयणास्वारस्यं सामानाधिकरण्यभङ्गश्च द्वौ दोषौ; भयपदप्रातिपदिकमुख्यत्वं यत्तच्छब्दानध्याहारः पदैकवाक्यता **भयादस्ये**त्यनन्तरवाक्यैकरूप्यञ्चेति चत्वारो गुणाः । अतो दोषभूयस्त्वगुणलाघवयुक्तनिर्वाहादपि दोषलाघवगुणभूयस्त्वयुक्तनिर्वाहो वरमिति । कृत्स्नजगद्भयावहत्वलक्षणस्य प्रशासनस्य परमात्मधर्मत्वं श्रुत्यन्तरप्रसिद्ध्योपपादयति **अयश्चे**ति ॥

**ज्योतिर्दर्शनात्** । एतत्प्रकरणहेतुपरत्वमेव युक्तमिति दर्शयति **वाक्ययोर्मध्य** इति । 'न तत्र सूर्यः' इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह **सर्वतेजसां छादक**मिति । उत्तरार्धस्य पूर्वपादार्थमाह **सर्वतेजसां कारणभूत**मिति । **अनुभानम्**—पश्चाद्भानम् । तेन कारणभावः सिद्धः । पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह **अनुग्राहक**मिति । 'यस्मादित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणम् । **ज्योतिर्दृश्यत** इति । **ज्योतिः** दीप्तिः; 'ज्योतिष्मद्भ्राजमानं महस्वत्' इति प्रयोगात् ॥

ननु कथं कारणत्वानुग्राहकत्वे संभवतः? तद्धि प्राकृततेजोविजातीयम् । सजातीयतेजो हि तेजसां कारणमनुग्राहकं च दृष्टम्; यथा दीपो दीपान्तरस्य, दीपादिप्रभा च चाक्षुषप्रभाया इति ॥ उच्यते । निमित्ततया कारणत्वोपपत्तिः । उपादानस्यैव हि साजात्यापेक्षा । आहङ्कारिकस्य विजातीयस्यापि चक्षुषस्तेजोद्रव्येणाप्यायनं च दृष्टम् । निमित्तकारणत्वञ्च तेजःकारणभूतवस्त्वनुग्राहकतया भवति । यथा कालस्य निमित्तत्वं कारणवस्त्वनुग्राहकतया, यथा च सलिलदहनातपादीनां घटोत्पत्तौ निमित्तत्वं मृद्द्रव्यसंयोगेन तत्र किञ्चित्करतया भवति—एवमप्राकृततेजोऽपि प्राकृततेजस उत्पत्तौ तदुपादानद्रव्यस्यानुग्राहकतया निमित्तं भवतीत्यभ्युपगन्तव्यम्, प्रमाणबलात् । उत्पन्नस्यापि तेजसः स्वकार्यकरणसामर्थ्यस्य तत्संबन्धापेक्षत्वात् तदनुग्राहकम्; यथा चाक्षुषरश्मेश्चन्द्रातपादिः; यथा शुष्ककण्ठस्य वाग्व्यवहारे पानीयास्वादनम्; यथा मनसो धारणग्रहणस्मरणादिपाटवे सम्यगाहारः । उक्तलक्षणकारणत्वानुग्राहकत्वाभिप्रायेण भगवता पराशरेण मूर्तब्रह्मशब्दवाच्यदिव्यविग्रहविशिष्टत्वमुक्त्वा,

अयमेव श्लोक आथर्वणे परं ब्रह्माधिकृत्य श्रूयते । परञ्ज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणः श्रूयते; यथा—"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", "तं देवा ज्योतिषां ज्योतिरायुर्होपासते

---

"ततो जगत् जगत्तस्मिन् स जगच्चाखिलं मुने" इत्युच्यते । स जगदिति सामानाधिकरण्यं धारकत्वनिबन्धनम् ॥

अस्य वाक्यस्य परोक्तार्थोऽनुपपन्नः । तथाहि—सूर्यादिभिरप्रकाश्यत्वं न पूर्वार्धस्यार्थः, भातिशब्दस्य ज्ञानवाचित्वाभावात् । स हि दीप्त्यर्थः, । 'भा दीप्तौ' इति हि धातुः । किञ्च यदि भासयितृत्वं निषिध्यते, तदा ब्रह्मविषयज्ञानहेतुत्वनिषेध इति च वक्तुं शक्यते । इह भानमेव निषिध्यते; न भासयितृत्वम् । यदि णिजर्थान्तर्भावनमिष्टम्, तदा तत्रेति सप्तमी न घटते; कर्मत्वस्यैव प्राप्तत्वात्; अतोऽर्थान्तरानुपपत्तेः, "दिवि सूर्यसहस्रस्य भवेत् युगपदुत्थिता । यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः" इति स्मृत्यानुगुण्याच्च तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वमेवात्र प्रतिपाद्यम् । तृतीयपादे चाधिष्ठानस्फुरणाधीनम् अध्यस्तस्फुरणमुच्यत इति चायुक्तम्; तमिति पुँल्लिङ्गान्तस्य तच्छब्दस्य चिदचिद्व्यावर्तकानन्तगुणविशिष्टपरमपुरुषपरत्वात् तस्मिन् भासमानेऽध्यासानुपपत्तेरध्यस्तवस्तुस्फुरणायोगात् । सर्वज्ञत्वादिगुणको निर्दोषः परमपुरुषो हि मुण्डके प्रकृतः । कठवल्ल्याश्चाकर्मवश्योऽनन्तमहिमा सर्वनियन्ता सर्वाधारो विष्णुशब्दवाच्यः सर्वस्मात्परः स एव पुरुषः प्रकृतः । श्वेताश्वतरे च सहस्रशीर्षत्वसहस्राक्षत्वादिमान् स्वाभाविकपरज्ञानशक्त्यादिगुणकः सत्त्वप्रवर्तको महापुरुषः प्रकृतः । सर्वज्ञत्वादयश्च गुणाः समस्तचिदचिद्व्यावर्तकाः; तैर्विशिष्ट एव तच्छब्देन परामृश्यते; न वस्तुमात्रम्; तच्छब्दस्य प्रकृतपरामर्शित्वस्वारस्यभङ्गात्; पुँल्लिङ्गनिर्देशस्य प्रकृतपुरुषविषयत्वज्ञापकत्वाच्च । अतः, तमेव भान्तमिति तद्दीप्तियोगस्य स्वाभाविकत्वं नित्यत्वमप्रतिहतत्वमितरतेजसां तद्धेतुकत्वं चोक्तम् । तमेव भान्तम्—तं भान्तमेवेति ह्यन्वयः; तमेवेत्यन्वये सति व्यवच्छेद्यतेजोन्तरासम्भवात् । तथाऽन्वयेऽपि न विरोधः । यद्यधिष्ठानस्फुरणाधीनम् अध्यस्तस्फुरणमित्युच्येत, 'तस्य भासा सर्वमिदं विभाति' इति पुनरुक्तिश्च स्यात् ॥ तस्य वृत्तिरूपज्ञानेन सर्वं भातीत्यर्थ इति चेन्न; भाश्शब्दस्य वृत्तिज्ञानवाचित्वाभावात् । अतो भगवत्तेजसः सर्वतेजोनुग्राहकत्वमेव चतुर्थपादार्थः । अतः प्रकरणस्वरुक्मवर्णश्रुति-पुरुषशब्दप्रत्यभिज्ञापितादित्यवर्णश्रुतिप्रसिद्धदिव्यविग्रहद्वारकदीप्तिविशिष्टोऽनेन मन्त्रेण प्रतिपाद्यते ।

परमात्मपरतया निर्णीतप्रकरणस्थतया प्रत्यभिज्ञायमानत्वाच्चास्य मन्त्रस्य परमात्मसाधकत्वमित्याह **अयमेव श्लोक** इति । एवं शब्दतः प्रत्यभिज्ञानं हेतुतयोक्तम्; अर्थतः श्रुत्यन्तरप्रत्यभिज्ञानञ्चास्य मन्त्रस्य परमात्मत्वसाधकत्वोपपादकमित्यभिप्रायेणाह **परञ्ज्योतिष्ट्वञ्चे**ति । आदिशब्देन "तच्छुभ्रं ज्योतिषां ज्योतिः", 'नारायणपरो ज्योतिः' इत्याद्यभिप्रेतम् ।

एवं स्वपक्षसाधकतया श्रुत्यन्तरस्थवाक्यत्रयोपादनेन अर्थात् परपक्षव्युदासश्च सिद्धः । **परैः** खल्विदं सूत्रम्; "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय" इत्यादिवाक्यविषयमधिकरणान्तरं व्याख्यातम् । तत्र च

**ऽमृतम्", "अथ यदतः तदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिषु । अतः अङ्गुष्ठप्रमितः परं ब्रह्म ॥ ४१ ॥ इति प्रमिताधिकरणशेषः ॥ ६ ॥**

---

ज्योतिश्शब्दस्यादित्यपरत्वं पूर्वपक्षीकृत्य परब्रह्मपरत्वं सिद्धान्तितम् । तदयुक्तम्; पूर्वपक्षानुत्थानात् ॥ ज्योतिश्शब्दश्रुतिर्हि प्रकरणाद्बलीयसी; अत उत्थानमिति चेन्न—किं ज्योतिश्श्रुतिरादित्यासाधारण्यात् तत्साधिका, उत साधारण्येऽपि प्रवृत्तिनिमित्तभूतप्रकाशकत्वपौष्कल्याद्वा(त्?) । न प्रथमः, "आपो ज्योतिश्च पञ्चमम्", "अग्निर्ज्योतिरहः शुक्लः", "ज्योतींषि शुक्राणि च यानि लोके", 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इति बह्वर्थसाधारणतया प्रयुज्यमानत्वात् । न द्वितीयः; "नारायणपरो ज्योतिः' "तच्छुभ्रं ज्योतिषां ज्योतिः", "तं देवा ज्योतिषां ज्योतिः" इति नारायण एव प्रवृत्तिनिमित्तपौष्कल्य-दर्शनादित्यभिप्रायेण 'तं देवा ज्योतिषाम्' इति वाक्यमुपात्तम् । ज्योतिषां ज्योतिरित्युक्तत्वात् ज्योतिष्ट्वं तत्प्रकर्षश्च ह्यवगम्यते । अतो ज्योतिश्शब्दस्य साधारण्यं भगवत्येव प्रवृत्तिनिमितपौष्कल्यञ्च तेन सिद्धम् । आदित्यासाधारण्याभ्युपगमेऽपि कृतकरत्वज्ञापनाय **अथ यदतः पर** इति वाक्यमुदाहृतम्; "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्येतद्वाक्यविषयेण, 'ज्योतिश्चरणाभिधानात्' इत्यधिकरणेन ज्योतिश्शब्दश्रुतेः परिहृतत्वात् । तत्र हि "पादोऽस्य सर्वा भूतानि" इति प्रकरणम् । स्थितमपि तदनादृत्य ज्योतिश्शब्दस्य तमःप्रतिद्वन्द्विनि प्रसिद्धतया आदित्यविषयत्वं परैरेवोक्तं परिहृतञ्च । अतः कृतकरत्वम् । परशब्दविशेषितज्योतिश्शब्दोऽपि न आदित्ये रूढः । परत्वस्य निरतिशयस्य तस्मिन्न-संभवादेव गुणयोगादपि नादित्यप्रतीतिः ॥ उत्थानश्रुतिः स्वात्मश्रुतिश्च पूर्वपक्षहेतुरिति चेन्न; परब्रह्म-विषयत्व एव तयोरुपपत्तेर्वक्ष्यमाणत्वात् । माऽस्तु तयोः परब्रह्मविषयत्वसम्भवः; तथापि नारम्भणीयता; "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रेणास्य वाक्यस्य परब्रह्मप्राप्तिप्रतिपादकत्वस्य समर्थितत्वात् । "यत्तत् परं ज्योतिरुपसम्पत्तव्यं श्रुतम्, तत् परं ब्रह्म । तच्चापहतपाप्मत्वादिधर्मकम् । तदेव च जीवस्य पारमार्थिकं रूपम्" इति हि तैरुक्तम् । 'श्रुतिकृतं विवेकज्ञानं शरीरात्समुत्थानम्, विवेकज्ञानफलं स्वरूपेणाभिनिष्पत्तिः' इति समुत्थानादिश्रुतिनिर्वाहश्च तैस्तत्रैव कृतः । अतः कृतकरत्वम् ॥ इह परब्रह्मोपसम्पत्त्याऽऽविर्भूतस्वरूपविषयत्वसमर्थनमुपजीव्य दहराकाशस्य परमात्मत्वं तत्र समर्थितमिति चेत्—तर्हि उत्तराच्चेदिति सूत्रानन्तरं 'ज्योतिर्दर्शनात्' इति सूत्रं निवेशयितव्यम्; हेतुप्रयोगानन्तरमेव हेत्वसिद्धेः परिहरणीयत्वात् । अपहतपाप्मत्वादिगुणकस्याऽऽत्मनो वक्तव्यत्वेन अनुवृत्तिदर्शनेन हि तदसिद्धिरिह परिह्रियते । इदञ्च तत्रैवोक्तम्; अपहतपाप्मत्वादिगुणकमात्मानं प्रस्तुत्य, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति तमाकृष्य तस्य स्वप्नसुषुप्त्याद्युपन्यासक्रमेण परमार्थस्वरूपाविर्भावोपदेशपरमिदं वाक्यमिति तत्र तैरेव प्रतिपादनात् । तदप्रतिपादने चास्य वाक्यस्याऽऽविर्भूतस्वरूपविषयत्वासिद्धेः । अतः कृतकरत्वम् । अन्यथा तत्रैवैतत्सूत्रनिवेशनं वा प्रसजेत् ।

अपरे त्वाहुः—शरीरादुत्थानस्य स्वेन रूपेणाभिनिष्पत्तेश्च मध्ये श्रूयमाणा परज्योतिः-प्राप्तिर्नाम आदित्यप्राप्तिः; अर्चिरादिमार्गप्रत्यभिज्ञानात् । तत्र हि आदित्यादिप्राप्तिर्मध्ये श्रूयते ।

## २७. अर्थान्तरत्वादिव्यपदेशाधिकरणम् १-३-१० (छा. ८-१४)

**आकाशोऽर्थान्तरत्वादिव्यपदेशात् १ । ३ । ४२ ॥**

छान्दोग्ये श्रूयते, "आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा । तद्ब्रह्म तदमृतं स आत्मा" इति । तत्र संशयः—किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मा, उत परमात्मा—इति ।

---

आदित्यस्य परत्वञ्च अर्चिराद्यपेक्षयेति पूर्वपक्षोत्थानमिति—तदप्यत एव निरस्तम्; उत्तराच्चेदिति सूत्र एवास्य वाक्यस्य परब्रह्मोपसंपत्त्याऽऽविर्भूतस्वरूपात्मविषयत्वस्य समर्थितत्वादिति ॥ ४१ ॥

**आकाशोऽर्थान्तरत्वादिव्यपदेशात्** ॥ पूर्वं दहराकाशस्य परब्रह्मत्वे साध्यमाने, "अल्पश्रुतेरिति चेत् तदुक्तम्" इति सूत्रेणाल्पश्रुतिः परिहृता । अल्पश्रुतिप्रसङ्गेनाङ्गुष्ठप्रमितस्य परत्वं साधितम् । तत्प्रसङ्गेनाधिकरणत्रयमुक्तम् । अथ पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदनन्तरभूतस्य, 'आकाशो वै नाम' इत्यादिप्रकरणस्य जीवपरत्वमाशङ्क्य परिह्रियत इति सङ्गतिः । मुक्तस्य प्रकृतत्वान्मुक्तात्मपरमात्मविषयसंशयमाह **किमय**मिति ।

**परै**स्तु भूताकाशः पूर्वपक्षितः । तथा च सति अनारम्भणीयतैव स्यात्; आकाशस्तल्लिङ्गादित्यनेनैव चरितार्थत्वात् । तत्र हि, 'अस्य लोकस्य का गतिरिति आकाश इति होवाच' इत्याकाशश्रुत्या भूताकाशपरत्वमाशङ्क्य सर्वभूतकारणत्वज्यायस्त्वपरायणत्वादीनां भूताकाशेऽन्वयानर्हत्वात् बहुश आकाशशब्दाभ्यासे सत्यपि तद्बाधेन परमात्मपरत्वं निर्णीतम् । इहापि नामरूपयोर्निर्वोढृत्वब्रह्मशब्दामृतत्वादिभिराकाशस्य ब्रह्मत्वं निश्चीयते इति न वैषम्यम् । दहराकाशस्य तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतेरन्वेष्टव्यस्यैव तत्रत्यं परमात्मलिङ्गम्, न तु दहराकाशस्येति शङ्काविशेषसंभवात् दहराधिकरणोत्थानं युक्तम्; इह तु न तथा शङ्का दृश्यते ॥ नन्ववकाशप्रदानद्वारा नामरूपनिर्वहणहेतुत्वमाकाशस्य युज्यते, अतः स्ववाक्ये परमात्मलिङ्गाभावो वैषम्यमिति ॥ उच्यते । किमत्र स्ववाक्ये परमात्मलिङ्गाभावः स्वरसार्थस्वीकारेण वर्ण्यते, उत क्लिष्टार्थकल्पनया? न प्रथमः; स्वयमप्यन्येन निर्वाह्यनामरूपस्याकाशस्य सर्वनामरूपनिर्वोढृत्वानुपपत्तेः । तस्य च परमात्मलिङ्गभूतस्य स्ववाक्यस्थत्वेन 'सर्वाणि ह वा' इत्यादिवाक्यादविशेषात् । न द्वितीयः; अवकाशप्रदानद्वारा सर्वभूतोत्पत्तिकारणत्वस्याप्याकाशे संभाविततया स्ववाक्ये परमात्मासाधारणधर्माभावस्य तत्र चात्र चाविशेषात् ॥ **अपरैस्तु** ब्रह्मशब्दस्य मुक्तात्मपरत्वं वदद्भिरेवाकाशशब्दस्य भूताकाशपरत्वं पूर्वपक्षितम् । तत्राप्याकाशविषयनिरूपणस्य कृतकरत्वं तुल्यम् । अतः परपक्षे पूर्वपक्षानुदय एव । अतः परमात्मलिङ्गानां भूताकाशेऽन्वयानर्हतया आकाशशब्दस्य यौगिकार्थे ग्राह्ये सति अनन्तरपूर्ववाक्ये मुक्तात्मनः प्रकृतत्वात् नामरूपनिर्वोढृत्वादिलिङ्गाच्च मुक्तात्मपरमात्मविषयत्वेन संशयोत्थानं युक्तमित्यभिप्रायेण मुक्तात्मपरमात्मविषयत्वेन संशयं दर्शयति **तत्रे**ति ।

किमाकाशशब्दनिर्दिष्टो मुक्तः, उत परमात्मेति संशयः । तदर्थं 'धूत्वा शरीरम्' इति मुक्तस्यानन्तरप्रकृतत्वमाकाशशब्दस्य मुक्तपरतामवगमयति, नेति । किं मुक्तस्य नामरूपनिर्वोढृत्वं संभवति, नेति । किमत्र नामरूपनिर्वोढृत्वं नामरूपभाक्तया, उत नामरूपव्याकर्तृतयेति । किं 'ते यदन्तरा' इति

किं युक्तम्? मुक्तात्मेति ।-कुतः? "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति मुक्तस्यानन्तरप्रकृतत्वात्; "ते यदन्तरा", इति च नामरूपविनिर्मुक्तस्य तस्याभिधानात् । "नामरूपयोर्निर्वहिता" इति च स एव पूर्वावस्थयोपलिलक्षयिषितः । स एव हि देवादिरूपाणि नामानि च पूर्वमबिभः(भृत) । तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिकी अवस्था, "तद्ब्रह्म तदमृतम्" इत्युच्यते । आकाशशब्दश्च तस्मिन्नपि असङ्कुचितप्रकाशयोगादुपपद्यते ॥ ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते; तस्य च परमात्मत्वं निर्णीतम् ॥ मैवम्--प्रजापतिवाक्यव्यवधानात् । प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम्; अनन्तरं च, "विधूय पापम्" इति स एव मुक्तावस्थः प्रस्तुतः । अतोऽत्राकाशो मुक्तात्मा-

इति प्राप्ते उच्यते-आकाशोऽर्थान्तरत्वादिव्यपदेशात्-इति । आकाशः परं ब्रह्म; कुतः? अर्थान्तरत्वादिव्यपदेशात् । अर्थान्तरत्वव्यपदेशस्तावत्-"आकाशो ह वै नामरूपयोर्निर्वहिता" इति । नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात् प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति । बद्धावस्थः स्वयं कर्मवशात् नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्; मुक्तावस्थस्य जगद्व्यापारासंभवात् नतरां नामरूपनिर्वोढृत्वम्; ईश्वरस्य तु सकलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम्, "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते", "सर्वाणि रूपाणि वि चत्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते" इत्यादिषु । अतो निर्वाह्यनामरूपात् प्रत्यगात्मनो नामरूप-

---

निर्देशः कर्तृतया निर्वोढृत्वमुपपादयति, नेति । यदा नोपपादयति, तदा नामरूपभाक्त्वमेव तन्निर्वोढृत्वमिति तस्य जीवेऽपि बद्धदशायां संभवेन मुक्तात्मनः प्रकृतत्वमाकाशशब्दस्य मुक्तपरत्वावगमकमित्याकाशो मुक्तात्मेति पूर्वः पक्षः । यदा 'ते यदन्तरा' इति निर्देशः कर्तृतया नामरूपनिर्वोढृत्वमुपपादयति, तदा नामरूपनिर्वोढृत्वं नाम तत्कर्तृत्वरूपमिति तस्य मुक्तात्मन्यसंभवात् मुक्तात्मनः पूर्वप्रकृतत्वेऽप्यस्मिन् वाक्ये मुक्तात्मनोऽवगत्यनुपपत्तेराकाशशब्दनिर्दिष्टः परमात्मेति राद्धान्तः ।

**ते यदन्तरे**ति । उभयोर्मध्यस्थत्वात् तदस्पृष्टत्वं फलितम्; मध्यस्थस्यान्यतरपक्षपाताभावात् । तेन पूर्वोक्तमुक्तप्रत्यभिज्ञानादित्यर्थः । मुक्तस्य नामरूपनिर्वोढृत्वं कथमित्यत्राह—**नामरूपे**ति । नामरूपयोर्निर्वहितेति श्रुत्यनुवादः; न त्वर्थानुवादः । उपलक्षणतयाऽभिमतं निर्वोढृत्वं पूर्वावस्थायामपि नास्तीत्यत्राह **स एव ही**ति । नामरूपनिर्वोढृत्वं न नामरूपकर्तृत्वम्; अपि तु नामरूपभाक्त्वम् । वहनं हि धात्वर्थः । उपसर्गाणां नानार्थत्वसंभवात् नितरां वोढृत्वं निर्वोढृशब्दार्थस्यादिति पूर्वपक्षिणोऽभिप्रायः । तर्हि कथममृतत्वादिकमित्यत्राह **तस्यैवे**ति । **साम्प्रतिकी**ति । नामरूपविमोक्षानन्तरकालभाविन्यवस्था । तस्य कालस्य प्रकृतत्वात् **साम्प्रतिकी**त्युच्यते ।

राद्धान्ते—**व्यपदेशस्तावदि**ति । प्रदर्श्यत इति शेषः । यद्वा **नामरूपयोर्निर्वहितेति व्यपदेश** इत्यन्वयः । **अर्थान्तरत्वशब्द**स्तदुपपादकधर्मं लक्षयति । अर्थान्तरत्वमाकाशस्योपपादयतीति ह्युक्तम् । भेदकधर्मव्यपदेशादित्यर्थः । **नामरूपयोरित्यादि** । नामरूपनिर्वोढृत्वञ्च स्पष्टभेदकधर्मः । अवयवशक्त्या निर्वोढृशब्दस्य वहनमात्रपरत्वादपि "रूढिर्योगमपहरति" इति न्यायात् कर्तृपरत्वं युक्तमिति भावः ॥

योर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म। तदेवोपपादयति, "ते यदन्तरा" इति। यस्मादयमाकाशो नामरूपे अन्तरा—ताभ्यामस्पृष्टोऽर्थान्तरभूतः—तस्मात् तयोः निर्वोढा [निर्वहिता?]—अपहतपाप्मत्वात् सत्यसङ्कल्पत्वाच्च निर्वहिते (निर्वोढे?)त्यर्थः। आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वानि गृह्यन्ते। निरुपाधिकबृहत्त्वादयो हि परमात्मन एव संभवन्ति; तेनात्राऽऽकाशः परमेव ब्रह्म। यत् पुनरुक्तम्, "धूत्वा शरीरम्" इति मुक्तोऽनन्तरप्रकृतः इति—तन्न; "ब्रह्मलोकमभिसंभवामि" इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्। यद्यपि अभिसंभवितुर्मुक्तस्याभिसंभाव्यतया परं ब्रह्म निर्दिष्टम्, तथापि अभिसंभवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसंभवादभिसंभाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम्।

किञ्च आकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वात् उपास्य एव दहराकाशः प्राप्यतयेहोपसंह्रियत इति युक्तम्। आकाशशब्दश्च प्रत्यगात्मनि न क्वचित् दृष्टचरः। अतोऽत्राकाशः परं ब्रह्म ॥ ४२ ॥

अथ स्यात्—प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति; ऐक्योपदेशात्, द्वैतप्रतिषेधाच्च।

---

नन्वेवं सति 'ते यदन्तरा' इति कथं मुक्तस्यानन्तरमभिधानमित्यत्राह **तदेवोपपादयति ते यदन्तरेतीति**। कर्मकृतनामरूपभाक्त्वाभावात् तयोः स्वेच्छया निर्वोढा परमात्मा। न हि कर्मपराधीनचेष्टितस्य बद्धस्य जगद्व्यापारानुगुणसङ्कल्पादिरहितस्य मुक्तस्य च नामरूपनिर्वोढृत्वं संभवतीत्यर्थः। **निर्वहितेति** श्रुतिस्थपदानुकारः। आदिशब्दार्थमाह **आदिशब्देनेति**। **निरुपाधिक**शब्दोऽनवच्छिन्नत्वपरः; उपाधिर्ह्यवच्छेदकः। जीवस्य ज्ञानतो बृहत्त्वम्; तच्च परमात्मप्रसादायत्तम्। **बृहत्त्वादय** इति। धर्मा इति शेषः। धूत्वेत्यादि। ब्रह्मैव लोको **ब्रह्मलोकः**। प्रथमानिर्दिष्टस्याभिसंभवितुः प्राधान्येन प्राकरणिकत्वस्वारस्येऽपि लिङ्गबलात् प्राकरणिकत्वस्वारस्यभङ्गो युक्त इत्यभिप्रायेणाह **यद्यपीति**। अवान्तरप्रकरणेन पूर्ववाक्यस्य जीवस्वरूपपरत्वमभ्युपेत्य परिहृतम्। वस्तुतस्तु ब्रह्मलोकश्रुत्यनुगृहीतमहाप्रकरणबलात् पूर्ववाक्यमपि न जीवपरम्; किन्तु तस्य परमप्राप्यभूतपरब्रह्मपरत्वमेवेत्याह **किञ्चाकाशेति**। प्रजापतिवाक्यस्य व्यवधायकत्वशङ्काव्यावृत्त्यर्थमाह **प्रजापतिवाक्यस्येति**। हेत्वन्तरमप्याह **आकाशशब्दश्चेति** ॥

उत्तरसूत्रमवतारयितुं शङ्कामाह **अथ स्यादिति**। ननु कथमात्मान्तरमेव नास्तीत्युच्यते; त्रिपादी ह्यन्ययोगव्यवच्छेदपरा। प्रथमपाद एव चिदचिद्विलक्षणवस्तुसद्भावः समर्थितः॥ उच्यते। सिद्धिस्तावदुभयविधा साधकप्रमाणसंभवाधीना, बाधकप्रमाणव्युदासाधीना च। बाधकप्रमाणव्युदासेन साधकसत्तायत्ता सिद्धिः स्थेयसी भवति। तदभावे साधकमात्राधीना सिद्धिरस्थिरा। अस्थिरं चासत्कल्पम्। अत्र प्रथमे पादे साधकसद्भावायत्तसिद्धौ दर्शितायामप्यैक्योपदेशभेदनिषेधरूपबाधकव्युदसनस्य सूत्रकारैः इतःपूर्वमकृतत्वात् साधकाधीनसिद्धेरस्थिरप्रायत्वात् **नास्तीत्युक्तम्**। प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरं दृढप्रमाणसिद्धं न भवतीत्यर्थः। चतुर्थपादेऽपि ईदृशव्यपदेश उक्तार्थाभिप्रायो वेदितव्यः। यद्वा त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं प्राचुर्यनिबन्धनमिति नानुपपत्तिः। **ऐक्योपदेशाद् द्वैतप्रतिषेधाच्चेति**। मुक्तप्राप्यतयोक्तस्य ब्रह्मलोकशब्दनिर्वाच्यतया बृहदारण्यके प्रत्यभिज्ञायमानस्य,

शुद्धावस्थ एव हि प्रत्यगात्मा, परमात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते ; अतः प्रकृतात् मुक्तात्मनोऽभिसंभवितु नार्थान्तरमभिसंभाव्यो ब्रह्मलोकः। अतो नामरूपयोः निर्वहिता आकाशोऽपि स एव भवितुमर्हति-इति। अत उत्तरं पठति—

## सुषुप्त्युत्क्रान्त्योर्भेदेन १ । ३ । ४३ ॥

व्यपदेशादिति वर्तते। सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात् प्रत्यगात्मनोऽर्थान्तरभूतः परमात्माऽस्त्येव । तथा हि वाजसनेयके, "कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु" इति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायाम् अकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते-"प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्" इति। तथोत्क्रान्तावपि, "प्राज्ञेनाऽऽत्मनाऽऽन्वारूढ उत्सर्जन् याति" इति । न च स्वपतः उत्क्रामतो वाऽकिञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ संभवतः। न च क्षेत्रज्ञान्तरेण; तस्यापि सर्वज्ञत्वासंभवात् ॥ ४३ ॥

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह--

## पत्यादिशब्देभ्यः १ । ३ । ४४ ॥

---

"एकधैवानुद्रष्टव्यम् , 'स वा एष महानज आत्मा योऽयं विज्ञानमयः', 'नेह नानास्ति किञ्चन' इति जीवेनैक्यप्रतिपादनाद् भेदनिषेधाच्चेत्यर्थः। तत्र हि, "एष ब्रह्मलोकः सम्राडिति होवाच" इति प्रकरणावसाने तस्य परमात्मनो ब्रह्मलोकशब्दनिर्देशोऽवगम्यते। चशब्दः समुच्चये। ऐक्योपदेशभेदनिषेधयोः प्रत्येकं भेदविरोधित्वात् । इतरेतरयोगे वा चशब्दः ; ऐक्यस्यामुख्यत्वशङ्कानिवारकत्वात् भेदनिषेधस्य। **नामरूपयोर्निर्वहितेति** पूर्ववत् यथाश्रुत्यनुवादः। अत एव हि **नामरूपयोर्निर्वोढृत्वमिति** स्वग्रन्थे निर्दिष्टम् । आपाततोऽर्थान्तरत्वे प्रतीतेऽपि न तत् सिद्धान्तीकर्तव्यमिति शङ्काग्रन्थस्यार्थः ॥

**सुषुप्त्युत्क्रान्त्योर्भेदेन** ॥ सूत्रस्याकाङ्क्षां पूरयति **व्यपदेशादिति वर्तत** इति । यथा, 'अथ शब्दानुशासनम्' इत्यत्र केषां शब्दानामित्युक्ते समस्तस्याप्यनुशासनपदस्य विभागेन अनुषङ्गः, तथेहापीति भावः। सूत्रे **सुषुप्त्युत्क्रान्त्यो**रिति सप्तमी । कस्य कस्माद्भेद इत्यत्राह **प्रत्यगात्मन** इति । अर्थान्तरत्वव्यपदेशरूपहेत्वसिद्धिशंकापरिहारपरत्वादस्य सूत्रस्यार्थसिद्धं साध्यनिर्देशं दर्शयति **अर्थान्तरभूत** इति । अवान्तरार्थप्रतिज्ञात्वात् सूत्रे कण्ठोक्त्यभावः। प्रधानार्थप्रतिज्ञानस्य हि प्रायेण कण्ठोक्तिरुपलभ्यते । देहस्य प्राज्ञपरिष्वक्तत्वशंकाव्यावृत्त्यर्थम् **विज्ञानमयः प्राणेष्विति प्रकृतस्येत्युक्तम्**। **उत्सर्जन्**। शरीरमिति शेषः। क्षेत्रज्ञान्तरेण परिष्वङ्गान्वारोहौ आशंक्याह **नचेति** ॥

मुक्तावस्थेनाऽऽत्मनाऽन्वारोह इत्यत्राह **इतश्चेति**। **पत्यादिशब्देभ्यः** ॥ सूत्रे **पत्यादिशब्देभ्य** इति निर्दिष्टत्वात् तदनुरोधाय श्रौतपाठक्रमानादरेण **सर्वस्याधिपतिरिति** वाक्यं प्रथममुदाहृतम् ॥

अयं परिष्वञ्जकः परमात्मा उत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते, "सर्वस्याधिपतिः", "सर्वस्य वशी सर्वस्येशानः", "स न साधुना कर्मणा भूयान्, नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरण एषां लोकानामसंभेदाय। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति . . .एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति", "स, वा एष महान् अज आत्माऽन्नादो वसुदानः", "अजरोऽमृतोऽभयो ब्रह्म" इति। एते च पतित्वजगद्विधरणत्वसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित् संभवन्ति। अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः। ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति, "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव

---

सूत्रे च तथा निर्देशः किमर्थ इति चेत्—उच्यते। कर्मसंबन्धप्रतिषेधमुखेन सर्वेश्वरत्वादिगुणानां निरुपाधिकत्वज्ञापकस्य, 'स न साधुना कर्मणा भूयान्' इत्यादिवाक्यस्य पूर्वं **सर्वस्याधिपतिरित्यादि** वाक्यम्। पश्चात् **एष भूताधिपतिरि**ति वाक्यम्। हेयसंबन्धराहित्यपरवाक्यस्य तत्पूर्वापरवाक्यानां च तन्त्रेण क्रोडीकरणार्थम् अभ्यासरूपतात्पर्यलिङ्गज्ञापनार्थं च पत्यादिशब्देभ्य इति निर्देशः। अधिपत्यादीत्यनुक्तिः, पतिं विश्वस्यात्मेश्वरमित्यादिभिरस्य प्रकरणस्यैकार्थ्येन विशेष्यस्य परमात्मनो नारायणत्वद्योतनार्था। अत एव हि **अयं परिष्वञ्जकः परमात्मे**ति भाष्ये निर्देशः। स खलु, पतिं विश्वस्येति प्रकरणस्थम्, "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इति परमात्मशब्दं स्फोरयति। मुमुक्षूपास्यत्वरूपमहागुणवाचिशब्दत्वात् पत्यादिशब्दैस्सह तमेतमित्यादिवाक्यमुपात्तम्। **अन्नादः**—अन्नदः। अधिपत्यादिशब्दोक्तानां धर्माणां मुक्तव्यावर्तकत्वं दर्शयति **एते चे**ति। मुक्तस्य जगद्व्यापाररहितत्वान्न संभवन्तीत्यर्थः। किं जीवमात्रादर्थान्तरत्वे विप्रतिपत्तिः? उत मुक्तादर्थान्तरत्वे इति विकल्पे प्रथमं शिरः पूर्वसूत्रेण प्रत्युक्तम्, अनेन तु द्वितीयं शिर इति विभागः। यद्वा सूत्रद्वयोक्तैर्धर्मैर्मुक्तव्यावृत्तिसिद्धिः कथमित्यत्राह—**एतेचे**ति। **एत**च्छब्दः सूत्रद्वयोदाहृतगुणपरः। अतः **आदिशब्दे** परिष्वङ्गान्वारोहावन्तर्भूतौ। सुषुप्त्युत्क्रान्त्योः परिष्वङ्गस्यान्वारोहस्य च जगद्व्यापारान्तर्भूतत्वात् मुक्तस्य तद्रहितत्वाच्च तौ च तस्मिन्न संभवतः। एते अकर्मसम्पाद्या इति चाभिप्रायः; "स न साधुना कर्मणा भूयान्" इति श्रुतत्वात्। तेन बद्धात्मन्यसंभवः, मुक्तैश्वर्यस्य जगद्व्यापारवर्जत्वान्मुक्तात्मन्यसंभव इत्यर्थः। एवमनेन सूत्रद्वयेन परमात्मनश्चिदचिद्वैलक्षण्ये प्रमाणदार्ढ्यस्योपपादितत्वादैक्योपदेशभेदनिषेधौ तदनुरोधेन वर्णनीयाविति शङ्काबीजं परिहृतं भवति। एतावदेवैतदधिकरणकृत्यम्। एवं प्रबलतरभेदश्रुत्यनुरोधेन निर्वाहे कर्तव्ये सति ऐक्योपदेशभेदनिषेधयोरमुख्यतयाऽपि निर्वाहे प्राप्ते सूत्रकारैरेव श्रुतितोऽर्थतश्च वक्ष्यमाणं श्रुतिसिद्धं मुख्यनिर्वाहं तत्र प्रसङ्गे पूर्वमपि स्वेनोक्तमिह स्मारयति **ऐक्योपदेशस्त्वि**ति। कार्यकारणैक्यनिबन्धनः, न तु जीवेश्वरैक्यनिबन्धन इत्यर्थः।

समर्थितम् । द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥ ४३ ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

**तत एव** कार्यकारणैक्यादेव । ऐक्योपदेशशेषत्वात् भेदनिषेधश्रुतिश्च कुतर्कसिद्धकार्यकारणभेद-प्रतिषेधपरेत्यर्थः । अत्र भेदनिषेधस्य प्रकार्यैक्यनिबन्धनत्वमप्यर्थसिद्धम्; प्रकारप्रकारिभावस्य जगत्कारणत्वनिर्वाहकत्वात् । तत्राऽऽरम्भणाधिकरणे कार्यकारणैकत्वसमर्थनं श्रौतम्, तेन ऐक्योपदेशस्य मुख्यत्वमार्थम् । सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वम्, "अवस्थितेरिति काशकृत्स्नः" इति वक्ष्यते । तत्राऽऽकृतिनयगोचरतया मुख्यत्वसमर्थनं चिद्विषयमचिद्विषयञ्च "अंशो नानाव्यपदेशात्", "उभयव्यपदेशात्"इत्यधिकरणद्वयेन कृतम् । एवं वक्ष्यमाणो मुख्यनिर्वाह इह स्मारितः । पादद्वयोक्त-मर्थमभिप्रेत्याह **इत्यनवद्यमिति** ।

**परैस्तु** सुषुप्त्युत्क्रान्त्योरित्यादि सूत्रद्वयं बृहदारण्यके, "कतम आत्मा योऽयं विज्ञानमयः" इत्यादिप्रकरणविषयमधिकरणान्तरं व्याख्यातम् । तत्र चोपक्रमे, 'योऽयं विज्ञानमयः प्राणेषु' इति शारीरलिङ्गदर्शनात्, उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति शारीरापरित्यागात्, मध्ये च [1]बुद्धान्तादि(सुषुप्त्यादि)सांसारिकतत्तदवस्थाप्रतिपादनादत्र संसारिस्वरूपं प्रतिपाद्यमिति पूर्वपक्षं कृत्वा सुषुप्त्युत्क्रान्त्योः प्राज्ञाद् भेदव्यपदेशेन पत्यादिशब्दैश्चासंसारिस्वरूपं प्रतिपाद्यमिति सिद्धान्त उक्तः । उपक्रमादिषु शरीरलिङ्गकथनमनुवादरूपम् । तस्य परेण ब्रह्मणैक्योपदेशार्थं कृतम् । योऽयं विज्ञानमयः", "स वा एष महानज आत्मा' इति परमेश्वरेणैकत्वमुपदिश्यते । "अत ऊर्ध्वं विमोक्षायैव ब्रूहि" इति पदेपदे प्रश्नात्, "अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इति पदेपदे पुण्येनानन्वाग-तत्वादिकथनरूपप्रतिवचनाच्चासंसारिस्वरूपप्रतिपादनपरत्वसिद्धिरिति शारीरलिङ्गदर्शनपरिहारश्चोक्तः ।

एवमधिकरणभेदवर्णनमयुक्तम्; द्वितीयतृतीयपादान्तर्गताधिकरणान्तरसूत्रवैरूप्यात्; निरूपणी-याभावाच्च । न ह्यत्र सूत्रद्वये प्रतिज्ञावाक्यं श्रूयते ; विवक्षिततत्तत्प्रकरणस्थधर्मिवाचकशब्दाभावात्, प्रतिक्षेप्यव्युदासकशब्दाभावाच्च । "ईक्षतेर्नाशब्दम्", "आनन्दमयोऽभ्यासात्" अन्तस्तद्धर्मो-पदेशात्" इति हि सूत्रशैली । अतोऽत्र तथाभावाभावादध्याहारः स्यात् । स चानध्याहारेण निर्वाहे सति अनुपपन्नः । इह च पूर्वप्रकृतसाध्यहेतुसमर्थकत्वेऽध्याहारोऽनपेक्षितः । चतुर्थेऽपि पादेऽधिकरणान्त-रारम्भेषु धर्मिवाचिपदाश्रवणं न दोषः; तस्य प्रधानादेः प्रतिपाद्यत्वव्युदसनपरत्वाद्धर्मिवाचिपदैर-पेक्ष्यात् । 'आनुमानिकमप्येकेषामिति चेन्न' इति, 'न सङ्ख्योपसङ्ग्रहादपि' इति च व्युदसनप्रतिज्ञा श्रूयते । नेति पदस्योत्तरत्रानुषङ्गेऽपि न दोषः । प्रधानादिपरत्वव्युदासस्य परमात्मपरत्वोपपादनशेषत्वात् परमात्मपरत्वस्य प्राधान्येन प्रतिपिपादयिषिततया सर्वत्र तद्विवक्षायां प्रतिज्ञा[2]खण्ड(वाक्य) श्रवणात् [3]क्वचिदध्याहारदर्शनेऽपि, गत्यन्तरसद्भावे सति गत्यभाव इव निर्वाहोऽनुपपन्नः । अतः परमात्म-

---

1 बुद्धान्तेति तालकोशपाठः भावप्रकाशिकासंमतः शांकरानुरोधी । 2 खण्डेति तालपाठः । 3 क्वचित्- कारणत्वेन चेतिसूत्रे ।

परत्वसमर्थनपराधिकरणवैरूप्यादयुक्तम् ॥ निरूपणीयाभावाच्चाधिकरणान्तरत्वमयुक्तम् । सन्दिग्धे हि न्यायप्रवृत्तिः । यत्रैकस्मिन् वाक्ये प्रकरणे वा परस्परविरुद्धार्थद्वयं प्रधानप्रतिपाद्यतया प्रतीयते, तत्र सन्देहे सति न्यायावतारः । इह च तादृशसंशयविषयो न दृश्यते(विद्यते) । तथा हि—जाग्रत्स्वप्नाद्यवस्थाप्रतिपादकवाक्यानां जीवविषयत्वं न संशयपदम् । न च तदपाकर्तुं शक्यम् । अतस्तन्निरूपणपरत्वमधिकरणस्यायुक्तम् । 'असङ्गो ह्ययं पुरुषः' इत्यादिवाक्यानां शुद्धस्वरूपपरत्वमपि न संदेहास्पदम्, निरवधिकानन्द निरङ्कुशैश्वर्यप्रतिपादकानाम्, "स एको ब्रह्मलोक आनन्दः", "सर्वस्य वशी सर्वस्येशानः" इत्यादिवाक्यानां परमात्मपरत्वेऽपि न सन्देहः, अत एतत्समर्थनमनपेक्षितम् । समानाधिकरणवाक्यानां ब्रह्मात्मकत्वोपदेशपरत्वेऽपि न विशय इति न तत्समर्थनार्थमधिकरणारम्भो युक्तः ॥ जीवस्वरूपकथनं ब्रह्मात्मकत्वविधानायानुवाद इत्ययमर्थो निरूपणीय इति चेन्न; प्राप्तार्थानां वाक्यानामनुवादकत्वस्य अप्राप्तार्थानां वाक्यानां विधायकत्वस्य च स्वत एव स्पष्टत्वात् । न खलु 'अग्निर्हिमस्य भेषजम्' इत्यस्य वाक्यस्य अनुवादकत्वम्, 'स्वर्गकामो यजेत' इतिवाक्यस्य विधित्वं चात्र निरूपणीयम् । अतो जीवस्वरूपकथने प्राप्तविशेषणोक्तेरनुवादत्वं न समर्थनीयम् । अप्राप्तधर्मप्रतिपादनस्य विधित्वं च न साध्यम् । विहितधर्मनिषेधेन स्वरूपैक्यप्रतिपादनं चानुपपन्नम् ॥ सूत्राक्षरप्रातिकूल्याच्च नेदं सूत्रद्वयं ब्रह्मात्मकत्वोपदेशसमर्थनपरम् । भेदसमर्थनपरत्वं ह्यक्षरस्वारस्यादवगम्यते । न च मृषावाद्यभिमतं ब्रह्मात्मकत्वमस्मिन् प्रकरणे दृश्यते; "स वा एष महानज आत्मा योऽयं विज्ञानमयः य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इतीश्वरतादात्म्योपदेशपरत्वावगमात् । तन्मतेऽधिष्ठानतादात्म्यं ह्युपदेश्यम् । न हीश्वरोऽशेषजगदध्यासाधिष्ठानम्; ईश्वरस्यापि सन्मात्रवस्तुनि कल्पितत्वात् । न हि रज्जुकल्पितः सर्पः तत्कल्पितभूदलनाम्बुधाराधिष्ठानम् । किञ्च ईश्वराध्यस्तजीवदर्शनं नेश्वरकर्तृकम्; ईश्वरस्य सर्वज्ञतया स्वारोपिताकारविषयभ्रमानुपपत्तेः । न चान्यकर्तृकम्; अधिष्ठानभूतेश्वरस्य संसार्यगोचरत्वात् । न ह्यधिष्ठानानवभासेऽध्यस्तप्रतीतिरुपपद्यते । घटः सन्, पटः सन्निति सन्मात्रमेवाधिष्ठानतयाऽनुवृत्तमवभासत इति च तदीयप्रक्रिया; न त्वीश्वरोऽधिष्ठानतया प्रतीयत इति । अत सर्पभूदलनयोरन्योन्यतादात्म्योपदेशवत् जीवेश्वरतादात्म्योपदेशोऽनुपपन्नः ॥ ईश्वरधर्माश्च अविवक्षिता इति चेत्—पदानां लक्षणा । किञ्च अप्राप्तानां धर्माणामनुवादासंभवात् विहितस्य निषेधायोगात्, "एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" इति तात्पर्यलिङ्गदर्शनाच्च तेषां धर्माणामविवक्षितत्वं दुर्वचम् । सिद्धान्त्यभिमतं तु तादात्म्यं तदुपासनञ्चोत्तरत्र निरूपयिष्यते । अतः सूत्राक्षरप्रातिकूल्यात् संशयविषयाभावात् स्वाभिमतार्थशरीरस्यानुपपन्नत्वात् प्रामाणिकतादात्म्यनिरूपणस्यान्यत्र क्रियमाणत्वाच्चाकाशशब्दनिर्दिष्टस्य परमात्मत्वोपपादकं सूत्रद्वयमिति सिद्धम् ॥

**यादवप्रकाश**पक्षेऽपि निरूपणीयाभावादनारम्भणीयत्वदोषः स्थितः । पूर्वपक्षसिद्धान्तवर्णनप्रकारश्चानुपपन्नः । परिष्वङ्गान्वारोहाभ्यां प्राज्ञस्यात्मनः शारीराद्भेदः स्थित इति विषयशोधकमाद्यं सूत्रं

व्याख्याय, स प्राज्ञः किं भोक्ता विद्याकर्मातिशयलब्धैश्वर्यो जीवः उत परः इति विशये, भोक्तुर्विज्ञानमयस्य प्रकरणस्थतया वशित्वेशानत्वादीनां विद्याकर्मलब्धतया जीवत्वमुक्त्वा, पत्यादिशब्दानां शाखान्तरे परमात्मविषयत्वदर्शनात् अन्यत्र सुषुप्तौ परमात्मनि सम्पत्तिश्रवणाच्च परमात्मत्वं साधितम् । तत्र तावत् आद्यसूत्रव्याख्यानमयुक्तम्; विषयशोधकत्वमात्रे सूत्रवैयर्थ्यात् ; पूर्वपक्षपरत्वे शाब्दस्य हेतोर्विरुद्धत्वात् ; भोक्तुः प्रकृततया कर्माधीनैश्वरत्वस्य पूर्वपक्षहेतोरशाब्दत्वाच्च । तच्छङ्काव्युदसनासमर्थभेदानुभाषणे प्रयोजनाभावात् सूत्रवैयर्थ्यम् । किञ्च शारीराद्भेदकौ परिष्वङ्गान्वारोहौ प्राज्ञकर्तृकौ श्रूयेते । प्राज्ञत्वं च स्वाभाविकम् , पतित्वादयश्च स्वाभाविका एवात्र प्रतिपाद्यन्ते ; उपाध्यनुक्तेः । तथैव, "स न साधुना कर्मणा भूयान्" इत्युपाधिनिषेधाच्च । अतस्तदनादृत्य पत्यादिशब्दानां शाखान्तरप्रसिद्ध्या परमात्मसाधकत्वोक्तिरचतुरा । सद्विद्यासंवादस्तु यद्यपि प्राज्ञस्य जगत्कारणत्वावगमकः, तथापि कारणस्य चिदचिद्वैलक्षण्ये तु संवादनिरपेक्षहेतुः प्राज्ञत्वं निरुपाधिकैश्वर्यवत्त्वञ्च । यद्यकर्महेतुकं निरङ्कुशैश्वर्यमपि श्रुत्यन्तरसंवादसापेक्षम् , तर्हि श्रुत्यन्तरेषु कथमाश्वासः ? तत्रापि संवादान्तरापेक्षणेऽनवस्था स्यात् । एतच्छ्रुत्यपेक्षणेऽन्योन्याश्रयः स्यात् । अतोऽधिकरणान्तरकल्पनं तन्निर्वहणं चानुपपन्नम् । अतः सूत्रत्रयमेकाधिकरणम् ॥

**इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य तृतीयः पादः ॥**

**श्रीमते रामानुजाय नमः**

श्रीमते रामानुजाय नमः

## श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

### प्रथमाध्याये चतुर्थः पादः

### २८. आनुमानिकाधिकरणम् १-४-१

**आनुमानिकमप्येकेषामिति चेन्न-शरीररूपकविन्यस्तगृहीतेः दर्शयति च । १ । ४ । १ ॥**

उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्म अचिद्वस्तुनः प्रधानादेः चेतनाच्च बद्धमुक्तोभयावस्थात् विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति। इदानीं कापिलतन्त्रसिद्धाव्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचित् वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते ।

---

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥** प्रथमपादश्चिदचिद्विलक्षणकारणत्वायोगव्यवच्छेदपरः; अन्ययोगव्यवच्छेदपरायां त्रिपाद्यामस्पष्टस्पष्टजीवादिलिङ्गकवाक्यविषयौ द्वितीयतृतीयौ; स्पष्टतरजीवादिप्रतिपादकवाक्यविषयश्चतुर्थ इति पादसङ्गतिर्द्वितीयपादारम्भे कथिता । सूत्रकारैस्तु अन्ययोगव्यवच्छेदस्य त्रिपादीकृत्यत्वं चतुर्थपादारम्भे कण्ठोक्तम् । आनुमानिकमप्येकेषामिति ह्युक्तम् । अतो भाष्यकारश्चतुर्थपादारम्भे त्रिपाद्यर्थस्फुटीकरणमुखेन सङ्गतिं विवक्षन् प्रथमपादार्थानुभाषणपूर्वकं द्वितीयतृतीययोरर्थं वृत्तं दर्शयति **उक्त**मिति । **प्रधानादे**रित्यादिशब्देन प्राणाकाशादिग्रहणम् । **विलक्षण**मित्यन्तेन प्रथमपादार्थ उक्तः । वैलक्षण्यञ्चोभयलिङ्गतयेति दर्शयन् द्वितीयतृतीययोरप्यर्थं दर्शयति **निरस्ते**त्यादिपदैः । **समस्त**शब्देन चिद्गतमचिद्गतं च हेयं विवक्षितम् । **गन्ध**शब्देन मुक्तव्यावृत्तिः । **समस्तकल्याणगुणात्मक**मिति पदं धर्मिस्वरूपपरम् । **सर्वज्ञ**मित्यादिपदैर्द्वितीयपादार्थः सूचितः । 'यस्सर्वज्ञः', 'भारूपः सत्यसङ्कल्पः' इत्यादिवाक्यजातं हि तद्विषयः । अन्तर्यामिवैश्वानरद्युभ्वाद्यधिकरणसिद्धमर्थमाह **सर्वान्तरात्मभूत**मिति । 'एष सर्वभूतान्तरात्मा' इति सुबालोपनिषदि अन्तर्यामिविषयतया श्रूयमाणत्वात्, "पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति मुण्डकोपनिषद्वाक्यस्य सपक्षत्वेनोपन्यासात् तत्समर्थनाच्च । **निरङ्कुशैश्वर्य**मिति तृतीयपादार्थसूचनम्; 'एतस्य वा अक्षरस्य प्रशासने गार्गि', 'ईशानो भूतभव्यस्य', 'सर्वस्य वशी सर्वस्येशानः' इत्यादिवाक्यजातं हि तद्विषयः । वर्तिष्यमाणमाह **इदानी**मिति । **प्रधानकारणत्वप्रतिपादनच्छायानुसारिणी**ति । न केवलं लिङ्गप्रतिपादकानि, किन्तु लिङ्गिनामेव प्रधानादीनां जगत्कारणत्वप्रतिपादनशङ्कास्पदानीति । अतो जीवादिविषयतायाः स्पष्टतरत्वमिति भावः । **प्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारिणीति** । प्रधानपुरुषादिस्वरूपप्रतिपादनप्रकारः तन्त्रार्थप्रत्यभिज्ञापकः; तेन प्रधानकारणत्वप्रतिपादनं फलितमित्यर्थः । **ब्रह्मैककारणत्वस्थेम्न** इत्यत्र **एक**शब्देन त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं सूचितम् । **स्थेम्न** इत्यनेन चतुर्थपादार्थः सूचितः । पूर्वपादद्वयप्रतिपन्नस्यान्ययोगव्यवच्छेदस्य स्थैर्यमस्मिन् पादे प्रधानादिकारणत्वप्रतिपादनव्युदसने कृते हि भवति ॥

कठवल्लीष्वाम्नायते-"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति। तत्र संदेहः किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यते, उत न-इति। किं युक्तम्? प्रधानमिति। कुतः? 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इति तन्त्रसिद्धतत्त्वप्रक्रिया-प्रत्यभिज्ञानेन तस्यैव प्रतीतिः; "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति पञ्चविंशक-पुरुषातिरिक्ततत्त्वनिषेधाच्च। अतोऽव्यक्तं कारणमिति प्राप्तम्। तदिदमुक्तम्--आनुमानिकमप्येकेषामिति चेत् इति। एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत्—

अत्रोत्तरम्-नेति। नाव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते। कुतः? शरीररूपकविन्यस्तगृहीतेः--शरीराख्य-रूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः-आत्मशरीरबुद्धिमनइन्द्रियविषयेषु

---

अत्रानन्तरपूर्वाधिकरणे मुक्तादपि वैलक्षण्यमुक्तम्; तदयुक्तम्; प्रत्यगात्मनः परस्य निषेधादिति शङ्कया अवान्तरसङ्गतिरिति चार्थसिद्धम्। **बद्धमुक्तोभयावस्थात् विलक्षण**मिति ह्युक्तम्।

विषयमाह **कठवल्लीष्वि**ति। तन्त्रसिद्धतत्त्वक्रमप्रत्यभिज्ञाभासजनकानि वाक्यानि विषयः। तन्त्रसिद्धक्रमतद्विपर्ययप्रतीतिभ्यां संशयः। सिद्धान्ते अव्यक्तशब्दस्य प्रधानवाचकत्वाभावात् **उत ने**ति संशयशिरोन्तरं कृतम्। अन्यथा उत ब्रह्मात्मकं प्रधानमिति हि शिरोन्तरं वक्तव्यम्। कठवल्ल्याम् अब्रह्मात्मकप्रधानकारणत्वप्रतिपत्तिरस्ति, न वेति प्रथमविचारोऽभिप्रेतः। तदर्थम् 'इन्द्रियेभ्यः पराः' इत्यत्राव्यक्तशब्दः किमब्रह्मात्मकप्रधानपरः उत नेति विचारः। तदर्थं किमस्मिन् मन्त्रे तन्त्रसिद्धतत्त्वगणनक्रमप्रत्यभिज्ञानमस्ति, नेति। तदर्थम् अव्यक्तात्पूर्वापरनिर्दिष्टमहत्पुरुषशब्दाभ्यां महज्जीवतत्त्वे निर्दिश्येते, उत जीवपरौ इति। किमिहेन्द्रियादिशब्दैः पूर्ववाक्यस्थरूपकरूपितेन्द्रियादि-प्रतिपत्तिरस्ति, नेति। किमत्र परत्वं कारणभावेन, उत वशीकार्यतयेति। यदा कारणभावेन, तदा रूपितेन्द्रियादिप्रतिपत्त्यभावेन महत्पुरुषशब्दयोर्महज्जीवतत्त्वसमर्पकतया तान्त्रिकप्रक्रियाप्रत्यभिज्ञानादव्यक्त-शब्देनाब्रह्मात्मकं प्रधानमुच्यत इति तस्यैव कारणत्वं प्रतीयत इति पूर्वः पक्षः। सिद्धान्ते तु—यदा वशी-कार्यतया परत्वं विवक्षितम्, तदा पूर्वरूपितेन्द्रियादिप्रतिपत्त्या महत्पुरुषशब्दयोर्जीवपरमात्मपरत्वेन तन्त्र-सिद्धप्रक्रियाप्रत्यभिज्ञानाभावादव्यक्तशब्दो नाब्रह्मात्मकप्रधानपर इति न तस्यात्र कारणत्वप्रतीतिरिति फलफ-लिभावः। शङ्काया अनुत्सूत्रत्वमाह **तदिदमुक्तमि**ति। शङ्कानुवादिनं सूत्रखण्डं व्याचष्टे **एकेषामि**त्यादिना॥

परिहारखण्डं व्याचष्टे **शरीराख्येति**। शरीरमेव रूपकविन्यस्तम्। रूप्यतेऽनेनेति **रूपकम्**—दृष्टान्तः। **रूपकत्वेन** विन्यस्तम्; रूपितमित्यर्थः। शरीरं हि रथत्वेन रूपितम्, "शरीरं रथमेव च" इति। ननु रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम्; विशेषणस्य पूर्वनिपातित्वादिति शङ्कापरिहाराय **शरीराख्ये**-त्युक्तम्। अस्मिन् वाक्ये रूपकविन्यस्तं वस्तु प्राधान्येन विवक्षितम्। अतो रूपकविन्यस्तपदं विशेष्यसमर्प-कम्। कीदृशं तदित्यपेक्षायां शरीराख्यं रूपकविन्यस्तमिति शरीरशब्देन तत् विशेष्यते; यथा खण्ड-शब्देन गौः। अतो रूपकविन्यस्तप्राधान्याभिप्रायः शरीरशब्दपूर्वनिपात इत्यभिप्रायः। कानि कथं रूपितानीत्यत्राह **आत्मेति**। रूपकाभिधायि वाक्यं किम्? रथिरथादिभावेन रूपितानामत्र ग्रहणम्,

रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तस्य शरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः। एतदुक्तं भवति—पूर्वत्र हि, "आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" इत्यादिना, "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथित्वेन, तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा, 'यस्यैते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नोति' इत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि, तान्युच्यन्ते, "इन्द्रियेभ्यः पराः" इत्यादिना।

तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यः गोचरत्वेन रूपिताः विषयाः वशीकार्यत्वे पराः;

---

तत्राप्यव्यक्तशब्देन शरीरस्य ग्रहणमिति च कथमवगम्यते? रथ्यादित्वेन रूपितानामस्मिन् वाक्ये कीर्तनं किमर्थमित्यत्राह एतदुक्तमिति। आत्मानमित्यादिकं रूपकाभिधायि वाक्यम्। तेषामत्र ग्रहणं वशीकार्यतायां प्राधान्यज्ञापनार्थम्। स्वशब्दैरेव प्रत्यभिज्ञानात् रथिरथादिभावेन रूपितानामत्र ग्रहणमिति ज्ञातम्। पारिशेष्यादव्यक्तशब्देन शरीरग्रहणमितीदमर्थजातमुच्यते पूर्वत्र हीत्यादिना। रूपणस्य प्रयोजनमाह यस्यैत इति। वशीकार्यत्वज्ञापनाय रथिरथादिभावेन रूपणमित्यर्थः। रूपकरूपितानामिह ग्रहणं वशीकार्यतायां प्राधान्याप्राधान्यज्ञापनार्थमित्याह यानि येभ्य इत्यादिना॥

ननु वशीकार्यतायां प्राधान्यस्य विवक्षितत्वं कथमवगम्यते॥ उच्यते। 'इन्द्रियेभ्यः पराः' इत्यादिमन्त्रे परशब्दस्तावन्नान्यवचनः; अर्थेभ्यः इन्द्रियादीनां भेदस्य लोकसिद्धत्वेन उपदेशवैयर्थ्यात्। अतः परशब्दः प्रकर्षपरः। प्रकर्षश्च न तावत् कारणत्वनिबन्धनः; अर्थानामिन्द्रियकारणत्वाभावात्। इन्द्रियाणां विषयसिद्ध्यर्थतया तच्छेषत्वात् साध्यत्वलक्षणः प्रकर्ष इति च न वाच्यम्; तथा सति अर्थापेक्षया मनसः परत्वायोगात्। न चान्तरङ्गत्वलक्षणः प्रकर्षः; इन्द्रियमनोबुद्धीनां तत्सम्भवेऽपीन्द्रियापेक्षया बाह्यानामर्थानां परत्वायोगात्। अतः पारिशेष्यात् रथिरथादिभावरूपणेन उपासनोपकरणत्वावगमात्, तत्रैव "यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्तु विज्ञानवान् भवति युक्तेन मनसा सह। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः। यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः। न स तत्पदमाप्नोति संसारञ्चाधिगच्छति। यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः। स तु तत्पदमाप्नोति यस्माद्भूयो न जायते" इतीन्द्रियादिवशीकारावशीकारयोरर्थानर्थदर्शनात्, "यच्छेद्वाङ्मनसी प्राज्ञः" इतीन्द्रियादीनां वशीकारप्रकारदर्शनाच्चास्मिन् मन्त्रे वशीकार्यतायां प्राधान्यं परशब्देन विवक्षितमित्यवगम्यते।

तत्रार्थादीनामिन्द्रियादिभ्यः परत्वमुपपादयति—तत्रेति॥ ननु 'अष्टौ ग्रहाः अष्टावतिग्रहाः' इति प्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वगिन्द्रियाणां ग्रहत्वम्, गन्धरसनामरूपशब्दकामकर्मस्पर्शाख्यानां विषयाणामतिग्रहत्वञ्च श्रुतम्; तस्मात् ग्रहेभ्य इन्द्रियेभ्य अतिग्रहशब्दोक्तानामर्थानां परत्वं किं न स्यात्॥ उच्यते। यदि ग्रहेभ्योऽतिग्रहाणां परत्वमिह विवक्षितम्, अर्थेभ्यो मनसः परत्वकथनमयुक्तम्; मनसो ग्रहान्तर्गतत्वादर्थानामतिग्रहशब्दोक्तत्वाच्च। अतः स्वसंनिधाविन्द्रियाणां दुर्निग्रहत्वापादनमेवार्थानां वशीकार्यत्वे परत्वम्। तद्वशीकरणं च असंनिधापनं हेयतया ज्ञापनञ्च।

वश्येन्द्रियस्यापि विषयसंनिधाविन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योऽपि परं प्रग्रहरूपितं मनः; मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा; अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात् । तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात् परः; सर्वस्य चास्यात्मेच्छायत्तत्वात् आत्मैव महानिति च विशेष्यते । तस्मादपि रथरूपितं शरीरं परम्, तदायत्तत्वात् जीवात्मनः सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्यामी अध्वनः पारभूतः परमपुरुषः; यथोक्तस्याऽऽत्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः । "परात्तु तच्छ्रुतेः" इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः

---

**तेभ्योऽपी**ति । स्वावधानाभावे विषयासंनिधेरकिञ्चित्करत्वहेतुकं मनसः प्राधान्यम् । तस्य वशीकरणं नाम तस्य मुहुर्मुहुर्विषयदोषचिन्तनेन तेभ्यो निवर्तनसंशीलनम् । "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते" इति ह्युक्तम् । **तस्मादपी**ति । बुद्धिशब्दोऽध्यवसायरूपज्ञानविशेषपरः, न त्वन्तःकरणपरः । "यदा कर्मगुणापेता बुद्धिर्मनसि वर्तते । व्यवसायगुणोपेता तदा संपद्यते मनः" इत्यादिषु बुद्धिशब्दस्यान्तःकरणपरत्वं तत्कार्यभूतव्यवसायस्य पृथङ्निर्देशादिभिरवसीयते । इह तु बुद्धिशब्दस्य भावार्थत्वस्वारस्यात् तदपवादाभावाच्च व्यवसायपरत्वमित्य**ध्यवसायाभाव**शब्दं प्रयुञ्जानस्याभिप्रायः । यद्वा बुद्धिशब्दोऽन्तःकरणपरः; इदानीम**ध्यवसायाभाव** इत्यनेन तत्कार्यभूताध्यवसायाभाव इत्युक्तं स्यात् । अल्पास्थिरत्वदुस्साधत्वदुःखमिश्रत्वादिदोषदर्शनेन विषयाणां हेयत्वाध्यवसायोऽ**ध्यवसाय**शब्देन विवक्षितः । तदभावे ह्यन्यत्र व्यासङ्गादिना क्वचिद्विषये प्रावण्यरहितमपि मनः कदाचित् तत्प्रवणमपि स्यात् । अतो बुद्धेः परत्वम् । तस्याश्च वशीकरणं नाम विषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्तनपाटवापादनम् । **आत्मा कर्तृत्वेन प्राधान्यात्पर** इति । **कर्तृत्वेन**—अध्यवसायस्याश्रयत्वेन । बुद्धिशब्दस्यान्तःकरणपरत्वपक्षे तु उपकरणित्वेनेत्यर्थः अणोरात्मनः कथं महच्छब्दविशेष्यत्वमित्यत्राह **सर्वस्य चे**ति । **अस्य सर्वस्य**—इन्द्रियादेरध्यवसायपर्यन्तस्य 'इन्द्रियाणि जेतव्यानि, सम्यगर्थविषयोऽध्यवसायः सम्पाद्यः' इत्येवंरूपेच्छायत्तत्वादित्यर्थः । अनेन आत्मनो वशीकरणं नाम आत्मस्वरूपयाथात्म्याध्यवसायप्रावण्यरूपेच्छापादनमेवेति फलितम् । **तस्मादपि रथरूपितं शरीरं पर**मिति । शरीरस्य परत्वं नाम स्वगतगुणोन्मेषानुगुणमात्मगतज्ञानापादकत्वम् । रजस्तमोऽनुदयसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्ततापादनं शरीरस्य वशीकरणमित्यर्थः ॥ जीवभेदस्याविद्याकल्पितत्वात् अविद्यासंज्ञमव्यक्तं जीवात्परम्; तत्कार्यत्वाच्छरीरस्य परत्वमुपचर्यत इति **कैश्चिदुक्तम्** । तदयुक्तम्; कारणगतपरत्वस्य कार्ये उपचरणे स्वारस्याभावात्; जीवभेदस्याविद्याकल्पितत्वाभावाच्च । **आत्मपर्यन्तस्य**—स्वावधिकस्य । यद्वा जीवपर्यन्तस्येत्यर्थः । नास्मिन् वाक्ये वशीकार्यतया परत्वे निर्दिष्टः क्रमो विवक्षितः; किन्तूपकरणितया प्राधान्यम् । अत एव हि 'आत्मानं रथिनं विद्धि' इति शरीरात् पूर्वनिर्देशः ॥ उपासनोपकरणकोटिनिवेशः परस्य कथम्? अव्यक्तात्परस्य पुरुषत्वमात्रं श्रुतम्; न परमत्वम् । तत् कथमश्रुतपरमशब्दार्थाङ्गीकार इत्यत्राह **स खल्वि**ति । उपासननिर्वाहकत्वाद्वशीकार्यत्वमित्यर्थः । सा काष्ठेति श्रुतिवाक्यखण्डं व्याचष्टे **वशीकार्योपासने**ति । वशीकार्यशब्द

परमप्राप्यश्च स एव । तदिदमुच्यते, "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति । तथा चान्तर्यामिब्राह्मणे, "य आत्मनि तिष्ठन्" इत्यादिभिः सर्वं साक्षात्कुर्वन् सर्वं नियमयतीत्युक्त्वा, "नान्योऽतोऽस्ति द्रष्टा" इति नियन्त्रन्तरं निषिध्यते । भगवद्गीतासु च, "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्" इति । दैवमत्र पुरुषोत्तम एव ; "सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" इति वचनात् । तस्य च वशीकरणं तच्छरणागतिरेव । यथाऽऽह, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ" इति ।

तदेवम्, "आत्मानं रथिनं विद्धि" इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः, "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात् तत् अव्यक्तशब्देनोच्यते इति निश्चीयते । अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति ।

न चात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा, "इन्द्रियेभ्यः परा ह्यर्थाः" इतीन्द्रियेभ्योऽर्थानां शब्दादीनां परत्वकीर्तनात् । न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने । "अर्थेभ्यश्च परं मनः"

---

उपायविशेष्यकः । रूपितेष्वर्थेषु पारत्वेन[1]रूपितस्य पदस्यात्राकथनाद्वक्ष्यमाणपरिशेषासिद्धिशङ्कां परिहर्तुं 'सा परा गतिः'इत्यनेनैव पारत्वरूपितपदस्यापि प्रतिपादितत्वमाह **परमेति** । 'पुरुषान्न परं किञ्चित्' इत्युपायकोटिकाष्ठाभूतमस्मात्परं न विद्यत इति व्यतिरेक उक्तः ; सा काष्ठेत्यनेन अयमेवोपायकाष्ठाभूत इत्यन्वय उक्तः । इन्द्रियादीनामप्युपायभूतत्वमात्रमस्तीति तद्व्यावृत्त्यर्थं 'परा गतिः'इति प्राप्यत्वमुच्यत इत्यर्थः । "यस्मात्परं नापरमस्ति" इत्यादिश्रुत्यैकार्थ्यावगमात् स्वस्मात् परान्तररहितस्य परमात्मत्वमर्थसिद्धमिति चाभिप्रायः । सर्वनियामकादस्मात् परस्याभावेन उपायकाष्ठात्वोपपादनार्थमन्तर्यामिब्राह्मणमुपादीयते **तथेति** । दैवमिति कर्म वा कर्माराध्यमिन्द्रादिकं वा विवक्षितं स्यादित्यत्राह **दैवमत्रेति** । "न दैवं केशवात्परम्", "श्रूयतां परमं दैवं दुर्विज्ञेयं मयाऽपि च । नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः", "नारायणस्य चाङ्गानि सर्वदैवानि चाभवन्", "अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः" इत्यादिप्रयोगादित्यभिप्रायः । परमपुरुषस्याप्युपासननिर्वर्तकत्वमस्तु ; कथं सर्वस्मात्परस्यानीश्वरेण संसारिणा वशीकर्तुं शक्यत्वम्? शक्यश्चेत् तत्प्रकारोऽपि क्वचिच्छ्रूयेत ; न च श्रूयते । 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादावनुपलब्धेरित्यत्राह **तस्य चेति** । 'यच्छेद्वाङ्मनसी' इत्यादौ तस्य वशीकार्यत्वश्रवणं दर्शयिष्यते ॥ कथमव्यक्तशब्देन शरीराख्यरूपकविन्यस्ताभिधानम्? रूपकविन्यस्तान्तराभिधानं किं न स्यादिति शङ्कायामव्यक्तशब्देन शरीरस्याभिधानं पारिशेष्यादित्याह **तदेवमात्मान**मिति । प्रधानप्रतिपादकत्वमङ्गीकृत्य तस्य ब्रह्मात्मकत्वाब्रह्मात्मकत्वविवादोऽपि क्वचिदस्तीति तद्व्यावृत्त्यर्थं **प्रसङ्ग एव नास्तीत्युक्तम्** । वशीकार्यतया परत्वमुपपादितम् ; कारणत्वेन परत्वस्यानुपपत्तिमाह **न चात्रेति** । प्रत्यभिज्ञानाभावमुपपादयति **इन्द्रियेभ्य** इति । तदेव विवृणोति **नहीति** ।

---

1 पारत्वेनेति । सोऽध्वनः पारमिति पारत्वरूपणं हि विष्णुपरमपदे कृतम् ।

इत्यपि न तत्तन्त्रसङ्गतम्; अकारणत्वादेव। तथा "बुद्धेरात्मा महान् परः" इत्यप्यसङ्गतम्; बुद्धिशब्देन महत्तत्त्वस्याभिधानाभ्युपगमात्। न हि महतो महान् परः संभवति। महत आत्मशब्देन विशेषणं च न सङ्गच्छते। अतो रूपकविन्यस्तानामेव ग्रहणम्।

दर्शयति च तदेव, "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥", "यच्छेत् वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि" इति। अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते। यच्छेद्वाङ्मनसी। वाचं मनसि नियच्छेत्—वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः। वाक्छब्दे

---

**अकारणत्वादेवेति**। "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र तन्त्रप्रक्रियाप्रत्यभिज्ञानव्युदासहेतोरेवेत्यर्थः। अहङ्कारद्वारा बुद्धेर्मनःकारणत्वसम्भवात् 'मनसस्तु परा बुद्धिः' इत्येतत् क्लिष्टगत्या निर्वोढुं शक्यमिति तदनादरेण बुद्धेरात्मेत्यत्रानुपपत्तिमाह **तथेति**। बुद्धिशब्देन महत्तत्त्वमभिधीयताम्; ततः किमित्यत्राह **न हीति**॥ समष्टिव्यष्टिविभागेन परत्वोपपत्तिरिति चेन्न; तत्कल्पनेन निर्वाहस्यास्वरसत्वात्; इन्द्रियादिषु चार्थान्तरेषु समष्टिव्यष्टिविभागादर्शनात्; रूपकवाक्ये पृथङ्निर्देशाभावाच्च। अनुपपत्त्यन्तरमाह **महत आत्मशब्देनेति**। अगत्या क्वचित् तस्यातत्परत्वाश्रयणम्। अवयवशक्त्या स्वकार्यव्याप्तिपरत्वेऽपि महत्तत्त्वादपि प्रधान एवावयवार्थप्रकर्षात् महत आत्मशब्दविशेष्यत्वमयुक्तमित्यर्थः॥ ननु "उद्बबर्हात्मनश्चैव मनः सदसदात्मकम्। मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्। महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च" इति स्मृतिसिद्धप्रक्रियाप्रत्यभिज्ञानान्महच्छब्दो महत्तत्त्वपरः; न त्वात्मविशेषक इति चेन्न; श्रुताविन्द्रियार्थमनोबुद्धिमहतां परत्वस्य चोक्तत्वादहङ्कारस्यानुक्तत्वात् स्मृतौ मनोहङ्कारमहतामेवोक्तत्वादिन्द्रियार्थबुद्धीनां परत्वस्य चानुक्तत्वात् श्रुतौ स्मृत्यर्थप्रत्यभिज्ञानाभावात्; मनसोऽहङ्कारमुद्बबर्हेत्यस्य तन्त्रप्रक्रियाविरोधप्रतीतेः पूर्वपक्षिणैवं परिचोदनस्यायुक्तत्वाच्च॥ ननु महच्छब्दस्यात्मविशेषणत्वे सति महतः परमिति निर्देष्टुमयुक्तम्; अपि त्वात्मन इत्येव निर्देष्टव्यमिति चेन्न—विशेषणवाचिपदेनापि प्रकृतविशेष्याभिधानदर्शनात्, 'देवदत्ताद्यज्ञदत्तः शीघ्रगतिर्योऽयमश्वारूढः, अश्वारूढाद्विष्णुमित्रः' इति, 'अवृद्धसेवी पुरुषो मूढः, मूढादमूढ आदरणीयः' इत्यादौ। **रूपकविन्यस्तानामेव ग्रहणमि**त्येतद्भाष्यम् **एतदुक्तं भवती**त्यनेनान्वितम्। इतिशब्दाप्रयोगोऽतिविप्रकर्षात्। **दर्शयति चेति** सूत्रखण्डोपादानम्। **तदेव** वशीकार्यत्वे परत्वमेव। **एष इत्यादिः** श्रुतिः। न प्रकाशत इत्युक्ते केषामित्यपेक्षायां "यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः। न स तत्पदमाप्नोति संसारञ्चाधिगच्छति' इति प्राकरणिकवाक्योपजीवनेन **न प्रकाशत** इत्यस्यार्थमाह **अजितबाह्येति**। वाक्छब्दः सर्वेन्द्रियोपलक्षणार्थ इत्याह **वाक्पूर्वकाणीति**। नन्विदमयथाक्षरमिव व्याख्यातम्; न ह्यत्र वाक्छब्दो द्वितीयान्तः मनश्शब्दश्च सप्तम्यन्तः श्रूयत इत्यत्राह **वाक्छब्द इति**॥ ननु वाक्छब्दात् परस्याः द्वितीयायाः 'सुपां सुलुक्' इत्यनुशासनेन स्वादेशाश्रयणेन द्वितीयान्तत्वं किं न

द्वितीयायाः, "सुपां सुलुक्" इति लुक् । मनसी इति सप्तम्याश्छान्दसो दीर्घः । तद्यच्छेत् ज्ञान आत्मनि । तत् मनो बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । ज्ञान आत्मनि इति व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः । ज्ञानमात्मनि

---

स्यात् ॥ न; स्वादेशेऽपि "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सूत्रेण वाक्छब्दस्य हलन्ततया सुलोपस्य प्राप्तत्वात् स्वादेशाङ्गीकारेऽपि लुकि पर्यवसानं स्यात् । तत्र द्वितीयास्थाने स्वादेशमाश्रित्य लोपकल्पनात् वरं द्वितीयाया एव लुगाश्रयणमिति । सप्तम्येकवचनान्तस्य मनश्शब्दस्य दीर्घान्तत्वं कथमित्यत्राह **मनसी इति सप्तम्याश्छान्दसो दीर्घ** इति । [1]'ईदूतौ च सप्तम्यर्थे' इति प्रकृतिभावस्मरणनिबन्धनो **मनसी इति** इति निर्देशः ॥ 'ननु 'इयाडियाजीकाराणामुपसङ्ख्यानम्'' इत्युपसङ्ख्यानवशादीकारान्तत्वसम्भवे कथं छान्दसत्वाश्रयणमिति चेत्—उपसङ्ख्यानेन निर्वाहासम्भवादिति ब्रूमः । न हि 'वाङ्मनसी' इत्यत्र वाक् च मनश्चेत्यर्थः सम्भवति ; अचतुरविचतुरेत्यादिस्मरणेनाजन्ततया वाङ्मनसे इति प्राप्तत्वात् ॥ अथ तत्रापि छान्दसत्वबलेन समासान्तो नाद्रियते, तथा सति यथोक्तनिर्वाहे कः प्रद्वेषः? न च निर्वाहद्वयतुल्यता ; पूर्वोक्तस्य प्रकरणानुगुण्यात् एकवचनोपपत्तेश्च । यच्छेदित्युक्तस्य नियमनस्य सप्तम्यपेक्षा प्रकरणसिद्धा, 'तद्यच्छेत् ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' इति हि श्रूयते । वाक् च मनश्चेत्यर्थोऽभिमतश्चेत्, तदिति पुनः परामर्शश्च न घटते । ते इति द्विवचनान्ततया हि निर्देष्टव्यम् । अत उक्तनिर्वाह एवोपपन्नः ॥ तद्यच्छेद्ज्ञान आत्मनीति वाक्यं मनसोऽहङ्कारे नियमनपरं केचिद्व्याचक्षते ; तदनुपपन्नं मन्वान आह **तन्मनो बुद्धौ नियच्छेदि**ति । अहङ्कारपरत्वमस्वरसम् ; बुद्धिपरत्वं तु स्वरसमित्यभिप्रायेणाह **ज्ञानशब्दे**नेति । पूर्वोक्ता **बुद्धिः** अनात्मात्मविषयहेयोपादेयताध्यवसायः । ज्ञानसामान्यवाचिशब्दस्य ज्ञानविशेषवाचित्वं मुख्यमिति भावः । आत्मशब्दसमानाधिकरणज्ञानशब्दस्य बुद्धिपरत्वमयुक्तमित्यत्राह **ज्ञान आत्मनी**ति । आत्मशब्दस्य स्वरूपेतनैकान्तत्वादनन्तरवाक्यस्थात्मशब्दस्यास्य चैकरूपार्थत्वे स्वारस्याच्च सामानाधिकरण्यमात्रस्वारस्यमुपेक्ष्यमित्यभिप्रायः । वैयधिकरण्यफलितमाह **आत्मनि वर्तमान** इति । सप्तम्यर्थस्य स्फुटीकरणाय **वर्तमान**पदमध्याहृतम् ।

**ज्ञानशब्दस्याहङ्कारपरत्वाश्रयणम् किं शब्दस्वारस्यात्, उतार्थवशात्? । न प्रथमः, दत्तोत्तरत्वात् । नापि द्वितीयः; अर्थसामर्थ्यादर्शनात् ॥ मनोमहतोर्मध्यगतत्वमर्थसामर्थ्यमिति चेत्—यदि शब्दतः** प्रत्यभिज्ञानाभावेऽपि ज्ञानशब्दो मनोमहतोर्मध्यगतत्वरूपार्थसामर्थ्यादहङ्कारपरः, तर्हि तुल्यन्यायत्वात् 'मनसस्तु परा बुद्धिः' इत्यत्रापि बुद्धिशब्दस्याहङ्कारपरत्वं स्यात् ॥ तदप्यस्त्विति न वाच्यम्; स्वग्रन्थविरोधात् । अथ बुद्धिशब्देनाहङ्कारं ब्रूयुः, तथापि तन्त्रसिद्धस्याहङ्कारस्य प्रत्यभिज्ञा नोपपद्यते ; बुद्धिशब्देन व्यवहाराभावात् । "महच्च न तन्त्रसिद्धमिह प्रत्यभिज्ञायते ; आत्मशब्देन सामानाधिकरण्यात्" इति हि अन्तिमसूत्रव्याख्याने तैरुक्तम् । अथोच्येत—तत्र यद्यपि मनोमहतोर्मध्यगतो

---

1 भाष्ये, मनसी इति इति सवर्णदीर्घमाश्रयणेन प्रयोगे कारणमाह ईदिति ।

महति नियच्छेत्—बुद्धिं कर्तरि महत्यात्मनि नियच्छेत् । तद्यच्छेत् शान्त आत्मनि—तं कर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ॥ १ ॥

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम्? तत्राह—

**सूक्ष्मं तु तदर्हत्वात् १ । ४ । २ ॥**

भूतसूक्ष्ममव्याकृतं हि अवस्थाविशेषमापन्नं शरीरं भवति । तदव्याकृतमिह शरीरावस्थ-

---

बुद्धिशब्दः, तथापि नाहङ्कारपरः; महच्छब्दस्यात्मशब्दोपपदपीडितत्वेन महत्तत्त्वोपस्थापकत्वाभावादिति—तर्ह्यत्रापि सप्तम्यन्तमहच्छब्दस्यापि आत्मशब्दोपपदपीडितत्वेन महत्तत्त्वोपस्थापकत्वाभावात् मनोमहतोर्मध्यगतत्वरूपमर्थसामर्थ्यं न विद्यते । यद्यत्रोपपदं न पीडकम्, तर्हि तत्रापि पीडनासामर्थ्यात्, 'मनसस्तु परा बुद्धिः' इत्यप्यहङ्कार उक्तः स्यात् । ततश्चाधिकरणप्रयासवैयर्थ्यमेव स्यात्, तन्त्रप्रक्रियास्थिरत्वसिद्धेरित्यलमनेन ।

ज्ञानमात्मनीत्यस्यार्थमाह **बुद्धिमिति** । वाचो मनसि नियमनम्—मनोननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसो बुद्धौ नियमनम्—अध्यवसायानुगुणप्रवृत्तितापादनम् । बुद्धिः अर्थेषु हेयताध्यवसायरूपा । तस्या बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम् । **शान्ते**—स्वतः ऊर्मिषट्कप्रतिभटे । शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिः । सैव परस्यापि वशीकरणं भवति ॥ न तदिति निर्देष्टव्यम्, आत्मशब्दस्य पुँल्लिङ्गत्वात् यच्छब्दस्य चात्मपरामर्शित्वादित्यत्राह **व्यत्ययेन तदिति** । **नपुंसकलिङ्गतेति** । अत्र तदिति व्याख्येयपदम् । "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति शाब्दैरुक्तः लिङ्गव्यत्ययेन तदिति नपुंसकलिङ्गतेत्यर्थः ॥ नन्वस्मिन् मन्त्रे रूपकरूपितानां वशीकरणप्रकार उच्यत इत्युक्तम्—तदयुक्तम्; विषयाणां शरीरस्य चात्र नियमनानुक्तेरिति चेन्न—तन्नियमनस्यार्थसिद्धत्वात् । विषयाणां नियमनं हि नाम तदसन्निधापनम् । शरीरस्य नियमनं नाम सात्त्विकाहारेण परिशोधनम् । न हि दूरतोऽनुज्झितविषयस्य दुष्टाहारसेवामलिनमनसः इन्द्रियादिनियमनं सम्भवति । अतोऽर्थसिद्धस्येह कण्ठोक्त्यभावः । तन्निमित्तमिदं विषयसन्निधिपरिवर्जनं सात्त्विकाहारसेवनञ्च योगव्युत्थानकाले सम्पाद्यम् । तदानीं वाक्चक्षुरादिकर्मज्ञानेन्द्रियाणां नात्यन्तव्यापारनिषेधः । अत्यन्तनिषेधस्तु योगकाल एव कर्तव्यः । अतो योगकाल एव कर्तव्यस्य नियमनस्यास्मिन् मन्त्रे विधानात् 'इन्द्रियेभ्यः' इत्यस्मिन् मन्त्रेऽपि वशीकार्यत्वे परत्वं विवक्षितमिति तन्त्रसिद्धकार्यकारणतत्त्वप्रत्यभिज्ञानाभावात् रूपकरूपितेषु परिशिष्टं शरीरमव्यक्तशब्देनोच्यत इति स्थितम् ॥

उत्तरसूत्रशङ्कामाह **अव्यक्तेति** । पारिशेष्याच्छरीराव्यक्तशब्दयोरैकार्थ्ये अवश्यम्भाविनि सति उपक्रमाधिकरणन्यायेन उपक्रमस्थशरीरशब्दानुगुणमव्यक्तशब्दे नेये, तत्राव्यक्तशब्दस्य वृत्तिः कथमित्यपेक्षायामाहेत्यभिप्रायः ॥ **सूक्ष्मं तु तदर्हत्वात्** ॥ द्रव्यैक्यलक्षणसंबन्धात् कार्ये कारणशब्दोपचार इत्याह **भूतसूक्ष्ममिति** । कारणभूताव्यक्ते कार्यवाचिशरीरशब्दोपचारः किं न स्यादित्यत्राह

मव्यक्तशब्देनोच्यते। तदर्हत्वात्—तस्याव्याकृतस्याचिद्वस्तुन एव विकारापन्नस्य रथवत् पुरुषार्थ-साधनप्रवृत्त्यर्हत्वात्॥ २॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते ; कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः ; तत्रापि हि भूतकारणमेवाव्यक्तमित्युच्यते ; तत्राह—

**तदधीनत्वादर्थवत् ॥ १ । ४ । ३ ॥**

परमकारणभूतपरमपुरुषाधीनत्वात् प्रयोजनवत् भूतसूक्ष्मम्। एतदुक्तं भवति—न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः; अपितु परमपुरुषशरीरतया तदात्मकत्वविरहेण। तदात्मकत्वेनैव हि प्रकृत्यादयः स्वप्रयोजनं साधयन्ति; अन्यथा स्वरूपस्थितिप्रवृत्तिभेदाः तेषां न

---

**तदर्हत्वा**दिति। व्याख्येयः सौत्रः तच्छब्दः **तस्ये**ति व्यस्य निर्दिष्टः। सूक्ष्मत्वं स्वशब्देनोपस्थापितम्; स्थूलावस्थं शरीरमव्यक्तशब्दविषयतया बुद्धिस्थम्। अतस्तथाविधाचिद्द्रव्यपरामर्श इति भावः। अवस्थाद्वयानुगतवस्तुलक्षणानिमित्तमाकारमाह **अचिद्वस्तुन** इति। ज्ञानसङ्कोचविकासरूपविकारापत्तिश्चिद्वस्तुनोऽस्ति। तद्व्यावृत्त्यर्थम**चिद्वस्तुन एव विकारापन्न**स्येत्युक्तम्। अर्हत्वं कार्यापेक्षम्; तद्विशेषं प्रकरणसिद्धमभिप्रेत्याह—**पुरुषार्थे**ति। औपचारिकत्वाविशेषेऽपि पुरुषार्थप्रवृत्त्यनर्हतारूपार्थविरोधात् तत एवाव्यक्तस्य वशीकार्यत्वायोगाच्च न कारणे कार्योपचाराच्छरीरशब्दो भूतसूक्ष्मपरत्वेन व्याख्यात इत्यर्थः। **यादवप्रकाशीयास्तु**—सूक्ष्मं शरीरमिह गृह्यते, तस्याव्यक्तशब्दार्हत्वात्। पूर्वत्रापि तदेव रथत्वेन रूपितम्; लोकान्तरप्राप्तेरपि विवक्षितत्वादिति व्याचक्षते—तदयुक्तम्, उपक्रमस्थशरीरशब्दस्य स्वरसतः स्थूलशरीरप्रतिपत्तिहेतुत्वात्, 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिना पुरुषार्थसाधनविशेषप्रतिपादनेन पुरुषार्थसाधनप्रवृत्त्यर्हत्वविवक्षामूलं रथत्वेन रूपणमित्यवगमाच्च। पुरुषार्थसाधनप्रवृत्त्यर्हत्वं हि स्थूलशरीरस्य। लोकान्तरप्राप्तिः फलानुभवार्थेति तत्साधनस्य सूक्ष्मदेहस्य नोपायानुष्ठानार्हता। अतोऽव्यक्तशब्दमात्रस्वारस्यादपि उपक्रमस्थशरीरशब्दस्वारस्यात् उपायदशायामुपयोगप्रतीतिस्वारस्याच्च यथोक्त एव सूत्रार्थ इत्येतदभिप्रायेणाह **रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वा**दिति॥

उत्तरसूत्रशङ्कामाह **यदी**ति। **भूतकारणमेवे**ति। त्वयापि यदभ्युपेतं भूतकारणत्वेन, तदेवेति भावः। **तदधीनत्वादर्थवत्**॥ न हि प्रयोजनवत्त्वाप्रयोजनवत्त्वे चोदिते; प्रधानाङ्गीकारः प्रधानवाददूषणञ्च व्याहतमिति ह्युक्तम्; तत् कथं परिहृतं भवतीत्यत्राह **एतदुक्त**मिति। **तदात्मकत्वविरहेणे**ति। **नाभ्युपगच्छाम** इत्यन्वयः। **तदधीन**शब्दस्य प्रवृत्तिमात्रे तादधीन्यपरत्वशङ्काव्यावृत्त्यर्थं **परमपुरुषशरीरतया तदात्मकत्वेने**त्युक्तम्। तेन प्रवृत्तौ पराधीनत्वेऽपि सत्तास्थित्योः कुलालानपेक्षदण्डचक्रादि(तौल्य??)व्यावृत्तिः। स्वातन्त्र्येण किं नाभ्युपगम्यत इत्यपेक्षायामर्थस्थितिमाह **तदात्मकत्वेनैव** हीति। हिशब्दः प्रमाणप्रसिद्धिद्योतकः। **स्वप्रयोजनम्**—स्वकार्यम्। प्रकृतेः कार्यं हि महानेव। महदादीनामपि तत्तत्कार्यमेव प्रयोजनम्। पुरुषस्य भोगापवर्गरूपं वा। उक्तमर्थमुपपादयति **अन्यथे**ति। **अन्यथा**—तदात्मकत्वविरहे स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युरिति। 'न तदस्ति विना यत्स्यात्', 'मयि सर्वमिदं प्रोतम्', 'मत्तः सर्वं प्रवर्तते' इत्यादिभिः स्वरूपस्थितिप्रवृत्तितादधीन्यसिद्धिः। **स्वरूपम्**—व्यवहारार्हत्वम्,

स्युः ; तथाऽनभ्युपगमादेव तन्त्रसिद्धप्रक्रियानिरसनम्—इति । श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषाः तदात्मकाः संकीर्त्यन्ते ; यथा, "पृथिव्यप्सु लीयते" इत्यारभ्य, "तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परे देवे एकीभवति" ; तथा, "यस्य पृथिवी शरीरं यस्यापः शरीरं यस्य तेजः शरीरं यस्य वायुः शरीरं यस्याकाशश्शरीरं यस्याहङ्कारश्शरीरं यस्य बुद्धिश्शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" ; तथा, "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति ; "व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" इति, "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः" इति च ॥ ३ ॥

---

मानसंबन्धार्हत्वं वा । तस्य कालान्तरावच्छि[1]न्नाकारविरहः **स्थितिः** । **प्रवृत्तिः** कार्योत्पत्त्यनुगुणव्यापारः । स्वरूपस्थिती न स्याताम् ; ततश्च प्रवृत्त्यभावः कैमुत्यन्यायसिद्धः ; यथा शरीरस्यात्मविश्लेषे इत्यर्थः । सूत्रे **अर्थव**च्छब्दः तदुपयुक्तार्थतादधीन्यस्यापि प्रदर्शनार्थः । अर्थोपयोगित्वात् प्रवृत्तेः, प्रवृत्त्युपयोगित्वाच्च स्वरूपस्थित्योरित्यभिप्रायः । पूर्वोक्तव्याघातस्य परिहृतत्वं दर्शयति **तथाऽनभ्युपगमादेवे**ति । अब्रह्मात्मकप्रधानवाद एव दूष्यः, ब्रह्मात्मकं प्रधानं स्वीकृतमिति न व्याहतिरित्यभिप्रायेण **प्रक्रियानिरसन**मित्युक्तम् । हिशब्दाभिप्रेतं तदात्मकत्वे प्रमाणं दर्शयति **श्रुतिस्मृत्योर्ही**ति । प्रलयश्रुतिः, 'पृथिव्यप्सु लीयते' इत्यादिः; महिमवादश्रुतिः 'यस्य पृथिवी शरीरम्' इत्यादिः । प्रलयश्रुतेरपि 'तमः परे देव एकीभवती'त्येतदन्तत्वात् तदात्मकत्वसिद्धिः । 'तस्मात्तमः सञ्जायते' इत्युत्पत्तिवाक्यं द्रष्टव्यम् । अप्ययपूर्वकत्वात् सृष्टेः प्रलयश्रुत्युपादानं सृष्टिवाक्यप्रदर्शनार्थम् ।

शरीरस्य जीवात्मापेक्षया परत्वं कथमिति शङ्कायाम्, जीवस्य शरीराधीनप्रवृत्तित्वाज्जीवापेक्षया शरीरस्य परत्वम्, यथेन्द्रियेभ्योऽर्थानां परत्वमिति परिहारपरमिदं सूत्र**मितरै**र्व्याख्यातम्—तदयुक्तम्, अपेक्षितविधेरनपेक्षितविधानदौर्बल्यात् । न हि वेदान्तिभिः प्रकृतिः स्वरूपेण नाभ्युपगम्यते । अतस्तदभ्युपगमतन्निरासयोर्व्याघातः परिहर्तव्य इति तत्परिहारोपेक्षणमपेक्षिताकरणं स्यात् । ननु शरीरस्य जीवात् परत्वानुपपत्तिशङ्का च परिहर्तव्या । अतो नानपेक्षितविधानं स्यादिति चेत्—एवं तर्हीन्द्रियेभ्यः कथमर्थानां परत्वमिति शङ्कायाश्च परिहर्तव्यत्वात् तत्परिहाराय सूत्रान्तरं प्रणेयं स्यात् ॥ सा च **अर्थव**दित्यनेन परिजिहीर्षितेति चेत्—तर्हि अर्थवदिति दृष्टान्ततयोक्तिर्न घटते । अर्थेभ्यो मनसः परत्वं कथमिति शङ्कापरिहाराय सूत्रान्तरं वक्तव्यञ्च स्यात् ॥ अर्थमनोबुद्ध्यादीनां परत्वं यथाकथञ्चित् व्यवहारे प्राधान्यादिविवक्षया निरुह्यत इति न त[दः?]त्र परिहर्तव्यमिति चेत्—अव्यक्तस्य परत्वमपि यथाकथञ्चिन्निरुह्यत इति न सूत्रापेक्षा ॥ केन युक्तिबलेन यथाकथञ्चिन्निर्वाह इति चेत्—

---

1, कालान्तरावच्छिन्नाकारः-उत्तरावस्था ।

**ज्ञेयत्वावचनाच्च । १ । ४ । ४ ॥**

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्; ज्ञेयत्वमवक्ष्यत्; व्यक्ताव्यक्तज्ञविज्ञानात् मोक्षं वदद्भिस्तान्त्रिकैः तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात् । न चास्य ज्ञेयत्वमुच्यते; अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥

**वदतीति चेन्न प्राज्ञो हि प्रकरणात् । १ । ४ । ५ ॥**

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति अव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्—तन्न । प्राज्ञः परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते; "विज्ञानसारथिर्यस्तु मनः-प्रग्रहवान् नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्", "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति प्राज्ञस्यैव प्रकृतत्वात् । अत एव, "पुरुषान्न परं किञ्चित्" इति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधः । तस्य च परमपुरुषस्याशब्दत्वादयो धर्माः, "यत्तदद्रेश्यमग्राह्यम्" इत्यादिश्रुतिप्रसिद्धाः । "महतः परम्" इत्यपि, "बुद्धेरात्मा महान् परः" इति पूर्वप्रकृतात् जीवात्मनः परत्वमेवोच्यते - ५ ॥

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । १ । ४ । ६ ॥**

---

अर्थमनोबुद्ध्यादीनां यथाकथञ्चित्परत्वनिर्वाहः केन युक्तिबलेन ॥ प्रकरणपारिशेष्याभ्यामाद्यसूत्रविवक्षिताभ्यामव्यक्तशब्दस्य रूपकविन्यस्तशरीरविषयत्वनिश्चयबलेनेति चेत्; तेनैवायमपि निर्वाह आद्यसूत्रेणैव सिद्ध इत्यनपेक्षितविधानं स्यादेव । अतः उक्तार्थपरमेवेदं सूत्रम् ॥

**ज्ञेयत्वावचनाच्च** ॥ व्यक्ताव्यक्तज्ञविज्ञानादिति **साङ्ख्यग्रन्थ** एव स्ववाक्ये निवेशितः ॥

**वदतीति चेन्न प्राज्ञो हि प्रकरणात्** । **अव्यक्तस्य ज्ञेयत्वमिति** । व्यक्तधर्मभूतशब्दादिनिषेधानामव्यक्तपर्यवसानस्य न्याय्यत्वात् महतः परत्वोक्तेश्च सामान्येन यत्तच्छब्दनिर्दिष्टमपि कारणमव्यक्तमिति भावः । **विज्ञानसारथिरिति** । अनेन ज्ञेयस्य प्राज्ञस्य परमपुरुषासाधारण**विष्णु**शब्देन प्रकृतत्वं दर्शितम् । **एष सर्वेष्विति** । **निचाय्येत्युक्तस्य** ज्ञानस्य **दृश्यत** इति पदेन प्राज्ञविषयतया प्रकृतत्वं दर्शितम् । अवान्तरचोद्यपरिहारपरेऽस्मिन् सूत्रे परमप्रकृतपूर्वपक्षयुक्तिनिरासश्चार्थसिद्ध इत्याह **अत एवेति** । व्यक्तधर्मनिषेधानामव्यक्तपर्यवसानचोद्यस्यादृश्यत्वाद्यधिकरणे परिहृतत्वमाह **तस्य चेति** । महतः परत्वादव्यक्तमिह विवक्षितमित्यत्राह **महत इति** । इन्द्रियादिपरिकरवत्त्वलक्षणप्राधान्यविवक्षातिशयात् **महच्छब्देना**त्मनिर्देशः ॥

प्रकरणस्य प्राज्ञैकपरत्वं नास्ति, प्रधानस्यापि प्रतिपाद्यमानत्वात् । तस्मात्प्राज्ञपरत्वं न प्रधानपरत्वविरोधीत्यत्राह सूत्रकारः **त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** ॥ प्रथमश्चशब्दो हेतुसमुच्चये, द्वितीयश्चशब्दः प्रश्नोपन्यासयोः समुच्चये । कथमत्र त्रयाणामुपन्यासः; प्रश्नवाक्यं हि मुक्तमात्रविषयमिति शङ्कायां प्रतिवचनप्रकारेण प्रश्नार्थस्य विज्ञेयत्वात् प्रश्नवाक्येऽपि त्रयमपि पृष्टं भवतीत्यभिप्रायेण

अस्मिन् प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासः—ज्ञेयत्वेनोपन्यासः, तद्विषयश्च प्रश्नो दृश्यते ; नान्यस्याव्यक्तादेः । तथा हि नचिकेता मुमुक्षुस्सन् मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणाऽऽत्मनः पुरुषार्थयोग्यतापादिनीमात्मनि पितुः सुमनस्कतां प्रतिलभ्य, द्वितीयेन वरेण मोक्षोपायभूतां नाचिकेताग्निविद्यां वव्रे—"स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्ते एतद् द्वितीयेन वृणे वरेण" इति। स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते, "अमृतत्वं भजन्ते" इति तत्रस्थस्य जननमरणाभावश्रवणात्; उत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च ; "त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति

---

प्रश्नस्य पश्चादुक्तिः । **अस्मिन्नि**त्यादि । **त्रयाणा**मिति पदमग्निजीवपरमात्मपरं परैर्व्याख्यातमिति तद्व्यावृत्त्यर्थमाह **उपाये**ति । **एवमुपन्यास** इति व्याख्येयं पदम् । एवंपदं व्याचष्टे **ज्ञेयत्वेने**ति । **ज्ञेयत्वावचनाच्चे**ति पूर्वसूत्रस्थज्ञेयत्वमेवम्शब्देन परामृश्यत इत्यर्थः । तदुपपादयति **तथा ही**ति । **नचिकेता** इत्यादि । प्रथमवरवरणं द्वितीयपादे, 'अत्ता चराचरग्रहणात्' इत्यधिकरणे विस्तृतत्वादिह **प्रतिलभ्ये**त्यन्तेन सङ्क्षिप्तम् । तत्र सङ्क्षिप्तत्वात् द्वितीयवरवरणं विस्तरेण दर्शयति **द्वितीयेने**ति । **मोक्षोपायभूता**मिति । नाचिकेताग्निविद्यायाः मोक्षोपायत्वमङ्गिद्वारा भवति । तच्च तस्याः परमात्मात्मकस्वात्मानुसन्धानगर्भत्वात् । तथा हि तदुभयं श्रूयते, "लोकादिमग्निं तमुवाच तस्मै" इत्युपक्रम्य "ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम्। स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके" इति वाक्येन परमात्मतदात्मकस्वात्मतदनुसन्धानगर्भाग्निविद्याज्ञानपूर्वकं चिन्वानस्य शोकातिगत्वमुक्तम् । "यो वा एतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् । स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तत् येन पुनर्न जायते" इति वाक्येन ब्रह्मात्मकचेतनदृष्ट्या वा तादृशदेवताधिष्ठितत्वेन वाऽनुसन्धानपूर्वकमग्निं चिन्वानस्यापुनर्भवहेतुभूतब्रह्मोपासनद्वारा मोक्षप्राप्तिर्युक्ता । तृतीयवरवरणश्लोकार्थनिष्कर्षौपयिकतया द्वितीयवरवरणश्लोकमुपादाय तत्र व्याख्येयस्य **स्वर्ग्य**पदस्य प्रकृत्यंशं व्याचष्टे **स्वर्गे**ति । मोक्षशब्दो मोक्षस्थानपरः, लोकशब्दसामानाधिकरण्यात् ; भाष्ये **तत्रस्थस्ये**ति वक्ष्यमाणत्वाच्च । स्वर्गशब्दस्य मोक्षवाचित्वोपपादकः **परमपुरुषार्थलक्षण**शब्दः । स्वर्गशब्दस्य प्रकृष्टसुखोपलक्षणत्वात् मोक्षस्य निरवधिकानन्दरूपत्वाच्च स्वर्गशब्दवाच्यत्वमिति भावः । प्रसिद्धस्वर्गपरत्वं किं न स्यादित्यत्राह **अमृतत्व**मिति । **तत्रस्थस्ये**ति । **स्वर्गलोका** इति हि बहुव्रीहिः, निरतिशयसुखरूपपरमव्योमस्था इति भावः । मोक्षवाचित्वे हेत्वन्तरमाह **उत्तरत्रे**ति । तृतीयवरवरणप्रश्ने, 'श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव' इति, तथा 'जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव' इति च तत्र नचिकेतसैव क्षयिफलस्य निन्दितत्वात् क्षयिफलविमुखेन नचिकेतसा क्षयिफलसाधनप्रश्नानुपपत्तेरित्यर्थः । द्वितीयवरवरणप्रतिवचनान्तर्गतं हेत्वन्तरमाह **त्रिणाचिकेत** इति । **त्रिणाचिकेतः**—'अयं वाव यः पवते' इत्याद्यनुवाकत्रयाध्यायी । **त्रिकर्मकृत्**—यजनाध्ययनदानकृत्, पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा । त्रिभिरग्निभिर्हेतुभिः **सन्धिम्**—

जन्ममृत्यू" इति च प्रतिवचनात् । तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेण उपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्—"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति । एवं मोक्षे पृष्टे, तदुपदेशयोग्यतां परीक्ष्योपदिदेश, "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति । तदेवं सामान्येनोपदिष्टे, नचिकेताः प्रीतस्सन् "देवं मत्वा" इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य, "अध्यात्मयोगाधिगमेन" इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च, "मत्वा धीरो हर्षशोकौ जहाति" इति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ, "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद" इति । एवं सकलेतर-अतीतानागतवर्त-

---

परमात्मोपासनेन संबन्धं प्राप्य जन्ममृत्यू तरतीत्यर्थः; 'करोति तत् येन पुनर्न जायते' इत्यनेनैकार्थ्यात् । **तृतीयेनेति** । येयं प्रेत इति मन्त्रस्य देहातिरिक्तजीवस्वरूपमात्रप्रश्नपरत्वव्युदासायाह **मोक्षेति** । अत्रोपायोपेयप्रश्नो गर्भित इति भावः । प्रतिवचनप्रकारेण प्रश्नार्थस्यावगन्तव्यत्वात् । **प्रेते** । परित्यक्तचरमशरीरे इत्यर्थः । "न प्रेत्य संज्ञाऽस्ति" इति प्रयोगात् । अन्यथा पूर्ववरद्वयवरणानुपपत्तिर्हेतुः पूर्वमुक्तत्वादिह न कण्ठोक्तः । इदं च विस्तरेणोपपादयिष्यामः । अस्मिन् प्रकरणे, 'नचिकेतो मरणं मानुप्राक्षीः' इति **मरणशब्दः** चरमशरीरवियोगपरः; उक्तहेतोरेव । 'पञ्चविंशतितत्त्वज्ञः परमात्मा भवेन्मृतः । स मुक्तस्तत्त्वसन्तानात् परेण समतां व्रजेत्' इति परमात्मसाम्यापन्ने मुक्तेऽमृतशब्दस्य कपिलासुरिसंवादे प्रयुक्तत्वात्, "देवैरत्रापि विचिकित्सितं पुरा" इत्यारभ्य, 'धृत्या धीरो नचिकेतोऽत्यस्राक्षीः' इत्यन्तेनोच्यमानं दुरवगमत्वविविधप्रलोभनप्रश्नप्रतिषेधादिकमभिप्रेत्याह **तदुपदेशयोग्यतां परीक्ष्येति** । **दुर्दर्शम्**—द्रष्टुमशक्यम् । कुतः ? **गूढम्** । गुणत्रयतिरोहितत्वात् । **अनुप्रविष्टम्** शरीरानुप्रविष्टम् । तत्रापि **गुहाहितम्** हृदयगुहागतम् । **गह्वरेष्ठम्**—तदन्तर्गते वस्तुनि स्थितम्; जीवान्तःस्थितमित्यर्थः । **जहातीत्युपदिदेशे**त्यन्वयः । 'येयं प्रेते' इत्यादिवाक्यस्य जीवमात्रप्रश्नपरत्वे परमात्मविषयतया प्रतिवचनवैघट्यं स्यादित्यभिप्रायः । अस्मिन् वाक्ये स्वोक्तमर्थत्रितयमपि विशदयति **तदेवमिति** । **अध्यात्मयोगशब्दः** प्राप्तृस्वरूपविषययोगपर इत्यभिप्रयन्नाह **वेदितव्यतयेति** । तं दुर्दर्शमितिमन्त्रेण त्रितयमप्युक्तं चेत्, श्रोतव्याभावात् पुनः प्रश्नानुपपत्तिरिति शङ्कापनोदनाय प्रश्नाकाङ्क्षाप्रयोजने दर्शिते **सामान्येनेति, स्वरूपविशोधनाय पुनः पप्रच्छेति** च । **पुनःपप्रच्छेति** पाठः । उपायोपेयोपेतॄणां त्रयाणामपि सामान्येनोपदिष्टत्वात् स्वरूपशोधनाकाङ्क्षापि सर्वसाधारणी । तत् कथम् 'अन्यत्र धर्मात्' इति मन्त्रेण परमात्ममात्रविषयप्रश्नः इति शङ्कायां प्रश्नस्य त्रितयविषयत्वमनुभाषणव्याजेन दर्शयन् तदनन्तरमन्त्रस्यापि त्रितयविषयत्वमाह **एवं सकलेतरेति** । कालत्रयसंबन्धित्वं हि वक्ष्यमाणत्रितयस्याप्यस्ति; तत् कथं विलक्षणत्वमिति शङ्काव्युदासार्थं **इतरशब्दः** । **वर्तमानशब्देन कृताकृतशब्दो** व्याख्यातः । प्रारब्धमसमाप्तं हि वर्तमानमुच्यते । **अन्यत्रेति** वैलक्षण्यं विवक्षितम् । **धर्मः** उपायः । **धर्मादन्यत्र** प्रसिद्धोपायविलक्षण उपाय इत्यर्थः । **अधर्मः** धर्मेतरः; उपेयः ।

**मानसाध्य-साधन-साधकविलक्षणे त्रये पृष्टे, प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन् प्रणवं तावदुपदिदेश, "सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं संग्रहेण ब्रवीमि॥ ओमित्येतत्" इति। एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत् प्राप्तुः प्रत्यगात्मनः**

---

**अधर्मादन्यत्र**-प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः। **अस्मादिति** बुद्धिस्थस्तत्साधको विवक्षितः। स एव उपेता। स हि प्रसिद्धोपेतृसाधकविलक्षणः; साधकावस्थायामितरफलविरक्तत्वात्, फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च। **कृताकृता**दिति धर्मादीनां विशेषणम्। कृताकृताद्धर्मादेर्विलक्षणं यत् भूताद्भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः। यद्वा धर्मादधर्माच्च अन्यत्र यदिति उपासनप्रश्नः; पुण्यापुण्यरूपसाधनविलक्षणत्वादुपासनस्य। कृताकृताद्भूताद्भव्याच्चान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम्। उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च तत एव तस्यापि तन्त्रेण प्रश्नः। तदन्तर्गतञ्च प्राप्तृस्वरूपमिति हि वक्ष्यते। **त्रय** इति। **यत्तच्छब्दौ** त्रितयपराविति भावः॥ ननु धर्माधर्मसाध्यत्रिकालवर्तिवस्तुविलक्षणपरमात्मविषयोऽयं मन्त्रः किं न स्यात्॥ उच्यते। धर्मादन्यत्रेत्युक्ते तदसाध्यत्वं न प्रतीयते। न ह्यदृष्टादन्यद्दृष्टमित्युक्ते सति अदृष्टासाध्यत्वं दृष्टस्य प्रतीयते॥ धर्माधर्मादिविलक्षणब्रह्मविषयप्रश्नः स्यादिति चेन्न—प्रयोजनाभावात्। कृताकृताद्भूताद्भव्याच्चान्यत्रेत्यनेन कालपरिच्छिन्नार्थविलक्षणं वस्तु पृष्टं स्यात्। ततश्च धर्माधर्मवैलक्षण्यप्रश्नो विफल एव; धर्माधर्मयोरपि कालपरिच्छिन्नवस्त्वन्तर्गतत्वात्। अतः इतरोपायोपेयोपेतृविलक्षणत्रयप्रश्नपरत्वमुपपन्नम्। **प्रणवं प्रशस्येति**। 'सर्वे वेदाः' इत्यादिपादत्रयोक्तपरब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः। 'तत्ते पदं सङ्ग्रहेण ब्रवीम्योमिति' इति प्रणवेन ब्रह्मप्रतिपादनं ह्युच्यते। **प्राप्यस्वरूपमिति**। **पद**शब्दः पद्यत इति व्युत्पत्त्या प्राप्यवाचीति भावः। **तदन्तर्गतम्**—प्रणववाच्यान्तर्गतम्, प्रणववाच्यैकदेशम्. प्रणवैकदेशवाच्यो ह्युपेता जीवः। यद्वा प्राप्ये प्रणववाच्ये परमात्मनि प्रकारतयान्तर्गतमित्यर्थः। परिशुद्धजीवस्य प्राप्यान्तर्भावात् पदशब्दवाच्यान्तर्भूतत्वमिति भावः। **वाचकरूपं चोपायमिति**। उपायोपायतया प्रणवस्योपायत्वम्। उपायो हि ध्यानम्। वाचकशब्दश्च वाच्यस्मरणोपायः। "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्", "ओमित्यात्मानं ध्यायथ" "ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति ध्यानोपायत्वं हि प्रणवस्यावगम्यते। **तपांसि** ज्ञानप्रधाना उपरिभागाः॥ ननु 'तत्ते पदं सङ्ग्रहेण ब्रवीमि' इति प्राप्यस्वरूपपरत्वं हि प्रतीयते, तत् कथं त्रितयख्यापने तात्पर्यम्। कथं ब्रह्मणो जिज्ञास्यत्वे प्रतिज्ञाते तदनुबन्धिनां जिज्ञास्यत्वसिद्धिः॥ तदुपयुक्तत्वादुत्तरत्र निरूप्यमाणत्वाच्च अर्थतः प्रतिज्ञातत्वसिद्धेरिति चेत्—इहापि ब्रह्मवेदनोपयोगित्वादुत्तरत्र प्रतिपाद्यमानत्वाच्च उपायोपेत्रोरपि प्रतिपाद्यत्वम्। न केवलमुपयोगादिमात्रात्, किंतु पदशब्दवाच्यान्तर्भावश्च दर्शितः। एतद्ध्येवाक्षरं ब्रह्मेत्यादिवाक्याभिप्रायेणाह **पुनरपि प्रणवं प्रशस्येति**। 'न जायते म्रियते वा विपश्चित्' इत्यादिमन्त्रद्वयस्य परमात्मपरत्वानुपपत्तिं मन्वान आह **प्राप्तुः प्रत्यगात्मन** इति। का पुनरनुपपत्तिः॥

**स्वरूपमाह. "न जायते म्रियते वा विपश्चित्" इत्यादिना । प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपम्, "अणोरणीयान्" इत्यादिना, "क इत्था वेद यत्र सः" इत्यन्तेनोपदिशन् मध्ये, "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह । "ऋतं पिबन्तौ" इति चोपास्यस्योपासकेन सहावस्थानात् सूपासतामुक्त्वा, "आत्मानं रथिनं विद्धि" इत्यादिना, "दुर्गं पथस्तत् कवयो वदन्ति" इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय, "अशब्दमस्पर्शम्" इत्यादिनोपसंहृतम् । अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च । तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥**

---

उच्यते । इदं मन्त्रद्वयं तावदेकविषयम्; 'न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य । हन्ता चेदिति मन्त्रश्च जीवविषय एव; लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात् तत्प्रतिषेधानुपपत्तेः । परमात्मा हि प्रत्यक्षागोचरः; कथं तस्मिन् वध्यतादिप्रतिपत्तिः? 'अहमेनं हन्मि, अयं मां हन्तुमागच्छती'ति वध्यघातुकभावाभिमानो हि जीवविषय एव देहिनां भवति ॥ ननु 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' इतिवत् परमात्मन्यपि हनननिषेध उपपद्यते ॥ सत्यम् । तत्र दहराकाशस्य देहान्तस्स्थित्या शङ्कितविकारादिनिषेध उपपद्यते । इह तु लोकभ्रान्तिरनूद्य प्रतिषिध्यते, "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतः" इति । परमात्मनि वध्यघातुक[भाव?]भ्रान्तिर्न कस्यचिदप्यस्ति । अतोऽनुवादनिषेधावनुपपन्नौ । न जायत इति मन्त्रश्च तेनैकार्थः । अतो मन्त्रद्वयमपि जीवविषयम् । 'अणोरणीयान्' इत्यादेरर्थमाह **प्राप्यस्ये**ति । 'न जायते म्रियते' इत्यादिना 'अणोरणीयान्' इत्यादिना च जीवपरयोः स्वरूपे कथिते, 'ऋतं पिबन्तौ' इति मन्त्रेण तयोः प्रतिपादनवैयर्थ्यशङ्कापरिहारायाह **सूपासतामुक्त्वे**ति । एतद्वाक्यस्योपादानं परकृतव्याख्याननिरासफलकतयेति वक्ष्यामः । **उपसंहृत**मिति । प्रकृतोपसंहारस्यापेक्षितत्वादर्थान्तरपरत्वस्यासङ्गतत्वाच्चेति भावः । सूत्रार्थं निगमयति **अतस्त्रयाणा**मिति । सूत्रार्थं परमप्रकृतार्थेन घटयति **तस्मान्ने**हेति ।

ननु त्रयाणामिति पदमग्निजीवपरमात्मपरं किं न स्यात्? तेषां हि प्रश्नोपन्यासौ दृश्येते । "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि", "येयं प्रेते", "अन्यत्र धर्मात्" इति त्रयाणां क्रमेण प्रश्नः; "लोकादिमग्निं तमुवाच तस्मै या इष्टकाः", "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा हि मरणं प्राप्य आत्मा भवति गौतम", "न जायते म्रियते वा विपश्चित्" इति प्रतिवचनञ्च । न च जीवविषयप्रश्नस्य परमात्मविषयप्रतिवचनवैघट्यम्; ऐक्यस्य विवक्षितत्वादुपपत्तेरिति ॥ उच्यते । अत्रानतिविरोधेऽपि भाष्यकारोक्तार्थ एव युक्ततरः । तथाहि—जीवस्तावदुपेता; परमात्मा चोपेयः; अग्निविद्या च ब्रह्मोपासनाङ्गत्वेनोपायान्तर्भूता । तदन्तर्भावश्च प्राकरणिकवाक्यैर्दर्शितः । अग्नेरपि पृथगेव विवक्षितत्वे अग्निजीवपरमात्मतदुपासनानां चतुर्णां प्रतिपाद्यत्वदर्शनात् त्रयाणामेवेत्यवधारणमयुक्तम् । अतोऽग्नेरप्युपायान्तर्भावविवक्षाऽङ्गीकर्तव्या । तथासति उपायोपेयोपेतॄणामेव व्याख्यानं युक्ततरम् । उपासनोपदेशश्चात्र स्फुटतरमुपलभ्यते । 'नायमात्मा प्रवचनेन लभ्यः', "नाविरतो दुश्चरितात्' इत्यादिना केवलश्रवणादिविलक्षणः परमात्मवरणीयताहेतुभूतः प्रकृष्टज्ञानविशेषो हि

उपायतयाऽभिधीयते । अवधारणं प्राधान्यव्यावृत्तिपरम् ॥ उपायस्योपेयप्राप्त्यर्थतया परमात्मन्यन्तर्भावात् त्रित्वाविरोध इति चेत्—तर्हि त्रयाणामुपन्यासः प्रधानस्याप्रतिपाद्यत्वे हेतुरेव न भवितुमर्हति; अर्थान्तरान्तर्भावसहत्वात् ॥ प्रश्नोपन्याससमुच्चयस्त्रयाणामेव ; न ह्युपायस्य प्रश्नो दृश्यते ; अतोऽवधारणोपपत्तिरिति चेन्न— अस्मिन् प्रकरणे प्रश्नोपन्याससमुच्चयस्य प्रतिपाद्यत्वे हेतुत्वाभावात् तदभावेन प्रतिपाद्यत्वाभावस्य दुर्वचत्वात् । उपायो ह्यपृष्ट एवोपन्यस्तः ॥ सोऽप्यर्थतः पृष्ट इति प्रश्नोपन्याससमुच्चयोऽस्मिन् प्रकरणे प्रतिपाद्यत्वे हेतुरिति चेत्—तर्हि चतुर्णामिति वक्तव्यम् ; शब्दतोऽर्थतश्च चतुर्णां प्रश्नोपन्याससंभवात् । यदि कण्ठोक्त्यैव प्रश्नोपन्याससमुच्चयो विवक्षितः—तस्य प्रतिपत्त्यत्वे प्रयोजकत्वाभावस्य प्रतिपाद्यमानोपासन एव दृष्टतया समुच्चयाभावस्याप्रतिपाद्यत्वे हेतुत्वायोगात् । किञ्च 'येयं प्रेते' इत्यस्य देहातिरिक्तजीवसद्भावासद्भावप्रश्नविषयत्वं चानुपपन्नम् ; देहातिरिक्तात्मसद्भावनिश्चयरहितस्य पितृसौमनस्याग्निविद्यावरणयोरनुपपत्तेः । अग्निप्रश्नवाक्य एव, 'स्वर्गलोका अमृतत्वं भजन्ते' इति देहातिरिक्तात्मज्ञानवत्त्वमवगम्यते । तत्प्रतिवचन एव, 'त्रिकर्मकृत् तरति जन्ममृत्यू', 'करोति तत् येन पुनर्न जायते' इत्यपवर्गरूपपुरुषार्थोपयोगित्वमग्निविद्याया अवगतम् ; कुतो देहातिरिक्तात्मसंदेहसंभवः ? तस्मादपवर्गप्रकारविशेष एव संदेहसंभवः । अतस्तत्प्रकारविशेषप्रश्नपरत्वं 'येयं प्रेते' इत्यादिवाक्यस्य युक्तम् । यदीदं देहातिरिक्तात्मसद्भावासद्भावप्रश्नपरम्—अस्य 'तं दुर्दर्शम्' इति परमात्मविषयप्रतिवचनं च न घटते ॥ जीवपरयोरैक्यज्ञापनार्थं तथा प्रतिवचनमिति चेन्न—परमात्मविषयप्रतिवचन एव, 'ऋतं पिबन्तौ सुकृतस्य लोके' इति जीवपरयोर्भेदप्रतिपादनेन तद्विरुद्धार्थाभिप्रायकल्पनानुपपत्तेः । न च भेदानुवादः ; सर्वज्ञताद्याकारेण जीववैलक्षण्यस्य लौकिकप्रमाणागोचरत्वात् ; विहितस्य निषेधायोगाच्च । न च बुद्धिजीवपरोऽयं मन्त्रः ; गुहां प्रविष्टावित्यत्रास्य मन्त्रस्य बुद्धिजीवपरत्वं पूर्वपक्षीकृत्य जीवपरमात्मपरत्वस्य भवद्भिरेव, 'अस्य 'गौर्द्वितीयः' इति न्यायेन सिद्धान्तितत्वात् । 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति हृदयायतने उपास्यतया स्थितस्य परमपुरुषस्यादित्यमण्डलान्तर्वर्तित्वमुच्यत इति न जीवपरयोरैक्यप्रतीतिः । 'मृत्योः स मृत्युमाप्नोति' इति वाक्यमुपसंहारगतमेतदपेक्षया दुर्बलम् ; भेदसामान्यनिषेधरूपत्वात् विहितभेदविशेषव्यतिरिक्तविषयश्च । अतः श्रुतभेदविरुद्धाभिप्रायकल्पनायोगात् प्रतिवचनवैषम्यमेव । किञ्च येयं प्रेते इति प्रथमखण्डस्थं प्रश्नं प्रति प्रश्नान्तरव्यवहितस्य पञ्चमखण्डस्थस्य 'हन्त त इदं प्रवक्ष्यामि' इति वाक्यस्य प्रतिवचनत्वं चायुक्तम् ॥ 'अर्थक्रमः पाठक्रमाद्बलीयान्' इति तेन तद्बाध इति चेन्न—मध्ये जीवविषयवाक्यस्य सद्भावात् । तच्च दर्शितम् । किञ्च 'यन्मयश्च जगद्ब्रह्मन्' इत्यादाविव यदा प्रतिवचना[1]व्यवहिताः प्रश्नाः प्रश्नाव्यवहितानि च प्रतिवचनानि स्युः, तदा क्रमकोप उपपद्यते । को देवदत्तः ? दण्डी, को यज्ञदत्तः ? कुण्डली, को विष्णुमित्रः ? कमण्डलुमान् इतिवदेकैकप्रश्नानन्तरं तत्तत्प्रतिवचनदर्शनात्[2] यज्ञदत्तप्रश्नोत्तरस्य देवदत्त-

---

1 अव्यवहिता इति । मध्येमध्ये तत्तत्प्रश्नप्रतिवचन मन्तरेण युगपद् बहव इत्यर्थः ।

2 दर्शनादिति । अत्रोपनिषदीति शेषः ।

**महद्वच्च । १ । ४ । ७ ॥**

यथा, "बुद्धेरात्मा महान् परः" इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥

इति आनुमानिकाधिकरणम् ॥ १ ॥

२९. चमसाधिकरणम् १-४-२ (श्वे. ४)

**चमसवदविशेषात् । १ । ४ । ८ ॥**

अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते ; न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम् ; श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात् ।

यथा आथर्वणिका अधीयते, "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः । सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री

---

प्रश्नोत्तरत्वकल्पनवत् क्रमकोपकल्पनमत्यन्तानुपपन्नम् । 'येयं प्रेते' इति च न जीवसद्भावासद्भावमात्रप्रश्न इत्युक्तम् । अतः 'येयं प्रेते' इति श्लोकः शब्दतोऽर्थतश्च मोक्षानुबन्धितया ज्ञातव्यार्थत्रयविषयः । तथा च सति 'तं दुर्दर्शम्' इत्यादिप्रतिवचनमतीव घटते । 'अन्यत्र धर्मात्' इति पुनःप्रश्नाकाङ्क्षा तस्यार्थश्च दर्शितौ । अर्थत्रयस्य चैकश्लोकेन पृष्टत्वस्य विवक्षितत्वात् प्रतिवचनाच्च **त्रयाणामेवे**त्यवधारणं च युक्तम् । अत एव 'न जायते' इति जीवविषयवाक्यस्य, 'अणोरणीयान्' इति परविषयवाक्यस्य, नायमात्मेत्युपायविषयवाक्यस्य च प्रतिवचनत्वं सुघटितम् । प्रश्नप्रतिवचनान्तराव्यवहितत्वं च सिध्यति । एकप्रश्नेनैवार्थत्रयस्य पृष्टत्वे सूत्रस्थ**प्रश्नोपन्यास**शब्दगतैकवचनस्वारस्यं च भवति । न ह्युपन्यासाः प्रश्नाश्चेत्युक्तम् । यतः 'येयं प्रेते' इति प्रश्नोऽर्थत्रयविषयः, अत एवेह प्रशंसाप्रलोभनविद्याऽविद्याविभागकथनादिकमञ्जसोपपद्यते । अतो यथोक्त एव सूत्रार्थः ॥

**महद्वच्च ॥** तन्त्रसिद्धमहत्तत्त्वाग्रहणे सूत्राभिप्रेतं हेतुमाह **आत्मशब्दसामानाधिकरण्या**दिति ॥

---

**चमसवदविशेषात् ॥** कार्यशरीरवाचिपदस्य रूपके श्रवणात् तदव्यक्तशब्देनोच्यत इत्युक्तम् ; अत्र तु कार्यशरीरवाचिशब्दाश्रवणात् कारणं प्रधानमेवोच्यत इति शङ्कया सङ्गतिः । **व्याख्यातान्तरै**-र्गौणवृत्त्या तेजोबन्नपरत्वेन व्याख्यातम् ; किमिदं वाक्यं प्रधानपरम्, उत तेजोबन्नपरमिति विचारश्च कृतः । तत् दूषयितुं किं श्रुत्यन्तरस्वारस्यार्थमेवं व्याख्यातम्, उत स्ववाक्यस्वारस्यार्थमिति विकल्पमभिप्रेत्य स्ववाक्यस्वारस्याभावमुत्तरत्र वक्ष्यन् प्रथमं प्रधानस्य प्रामाणिकतया तन्निरासे श्रुत्यन्तरास्वारस्यज्ञापनाय प्रधानविषयं वाक्यजातमुदाहर्तुमाह **अत्रापी**ति । **विकारजननी**मित्यादि । **अष्टरूपत्वम्** 'भूमिराप' इत्याद्युक्तप्रकारेण । **अजाम्** उत्पत्तिरहिताम् । **ध्रुवां** नाशरहिताम् । **ध्यायते** परमात्मना सङ्कल्परूपज्ञानेन ज्ञायते । **अध्यासिता** अधिष्ठिता । **तन्यते**—विस्तार्यते ; स्थूलावस्थं क्रियते ; समष्टिभूतरूपेण क्रियते । **प्रेर्यते** व्यष्टिसृष्ट्यर्थं प्रेर्यते । **पुरुषार्थम्**—पुरुषाणामर्थनीयं भोग्यभोगोपकरणभोगस्थानरूपं जगत् सूयते । **गौरि**त्यादि । **जनित्री भूतभाविनी**ति समष्टिव्यष्टिसृष्टि-

भूतभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः । पिबन्त्येनामविषमामविज्ञाताः कुमारकाः । एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम् । ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः । सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः", "चतुर्विंशतिसङ्ख्यातमव्यक्तव्यक्त-मुच्यते" इति । अत्र प्रकृत्यादीनां स्वरूपमभिहितम् । यदात्मकाश्चेते प्रकृत्यादयः, स परम-पुरुषोऽपि, तं षड्विंशकमित्याहुः सप्तविंशमथापरे । पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः" इति प्रतिपाद्यते । अपरे चाथर्वणिकाः, "अष्टौ प्रकृतयः षोडश विकाराः" इत्यधीयते ।

श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति, संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिध्यानात् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः", "छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इति । तथो-त्तरत्रापि, "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" इति ।

स्मृतिरपि, "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृति-संभवान् । कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।

---

रुच्यते । **सितासिताच रक्ता च**—गौण्या वृत्त्या सत्त्वरजस्तमोमयी । यद्वा तेजोबन्नद्वारा सिता असिता रक्ता । **विभोः** ईश्वरस्य । **सर्वकामदुघा**—लीलारसदोग्ध्री । **अविषमां** भोक्तृकर्मानुगुणपरिणामि-त्वादपक्षपातिनीम् । **अविज्ञाताः**—स्वात्मभिर्देहेभ्यो विविच्यापरिज्ञाताः । **एकस्त्विति** कर्मवश्यबहुभोक्तृ-व्यावृत्त्यर्थमेकः **स्वच्छन्द** इत्युक्तम् । **ध्यानक्रियाभ्याम्**—सङ्कल्पसर्गादिव्यापाराभ्याम् । ऐक्षत—असृजतेति द्वयमपि हि [1]श्रूयते । **पीड्यमानां तु यज्वभिरिति** । वत्सा हि मातरं क्षीरक्षरणार्थं पीडयित्वा भुञ्जते ; तद्वत् कर्मवश्यैरात्मभिर्भोक्तव्यफलानुरूपं परिण(णा)म्यमानामित्यर्थः । **अत्रेति** । **प्रकृत्यादीनां** प्रकृतिपुरुषमहदादीनां । **स्वरूपमभिहितम्** । एषु वाक्येषु ईश्वरप्रतिपादनं प्रधानादीनामीश्वरतादधीन्य-विशिष्टत्वपरमिति भावः । एवं ब्रह्मात्मकप्रधानपरवाक्यान्युक्तानि । अथ तदन्तर्यामिभगवत्प्रतिपादकं वाक्यं दर्शयितुमाह **यदात्मका** इति । षड्विंशकत्वं कालस्य विशेषणत्वेन प्रकृतितद्विकारेष्वन्तर्भावात् । सप्तविंशत्वं कालस्य तदनन्तर्भावविवक्षया । पञ्चविंशकेष्वेव लब्धैश्वर्यः कश्चिदुक्तः पञ्चविंशक-स्तुत्यर्थमित्यन्यथासिद्धिरीश्वरप्रतिपादनस्य वक्तुमशक्या ; सङ्ख्यातः पृथङ्निर्देशादित्यभिप्रायः । **प्रकृतेः** प्रामाणिकत्वमात्रप्रदर्शनार्थमुक्तम् **अष्टौ प्रकृतय** इति । अत्रापि वाक्यान्तरैकार्थ्यात् ब्रह्मात्मकत्वं सिद्धमिति भावः । [त्रयमिति?] एतत् त्रयं यदा विन्दते, तदा **ब्रह्म भवति** मुक्तो भवतीत्यर्थः । **अभिध्यानम्**—आलम्बनसंशीलनम् ; **योजनं** योगः ; **तत्त्वभावः** तत्त्वाविर्भावः साक्षात्कारः ; **अवयवभूतैः**-अंशभूतैः शरीरभूतैरित्यर्थः । स्मृतिं दर्शयति **स्मृतिरपीति** । एवं **प्रधानस्य**

---

1 श्रूयते । छान्दोग्य इति शेषः ।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु", "सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम्"; तथा, "सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ........ मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति ।

तस्मादब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते ।

श्वेताश्वतरोपनिषदि श्रूयते, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । तत्र सन्देहः—किमस्मिन् मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिका—इति । किं युक्तम्? केवलेति ॥ कुतः ॥ "अजामेकाम्" इति अस्याः प्रकृतेरकार्यत्वश्रवणात्, "बह्वीः प्रजाः सृजमानां सरूपाः" इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च इति ।

एवं प्राप्तेऽभिधीयते चमसवदविशेषात् ।[नात्र तन्त्रसिद्धा प्रकृतिरभिधीयते । कुतः।]न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात् तन्त्रसिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः । चमसवत् । यथा, "अर्वा-

---

प्रामाणिकत्वादतत्परत्वेन व्याख्यानमनुपपन्नमित्युक्तम्; ततः किमित्यत्राह **तस्मादिति** । **प्रकृत्यादय** इत्यादिशब्देन महदादिरभिप्रेतः ।

विषयादिकं दर्शयति **श्वेतेति** । प्रकृतेरेव कर्तृत्वप्रतीतिजनकवाक्यजातं विषयः । अचेतनत्व**सृजमान**पदस्वारस्याभ्यां संशयः । श्वेताश्वतरे अजामेकामिति मन्त्रे अजाशब्दो यौगिकः किमब्रह्मात्मकप्रकृतिपरः, उत ब्रह्मात्मकप्रकृतिपरः इति विचारः । अजाशब्दसृजमानाशब्दौ किमजायाः स्वातन्त्र्येण स्रष्टृत्वमवगमयतः, नेति; तैत्तिरीयके अजामेकामिति मन्त्रे प्रतिपन्नायाः किं ज्योतिरुपक्रमात्वमस्ति, नेति; किमजात्वज्योतिरुपक्रमात्वे विरुध्येते, नेति । यदा विरुध्येते, तदा तैत्तिरीयकमन्त्रसिद्धाया अजाया ज्योतिरुपक्रमात्वाभावेन तदैकार्थ्यात् अजांसृजमानामितिपदयोः स्वातन्त्र्येण स्रष्टृत्वावगमकत्वात् श्वेताश्वतरमन्त्रस्थाजाशब्दो ब्रह्मात्मकत्वशून्यप्रकृतिपरः । यदा न विरुध्येते, तदा तैत्तिरीयकमन्त्रप्रसिद्धाया अजाया ज्योतिरुपक्रमात्वेन तदैकार्थ्यात् अजांसृजमानामिति पदयोः स्वतन्त्रस्रष्टृत्वावगमकत्वाभावात् श्वेताश्वतरमन्त्रस्थोऽजाशब्दोऽपि ब्रह्मात्मकप्रधानपर इति । **अजामिति** । ब्रह्मात्मकत्वपक्षे अजात्वं न सम्भवति, तत्कार्यत्वाभ्युपगमादित्यर्थः । **स्वातन्त्र्येणेति** । **सृजमानामिति** कर्तरि शानच् । स्वतन्त्रः कर्ता । अतो न ब्रह्मपरतन्त्रत्वमित्यर्थः ।

**एवं प्राप्त** इति । अत्रापि, 'कापिलतन्त्रसिद्धप्रक्रिया निरस्यते' इत्युपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यत इति[1]मत्वा हेतुमाह **न जायत इतीति** । अथवा **न जायते इतीत्यादिना** हेतुपदं विवृण्वन् **चमसवदिति** सौत्रं पदं प्रतिज्ञापरं मन्यमानः तेन हेतुपदस्यान्वयं दर्शयति **चमसवदिति** । **विशेषाप्रतीतेरित्यन्तं** हेतुपदव्याख्यानम् । अवयवशक्त्याऽजात्वमात्रप्रतिपादनेन विशेषाप्रतीतेः चमसवद्भवति; वाक्यान्तरमन्तरेण विशेषतो निर्णेतुमशक्या भवतीत्यर्थः । तदेव विवृणोति **यथाऽर्वागिति** । अस्य

---

1 मत्वेति । अत्र भाष्ये पाठान्तरं तालस्थं भावप्रकाशिकायामपि द्रष्टव्यम् ।

ग्विलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन् मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः; यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषनिश्चयायोगात्। तत्र यथा, "इदं तच्छिरः; एष ह्यर्वाग्विलश्चमस ऊर्ध्वबुध्नः" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः—तथाऽत्राप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या। न चात्र तन्त्रसिद्धाजाग्रहण(णे)हेतवोऽर्थप्रकरणादयो दृश्यन्ते। न चास्याः स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते; बह्वीः प्रजाः सृजमानाम्" इति स्रष्टृत्वमात्रप्रतीतेः। अतोऽनेन मन्त्रेण नाब्रह्मात्मिकाऽजाऽभिधीयते॥

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके। १। ४। ९॥**

---

यथाशब्दस्य [1]**तथाऽत्रापी**ति भाष्येणान्वयः। चमसशब्दार्थं विशदयति **भक्षणसाधनत्वमात्र**मिति। चम्यतेऽनेनेति चमसशब्दव्युत्पत्तिरिति भावः। **मात्र**शब्देन विशेषव्यावृत्तिः। इतिशब्दो हेतुपरः। विशेषप्रतीत्यभावादित्यर्थः। विशेषप्रतीत्यभावे चमसः साधर्म्यदृष्टान्ततया व्याख्यातः। चमसवदित्यनेनार्थसिद्धं दृष्टान्तदार्ष्टान्तिकसाधारणाकारं हेतुं दृष्टान्तोपपादकत्वेन दर्शयति **यौगिकशब्दाना**मिति। साधारणमवयवार्थं बोधयतां यौगिकशब्दानामित्यभिप्रायः। तेनासाधारणावयवार्थबोधकबलभिदादिशब्दव्यावृत्तिः। **अर्थः**—वस्तुसामर्थ्यम्। **आदि**शब्दः स्ववाक्यस्थविशेषशब्दादिपरः। **विशेषनिश्चयायोगा**दित्यस्य पूर्ववाक्येनान्वयः। अवयवशक्तेः साधनमात्रप्रत्यायकत्वादर्थप्रकरणादिभिर्विना विशेषनिश्चयायोगात् चमसशब्देन यथा न चमसविशेषप्रतीतिरित्यर्थः। ननु. यथा चमसविशेषो वाक्यशेषावसेयः, तद्वत् अजाविशेषोऽपि हेत्वन्तरेण निश्चेतुं शक्यत इति शङ्कायां परपक्षे तथा निश्चयस्याशक्यतां दर्शयितुं स्वपक्षे विशेषनिश्चयप्रकारमाह **तत्र यथेदं तच्छिर** इति। **यथे**ति न श्रुतिपदम्। दृष्टान्ते दर्शितस्य न्यायस्य दार्ष्टान्तिकेऽप्यवर्जनीयत्वमाह—**तथा अत्रापी**ति। यथा 'अर्वाग्विलश्चमसः' इति मन्त्रे न चमसविशेषप्रतीतिः; तत्र विशेषनिश्चयश्च निश्चायकवाक्यान्तराधीनः—तथाऽत्रापि निश्चायकान्तरेणाजाविशेषनिश्चयः कार्य इत्यर्थः। ततः किमित्यत्राह **न चात्रे**ति। सृजमानामिति स्वातन्त्र्येण स्रष्टृत्वप्रतीतिर्विशेषनिश्चायिकेत्यत्राह **न चास्या** इति। **स्वातन्त्र्येण** ईश्वराधिष्ठितत्वमन्तरेणेत्यर्थः। **स्रष्टृत्वमात्रप्रतीते**रिति। स्वव्यापाराश्रयत्वलक्षणं स्वातन्त्र्यमेव प्रत्ययवाच्यम्; न त्वपरप्रेर्यत्वरूपमिति **मात्र**शब्दाभिप्रायः। रथो गच्छतीत्यत्र कर्तृप्रत्ययो हि स्वव्यापाराश्रयत्वरूपस्वातन्त्र्यं रथस्यावगमयति; न त्वपरप्रेर्यत्वम्। अपरप्रेर्यत्वलक्षणस्वातन्त्र्यप्रतीत्यभ्युपगमेऽपि तादृशस्वातन्त्र्यलक्षणं कर्तृत्वं किं प्रकृत्याश्रयम्, उताजाशब्दवाच्यप्रकृतिशरीरकब्रह्माश्रयमिति विशये प्रकृतिमात्राश्रयमिति निश्चायकाभावश्च **मात्र**शब्दाभिप्रेतः। यदि ब्रह्मात्मकत्वं प्रामाणिकं स्यात्, तदानीम् इह प्रतीयमानं स्वातन्त्र्यलक्षणकर्तृत्वं हि तद्गततया ब्रह्मात्मकत्वाविरोधि स्यात्॥

उत्तरसूत्रमवतारयति **ब्रह्मात्मके**ति। **ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ तुशब्दस्य**

---

[1] निश्चयायोगादित्यन्तस्य चमसवदिति सौत्रपदव्याख्यानरूपत्वात् पूर्वान्वयेऽपि न दोषः उपरि यथेति शब्दान्तरं तथाशब्दप्रतिसंबन्धि। तत्रयथेति श्रवणात्; यथाचेत्यश्रवणात्।

तुशब्दोऽवधारणार्थः । ज्योतिरुपक्रमैवैषाऽजा । ज्योतिः ब्रह्म; "तं देवा ज्योतिषां ज्योतिः", "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा—ब्रह्मकारणिकेत्यर्थः । तथा ह्यधीयत एके—हीति हेतौ । यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनः तैत्तिरीया अधीयते, "अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः" इति हृदयगुहाया-मुपास्यत्वेन संनिहितं ब्रह्माभिधाय, "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय, सर्वकारणीभूताऽजा तत उत्पन्नाऽभिधीयते, "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्त-भोगामजोऽन्यः" इति । सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाणेऽभिधीयमानत्वात् प्राणसमुद्रपर्वतादिवदेषाऽप्यजा बह्वीनां सरूपाणां प्रजानां स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमाना अन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽ-वगन्तव्येत्यर्थः । अतो वाक्यशेषात् चमसविशेषवत् शाखान्तरीयादेतत्सरूपात् प्रत्यभिज्ञायमा-नार्थात् वाक्यात् नियमिताऽजा ब्रह्मात्मिकेति निश्चीयते । इहापि प्रकरणोपक्रमे, "किं कारणं ब्रह्म" इत्यारभ्य, "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्" इति परब्रह्मशक्तिरूपाया अजाया अवगतेः, उपरिष्टाच्च, 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ..'... यो योनिं (?) योनिमधितिष्ठत्येकः" इति च तस्या एव प्रतीतेर्नास्मिन् मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥ ९ ॥ कथं तर्हि

---

पक्षव्यावर्तकत्वशङ्काव्युदासाय व्याचष्टे **तुशब्द** इति । इतरोक्तार्थव्यावृत्त्यर्थं श्रुतिप्रसिद्ध्यनुरोधेन व्याचष्टे **ज्योतिर्ब्रह्मे**ति । तदेव दर्शयति **तं देवा** इति । ब्रह्मकारणत्वपरतां प्रकरणे दर्शयति **अणोरणीया-मि**ति । न हि अजामेकामित्यस्मिन् मन्त्रे उत्पत्तिः प्रतीयत इत्यत्राह **सर्वस्ये**ति । यथा 'इडो यजति', 'बर्हिर्यजति', 'तनूनपातं यजति' इत्यादिष्वङ्गत्वाश्रवणेऽपि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि-प्रकरणस्थतया तदङ्गत्वं निश्चीयते—तद्वत् सृष्टिप्रकरणस्थत्वादुत्पत्तिः सिद्धेत्यर्थः । अस्मिन् मन्त्रे न सृष्टि-र्विवक्षिता; सृष्टिप्रकरणस्य पूर्वमेव विच्छेदात्; अत्र 'जहात्येनां भुक्तभोगामजोऽन्य' इत्युक्तस्य मुक्तस्योत्पत्त्यनुपपत्तेश्चेत्यत्राह **बह्वीना**मिति । न सृष्टिप्रकरणविच्छेद इत्यर्थः । 'यस्माज्जाता न परा नैव किञ्चनास' इत्युत्तरत्रापि सृष्ट्यनुवृत्तेरिति च अर्थसिद्धम् । **सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाण** इति ह्युक्तम् । मुक्तात्मकीर्तनमेतद्वि-शेषणत्वेन; न तु सृष्टिप्रकरणविच्छेदात्; यथा बद्धात्मकीर्तनमित्यभिप्रेत्याह **कर्मवश्येनात्मना भुज्यमानाऽन्येन विदुषाऽऽत्मना त्यज्यमाना चे**ति । एवं तन्त्रसिद्धाजात्वविरोधि ज्योतिरुपक्रमात्वं शाखान्तरे दर्शितम् । अथ सृजमानामिति पदप्रतीतस्वातन्त्र्यविरोधिब्रह्मात्मकत्वं स्वप्रकरणे दर्शयति **इहा**पीति । **शक्तिरूपायाः** अपृथक्सिद्धविशेषणरूपायाः । कार्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिः । **योनिम्** जगद्योनिभूतां प्रकृतिमित्यर्थः । **तस्या एव** ब्रह्मात्मिकाया एव । **स्वतन्त्रप्रकृतिप्रति-पत्तिगन्ध** इति । **न** केवलं शाखान्तरैकार्थ्यात्, स्वप्रकरणाच्च ब्रह्मात्मकत्वावगमादिति भावः ॥

उत्तरसूत्रशङ्कामाह **कथंतर्ही**ति । लोहितशुक्लकृष्णाकारत्वं हि कार्यावस्थायामुपपद्यते । तदानीं

ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम्, अजाया वा कथं ज्योतिरुपक्रमात्वमित्यत्राह—

**कल्पनोपदेशाच्च मध्वादिवदविरोधः । १ ४ १० ॥**

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः । अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते । कुतः ? कल्पनोपदेशात् । कल्पनं क्लृप्तिः; सृष्टिः । जगत्सृष्ट्युपदेशादित्यर्थः । यथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति कल्पनं सृष्टिः । अत्रापि, "अस्मान्मायी सृजते विश्वमेतत्' इति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात् सूक्ष्मावस्थात् कारणान्मायी सर्वेश्वरः सर्वं जगत् सृजतीत्यर्थः । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते । सा हि प्रलयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणावतिष्ठते; सृष्टिवेलायां तु उद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते । अतः कारणावस्थाऽजा, कार्यावस्था ज्योतिरुपक्रमेति न विरोधः । मध्वादिवत्—यथेश्वरेण आदित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्यावस्थायामृग्यजुस्सामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनं च न विरुध्यते । तदुक्तं मधुविद्यायाम्, 'असौ वा आदित्यो देवमधु" इत्यारभ्य, "अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता; एकल एव मध्ये स्थाता" इत्यन्तेन । एकलः एकस्वभावः । अतोऽनेन मन्त्रेण ब्रह्मात्मिकाऽजैवाभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम् ॥

---

ज्योतिरुपक्रमात्वाङ्गीकारे अजात्वानुपपत्तिः, अजात्वे ज्योतिरुपक्रमात्वानुपपत्तिरित्यर्थः । **कल्पनोपदेशाच्च मध्वादिवदविरोधः** ॥ **प्रसक्ते**ति । चस्त्वर्थ इत्यर्थः । **अविरोध**शब्दार्थमाह **अस्या** इति । अतस्मिंस्तद्भावारोपणपरत्वव्युदासाय **कल्पन**शब्दस्य सृष्टिवाचित्वं धातोः सृष्टिवाचित्वेन दर्शयति **कल्पनं क्लृप्तिरि**ति । क्लृप्तिशब्दं विशदयति **सृष्टिरि**ति । 'क्लृप्तशिखः' इत्यादिप्रयोगो लोकसिद्ध इति मत्वा श्रौतप्रयोगं दर्शयति **यथे**ति । "प्राकल्पयद्यो भुवनानि सप्त" इत्यादिस्मृतिप्रयोगश्च प्रसिद्धः । अतो ज्योतिःकल्पनशब्दौ वैदिकशब्दनिर्देशानुसारिणौ । तथानिर्देशश्च मुनिसमाधिः; 'सम्प्रसादादध्युपदेशात्', 'समानो ज्योतिषा' इत्यादिषु दर्शनात् । अजात्वज्योतिरुपक्रमात्वयोरविरोधसिद्धिं दर्शयति—**अनेने**ति । अवस्थाद्वयं विवृणोति **साहीनि** । **ब्रह्मतापन्ना** कारणावस्थब्रह्मतापन्ना ॥ ननु कथं प्रकृतेर्ब्रह्मतापत्तिः । न ह्यन्यद्द्रव्यं द्रव्यान्तरं भवति ॥ सत्यम् । नात्र केवलप्रकृतेर्ब्रह्मतापत्तिर्विवक्षिता; किन्तु प्रकृतिशरीरकब्रह्मणः कारणावस्थाप्राप्तिः । भाष्ये प्रकृत्युपस्थापकं सेति पदं हि ब्रह्मपर्यन्तम्; "कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाभिधीयते ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्" इति प्रकृत्यधिकरणे वक्ष्यमाणत्वात् । **कार्यावस्था ज्योतिरुपक्रमे**ति । कार्यावस्थाजाशरीरकं ब्रह्म कार्यम्; कारणावस्थाजाशरीरकं ब्रह्म कारणमित्यर्थः । **सूत्रखण्डं** व्याचष्टे **मध्विति** । उदयास्तमयमधुत्वकल्पनानि तदभावश्चादित्यस्यावस्थाद्वयेन यथोपपद्यन्ते, तथा अजात्वज्योतिरुपक्रमात्वे अवस्थाभेदेन प्रकृत्याख्यैकधर्मिण्यविरुद्धे इत्यर्थः । **एकस्य**—ईश्वरेणैकस्य; अविभक्तनामरूपस्येत्यर्थः ।

ज्योतिरुपक्रमेत्यादिसूत्रद्वयस्य परोक्तमर्थं निराचिकीर्षुस्तत्र प्रथमस्य सूत्रस्यार्थं दूषयति

अन्ये तु—अस्मिन् मन्त्रे 'तेजोबन्नलक्षणाऽजैकाऽभिधीयते' इति ब्रुवते । ते प्रष्टव्याः—किं तेजोबन्नान्येव तेजोबन्नात्मिकाऽजैका, उत तेजोबन्नरूपं ब्रह्मैव, किं वा तेजोबन्नकारणभूता काचिदिति । प्रथमे कल्पे तेजोबन्नानामनेकत्वात्, "अजामेकाम्" इति विरुध्यते । न च वाच्यम्-तेजोबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति ; त्रिवृत्करणेऽपि बहुत्वानपगमात् ; "इमास्तिस्रो देवताः", "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति प्रत्येकं त्रिवृत्करणोपदेशात् । द्वितीयः कल्पो विकल्प्यः—किं तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका, किं वा स्वरूपेणावस्थितमविकृतमिति । प्रथमः कल्पो बहुत्वानपायादेव निरस्तः । द्वितीयेऽपि, "लोहितशुक्लकृष्णाम्" इति विरुध्यते । स्वरूपेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते । तृतीये कल्पेऽपि, अजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणावस्था उपस्थापनीयेत्यास्थेयम् । ततो वरमजाशब्देन तेजोबन्नकारणावस्थायाः श्रुतिप्रसिद्धाया एवाभिधानम् ॥ यत् पुनः—अस्याः प्रकृतेरजाशब्देन

---

**अन्ये त्वि**ति । दूषयितुं विकल्पयति **किमि**ति । एकाजात्वेन परिकल्प्यमानं वस्तु किं तेजोबन्नान्येवेत्यर्थः । अजात्वैकत्वसिद्ध्यर्थं ब्रह्मकारणवादानुगुण्यार्थञ्च ब्रह्मानुबन्धित्वेन मध्यमं शिरो दर्शितम् । **तेजोबन्नरूपम्**—तेजोबन्नावस्थं ब्रह्म किमेकच्छागत्वेन कल्प्यत इत्यर्थः । **तेजोबन्नकारणभूता काचिदि**ति । तेजोबन्नवाचिशब्देन लक्षिता तत्कारणभूता काचिदेका अजात्वेन किं रूप्यत इत्यर्थः । प्रथमं शिरो दूषयति **प्रथमे** इति । एकत्वविरोधपरिहारमाशङ्क्याह **न च वाच्यमि**ति । कुत इत्यत्राह **त्रिवृत्करणेऽपी**ति । बहुत्वानपगममुपपादयति **इमा** इति । न समुदायैकत्वम् ; अपि तु समुदायत्रयमेवेत्यर्थः । द्वितीयं शिरो विकल्पयति **किमि**ति । तेजोबन्नरूपा ब्रह्मणो विकाराः किमजाशब्देनोच्यन्ते, उत स्वरूपमिति विकल्पग्रन्थार्थः । प्रथमे शिरस्यवस्थाबहुत्वादेकत्वविरोधमाह **प्रथम** इति । मध्यमे शिरसि द्वितीयकल्पं दूषयति **द्वितीयेऽपी**ति । ब्रह्मस्वरूपे लोहितशुक्लकृष्णत्वाभावात् श्रुत्यस्वारस्यमित्यर्थः । तेजोबन्नादिसर्वात्मकस्य ब्रह्मणः किं नोपपद्यत इत्यत्राह **स्वरूपेणे**ति । यद्वा सूत्रास्वारस्यमप्याह **स्वरूपेणे**ति । **ज्योतिरुपक्रमे**ति हि सौत्रं पदम् । **ज्योतिरुपक्रम**शब्दस्तेजोबन्नवाचीति हि तैर्व्याख्यातम् । न हि ब्रह्मस्वरूपं तेजोबन्नशब्दवाच्यम् । अतः सूत्रास्वारस्यमित्यर्थः । तेजोबन्नावस्थाविशिष्टं ब्रह्म अजाशब्दवाच्यमिति पक्षे किमवस्थाविशिष्टत्वं सद्वारकम्, अद्वारकं वा । अद्वारकत्वे लोहितशुक्लकृष्णत्वविरोधः, अरसमलोहितमिति श्रुतेः । सद्वारकत्वेऽस्मत्पक्ष एव परिगृहीतः स्यादिति विकल्पपरिहारयोः स्पष्टत्वान्न तत्कण्ठोक्तिः । प्रथमविकल्पितशिरस्त्रये तृतीयं शिरो दूषयति **तृतीय** इति । लोहितशुक्लकृष्णात्वाजात्वैकत्वसिद्ध्यर्थमयं पक्षः शङ्कितः । तत्र दूषणमुच्यते **अजाशब्देने**ति । तेजोबन्नानामवाचकस्याजाशब्दस्य तेजोबन्नपरत्वमारोप्य तेन तत्कारणस्य लक्षणयोपस्थापनादपि मुख्यवृत्त्या कारणप्रतिपादनपरत्वाश्रयणं युक्तमित्यर्थः । **कल्पनोपदेशा**दिति सूत्रस्य परोक्तमर्थं दूषयति **यत्पुनरस्या** इति । सर्वत्र रूढितोऽवयवशक्त्या वा प्रतिपाद्यमानमुख्यार्थपरिग्रहः स्वतः प्राप्तः । गौणार्थपरिग्रहस्तु मुख्यार्थानुपपत्त्या क्रियते । तत्रौचित्यातिशयलाभोऽनेकपदमुख्यार्थत्वसिद्धिश्च प्रयोजनम् । तत्र मुख्यार्थानुपपत्त्यभावः प्रदर्शितः; अजात्वज्योतिरुपक्रमात्वयोरवस्थाभेदेन अविरोधस्योक्तत्वात् । अतोऽत्रौचित्यलाभरूपप्रयोजनाभावरूपं

छागत्वपरिकल्पनमुपदिश्यत इति—तदप्यसङ्गतम्; निष्प्रयोजनत्वात्। यथा, "आत्मानं रथिनं विद्धि" इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते, यथा चाऽऽदित्ये वस्वादीनां भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते, तद्वदस्यां प्रकृतौ छागत्वपरिकल्पनं कोपयुज्यते? न केवलमुपयोगाभाव एव; विरोधश्च। कृत्स्नजगत्कारणभूतायाः स्वस्मिन् अनादिकालसंबद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूताया अचेतनायाःअत्यल्पप्रजासर्गकर-आगन्तुकसंगमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधन--स्वपरित्यागाहेतुभूत--स्वसंबन्धिपरित्याग-समर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव। "अजामेकाम्", अजो ह्येकः", 'अजोऽन्यः" इत्यत्राजशब्दस्य विरूपार्थपरिकल्पनं च न शोभनम्॥ सर्वत्र च्छागत्वं परिकल्प्यत इति चेत्, "जहात्येनां भुक्तभोगामजोऽन्यः" इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतः अनेन वाऽन्येन वा पुनरपि संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम्॥ १०॥

॥ इति चमसाधिकरणम्॥ २॥

---

दूषणमाह **निष्प्रयोजनत्वा**दिति। प्रयोजनाभावस्य दूषणत्वज्ञापनाय कल्पनस्य प्रयोजनसिद्ध्यर्थतां दर्शयति **यथाऽऽत्मान**मिति। विरोधं दर्शयति-**कृत्स्ने**ति। **एकरूपे**ति। दुग्धादिरेव प्रयोजनमित्यर्थः। **अचेतनाया** इत्यनेन स्वसम्बन्धिपरित्यागासामर्थ्यं सिद्धमिति तत्प्रत्यनीकाकारमाह—**स्वसंबन्धी**ति। परिमितकार्यकरत्वादिरत्र विरोध उक्तः। दूषणान्तरमाह **अजा**मिति। अर्थैकरूप्यं शङ्कते **सर्वत्रे**ति। तत्र विरोधान्तरमाह—**जहाती**ति। एवमथौचित्यलाभरूपप्रयोजनाभावो दर्शितः। सर्वत्र च्छागत्व-परिकल्पनशङ्कोपन्यासेनैवानेकपदान्तरमुख्यार्थत्वसिद्धिरूपप्रयोजनाभावश्च फलितः। एवं हेत्वभावात् प्रयोजनाभावाच्च छागत्वपरिकल्पनं व्युदस्तम्॥ ननु नार्थविरोधः; कार्यकारित्व-प्रयोजनसाधनत्व-चेतनसङ्गादिमात्रस्य विवक्षितत्वात्। न हि दृष्टान्तगतसर्वधर्माणां विवक्षानियमोऽस्ति। तथा सति सर्वत्र दृष्टान्तोपन्यासभङ्गप्रसङ्गात्। 'गौरनाद्यन्तवती', 'आत्मानं रथिनं विद्धि' इत्यादिषु च प्रकृत्या-देर्गोत्वादिपरिकल्पनं दृश्यते। तच्च सर्वथा साधर्म्यविवक्षायां न घटत इति॥ उच्यते। 'आत्मानं रथिनं विद्धि' इत्यत्र पृथगेव रूप्यरूपकवाचिपदश्रवणात् रूपकानङ्गीकारे रूपकवाचिपदवैयर्थ्यप्रसङ्गात्; येनाकारेण साधर्म्यं योग्यं प्राप्त्युपायतादिरूपम्, तदाकारमात्रं तत्र विवक्षितमिति निश्चितं प्रयुक्तपदवैयर्थ्यपरिहारार्थम्। अजामेकामिति वाक्ये तु रूप्यरूपकवाचिपदद्वयाश्रवणात् अर्थौचित्यं नावगम्यते। तेन गौणवृत्त्यनङ्गीकारेऽपि न वैयर्थ्यम्। 'गौरनाद्यन्तवती' इत्यत्र रूप्यवाचिपदाश्रवणात्, अजाशब्दवद् गोशब्दस्यावयवशक्त्या प्रकृत्युपस्थापनासामर्थ्याच्च गत्यभावाद् गौणी वृत्तिराश्रिता। अनाद्यन्तवती, सर्वकामदुघेत्याद्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते। अजाशब्दे तु न तथा गत्यन्तराभावः; उचितावयवार्थसंभवात्। उचितविशेषणं च रूढिसिद्धाजाव्यावर्तकं न श्रूयते। पुँल्लिङ्गाजशब्दयोश्चामुख्यत्वम्। 'बह्वीः प्रजाः' इत्यादिपदानां सङ्कोचश्च विफलः। अतः प्रयुक्तपदवैयर्थ्य-परिहारपदान्तरस्वारस्यार्थौचित्यसद्भावासद्भावरूपवैषम्यात् 'आत्मानं रथिनं विद्धि' इत्यादिवद्रूपणपरत्व-मयुक्तम्। कार्यकारित्वाद्यर्थमात्रविवक्षायामर्थविरोधाभावो य उक्तः—स चेन्मुख्ययैव वृत्त्या लभ्यते, तदा गौणवृत्तिपरिग्रहो निष्फलत्वादनुपपन्नः। एवं परोक्तस्य ज्योतिरुपक्रमेत्यादिसूत्रार्थस्य एकशब्दार्थ-,

संख्योपसंग्रहाधिकरणम् 1-4-3

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १ । ४ । ११ ॥**

वाजसनेयिनः समामनन्ति, "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" इति । किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः, उत नेति संदिह्यते । किं युक्तम् ? तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः ? पञ्चशब्दविशेषितात्

---

विरोध उक्तः; कल्पनोपदेशादिति सूत्रस्याजाशब्दास्वारस्यं दूषणतयोक्तम् । यद्यपि **ज्योतिरुपक्रमा**-शब्देन तेजःप्रमुखत्वं **कल्पन**शब्देनातस्मिंस्तद्भावारोपणञ्च परोक्तं सूत्राक्षरानुगुणमिव प्रतीयते—तथाप्यनुपपत्तिपराहतम् । अस्मदुक्तार्थस्तु वैदिकनिर्देशसमाधिना स्वरसः, उपपन्नश्चेति भिदा । चमसवद-विशेषादिति सूत्रं परस्यास्वरसम् ; चमसशब्दस्य यौगिकत्वाद्रूढार्थसदृशपरत्वाभावाच्च ॥

**न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च** ॥ अजाशब्दस्य स्वतन्त्रप्रकृत्युपस्थापकत्वे विशेषाभावात् वाक्यान्तरानुरोधेन प्रकृतेर्ब्रह्मात्मकत्वं साधितम् । तदत्रानुपपन्नम् ; परमात्मपरत्वे सङ्ख्याधिक्यात् परमात्मना विनाऽपि सङ्ख्यापूरणेनाब्रह्मात्मिका प्रकृतिरिति विशेषनिश्चयसम्भवादिति शङ्कया सङ्गतिः । विषयादिकमाह **वाजे**ति । पञ्चविंशतिसङ्ख्यान्वय-तत्त्वाधिक्यादिप्रतीतिजनकमिदं वाक्यम् । एवंजातीयकवाक्यानि सन्ति चेत् , तान्यपि विषयः । पञ्चविंशतिसङ्ख्यान्वयतत्त्वाधि-क्यप्रतीतिभ्यां संशयः । 'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रः किं कापिलतन्त्रसिद्धतत्त्वपरः, उत नेति । किं पञ्चपञ्चजनशब्देन पञ्चविंशतितत्त्वप्रतीतिरस्ति, नेति; किमाकाशस्य पृथङ्निर्देशोऽवान्तरसङ्ख्या-न्वयनिमित्तविरोधी, उत नेति ; किं वाक्यशेषेण पञ्चजनशब्दस्य प्राणादिविषयत्वनिश्चयः शक्यः, उत नेति च । यदा न विरोधी, यदा च निश्चयो न शक्यः—तदाऽवान्तरसङ्ख्यान्वयनिमित्तसंभवेन समासस्य समाहारविषयतया पञ्चपञ्चजनशब्देन पञ्च पञ्चकान्युच्यन्त इति पञ्चविंशतितत्त्वप्रतीतेरयं मन्त्रस्तन्त्रसिद्धतत्त्वप्रतिपादनपर इति पूर्वः पक्षः । यदा आकाशस्य पृथङ्निर्देशोऽवान्तरसङ्ख्यान्वयनि-मित्तविरोधी, वाक्यशेषेण च प्राणादिविषयत्वनिश्चयः शक्यः—तदाऽवान्तरसङ्ख्यान्वयनिमित्ताभावेन समासस्य संज्ञाविषयतया पञ्चपञ्चजनशब्देन पञ्च पदार्था उच्यन्त इति पञ्चविंशतितत्त्वाप्रतीतेरयं मन्त्रो न तन्त्रसिद्धतत्त्वप्रतिपादनपर इति राद्धान्तः । यद्यपि, 'स्युः पुमांसः पञ्चजनाः' इति मनुष्यनामतया पठितस्य, समुद्रान्तर्वर्तिनि च दानवविशेषे प्रयुक्तस्य पञ्चजनशब्दस्य सङ्ख्यापूर्वसमासत्वं नास्ति । सप्तर्षीणामेकैकस्य सप्तस्वन्यतमभाववत् मनुष्याणां दानवविशेषस्य च पञ्चस्वन्यतमत्वाभावेन सङ्ख्यान्वय-प्रतीत्यनुपपत्तेः समाससामर्थ्याभावः—तथाऽप्यस्य तु पञ्चजनशब्दस्य सङ्ख्याप्रतीतिस्वारस्यानुरोधे संभवति तत्परित्यागायोगात् सङ्ख्यापूर्वसमासत्वं युक्तमित्यभिप्रेत्याह **पञ्चशब्दविशेषितादि**ति ॥ ननु कथमिदमवसीयते—पञ्चजना इत्येकं पदम् ; न तु पञ्च पञ्च जना इतीति । तदा हि दशत्वमापद्येत । यदा च समस्तः पञ्चजनशब्दः—तदाऽपि कथं तन्त्रसिद्धतत्त्वप्रतिपत्तिः ॥ पञ्चजनशब्देन पञ्चसङ्ख्यतया प्रतिपन्नार्थस्य पुनः पञ्चतया विशेषणे पञ्चविंशतितत्त्वप्रतिपत्तिरिति चेन्न—पुनरुक्ति-प्रसङ्गात् ॥ विशिष्टस्य विशेषणाददोष इति चेत्—किं विशेष्यस्य, उत विशेषणस्य,

**पञ्चजनशब्दात् पञ्चविंशतितत्त्वप्रतीतेः। एतदुक्तं भवति—"पञ्चजनाः" इति समासः समाहारविषयः। पञ्चानां जनानां समूहाः पञ्चजनाः; पञ्चपूल्य इतिवत्। पञ्चजना इति लिङ्गव्यत्ययः छान्दसः। ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते; यथा पञ्च पञ्चपूल्य इति। अतः "पञ्च पञ्चजनाः" इति पञ्चविंशतिपदार्थावगतौ, ते कतमे इत्यपेक्षायां मोक्षाधिकारात् मुमुक्षुभिः ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति हि कापिलानां प्रसिद्धिः। अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपरः—**

**इति प्राप्ते प्रचक्ष्महे—न सङ्ख्योपसंग्रहादपि—इति। "पञ्चजनाः" इति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः। कुतः? नानाभावात्—एषां पञ्चसङ्ख्याविशेषि-**

---

आहोस्विदुभयस्य। न तावत् विशेष्यस्य, तत्र पञ्चत्वसङ्ख्यान्वयस्य शब्दान्तरसिद्धतया पुनरुक्तत्वात्; सङ्ख्याभ्यासेऽभिमते दशसङ्ख्याप्रतीतेश्च। नापि विशेषणस्य; विशेष्यपर्यन्तशब्दोपस्थापितस्य विशेषणस्य पुनस्तत्पदनिर्दिष्टजातीयविशेषणान्वयायोगात्। न हि गौर्गौरिति गोत्वं गोत्वेन विशेष्यम्। न चोभयस्य; अंशे पौनरुक्त्यात् अंशे च सङ्ख्यान्वयायोगात (ग्यत्वात्)। न च द्वे शते त्रीणि शतानीतिवत् विशेष्टुं युक्तम्, अवान्तरसङ्ख्यानिवेशनिमित्तैकोपाध्यभावेन समूहैक्यासिद्धेः। एकग्रामस्थित्याद्युपाधिना हि शतसङ्ख्यपुरुषसमूहैक्यम्। तस्मिंश्च सति ह्येकत्वद्वित्वादिना पुनर्विशेषणसंभवः। अन्यथा बहूनामेकत्वद्वित्वाद्यभावात् (संभवात्)। अतो न पञ्चविंशत्यर्थसिद्धिः। सिद्धावपि न तन्त्रोक्तार्थत्वनिश्चयः, निश्चायकाभावादित्याशङ्कायामाह **एतदुक्तं भवतीति**। **समासः समाहारविषय** इति। 'पञ्चानां त्वा पञ्चजनानाम्' इत्यत्र पञ्चजनशब्दस्य समस्ततयैकपद्यदर्शनादिहाप्यौचित्यतस्तत्प्रतिपत्तेः, द्वितीयपञ्चशब्दसमभिव्याहारबलेन इतरपञ्चशब्दस्य सङ्ख्यापरत्वप्रतीतेः समाहारसमासत्वं स्वीक्रियत इति भावः। तत्फलमाह **पञ्चानामिति**। **छान्दस इति**। त्रिभुवनादिशब्दवत् स्त्रीलिङ्गस्मृतेरपवादाभावात् छान्दसत्वमिति भावः। भूतत्वज्ञानेन्द्रियत्वादिकमवान्तरसङ्ख्यानिवेशनिमित्तमस्तीत्यभिप्रेतम्। तद्धि स्फुटीभविष्यति। एवं समूहसिद्धौ पञ्चतया विशेषणोपपत्तिमाह **ते चेति**। एवं पञ्चविंशतिसङ्ख्यासिद्धावस्य मन्त्रस्य मोक्षाधिकारात् साङ्ख्यतत्त्वपरत्वसिद्धिमाह **ते कतम** इति। आकाशेन, "यस्मिन्" इति निर्दिष्टेनात्मना च सप्तविंशतितत्त्वप्रतीतिरपि न विरुद्धा; सत्त्वरजस्तमसां पृथग्द्रव्यत्वाभ्युपगमात्। आत्माकाशाभ्यां विना पञ्चविंशतिसङ्ख्यासिद्धेः। गुणत्रयमहदहङ्काराः पञ्च, वायुतेजोजलपृथिवीघ्राणाः (णानि?) पञ्च, तन्मात्राणि पञ्च, जिह्वादिज्ञानेन्द्रियाणि चत्वारि मन इति पञ्च, कर्मेन्द्रियाणि पञ्च इति पञ्चविंशतिसङ्ख्यान्वयसिद्धिरिति। यद्वा आत्मनः स्वस्मिन्नवस्थितत्वात् आकाशस्याऽऽदरेण भूयःकीर्तनादविरोध इति। पञ्चविंशतिपदार्थास्तदन्तर्भूते आत्मनि प्रतिष्ठिताः, किमपरैः? तदन्तर्गत आकाशोऽपि तस्मिन् प्रतिष्ठित इत्यादरातिशयादुक्तिर्हि संभवति।

राद्धान्तं प्रारभते **न सङ्ख्येति**। **नानाभावादिति**। **नानाभावः**—पृथक्त्वम् अन्यत्वं विवक्षितम्; न तु बहुत्वम्। 'विना नाना हिरुक् पृथक्' इति नैघण्टुकाः। तन्त्रसिद्धतत्त्वेभ्यः पृथग्भावो-

तानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात्—"यस्मिन् पञ्चजना आकाशश्च प्रतिष्ठितः" इति एतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते । "तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते । अतस्तेभ्यः पृथग्भूताः पञ्चजना इति न तन्त्रसिद्धा एते । अतिरेकाच्च । तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति ; यच्छब्दनिर्दिष्ट आत्मा आकाशश्चात्रातिरिच्येते । अतः "तं षड्विंशकमित्याहुः सप्तविंशमथापरे" इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोऽत्राभिधीयते ॥ 'न सङ्ख्योपसंग्रहादपि' इति अपिशब्दस्य, "पञ्च पञ्चजनाः" इत्यत्र पञ्चविंशतितत्त्वप्रतिपत्तिरेव न संभवतीत्यभिप्रायः । कथम् ? पञ्चभिरारब्धसमूहपञ्चकासंभवात् । न हि तन्त्रसिद्धतत्त्वेषु पञ्चसुपञ्चसु अनुगतं तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति ; न च वाच्यम्—पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च महाभूतानि, पञ्च तन्मात्राणि, अवशिष्टानि पञ्च इत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येव—इति ; आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः । अतः, "पञ्चजनाः" इत्ययं समासो न समाहारविषयः ; अयं तु, "दिक्सङ्ख्ये संज्ञायाम्" इति संज्ञाविषयः । अन्यथा पञ्चजनाः इति लिङ्गव्यत्ययश्च । पञ्चजना नाम केचित् सन्ति ; ते च

---

ऽन्यत्वं ब्रह्मात्मकत्वम् । यस्मिन्निति सप्तम्यर्थमभिप्रेत्याह **यच्छब्दनिर्दिष्टब्रह्माश्रयतयेति** । यच्छब्दनिर्दिष्टस्य ब्रह्मत्वमुपपादयति **तमेवमि**ति । नानाभावो व्याख्यातः ; अथातिरेकं व्याचष्टे **तन्त्रेति** । **अतिरेकः**—सङ्ख्याधिक्यम् । **अतस्तं षड्विंशक**मिति । कालस्य प्रकृतिविकाराणां विशेषणतयाऽन्तर्भावात् षड्विंशकत्वम् ; कालस्य स्वतन्त्रवस्तुत्वाभिप्रायेण सप्तविंशत्वमित्यर्थः । साङ्ख्यप्रसिद्धादपि श्रुतिप्रसिद्धं ग्राह्यम् अन्तरङ्गत्वादिति भाववानाह **श्रुतिप्रसिद्धेति** । **अपिशब्दाभि**प्रेतमर्थमाह **न सङ्ख्ये**त्यादिना । **पञ्चभिरारब्धसमूहपञ्चकासंभवा**दिति । अनेन पञ्चस्वनुगतोपाध्यभावादित्युक्तं भवति । एकोपाधिगृहीतत्वं हि समूहत्वम् । पञ्चस्वनुगतान् उपाधीन् आशङ्क्याह **न च वाच्यमि**ति । आकाशस्य पृथक्करणात् घ्राणपञ्चमेषु, वाय्वादिषु, मनःपञ्चमेषु, रसनादिषु, गुणत्रयमहदहङ्कारेषु चानुगतोपाध्यभावादित्यर्थः । **भूतसमूहासिद्धे**रित्युपलक्षणम् ; सत्त्वरजस्तमसां गुणत्वेन श्रुतिस्मृतिप्रसिद्धानां द्रव्यत्वाभावादात्माकाशाभ्यां सप्तविंशतित्व(तत्त्व)प्रतीतिरपि परस्यानुपपन्ना । किञ्च, "सात्त्विको राजसश्चैव तामसश्च त्रिधा (श्चेतियो) महान् । त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत" इति महदहङ्कारयोश्च त्रिविधत्वावगमादेकत्रिंशत्सङ्ख्यत्वं तत्त्वानां प्रसजेत् । अतश्चैतन्मन्त्रप्रतिपन्नतत्त्वसङ्ख्याविरोधः । अतः सत्त्वरजस्तमसां द्रव्यतया बहुत्वेन निर्वाहोऽनुपपन्नः । यस्मिन्निति निर्देशस्य स्वे महिम्नीतिवत् निर्वाहोऽप्यनुपपन्नः ; सप्तम्यन्तस्ववाचिपदाश्रवणेन स्वप्रतिष्ठितत्वकल्पनायोगात् । आकाशस्यादरातिशयात् पृथगुक्तिरित्यप्ययुक्तम् ; ततोऽपि तत्कारणतत्त्वानां वैपुल्ये सति तदनादरेणाकाशस्य पृथगुक्त्यनुपपत्तेः । साक्षान्निर्वाहमाह **अयंत्विति** । संज्ञाविषयत्वोपपादनाय समाहारविषयत्वे शाब्दं दूषणमाह **अन्यथेति** । लिङ्गव्यत्ययश्च क्लिष्ट इत्यर्थः । अर्थदूषणं हि समूहासिद्धिलक्षणमुक्तम् । पञ्चजनशब्दस्य तन्त्रसिद्धार्थविषयत्वे व्युदस्ते अर्थान्तरसद्भावमाह **पञ्चजना नामेति** । पञ्चशब्दस्य च तेष्वर्थवत्त्वमाह **ते चेति** । ननु संज्ञात्वेऽप्यजहदवयवार्थैव पञ्चजनशब्दवृत्तिः ; अन्यथा निरर्थकतया

पञ्चसङ्ख्यया विशेष्यन्ते, पञ्च पञ्चजनाः इति सप्त सप्तर्षय इतिवत् ॥

के पुनस्ते पञ्चजनाः इत्यत आह—

**प्राणादयो वाक्यशेषात् । १ । ४ । १२ ॥**

"प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति वाक्यशेषाद्ब्रह्माश्रयाः प्राणादय एव पञ्चजनाः इति विज्ञायन्ते ॥ २१ ॥

---

सङ्ख्यावाचित्वाभावेन समाससामर्थ्याभावात् । न हि निरर्थकशब्दस्य समाससामर्थ्यम् । ततश्च संख्याविशिष्टार्थप्रतिपत्तौ पुनश्च सङ्ख्यया विशेषणमनुपपन्नमिति शङ्कां निराचिकीर्षुराह **सप्त सप्तर्षय इतिवदिति**। "सप्त सप्तर्षयोऽमलाः" इति **श्रीमद्वैष्णवपुराण**प्रयोगोऽभिप्रेतः। अत्रायमभिसन्धिः--संज्ञिपद-प्रतिपन्ना सङ्ख्या शाखावदुपलक्षणभूता संज्ञिप्रतिपत्त्यर्था ; न तु संज्ञिनि ज्ञाप्ये विशेषणतयाऽन्तर्भूता । अतो यथा 'गच्छतीति गौः' इति व्युत्पत्तावपि गमनस्य तटस्थत्वात् तात्पर्याविषयतया वाक्यार्था-न्वयित्वाभावेन गौर्गच्छति, गौस्तिष्ठतीत्यत्र न पुनरुक्तिर्व्याघातो वा । तटस्थस्यास्य वाक्यार्थान्वये अविवक्षिते तत्प्रतिपादनस्याऽऽकाङ्क्षितत्वान्न गच्छतीति पुनरुक्तिः; अवयवोपस्थापितस्य गमनस्या-विवक्षितत्वान्न तिष्ठतीति व्याघातः । एवं संज्ञिपदप्रतिपन्नसङ्ख्याया व्युत्पत्तिसमये तटस्थत्वेनाव-गतायास्तात्पर्याविषयत्वात् पुनर्वाक्यार्थान्वयित्वज्ञापनाय पञ्चशब्देन सङ्ख्याया विशेषणत्वज्ञापनं युक्तम्। पदद्वयस्य सामर्थ्यं चेदमेव, यत् विग्रहवाक्येऽर्थाभिधानशक्तिः। अतः समास उपपन्नः। अतोऽर्थस्याविवक्षितत्वात् पुनस्तया सङ्ख्यया विशेषणं सफलमिति। **अन्यैस्तु नानाभावादिति** पदमेकीकारोपाध्यभावात् समूहासिद्धिपरं व्याख्यातम्—तदानीं शब्दस्वारस्याभावः स्फुटतरः । अपि-शब्दवैयर्थ्यं च स्यात् । अपिशब्दो हि पञ्चविंशतित्व(तत्त्व)प्रतिपत्त्यभ्युपगमेन दूषणोक्तिं द्योतयति । अतः पञ्चभिरारब्धसमूहपञ्चकासम्भवं पञ्चविंशतितत्त्वाप्रतिपत्तिहेतुमभिप्रेत्य पुनः—तदभ्युपगमेऽपि तन्त्रप्रसिद्धतत्त्वपरत्वं यथा व्युदस्तं भवति, तथा भाष्ये दर्शितैव योजना युक्ता, शब्दानुरोधिनी च ॥

उत्तरसूत्रस्याकाङ्क्षां दर्शयति **के पुन**रिति सङ्ख्यापूर्वसमासत्वमयुक्तम् ; अस्मिन् वाक्ये सङ्ख्येय-विशेषाप्रतिपत्तेरित्यर्थः ॥ **प्राणादयो वाक्यशेषात्** ॥ ननु किमनेन सूत्रेण ; **कर्ममीमांसायाम्**, "सन्दिग्धे तु वाक्यशेषात्" इति वाक्यशेषात् सन्देहनिरासस्य कर्तव्यत्वं हि निर्णीतम् । शास्त्रैक्यञ्चाभिमतम् । अत एव हि स्मृत्यधिकरणादिषु कर्मविचारोक्तन्यायैः कृतकरत्वमाशङ्क्य भाष्ये परिह्रियत इति ॥ नैवम् । वाक्यशेषात् सन्देहव्युदासः कार्य इत्येतावत्युपजीव्येऽपि, वाक्यशेषयोरेव निर्णीतार्थत्वानिर्णीतार्थत्वरूपवैषम्यात् । "तेजो वै घृतम्" इति वाक्यस्य घृतसमर्पकत्वे हि न सन्देहः । इह तु अनिन्द्रियवाचिप्राणान्नशब्दसमभिव्याहारात् वाक्यशेषस्येन्द्रियपरत्वे संदेहानपगमात्, प्राणादिषु पञ्चसङ्ख्यानिवेशनिमित्तैकोपाध्यभावात् प्राणादीनामेव पञ्चजनशब्दवाच्यत्वानुपपत्तेः इन्द्रियत्वरूपैकोपाधिसिद्ध्युपपादनेन वाक्यशेषार्थनिर्णयाय सूत्रप्रणयनं प्रयोजनवत् । संदेहव्युदास-कश्चात्राभ्यधिकायन्यायोऽभिप्रेतः । प्राणान्नशब्दौ द्वौ ; चक्षुश्श्रोत्रमनःशब्दास्त्रयः । अतस्तदनुगुणतया प्राणान्नशब्दयोरपीन्द्रियपरत्वात् प्राणादयः पदार्था इन्द्रियाणीति त एव पञ्चजना इत्यर्थः ॥

अथ स्यात्—काण्वानां माध्यन्दिनानां च, "यस्मिन् पञ्च पञ्चजनाः" इत्ययं मन्त्रः समानः। "प्राणस्य प्राणम्" इत्यादिवाक्यशेषे काण्वानाम् अन्नस्य पाठो न विद्यते; तेषां पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तुम्—इति ॥ अत्रोत्तरम्—

ज्योतिषैकेषामसत्यन्ने । १ । ४ । १३ ॥

एकेषां काण्वानां पाठे असति अन्ने ज्योतिषा पञ्चजनाः इन्द्रियाणीति ज्ञायन्ते । तेषां वाक्यशेषः प्रदर्शनार्थः । एतदुक्तं भवति—"यस्मिन् पञ्च पञ्चजनाः" इत्यस्मात् पूर्वस्मिन् मन्त्रे,

---

अनन्तरसूत्रस्य शङ्कामाह **अथ स्यादिति । पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तु**मिति । काण्वानामन्नपाठवैकल्येन प्राणादिषु पञ्चसङ्ख्यानिवेशानुपपत्तेः पञ्चजनत्वमयुक्तमिति भावः ॥ ननु सर्वशाखाप्रत्ययन्यायेन माध्यन्दिनपाठस्य काण्वपाठेऽप्युपजीव्यत्वात् पञ्चसङ्ख्योपपत्तेर्न सूत्रान्तरापेक्षा ॥ सत्यम् । 'मा भूच्छाखान्तरीयं वाक्यम्' इति कृत्वा स्वप्रकरणेनैव प्राणादीनां पञ्चसङ्ख्योपपत्त्या पञ्चजनत्वसिद्धिप्रतिपादनार्थं सूत्रम् । अग्रचप्रायन्यायतिरस्कारकानुपपत्त्यन्तरशङ्कापरिहारश्चार्थात् सिध्यति । सर्वशाखाप्रत्ययन्यायेन अनुक्तस्यान्नपाठस्यान्यतो ग्रहणेऽपि कैश्चिद्धेतुभिः प्राणादीनामिन्द्रियत्वनिश्चयदौःस्थ्येन पञ्चसङ्ख्यानिवेशनिमित्ताभावात् पञ्चजनत्वमनुपपन्नमिति शङ्काऽवतिष्ठते । प्राणादीनामिन्द्रियत्वे हि प्राणान्नशब्दयोरस्वारस्यद्वयं स्यात् । प्राणशब्दश्चोपक्रमस्थो न भञ्जनीयः अन्नशब्दस्य तन्त्रेणार्थद्वयपरत्वं च क्लिष्टम् । अतोऽग्रचप्रायन्यायस्यानेकहेत्वभिभूतस्याकिञ्चित्करतया प्राणादीनामिन्द्रियत्वमशक्यनिश्चयम् । अतः काण्वपाठेऽपि माध्यन्दिनाधीतान्नपाठोपजीवनमनपेक्षितं स्यात्; प्राणादीनामिन्द्रियत्वानिश्चयात् । तन्निश्चये सति ह्यनुक्तेन्द्रियग्रहणापेक्षा । एवमिन्द्रियत्वानिश्चयेन पञ्चसङ्ख्यानिवेशनिमित्तैकोपाध्यभावात् क्वचिन्न्यूनतया च पञ्चसङ्ख्यानिवेशायोगात् न प्राणादीनां पञ्चजनत्वम् इति शङ्कापरिहारार्थं सूत्रम् ॥ नन्विन्द्रियत्वानिश्चयहेतवः शङ्काग्रन्थेऽनुक्ताः ॥ सत्यम् । उत्तरत्र परिहारादिहाभिप्रेतत्वमवगम्यते; यथाऽन्तरादित्याद्यधिकरणे सिद्धान्ते परिहारदर्शनात् पूर्वपक्षेऽप्यभिप्रेतत्वावगमः ॥

**ज्योतिषैकेषामसत्यन्ने ॥ ज्योतिषा** षष्ठ्यन्तज्योतिश्शब्देनेत्यर्थः । सूत्रेऽपि **ज्योतिश्शब्दः** स्वरूपार्थः । श्रुतिवाक्यस्वारस्यसिद्ध्यौपयिकत्वात् सूत्रस्थज्योतिश्शब्दास्वारस्यं सोढव्यमिति भावः । **परैर्हि**, 'तं देवा ज्योतिषां ज्योतिः' इति द्वितीयान्तज्योतिश्शब्दनिर्दिष्टब्रह्मणा पञ्चसङ्ख्यासिद्धिरुक्ता । तदानीमेकस्य मन्त्रस्य शाखाद्वयगतस्य एकार्थत्वप्रत्यभिज्ञानभङ्गेन ब्रह्मपञ्चमतयाऽन्नपञ्चमतया च पञ्चजनशब्दनिर्वाहास्वारस्यमवर्जनीयं स्यात् । किञ्च यस्मिन्नित्याधारतया ब्रह्मणो निर्दिष्टत्वेन, प्राणादिषु पञ्चमस्यापि प्राणादिचतुष्टयवत् ब्रह्मव्यतिरिक्तत्वप्रतीतेश्च ब्रह्मणः पञ्चमत्वमयुक्तम् ॥ 'स्वे महिम्नि प्रतिष्ठितः' इतिवन्निर्वाह इति चेन्न—सप्तमीप्रतिष्ठितशब्दयोर्मुख्यार्थे संभवत्यमुख्यार्थस्वीकारायोगात् । अतः पञ्चजनशब्द-सप्तमीविभक्ति-प्रतिष्ठितशब्दानामर्थवैरूप्यास्वारस्यप्रसङ्गात् ज्योतिःपञ्चमत्वपरत्वमनुपपन्नमिति मन्वानेन भगवता भाष्यकारेण षष्ठ्यन्तज्योतिश्शब्दस्वरूपपरतया **ज्योतिषेति** पदं व्याख्यातम् । इन्द्रियाणीति ज्ञायन्ते चेत्, कथं वाक्यशेषे चतुष्टयकीर्तनमित्यत्राह **तेषामिति** । ज्योतिश्शब्दस्य कोऽर्थः? तेनेन्द्रियाणीति कथं ज्ञायन्ते? ततः किमन्नपाठवैकल्यचोद्यस्येत्यत्राह **एतदुक्तमिति** । **ब्रह्माधीन-**

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषां ज्योतिष्ट्वेन ब्रह्माधीनस्वकार्याणि कानिचित् ज्योतींषि प्रतिपन्नानि; तानि च, विषयाणां प्रकाशकानीन्द्रियाणीति, "यस्मिन् पञ्च पञ्चजनाः" इत्यनिर्धारितविशेषनिर्देशेनावगम्यन्ते—इति। प्राणस्येति प्राणशब्देन स्पर्शनेन्द्रियं गृह्यते, वायुसंबन्धित्वात् स्पर्शनेन्द्रियस्य । मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् । चक्षुष इति चक्षुरिन्द्रियम्; श्रोत्रस्येति श्रोत्रेन्द्रियम्; अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम्; अन्नशब्दोदितपृथिवीसंबन्धित्वाद् घ्राणेन्द्रियमनेन गृह्यते; अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते;

---

**स्वकार्याणी**त्यनेन, प्राणस्यप्राण इत्यादेरर्थ उक्तः। पवित्राणां पवित्रमितिवदिति भावः। **ज्योतींषी**त्यनेन प्रकाशकत्वमभिप्रेतम्। ततश्च कर्मेन्द्रियादिव्यावृत्तिसिद्धिः; तेषां प्रकाशकत्वाभावात्। **कानिचिदि**ति। आदित्यादिज्योतींषि न वेति संशये विशेषनिर्धारणाकांक्षा तिष्ठतीति भावः। ततः किमित्यत्राह—**तानि चे**ति। **अनिर्धारितविशेषनिर्देशेने**ति सङ्ख्येयविशेषोपस्थापकवाक्यान्तरसाकांक्षत्वं द्योतितम्। ततश्च तत्रश्रुतपञ्चसङ्ख्याविशेषितत्वात् पञ्चसङ्ख्याकज्योतिरन्तरप्रसिद्ध्यभावाच्च परिशेषेणेन्द्रियत्वावगमः। एवं वाक्यशेषस्याप्युपक्रमभूतेन परस्परसाकांक्षेण मन्त्रद्वयेनेन्द्रियाणां प्रतिपादितत्वात्, षष्ठ्यन्तज्योतिश्शब्दोक्तानां तेषां 'चक्षुषः' 'श्रोत्रस्य' 'मनसः' इति षष्ठ्यन्तैः पदैः प्रत्यभिज्ञायमानत्वाच्च वाक्यशेषस्येन्द्रियपरत्वमभिप्रेत्य, **प्राण**शब्दं व्याचष्टे **प्राणस्ये**तीति। **वायुसंबन्धित्वात्**—वाय्वाप्यायितत्वात्। प्रसिद्धः प्राणः कस्मान्न न गृह्यत इत्यत्राह—**मुख्यप्राणस्य ज्योतिश्शब्देनप्रदर्शनायोगा**दिति। **ज्योतिश्शब्देन**। ज्योतिषांज्योतिरित्यत्र षष्ठ्यन्तज्योतिश्शब्देनेत्यर्थः। अनेन मुख्यान्नस्य च ज्योतिश्शब्देन प्रदर्शनायोगो विवक्षितः॥ स्पष्टार्थानामपि चक्षुश्श्रोत्रादिपदानां व्याख्यानं किमर्थम्॥ षष्ठ्यन्तज्योतिश्शब्दाभिहितानामर्थानां षष्ठ्यन्तपदैरेकैकश उच्यमानत्वज्ञापनार्थम्। तेन हि पूर्वसूत्राभिप्रेतस्याग्रयप्रायन्यायस्य हेत्वन्तराभिभूतस्य पूर्वमन्त्रद्वयसाहचर्योत्तम्भितत्वेन इदानीं प्राबल्यं ज्ञायते। एवञ्च सति प्राणशब्दस्य उपक्रमस्थत्वमकिञ्चित्करम्; तस्याप्युपक्रमभूतमन्त्रद्वयप्राबल्यात्। अतो न प्राणान्नशब्दमुख्यार्थानुगुणमितरपदानि व्याख्येयानि; पदत्रयस्वारस्यानुगुणं पदद्वयस्य व्याख्येयत्वात्। न ह्यनेकपदस्वारस्यभङ्ग उचित इत्यभिप्रायेण चक्षुःश्रोत्रमनांसि त्रीण्यपि स्वशब्देनैव व्याख्यातानि। एवमुपक्रमैकार्थ्यात् प्राणादीनामिन्द्रियत्वे निश्चिते सति अनुक्तेन्द्रियस्वीकारस्यापेक्षितत्वात् सर्वशाखाप्रत्ययन्यायेन काण्वपाठेऽप्यन्नपाठः सिद्ध इति उभयसाधारणमन्नशब्दं व्याचष्टे **अन्नस्ये**ति। ननु 'यस्मिन्' इत्यादिमन्त्रे पञ्चसङ्ख्यावगमाद्धि ज्योतिषामिन्द्रियत्वमध्यवसितम्। अतो वाक्यशेषस्येन्द्रियपरत्वनिश्चयः उपक्रममन्त्रसापेक्षः, मन्त्रश्च विशेषकीर्तनाय वाक्यशेषसापेक्ष इत्यन्योन्याश्रय इति॥ नैवम्; उपक्रमस्थमन्त्रद्वयस्येन्द्रियपरत्वनिश्चये वाक्यशेषानाकाङ्क्षत्वात्। वाक्यशेषस्येन्द्रियपरत्वनिश्चय एव ह्युपक्रमसाकाङ्क्षः। एवमुपक्रमादेवेन्द्रियत्वे अवगते प्रत्येककीर्तनं वाक्यशेषस्थमिति न तावताऽन्योन्याश्रय इति।(?)अन्नशब्दं व्याचष्टे **अन्नस्ये**ति(?)। अन्नशब्दस्य घ्राणरसनोपस्थापकत्वं कथमित्यपेक्षायाम्, अन्नशब्दस्य घ्राणवाचित्वं दर्शयति **अन्नशब्दोदिते**ति। **पृथिवीसंबन्धित्वात्**। पृथिव्याप्यायितत्वाल्लक्षणयेत्यर्थः। रसनावाचित्वमुपपादयति **अद्यत** इति। लक्षणया बोधकत्वं दर्शयितुमन्नशब्दवाच्यभोग्यवस्तुविनियोगे करणतया संबन्धः प्रदर्श्यते **अद्यतेऽनेने**ति। **अद्यतेऽनेने**त्येवंरूपसंबन्धा**दन्नमिति रसनेन्द्रियं गृह्यते**—अन्नशब्देन

**मनस इति मनः । घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम् । प्रकाशकानि मनः-पर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि । तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम् । तदेवम्, "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाणि आकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः । अतः सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे, तदभावे वा न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरिति स्थितम् (सिद्धम्) ॥ इति सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥**

---

रसनेन्द्रियं लक्ष्यत इत्यर्थः । अनेन घ्राणस्याऽऽप्याय्यतया सम्बन्धः; तद्विनियोगकरणतया रसनायाः । अतोऽन्नसंबन्धि वस्तु लक्षयताऽन्नशब्देन घ्राणरसनयोरेकव्यापारेण लक्षणा संभवतीति भावः । न तर्हि पञ्चत्वसिद्धिः, मनसः षष्ठत्वादित्यत्राह **घ्राणरसनयोरि**ति । **पञ्चत्वमप्यविरुद्ध**मिति । पञ्चत्वं न निर्देश्यापेक्षया ; किन्तु निर्देशापेक्षयेत्यर्थः । तन्त्रेणोपादानकल्पकं किमित्यत्राह **प्रकाशकानी**ति । प्रकाशकत्वम्, पञ्चसङ्ख्याविशिष्टत्वम्, मनःपर्यन्तमिन्द्रियाणामुक्तत्वेन पारिशेष्यञ्च घ्राणरसनयोस्तन्त्रेणोपादानकल्पकम् । घ्राणरसनसमुदायगतमेकत्वं पञ्चजनविशेषणभूतायाः पञ्चसङ्ख्याया अवान्तरसङ्ख्यात्वेन विवक्षितमित्यर्थः । अवयवगतद्वित्वानादरेण समुदायगतैकत्वविवक्षया पञ्चसङ्ख्यानिर्देशश्च श्रुतिसमाधिः, यथा, 'द्वादशमासाः पञ्चर्तवः' इति । ऋतुषट्के सत्यपि हेमन्तशिशिरसमुदायगतैकत्वविवक्षया हि तत्र पञ्चत्वसङ्ख्याव्यपदेशः । "वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि' इत्यादिना सर्वान् ऋतून् प्रत्येकं निर्दिश्य, 'हेमन्तशिशिरावृतूनां प्रीणामि'इति सहव्यपदेशात् हेमन्तशिशिरसमुदायगतैकत्वं पञ्चर्तव इत्यत्र विवक्षितमिति ज्ञायते । एवमस्मिन् वाक्ये फलितमर्थमाह **तदेव**मिति । पञ्चजनशब्द**निर्दिष्टानि**—प्रदर्शितानीत्यर्थः । अत एव **हीन्द्रियाणी**त्युक्तम्; न तु ज्ञानेन्द्रियाणीति । **महाभूत**शब्देन भूततन्मात्राण्यपि विवक्षितानि; **सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादना**दित्युक्तेः । एवं सङ्ख्याभ्युपगमात् तदनभ्युपगमाच्च द्विधा परिहृतम् । एवं परिहारद्वयकथनस्यापि प्रयोजनं वदन्नुपसंहरति **अत** इति । **सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वे**ति । अनेन ग्रन्थेन अनन्तरसूत्रस्य **यादवप्रकाश**मतयोजनाव्युदासो हेलया कृतो भवति । स खलु कारणत्वेनेत्यादिसूत्रं तदुत्तरसूत्रात्पृथगधिकरणत्वेन वर्णयन्, "स वा एष पुरुषः पञ्चधा पञ्चात्मा" इति वाक्यं विषयमुदाहरत् । तदयुक्तम्, कृतकरत्वादिति अनेन दर्शितं भवति । पञ्चसङ्ख्यानिवेशनिमित्तैकाकारासिद्ध्या समूहपञ्चकासिद्धेः पञ्चविंशतितत्त्वप्रतिपादनायोगस्तावत् स्थितः । पञ्चात्मेति मृदात्मा घट इतिवदर्थोनुपपन्नः ; पुरुषस्य प्रकृतिप्राकृततत्त्वैः स्वरूपैक्यायोगात् । ततश्च प्रत्येकं पञ्चधाभूतपञ्चतत्त्वसङ्घातानामात्मेत्यर्थः स्यात् । तथा सति पञ्चविंशतितत्त्वातिरिक्तात्मा परमपुरुषः स्यात् । पञ्चविंशतितत्त्वानां तदात्मकत्वादब्रह्मात्मकेभ्यस्तन्त्रसिद्धतत्त्वेभ्यो विलक्षणत्वं च स्यात् । इदं चाभ्युपगम्योक्तम् ; वस्तुतः एकैकशः शिरःपक्षादिरूपेण पञ्चविधान्नमयप्राणमयादिरूपतया सद्वारकमद्वारकञ्च पञ्चप्रकारत्वमुच्यत इति पूर्वाधिकरणसमर्थितादर्थात् न कश्चिद्विशेषः । तस्मादधिकरणान्तरवैयर्थ्यमिति । एवमन्यत्रापि सङ्ख्यासंभवे तथा वर्णनीयम् ; असंभवे च सङ्ख्यानादरेण निर्वाह्यमिति ज्ञापनं प्रयोजनमित्यर्थः ॥

३१. कारणत्वाधिकरणम् १-४-४

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । १ । ४ । १४ ॥

पुनः प्रधानकारणवादी प्रत्यवतिष्ठते—न वेदान्तेष्वेकस्मात् सृष्टिराम्नायते इति जगतो ब्रह्मैककारणत्वं न युज्यते वक्तुम् । तथाहि—"सदेव सोम्येदमग्र आसीत्" इति सत्पूर्विका सृष्टिराम्नायते ; असद्वा इदमग्र आसीत्" इत्यसत्पूर्विका च ; अन्यत्र, "असदेवेदमग्र आसीत् । तत् सदासीत् । तत् समभवत्" इति च । अतो वेदान्तेषु स्रष्टुरव्यवस्थितेः जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम् ; प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते । "तद्धेदं तर्ह्यव्याकृतमासीत्" इति अव्याकृते प्रधाने जगतः प्रलयमभिधाय, "तन्नामरूपाभ्यामेव व्याक्रियत" इत्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते । अव्याकृतं ह्यव्यक्तम् । नामरूपाभ्यां न व्याक्रियते—न व्यज्यत इत्यर्थः । अव्यक्तं प्रधानमेव । अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवादिवाक्यगतौ सदसच्छब्दौ ब्रह्मणीव अस्मिन् न विरोत्स्येते । एवमव्याकृतकारणत्वे निश्चिते सति, ईक्ष-

---

**कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** ॥ सर्वतत्त्वानां यस्मिन्निति ब्रह्माश्रयत्वप्रतीत्या स्वातन्त्र्येण प्रधानस्य कारणत्वं निरस्तम् ; अथ स्वातन्त्र्येण कारणत्वं प्रतीयते ब्रह्माश्रयत्वाप्रतीतेरिति शङ्कया सङ्गतिः । तामाह **पुनरिति** । **अवर्जनीयाचिद्बोधव्याकुलार्थशब्दोपलक्षितकारणवाक्यसमुदायो विषयः** । व्याकुलत्वादेव संशयः— किं जगत्कारणविषयवेदान्तवाक्यप्रतिपाद्यमव्यक्तम् , उत ब्रह्मेति; किम् 'असद्वा इदमग्र आसीत्', 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्रासदव्याकृतशब्दौ अव्याकृतनामरूपावस्थब्रह्मपरौ, उताव्यक्तपराविति । तदर्थं किं तदप्येषश्लोको भवतीति साक्षित्वेन निर्देशोऽसच्छब्दस्य प्रकृतब्रह्मपरतामवगमयति, नेति ; 'स एष इह प्रविष्ट' इति प्रशासितुरनुकर्षश्चाव्याकृतशब्दस्य ब्रह्मपरतामवगमयति, नेति संशयोऽर्थसिद्धः । यदा 'स एष' इत्यनुकर्षो नाव्याकृतशरीरपरतामवगमयति , यदा च 'तदप्येष' इति निर्देशः प्रकृतब्रह्मपरतामसच्छब्दस्य नावगमयति, तदानीमसदव्याकृतशब्दयोरव्याकृतनामरूपावस्थब्रह्मपरत्वाभावात् कारणवाक्यप्रतिपाद्यमव्यक्तमिति प्राप्नोति । यदा ' तदप्येष ' इति निर्देशोऽसच्छब्दस्य ब्रह्मपरतामवगमयति , यदा च ' स एष' इत्यनुकर्षोऽव्याकृतशब्दस्याव्याकृतशरीरकब्रह्मपरतामवगमयति , तदानीमसदव्याकृतशब्दयोरव्याकृतनामरूपावस्थब्रह्मपरत्वात् जगत्कारणवाक्यप्रतिपाद्यं ब्रह्मेति सिद्ध्यति । वेदान्तेषु कारणवाक्यानामैककण्ठ्येन हि ब्रह्मकारणत्वमुक्तम् ; तदनुपपन्नम् , ऐककण्ठ्याभावादित्याह— **न वेदान्तेष्विति** । **एकस्मात्**-एकरूपात् कारणात् । **स्रष्टुरव्यवस्थितेः** ; ब्रह्मकारणवादे सृष्टिकारणस्याव्यवस्थितेरित्यर्थः । प्रधानकारणवादे सामञ्जस्यमाह **प्रत्युतेति** । नन्वव्याकृतात् सृष्टिः प्रतीयते, न प्रधानादित्यत्राह **अव्याकृतं हीति** अव्याकृतत्वं नामरूपविशिष्टतयाऽनभिव्यक्तत्वमस्तु ; ततः किमित्यत्राह **अव्यक्तं प्रधानमेवेति** । परस्परप्रतिक्षेपकार्थविषययोः सदसच्छब्दयोः कथं प्रधानविषयत्वोपपत्तिरित्यत्राह **अस्य चेति** । **ब्रह्मणीवेति** वैधर्म्यदृष्टान्तः । ननु तद्धेदमिति प्रकरण एव, 'पश्यन् चक्षुः शृण्वन् श्रोत्रम् ' इति अव्याकृतशब्दवाच्यस्य चेतनत्वमवगम्यते । असच्छब्दस्याप्यव्याकृतशब्दसमानयोगक्षेमत्वात् चेतनविषयत्वमापतति । प्रकरणान्तरेषु चेक्षणं श्रूयते । परब्रह्मशब्दस्य चेतनविषयत्वं श्रुतिप्रसिद्धम् । आत्मशब्दश्च चेतनैकान्तः इति शङ्कायामीक्षणधर्मयोगं प्रतिवक्ति **एवमिति** । **एवंशब्देन** कारण-

णादयः कारणगताः सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः । ब्रह्मात्मशब्दावपि बृहत्त्वव्यापित्वाभ्यां प्रधान एव वर्तेते । अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते—

इति प्राप्ते प्रचक्ष्महे—कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः—चशब्दः तुशब्दार्थे । सर्वज्ञात् सर्वेश्वरात् सत्यसङ्कल्पात् निरस्तनिखिलदोषगन्धात् परस्मात् ब्रह्मण एव जगदुत्पद्यत

---

वाक्यस्थसदसदादिशब्दानां परमात्मन्यसामञ्जस्यं प्रधाने सामञ्जस्यञ्च पूर्वोक्तत्वात् परामृश्यते । **ईक्षणादय इति** आदिशब्देन, "स तपोऽतप्यत", "इदं सर्वमसृजत" इत्यादिवाक्यप्रतिपन्नापूर्वाकार-पर्यालोचनाप्रयत्नौ विवक्षितौ । **कारणगता** इति । अव्याकृतशब्देन प्रथमत एवाचेतनस्य प्रतिपन्नतया पश्चादवगतं पश्यन् चक्षुरित्यादिवाक्योक्तं चेतयितृत्वं चक्षुराद्युत्पादनौन्मुख्याभिप्रायम् । एवं प्रकरणान्तरे-ऽप्यपीक्षणोक्तेर्धर्मिवाचिपदनिर्देशपूर्वकत्वात् धर्मिवाचिपदानां च सर्वशाखाप्रत्ययन्यायेन अव्याकृत-शब्दतुल्यार्थत्वात् तद्गता ईक्षणादयः सृष्ट्यौन्मुख्याभिप्राया इत्यर्थः । यद्वा **कारणगता** इति । ब्रह्मकारण-वादिनाऽपि प्रधानं तस्यानादितया परमकारणत्वं चानुमतम् ; तस्य वेदान्तवाक्यप्रसिद्धत्वात् । अतश्चिद-चिदीश्वरसमुदायस्य कारणत्वादीक्षणस्यांशे मुख्यत्वभङ्गः स्वीकार्यः । ततश्चाचिदतिरिक्तवस्तुनि वेदान्तवाक्यानां सामञ्जस्याभावेन अमानतया वैपरीत्यभङ्गेन सर्वत्रेक्षणं गौणमास्थेयमित्यभिप्रायः । भूयसां बलीयस्त्वशङ्काऽप्यनेन निरस्ता ; सर्वकारणवाक्येष्वपीक्षणस्यांशे गौणतयाऽर्धजरतीयप्रहाणेन गौणत्वावश्यम्भावात् । ब्रह्मात्मशब्दयोः प्रधानपरत्वमुपपादयति **ब्रह्मात्मे**ति । अनेन ईक्षत्यधिकरणाक्षेपः फलितः । अधिकयुक्त्यन्तरमाह **स्मृतिन्याये**ति ॥

अन्ययोगव्यवच्छेदनिषेधेनोत्थितस्याधिकरणस्य कथं त्रिपाद्यां सङ्गतिः ? अस्यां सङ्गतस्य वा कथमयोगव्यवच्छेदप्रतिक्षेपेणोत्थानम् ? किञ्च. न चात्र निरूपणीयमस्ति । पूर्वापरवाक्येषु समाकर्षणेन ह्यर्थो निष्कृष्यते सिद्धान्ते । पूर्वापरवर्णनं चासच्छब्दस्यानन्दमयाधिकरणे कृतम् । अतः संशयोत्थाना-भावादनारम्भणीयत्वञ्चेति ॥ नैवम् ; प्रधानप्रतिपादनच्छायानुकारिवाक्यविषयत्वात् । न चानन्दमयाधि-करणेन चरितार्थता, असच्छब्दस्य प्रधानपरत्वशङ्कायास्तत्रानपाकृतत्वात् । पूर्वापरवाक्यानां परविषयत्वे निरूपितेऽपि प्रकरणाच्छ्रुतेर्बलीयस्त्वादसच्छब्दस्य ब्रह्मपरत्वं हि दुरवगमम् ॥ तर्हि, "अस्मिन्नस्य च तद्योगं शास्ति" इति सूत्रस्यानन्तरमेवानन्दित्वप्राप्तिनिमित्तस्य वस्तुनोऽसच्छब्दवाच्यतया प्रधानत्वमाशङ्क्य तत्रैव निराकरणं कर्तव्यमिति चेन्न—प्रधानप्रतिपादनच्छायानुकारिवाक्यविचारस्य पादसङ्गत्यभावात् । अतोऽत्रैव निरूप्यत्वे सति पूर्वपक्षयुक्तिवशादयोगव्यवच्छेदनिषेधः फलितः । कारणवाक्यानां ब्रह्मपरत्वे अनुपपन्ने सति, पूर्वपक्षिणाऽपि वेदप्रामाण्यमभ्युपगच्छता तेषामानर्थक्यपरिहाराय कस्यचिदर्थस्य प्रतिपाद-कत्वेऽवश्याभ्युपगन्तव्ये सति, प्रधानपरत्वे च समञ्जसे, अर्धजरतीयप्रसङ्गपरिहारायेक्षणाद्यमुख्यत्वे च न्याय्ये सति प्रधानातिरिक्तकारणसद्भावानुपपत्तेः । अतस्त्रिपाद्यारम्भे तस्या अन्ययोगव्यवच्छेदपरत्वा-भिधानं प्रायिकत्वाभिप्रायं मन्तव्यमिति ॥

**इति प्राप्त** इति । त्वर्थेन चशब्देन फलितां प्रतिज्ञामाह **सर्वज्ञा**दिति । **परस्माद्ब्रह्मण एवे**त्येव-कारेण नेतिपदानुषङ्गफलितप्रधानप्रतिक्षेपः सूचितः । **यथाव्यपदिष्टमि**त्युक्ते श्रुतौ व्यपदिष्टमिति शङ्काव्या-

इति निश्चेतुं शक्यते । कुतः? आकाशादिषु कारणत्वेन यथाव्यपदिष्टस्योक्तेः—सर्वज्ञत्वादि-विशिष्टत्वेन, "जन्माद्यस्य यतः" इत्येवमादिषु प्रतिपादितं ब्रह्म यथाव्यपदिष्टमित्युच्यते । तस्यैक-स्यैवाकाशादिषु कारणत्वेनोक्तेः । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः", "तत् तेजोऽसृजत" इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते । तथा हि—"सत्यं ज्ञानमनन्तं ब्रह्म...... सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति प्रकृतं विपश्चिदेव ब्रह्म, "तस्माद्वा एत-स्मात्"इति परामृश्यते । तथा "तदैक्षत बहु स्याम्" इति निर्दिष्टं सर्वज्ञं ब्रह्मैव, "तत् तेजोऽसृजत" इति परामृश्यते । एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम् । अतो ब्रह्मैककारणं जगदिति निश्चीयते ॥१४॥

---

वृत्त्यर्थमाह **जन्माद्यस्य यत इत्येवमादिष्विति** । अत्रायमभिसन्धिः—परैस्तु यथाव्यपदिष्टोक्तेरिति पदमेवं व्याख्यातम्—यथा श्रुत्यन्तरेषु व्यपदिष्टम्, तथेहाप्युक्तेरिति—तदयुक्तम्—श्रुत्यन्तरेष्वपि प्रधानमेवोक्तं स्यादित्युक्ते किमुत्तरम् । तेषु परब्रह्मणः परमकाणत्वेन प्रतिपादितत्वं प्राचीनन्यायैः समर्थितमिति वक्तव्यम् । तर्हि पूर्वप्रतिपादितप्रकारस्य कारणस्येहापि प्रतिपादितत्वं हेतुतया वर्णनीयम् । अतः कक्ष्यान्तरसापेक्षयुक्तिप्रतिपादकत्वादपि निरपेक्षहेतुप्रतिपादकत्वस्य समुचितत्वादिति । **आका शादिषु कारणत्वेन**—आकाशादीनां कारणत्वेनेत्यर्थः । अर्थस्वारस्येनात्र व्याख्यातम्; दीपे तु सप्तमीस्वारस्येन "आकाशादिपदचिह्नितेषु वाक्येषु" इत्युक्तम् । **तस्माद्वा इति** । स्वतश्चेतनैकान्तात्म-शब्दोपेतप्रकरणस्मारणार्थमाकाशादिष्वित्युक्तमिति भावः । न त्वसच्छब्दोपेतप्रकरणं विवक्षितम् । तद्धि उत्तरसूत्रविवक्षितम् । भूयसांबलीयस्त्वमेवास्मिन् सूत्रे हेतुतया विवक्षितम् । अत एव हि सद्विद्यावाक्यमुपादीयते, तत्तेजोऽसृजतेति । आदिशब्देन मुण्डकोपनिषदादि विवक्षितम् । धर्मिवाचि-नोऽव्याकृतादिपदस्य प्रथमश्रुतत्वाच्चरमावगतमीक्षणादिकं तदानुगुण्येन गौणमित्युक्तमिति शङ्कायां तेषु प्रकरणेषु सर्वज्ञत्वादिगुणकस्यैव कारणत्वेन प्रतिपादितत्वमुपपादयति **तथा हीति** । कारणत्वप्रतिपादनात् प्रागेव कारणत्वधर्मिणः प्रथमत एव चेतनत्वप्रतिपादनं दर्शयति **सत्यं ज्ञानमिति** । संभूत इति सृष्टिप्रतिपादनात्पूर्वमेव प्रयुक्तः स्वतश्चेतनैकान्त आत्मशब्दः प्रबलतरः; ततः पूर्वमेव तस्य कारणस्य विपश्चित्त्वप्रतिपादनादात्मशब्दस्य क्लिष्टनिर्वाहशङ्का दूरोत्सारितेत्यभिप्रायेणाह **प्रकृतं विपश्चिदेवेति** । **तथेति** । तत्तेजोऽसृजतेति कारणत्वमतिपादनात् पूर्वमेव तदैक्षतेति ईक्षितृत्वप्रतिपादनादीक्षणानुगुणं कारणत्वं नेयम्; न तु कारणत्वानुगुणमीक्षितृत्वं नेयमित्यर्थः । ततः पूर्वनिर्दिष्टं सदिति पदं तु साधारणत्वात् न प्रधानपरतया स्वतः प्रतीयते; ईक्षणदर्शनात् प्रधानविलक्षणं कारणं निश्चीयत इति नोपक्रमविरोधः, सच्छब्दस्य इदंशब्दसामानाधिकरण्यं तु संभवतीत्ययमर्थः, "ईक्षतेर्नाशब्दम्" इत्यत्र समर्थित इत्यभिप्रायः । **एवं सर्वत्रेति** । "आत्मा वा इदमेक एवाग्र आसीत्; स ईक्षत लोकान्नु सृजै इति; स इमान् लोकानसृजत", "यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते", "एको ह वै नारायण आसीत्" इत्यारभ्य "स एकाकी न रमेत ।.... सोऽन्यं कामं मनसा ध्यायीत । तद्धिरण्मयमण्डमभवत् । तत्र ब्रह्मा चतुर्मुखोऽजायत ।", "अथ पुरुषो ह वै नारायणोऽकामयत—प्रजाः सृजेयमिति । नारायणाद्ब्रह्मा जायते" इत्यादिषु सृष्ट्युक्तेः पूर्वमेव परमचेतन-तदसाधारणेक्षणादिकमवगन्तव्यमित्यर्थः । उपक्रमस्थबहुश्रुतिविरोधादव्याकृतश्रुतिमात्रादौर्बल्यमर्थसिद्धम् ॥

ननु "असद्वा इदमग्र आसीत्" इति असदेव कारणत्वेन व्यपदिश्यते; तत् कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयत इति। अत आह--

समाकर्षात् । १ । ४ । १५ ॥

"असद्वा इदमग्र आसीत्" इत्यत्रापि विपश्चिदानन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते ॥ कथम्! ॥ "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः", "सोऽकामयत। बहु स्यां प्रजायेयेति। स . . . इदं सर्वमसृजत, यदिदं किंच। तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिना ब्राह्मणेनाऽऽनन्दमयं ब्रह्म सत्यसङ्कल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय, "तदप्येष श्लोको भवति" इति उक्तस्यार्थस्य सर्वस्य साक्षित्वेन ह्युदाहृतोऽयं श्लोकः, "असद्वा इदमग्र आसीत्" इति। तथोत्तरत्र, "भीषाऽस्माद्वातः पवते" इत्यादिना तदेव ब्रह्म समाकृष्य सर्वस्य प्रशासितृत्व-निरतिशयानन्दत्वादयोऽभिधीयन्ते। अतोऽयं मन्त्रस्तद्विषय एव। तदानीं नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावात् ब्रह्मैवासच्छब्देनोच्यते ॥ "असदेवेदमग्र आसीत्" इत्यत्राप्ययमेव निर्वाहः ॥ यदुक्तम्, "तद्धेदं तर्ह्यव्याकृतमासीत्" इति प्रधानमेव जगत्कारणत्वेनाभिधीयत इति—नेत्युच्यते। तत्राप्यव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते; "स एष इह प्रविष्ट आ नखाग्रेभ्यः पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः। आत्मेत्येवोपासीत" इत्यत्र, स एषः इति तच्छब्देनाव्याकृतशब्दनिर्दिष्टस्यान्तःप्रविश्य प्रशासितृत्वेनानुकर्षात्; "तत् सृष्ट्वा तदेवानुप्राविशत्", "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति स्रष्टुः सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशनामरूपव्याकरणप्रसिद्धेश्च। "अन्तः

---

उत्तरसूत्रशङ्कामाह **नन्विति**। **समाकर्षात्** ॥ 'असद्वा इदम्' इत्यादिना समाकर्षः प्रतिज्ञातः। 'ब्रह्मणा विपश्चिता,' 'अन्योऽन्तर आत्मानन्दमयः', 'सोऽकामयत' इति वाक्यान्यभिप्रेत्य विपश्चित्त्वादिकमुक्तम्। प्रतिज्ञातार्थविषयवाक्यबुभुत्सां दर्शयति **कथ**मिति। तस्माद्वा इत्यात्मशब्देन कारणविषयेण निर्दिष्टस्य विपश्चिदानन्दमयस्य स इति पुंलिङ्गान्तशब्देन, [1]सत्यसङ्कल्पादिगुणकस्य 'तदप्येष' इति तच्छब्देन च समाकर्ष उपपादितो भवति। पूर्वस्माद्वाक्यात् असद्वा इति वाक्ये समाकर्ष उक्तः। अनेन प्रकरणाच्छ्रुतिर्बलीयसीत्येतदपि परिहृतम्। ज्ञानविपश्चिदादिबहुश्रुतिप्राबल्यसिद्धेः। तस्मादप्युत्तरत्र समाकर्षमाह **तथोत्तरत्रेति**। भीषाऽस्मादित्यत्र अस्मादित्ययंशब्दो ब्रह्मण आकर्षकः प्रकृतपरामर्शित्वात्। असच्छब्दार्थमाह **तदानी**मिति। श्रुत्यन्तरस्थस्याप्यसच्छब्दस्य उक्तार्थपरत्वमाह **असदेवेद**मिति। तत्रापि असद्वा इदमिति वाक्यस्थकारणविषयासच्छब्दैकार्थ्यात् सत्यसङ्कल्पत्वादिकं सिद्धमित्यभिप्रायः। तत्रासच्छब्दोक्तस्य ततसदासीदित्यनुकर्षप्रदर्शनं सच्छब्दस्य चिदचित्साधारण्यनिबन्धनम्। सच्छब्दो हि तुच्छव्यावर्तकः; न त्वचिद्व्यावर्तकः। कारणावस्थायामसद्व्यावृत्तिर्ह्यारम्भणाधिकरणावसेया। तद्धेदमित्यादिश्रुतावप्यनुकर्षं दर्शयति **यदुक्त**मिति। तद्धेदमितिश्रुत्युक्तानुप्रवेशनामरूपव्याकरणयोः परमात्मधर्मत्वेन प्रसिद्धिमाह **तत्सृष्ट्वे**ति। प्रधानस्यापि स्वकार्यानुप्रवेशो युक्त इत्यत्राह **अन्तः प्रविष्ट** इति। 'पश्यन् चक्षुः

---

1 तदप्येष इत्यत्र तच्छब्दः सोकामयतेत्युक्तसत्यसंकल्पत्वस्यापि परामर्शक इत्याशयेन भाष्ये पूर्वं सत्यसंकल्पपदप्रयोग इति भावः।

प्रविष्टः शास्ता जनानां सर्वात्मा" इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवं रूपोऽनुप्रवेशो न संभवति। अतः अव्याकृतम् अव्याकृतशरीरं ब्रह्म। 'तन्नामरूपाभ्यां व्याक्रियत' इति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियते-त्युच्यते। एवं च सति-ईक्षणादयो मुख्या एव भवन्ति। ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथंचिदुपपद्येते। अतो ब्रह्मैककारणं जगदिति स्थितम्॥

इति कारणत्वाधिकरणम् ॥ ४ ॥

### ३२. जगद्वाचित्वाधिकरणम् १-४-५

## जगद्वाचित्वात् । १ । ४ । १६ ॥

पुनरपि साङ्ख्यः प्रत्यवतिष्ठते-यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपादयन्ति-तथापि तन्त्रसिद्धप्रधानपुरुषातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते। तथा हि भोक्तारमेव पुरुषं कारणं वेद्यतयाऽधीयते कौषीतकिनो बालाक्यजातशत्रुसंवादे, "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य, "यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत्कर्म, स वै वेदितव्यः" इति।

---

शृण्वन् श्रोत्रम्' इति वाक्यात्, व्याकरवाणीति सङ्कल्पश्रवणाच्च प्रधानव्यावृत्तिसिद्धावप्यधिकहेतुज्ञापनार्थं परिहारान्तरमुक्तम्। वेदान्तवाक्यविशेषविवक्षितोऽनुप्रवेशविशेषो न संभवतीत्यर्थः। अनुप्रविश्य नियमनस्य पुरुषव्यावर्तनक्षमत्वेऽपि अत्रापेक्षितं प्रधानव्यावर्तनमात्रमिति प्रधानमात्रस्य तदसंभवोक्तिः। अन्येन व्याकृतत्वशङ्काव्युदसनार्थं तन्नामरूपाभ्यां व्याक्रियतेति वाक्यखण्डमुपादाय व्याचष्टे **तदेवेति**। असच्छब्दोक्तकारणविषयेण 'तदात्मानं स्वयमकुरुत' इत्यनेनैकार्थ्यादिति भावः। असदव्याकृतादि-शब्दानां ब्रह्मण्यघटमानत्वेन पराभिमतानामुपपन्नतोक्ता। अथेक्षणादीनां ब्रह्मण्येवोपपन्नत्वं प्रधानेऽनुपपन्नत्वं चाह **एवञ्चेति**। असदव्याकृतादिशब्दा ईक्षणादयश्च ब्रह्मण्युपपन्नाः, प्रधाने त्वीक्षणादयोऽनुपपन्ना इति वैषम्यं दर्शितं भवति। अधिकरणार्थमुपसंहरति **अत इति**॥

॥ **जगद्वाचित्वात्** ॥ सङ्गतिमाह **यद्यपीति**। "स वै वेदितव्यः' इत्यन्तं विषयवाक्यं दर्शितम्। कारणवाक्यप्रतिपाद्यं किं प्रकृत्यधिष्ठाता पुरुषः, उत परमात्मेति संशयस्वरूपमर्थसिद्धम्। तदर्थं बालाक्यजातशत्रुसंवादे वेदितव्यतयोपदिष्टं ब्रह्म किं जीवः, उत परमात्मेति; किम् 'एतेषां पुरुषाणां कर्ता' इति निर्दिष्टः कर्ता जीवः, उत पर इति; यस्यवैतत्कर्मेति कर्मशब्दः किं पुण्यापुण्य-वाची, उत जगद्वाचीति; किमेतच्छब्दसामानाधिकरण्येन कर्मशब्दस्य जगद्वाचित्वं युक्तम्, उत 'एतेषां पुरुषाणां कर्ता' इति पृथङ्निर्देशावैयर्थ्याय पुण्यापुण्यवाचित्वं युक्तम्; 'तौ ह सुप्तं पुरुषम्' इत्याद्यवगते जीवमुख्यप्राणलिङ्गे पुण्यापुण्यवाचितामुपोद्बलयतः; नेति। किमेते लिङ्गे जीवबोधनार्थे, उत 'क वा' इत्यादिप्रश्नप्रतिवचनाभ्यां जीवातिरिक्तब्रह्मबोधनपरे [इति ?]। यदा जीवबोधनार्थे, तदा तयोः पुण्यापुण्यवाचित्वोत्तम्भकत्वेन पृथङ्निर्देशावैयर्थ्याय कर्मशब्दस्य पुण्यापुण्य-वाचितोपपत्तेस्तत्सम्बन्धी कर्ता पुरुष इति बालाक्यजातशत्रुसंवादस्य जीवपरत्वात् सर्ववेदान्तवेद्यो भोक्ता

उपक्रमे वक्तव्यतया बालाकिनोपक्षिप्तं ब्रह्माजानते तस्मा एवाजातशत्रुणा, "स वै वेदित्व्यः" इति ब्रह्मोपदिश्यते। "यस्य वैतत्कर्म" इति कर्मसंबन्धात् प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते; नार्थान्तरम्; तस्य कर्मसंबन्धानभ्युपगमात् कर्म च पुण्यापुण्यलक्षणं क्षेत्रज्ञस्यैव संभवति। न च वाच्यम्—क्रियत इति कर्मेति व्युत्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगत् एतत्कर्मेति निर्दिश्यते; यस्यैतत् कृत्स्नं जगत् कर्म, स वेदितव्य इति क्षेत्रज्ञादर्थान्तरमेव प्रतीयते-इति; "यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत्कर्म" इति पृथङ्निर्देशवैयर्थ्यात्। कर्मशब्दस्य च लोकवेदयोः पुण्यपापरूप एव कर्मणि प्रसिद्धेः। तत्तद्भोक्तृकर्मनिमित्तत्वात् जगदुत्पत्तेः, एतेषां पुरुषाणां कर्तेति च भोक्तुरेवोपपद्यते। तदयमर्थः—एतेषामादित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञभोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूतः, एतत्कारणभावहेतुभूतं पुण्यापुण्यलक्षणं च कर्म यस्य, स वै वेदितव्यः; तत्स्वरूपं प्रकृतेर्विविक्तं वेदितव्यम्—इति। तथोत्तरत्र, "तौ ह सुप्तं पुरुषमीयतुः . . . तं यष्ट्या चिक्षेप" इति सुप्तपुरुषागमनयष्टिघातोत्थापनादीनि च भोक्तृप्रतिपादन एव लिङ्गानि। तथोपरिष्टादपि भोक्तैव प्रतिपाद्यते, "तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा स्वाः श्रेष्ठिनं भुञ्जन्ति(भुञ्जते) एवमेवैष (?) प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते; एवमेवैत आत्मान एनं (?) भुञ्जन्ति" इति। तथा (३५) "क्वैष एतद्बालाके पुरुषोऽशयिष्ट? क्व वा एतदभूत्? कुत एतदागात्?" इति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच, "हिता नाम हृदयस्य नाड्यः... तासु तदा भवति, यदा सुप्तः स्वप्नं न कथंचन पश्यति, अथास्मिन् प्राण एवैकधा भवति। तदैनं वाक् सर्वैर्नामभिः सहाप्येति . . . मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुध्यते, यथाऽग्नेः

---

पुरुष इति फलितं स्यात्। यदा ब्रह्मप्रतिबोधनपरे, तदा तयोर्लिङ्गयोः पुण्यापुण्यवाचित्वोतम्भकत्वाभावादेतच्छब्दसामानाधिकरण्येन इह कर्मशब्दस्य जगद्वाचित्वात् तत्कर्ता जीवविलक्षण इति बालाक्यजातशत्रुसंवादस्य परमात्मविषयतया सर्ववेदान्तवेद्यः परमात्मेति सिद्ध्यतीति।

विशयेऽर्थसिद्धे सति पूर्वपक्षमाह **उपक्रम** इति। प्रतिवचनस्य उपक्रमस्थब्रह्मविषयत्वेन ब्रह्मणोऽन्यस्य जीवस्य कर्मसम्बन्धपरत्वशङ्का निरस्ता। ततः किमित्यत्राह **यस्येति**। **नार्थान्तरम्**। प्रकृतिवन्नेश्वरोऽपीत्यर्थः। यज्ञादिकं कर्म यस्य प्रीणनमित्येतदर्थपरत्वव्युदासायाह **कर्म चेति**। कर्मशब्दोऽसङ्कुचितवृत्तिः पापमपि वक्तीति कर्माराध्यपरत्वमयुक्तमिति भावः। अत्रानन्दमयाधिकरणाक्षेपः फलितः। पादसङ्गतिः पूर्ववत्; भोक्तृपुरुषप्रतिपादनच्छायानुसारिवाक्यविषयत्वात्। कर्तृत्वस्य जीवे संभवरूपपूर्वपक्षहेतुवशादयोगव्यवच्छेदाक्षेपः फलितः। सिद्धान्तमाशङ्क्याह **नचेति**। पौनरुक्त्यापादनेन परिहरति **यो वा** इति। हेत्वन्तरमाह **कर्मशब्दस्य चेति**। रूढिर्हि योगाद्बलीयसीत्यर्थः। सर्वकर्तृत्वं कथमित्यत्राह **तत्तदिति**। इह निर्दिष्टानां भोक्तृणामनिर्दिष्टानां च तत्सजातीयानां ज्ञाततया नोपदेष्टव्यत्वम्; न च वेदितव्यत्वमित्यत्राह **तदयमर्थ** इति। कर्तृत्वे हेतुः क इत्यपेक्षायां 'यस्य वैतत्कर्म' इति कर्मित्वोपपादनम्। शुद्धस्वरूपं चाविदितम्; कर्मसम्बन्धस्तूपलक्षणमित्यर्थः। एवं कर्मनिमित्तभोक्तृत्वात् जीवत्वमुक्तम्। तदेव यष्टिघातोत्थापनात् श्रेष्ठिदृष्टान्तात् सुषुप्तिप्रबोधादियोगाच्चोपपादयति **तथोत्तरत्रे**त्यादिना। सुषुप्तिस्थानं नाड्यः, न परमात्मेत्यभिप्रायेण, 'हिता नाम नाड्यः' इति वाक्यमुदाहृतम्। तदानीं **तदा**शब्दः सुषुप्तिवेलापरः स्यात्। **सर्वैर्नामभिः....सर्वैर्ध्यानैरि**ति। तत्तत्करणमुपरतस्वस्वव्या-

[ज्वलतः सर्वा दिशो] विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः; देवेभ्यो लोकाः" इति । सुषुप्त्याधारतया, स्वप्नसुषुप्तिजागरितावस्थासु वर्तमानं वागादिकरणाप्ययोद्गमस्थानमेव जीवात्मानम्, "अथास्मिन् प्राण एवैकधा भवति" इत्युक्तवान् । अस्मिन् जीवात्मनि । प्राणभृत्त्वनिबन्धनोऽयं प्राणशब्दः; "स यदा प्रतिबुध्यते" इति प्राणशब्दनिर्दिष्टस्य प्रबोधश्रवणात् । मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसंभवात् । अथवा "अस्मिन् प्राणे" इति व्यधिकरणे सप्तम्यौ; अस्मिन् आत्मनि वर्तमाने प्राण एवैकधा भवति वागादिकरणग्राम इति । प्राणशब्दस्य मुख्यप्राणपरत्वेऽपि जीव एवास्मिन् प्रकरणे प्रतिपाद्यते; स्वतः प्राणस्य जीवोपकरणत्वात् । अतो वक्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धेः, (द्धिः ।) कारणगताश्चेक्षणादयश्चेतनधर्मा अस्मिन्नेवोपपद्यन्त इति एतदधिष्ठितं प्रधानमेव जगत्कारणम्—

---

पारमित्यर्थः । **एतस्मादात्मनः प्राणा** इति । **प्राणशब्दः** पञ्चवृत्तिप्राणपर इति पूर्वपक्षी मन्यते । **देवाः**—इन्द्रियाणि । **लोकाः**—ज्ञानं विषयो वा । **सुषुप्त्याधारता**—सुषुप्तिमत्त्वम् । **सुषुप्त्याधारतयोक्तवा**नित्यन्वयः । प्राणशब्दस्य प्रथमान्तत्वशङ्कां मुख्यप्राण-परमात्मपरत्वशङ्कां च निराकर्तुं व्याचष्टे **अस्मिन् जीवात्मनी**ति । तदुपपादयति **स यदे**ति । प्रबोधः श्रूयताम्; ततः किमित्यत्राह **मुख्यप्राणस्ये**ति । प्रथमान्तत्वासंभवोऽतिप्रसिद्ध इति न कण्ठोक्तः, तदा हि 'एकधा भवति' इत्यनेन वागादिकरणानामिव निवृत्तव्यापारतयाऽवस्थानं तु उक्तं स्यात् । तच्च विरुद्धम्; स्वापेऽपि प्राणव्यापारोपलब्धेः । अवधारणानुपपत्तिश्च; वागाद्युपरतेः प्रतिपाद्यमानत्वात् । न च वाच्यम्—प्राण एवानुपरतव्यापार एकरूपः स्थित इत्यर्थ इति । प्रत्यक्षसिद्धार्थस्य प्रतिपादनवैयर्थ्यात् ॥ प्राणस्य स्वाधीनेन्द्रियस्थितिप्रवृत्तित्वरूपं प्राधान्यं विवक्षितमिति चेत्—तत्तु सर्वदा भवतीति स्वापदशायां तत्प्रतिपादनमसङ्गतं स्यात् । अतः सप्तम्यन्तत्वमङ्गीकृत्य जीवपरत्वमुपपादितम् । अस्यां योजनायां सप्तम्यन्तपदयोः सामानाधिकरण्यस्वारस्येऽपि प्राणशब्दस्य लाक्षणिकत्वम् । तद्व्यावृत्त्यर्थं योजनान्तरमाह **अथवे**ति । क एकधा भवतीत्यत्राह **वागादिकरणग्राम** इति । प्राणाधिकरणवाचितया व्यधिकरणस्य अस्मिन्निति पदस्य परमात्मपरत्वमाशङ्क्याह **प्राणशब्दस्ये**ति । कुत इत्यत्राह **स्वत** इति । धर्मान्तराणामपि जीवे संभवं दर्शयन् पूर्वपक्षमुपसंहरति **अत** इति ।

अस्मिन्नधिकरणे प्राणजीवपरमात्मविषयतया त्रिशिरस्को विचार **इतरैः** कृतः । तत्रेह वेदितव्यतयोपदिष्टपुरुषस्य प्राणनामभिरामन्त्रणाश्रवणादिना मुख्यप्राणवैलक्षण्यस्य स्फुटत्वात् द्विशिरस्को विचार उपपन्न इत्यभिप्रायेण जीवपरत्वमेव पूर्वपक्षीकृतम् ॥ ननु समष्ट्यात्मा हिरण्यगर्भः प्राणशब्दविषयत्वेन शङ्कित इति त्रिशिरस्कत्वं युक्तं विचारस्य ॥ न; परिस्पन्दलक्षणकर्मसंबन्धस्य हेतुतयोपन्यासानुपपत्तेः । परिस्पन्दात्मकं कर्म हि मुख्यप्राणधर्मतया प्रसिद्धम्; न तु हिरण्यगर्भधर्मतया । प्राणसमष्ट्यभिमानित्वाद्धिरण्यगर्भस्य प्राणधर्मेण कर्मणा विशेष्यत्वं युक्तमिति चेत्—हिरण्यगर्भः किं भवत्पक्षे क्षेत्रज्ञोऽभिमतः, उत ईश्वर इति । ईश्वरत्वे, हिरण्यगर्भपरत्वं सिद्धान्तीकर्तव्यम् । अतो न पूर्वपक्षतामर्हति । 'परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात्' इति हि भवतां सिद्धान्तप्रतिज्ञा ।

इति प्राप्ते प्रचक्ष्महे—जगद्वाचित्वात् । अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः स्वस्मिन् प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषो नाभिधीयते ; अपितु निरस्तसमस्ताविद्यादिदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणनिधिर्निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते । कुतः? "यस्य वैतत् कर्म" इत्यत्रैतच्छब्दान्वितस्य कर्मशब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वात् । एतच्छब्दो ह्यर्थप्रकरणादिभिरसङ्कुचितवृत्तिरविशेषेण प्रत्यक्षादिप्रमाणोपस्थापितनिखिलचिदचिन्मिश्रजगद्विषयः । न च पुण्यापुण्यलक्षणं कर्मात्र कर्मशब्दाभिधेयम् । "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य ब्रह्मत्वेन बालाकिना निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणामब्रह्मत्वेन, "मृषा वै खलु मा संवादयिष्ठाः" इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञापयिषयाजातशत्रुणेदं वाक्यमवतारितम्, "यो वै बालाके" इत्यादि । पुण्यापुण्यलक्षणकर्म-

---

यदि क्षेत्रज्ञोऽभिमतः, तर्हि जीवपरत्वप्रतिक्षेपादेव तत्परत्वं प्रतिक्षिप्तं भवतीति प्राणो न पृथग्विचार्यः ॥ किं जीवमात्रपरः, उत जीवविशेषपरः इति संदेहो युक्त इति चेन्न—एकस्मिन् प्रकरणे सामान्यशब्देनार्थप्रतिपादनेऽपि विशेषोपस्थापके सति तस्य तत्पर्यवसानस्य न्याय्यतया हिरण्यगर्भो वा परमात्मा वेति द्विशिरस्क एव संशयः स्यात् ॥ ननु 'जीवमुख्यप्राणलिङ्गान्नेति चेत्—'इति सूत्रेण पूर्वपक्षद्वयद्योतनात् युक्तं विचारत्रयमिति चेत्—न ; जीवसाधकत्वेन मुख्यप्राणलिङ्गस्य शङ्कितत्वात् । जीवोपकरणावगमो हि जीवसाधकः । अतो मुख्यप्राणवैलक्षण्यस्य स्फुटत्वात् प्राणशब्दस्य हिरण्यगर्भवाचित्वे स्वारस्याभावाच्च जीवविषयः पूर्वपक्ष उपन्यस्तः ।

राद्धान्तमाह **इति प्राप्त** इति । पूर्वपक्षे कर्त्रादिशब्दानामस्वारस्यं स्वमते स्वारस्यञ्चाभिप्रेत्य तदुपपादकं जीवपरयोः स्वभावविशेषं वदन् प्रतिजानीते अत्रेत्यादिना । **प्रकृतिधर्माध्यासेन**—स्वस्मिन् प्रकृतिगतकर्तृत्वाध्यासेनेत्यर्थः । नेतिपदानुषङ्गसिद्धार्थ उक्तो **नाभिधीयते** इत्यन्तेन । सौत्रहेतुबलसिद्धं प्रतिज्ञांशमाह **अपि त्विति** । यादृशस्य कर्मशब्दस्य जगद्वाचित्वं युक्तम्, तादृशत्वं सूत्रकाराभिप्रेतमिति मन्वानः कर्मशब्दं विशिनष्टि **एतच्छब्दान्वितस्येति** । नन्वेतच्छब्दः प्रकृतपरामर्शी ; तत् कथमप्रकृतजगत्परामर्श इत्यत्राह **एतच्छब्दो हीति** । **अर्थप्रकरणादिभिरिति** । **अर्थ**शब्देन स्ववाक्यस्थपदान्तरान्वययोग्यत्वं विवक्षितम् । प्राचीनवाक्यनिचयः **प्रकरणम्** । **आदि**शब्देन उपरितनवाक्यानि विवक्षितानि । यद्वा पूर्वापरवाक्यजातं **प्रकरणम्** । **आदि**शब्देन तात्पर्यलिङ्गानि विवक्षितानि । **असङ्कुचितवृत्तिरिति** । लिङ्गवचनविरोधात् पुरुषपरामर्शोऽनुपपन्नः । पुण्यपापरूपं कर्माप्रकृतम् । अप्रकृतमपि कर्तृत्वकारणतया परिकल्प्य धीस्थत्वापादनमत्यन्तविलम्बितम् । पुरुषनिर्माणरूपव्यापारम् एतत्कर्मेति निर्दिश्य यस्येति तत्सम्बन्धे विवक्षिते पुनरुक्तिः स्यात् ; निर्माणव्यापाराश्रयत्वस्य कर्तृशब्देनैवाभिहितत्वात् । अतः सङ्कोचकाभावात् असङ्कुचितवृत्तिरिति भावः । तर्ह्यप्रकृतं जगत् कथमुपस्थाप्येतेत्यत्राह **प्रत्यक्षादीति** । **एतच्छब्दः** संनिहितपरामर्शी । सन्निधिश्च बुद्धिस्थितिः । सा च प्रकरणतो वा प्रकृतार्थान्तरसम्बन्धित्वेन वा प्रसिद्धितो वा भवति । तत्र प्रकरणादिना सङ्कोचानुपपत्तेः परिशेषात् प्रसिद्धार्थपरामर्शित्वे सति, तत्रापि सङ्कोचकाभावात निखिलचिदचिन्मिश्रजगद्विषय इत्यर्थः । **चिदचिन्मिश्रेति** ।

संबन्धिनः आदित्याद्यधिकरणाः तत्सजातीयाश्च पुरुषाः तेनैव विदिता इति तदविदितपुरुष-विशेषज्ञापनपरोऽयं कर्मशब्दो न पुण्यापुण्यमात्रवाची; क्रियामात्रवाची वा; अपि तु कृत्स्नस्य जगतः कार्यत्ववाची। एवमेव खल्वविदितोऽर्थ उपदिष्टो भवति। पुरुषस्य कर्मसंबन्धोपलक्षितस्वाभाविकस्वरूपस्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा; कर्मसंबन्धमात्रस्यैव वेदितव्यस्वरूपलक्षणत्वात्, यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेः, "यस्य वैतत् कर्म" इत्येतच्छब्दवैयर्थ्यं च। 'य एतेषां कर्ता यस्य वैतत् कर्म' इति पृथङ्निर्देशस्य चायमभिप्रायः—ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषाः, तेषां यः कर्ता—ते यत्कार्यभूताः—किं विशिष्याभिधीयते, कृत्स्नं जगद् यस्य कार्यम्—उत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्थाः यत्कार्यत्वे तुल्याः, स परमकारणभूतः पुरुषोत्तमो वेदितव्यः—इति। जगदुत्पत्तेर्जीवकर्मनिबन्धनत्वेऽपि न जीवः स्वभोग्यभोगोपकरणादेः स्वयमुत्पादकः, अपि तु स्वकर्मा-

---

जगदेकदेशभूतस्याऽऽदित्यादेः प्रकृतत्वादेकदेशि च जगत् तद्द्वारा बुद्धिस्थम्। अतश्च जगत्परामर्शो युक्त इति भावः। रूढेर्योगात् प्राबल्यमेतच्छब्दस्वारस्यं च तुल्यम्; तत् कस्यानुरूपोऽर्थनिश्चय इत्यपेक्षायामाह **न च पुण्ये**ति। तुल्यत्वनिवारकबलीयस्त्वसिद्धये हेत्वन्तरमाह **ब्रह्म त** इति। ततः किमित्यत्राह **पुण्यापुण्ये**ति। **क्रियामात्रवाची वे**ति दृष्टान्ततयोक्तम्। यथा वेदितव्यतया प्रकृतस्य प्राणनामभिरामन्त्रणाश्रवणादिना प्राणवैलक्षण्यस्य स्फुटत्वात्, प्रकरणस्य बालाकयविदितपुरुषविशेषज्ञापनप्रवृत्तत्वाच्च, मुख्यप्राणस्य लोकविदितत्वाच्च कर्मशब्दो न मुख्यप्राणव्यापारभूतक्रियामात्रवाची—एवमेव पुण्यापुण्यमात्रवाची न भवतीत्यर्थः। (?) **आदित्यमण्डलाद्यधिकरणानां पुरुषाणा**मिति[1]। अस्य वाक्यस्य, 'यः कर्ता'इत्यनूद्य वेदितव्य[त्व?]विधिपरत्वात्, 'चक्षोस्सूर्यो अजायत', 'नाभ्या आसीदन्तरिक्षम्,' 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीं च' इत्यादिप्रापकवाक्येषु आदित्यादिपुरुषाणां द्युपृथिव्यादिजगतश्च पृथक् सृष्टिप्रतिपादनादिहापि पुरोवादानुरोधेनाऽऽदित्यादिभिस्सह जगन्निर्देशाश्रयणं युक्तमिति भावः। क्रियत इत्यवयवार्थस्य प्रवृत्तिनिमित्तत्वज्ञापनाय **जगतः कार्यत्ववाची**त्युक्तम्। कार्य्यभूतजगद्वाचीत्यर्थः। जगद्वाचित्वे सति अविदितार्थोपदेशपरत्वोपपत्तिमाह **एवमेवे**ति। अनेकहेत्वपेक्षया एको हेतुर्दुर्बलः। अतः सङ्कोचरहितैतच्छब्दस्वारस्यादविदितपुरुषविशेषोपदेशोपक्रमाच्च पुरोवादानुरोधाच्च कर्मशब्दस्य जगद्वाचित्वं युक्तमित्यर्थः। अविदितत्वं **कर्मसम्बन्धरहितस्वरूपस्य** पुरुषस्य भवतीत्यत्राह **पुरुषस्ये**ति। कर्मसम्बन्धिवाचिपदस्य कर्मरहितोपस्थापकत्वममुख्यम्। न चावस्थाद्वयसाधारणात्मशब्दोऽपि प्रयुक्तः। 'यस्य कर्म स वेदितव्यः' इति हि निर्देशः। अतो लक्षणेत्यर्थः। एतच्छब्दस्य तदुक्तार्थपरत्वेऽनिष्टमाह **यस्य कर्मे**ति। त्वन्मतेऽपि **वैयर्थ्यं** तुल्यमित्यत्राह **य एतेषा**मिति। य एतेषां पुरुषाणां कर्तेति निर्देशो बालाकिनोक्तानां कार्यत्वेनाब्रह्मत्वज्ञापनार्थम्। तेषां कर्तेति प्रतिपादनमात्रेण तदुक्तादित्यादिभ्योऽप्यधिकहिरण्यगर्भादिदेवताविशेषसमन्वितकृत्स्नजगत्कारणत्वं न सिध्यतीति **यस्य वैतत्कर्मे**त्युक्तम्। जगत्कर्तृत्वस्य संनिहितविषयतयाऽवच्छिन्नत्वव्यावृत्त्यर्थ**मेतेषां कर्ते**त्युक्तमित्यर्थः। विपक्षे दूषणान्तरमाह **जगदुत्पत्ते**रिति। **स्वकर्मा-**

---

1 आदित्येत्यादि प्रतीकधारणमिह न भवितुमर्हति।

नुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते । अतो न तस्य पुरुषान् प्रति कर्तृत्वमुपपद्यते । अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्—तद्व्याख्यातम्। १ । ४ । १७ ॥

अथ यदुक्तम्—जीवलिङ्गात् मुख्यप्राणसंकीर्तनाच्च लिङ्गात् भोक्तैवास्मिन् प्रकरणे प्रतिपाद्यते; न परमात्मेति—तद्व्याख्यातम्—तस्य निर्वाहः प्रतर्दनविद्यायामभिहितः। एतदुक्तं भवति—यत्रोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति निश्चितम्, तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र प्रतिपादितम् । अत्राप्युपक्रमे, 'ब्रह्म ते ब्रवाणि' इति ब्रह्म उपक्षिप्तम्; मध्ये च, "यस्य वैतत्कर्म" इति निर्दिष्टं न पुरुषमात्रम्; अपि तु निखिलजगदेककारणं ब्रह्मैवेत्युक्तम् । उपसंहारे च, "सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति, य एवं वेद" इति ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं

---

**नुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्त** इति । न हि घटादिकर्तृत्वं विनियोगादृष्टवतः पुरुषस्य; अपि तु कुलालस्येति भावः । मुक्तपरत्वे कर्मवाचिपदलक्षणा एतच्छब्दवैयर्थ्यं कर्तृशब्दास्वारस्यं चोक्तम् । चरमं हेतुद्वयं बद्धपरत्वेऽपि तुल्यम् । **अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धमिति** । एतेषां यः कर्ता यस्य वैतत्कर्मेति यच्छब्देनानुवादरूपत्वप्रतिपत्तेः, 'यतो वा इमानि' इत्यादिष्विव सर्ववेदान्तप्रसिद्धः परमपुरुष एवात्र कारणमनूद्यत इति भावः ॥

एवं प्रथमवाक्यगतहेतुः परिहृतः । अथोपरितनवाक्यगतहेतुमनूद्य परिहरति **जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ जीवलिङ्गान्मुख्यप्राणसङ्कीर्तनाच्चेति** । समासान्तर्गता जीवमुख्यप्राणयोरिति षष्ठी सम्बन्धसामान्यविषया । ततश्च जीवस्य लिङ्गित्वेन सम्बन्धः, मुख्यप्राणस्य च वाच्यतया सम्बन्धः इत्यर्थवशात् सिद्ध्यतीति भावः । यद्वा **लिङ्गम्** ज्ञापकम् । उभयोरपि विज्ञाप्यतया ज्ञापकेन सम्बन्ध इति भावः । जीवस्य लिङ्गं ज्ञापकम्, मुख्यप्राणस्य सङ्कीर्तनं ज्ञापकम्; **मुख्यप्राणसङ्कीर्तनाच्च लिङ्गा**दिति ह्युक्तम् । कर्मशब्दस्य स्पन्दरूपक्रियावाचित्वानुपपत्तेः परिशेषात् कीर्तनमेव प्राणलिङ्गमित्यभिप्रायः उपकरणभूतमुख्यप्राणज्ञापकं तत्कीर्तनमपि तदुपकरणिनो जीवस्य प्रतिपाद्यत्वे हेतुरित्यभिप्रायेण सूत्रे मुख्यप्राणलिङ्गमुपात्तम्; न तु प्राधान्येन मुख्यप्राणस्य प्रतिपाद्यत्वसाधकतयोक्तम्; तत्प्रतिपादकशङ्कानुत्थानस्य दर्शितत्वात् । **निर्वाहः**—परिहारः । प्रतर्दनविद्यायां कथं परिहृतम्? तत्रातिदेष्टव्यांशः कः? स चात्र कथं घटते इत्यत्राह **एतदुक्तं भव**तीति । **तदनुरोधेन वर्णनीयानी**त्यन्तेनातिदेष्टव्यांश उक्तः; न [1]तूपासनार्थत्वमप्यतिदेष्टव्यमिति भावः । तस्यात्र सङ्घटितत्वं दर्शयति **अत्राप्युपक्रम** इति । **ब्रह्मोपक्षिप्त**मिति । ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् तत्परत्वं स्वतःप्राप्तमुपक्रमावगतत्वात् प्रबलञ्चेति भावः । **ब्रह्मैवेत्युक्त**मिति । मध्यगतवाक्यस्य परमात्मपरत्वस्योपपादितत्वान्मध्येऽपि परमात्मपरत्वं प्रतिपन्नमित्यर्थः । **उपसंहारे चेति** । **सर्वपापापहतिपूर्वकं स्वाराज्यमिति** । अनेन श्रैष्ठ्याधिपत्यशब्दयोः

---

1 नत्विति । अनेन प्राणशब्दस्यापि प्राणविशिष्टोपासनपरत्वानिर्बन्धः सूच्यते ।

स्वाराज्यं च फलं श्रुतम् । अतोऽस्य वाक्यस्य ब्रह्मपरत्वनिश्चयेन जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानि—इति ॥ १७ ॥ प्रातर्दने ह्युपासात्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् ; अत्रापि "अथास्मिन् प्राण एवैकधा भवति" इति, सामानाधिकरण्यसंभवे वैयधिकरण्यसमाश्रयणायोगात् ब्रह्मण्येव प्राणशब्दप्रयोगनिश्चयेन च प्राणशरीरकब्रह्मोपासनार्थं प्राणसंकीर्तनं लिङ्गं युज्यते ; जीवलिङ्गानां पुनः कथं ब्रह्मपरत्वमित्यत्राह—

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम् अपि चैवमेके । १ । ४ । १८ ॥**

तुशब्दो जीवसंकीर्तनेन वाक्यस्य तत्परत्वसंभावनाव्यावृत्त्यर्थः । अन्यार्थं—जीवसंकीर्तनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति जैमिनिराचार्यो मन्यते । कुतः ? प्रश्नव्याख्यानाभ्याम् । प्रश्नस्तावत्, "तौ ह सुप्तं पुरुषमीयतुः" इत्यादिना सुप्तस्य प्रबुद्धप्राणस्यैव प्राण-

---

स्वाराज्यविशेषणत्वमेव, न तु पृथक्फलवाचित्वम्, चशब्दाभावादित्यभिप्रेतम् । 'सर्वान् पाप्मनोऽपहत्य' इत्यनेन अपहतपाप्मत्वादिगुणाष्टकमुक्तम् ; जरादीनामपि पाप्मान्तर्गतत्वात् । उक्तञ्च **वाक्यकारैः**, "स्युः पाप्मानः कालजरामृत्युशोकादयः सङ्ख्यातत्वात्" इति । **स्वाराज्यम्**—स्वाधीनत्वम् । अतः सत्यकामत्वं सत्यसङ्कल्पत्वं चोक्तं भवति । तत् स्वाराज्यं संसारिभ्योऽस्य श्रैष्ठ्यरूपमाधिपत्यम् । अधिपतिः—परमात्मा; "सर्वस्याधिपतिः" इति श्रुतेः । तत्सम्बन्धि **आधिपत्यम्** । गुणाष्टकं हि ब्रह्मसम्बन्धितया ब्राह्ममुच्यते, "ब्राह्मेण जैमिनिः" इति । अतो ब्रह्मसम्बन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रैष्ठ्यरूपं स्वाराज्यमेतीति श्रुतेरर्थ इत्यभिप्रायः । अनेन ग्रन्थेन फलविशेषकीर्तनस्य परमात्मपरत्वे हेतुतयोपन्यासः **ब्रह्माज्ञानवादिनामनुपपन्न** इति अर्थात् दर्शितो भवति । अविद्यानिवृत्त्यतिरेकेण स्वाराज्यशब्दवाच्याभावात् । दुःखाभावाभिप्रायत्वे लक्षणा ॥ सगुणप्राप्तिविषयं वाक्यमिति चेत्, सत्यम् ; निर्गुणप्राप्तेरप्रामाणिकत्वाद्विशेषणवैयर्थ्यमेव । न हि ततः परं प्राप्यान्तरमुक्तम् ; उपनिषदः समाप्तत्वात ॥ स्वाराज्यं फलं श्रूयते ; ततः किमित्यत्राह **अतोऽस्येति** ।

अत्र निर्वाहप्रकारं दर्शयितुं तत्रोक्तं विशेषमाह[1]**प्रातर्दने हीति** । **त्रैविध्येनेति** हेतौ तृतीया । प्रयोजनतया च हेतुत्वम् । उपासात्रैविध्यसिद्ध्यर्थमित्यर्थः । तस्मिन्निर्वाहेऽत्र सम्भवदंशमाह **अत्रापीति** । प्रातर्दनोपन्यासन्यायेन प्राणलिङ्गस्य ब्रह्मपरत्वमुक्त(त्वं युक्त ?)मित्यर्थः । जीवलिङ्गस्य तु प्रकारान्तरेण निर्वाहप्रतिपादकमनन्तरसूत्रमवतारयितुं जीवलिङ्गनिर्वहणाकाङ्क्षां दर्शयति **जीवलिङ्गानामिति** । **अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥** जीवप्राणलिङ्गयोरपि निर्वाहमुक्त्वा मतान्तरेण तयोर्निर्वाहमाहेति [2]शङ्काव्यावृत्त्यर्थमाह **तुशब्द** इति । तुशब्दो न पूर्वोक्तनिर्वाहव्यावृत्त्यर्थः ; अपि तु पूर्वपक्षव्यावृत्त्यर्थः । व्याख्येयं पदं सविशेष्यमाह **अन्यार्थमिति** । अन्यः कः, तदर्थत्वं कथमित्यत्राह **जीवातिरिक्तेति** ; **प्रबुद्धप्राणस्यैव**—

---

1 प्रातर्दनेहीत्यारभ्योत्तरसूत्रावतरणमिति भाष्यशैलीस्वारस्यादवगम्यते । अतोऽत्र टीकायां तत्तद्भागपृथगवतरणकरणेऽपि, उपासनार्थत्वं विना प्रकारान्तरेण निर्वाहं वक्तुं जीवांशे उपासनार्थत्वासंभवं प्राणे कथञ्चित् संभवं प्रातर्दने तु जीवप्राणोभयोपासनसंभवञ्च विशेषं पूर्वपक्षिमुखेनाहेति एतदवतारिकार्थो भाव्यः ॥ 2 अनेन सूत्रद्वयस्यविभिन्नार्थपरत्ववर्णनमनभिमतमिति स्पष्टम् ।

नामभिः आमन्त्रणाश्रवण-यष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य, पुनः जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते, "क्वैष एतद् बालाके! पुरुषोऽशयिष्ट, क्व वा एतदभूत्; कुत एतदागात्" इति। व्याख्यानमपि, "यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति। एतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः; देवेभ्यो लोकाः" इति जीवादर्थान्तरभूतपरमात्मपरमेव। सुषुप्तस्य हि जीवस्य

---

अनुपरतव्यापारप्राणवत इत्यर्थः। **प्राणनामभिरिति।** **प्राणनाम**शब्देन बृहत्पाण्डरवासस्सोमराजशब्दा विवक्षिताः। "तौ ह सुप्तं पुरुषमीयतुः। तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासस्सोमराजन्" इति हि श्रुतिः। "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इति ज्यैष्ठ्यश्रैष्ठ्यगुणबृहत्त्वात् बृहन्नित्यामन्त्रणम्। पाण्डरवासस्त्वञ्च प्राणधर्मः; "किं मे वासः" इति प्राणेन पृष्टे, "आपो वासः" इति अपां प्राणवासस्त्वोक्तेः; "यच्छुक्लं तदपाम्" इत्यपां शुक्लवर्णश्रवणाच्च। सप्तान्नब्राह्मणे, "अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रः" इति चन्द्रज्योतीरूपत्वदर्शनात् चन्द्रसम्बन्धेन सोमेत्यामन्त्रणं लक्षणया। 'प्राणो वै[1] सम्राट् परं(रमं) ब्रह्म' इति(?)सम्राट्त्वश्रवणात् राजन्नित्यामन्त्र्यते। अतः **प्राणनामभिरित्युक्तम्॥**

ननु कथमामन्त्रणस्य प्राणविषयत्वनिश्चयः? तन्निश्चये सति ह्येवं निर्वाह इति॥ योग्यतासहकृतात् पारिशेष्यात् प्राणविषयत्वनिश्चय इति ब्रूमः। स्वापदशायां काष्ठकल्पत्वात् देहस्यानात्मत्वं स्फुटम्। इन्द्रियाणां तु पाण्डरवासस्त्वादिकमनुपपन्नम्। अतः स्वापेऽप्यनुपरतव्यापारस्य प्राणस्याचेतनत्वेनानात्मत्वख्यापनमपेक्षितम्। पाण्डरवासस्त्वादीनां तद्विशेषणत्वं श्रुतिसमाधियोग्यञ्च। अतो यथोक्त एवार्थ इति॥ नन्वत्रैव बालाक्यजातशत्रुसंवादे "स होवाच य एवासौ चन्द्रे पुरुषः" इति प्रक्रान्ते चन्द्रपर्याये, 'बृहन् पाण्डरवासाः सोमो राजा' इति चन्द्रविषयतया श्रुतानामेषां [नामधेयानां] प्राणविषयत्वं कथम्॥ उच्यते। सुषुप्तपुरुषं गत्वा चन्द्रामन्त्रणस्याघटमानत्वाद्वाक्यस्य देहातिरिक्तात्मबोधनपरत्वावगमादर्थान्तरेषु पदानामनन्वयात् प्राणेऽन्वयार्हत्वाच्च तद्विषयत्वमिति। केचित्तु—एतानि चन्द्रनामान्येव, पाण्डरैरंशुभिर्जगच्छादकत्वात् पाण्डरवासस्त्वम्; 'मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रोऽधिदैवतम्' इति मनसश्चन्द्रदेवत्यत्वात् लक्षणयेन्द्रियवर्गप्रधानस्य मनस आमन्त्रणम्। तच्चेन्द्रियातिरिक्तत्वप्रतिबोधनार्थमित्याहुः। तत्रापि न दोषः। तदानीं भाष्ये **प्राणनामभिरि**त्यत्र **प्राण**शब्दः इन्द्रियविषयो योजनीयः। न हि मुख्यप्राणनामभिरित्युक्तम्। अतः **प्राणनामभि**रिति निर्देशस्य इन्द्रियाभिप्रायत्वं घटते। **जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरः प्रश्नो दृश्यत** इत्यन्वयः। **क्वैष** इति स्वप्नस्थानप्रश्नः। **क्ववाएत**दिति सुषुप्तिस्थानप्रश्नः। प्राणादिव्यतिरिक्तस्य जीवस्य यष्टिघातोत्थापनादिनाऽवगतत्वात् प्रश्नस्य जीवातिरिक्तविषयत्वमित्यर्थः। अत **एव** प्रतिवचनस्यापि जीवातिरिक्तविषयत्वसिद्धिः। **व्याख्यानम्**—प्रतिवचनम्। सप्तम्यन्तः **प्राणशब्दः** [2]प्राणशरीरकपरमात्मवाची। **प्राणाः**—जीवाः। **देवाः**—इन्द्रियाणि। **लोकाः**—लोकनानि, ज्ञानानि। जीवादर्थान्तरपरमात्मपरत्वं दर्शयति **सुषुप्तस्य हीति।** सुषुप्तिस्थानत्वनिष्क्रमणापादानत्वाभ्यां परमात्मत्वं कथमित्यपेक्षायां

---

1 इदं बृहदारण्यक(6-1-3.) वाक्यं चेत्, तत्र सम्राडिति जनकसंबोधनम्। अत इदमुपनिषदन्तरवाक्यं स्यात्। 2 परमात्मपरत्वे नैर्भर्यम्, न तु प्राणशरीरकत्वे।

यत्रोषितस्य जागरितस्वप्नदशासंबन्धिविचित्रसुखदुःखानुभवकालुष्यविरहेण संप्रसन्नस्य स्वस्थतापत्तिः, पुनरप्यस्य यस्माद्भोगाय निष्क्रमणम्; सोऽयं परमात्मा। तथा हि, "सता सोम्य तदा संपन्नो भवति", "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्" इति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा। अतः प्रश्नप्रतिवचनाभ्यां जीवसङ्कीर्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते।

यदुक्तम्—प्रश्नव्याख्याने जीवपरे; सुषुप्तिस्थानं च नाड्य एव; करणग्रामश्च प्राणशब्दनिर्दिष्टे जीव एवैकधा भवति—इति—तदयुक्तम्; नाडीनां स्वप्नस्थानत्वात्;

---

श्रुत्यन्तरेण तदुपपादयति **तथा हीति**। सद्विद्यावाक्यस्य परमात्मपरत्ववैशद्याय सुषुप्तिविषयं श्रुत्यन्तरमुपादत्ते **प्राज्ञेनेति**। जीवकीर्तनस्य तदतिरिक्तबोधनार्थत्वं निगमयति **अत** इति। अनेन निर्वाहवैषम्यप्रदर्शनेन अतिदेश[1]सूत्रस्याधिकशङ्कापरिहारौ दर्शितौ भवतः। प्रतर्दनविद्यायामुपक्रमे जीवलिङ्गावगमः; महावाक्यस्वारस्यं तु परमात्मपरत्वे। इह तूपक्रमोपसंहारमध्येषु जीवलिङ्गावगमात्, अत एव परमात्मनश्चिद्विशिष्टतापरत्वाभावेन उपासात्रैविध्याप्रतिपत्तेः प्रातर्दनन्यायानवकाश इत्यधिका शङ्का। त्रिविधोपासनाभावेपि जीवातिरिक्तब्रह्मबोधनरूपप्रयोजनान्तरसंभवादस्त्यवकाश इत्यनन्तरसूत्रे विवक्षितोऽधिकः परिहार इति ह्यवगम्यते।

अथ प्रतिवचनवाक्यस्य पूर्वपक्षितमर्थं **यदुक्त**मित्यादिनाऽनूद्य दूषयति **तदयुक्त**मिति। **नाडीनां स्वप्नस्थानत्वा**दिति। 'तासु तदा भवति' इत्यत्र **तदा**शब्दः स्वप्नावस्थापरः; 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति' इत्यनन्तरवाक्ये अथशब्देन तदाशब्दनिर्दिष्टावस्थायाः सुषुप्तेश्च अवस्थान्तरत्वावगमात्; उत्तरवाक्ये स्वप्नप्रतिषेधेन पूर्ववाक्यस्य स्वप्नप्रसञ्जकतया तद्विषयत्वावगमाच्चेति भावः॥ ननु यदा स्वप्नं न पश्यति, तदा तासु नाडीषु भवति; तदनन्तरमेवास्मिन् प्राण एवैकधा भवति करणग्राम इतीत्थं किं न स्यात्॥ नैवम्; अथशब्दास्वारस्यप्रसङ्गात्; प्रश्नप्रतिवचनवैषम्यप्रसङ्गाच्च। यदा स्वप्नं न पश्यति, तदा तासु भवति; अथास्मिन्नेकधा भवति करणग्राम इत्युक्ते स्वप्नाभावावच्छिन्नकालादनन्तरं करणग्रामोपरम इति प्रतीयते। तथा सति प्रबोधदशायां करणग्रामाप्यय उक्तः स्यात्। तदनुपपन्नम्॥ सुषुप्तिप्रथमक्षणादनन्तरं करणग्रामाप्यय इति चेत्—तदानीं तदाशब्दस्य क्लिष्टता स्यात्। यदा न पश्यति, तदेत्युक्ते हि स्वप्नाभावावच्छिन्नकृत्स्नकालपरत्वं तदाशब्दस्य प्रतीयते। न हि तत्र स्वापारम्भवाचिशब्दः श्रूयते। अतः 'तदा भवति', 'यदा सुप्तः' इति प्रतिवचनवाक्यद्वयं स्वप्नसुषुप्त्यवस्थाद्वयपरम्। किञ्च 'क्व वा एतदभूत्' इति प्रश्नस्य करणग्रामपरत्वमयुक्तम्; एतच्छब्दस्य प्रकृतपरामर्शित्वात् करणग्रामस्य चाप्रकृतत्वात्। 'पुरुषोऽशयिष्ट' इति पुरुषस्य प्रकृतत्वात् एतच्छब्दः

---

1 अतिदेशसूत्रस्य—तद्व्याख्यातमिति पूर्वसूत्रस्य। तत्सूत्राभिमतमेवानन्तरसूत्रेण जैमिनिर्निर्देशादिमुखेन विवृतमिति भावः। परमात्मप्रकरणे चिदचित्कथनं चिदचिदधिकरणतयास्थितपरमात्मज्ञापनार्थमिति प्रातर्दनन्यायार्थस्वरूपमनुगतम्। तदिहाक्षतमिति हृदयम्। अतिदेशसूत्रस्यैवमभिप्रायकत्वे प्राणशब्दस्यापि प्राणविशिष्टत्वं विनैव परमात्मपरत्वमस्तु; जीवस्यैकधाभावो हि भाष्योक्तो न प्राणविशिष्टे इति चेत्-अस्तु कथमपि। विस्तरः परिष्कारभाष्यार्थदर्पणयोः।

उक्तरीत्या ब्रह्मण एव सुषुप्तिस्थानत्वात्, प्राणशब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य, तदुपकरणभूत-वागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च ।

अपिचैवमेके—वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्तात् विज्ञानमयाद् भेदेन तदाश्रयभूतं परमात्मानमामनन्ति, "य एष विज्ञानमयः पुरुषः, क्वैष तदाऽभूत् कुत एतदा-

पुरुषविषयः । लिङ्गव्यत्ययस्तु न पुरुषपरत्वविरोधी ; प्रातिपदिकस्य प्रकृतपरामर्शित्वात् ; विभक्तेर-प्रधानत्वाच्च । तस्मात् 'क्वैष एतत्, क्व वा एतत्' इति प्रश्नयोः पुरुषविषयत्वे सति प्रतिवचनवाक्ये स्वप्नतदभावयोः प्रतिपाद्यमानत्वात् प्रश्नयोः स्वप्नसुषुप्तिविषयत्वं युक्तम् । अन्यथा सुषुप्तिमात्रप्रश्नस्य स्वप्नसुषुप्तिविषयप्रतिवचनस्य च वैयर्थ्यं स्यात् ; अपृष्टस्य प्रतिवचनायोगात् । प्रतिवचनस्यावस्थाद्वय-विषयत्वमुपपादितम् ॥ अपृष्टः करणग्रामाप्ययः कथमुच्यत इति चेन्न; तस्य पृथक्प्रश्नानपेक्षत्वात् । सुषुप्तेः सकलबाह्यान्तः(न्तर?)करणोपरतिरूपतया सुषुप्त्यन्तर्भूतत्वात् तस्य । अत एव करणग्रामस्य सुषुप्तावप्ययो नाम व्यापारोपरतिरेव ; न तु स्वरूपनाशः । करणग्रामाप्ययोक्तिश्च जीवस्यैकधाभावोपपादनरूपत्वात् कृता । तत्तत्करणद्वारकनानाविधज्ञानप्रसराभावो हि तस्यैकधाभावः । अतो नाडीनां स्वप्नस्थानत्वम् ॥

सुषुप्त्याधारस्य प्राणशब्दोक्तस्य परमात्मत्वे हेतुमाह **उक्तरीत्येति** । उदाहृतश्रुत्यन्तरैकार्थ्य-लक्षणयेत्यर्थः ॥ ननु प्राणशब्दः प्रथमान्तो जीवविषयो मुख्यप्राणविषयो वा किं न स्यात् ॥ उच्यते । जीवविषयत्वे लक्षणा स्यात् ; प्राणशब्दस्य तत्सहचारिणि वृत्तेः । परमात्मपरत्वे तु न लक्षणा, शरीरवाचिशब्दस्य शरीरिपर्यन्ततया मुख्यत्वात् । नन्वेकधाभवनस्य कर्ताऽध्याहार्य इति चेन्न ; स्वप्नं यदा न पश्यति, तदैकधा भवतीति यत्तदोर्नित्यसंबन्धेन प्रत्यासत्त्यतिशयात् एकवाक्यतुल्यत्वात् सुषुप्तस्यैवैकधाभवनकर्तृत्वसिद्धेः । अस्मिन्निति पदस्य विशेष्यं चाकाङ्क्षितम् । अतः सप्तम्यन्तत्वं युक्तम् । अन्यथा अस्मिन्निति पदमासन्नजीवपरं स्यात् । तदा जीवः स्वस्य स्वयमेवाधार इत्युक्तं स्यात् । तदयुक्तम् ; श्रुत्यन्तरविरोधात् ॥ तर्हि मुख्यप्राणस्याधारोऽस्त्विति चेन्न ; तस्य सुषुप्तावेकधाभावस्य प्रत्यक्षविरुद्धत्वात् ; 'स यदा प्रतिबुध्यते' इत्यनन्तरोक्तप्रबोधस्यैकधाभवनसमानकर्तृत्वस्वारस्यात् ; सुषुप्तस्यैव प्रबोधसंभवात् ; मुख्यप्राणस्य स्वापाभावाच्च । तच्छब्दो हि स्वतः प्रथमानिर्दिष्टपरामर्शी ; न तु तदनादरेणाधिकरणपरामर्शी । मुख्यप्राणः प्रथमान्तप्राणशब्दोक्तश्चेत्, एवेत्यवधारणानुपपत्तिश्च । वागाद्यप्ययेऽपि प्रतिपाद्यमाने कथमवधारणं घटते ? अत एव प्रथमान्तत्वे प्राणशब्दस्य करणग्राम-विषयत्वमप्ययुक्तम् ; तस्य प्रबोधकर्तृत्वायोगात् । अत एव पूर्वपक्षिणोक्तमस्मिन्निति पदस्य जीवपरत्वं तद्वैयधिकरण्येन प्राणशब्दस्यापि सप्तम्यन्ततयैव करणग्रामाप्ययाधार [पर ?] त्वमपि निरस्तम् ; वैयधि-करण्ये स्वतःप्राप्तसामानाधिकरण्यस्वारस्यभङ्गात् ; एकधाभवनकर्तृत्वेन करणग्राम इत्यध्याहारप्रसङ्गात् ; 'स यदा प्रतिबुध्यते' इत्युक्तप्रबोधस्य एकधाभवनस्य च समानकर्तृकत्वप्रतिपादकतच्छब्दस्वारस्यभङ्गा-भावात् (ङ्गात् ?) । सामानाधिकरण्ये प्राणशब्दस्य लक्षणा पूर्वोक्ता । अतः प्राणशरीरकतया तच्छब्दवाच्ये ब्रह्मणि सुषुप्तौ जीवावस्थितिपरम्, 'अथास्मिन् प्राण एवैकधा भवति' इति वाक्यमित्यभिप्रायेणाह **प्राणशब्दनिर्दिष्टे ब्रह्मण्येवेति** । सूत्रखण्डं व्याचष्टे **अपि चैवमेक इति** । **क्वैष तदाऽभूत्**—

गात्,...यत्रैष एतत् सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः, तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशः, तस्मिञ्छेते" इति । आकाशशब्दश्च परमात्मनि प्रसिद्धः, "दहरोऽस्मिन्नन्तराकाशः" इति ।

अतोऽत्र जीवसङ्कीर्तनं तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते । तस्मादस्मिन् वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो वेदितव्यतयाऽभिधानात् न तन्त्रसिद्धस्य पुरुषस्य, तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम् (सिद्धम्) ॥ १८ ॥ इति जगद्वाचित्वाधिकरणम् ॥ ५ ॥

३३. वाक्यान्वयाधिकरणम् १-४-६

## वाक्यान्वयात् । १ । ४ । १९ ॥

अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क्वचिद्दृश्यत इति तदतिरिक्त ईश्वरो नाम न कश्चित् संभवतीत्याशङ्क्य निराकरोति । बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते—"न वा अरे पत्युः कामाय पतिः प्रियो भवति" इत्यारभ्य—"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति ; आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति । तत्र संशयः—किमस्मिन्

---

क्व सुप्त इत्यर्थः । **प्राणानां विज्ञानेन विज्ञानमादाय**—प्राणशब्दवाच्येन्द्रियजन्यं ज्ञानं मनसा सहाऽऽदायेत्यर्थः । उपरतव्यापारं मनः [[1]कृत्वा] इत्यर्थः । अनेनेन्द्रियाणामपि व्यापारोपरतिः फलिता । तेषां मनस्सापेक्षत्वात् । "य एषोऽन्तर्हृदय आकाशः" इत्यत्राकाशशब्दस्य भूताकाशव्यावृत्तिः समानप्रकरणस्थप्राणशब्दश्रवणसिद्धा ; प्राणशब्दस्य च मुख्यप्राणव्यावृत्तिराकाशशब्देन न साध्येति नान्योन्याश्रयणम् । जीवलिङ्गनिर्वाहमुपसंहरति **अत** इति । परमात्मगुणान्वयस्य परमात्मशब्दसामानाधिकरण्यस्य वा श्रवणे सति तत्तद्विशिष्टोपासनार्थत्वनिर्णयः । अतोऽत्र परमात्मधर्मान्वयश्रवणाभावात् वैयधिकरण्यनिर्देशाच्च अन्यथासिद्धत्वान्नोपासनार्थत्वं जीवलिङ्गस्य, अपि तु भेदज्ञापनार्थत्वमित्यर्थः । कृत्स्नवेदान्तस्य पुरुषप्रधानपरत्वासिद्धिमुपसंहरति **तस्मा**दिति । इह प्रधानोपादानं जीवस्य तेन विना कारणत्वानुपपत्त्यभिप्रायकृतम् ; यद्वा अनेनाधिकरणद्वयेन ईक्षत्यानन्दमयाधिकरणाक्षेपद्वयस्य परिहृतत्वज्ञापनार्थम् ॥

॥ **वाक्यान्वयात्** ॥ बद्धासाधारणेन कर्मसंबन्धवाचिना शब्देन कर्मरहितशुद्धस्वरूपप्रतिपादनं लाक्षणिकमिति जीवपरत्वं निरस्तम् ; अत्र तु बद्धमुक्तसाधारणात्मशब्दनिर्देशात् मुक्तलिङ्गश्रवणाच्च शुद्धस्वरूपपरत्वं युक्तमिति शङ्कया सङ्गतिः । यद्वा कर्मशब्दस्य क्रियत इति व्युत्पत्त्या प्रकरणस्य ब्रह्मपरत्वमुक्तम् । कर्मफलभूतभोक्तृत्वश्रवणात् अस्य तथा व्युत्पत्तिविशेषप्रदर्शनासंभवात् तन्त्रसिद्धपुरुषपरत्वमिति शङ्कया सङ्गतिः । उत्तराधिकरणे हि सेश्वरसाङ्ख्यप्रत्यवस्थानम् । तस्मादिदमपि निरीश्वरसाङ्ख्यनिराकरणपरमित्यभिप्रायेणात्रापीत्युक्तम् । **बृह**दित्यादि । **कर्मफलभोक्तृत्वकण्ठोक्तिमुमुक्षूपास्यत्वादिब्रह्मलिङ्गवद्वाक्यं विषयः** । पतिजायादिप्रियसंबन्धप्रतिपादकोपक्रममैत्रेयीब्राह्मणं चतुर्थे षष्ठे च अध्याये श्रूयते । तदुभयमपि मैत्रेयीब्राह्मणशब्देन विषयवाक्यतया विवक्षितम् , यथा अन्तस्तद्धर्मोप-

---

[1] कृत्वेत्यर्थसिद्धमत्रोपनिषद्भाष्ये दर्शितं स्यात् ।

वाक्ये द्रष्टव्यतयोपदिश्यमानः तन्त्रसिद्धः पुरुष एव, अथवा सर्वज्ञः सत्यसङ्कल्पः सर्वेश्वरः इति। किं युक्तम्? पुरुष इति। कुतः? आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः—उपक्रमे तावत् पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगात् जीवात्मैव प्रतीयते; मध्येऽपि, "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञाऽस्ति" इति उत्पत्तिविनाशयोगात् स एवावगम्यते; तथाऽन्ते च, "विज्ञातारमरे केन विजानीयात्" इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते; नेश्वरः। अतस्तन्त्रसिद्धपुरुषप्रतिपादनपरमिति निश्चीयते।

ननु "अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" इत्युपक्रमात् अमृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते। तत् कथं पुरुषप्रतिपादनपरत्वमस्य वाक्यस्य॥ तदुच्यते। अत एव ह्यत्र पुरुषप्रतिपादनम्। तन्त्रे ह्यचिद्धर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते। अतः जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिहामृतत्वाय, "आत्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिश्यते।

सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्व एवात्मानो विदिता भवन्तीति आत्मविज्ञानेन सर्वविज्ञानमुपपन्नम्। देवादिस्थावरान्तेषु सर्वेषु भूतेष्वात्मस्वरूपस्य ज्ञानैकप्रकारत्वात्, "इदं सर्वं यदयमात्मा" इत्यैकात्म्योपदेशः; देवाद्याकाराणामनात्माकारत्वात्, "सर्वं तं परादात्" इत्यादिनाऽन्यत्वनिषेधश्च। "यत्र हि द्वैतमिव

---

दशादित्यत्र, 'य एषोऽन्तरादित्ये', 'य एषोऽन्तरक्षिणि' इति वाक्यद्वयम्। **सर्वज्ञस्सत्यसङ्कल्प** इति सिद्धान्तानुगुणविशेषणम्। जीवकर्मविशेषाभिज्ञस्तत्फलदानशक्त इति भावः। किं जगत्कारणवादिवेदान्तप्रतिपाद्यं पुरुषाधिष्ठितं प्रधानम्, उत ब्रह्मेति प्रथमविचारः। तदर्थं बृहदारण्यके मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्त आत्मा किं पञ्चविंशकः, उत परमात्मेति; किमुपक्रमे पतिजायापुत्रादिप्रियसंबन्धः आत्मशब्दस्य पञ्चविंशपुरुषपरतामवगमयति, नेति; किं वाक्यावयवानां सर्वेषां परमात्मन्यन्वयासामञ्जस्यम्, उत पञ्चविंशे इति। यदा परमात्मन्यन्वयासामञ्जस्यम्, तदा पतिजायादिप्रियसंबन्धेनात्मशब्दस्य पुरुषपरत्वावगमाद्द्रष्टव्यतयोक्तः पञ्चविंशक इति तदधिष्ठितं प्रधानं वेदान्तवेद्यमिति स्यात्। यदा पञ्चविंशे वाक्यावयवानां समन्वयासामञ्जस्यम्, तदा पतिजायादिप्रियसंबन्धादात्मशब्दस्य पञ्चविंशपरत्वानवगमान्मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्तः पञ्चविंशातिरिक्त इति कारणवाक्यानां परमात्मपरत्वं स्यादिति। **तथाऽन्ते चेति**। आदिमध्यगतजीवहेत्वनुगृहीतो **विज्ञातृशब्दस्तत्पर** इति भावः। **नन्विति**। पतिजायादिप्रियसंबन्धप्रतिपादकवाक्यात् पूर्वमेवामृतत्वप्राप्त्युपायपरत्वमवगम्यत इत्यर्थः। परिहरति **तदुच्यत** इति। **अत एव** अमृतत्वप्राप्त्युपायोपदेशपरत्वादेवेत्यर्थः। ऐक्योपदेशफलभूतम् एकविज्ञानेनसर्वविज्ञानं जीवप्रतिपादनपरत्वे कथं घटते? बहवो हि जीवाः; न च मिथः कार्यकारणभूताश्चेत्याशङ्क्य प्रकारैक्यादुपपद्यत इत्याह **सर्वेषामित्यादिना**। ऐक्योपदेशश्च तन्निबन्धन इत्याह **देवादिस्थावरान्तेष्विति**। ऐक्यविधिशेषभूतभेदनिषेधं प्रतिविवक्षन् भेददर्शनेनानर्थप्रतिपादकवाक्यस्यार्थमाह **देवाद्याकाराणामिति**। देवाद्याकारस्यानात्माकारत्वात् तस्य तदनन्यत्वमुक्तम्; तस्मादात्मनोऽन्यत्वदर्शनं नाम निष्कृष्टस्वरूपव्यतिरिक्तदेवाद्याकारदर्शनमिति तस्यानर्थहेतुत्वमुच्यत इत्यर्थः। प्रबुद्धस्य भेदनिषेधं प्रतिवदति **यत्र हीति**।

भवति" इति च नानात्वनिषेधेन एकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते। "अस्य (तस्य ह वा एतस्य) महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः" इत्याद्यपि प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते।

एवमस्मिन् वाक्ये पुरुषपरे निश्चिते सति, तदैकार्थ्यात् सर्वे वेदान्ताः तन्त्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानम्; नेश्वरः—इति—

एवं प्राप्ते प्रचक्ष्महे वाक्यान्वयात्—इति। सर्वेश्वर एवास्मिन् वाक्ये प्रतीयते; कुतः? एवमेव हि वाक्यावयवानामन्योन्यान्वयः समञ्जसो भवति। "अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" इति याज्ञवल्क्येनाभिहिते, "येनाहं नामृता स्याम्, किमहं तेन कुर्याम्। यदेव भगवान् वेद, तदेव मे ब्रूहि" इत्यमृतत्वानुपायतया वित्ताद्यनादरेण अमृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यत्वेनोपदिष्टोऽयमात्मा परमात्मैव; "तमेव विदित्वाऽति मृत्युमेति", "तमेवं विद्वानमृत इह भवति; नान्यः पन्थाः" इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्। परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूपयाथात्म्यम् अपवर्गसाधनपरमपुरुषवेदनोपयोगितयाऽवगन्तव्यम्; न स्वत एवोपायत्वेन। अतोऽत्र परमात्मैवामृतत्वोपायतया, "द्रष्टव्यः," इत्यादिनोपदिश्यते।

तथा. "अस्य (तस्य ह वा एतस्य) महतो भूतस्य निश्श्वसितमेतत् यदृग्वेदः" इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य, मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न संभवति। तथा, "आत्मनो वा अरे दर्शनेन" इत्यादिना एकविज्ञानेन सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावक्लपते।

---

अनात्माकाराणां देवत्वादीनां बहुत्वादेकाकार आत्मनि देवत्वादीनि न सन्तीति निषिध्यत इत्यर्थः। एवमनर्थहेतुतया कदाचिन्निवृत्तिहेतुमत्तया च प्रतिपन्नं भेददर्शनं देवादिभेददर्शनमेवेत्युक्तं भवति। कारणत्वं कथमित्यत्राह **तस्य ह वा** इति (अस्येति?)। जीवाधिष्ठितप्रधानादाकाशगुणशब्दोत्पत्तिरिति ऋग्वेदादिकारणत्वमुपपद्यत इत्यर्थः। एवं पूर्वपक्षयुक्तिवशात् फलितमयोगव्यवच्छेदप्रतिक्षेपं दर्शयति **एवमस्मिन्निति**। पादसङ्गत्यादिकं पूर्ववत्॥

राद्धान्ते—**समञ्जसो भवति**—स्वारसिको भवतीत्यर्थः। अस्वरसान्वयो हि परैरुच्यते। श्रुतेः स्वारस्यं नाम सजातीयश्रुत्यैकार्थ्यमित्यभिप्रायेणाह **तमेव विदित्वेति**। श्रुतावपि प्रजापतिवाक्यादिषु जीवस्वरूपस्य प्रतिपाद्यमानत्वात् तदैकार्थ्यात स्वारस्यमित्यत्राह **परमपुरुषेति**। प्रधानभूतोपायपरवाक्यैकार्थ्यं स्वारसिकमित्यर्थः, श्रुत्यन्तरैकार्थ्यात् ब्रह्मवेदनस्यैवामृतत्वोपायत्वमित्युपपादितमुपसंहरति **अतोऽत्रेति**। एवमुपक्रमवाक्यसामञ्जस्यं दर्शितम्। वाक्यान्तराणामप्यन्वयस्वारस्यं दर्शयन् कारणत्वं स्वपक्षोपपादकमेव सत् परपक्षप्रतिक्षेपकं चेत्याह **तथा तस्येति** (**तथा अस्येति**?)। बद्धस्य सर्वज्ञत्वाद्ययोगान्मुक्तस्य जगद्व्यापारशून्यत्वाच्च कृत्स्नजगत्कारणत्वं न संभवतीत्यर्थः। **पुरुषमात्रस्य**—जीवमात्रस्य। अल्पशक्तित्वं **मात्र**चा अभिप्रेतम्। यद्वा **कर्मपरवशस्य, मुक्तस्येति** पदाभ्यां स्वपक्षे सर्वावस्थस्य जीवस्य जगत्कारणत्वानुपपत्तिरुक्ता; साङ्ख्यमतेऽपि तदनुपपत्तिमाह **निर्व्यापारस्य च पुरुषमात्रस्येति**। निमित्तोपादानभावानुगुणसङ्कल्पशक्तियोगाभावादिति भावः। कारणत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि राद्धान्तोपपादकमित्याह **तथा आत्मन** इति। एकविज्ञानेनसर्वविज्ञाननिर्वाहं परोक्तं

यत्त्वेतत्—एकरूपत्वादात्मनामेकात्मविज्ञानेन सर्व(र्वात्म)विज्ञानमुच्यत इति—तदयुक्तम्। अचेतनप्रपञ्चज्ञानाभावेन सर्वविज्ञानाभावात्। प्रतिज्ञोपपादनाय च, "इदं ब्रह्मेदं क्षत्रम्" इत्युपक्रम्य, "इदं सर्वं यदयमात्मा" इति प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चम् 'इदम्' इति निर्दिश्य, 'एतत् अयमात्मा' इत्यैकात्म्योपदेशश्च परमात्मन एवोपपद्यते । न हि इदंशब्दवाच्यं चिदचिन्मिश्रं जगत् पुरुषेणाचित्संसृष्टेन, तद्वियुक्तेन स्वरूपेण वाऽवस्थितेन चैक्यमुपगच्छति । अत एव, "सर्वं तं परादात् योऽन्यत्राऽऽत्मनः सर्वं वेद" इति व्यतिरिक्तत्वेन सर्ववेदननिन्दा च ; तथा प्रथमे च मैत्रेयीब्राह्मणे, "महद्भूतमनन्तमपारम्" इति श्रुताः महत्त्वादयो गुणाः परमात्मन एव संभवन्ति। अतः स एवात्र प्रतिपाद्यते।

यत्तूक्तम्—पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मनः उपक्रमे त्वन्वेष्टव्यतया प्रतिपादनात् तद्विषयमेवेदं वाक्यमिति—तदयुक्तम् ; "आत्मनस्तु कामाय" इत्यात्मशब्देन जीवात्मसंशब्दने तस्य, "आत्मा वा अरे द्रष्टव्यः" इत्यनेनानन्वयप्रसङ्गात् । "आत्मा वा अरे द्रष्टव्यः" इत्यात्मनो द्रष्टव्यत्वोपयोगितया, "आत्मनस्तु कामाय" इत्युपदिष्टमिति प्रतीयते । आत्मनस्तु कामाय—आत्मनः कामसंपत्तये । काम्यत इति कामः । आत्मन इष्टसंपत्तय इति यावत्। न च 'जीवात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्ति' इत्युक्ते सति, तस्य जीवस्य स्वरूपमन्वेष्टव्यं भवति। प्रियमेव ह्यन्वेष्टव्यम्; न तु प्रियं प्रति शेषिणः प्रियवियुक्तं

---

यत्त्वेतदित्यादिनाऽनूद्य, **तदयुक्त**मित्यादिना दूषयति। ऐकात्म्योपदेशानुपपत्तिमाह **प्रतिज्ञोपपादनाये**ति। श्रुतिस्थेदंशब्दस्य स्थाने **एत**च्छब्दो भाष्ये स्वाक्यत्वज्ञापनाय प्रयुक्तः। **इदमयमात्मे**ति कार्यस्य कारणतादात्म्योपदेशः। जीवस्य तदनुपपत्तिमुपपादयति **न ही**ति। कार्यस्य कारणेन हि स्वरूपैक्यसंभवः, सूक्ष्मस्थूलचिदचिच्छरीरकः परमात्मेति कार्येण जगतैक्यं तस्यैव हि संभवति; न तु बद्धस्य वा मुक्तस्य वा जीवस्याकारणभूतस्य संभवतीत्यर्थः। **अत एवे**ति। सर्वस्य परमात्मात्मकत्वादेवातदात्मकत्वानुसन्धाननिषेधः। न तु देवादिदृष्टिनिषेधः; प्रागुक्तहेतुनिबन्धनत्वात् भेदनिषेधस्येत्यर्थः। **प्रथमे चे**ति। मैत्रेयीब्राह्मणा (नाम) नेकत्वात् **प्रथम** इति विशेषितम्। उत्तरमैत्रेयीब्राह्मणे, 'महद्भूतमनन्तमपारम्' इति विशेषणाश्रवणेऽपि 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायात् महत्त्वभूतत्वादिकमप्युक्तं भवतीति भावः। पतिजायादिभोग्यत्ववाचिवाक्यस्याप्यन्वयस्वारस्यं हि सूत्राभिप्रेतम्; वाक्यावयवेषु प्रधानभूतोपक्रमावयवस्य वाक्यशब्देनाविवक्षितत्वानुपपत्तेः। तस्मात् तदुपपादयितुं परोक्तार्थं **यत्तूक्त**मित्यादिनाऽनूद्य, दूषयति **तदयुक्त**मित्यादिना। अनन्वयस्यानिष्टत्वं कथम्; तस्य प्रसङ्गो वा कथमित्यत्राह **आत्मा वा** इति। "आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः" इत्युक्ते, 'आत्मनस्तु कामाय' इत्युक्तस्य वाक्यस्य आत्मनो द्रष्टव्यतोपयोगित्वं हि स्वरसतः प्रतीयत इत्यर्थः। अतः, मा भूदन्वय इति न वाच्यमिति दर्शितम्। अथ जीवपरत्वेऽनन्वयमुपपादयति **आत्मनस्त्वि**त्यादिना। **इष्टसम्पत्तये**—सुखादिसम्पत्तये। ततः किमनन्वयस्येत्यत्राह **न चे**ति। **नेत्यस्यान्वेष्टव्यं भवती**त्युत्तरत्रान्वयः। कथमन्वेष्टव्यत्वासिद्धिरित्यत्राह **प्रियमेव ही**ति। पत्यादीनामात्मनः प्रियत्वे तेषामन्वेष्टव्यत्वं स्यात्; प्रियस्यैव पुरुषार्थत्वादित्यर्थः। एवकाराभिप्रेतमाह **न त्वि**ति। **प्रियवियुक्तम्**—पुत्रपत्यादिवियुक्तम्।

स्वरूपम् । यस्मादात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्ति, तस्मात् पत्यादि प्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसङ्गतं भवति । प्रत्युत, न पत्यादिशेषतया पत्यादीनां प्रियत्वम्; अपित्वात्मनः शेषतया पत्यादीनां प्रियत्वमित्युक्ते, स्वशेषतया त एवोपादेयास्स्युः । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यस्य परेणानन्वये, वाक्यभेदः प्रसज्यते । अभ्युपगम्यमानेऽपि वाक्यभेदे, पूर्ववाक्यस्य न किञ्चित् प्रयोजनं दृश्यते ।

अतः पत्यादि सर्वं प्रियं परित्यज्याऽऽत्मन एवान्वेष्टव्यत्वं यथा प्रतीयते, तथा वाक्यार्थो वर्णनीयः । सोऽयमुच्यते—"अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायतामुक्त्वा, 'वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तम्, अपितु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम् । अतो य एव स्वयं निरतिशयानन्दस्सन् अन्येषामपि प्रियत्वलेशास्पदत्वमापादयति, स परमात्मैव द्रष्टव्यः' इत्युपदिश्यते । तदयमर्थः—"न वा अरे पत्युः कामाय पतिः प्रियो भवति"—न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्य प्रियः स्यामिति स्वसंकल्पात् प्रिया भवन्ति; अपित्वात्मनः कामाय । परमात्मनः स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्त्यर्थ इत्यर्थः (?) । परमात्मा हि कर्मभिराराधितः तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । "एष ह्येवाऽऽनन्दयाति" इति श्रुतेः । न तु तत्तद्वस्तु स्वरूपेण प्रियमप्रियं वा । यथोक्तम् "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥ तदेव

---

तद्विवृणोति **यस्मा**दिति । न केवलं स्वाभिमतार्थासङ्गतिः; अनभिमतार्थसङ्गतिश्चेत्याह **प्रत्युते**ति । **त एवोपादेयाः स्यु**रिति । सकलेतरत्यागपूर्वकमात्मनो द्रष्ट(ऽन्वेष्ट)व्यत्वस्य विरोध एव स्यादित्यर्थः । जीवपरत्वेऽनन्वयश्चेत्, मा भूदन्वय इत्यत्राह **परेणे**ति । **परेण**—'आत्मा वा अरे द्रष्टव्यः' इति परेण वाक्येन । **वाक्यभेदः**—महावाक्यभेदः । एकवाक्यत्वेन निर्वाहे सुशकेऽपि वाक्यभेदोऽनुपपन्नः; "संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति न्यायादित्यर्थः । वाक्यभेदाभ्युपगमेऽपि प्रयोजनाभावाच्च अनन्वयोऽनुपपन्न इत्याह **अभ्युपगम्यमानेऽपी**ति । एवं परपक्षानुपपत्तेः परिशेषादर्थान्तरपरत्वं सिद्धमित्याह **अत** इति । उपपन्नार्थः क इत्यत्राह **सोऽयमुच्यत** इति । **स्वयं निरतिशयानन्दस्सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयती**ति । अन्येषामानन्दो यदधीनः, तस्यानन्दोऽनवधिक इत्यर्थसिद्धम् । यथाऽन्येषां विद्यां धनं वा ददतः पुरुषस्य ज्ञानाधिकत्वं धनाधिकत्वं चार्थसिद्धम् । "स एको ब्रह्मणः आनन्दः", "यतो वाचो निवर्तन्ते", "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिश्रुत्यन्तरेषु तत् स्पष्टमभिहितं चेत्यभिप्रायः । **उपदिश्यत** इत्यन्तेन श्रुतेस्तात्पर्यार्थ उक्तः । अस्यार्थस्य शब्दवाच्यत्वं कथमित्यत्राह **तदयमर्थ** इति । परमात्मनः स्वाराधकाभिमतदानस्येष्टत्वं विवृणोति **परमात्मा ही**ति । **प्रतिनियते**ति । स्वरूपनियमो नाम स्रक्चन्दनादिषु अस्येदमेव भोग्यम्, नान्यदिति नियमः । परिमाणनियमः भोग्यत्वपरिमाणनियमः । न हि मनुष्यभोग्यस्य स्रगादेर्देवभोग्यस्रगादितुल्यभोग्यत्वमस्ति । आश्रितप्रियप्रतिलम्भकत्वे श्रुतिमाह **एषह्येवे**ति । **तदेव प्रीतय** इति । कस्यचिद्वस्तुनः प्रियत्वं तत्स्वरूपप्रयुक्तं चेत्, सर्वदा सर्वेषां प्रियत्वं स्यात् ।

कोपाय यतः प्रसादाय च जायते। तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्" इति।

"आत्मनस्तु कामाय" इत्यस्य जीवात्मपरत्वेऽपि, "आत्मा वा अरे द्रष्टव्यः" इति तु परमात्मविषयमेव। तत्रायमर्थः—यस्मात् पत्यादीनामिष्टसंपत्तये तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्ते, अपित्वात्मेष्टसंपत्तये स्वतन्त्रेण स्वप्रियत्वेनोपादीयन्ते—तस्मात् य एवाऽऽत्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा, स एव हि द्रष्टव्यः; न दुःख-मिश्राल्पसुखदुःखोदर्काः परायत्ततत्तत्स्वभावाः पतिजायापुत्रवित्तादयो विषयाः—इति।

अस्मिंस्तु प्रकरणे जीवात्मवाचिशब्देनापि परमात्मन एवाभिधानात्, "आत्मनस्तु कामाय", "आत्मा वा अरे द्रष्टव्यः" इति पूर्वोक्तप्रक्रियया उभयत्राऽऽत्मशब्दौ एकविषयौ॥

---

न च तदस्ति। कञ्चित्प्रति कदाचित्प्रियत्वमप्रियत्वं च परसङ्कल्पाधीनमित्यर्थः। ननु, "आत्मनस्तु कामाय सर्वं प्रियं भवति", "आत्मा वा अरे द्रष्टव्यः" इति वाक्ययोर्जीवपरत्वेऽप्यन्वयः संभवति। तथाहि—न हि तत्तत्परतन्त्रो भोक्ता भुङ्क्ते, अपि तु स्वातन्त्र्येण तत्स्वीकारपरित्यागक्षमः। तस्मात् प्रकृष्टानन्दरूपे निष्कृष्टे आत्मनि तेनैव स्वातन्त्र्येण प्रवर्ततेति शङ्कायाम्, 'आत्मनस्तु कामाय' इत्यस्य जीवपरत्वाभ्युपगमेऽपि, 'आत्मा वा अरे द्रष्टव्यः" इति वाक्यस्य परमात्मपरत्व एव स्वारस्यमुपपादयति **आत्मनस्तु कामायेत्यस्येति**। येन स्वातन्त्र्येण स्वात्मदर्शने प्रवर्तते, तेनैवानवधिकातिशयानन्दरूपपरब्रह्मप्राप्तौ प्रवर्तते, तस्यैव स्वाभाविकनिरतिशयानन्दयोगादित्यर्थः। प्रकृष्टानन्दस्यैव प्रेप्सितव्यतारूपार्थौचित्याति-शयादात्मशब्दार्थवैरूप्यं सोढव्यम्; मुण्डकोपनिषदि, "तपसा चीयते ब्रह्म', 'तस्मादेतद्ब्रह्म' इति वाक्यद्वयस्थब्रह्मशब्दवैरूप्यवदिति भावः। एवं तर्ह्ययमेव निर्वाहः स्यादिति शङ्कायाम्—अस्मादप्यर्थात् पूर्वोक्तार्थ उपपन्नः; आत्मशब्दवैपरीत्या(वैरूप्या)भावादित्यभिप्रायेणाह **अस्मिंस्तु प्रकरण** इति। वक्ष्य-माणसूत्रोक्तप्रकारेण जीववाचिशब्दानां परमात्मपर्यन्ताभिधायित्वमुपजीव्योक्तं **परमात्मन एवाभिधाना-**दिति। अयमर्थः—'महद्भूतमनन्तमपारम्', 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु-विनश्यति' इत्यत्र विज्ञानघनशब्दो जीवविषयः, भूतानुविनाशित्वावगमात्। अत्रामृतत्वप्राप्त्युपायत्व-सर्वज्ञत्व-तदेकविज्ञाननिबन्धनसर्वविज्ञान—व्यतिरिक्तवेदननिन्दादिभिः प्रकरणस्य परमात्मपरत्वदार्ढ्या-वगमात्, महद्भूतमनन्तमपारमिति पदैः सामानाधिकरण्याच्च जीववाचिनोऽप्यस्य विज्ञानघनशब्दस्य परमात्मपरत्वमवर्जनीयम्, तस्माज्जीववाचिशब्दस्यापि परमात्मपरत्वनिश्चयानुगुणबहुवाक्यस्वारस्यभङ्गेन अन्यतरात्मशब्दस्यार्थकथनात् अर्थैकरूप्यवर्णनादपि[1]—तादृशबहुवाक्यस्वारस्यानुगुणं परमात्मपरतयैव 'आत्मनस्तु कामाय', 'आत्मा वा' इति वाक्यद्वयस्थात्मशब्दयोरर्थैकरूप्यवर्णनं युक्तमिति॥

प्रतिज्ञासिद्धेः इत्यादिसूत्रत्रयम् 'आत्मनस्तु कामाय पतिः प्रियो भवति' इत्यारभ्य 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' इति जीवोपक्रमनिर्वाहपरं परैर्व्याख्यातम्। तदयुक्तम्;

---

1 अर्थैकरूप्यं—जीवपरतयाऽर्थैकरूप्यम्। आत्मनस्तु इति प्रथमात्मशब्दमात्रस्य वा, तस्य आत्मा वा इति द्वितीयस्य चेति आत्मशब्दद्वयस्याप्यर्थैकरूप्याय वा जीवमात्रपरत्वे परमात्मपर-जीवशब्दकप्रकरणस्वारस्यभंग एवेत्यर्थः।

मतान्तरेणापि जीवशब्देन परमात्माभिधानोपपादनायाह—

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । १ । ४ । २० ॥**

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गम्, यत् जीवात्मवाचिशब्दैः परमात्मनोऽभिधानमित्याश्मरथ्य आचार्यो मन्यते स्म । यद्ययं जीवः परमात्मकार्यतया परमात्मैव न भवेत्, तदा तद्व्यतिरिक्ततया, परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति। "आत्मा वा इदमेक एवाग्र आसीत्" इति प्राक् सृष्टेरेकत्वावधारणात्, "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति" इत्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात् तस्मिन्नेव लयश्रवणाच्च जीवानां ब्रह्मकार्यत्वेन ब्रह्मणैक्यमवगम्यते। अतो जीवशब्देन परमात्माभिधानमिति ॥ २० ॥

**उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः । १ । ४ । २१ ॥**

यदुक्तम्—जीवस्य ब्रह्मकार्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति—तदयुक्तम्—"न जायते म्रियते वा विपश्चित्" इत्यादिनाऽजत्वश्रुतेः; जीवात्मनां प्राचीनकर्मफलभोगाय जगत्सृष्ट्यभ्युपगमाच्च; अन्यथा विषमसृष्ट्यनुपपत्तेश्च; ब्रह्मकार्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्षः आकाशादिवदवर्जनीय इति तदुपायविधान-अनुष्ठानानर्थक्याच्च; घटादिवत् कारणप्राप्तेर्विनाशरूपत्वेन मोक्षस्यापुरुषार्थत्वाच्च । जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरुत्तरत्र प्रपञ्चयिष्यते । अतः, "एष संप्रसादोऽस्माच्छरीरात्

---

पूर्वसूत्रेणोपक्रमस्य कृतनिर्वाहत्वात् । **वाक्यान्वयो** नाम वाक्यावयवानां मिथोऽन्वयः; न तु वाक्यान्तरेणान्वयः, सूत्रस्यैकप्रकरणविषयत्वात्; प्रकरणस्य महावाक्यरूपत्वात् । उपक्रमश्च वाक्यावयवेषु प्रधानभूतः । स कथं वाक्यावयवानामन्वयं परमात्मविषयतयैव प्रतिपादयता सूत्रेणाविवक्षितः स्यात् । अतो जीवशब्देन परमात्माभिधाननिर्वाहपरमुत्तरसूत्रत्रयं मन्वानः तत्रापि चरमसूत्रस्यैव सूत्रकाराभिमतनिर्वाहपरत्वं हृदि निधाय ततः पूर्वस्य सूत्रद्वयस्य मतान्तरपरत्वं वदन् सूत्रत्रयमवतारयति **मतान्तरेणापीति** । मतान्तरेण सूत्रकारानभिमतेनेत्यर्थः । अनेन **यादवप्रकाशोक्तयोजना**-व्यावृत्तिः । **जीवशब्देन परमात्माभिधानोपपादनायेति** । अनेन सर्वव्याख्यातृभिमतनिर्वाहव्यावृत्तिर्दर्शिता । **जीवशब्देन**—उपरितनवाक्यगतेनेत्यर्थः ॥ **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः** ॥ **एकविज्ञान प्रतिज्ञासिद्धेरिदं लिङ्गमिति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्यकारणभावकृतैक्यस्य लिङ्गं जीवात्मवाचिशब्देन परमात्माभिधानमित्यर्थः । हेतुवशात् साध्यप्रतिज्ञांशोऽध्याहृतः **जीवात्मवाचीति** । अयं **यादवप्रकाशपक्षो**ऽस्मिन् सूत्र उपन्यस्तः । तत्र हि कार्यात्मना कारणात्मना च जीवब्रह्मणोर्भेदाभेदौ स्वाभाविकौ मतौ ॥ **उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः** । विरुद्धमतान्तरं हि पूर्वमतनिरासेन विना नोदेति; तस्मात् सूत्राभिप्रेतमाश्मरथ्यमतदूषणमाह **यदुक्तमित्यादिना** । अजत्वश्रुतिविरोधः अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गः फलभोगार्थसृष्टिविरोधः उपायानुष्ठानवैयर्थ्यम् अपुरुषार्थता च दूषणम् । 'तोयेन जीवान् व्यससर्ज' इत्यादयो जीवोत्पत्तिप्रलयवादाः कथमित्यत्राह **जीवात्मन इति** । **सूत्रार्थमाह अत इति** ।

समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" इत्युत्क्रमिष्यतः परमात्मभावात् जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते स्म ॥

**अवस्थितेरिति काशकृत्स्नः । १ । ४ ॥ २२ ॥**

यदुक्तम्—उत्क्रमिष्यतो जीवस्य ब्रह्मभावाद् ब्रह्मणस्तच्छब्देनाभिधानमिति--तदप्ययुक्तम्; विकल्पासहत्वात्—अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवम्भावः किं स्वाभाविकः, उतौपाधिकः; तत्रापि पारमार्थिकः, अपारमार्थिको वेति।

स्वाभाविकत्वे, ब्रह्मभावो नोपपद्यते; भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात् ॥ अथ भेदेन सह स्वरूपमप्यपैतीति—तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः; अपुरुषार्थत्वादि-दोषप्रसङ्गश्च।

पारमार्थिकौपाधिकत्वे, प्रागपि ब्रह्मैवेति, 'उत्क्रमिष्यत एवम्भावात्' इति विशेषो न युज्यते वक्तुम्। अस्मिन् पक्षे ह्युपाधिब्रह्मव्यतिरेकेण वस्त्वन्तराभावात् निरवयवस्य ब्रह्मण उपाधिना छेदाद्यसंभवाच्चोपाधिगत एव भेद इति उत्क्रान्तेः प्रागपि ब्रह्मैव।

औपाधिकस्य भेदस्यापारमार्थिकत्वे, 'कस्यायमुत्क्रान्तौ ब्रह्मभावः' इति वक्तव्यम् ॥ ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेन्न; नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्यो-पाधितिरोधानासंभवात्। तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः। प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावः, स्वरूपनाशो वा स्यात्। अतो नित्याविर्भूतस्वस्व-रूपत्वात् तस्योत्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इति 'उत्क्रमिष्यतः' इति विशेषणं व्यर्थमेव।

---

॥ **अवस्थितेरिति काशकृत्स्नः** ॥ अत्रापि पूर्ववदभिप्रेतं दूषणमाह **यदुक्त**मित्यादिना। संभावितयोः पक्षयोः पराभिमतं परिशेषयितुं स्वाभाविकौपाधिकत्वविकल्पः कृतः। **शङ्करभास्करोक्त-**पक्षद्वयस्यापि, 'उत्क्रमिष्यतः' इति सूत्रेणैकेन सूचितस्य एतेन निराचिकीर्षितत्वज्ञापनाय पारमार्थिकत्वा-परमार्थिकत्वविकल्पः कृतः। **स्वाभाविकत्व** इत्यादिना मुक्तौ स्वरूपं किं विद्यमानम्, उताविद्यमानमिति विकल्पमभिप्रेत्य, ग्रन्थद्वयेन शिरोद्वयं दूषयति **भेदस्ये**त्यादिना। प्रथमविकल्पस्य द्वितीयं शिरो दूषयंस्तद्विशेषणीभूतद्वितीयविकल्पगतं प्रथमं शिरश्च दूषयति **पारमार्थिके**ति। प्रागपि ब्रह्मत्वमुपपादयति **अस्मिन् पक्षे ही**ति। द्वितीयविकल्पे द्वितीयं शिरो दूषयति **औपाधिकस्ये**ति। तिरोधानासम्भवः कथमित्यत्राह **तिरोधानं नामे**ति। तिरोधानं नाम एवंविधमस्तु; ततः किमित्यत्राह **प्रकाश एवे**ति। तिरोधानं न संभवति चेत्—नित्याविर्भूतं स्यात्। ततः किमित्यत्राह **अत** इति ॥

ननु 'उत्क्रमिष्यत' इत्यत्र न तात्पर्यम्; सर्वदा ब्रह्मभावो विवक्षितः। अत उपाधेः पारमार्थ्यापारमार्थ्यपक्षद्वयेऽपि न दोष इति चेन्न—पूर्वं तथाभावे बन्धनिवृत्तिप्रयोजनस्य शास्त्रस्या-नारम्भणीयत्वप्रसङ्गात् ॥ औपाधिकहेयप्रहाणार्थमारम्भणीयतेति चेन्न—औपाधिकहेयस्य ब्रह्मण्यच्छेद्ये संबन्धित्वादेकत्वप्रतिसन्धानेन जीवेश्वरविभागाभावप्रसङ्गात् ॥ प्रदेशभेदादप्रतिसन्धानं चेत्—एकस्योपाधौ गच्छत्येकस्यापि प्रतिसन्धानं न स्यात्—इत्यादिदूषणजातं प्रदेशान्तरोक्तत्वादिह न

"अस्मात् शरीरात् समुत्थाय" इति पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह; अपितु पूर्वसिद्धस्वरूपस्याऽऽविर्भावम्। तथा हि वक्ष्यते, "संपद्याविर्भावः स्वेनशब्दात्" इत्यादिभिः।

अतः, "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य", "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः", "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थितेर्जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते स्म। जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचकः, न जीवमात्रस्येति पूर्वमेवोक्तम्, "नामरूपे व्याकरवाणि" इत्यत्र।

---

प्रदर्शितम् (प्रपञ्चितम्)। अपरमार्थोपाधिकृतभेदवादे च, 'उत्क्रमिष्यत' इति पदमविवक्षितं कृत्वा सर्वदा ब्रह्मभावाविर्भावाभ्युपगमे अध्यासानुपपत्तिः, तिरोधानाभावात्। न ह्यतिरोहितस्वरूपे तत्त्वतो भासमाने अध्याससम्भवः। तिरोधानाभ्युपगमे च दूषणं दर्शितम्॥ अतिरोहितस्वरूपस्यापि भेददर्शनं संभवतीति चेत्—आच्छादकाविद्याकल्पनवैयर्थ्यम्; मुक्तावपि भेददर्शनप्रसङ्गश्च॥ स्वरूपयाथात्म्यावभासस्य भ्रमविरोधित्वाभावात् निवर्तकज्ञानेन दोषस्य निवृत्तत्वात् न भेददर्शनमिति चेन्न—निवर्तकज्ञानस्यापि पूर्वमवभासमानात्स्वरूपात् अनतिरिक्तविषयकत्वेन भ्रमनिवर्तकत्वानुपपत्तेः। न हीदमिति शतशो विशदतरमुपजायमानमपि ज्ञानं रजतभ्रमं निवर्तयतीत्यादिकमनुपपत्तिशतं पूर्वोक्तत्वादिह लेशतो दर्शितम्। तर्हि, 'अस्माच्छरीरात्' इत्यादिश्रुतेः कोऽर्थ इत्यत्राह **अस्मादिति**। तर्हि कथमभिनिष्पत्तिश्रुतिरित्यत्राह **तथाहि वक्ष्यत** इति। अथ सूत्रं व्याचष्टे **अत** इति। **अतः**—मतान्तरेण निर्वाहानुपपत्तेरित्यर्थः। अवस्थितिशब्दस्य स्वतोऽधिकरणमाकाङ्क्षितम्, कुत्रेति; न तु किम्भावेनेति॥ कथमवस्थानमित्याकाङ्क्षाऽस्तीति चेत्—सा तूत्थाप्या; न तु स्वतः। किम्भावेनेत्याकाङ्क्षा न क्वचिदप्यस्ति। अतः सूत्रस्वारस्यानुगुणं वाक्यमादत्ते **य आत्मनीति**। अचिदन्तःप्रवेशस्य स्पष्टत्वात्[1] तज्ज्ञापनार्थम्, जीवसामानाधिकरण्यस्य स्फुटतरार्थश्रुत्यन्तरैकार्थ्येन शरीरशरीरिभावनिबन्धनत्वज्ञापनार्थञ्च 'अनेन जीवेनात्मना' इति वाक्यं प्रथममुपात्तम्। कारणावस्थायामपि शरीरत्वज्ञापनार्थं देवताविशेषनिर्णयार्थं चोदाहरति **योऽक्षरमन्तरे सञ्चरन्निति**। अन्तस्स्थितिनियमनयोरनुप्रवेशप्रशासनशब्दाभ्यां प्रत्यभिज्ञाततयैकार्थत्वात् सर्वात्मत्वविवरणरूपत्वाच्चोपादत्ते **अन्तः प्रविष्ट** इति। सप्तम्यन्तपदैः कुत्रेत्याकाङ्क्षा शमिता। नियन्तृत्वा[मृतत्वा]दिभिः कथमित्याकाङ्क्षा शमिता। तत्तदवेद्यत्वेन नियन्तृत्वेन निर्दोषत्वेन च तेष्ववस्थानमित्यर्थः। नन्ववस्थितिरस्तु; ततः कथं जीवशब्दस्य ब्रह्मवाचित्वमित्यत्राह **जीवशब्दश्चेति**। शरीरवाचिशब्देषु आकृतिनयावतारः समर्थित इत्यर्थः। कस्मिन् प्रदेश इत्यत्राह **नामेति**।

सूत्रार्थो व्याख्यातः। अस्य सूत्रस्य आश्मरथ्यौडुलोमिमतोक्तेः पूर्वमनिवेशितत्वात् अतःपरं मतान्तरानुपन्यासाच्च काशकृत्स्नमतेन निर्वाहस्य सूत्रकाराभिमतत्वमवगम्यते। अस्य सूत्रकाराभिमतत्वे

---

1 स्पष्टत्वादिति। अचितामेवात्र वाक्येऽनुप्रवेशकर्मत्वादिति।

एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोऽपहतपाप्मत्वसर्वज्ञत्वादिगोचराः, जीवस्याविदुषः शोचतो ब्रह्मोपासनान्मोक्षवादिन्यः, जगत्सृष्टिप्रलयाभिधायिन्यः, जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् ॥

हेतुभूतं पूर्वोक्तमतद्वयाद्वैषम्यमाह **एवमात्मेति** । **अपहतपाप्मत्वसर्वज्ञत्वशब्दौ** उभयलिङ्गत्वप्रदर्शनार्थौ । **आदिशब्दो** विजरत्वसर्वशक्तित्वादिपरः । **मोक्षवादिन्य** इत्यन्तेन भेदश्रुतयो विवक्षिताः । अभेदश्रुत्यभिप्रायेणाह **जगत्सृष्टीति** । **सम्यगिति** । प्रत्यक्षादिविरोधः परस्परविरोधश्च यथा न भवति, तथेत्यर्थः । सकलश्रुत्यविरोधमुख्यार्थत्वानुगुण्यमेतन्निर्वाहस्वीकारहेतुरित्यर्थः ।

अभेदनिर्देशस्यावस्थितिनिबन्धनत्वं सूत्रकारेणैव भगवता **व्यासेन मोक्षधर्मे च याज्ञवल्क्यजनकसंवादे** स्पष्टतरमभिहितम्, "पश्यं तथैवापश्यं च पश्यत्यन्यस्तथाऽनघ । षड्विंशः पञ्चविंशश्च चतुर्विंशश्च पश्यति" इत्यादिना चिदचिदीश्वरवैलक्षण्यं बहुशः प्रतिपाद्य, "यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विज । तदा स केवलीभूतः षड्विंशमनुपश्यति" इति प्रकृत्यात्मविवेकानन्तरं जीवविलक्षणपरमात्मदर्शनमुक्त्वा, "अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ए(ह्ये)क एवेति साधवः" इति शरीरशरीरिणोर्भेदेऽपि शरीरान्तःस्थितस्य शरीरिण एकत्वादयमेकः पुरुष इति व्यवहारवत् अन्तरवस्थितिनिबन्धनाः प्रकार्यैक्यविषया अभेदव्यवहारा इत्युक्त्वा, "तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतम्" इति तात्स्थ्यादेव हेतोः पञ्चविंशकस्य, अच्युतशब्दवाच्यस्य परमात्मनश्च स्वरूपैक्यं साधूनामनभिमतमित्युक्त्वा, "जन्ममृत्युभयाद्भीता योगाः साङ्ख्याश्च काश्यप । षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः" इति संसारभयनिरासकं षड्विंशकत्वेन परमात्मनो भेदज्ञानमित्यत्राध्यात्मशास्त्रविदामैककण्ठ्यमित्युक्त्वा, "यदा स केवलीभूतः षड्विंशमनुपश्यति । तदा सर्वत्र सिद्धत्वान्न पुनर्जन्म विन्दति" इति षड्विंशज्ञानादपवर्गमुक्त्वा, "एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ । बुद्धश्चोक्तो यथातत्त्वं यथाश्रुतिनिदर्शनात्" इति चिदचिदीश्वरवैलक्षण्येनोपसंहृतम् ।

तथा **वैष्णवे पुराणे** च स्फुटमिदमुच्यते । यथा भगवन्तं प्रति ध्रुवः, "सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः । कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितम्" इति । अत्राप्यवस्थितिनिबन्धनं सर्वात्मकत्वं स्पष्टम् । अवस्थानञ्च शरीरप्रतिसम्बन्धितयेति तत्रैव दृश्यते, "सर्वेन्द्रियान्तःकरणपुरुषाख्यं हि यज्जगत् । स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति । न च विश्वरूपशब्दः चारुरूपा सालभञ्जिकेतिवत् अमुख्य[ार्थ]तया नेयः, स्वारस्यापवादाभावात् । तत्रैव स्वारस्योत्तम्भकमपि दृश्यते । प्रह्लादवचनेन, "एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् । द्रष्टव्यमात्मवत् तस्मात् यतोऽयं विश्वरूपभाक्" इति धार्यत्वधारकत्वरूपवैधर्म्यनिर्देशेन रूपतद्वतोर्हि भेद उपलभ्यते । तत्रैव ध्रुववचनादेव धार्यधारकभावोऽवगम्यते, "सर्वस्मिन् सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक् । सर्वं त्वत्तस्ततश्च त्वं नमः सर्वात्मनेऽस्तु ते" इति । **सर्वस्मिन्**—शरीरे । सर्वचेतनभूतत्वसर्वत्वोपपादकं **सर्वस्वरूपधृगिति** । कारणत्वमपि तदुपपादकमाह **सर्वं त्वत्त इति** । **ततश्च त्वमिति** । **ततः**—तस्मात्—सर्वस्वरूपधृक्त्वात् सर्वकारणत्वाच्च सर्वं त्वमित्यर्थः । रूपत्वञ्च शरीरतयेति दर्शयता प्रह्लादेनोक्तम्, "सर्वगत्वादनन्तस्य

**अयमत्र वाक्यार्थः—अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्यः—"आत्मा वा अरे द्रष्टव्यः" इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा, "आत्मनि खल्वरे दृष्टे" इत्यादिनोपास्यलक्षणम्, दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणनियमनं च सामा-**

स एवाहमवस्थितः" इति । शरीरं हि चेतनेन व्याप्यो द्रव्यविशेषः । तथा च भगवन्तं प्रति अर्जुनवचनम्, "सर्वं समाप्नोषि ततोऽसि सर्वः" इति ।

एषु श्रुतिस्मृतिवचनेषु, "अनुक्तमन्यतो ग्राह्यम्" इति न्यायात् धारणव्यापनादिष्वन्यतमोक्तावप्यन्यतमान्तरसिद्धिरनुसन्धेया । ततश्च व्यापनमेव धारणनियमनयोरन्यतरसचिवं हि नृपनभोभृत्यकुटुम्बादिव्यावर्तनेन शरीरत्वमवगमयति । शरीरलक्षणं च भाष्य एव दर्शयिष्यते । अत एव, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यत्रापि शरीरशरीरिभावनिबन्धनं तत्तच्छब्दवाच्यत्वमवगम्यते । अन्तःप्रवेशनेन प्रशासनादीनामर्थसिद्धत्वात् । श्रूयते ह्यन्तःप्रवेशसहचारितया प्रशासनादिकम्, "अन्तःप्रविष्टः शास्ता जनानाम्', 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति । तथा, 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यत्राननशब्दवाच्या स्थितिर्धारणनिबन्धना ; 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति सदायतनशब्देन स्थितिहेतुत्वाभिधानात् । धारणं चानुप्रविश्य प्रशासनेन ; उदाहृतश्रुत्यैकार्थ्यात् ; "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति स्मरणात् ; "तत्सृष्ट्वा तदेवानुप्राविशत्" इति सृष्ट्यनन्तरं स्थित्यर्थानुप्रवेशदर्शनाच्च । उत्पत्तिलयौ च न निष्कृष्टस्वरूपे निर्विकारे संभवतः । अतो जन्मादिकारणत्वस्य हेतुत्वोपन्यासात् शरीरशरीरिभाव एव सामानाधिकरण्ये हेतुरिति श्रुत्यैव दर्शितम् । अस्य सूत्रस्य, न केवलं सर्वश्रुत्यविरोधमुख्यत्वोपपत्तेः, किन्तु प्रबन्धान्तरस्थसूत्रकारवचनैकार्थ्यात्, तदुपबृंहणैकार्थ्यात्, प्रत्यक्षश्रुतावेव हेतुहेतुमद्भावदर्शनाच्च अन्तरात्मतयाऽवस्थानस्यैवाभेदनिर्देशहेतुत्वपरत्वं सिद्धम् ।

इह जीववाचिशब्दः कः, तस्य परमात्मपर्यन्तत्वे किं कारणम्, तस्मिन् सति हि तत्पर्यन्तत्वनिर्वाहप्रकारापेक्षा ; तत्पर्यन्तत्वे च किं फलम् इत्यपेक्षायामाह **अयमत्र वाक्यार्थ** इति । **'अमृतत्वस्य तु नाशाऽस्ति वित्तेन', 'न वा अरे पत्युः कामाय'** इत्यादीनां वाक्यानाम् आद्यसूत्रव्याख्यानावसरे प्रपञ्चितार्थत्वादिह तदर्थोऽपि विस्तरेण न प्रतिपादितः । **आत्मनि खल्वरे दृष्ट इत्यादिने**ति । [1]"आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्' इत्यात्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानम्, "ब्रह्म तं परादात् .... क्षत्रं तं परादात्" इत्यादिना व्यतिरिक्तवेदननिन्दनम्, "इदं ब्रह्मेदं क्षत्रम्" इति सर्वात्मकत्वोक्तिश्च कारणत्वफलम् । अतः प्रतिज्ञादिभिर्लक्षणाभिधानं हि फलितं स्यात् । "योऽन्यत्रात्मनः सर्वं वेद" इति । **अन्यत्र [आत्मनः ?]** परमात्मानं विना—अब्रह्मात्मकं स्वनिष्ठं यो वेद, तं **सर्वं परादात्**—अभिभवेत्—संसारयतीत्यर्थः । यद्वा **अन्यत्र** परमात्मनोऽन्यत्र स्थितम्, न तु परमात्मनि स्थितम् ; स्वनिष्ठमित्यर्थः । **दुन्दुभ्यादिदृष्टान्तैः करणनियमन-**

1 भाष्यस्य द्वितीयमैत्रेयीब्राह्मणानुसारित्वात् आत्मनिखल्वित्ति तत्रत्यमुपात्तम् । स्वयं प्रथमब्राह्मण गतमपि दर्शयति आत्मन इति ।

न्येनाभिधाय, "स यथाऽर्द्रैधाग्नेः" इत्यादिना, "स यथा सर्वासामपां समुद्र एकायनम्" इत्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वम्, सकलविषय[प्र]वृत्तिमूलं-

---

ममिधायेत्यन्वयः । अत्रायमभिप्रायः—"स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' इति वाक्यस्य **परै**रेवमर्थ उक्तः—दुन्दुभिशब्देन दुन्दुभिशब्दसामान्यं लक्ष्यते । यत् खलु यद्ग्रहणं विना ग्रहीतुं न शक्यते, तत् ततो न व्यतिरिच्यते, यथा रजतं शुक्तिकायाः । दुन्दुभिशब्दावान्तरविशेषा हि तत्सामान्यग्रहणेनैव गृहीताः स्युः । अयं दुन्दुभिशब्द इत्येव गृह्यन्ते; न दुन्दुभिशब्दतो व्यतिरेकेण । अतस्तदवान्तरविशेषाः यथा दुन्दुभिशब्देऽध्यस्ताः, एवं चिदात्मव्यतिरेकेण ब्रह्मक्षत्रादिजगदनवभासात् सर्वं चिदात्मन्यध्यस्तम्—इति । एवं "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति बौद्धराद्धान्तप्रतिपादकमिदं वाक्यं व्याख्यातम्—तदनुपपन्नम्; मुख्यार्थे संभवति उपरितनयोर्दुन्दुभिशब्दयोर्लाक्षणिकार्थपरत्वायोगात् । लक्षणायां च, 'दुन्दुभेर्हन्यमानस्य' इति पूर्ववाक्यवैयर्थ्यञ्च । न हि गङ्गायामिति पदेनैव कूले लक्षिते गभीरायां गङ्गायामिति वाक्यं सफलम् । तथा 'दुन्दुभेस्तु ग्रहणेन' इत्येतावताऽ(द?)लम् । तेनैव दुन्दुभिशब्दसामान्यग्रहणस्य प्रतिपन्नत्वात् **आघात**शब्दस्य न प्रयोजनम् । **वा**शब्दवैयर्थ्यं च । अत एवं योजनीयम्—**दुन्दुभे**रित्यनादरे षष्ठी । **ग्रहण**शब्द इह निरोधपरः । उपादाननिरोधयोरपि वाचकत्वात्, यथा गृहीतानि पुष्पाणि, गृहीतश्चोर इति । यथा दुन्दुभौ हन्यमाने ततो बहिर्निस्सरतः शब्दान् न निरोद्धुं शक्नुयात् । कथं तर्हि निरुणद्धीत्यत्राह **दुन्दुभेस्त्वि**ति । परेणोपादीयमानदुन्दुभिनिरोधेन तदाहन्तृपुरुषनिरोधेन वा शब्दो निरुध्यते—एवमिन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधम्; तस्मादिन्द्रियनिरोधेन तत्प्रवृत्तिमूलस्य मनसो निरोधेन च परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं निरुध्यत इति । एवं **शङ्खवीणा**दृष्टान्तोपन्यासश्च योजनीयः । **वीणा**शब्दस्था चतुर्थी षष्ठ्यर्था, पूर्ववाक्यद्वयैकार्थ्यात् । अतो दुन्दुभ्यादिदृष्टान्तत्रयोपन्यासवाक्यत्रये 'द्रष्टव्यः' इत्युक्तपरोपासनोपकरणभूतकरणग्रामनियमनमुक्तमिति । **मनःप्रभृ**तीति । दुन्दुभिनिरोधस्थानीयं चक्षुरादिनियमनम्, तदाहन्तृपुरुषनिरोधस्थानीयं मनोनियमनमिति भावः । **सामान्येनाभिधाये**ति । निमित्तोपादानरूपविभागानभिधानात् कार्यविशेषानुपादानाच्चोपास्यलक्षणभूतं कारणत्वं सामान्येनोक्तम्; चक्षुरादिकरणविशेषाणां नियमनप्रकारविशेषानभिधानात् करणनियमनञ्च सामान्येनोक्तमित्यर्थः । **स यथे**ति । तृतीयान्तयो**रित्यादि**शब्दयो**र्निखिले**त्यादिपदद्वयेन यथायोगमन्वयः । **एध**शब्दोऽकारान्त इन्धनवाची । आर्द्रेन्धनाग्निग्रहणं निमित्तोपादानयोर्ज्ञापनार्थम् । अग्निर्हि धूमोत्पत्तौ निमित्तम्; इन्धनमुपादानम् । 'ऋग्वेदो यजुर्वेदः' इत्यादिना वाचकसृष्टिमात्रमुक्तं प्रथममैत्रेयीब्राह्मणे; उत्तरे तु, "इष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैवैतानि सर्वाणि निःश्वसितानि" इति साधनसाध्यभोग्यभोगस्थानभोक्तृवर्गरूपवाच्यजगत्सृष्टिरुक्ता; अनुक्तस्यान्यतो ग्राह्यत्वात् प्रथमे च वाच्यसृष्टिरुक्ता भवतीत्यभिप्रायेणाह **निखिलजगदेककारणत्व**मिति । **निखिल**शब्दो वाच्यवाचकभोग्यभोगस्थानादिपरः । **एक**शब्दो निमित्तोपादानैकत्वपरः । 'स यथा सर्वासामपाम्' इत्यादिवाक्यानामर्थमभिप्रयन्नाह **सकलविषये**ति । 'यथा सर्वासामपां समुद्र एकायनम्,

**करणग्रामनियमनं च विस्तीर्णमुपदिश्य, "स यथा सैन्धवघनः" इत्यादिना अमृतत्वोपाय-प्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य, तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरिणामानुवृत्तिम्, "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यभिधाय, "न प्रेत्य संज्ञाऽस्ति" इति मोक्षदशायां**

---

एवं सर्वेषां स्पर्शानां त्वगेकायनं सर्वेषां रसानां....सर्वेषां गन्धानाम्' इति तत्तदिन्द्रियाणां तत्तद्विषयाय-नत्वमुक्तम्। दृष्टान्तदार्ष्टान्तिकयोरनुवृत्तमयनत्वं नाम तत्तदुपादातृत्वम्। तेनैकैककरणस्य एकैकजातीय-स्पर्शाद्यवान्तरविशेषेषु वृत्तिविशेषा बहवो दर्शिता भवन्ति; सर्वेषां स्पर्शानामिति श्रवणात्। अस्य वृत्तिविशेषप्रदर्शनस्य किं प्रयोजनमित्यपेक्षायामुपदेशस्य वैयर्थ्यायोगात्, "आत्मा वा अरे द्रष्टव्यः" इति आत्मसाक्षात्कारस्य प्रकृतत्वात् दुन्दुभ्यादिदृष्टान्तैः सामान्येन करणनियमनस्योक्तत्वात् तन्नियमन-विशेषकथनस्यापेक्षितत्वात् उत्तरवाक्येन पूर्ववाक्यविवरणस्य एतत्प्रकरणदृष्टत्वाच्च करणवृत्तिविशेषप्रदर्शनं तद्वृत्तिविशेषनिरोधेनात्मसाक्षात्कारनिष्पादनार्थमित्यभिप्रायः। **विस्तीर्ण**मिति। कारणत्वं निमि-त्तोपादानविभागकथनात् कार्यबाहुल्यप्रदर्शनाच्च विस्तृतम्; करणनियमनं तु करणविशेषाणां निरोद्धव्य-वृत्तिविशेषप्रदर्शनेन विस्तृतमित्यर्थः। **उपदिश्ये**ति। न हि निष्प्रयोजनोपदेशः संभवतीति भावः। 'स यथा सैन्धवघनः' इति वाक्योपादानम्, "स यथा सैन्धवखिल्यः" इतिवाक्यस्यापि प्रदर्शनार्थम्। **प्रोत्साहनाये**ति। आत्माभिमानविषयदेहस्य दौर्गन्ध्यादिदर्शनेऽपि आत्माभिमानविषयत्वादेव हि तत्संस्कारविषये प्रवर्तते। तस्यैवोद्बुद्धस्य स्वस्वरूपस्यैव प्राप्यत्वेऽवगते हि प्रवृत्त्याधिक्यं जायत इत्यर्थः। विज्ञानघनशब्दस्य 'महद्भूतमनन्तमपारम्' इति सामानाधिकरण्यं प्रथममैत्रेयीब्राह्मणप्रतिपन्न-मुपजीव्योक्तं **जीवात्मस्वरूपेणावस्थितस्ये**ति। भगवान् नृसिंहः श्वेतः, ब्राह्मणश्चतुर्वेदाभिज्ञो गौर इत्यत्र श्वैत्यादिवद्विशेषणद्वारा परमविशेष्यविशेषणं ज्ञानैकाकारत्वमित्यर्थः। अनेन पूर्वोक्तस्य जीववाचि-शब्देन परमात्माभिधानिर्वाहस्योपयोगस्थलं विज्ञानघनशब्दः इति दर्शितम्। तत्पर्यन्ततयैव निर्वाह्यत्वे हेतुः परमात्मधर्मवाचि**महद्भूतानन्तापार**शब्दसामानाधिकरण्यमित्यर्थसिद्धम्। न चाव्यवधानेन परमात्म-परो विज्ञानघनशब्दः, 'उत्थाय विनश्यति', 'प्रेत्य' इति श्रवणात्। सर्वावस्थास्वपि जीवस्वरूपस्य परमात्म-निष्ठतया स्वातन्त्र्याभावज्ञापनं जीवशब्देन तत्पर्यन्तनिर्देशस्य प्रयोजनमिति फलितम्। **उपपाद्य**—[स?]-दृष्टान्तमुक्त्वेत्यर्थः। तान्येवानुविनश्यतीत्यत्रानुशब्दार्थमाह **भूतपरिणामानुवृत्ति**मिति। भूतेषु नश्यत्सु एष नश्यतीत्यर्थः। **विनाशो** नाम अत्यन्तज्ञानसङ्कोचः, "अविनाशी वा अरेऽयमात्मा" इत्यनन्तरवाक्या-विरोधात्। अत्र **प्रेत्य**शब्दस्य पूर्वोक्तविनाशानुवादशङ्काव्यावृत्त्यर्थमाह **मोक्षदशाया**मिति। "न प्रेत्य संज्ञाऽस्ति" इति न देहविगमदशायां ज्ञाननिषेधः; देहविगमदशायामज्ञानस्य, तान्येवानुविनश्यतीत्युक्त-त्वात्। नापि लोकान्तरे ज्ञाननिषेधः; कर्मफलभोगावगमकशास्त्रान्तरविरोधात्। नापि नैमित्तिकप्राकृत-प्रलययोरज्ञानमुच्यते; तयोरप्रस्तुतत्वात्। अतः पारिशेष्यात् **प्रेत्य**शब्दश्चरमदेहावसानपरः। "नोपजनं स्मरन्निदं शरीरम्" इति श्रुत्यन्तरार्थप्रत्यभिज्ञानात्, अत्रापि "एतावदेव खल्वरे अमृतत्वम्' इति अमृतत्वस्योक्तत्ववचनाच्च मोक्षविषयत्वं युक्तमित्यभिप्रायः। पूर्वापरवाक्यानुगुणमर्थमाह

स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसंघातेनैकीकृत्याऽऽत्मनि देवादिरूपज्ञानाभाव-मुक्त्वा, पुनरपि, "यत्र हि द्वैतमिव भवति" इत्यादिना अब्रह्मात्मकत्वेन नानाभूतवस्तु-दर्शनमज्ञानकृतमिति, निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो ब्रह्मव्यतिरिक्तवस्त्व-

---

**स्वाभाविके**ति। स्वरूपस्य ज्ञानात्मकत्वम्, "स यथा सैन्धवघनः" इत्यादिनोक्तम्। अतः स्वाभाविकत्वं फलितम्। **अनन्तर**शब्देन बहिरपि ज्ञानात्मकत्वस्योक्तत्वात् धर्मभूतज्ञानवत्त्वं सिद्धम्। तस्य चापरिच्छिन्न-त्वम्, "सर्वं ह पश्यः पश्यति' इति श्रुत्यन्तरे सिद्धमित्यभिप्रेत्य **स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचा-भावेने**त्युक्तम्। **सम**मित्येकीकारे इत्यभिप्रायेणाह **एकीकृत्ये**ति। केनेत्यपेक्षायाम् "एतेभ्यो भूतेभ्य" इति पूर्ववाक्यमुपजीव्याह **भूतसङ्घातेने**ति। **देवादिरूपज्ञानाभावमुक्त्वे**ति। "नोपजनं स्मरन्" इति प्रकरण एव, "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति ज्ञानविकासप्रतिपादनात्, "न प्रेत्य संज्ञाऽस्ति" इति वाक्यं श्रुत्वा 'न हवा अहमिमं(दं?) जानामि' इति मैत्रेय्या पृष्टे, 'अविनाशी वा अरेऽयमात्मा' इत्यात्मस्वरूपनित्यत्वमुक्त्वा अनुच्छित्तिधर्मेति ज्ञाननित्यत्ववचनाच्चेति भावः। मुक्तौ ज्ञानं नास्ति चेत्, ज्ञानैकाकारत्वं पूर्वोक्तं विरुध्येतेति मैत्रेयीवाक्याभिप्रायः। अनुच्छित्तिधर्मेति ज्ञाननित्यतां याज्ञवल्क्यः प्रत्यभाणीत्। न चोच्छित्त्यभाव एवास्य धर्म इत्युच्यते, अविनाशीति स्वरूपनित्यत्वस्योक्तत्वात्; अविनाशिपदाभावेऽपि धर्मशब्दवैयर्थ्यप्रसङ्गाच्च। दीपादौ प्रतिक्षणविनाश-सन्ततिविनाशयोर्दृष्टत्वात् तदुभयव्युदासाय पदद्वयमिति न शङ्कनीयम्; अविनाशिशब्देनैव असङ्कोचा-दुभयविनाशाभावसिद्धेः। धर्मशब्दवैयर्थ्यप्रसङ्गाच्च; अव्यय इतिवदनुच्छित्तिरित्येतावताऽपि स्वरूपानुच्छित्ति-सिद्धेः। **पुनरपी**ति। भ्रान्तिर्द्विविधा, अनात्मनि देहबुद्धिः, अब्रह्मात्मकतया स्वातन्त्र्यबुद्धिश्चेति। तत्र 'न प्रेत्य संज्ञाऽस्ति' इत्यनेन बन्धदशानुवृत्तदेहात्मभ्रमनिवृत्तिरुक्ता; अथ स्वनिष्ठतानिवृत्तिरुच्यत इत्यर्थः। **यत्र**—यस्यामवस्थायाम् **द्वैतमिव भवति**—परमात्मनः पृथक्त्वम्—स्वनिष्ठतया पृथक्त्वं भवति। **इव**शब्दः स्वातन्त्र्यस्याप्रामाणिकत्वद्योतकः। **तत्**—तदा **इतरः**—परमात्मन इतरः—पृथक् स्थितः। **इतरम्**—स्वनिष्ठं वस्तु। **इतरेण** स्वनिष्ठदर्शनसाधनेन पश्यति—इति स्वनिष्ठत्वभ्रमानुवादः। **मुक्तौ** तन्निवृत्तिमाह **यत्र त्वि**ति। **यत्र** यस्यां मुक्तिदशायां **सर्वमात्मैवाभूत्** परमात्मात्मकत्वेन प्रकाशते, **तत्**—तदा कः चेतनः केन करणेन कं स्वनिष्ठमर्थं पश्येत्। अब्रह्मात्मकं स्वनिष्ठतया भासमानं वस्तु तद्दर्शनसाधनं तद्द्रष्टा च मुक्तिदशयां नास्तीत्यर्थः। तदिदं हृदि निधायाह **अब्रह्मात्मकत्वेने**ति। नानात्वनिषेधस्य विहितनानात्वव्यतिरिक्तविषयत्वात् स्वनिष्ठनानात्वं निषेध्यमित्यभिप्रायः। **नानाभूत-वस्तुदर्शनमज्ञानकृत**मिति। न तत्तद्वस्तुदर्शनमात्रमज्ञानकृतम्; किन्तु स्वनिष्ठदर्शनमेव तदुपाधिकमिति भावः। **अज्ञानकृत**मिति। स्वनिष्ठवस्तुदर्शनस्यौपाधिकत्वादुपाधिनिवृत्तौ तन्निवृत्तिर्युक्तेति भावः। उपाध्य-भावेऽपि ब्रह्मस्वरूपानवभासे स्वनिष्ठार्थान्तरदर्शनं स्यादित्यत्राह **ब्रह्मात्मकं कृत्स्नं जगदनुभवत** इति। "यत्र त्वस्य सर्वमात्मैवाभूत्" इति न भवनमत्र विवक्षितम्; ब्रह्मात्मकत्वस्य नित्यत्वेन **यत्रे**त्यवस्था-विशेषान्वयोक्त्यनुपपत्तेः। अतः, "ब्रह्म वेद ब्रह्मैव भवति" इत्यादाविव आविर्भावाभिप्रायकं वाक्यमित्यभि-प्रायः। कृत्स्नानुभवेऽपि ब्रह्मणो जगतश्च पृथगनुभवः किं न स्यादित्यत्राह **ब्रह्मव्यतिरिक्तवस्त्वन्तरा**

न्तराभावेन भेददर्शनं निरस्य, "येनेदं सर्वं विजानाति, तं केन विजानीयात्" इति च, 'जीवात्मा स्वात्मतयाऽवस्थितेन येन परमात्मना आहितज्ञानस्सन् इदं सर्वं विजानाति, अयं तं केन विजानीयात्; न केनापि' इति परमात्मनो दुरवगमत्वमुपपाद्य, "स एष नेति नेति" इत्यादिना अयं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एव सर्वशरीरः सर्वस्याऽऽत्मतयाऽवस्थित इति स्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय, "विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेयि! एतावदरे खल्वमृतत्वम्," इति समस्तवस्तुविसजातीयं निखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममुक्तप्रकारादुपासनात् ऋते केन विजानीयादिति, 'इदमेवोपासनममृतत्वोपायः; ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयते' इत्युक्तवान् । अतः, परं ब्रह्मैवास्मिन् वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारणम्, न पुरुषस्तदधिष्ठिता च प्रकृतिरिति स्थितम् ॥

इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

---

**भावेने**ति । अप्रामाणिकज्ञानं हि दोषादुत्पद्यते । दोषाभावे तु वस्तुसद्भावं विना दर्शनं नोपपद्यत इत्यर्थः । **येनेद**मिति । 'क इत्था वेद यत्र सः' इतिवत् परमात्मप्रसादात् ऋते तस्य दुरवबोधत्वमत्रोच्यते । अन्यथा, 'आत्मा वा अरे द्रष्टव्यः' इत्युपक्रमावगतद्रष्टव्यत्वविरोधात्; 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इति तत्प्रसादेन तद्दर्शनस्य श्रुत्यन्तरसिद्धत्वाच्चेति भावः । **स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एवे**ति । चिदचिद्गतप्रकाराणां प्रमाणान्तरसिद्धत्वात् **इति**शब्दद्वयेन तत्प्रकारमनूद्य निषेधद्वयेन चिद्गतोऽचिद्गतश्च प्रकारो व्युदस्यते; विहितप्रकारस्य निषेधायोगात् । "अग्राह्यो न हि गृह्यते; अशीर्यो न हि शीर्यते; असंगो न हि सज्यते" इति चिदचिद्गतप्रकारविशेषनिषेधेन तद्विवरणाच्चेति भावः । **अग्राह्यः**—चक्षुरादिना ग्रहणानर्हः । अतो न गृह्यते । एव**मशीर्य** इत्यादि योजनीयम् । **असङ्ग** इत्यादिना जीवधर्मनिषेधः । न ह्यचित्सङ्गोऽस्य स्वरूपतिरोधानकृद्भवति । 'न हि सज्यते' इत्यादावुक्ते सङ्गादियोग्यस्यापि दूरस्थतया तदभाव इति शङ्काव्यावृत्त्यर्थ**मसङ्ग** इत्युक्तम् । **असङ्गः** सङ्गविरोधी । सङ्गानर्हत्वमर्थसिद्धम् । तेन सङ्गाद्यभावः । न देशकालविप्रकर्षात् सङ्गाद्यभावः; किन्तु स्वभावविप्रकर्षादित्यर्थः । पूर्ववाक्योक्तासङ्गादिफलमाह **समस्तवस्तुविसजातीय**मिति । **निखिलजगदेककारणभूतं सर्वस्य विज्ञातार**मिति । प्रकरणोपक्रमोदितकारणत्वव्याप्तसर्वज्ञत्वादिगुणप्रदर्शको **विज्ञातृ**शब्द इति भावः । 'तं केन विजानीयात्' इति पूर्ववाक्येन पुनरुक्तिशङ्कापरिहारायाह **उक्तप्रकारा**दिति । परमात्मप्रसादात् ऋते तस्य दुरवगमत्वपरं पूर्ववाक्यम्; तत्प्रसादनोपायश्चात्राभिहितमुपासनमेवेति केवलयज्ञदानाद्युपायान्तरनिषेधपरमिदं वाक्यमित्यर्थः । विपरीतं किं न स्यादिति नाशङ्कनीयम्; 'द्रष्टव्यः' इत्युपक्रमावगतज्ञानेनैव निगमनस्य युक्तत्वात् । न हि दुरवबोधतया निगमनं न्याय्यम्; उपक्रमविरोधात् । **एताव**दित्यस्यार्थमाह **ब्रह्मप्राप्तिरेव चे**ति । उपायान्तरव्युदसनमुखेन उक्तोपायनिगमनपरं **विज्ञातार**मिति वाक्यम्; **एताव**दित्यादिवाक्यमुपेयनिगमनपरमित्यर्थः । अधिकरणार्थमुपसंहरति **अत** इति ॥

**इतरैः सर्वैः** सूत्रत्रयव्याख्यानमन्यथा कृतम् । तत्तु पतिजायादिसंबन्धेन जीवस्वशङ्कानिरासस्यानुपयोगात् विरुद्धत्वाच्चानुपपन्नमित्यनुसन्धेयम् । तत्र **मिथ्यावेदान्तिभि**स्तु प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयं द्वेधा व्याख्यातम् ।

तत्र प्रथमम्, 'इदं सर्वं यदयमात्मा' इत्यभेदव्यपदेशस्य कार्यकारणभावनिबन्धनत्वपरमाद्यं सूत्रम्; उत्क्रमिष्यतो ब्रह्मभावापत्तिहेतुकत्वपरं द्वितीयम्; ब्रह्मण एवाविकृतस्य विज्ञानात्मभावेनावस्थानमूलत्वपरं तृतीयमित्युक्तम्। एवं वदतोऽभिप्रायः शोधनीयः—यदि कार्यकारणभावं वदता आश्मरथ्येन ब्रह्मपरिणामो जीवोऽभिमतः, पूर्वमनेवम्भावश्च औडुलोम्यभिमत इति सूत्रद्वयार्थः पूर्वपक्षीकृतः—एतावदस्माकमविरुद्धम्। अथ कार्यकारणभावो नाम अध्यासरूपः, उत्क्रमिष्यत एवम्भावश्चाध्यस्ताकारनिवृत्तिरूपः; ब्रह्मण एव जीवभावारोपतन्निवृत्तिमत्त्वाभ्यामभेदव्यपदेशपरं सूत्रद्वयमिति मतम्—तदानीं सिद्धान्ततयाऽभिमतात् काशकृत्स्नमताद्भेदाभावेन सूत्रद्वयवैयर्थ्यं स्यात्। भवत्पक्षे हि ब्रह्मण एव विज्ञानात्मभावेनावस्थानं काशकृत्स्नमतम्। जीवब्रह्मणोरैक्यमभ्युपगच्छतश्च काशकृत्स्नस्य जीवभावस्याध्यस्तत्वं निवर्त्यत्वं चाभिमतमेवेति काशकृत्स्नमताद्विशेषाभावेन सूत्रद्वयवैयर्थ्यं स्थितम्॥ काशकृत्स्नमतस्यैवाचार्यान्तरद्वयाभिमत्या स्थिरीकरणार्थं सूत्रद्वयमिति चेत्—व्यतिरिक्तसर्वाचार्यानभिमतत्वशङ्काव्युदासार्थमचार्यभूयस्तया सूत्रसहस्राणि प्रणेतव्यानि स्युः॥ विस्तरभयादाचार्यद्वयोक्तिः प्रदर्शनार्थेति चेत्—काशकृत्स्नकीर्तनस्यैव सर्वाचार्यप्रदर्शनार्थत्वसंभवात् सूत्रद्वयवैयर्थ्यमेव स्यात्। अस्मन्मते तु परिणामाध्यासपक्षद्वयपूर्वपक्षीकरणार्थत्वात् साफल्यं स्फुटतरम्।

पुनश्चैवं योजितं सूत्रत्रयम्, "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय" इत्युक्तं महतो भूतस्य ब्रह्मणो भूतेभ्यः समुत्थानं कार्यकारणाव्यतिरेकप्रतिज्ञासिद्धिसूचकम्; 'तान्येवानु विनश्यति' इत्युक्तं विशेषविज्ञानोच्छेदरूपमभेदाभिधानमुत्क्रमिष्यतः परेणाऽऽत्मनैक्यसंभवात् ब्रह्मण एव विज्ञानात्मभावेनावस्थानाच्चोपपन्नमिति। इदमप्ययुक्तम्; प्रकृतानुपयोगात्। द्रष्टव्यतयोपदिष्टस्याऽऽत्मनः परमात्मत्वं हि साध्यम्। जीवोत्पत्तिप्रलयवादः प्रकरणस्य परमात्मपरत्वं न निवारयति। न हि पृथिव्याद्युत्पत्तिप्रलयवादास्तत्तत्प्रकरणानां परमात्मपरत्वं वारयन्ति। अतो जीवोत्पत्तिप्रलयचिन्तनं प्रकृतस्यानुपयुक्तम्। अत एव पादासङ्गतं च। इदञ्च जीवनित्यत्वाजत्वादिश्रुत्यविरोधेन, 'नात्मा श्रुतेः' इत्यत्र करिष्यते। भवद्भिरपीदमेव वाक्यमुपादाय उपाध्युत्पत्तिप्रलयाभिप्रायमिति तत्रैव व्याख्यातम्। अतः पृथक्प्रयत्नवैयर्थ्यञ्च॥ तत्रोपजीव्यत्वायात्र प्रसङ्गाच्चिन्तितमिति चेन्न—इहोक्तस्य सूत्रद्वयार्थस्य भाविसाध्यानुपयोगात्। प्रतिज्ञासिद्धिसूचकत्वं प्रलये ब्रह्मतापत्तिवचनं चोत्पत्तिप्रलययोर्न गौणत्वसाधकम्; तेजःप्रभृत्युत्पत्तिप्रलययोरपि गौणत्वप्रसङ्गात्। अविकृतस्यैव ब्रह्मणो विज्ञानात्मभावेनावस्थानमपि न गौणत्वसाधकम्; अविकृतस्यैव ब्रह्मणोऽध्यस्ततेजोबन्नरूपेणावस्थितत्वेन तदुत्पत्त्यादेरपि गौणत्वप्रसङ्गात्॥ अस्त्विति चेत्. तेजोबन्नाद्युत्पत्तेर्जीवोत्पत्तिवैषम्यस्य दुर्वचत्वात् प्रयासवैयर्थ्यमेव स्यादिति। अतः प्रकृतानुपयोगादिभिरनुपपन्नत्वात् जीवोत्पत्त्यादिनिर्वाहपरत्वमनादृतं भाष्यकारैः। अभेदव्यपदेशनिर्वाहस्त्वत्यन्तापेक्षितः; द्रष्टव्यस्यात्मनो जीववाचिशब्दनिर्देशकृतायाः अपरमात्मत्वशङ्काया निराकरणीयत्वात्।

**यादवप्रकाशैस्तु** भोक्तृब्रह्मणोरैक्यात् ऋते सर्वस्य ब्रह्मतादात्म्यप्रतिज्ञानासिद्धेर्जीवेनोपक्रमो जीवब्रह्मणोरभेदेन प्रतीतिसिद्ध्यर्थ इति आद्यसूत्रार्थो वर्णितः। अत्र सामान्येन ब्रह्मणैक्यज्ञापनं

प्रयोजनमुक्तं भवति । उत्क्रान्तौ ब्रह्मणि लीनतया तेनैक्यात् जीवेनोपक्रम इत्येतदर्थपरम्, 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः' इति सूत्रं व्याख्यातम् । ब्रह्मणः सर्वत्र तृणकणादावपि पूर्णत्वेनावस्थानात् येन केनचित् तृणादिवाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वं युक्तमिति तृतीयसूत्रार्थ उक्तः ।

तत्र तावदाद्यसूत्रद्वयस्य सूत्रकाराभिमतनिर्वाहपरत्वमयुक्तम्; मुक्तिदशायामौडुलोम्यभिमतस्य ब्रह्मतादात्म्यस्य मुक्तिपादे, 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' इति सूत्रोपन्यस्तस्य सूत्रकारैरेव पूर्वपक्षीकृतत्वात्; तथा तैर्व्याख्यातत्वाच्च । 'स्वप्रकाशसन्मात्रमेव स्वरूपम्; गुणाष्टकोक्तिस्तु गुणानां शक्तिरूपत्वात् शक्तीनाञ्च भेदाभेदादिविकल्पासहत्वाद्गुणशक्तियुक्तसन्मात्रस्वरूपाभिप्राया; क्रीडाजक्षणाद्युपन्यासः स्तुतिपरो दुःखाभावाभिप्रायः' इति औडुलोमिमतमुपन्यस्य, 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः' इति सूत्रेण तत् प्रतिक्षिप्तम् । शक्तिमात्रस्य न पुरुषार्थत्वम्; न हि गानमशृण्वतः श्रवणसामर्थ्यमात्रं पुरुषार्थः । अतः, 'नाहमत्र भोग्यं पश्यामि' इत्युक्तवतो मघोनः पुरुषार्थज्ञापनायोपदिश्यमानं गुणाष्टकं न शक्तिमात्राभिप्रायम् । अतः शक्तिमात्रोपन्यासस्य वैयर्थ्यात् क्रीडादिकं ब्रह्मभूतस्य मुक्तस्येश्वरस्येवाभ्युपगन्तव्यमिति हि सिद्धान्तितम् । अतः, यादृशं ब्रह्मतादात्म्यमौडुलोम्यभिमतं मुक्तिपादे पूर्वपक्षीकृतम्, तादृशमेव ब्रह्मतादात्म्यमिहाप्युपन्यस्तं स्यात् । न ह्येक एवाभ्रान्तः पुरुषः स्वाभिमतविरुद्धमर्थं कदाचिदङ्गीकरोति । अत उत्तरत्र निराकरिष्यमाणस्य पक्षस्य इह प्रसङ्गादुपन्यासस्यापि स्वीकारो व्याहत इति प्रतिक्षेप्यतयैव औडुलोमिमतोपन्यास इत्यभ्युपगन्तव्यम् । इहोपन्यस्ततादात्म्यस्य निराकरिष्यमाणत्वात्; वैषम्यस्य च दुर्वचत्वात् । अतस्तत्साहचर्यादाश्मरथ्यमतमपि प्रतिक्षेप्यतयोपन्यस्तं स्यात् । स्वरूपपरिणामस्य, सकलविशेषशून्यस्य ब्रह्मतादात्म्यस्य च सकलप्रमाणन्यायविरुद्धत्वाच्च प्रतिक्षेप्यत्वं दुर्निवारम् । अतश्चरमं सूत्रमेव स्वाभिमतनिर्वाहपरम् ।

तत्र च, 'अवस्थितेः' इति पदं सर्वत्र घटपटतृणादौ ब्रह्मणः पूर्णतयाऽवस्थानादिति व्याख्यातम् । पूर्णतयाऽवस्थानञ्च सन्मात्ररूपेणेति विवक्षितम् । यथोक्तम्, "अस्तित्वं ब्रह्मणो रूपं सर्वविकल्पप्रत्याख्यानात् । न ह्यस्तित्वं घटे पटे च खण्डितं वर्तते; उभयत्रापि कृत्स्नास्तित्वदर्शनात्" इति ।

तदयुक्तम्, तथा हि—न तावदिदं ब्रह्मस्वरूपभूतमस्तित्वं सामान्यरूपं व्यवहारार्हत्वमानार्हत्वाद्युपाधिरूपं वा भवितुमर्हति; तस्य लोकसिद्धत्वेन, 'इदं पूर्णमदः पूर्णम्' इत्यादिशास्त्रवैयर्थ्यप्रसङ्गात् । तस्यैन्द्रियकत्वेन, "अद्रेश्यमग्राह्यम्" इत्यादिश्रुतिविरोधात् । द्रव्याश्रयस्य तस्य स्वे महिम्नि स्थितत्वायोगात्, जगदाधारत्वायोगात् । जडस्य ज्ञानस्वरूपत्वायोगात् । द्रव्यनिष्ठधर्मतया तदधीनात्मलाभस्य तस्य जगद्रूपेण परिणामायोगात्, सार्वज्ञ्यसर्वशक्तित्वादिगुणाश्रयत्वायोगात् । सङ्कल्पाश्रयत्वाभावेन निमित्तत्वायोगात् । कारणत्वाभावेनैव अध्येयत्वेन प्राप्यत्वायोगात् । भवद्भिरनभ्युपगतत्वाच्च । अतः सद्द्रव्यमेवैकैकस्मिन् घटादौ पूर्णमिति भवतां मतम्; 'न चास्तित्वं घटे पटे च खण्डितं वर्तते; उभयत्रापि कृत्स्नास्तित्वदर्शनात्' इति भवद्भिरुक्तत्वात् । सदिति प्रतीयमानं द्रव्यमेव ब्रह्मस्वरूपमिति, 'अद्रेश्यमग्राह्यम्' इत्यादिश्रुतिविरोधो दुष्परिहरः । किञ्च घटे सद्वस्तुनः पूर्णत्वं नाम न संभवति, सजातीय-

## ३४. प्रकृत्यधिकरणम् १-४-७

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । १ । ४ । २३ ॥**

एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते—

---

विजातीयघटपटाद्यनन्तपदार्थरूपेण सद्द्रव्यस्य विभक्तत्वात् ॥ घटत्वादिभिरवच्छिन्नं सत् पूर्णमिति चेन्न—अवच्छिन्नत्वदर्शनादेवानवच्छेदासिद्धेः ॥ घटत्वावच्छिन्नस्य सतः पटत्वाद्यवच्छिन्नांशान्तरैरभिन्नत्वं पूर्णत्वमिति चेत्--तर्ह्येकस्थूणावस्थितस्यांशस्य स्थूणान्तरावच्छिन्नांशैरभिन्नत्वेन पूर्णत्ववत् घटा(टत्वा?)वच्छिन्नस्य सद्द्रव्यस्य पूर्णत्वमंशान्तरसापेक्षमित्युक्तं स्यात । ततश्च घटमात्ररूपस्य सद्द्रव्यस्यापूर्णत्वमेवोक्तं भवति ॥ **कथं तर्हि भवत्पक्षे शरीरभूतेषु चिदचिद्वस्तुषु परमात्मनः पूर्णत्वम्? अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वमिति** ब्रूमः । तच्च शास्त्रबलादभ्युपेतम्; न तु प्रत्यक्षादिनेति न काचिदनुपपत्तिः । किञ्च परमात्मनस्तृणादावपि सद्रूपेण पूर्णत्वप्रतिपादनप्रयासश्च तत्रभवतां विफलः । येन केनचित् तृणादिवाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वोपपादनार्थं हि पूर्णत्वकथनम् । तत्तु न सिध्यति, अस्तित्वस्यापि घटादिशब्दवाच्यत्वे घटोऽस्ति घटो नास्तीति प्रयोगस्य पुनरुक्तिव्याघातौ प्रसज्येयाताम् ॥ ननु घटादिशब्दानां विशिष्टवाचित्वं तवाभिमतम् । तत्र विशेष्यद्रव्यं सदिति चेत्—सत्यम्; तथापि घटादयः शब्दाः घटत्वाद्याश्रयरूपेण विशेष्यं वदन्ति, न तु सत्तारूपेण द्रव्यत्वरूपेण वा । अतो नास्मत्पक्षे पुनरुक्तिव्याघातादिदोषप्रसङ्गः । अतः पूर्णस्यापूर्णस्य वा सद्द्रव्यस्य शब्दवाच्यत्वाभावात् पूर्णतयाऽवस्थानकथनं परमात्मोपक्रमत्वानुपयोगी—इति सूत्रत्रयस्य यथोक्तार्थपरत्वं सिद्धम् ॥

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥ पेटिकासङ्गतिमाह **एवमिति** । **एवंशब्दे**नातीताधिकरणत्रयात्मकपेटिकाद्वयकृतनिरसनप्रकारो विवक्षितः, आद्याधिकरणत्रयेण हि साक्षात्सङ्गतेन, विकल्पेन पुरुषाधिष्ठितप्रकृतेर्जगत्कारणत्वं निरस्तम् । द्वितीयेन तु पादासङ्गतेनापि प्रसङ्गप्राप्तेन, नियमेन कारणत्वं प्रतिक्षिप्तम् । तत्र छायानुसारिवाक्यविषयतया पादसङ्गतत्वेऽपि अयोगव्यवच्छेदप्रतिक्षेपेणोत्थितत्वात् तेनाऽऽकारेण प्रासङ्गिकत्वमपि विद्यते । एवं विकल्पेन नियमेन च कारणत्वे प्रतिक्षिप्ते, समुच्चयेन कारणत्वं प्रतिक्षिप्यत इति नासङ्गतिरित्यर्थः । स्वनिष्ठवस्तुद्वयस्य निमित्तभावेनोपादानभावेन चान्योन्यसापेक्षतया एकस्मिन् कार्येऽन्वयो हि व्युदस्यते । सिद्धान्ते तु ज्ञानादिवत्, उपादानभूतस्य ब्रह्मणः प्रकृतिर्विशेषणम्, तस्य सर्वशक्तित्वादिति न समुच्चयनिरासविरोधः । अत एवावान्तरसङ्गतिरप्यस्ति; 'मैत्रेयीब्राह्मणे हि परब्रह्मण एव सर्वविधकारणत्वमुक्तम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादिभिः । तदयुक्तम्; परब्रह्मणो निमित्तमात्रत्वात् । उपादानं तु प्रधानम्' इति शङ्कयोत्थानप्रतीतेः । किं ब्रह्म निमित्तमात्रम्, उत उपादानमपीति । किं कारणवाक्यं ब्रह्मणो निमित्तत्वमात्रं प्रतिपादयति, उतोपादानतामपीति । प्रतिज्ञादृष्टान्तौ किं स्वारस्येन नेयौ, उत क्लिष्टतया नेयौ । किमन्यत्र निमित्तोपादानभेदनियमः निर्दोषत्वश्रुतिर्निमित्तोपादानभेदश्रुतिश्च प्रतिज्ञादृष्टान्तोपरोधका भवन्ति, नेति । यदोपरोधका भवन्ति, तदा प्रतिज्ञादृष्टान्तयोः

यद्यपीक्षणादिगुणयोगात् सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति, तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते। न हि वेदान्ताः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्य अधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति।

तथा ह्यपरिणामिनमेनम्, प्रकृतिं चैतदधिष्ठितां परिणामिनीमधीयते—"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "स वा एष महानज आत्माऽजरोऽमरः", "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्"॥ "ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्॥ गौरनाद्यन्तवती सा जनित्री भूतभाविनी" इति। तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्वं जगत् सृजतीति श्रूयते, "अस्मान्मायी सृजते विश्वमेतत्... मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति। स्मृतिरपि. "मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्" इति।

एवमश्रुतेऽपि प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथानुपपत्त्यैव प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादान[कारण]त्वं च सिद्ध्यति। एवमेव हि लोके निमित्तोपादानयोरत्यन्तभेदो दृश्यते। मृत्सुवर्णादेरचेतनस्य घटकटकाद्युपादानत्वम्, चेतनस्य कुलाल-

---

क्लिष्टतया निर्वाह्यत्वान्निमित्तत्वमात्रं वेदान्ताः प्रतिपादयन्तीति ब्रह्म निमित्तमात्रमिति पूर्वपक्षः स्यात्। यदा नोपरोधका भवन्ति, तदा प्रतिज्ञादृष्टान्तयोः स्वरसतया नेयत्वादुपादानत्वमपि वेदान्ताः प्रतिपादयन्तीति उपादानमपि ब्रह्मैवेति राद्धान्ते फलफलिभावः।

ईक्षत्यानन्दमयाद्यधिकरणसिद्धार्थाक्षेपपरिहारमुखेन परब्रह्मकारणत्वे समर्थिते कथं पुनः साङ्ख्यस्योत्थानमिति शङ्कामनुवदन् पूर्वपक्षी स्वमतं प्रतिजानीते **यद्यपीति**। **ईक्षणादी**त्यादिशब्द आनन्दादिपरः। **वेदान्तैरेव**। ब्रह्मैककारणत्वपरतया त्वदभिमतैरेवेति भावः। प्रतिज्ञातमुपपादयति **न हीति**। ईश्वरस्य चेतनत्वादपरिणामित्वेनाधिष्ठातृत्वेन च, प्रधानस्याचेतनतया परिणामित्वेनाधिष्ठेयत्वेन च वेदान्तप्रतिपादितत्वं प्रतिज्ञातार्थे हेतुरित्यर्थः। हेतुसिद्धिं दर्शयति **तथा हीति**। '**निष्कलम्**' इत्यादिवाक्यमीश्वरस्यापरिणामित्वविषयम्। **विकारजननी**मिति प्रकृतेर्विकारित्वाधिष्ठेयत्वविषयम्। **जनित्री**—समष्टिसृष्टिकरी। **भूतभाविनी**—व्यष्टिसृष्टिकरी। प्रधानप्रतिपादके वाक्ये तद्विशेषणतयेश्वरस्याधिष्ठातृत्वं दर्शितम्। ईश्वरप्रतिपादके वाक्ये तस्य प्रधानाधिष्ठातृतया उपादानभूतात् तस्माद्भेदं दर्शयति **तथेति**। **महेश्वरशब्देन मायिशब्द**निर्दिष्टस्य निमित्तकारणस्य मायां प्रति प्रेरकत्वं विवक्षितमिति भावः। श्रुतेरुक्तार्थपरत्वं स्मृतिसंवादेन द्रढयति **स्मृतिरपीति**। श्रुतिषु प्रधानप्रतिपादनाभावमभ्युपगम्य तस्योपादानत्वं समर्थयति(ते ?)**एवमश्रुतेऽपीति**। **ब्रह्मण इति**। सत्यज्ञानादिलक्षणत्वादपरिणामिन इति भावः। **प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादानत्वं चेति**। समस्तप्रपञ्चनिर्माणानुगुणमचेतनस्वरूपं तस्य चाचेतनत्वादेव तदधिष्ठितत्वं च सिद्ध्यतीत्यर्थः। कारणत्वश्रुतेरन्यथानुपपत्त्युपयोगिनीं व्याप्तिं शिक्षयति **एवमेव हीति**। **अत्यन्तभेदः**— शरीरतया आत्मनिष्ठत्वमप्यसहमानो भेदः। यद्वा तर्कमपि पृथक् साधनत्वेनाह **एवमेव हीति**। पूर्वोक्तश्रुत्यर्थापत्त्युपपादकत्वे हिशब्दः स्वरसः। ननु यत्र निमित्तोपादानयोरुभयोरप्यपेक्षा, तत्र तयोर्भवतु भेदः। यथा वृश्चिको वृश्चिकोत्पादने गोमयानपेक्षः, यथा च स्वर्गे साध्ये ज्योतिष्टोमो

सुवर्णकारादेर्निमित्तत्वं च नियतमुपलभ्यते । कार्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा दृष्टा । एवं निमित्तोपादानयोर्भेदनियमं कार्यनिष्पत्तेरनेककारकसव्यपेक्षत्वनियमञ्चातिक्रम्य, एकमेव ब्रह्म उपादानं निमित्तं च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि ।

अतो ब्रह्म निमित्तकारणमेव, नोपादानम् । उपादानं तु तदधिष्ठितं प्रधानमेव—इति-

एवं प्राप्तेऽभिधीयते प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्-इति । प्रकृतिश्च—उपादानं च । न निमित्तकारणमात्रं ब्रह्म, उपादानकारणं च ब्रह्मैवेत्यर्थः । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात् । एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते । प्रतिज्ञा तावत्, "स्तब्धोऽस्युत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातम्" इति एकविज्ञानेन सर्वविज्ञानविषया । दृष्टान्तश्च, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्...यथा सोम्यैकेन लोहमणिना... यथा सोम्यैकेन नखनिकृन्तनेन" इति कारणविज्ञानात्कार्यविज्ञानविषयः । यदि निमित्तकारणमेव जगतो ब्रह्म, तदा तद्विज्ञानात् न समस्तं जगत् विज्ञातं स्यात् । न हि कुलालादिविज्ञानेन घटादिर्विज्ञायते । अतः प्रतिज्ञादृष्टान्तयोर्बाध एव । ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्ड-लोहमणि-नखनिकृन्तनविज्ञानेन घटमणिक कटकमुकुट-वासीपरश्वथादितत्कार्यविज्ञानवत् निखिल-जगदुपादानभूते ब्रह्मणि विज्ञाते तत्कार्यं निखिलं जगत् विज्ञातं (तमेव) स्यात् । कारणमेवा-

---

दर्शपूर्णमासनिरपेक्षः—एवं निमित्तमात्रेण कार्यं सिध्यति चेत्, किं प्रधानकारणत्वाश्रयणेनेत्यत्राह **कार्यनिष्पत्तिश्चे**ति । **एवमेव ही**त्यादिभाष्यं यदा पृथक्साधनत्वेन तर्कप्रतिपादकम्, तदानीम**चेतन-स्ये**त्यादिपदैर्हेतवोऽभिप्रेताः स्युः—ईश्वरो न द्रव्यं प्रति उपादानम्, चेतनत्वात् जीववत् । विमतमुपादानं स्वकार्यनिमित्ताद्भिन्नम् उपादानत्वात् मृत्पिण्डवत्; विमतं कार्यमनेककारकसापेक्षम्, कार्यत्वात् पटवदिति प्रयोगः (गाः१) । 'एकमेवाद्वितीयम्', 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्' इत्यादि-श्रुतिबलान्निमित्तोपादानैक्यमभ्युपगन्तव्यमित्यत्राह **एवं निमित्तोपादानयो**रिति । एवमिति(**एवम्**—१) पूर्वोक्तश्रुतिश्रुत्यर्थापत्त्यानुगुण्येन । तर्कसहचरितश्रुतिश्रुत्यर्थापत्तीनां प्रबलत्वात् केवलश्रुतिमात्रं प्रतीयमानमपि स्वार्थं यूपादित्यैक्यमिव न प्रतिपादयितुं शक्नोतीत्यर्थः । **एकमेव ब्रह्म उपादानं निमित्तं चे**ति । परिणामित्वापरिणामित्वयोश्चेतनत्वाचेतनत्वयोः प्रेर्यत्वप्रेरकत्वयोश्च एकस्मिन् व्याहतत्वाच्चायोग्यं निमित्तो-पादानैक्यं न वेदान्ताः प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः । **नोपादानम्**—नोपादानमपीत्यर्थः । न हि निमित्तं वोपादानं वेति विशये उपादानत्वं निषिध्यते, किन्तूभयात्मकत्वं हि प्रतिषेध्यम् ॥

**एवं प्राप्ते** इति । स्वभाव-मूलप्रकृतिव्यावृत्त्यर्थं प्रकृतिशब्दं व्याचष्टे **उपादानं चे**ति । सूत्रस्थचशब्दं विवृण्वन् वाक्यार्थं योजयति **न निमित्ते**ति । का प्रतिज्ञा, को दृष्टान्तः, तयोरनु-परोधः कथमित्यत्राह **एवमेव ही**ति । बहुदृष्टान्तोपादानं तात्पर्यज्ञापनार्थम् । अनुपरोधं विवृणोति **यदी**ति । उक्तमुपपादयति **न ही**ति । एवं विपर्यये अनुपपत्तिरुक्ता । अथोक्तार्थोपपत्तिमाह **ब्रह्मण एवे**ति । एवं सौत्रं हेतुवाचिपदं व्याख्यातम्; वैशेषिकमतेन बुद्धिशब्दान्तरादिभिः कारणात् कार्यस्य द्रव्यान्तरत्वेन प्रतिज्ञादृष्टान्तानुपपत्तिमाशङ्क्य तां परिहरन् सहेतुकं वाक्यार्थमाह **कारणमेवे**ति । एवं वाचारम्भणमित्यादिवाक्यार्थ उक्तः । तत्र हि कार्यकारणैक्यं प्रतिपाद्यते ॥ नन्वव्यक्तशब्दवाच्या-

वस्थान्तरापन्नं कार्यम्, न द्रव्यान्तरमिति कार्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनाद् ब्रह्म जगदुपादानं चेति निश्चीयते।

यत्तु निमित्तोपादानयोर्भेदः श्रुत्यैव प्रतीयत इति—तदसत्; निमित्तोपादानयोरैक्यप्रतीतेः, "उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इति। आदिश्यते—प्रशिष्यतेऽनेनेत्यादेशः; "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतेः। साधकतमत्वेन कर्ता विवक्षितः। तमादेष्टारमप्राक्ष्यः, येनाश्रुतं श्रुतं भवति—येनाऽऽदेष्ट्राऽधिष्ठात्रा श्रुतेनाश्रुतमपि श्रुतं भवतीति निमित्तोपादानयोरैक्यं प्रतीयते; "सदेव सोम्येदमग्र आसीदेकमेव" इति प्राक्सृष्टेरेकत्वावधारणात्, अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणाच्च॥

नन्वेवं सति, "विकारजननीम्", "गौरनाद्यन्तवती" इत्यादिभिः, प्रकृतेराद्यन्तविरहेण नित्यत्वं

---

वस्थायामेव ब्रह्मण उपादानत्वे सर्वोपादानत्वाभावात् प्रतिज्ञोपरोधः, घटाद्यवस्थास्वपि ब्रह्मण उपादानत्वे मृद उपादानत्वाभावात् दृष्टान्तविरोध इति॥ तत्र न प्रथमं शिरः, अनभ्युपगमहतत्वात्। द्वितीये मृदाद्यवस्थद्रव्यशरीरकस्यैव ब्रह्मण उपादानत्वादविरोधः। विशेषणभूतमृद्द्रव्यमात्रस्य कार्यकारणभावो लोकप्रसिद्धत्वाद्दृष्टान्तीकृतः। तत्तदवस्थद्रव्यशरीरकस्यैव ब्रह्मणः कार्यकारणभावस्तु लोकप्रसिद्धत्वाभावात् दार्ष्टान्तिक इति प्रतिज्ञादृष्टान्तानुपरोधः। ब्रह्मण उपादानत्वे निमित्तान्तरं स्यादिति शङ्कां परिहरिष्यन् परोक्तां श्रुत्यैव निमित्तोपादानभेदसिद्धिमनुवदति **यत्त्विति**। **तत्**—निमित्तोपादानभेदप्रतिपादनमसदित्यर्थः। निमित्तोपादानैक्ये श्रुतिमाह **उत तमादेश**मिति। 'प्रत्ययार्थः कर्म; प्रकृत्यर्थ उपदेशः, उपदेश्यमित्यर्थः' इत्यादेशशब्दः परैर्व्याख्यातः; तद्व्यावृत्त्यर्थं व्याचष्टे **आदिश्यत** इत्यादिना। **प्रशिष्यत** इति प्रकृत्यर्थव्याख्यानम्। **अनेने**ति प्रत्ययार्थव्याख्यानम्, "अकर्तरि च कारके संज्ञायाम्' इति घञः कर्तृव्यतिरिक्तार्थविषयत्वात् आदिशतीत्यादेश इत्यनुक्तिः। अत **आदिश्यते प्रशिष्यते अनेने**त्येवोक्तम्। प्रशासितृत्वे ब्रह्मणः सिद्धे हि एवं वर्णनीयमित्यत्राह **एतस्य वा** इति। अकर्त्रर्थप्रत्ययान्तस्य कथं शासितृवाचित्वमित्यत्राह **साधकतमत्वेने**ति अव्यवहितसाधनत्वं **साधकतमत्वम्**। तथात्वेन कर्ता विवक्षितः; "विवक्षातः कारकाणि भवन्ति" इति न्यायादिति भावः॥ परेषां प्रत्ययार्थस्वारस्यम्; अत्र तु प्रकृत्यर्थस्वारस्यम्; अन्यतरास्वारस्यमुभयत्राविशिष्टमिति चेन्न—प्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति हेतुद्वयसिद्धेः। प्रशासितृत्वे कथिते हि ब्रह्मणोऽसाधारणधर्म उक्तः स्यात्। उपदेश्यत्वं हि साधारणम्। उपदेशश्चोपदेश्यवस्तु असाधारणाकारेण वक्तुं [1]युज्यते। न हि गवये बुभुत्सिते चतुष्पात् गवय इत्युपदेशो युक्तः। तस्मात् प्रकृत्यर्थस्वारस्यमर्थौचित्यं चाभ्यधिकमिति वैषम्यम्। एवं प्रशासितुर्विज्ञानेन सर्वविज्ञानोक्त्या निमित्तोपादानैक्यं सिद्धमित्याह **येने**ति। कारणवाक्येऽपि निमित्तोपादानैक्यं दर्शयति **सदेवे**ति। प्राक्सृष्टेरेकत्वावधारणं तु निमित्तोपादानभेदे न घटते। अतः एकत्वावधारणं च हेतुः, अधिष्ठात्रन्तरनिवारणं च हेतुरित्यर्थः। **नन्वेव**मिति। **एवं सति**—ब्रह्मण एव जगदुपादानत्वे सतीत्यर्थः। प्रकृतेर्जगदुपादानत्वश्रवणेऽपि ब्रह्मणो जगदुपादानत्वं युक्तम्। प्रकृतेरपि ब्रह्मोपादानकत्वादित्यत्राह **आद्यन्तविरहेण नित्यत्व**मिति। प्रकृतेर्ब्रह्मोपादानकत्वमयुक्तम्;

---

[1] युज्यते—क्रियते। भवितुमर्हतीति वा।

जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते ॥ तदुच्यते-तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाभिधीयते; ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्। तथा हि श्रुतयः "सर्वं तं परादात्, योऽन्यत्राऽऽत्मनः सर्वं वेद", "यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्" इत्याद्याः; "सर्वं खल्विदं ब्रह्म", "ऐतदात्म्यमिदं सर्वम्" इति कार्यावस्थं कारणावस्थं च सर्वं जगद् ब्रह्मात्मकमिति श्रवणाच्च। एतदुक्तं भवति—"यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्यारभ्य, "योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद, योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद", "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य, "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः" इति च सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म कदाचिद्विभक्तनामरूपम्, कदाचिच्चाविभक्तनामरूपम्; यदा विभक्तनामरूपम्, तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते; यदा चाविभक्तनामरूपम्, तदा एकमद्वितीयं कारणमिति च। एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणोऽविभक्तनामरूपा या कारणावस्था, सा, "गौरनाद्यन्तवती", "विकारजननीमज्ञाम्" "अजामेकाम्" इत्यादिभिरभिधीयते—इति।

ननु च, "महानव्यक्ते लीयते; अव्यक्तमक्षरे लीयते" इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते; तथा च महाभारते, "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम... अव्यक्तं पुरुषे

---

तस्यास्तु नित्यत्वश्रवणात्। अतः सैवोपादानमिति ब्रह्म निमित्तमेवेत्याशयः। **तदुच्यत** इति। **प्रकृतिशब्देन**—प्रकृतिवाचकशब्देनेत्यर्थः। **ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्**—[1]युतसिद्धवस्त्वन्तराभावादित्यर्थः। **केन कं पश्येत्। केन** अब्रह्मात्मकस्वनिष्ठदर्शनसाधनेन कं स्वनिष्ठमर्थं कः चेतनः पश्येत्। स्वनिष्ठार्थदर्शनसाधनं स्वनिष्ठं दृश्यं तद्द्रष्टा च नास्तीत्यर्थः। न द्रष्टृदृश्यनिषेध इह प्रतिपाद्यः, 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति स्ववाक्यैकदेशेन, "सर्वं ह पश्यः पश्यति" इत्यादिवाक्यान्तरेण च ब्रह्मात्मकत्वेन सर्वानुभवस्य विहितत्वात्। स्वनिष्ठवस्त्वन्तराभावे श्रुतिमाह **सर्वं खल्विति**। एवं व्यतिरेकोऽन्वयश्चोक्तः। ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन प्रकृतिशब्दवाच्यं ब्रह्मैव चेत्, विकारापुरुषार्थरूपदोषाः ब्रह्मण एव स्युरित्यत्राह **एतदुक्त**मिति। प्रकृतिपुरुषकालविशिष्टमेव कारणं चेत्, कारणावस्था तस्यां चैकत्वं कार्यावस्था तस्यां च बहुत्वं ब्रह्मणः कारणत्वं चिदचितोः कार्यत्वं च कथं घटत इत्याशङ्क्याह **कदाचिद्विभक्ते**ति। **कदाचित्**—सिसृक्षोत्तरकालम्। **कदाचित्**—सञ्जिहीर्षोत्तरकालम्। **एकमद्वितीय**मिति निर्देशो निमित्तोपादानयोरैक्यविषयश्रुतिसारणार्थः। ततः किं गौरनाद्यन्तवतीत्यादेः प्रस्तुतवाक्यस्येत्यत्राह **एवं सर्वदे**ति। **या कारणावस्था सा...अभिधीयते** इति नावस्थानित्यत्वविवक्षयोच्यते; किंतु कारणावस्थोपलक्षितद्रव्यनित्यत्वमभिधीयते। इत्यर्थः(?)। अव्यक्तशब्दवाच्याया अवस्थायाः परमकारणावस्थयैक्यं मन्वानः पार्श्वस्थश्चोदयति **ननु चेति**। अविभक्तनामरूपप्रधानविशिष्टब्रह्मणः कारणत्वमनुपपन्नम्, अविभक्तनामरूपस्य सूक्ष्मावस्थस्याव्यक्तशब्दवाच्यस्याप्युत्पत्ति-

---

[1] युतसिद्धेति—पृथक्सिद्धेत्यर्थः।

ब्रह्मन् निष्क्रिये संप्रलीयते" इति ॥ नैष दोषः; अचिद्वस्तुशरीरस्य ब्रह्मणोऽव्यक्तशब्दवाच्यायाः त्रिगुणावस्थायाः कार्यत्वात् । "यदा तमस्तन्न दिवा न रात्रिः" इति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनः स्थित्यभिधानात् जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमति- सूक्ष्मं चाचिद्वस्तु नित्यमेवेति तत्प्रकारं ब्रह्मैव "गौरनाद्यन्तवती" इत्यादिष्वभिधीयते । अत एव च, "अक्षरं तमसि लीयते तमः परे देव एकीभवति" इति तमस एकीभावमात्रमेव श्रूयते; न तु लयः । एकीभाव इति तमोभिधानातिसूक्ष्माचित्प्रकारस्य ब्रह्मणोऽविभक्तनामरूपतयाऽवस्था- नमभिधीयते । "तम आसीत् तमसा गूढमग्रे प्रकेतम् ... तमसस्तन्महिनाऽजायतैकम्" इत्याद्य- प्येतदेव वदति । तथा च मानवं वचः, "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यम-

---

प्रलयश्रवणादित्यर्थः । **नैष** इति । अचिद्वस्तुनोऽव्यक्तावस्थाया अपि सूक्ष्मावस्थासंभवात् तदवस्थाचिद्विशिष्टं ब्रह्म अव्यक्तकारणमित्यर्थः । तत्र प्रमाणमाह **यदा तम** इति । **अत एवे**ति । **अत एव**—तदानीमपि तमश्शब्दवाच्यस्य ब्रह्मप्रकारस्याचित्तत्त्वस्य सद्भावादेवेत्यर्थः । शब्दवैजात्यमर्थवैजात्यनिबन्धनम्; अर्थवैजात्यञ्च सकलश्रुत्यनुसारेण भवतीति भावः । अर्थवैजात्यमेव विवृणोति **एकीभाव** इति ।

'पृथिव्यप्सु लीयत' इत्यादिषु लयशब्देन पूर्वपूर्वावस्थस्य द्रव्यस्य पूर्वपूर्वावस्थाप्रहाणेन उत्तरोत्तरा- वस्थत्वमभिहितम् । पृथिव्येव ह्यम्ब्ववस्थाऽभूत् । पृथिवीत्वं विहाय पृथिवी अम्भोभिरेकद्रव्यं यथाऽभूत्, एवं तमश्शब्दवाच्यमपि वस्तु तमस्त्वावस्थाप्रहाणेन परमात्मद्रव्यं भवति चेत्—लयशब्दः प्रयोक्तव्यः । न तथा श्रूयते । अतः परमात्मनि तमोऽवस्थितमित्यर्थः । तत्र पृथिवीत्वप्रहाणेन यद्वस्तु सलिलमभूत्, तत् सलिलत्वाप्रहाणेन पूर्वमेव स्थितेनाम्भसैकीभवति । यथा च त्यक्तजलत्वावस्थं जलद्रव्यं यत् तेजोऽभूत्, तत् तेजस्त्वाप्रहाणेन प्रागवस्थिततेजसैकीभवति, एवं विभक्तं तमः तमस्त्वावस्थामजहदेव कार्यानुपयुक्तस्वजातीयतमसैकीभवति । तत्र परमात्मनः स्वरूपेण तमस्त्वायोगात् 'यस्य मृत्युः शरीरम्' इति स्थानप्रमाणेन मृत्युसंज्ञतयाऽवगतस्य तमसः परशरीरत्वश्रवणाच्च कार्यानुपयुक्ततमश्शरीरकपरमात्मनैकी- भवति । **एकीभावश्च** तमस्त्वे स्थित एव ततोऽप्यतिसूक्ष्मतापत्तिः । न हि पूर्वं खण्डितं तमः पश्चादेकी- भवति; किन्तु अवस्थावैषम्येण । अवस्थावैषम्यं हि विभागः । अतोऽनतिप्रकृष्टसूक्ष्मत्वं विभागः; अविभागश्च निरतिशयसूक्ष्मतापत्तिः । वस्तुस्वरूपैक्याभावेऽपि तदन्तर्भावमात्रेणैकशब्दप्रयोगो दृष्टः । यथा मथनात्पूर्वमनुद्भूताग्नौ दारुण्येकशब्दः, यथा वा आहितमात्रगर्भायां योषायाम् एकेयमिति प्रयोगः । तत्र हि चेतनद्वयमस्ति । तथाप्यन्य[तर ?]स्यान्यतरान्तर्भावादेकशब्दप्रयोगविषयत्वम्—यथा वाऽनेकक्रिमिकीटादिजन्तुसंवृतवपुषि पुरुषे एकशब्दप्रयोगः—तथेत्यर्थः ।

**आसीदिद**मिति । लयशब्दार्थोऽवस्थान्तरापत्तिरेव, न तु द्रव्यविनाश इतीममर्थं विशदयति **तमोभूत**मिति । तमोवस्थमित्यर्थः । "अग्न्यवस्थे च सलिले वाय्ववस्थे च तेजसि" इति वचनात् । तर्ह्युपलभ्यम्; उपलब्ध्यभावात् तन्नास्तीत्यत्राह **अप्रज्ञात**मिति । प्रकृष्टं स्पष्टं ज्ञानमपरोक्षज्ञानम्; न तद्विषय इत्यर्थः । कुत इत्यत्राह **अलक्षण**मिति । रूपादिरहितत्वादित्यर्थः । "कारणगुणप्रक्रमेण कार्ये गुणारम्भः" इति न्यायात् रूपादिमत्कारणमपि रूपादिमत् स्यादित्यत्राह **अप्रतर्क्यम्**—

विज्ञेयं प्रसुप्तमिव सर्वतः" इति । "अस्मान्मायी सृजते विश्वमेतत्" इत्यादि अनन्तरमेवोपपादयिष्यते ; ब्रह्मणोऽपरिणामित्वश्रुतयश्च ।

यत्तु—एकस्य निमित्तत्वमुपादानत्वं च न संभवति, एककारकनिष्पाद्यत्वं च कार्यस्य, लोके तथा नियमदर्शनात् । अतोऽग्निना सिञ्चेदितिवत् वेदान्तवाक्यानि एकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवन्तीति—अत्रोच्यते—सकलेतरविलक्षणस्य परस्य ब्रह्मणः सर्वशक्तेः सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते । मृदादेरचेतनस्य ज्ञानाभावेनाधिष्ठातृत्वायोगात्, अधिष्ठातुः कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसङ्कल्पतया च तथा दर्शननियमः । अतो ब्रह्मैव जगतो निमित्तमुपादानं च ॥ २३ ॥

अभिध्योपदेशाच्च । १ । ४ । २४ ॥

इतश्चोभयं ब्रह्मैव ; "सोऽकामयत, बहु स्यां प्रजायेयेति", "तदैक्षत बहु स्यां प्रजायेय" इति स्रष्टुर्ब्रह्मणः स्वस्यैव बहुभवनसङ्कल्पोपदेशात् । विचित्रचिदचिद्रूपेणाहमेव बहु स्याम्, तथा

---

अतर्कगोचरम् । एवं विभक्तावस्थं तम उक्तम् ; अविभक्तं तम आह **अविज्ञेयम्** । विविच्य—विभज्य ज्ञातुमशक्यमित्यर्थः । **प्रसुप्तमिव**—यथा सुषुप्तौ परमात्मनि लीनस्य चेतनस्य लयो न परमात्मत्वापत्तिः, अपि तु नामरूपप्रहाणेन सत्तामात्रमेव—तथा महाप्रलयेऽपि चिदचितोः पृथङ्नामरूपप्रहाणमेव; न सत्ताहानिरित्यर्थः । विशेषमाह **सर्वत** इति । सुषुप्तावेकदेशलयः ; अत्र तु सर्वलय इत्यर्थः । यद्वा **अविज्ञेय**मित्यन्तेन अचिदंशलय उक्तः ; **प्रसुप्तमिवेति** चिदंशलयः । तत्रापि न सत्ताहानिः, यथा सुषुप्तावित्यर्थः ।

एवं ब्रह्मण एव सर्वविधकारणत्वं प्रामाणिकमित्युक्तम् । तर्हि पूर्वोक्तश्रुतिश्रुत्यर्थापत्तिनिर्वाहः कथमित्यत्राह **अस्मान्मायीति** । **अपरिणामित्वश्रुतयश्च उपपादयिष्यन्त** इत्यन्वयः । श्रुत्यर्थापत्तिः परिहरिष्यत इत्यर्थः ।

श्रुत्यनुग्राहकतया पराभिमतं तर्कमनुभाषते **यत्त्वेकस्येति** । पराभिमततर्काणां सोपाधिकत्वं वक्तुमुपाधीनामज्ञत्वादीनां पक्षे ब्रह्मण्यविद्यमानतां दर्शयति **सकलेतरेति** । परेण हि तर्कानुगृहीतश्रुतिप्राबल्यमुक्तम् । तत्र शरीरशरीरिभावश्रुतिभिरेव उपादानत्वनिर्विकारत्वादिश्रुतीनामविरोधस्य निरुह्यमाणत्वात् द्वारद्वारिभावेन सर्वश्रुत्यैकार्थ्ये संभवत्यपि, विरोधारोपणेन निमित्तोपादानैकत्वपरानेकश्रुतिवाक्यबाधकल्पनस्यायुक्तत्वात् सर्ववाक्यानामैकार्थ्यमभ्युपगन्तव्यम् । तथा सति तद्विरुद्धस्तर्कः केवलतर्क इति तस्य दुर्बलत्वात् राद्धान्तः स्थिरतर इत्यभिप्रयन् सोपाधिकत्वमाह—**मृदादेरिति** । उपादानस्य मृदादेर्निमित्तत्वम् अज्ञत्वात्, निमित्तस्य कुलालादेरनुपादानत्वं स्वशरीरेण तथा परिणामशक्तिरहितत्वात् ; तस्यानेककारकसापेक्षत्वं च असत्यसङ्कल्पत्वादिति परोक्ततर्काः सोपाधिकाः । अतो मृत्पिण्डकुलालादिविपरीतस्वभावस्य ब्रह्मणः सर्वमुपपन्नमित्यभिप्रायः ॥

**अभिध्योपदेशाच्च** ॥ **इतश्चोभयं ब्रह्मेति** । पूर्वसूत्रस्थप्रतिज्ञावाक्येनास्य हेतोरन्वय इत्यर्थः । **सङ्कल्पोपदेशादित्यन्तेन** सूत्राक्षरार्थ उक्तः । बहुभवनं रामकृष्णादिवच्च संभवतीति तद्व्यावृत्त्यर्थमाह **विचित्रचिदचिद्रूपेणेति** । "तत्तेजोऽसृजत"इति तेजःप्रभृतिसृष्टेरनन्तरोक्तत्वात् चिदचिद्रूपेण बहुत्वस्य

**प्रजायेयेति सङ्कल्पपूर्विका हि सृष्टिरुपदिश्यते ॥ २४ ॥**

**साक्षाच्चोभयाम्नानात् १ । ४ । २५ ॥**

**न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरयमर्थो निश्चीयते, ब्रह्मण एव निमित्तत्वमुपादानत्वं च साक्षादाम्नायते, "किं स्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तत् यदध्यतिष्ठद्भुवनानि धारयन् । ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति । अत्र हि स्रष्टुर्ब्रह्मणः किमुपादानं कानि चोपकरणानीति लोकदृष्ट्या पृष्टे, सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति ब्रह्मैवोपादानमुपकरणानि चेति परिहृतम् । अतश्चोभयं ब्रह्म ॥ २५ ॥**

**आत्मकृतेः १ । ४ । २६ ॥**

**"सोऽकामयत बहु स्यां प्रजायेय" इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणः, "तदात्मानं**

---

विवक्षितत्वमित्यर्थः । स्वस्यैव च बहुभवनादुपादानत्वम्, बहुभवनस्य सङ्कल्पसामानाधिकरण्यान्निमित्तत्वमिति भावः ॥

**साक्षाच्चोभयाम्नानात्** ॥ आदिशब्देन वक्ष्यमाणा आत्मकृतिप्रभृतयो विवक्षिताः । **किंस्विद्वनम्** । पूर्वं कुत्र स्थित इति भावः । **क उ स वृक्ष आसीत्** । किमुपादानमित्यर्थः । **यदध्यतिष्ठद्भुवनानि धारयन्** । भुवनानि धारयता ईश्वरेणाधिष्ठेयमुपकरणादिकं किमित्यर्थः । प्रतिवचनेऽपि ब्रह्म **वनम्**—अधिकरणम् । ब्रह्म स **वृक्षः** उपादानम् । **निष्टतक्षुरि**ति बहुत्वमविवक्षितम्; "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्च" इति द्यावापृथिव्यादीनामेककर्तृकत्वश्रवणेन कर्तृबहुत्वासंभवात् ॥ ननु ब्रह्मशब्दः प्रकृतिवचनः, भुवनानि धारयतेश्वरेणाधिष्ठितत्वश्रवणात् । धारयन्निति पुँल्लिङ्गतया ब्रह्मशब्दसामानाधिकरण्यायोगात् । अधिष्ठाने हि ब्रह्म कर्मभूतमिति ॥ न; ब्रह्मशब्दमुख्यार्थपरिग्रहस्य स्वतः प्राप्तत्वात् उपक्रमस्थानेकब्रह्मशब्दबाधायोगात् । एतदुक्तं भवति—ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति; भुवनानि धारयन्नीश्वरो ब्रह्मवाच्यस्वात्मानमेवाध्यधिष्ठत = अधिष्ठेयमुपकरणादिकमपि ब्रह्मैवेत्यर्थ इति । अत्र प्रश्नप्रतिवचनरूपेण कथनस्य प्रयोजनम्—लोकदृष्ट्या कृतं चोद्यं सर्वविलक्षणे ब्रह्मणि न जीवतीति ज्ञापनमित्याह **अत्र हीति** । **उभयशब्दः** सर्गप्रलयपरः **परै**र्व्याख्यातः । तदयुक्तम्; निमित्तोपादानभेदेऽपि तयोरन्यतरस्य सर्गप्रलयकारणत्वाविरोधात् तदैक्यसाधकत्वाभावात्; 'आकाशादेव समुत्पद्यन्ते' इत्यवधारणस्य, जगतो बहूपादानकत्वबहुकर्तृकत्वयोरन्यतरशङ्काव्यावर्तनसंभवेन निमित्तोपादानभेदनिवारकत्वाभावाच्च ॥ ननूभयाम्नानमिति विरुध्यते; अधिकरणस्य उपादानकारणस्य कर्तुश्चैकत्वप्रतीतेरिति ॥ नैवम्; अधिष्ठेयमधिष्ठातेति कोटिद्वयान्तर्भावात् कारकाणाम् । उपादानाधिकरणोपकरणानि ह्यधिष्ठेयकोटिनिविष्टानि, 'यदध्यतिष्ठत्', ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' इति हि श्रूयते । अत **उभयाम्नान**मिति युक्तम् ॥

**आत्मकृतेः** ॥ आत्मानं प्रति स्वस्यैव कर्तृत्वमनुपपन्नम्; कार्यं हि साध्यम्, कर्ता हि

स्वयमकुरुत" इति सृष्टेः कर्मत्वं कर्तृत्वं च प्रतीयत इत्यात्मन एव बहुत्वकरणात् तस्यैव निमित्तत्वमुपादानत्वं च प्रतीयते। अविभक्तनामरूप आत्मा कर्ता, स एव विभक्तनामरूपः कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोधः। स्वयमेवाऽऽत्मानं तथाऽकुरुतेति निमित्तमुपादानं च ॥ २६ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म", "आनन्दो ब्रह्म", "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः", "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "स वा एष महानज आत्माऽजरोऽमरः" इति स्वभावतो निरस्तसमस्तचेतनाचेतनवर्तिदोषगन्धस्य निरतिशयज्ञानानन्दैकतानस्य परस्य ब्रह्मणो विविधानन्तापुरुषार्थास्पदचिदचिन्मिश्रप्रपञ्चरूपेणाऽऽत्मनो बहुभवनसङ्कल्पपूर्वकं बहुत्वकरणं कथमुपपद्यत इत्याशङ्क्याह—

**परिणामात् । १ । ४ । २७ ॥**

परिणामस्वाभाव्यात् । नात्रोपदिश्यमानस्य परिणामस्य परस्मिन् ब्रह्मणि दोषावहत्वं स्वभावः; प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्रायः । एवमेव हि परिणाम उपदिश्यते । अशेषहेयप्रत्यनीककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसङ्कल्पमवाप्तसमस्तकामम्

---

सिद्ध इति एकस्य सिद्ध्यसिद्धिविरोधादित्यत्राह **अविभक्ते**ति । आकारभेदात् सिद्ध्यसिद्ध्योरविरोध इत्यर्थः । आकारैक्यान्निमित्तोपादानैक्यमित्याह—**स्वयमेवे**ति ॥ २६ ॥

उत्तरसूत्रशङ्कामाह **सत्यं ज्ञान**मिति । पूर्वसूत्रविषयवाक्यस्याऽऽनन्दवल्लीस्थत्वात् तत्प्रकरणस्थपूर्वापरवाक्येषु निर्दोषत्वकल्याणगुणाकरत्वविरोधस्य झटिति प्रतिपन्नत्वात् प्रथमं "सत्यं ज्ञानम्" इत्यादिवाक्यद्वयमुपात्तम् । **सत्य**शब्दो हि विकाररराहित्यपरः । निर्दोषत्वादिस्फुटीकरणाय वाक्यान्तराण्युपादत्ते **अपहते**त्यादि । पूर्वपक्षे हि निमित्तोपादानभेदश्रुतिर्निर्दोषश्रुत्यन्यथानुपपत्तिश्च हेतुतयोपन्यस्ते । राद्धान्ते तु 'प्रतिज्ञादृष्टान्तानुपरोधात्', 'अभिध्योपदेशाच्च' इति सिद्धान्तसाधकतया श्रुत्यर्थापत्तिद्वयं दर्शितम् । 'साक्षाच्चोभयाम्नानात्' इत्यादिसूत्रद्वयेन, 'योनिश्च हि गीयते' इत्यनेन च सिद्धान्तसाधकश्रुतयो दर्शिताः । परिणामादिति सूत्रं तु पूर्वपक्ष्युपन्यस्तश्रुतिश्रुत्यर्थापत्तिपरिहारपरमित्यर्थः । **शङ्काग्रन्थे** निर्दोषत्वश्रुत्युपन्यासेन श्रुत्यर्थापत्तिः पूर्वोक्ता अनूदिता भवति । निमित्तोपादानभेदश्रुत्युपन्यासश्चाभिप्रेतः; अवाप्तसमस्तकामस्य सृष्ट्यनुपपत्तिरूपा निमित्तभावविरोधिनी श्रुत्यर्थापत्तिश्चाभिप्रेता; उत्तरत्र तत्परिहारस्य च वक्ष्यमाणत्वात् । द्वितीयाध्याये बह्वधिकरणेषु समर्थयिष्यमाणं ब्रह्मात्मकत्वप्रकारमुपजीव्य श्रुतिश्रुत्यर्थापत्तिपरिहारपरमिदं सूत्रम् ॥ **परिणामात्** ॥ परिणामादित्युक्ते विरोधहेतुत्वमेवास्य प्रतीयते; न तु विरोधपरिहारहेतुत्वमित्याशङ्क्याह **परिणामस्वाभाव्या**दिति । स्वभाव एव हि विरोधहेतुरित्यत्राह **नात्रे**ति । **परिणाम**शब्दः परिणामविशेषपरः । विवक्षितविशेषाभिप्रायेण सामान्यशब्दप्रयोगो गामानयेत्यादिषु दृष्टः । 'शब्दादेव प्रमितः,' 'धर्मोक्तेः' इत्यादिषु विशेषाभिप्रायेण सामान्यनिर्देशः सौत्र एव दृश्यते । इहप्रतिपन्नाच्छब्दादितिवत् इहप्रतिपन्नात् परिणामादित्यर्थः । कथं तर्हि परिणामोपदेश इति शङ्कायां तं विवृणोति **एवमेव ही**ति । यथा तत्त्वक्रमसृष्टिरनुक्ताऽप्यन्यतो ग्राह्या, यथा च सृष्ट्याद्युपयुक्ता गुणा अनुक्ता अप्यन्यतो ग्राह्याः—तथा परिणामस्य सद्वारकत्वमप्यनुक्तमन्यतो ग्राह्यमिति दर्शयन् प्रधानकारणत्ववादिनीनामपि श्रुतीनां परमात्मपर्यन्ततामाह **अशेषहेयेत्या-**

अनवधिकातिशयानन्दं स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया तदात्मभूतं परं ब्रह्म, स्वशरीरभूते प्रपञ्चे तन्मात्राहङ्कारादिकारणपरम्परया तमश्शब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति, तमसि च स्वशरीरतयाऽपि पृथङ्निर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतामापन्ने सति तथाभूततमश्शरीरं ब्रह्म, पूर्ववद्विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति सङ्कल्प्य, अप्ययक्रमेण जगच्छरीरतया आत्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः ।

तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणस्तदात्मत्वं चाऽऽम्नायते, "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः" इत्यारभ्य, "यस्याऽऽपः शरीरम्" "यस्याग्निश्शरीरम्" "यस्यान्तरिक्षं शरीरम्" "यस्य वायुश्शरीरम्" "यस्य द्यौश्शरीरम्" "यस्यादित्यः शरीरम्" "यस्य दिशश्शरीरम्" "यस्य चन्द्रतारकं शरीरम्" "यस्याकाशश्शरीरम्" "यस्य तमः शरीरम्" "यस्य तेजः शरीरम्" "यस्य सर्वाणि भूतानि शरीरम्" यस्य प्राणः शरीरम्" "यस्य वाक् शरीरम्" "यस्य चक्षुः शरीरम्" "यस्य श्रोत्रं शरीरम्" "यस्य मनः शरीरम्" "यस्य त्वक् शरीरम्" "यस्य विज्ञानं शरीरम्" "यस्य रेतः शरीरम्" इत्येवमन्तेन काण्वपाठे । माध्यन्दिने तु पाठे विज्ञानस्थाने, 'यस्याऽऽमा शरीरम्' इति विशेषः ; लोकयज्ञवेदानां परमात्मशरीरत्वमधिकम् ।

सुबालोपनिषदि च (७) पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्वमभिधाय वाजसनेयकेऽनुक्तानामपि तत्त्वानां शरीरत्वम् , ब्रह्मण आत्मत्वं च श्रूयते, "यस्य बुद्धिः शरीरम्" "यस्याहङ्कारश्शरीरम्" "यस्य चित्तं शरीरम्" "यस्याव्यक्तं शरीरम्" "यस्याक्षरं शरीरम्" "यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरम् , यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति । अत्र मृत्युशब्देन परमसूक्ष्ममचिद्वस्तु तमश्शब्दवाच्यमभिधी-

---

दिना । अवाप्तसमस्तकामस्य सर्गाद्यनुपपत्तिं परिहरति **स्वलीले**ति । एकीभावपदं व्याचष्टे **स्वशरीरतयाऽपी**ति । ननु तमआदिशब्दैः तन्निर्दिश्यते ; तत् कथं निर्देशानर्हत्वम् ॥ उच्यते । नात्र सर्वथा निर्देशानर्हत्वं विवक्षितम् । अग्निशब्देन व्यवह्रियमाणाद्बाह्याग्नेः दारुण्यन्तर्भूतस्य पृथक् अग्निरित्यनिर्दिश्यमानस्याग्नेर्यादृशं सौक्ष्म्यविशेषरूपं वैषम्यं विद्यते, अग्नित्वाप्रहाणमपि विद्यते—एवं तमस्त्वाप्रहाणेऽपि विभक्तात् तमसः अविभक्ततमसः सूक्ष्मत्वातिशयरूपं वैषम्यमस्तीत्यभिप्राय इति । ईदृशतमश्शरीरकत्वं तु न 'तदात्मानं स्वयमकुरुत' इत्यादिप्रकरणे श्रूयत इत्यत्राह **इति सर्वेषु वेदान्तेष्वि**ति ।

उक्तार्थे प्रमाणं दर्शयति **तथैवे**ति । अवान्तरतत्त्वानामुत्तरोत्तरं प्रति कारणत्वे श्रुतेऽपि तत्तच्छरीरकपरमात्मन एव कारणत्वमिति दर्शयितुम् , प्रकृतिपुरुषकालविशिष्टत्वमप्यत्रान्यत्र च क्वचित् अनुक्ततत्त्वक्रमसृष्टिवदन्यतो ग्राह्यमिति च ज्ञापयितुं 'यस्याऽऽपः शरीरम्' इत्यादिसकलवाक्यजातोपादानम् । काण्वपाठेऽनुक्तानामपि ब्रह्मशरीरत्वज्ञापनार्थं विज्ञानशब्दस्याऽऽत्मशब्देन विवरणार्थं चाऽऽह **माध्यन्दिने त्वि**ति ।

अपहतपाप्मशब्देन अमृतशब्दविवरणार्थं देवताविशेषस्य कारणत्वज्ञापनार्थं चाह **सुबाले**ति । मृत्युशब्दस्य देवताविशेषे संसारे च प्रयुक्तत्वात् तयोश्चात्रान्वयानर्हत्वादाह **अत्र मृत्युशब्देने**ति ।

यते, "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात् । सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन तदेव हि तमो मृत्युशब्दव्यपदेश्यम् । सुबालोपनिषद्येव ब्रह्मशरीरतया तदात्मकानां तत्त्वानां ब्रह्मण्येव प्रलय आम्नायते, "पृथिव्यप्सु [प्र]लीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते ; तमः परे देव एकीभवति" इति । अविभागापत्तिदशायामपि चिदचिद्वस्तु अतिसूक्ष्मं सकर्मसंस्कारं तिष्ठतीत्युत्तरत्र वक्ष्यते (ति), "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति ॥

एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मनैकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयात् निरतिशयानन्दात् सर्वज्ञात् सत्यसङ्कल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामः श्रूयते, "सत्यं ज्ञानमनन्तं ब्रह्म ... तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः ... एष ह्येवानन्दयाति ... सोऽकामयत बहु स्याम्, प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत, यदिदं किञ्च । तत् सृष्ट्वा तदेवानुप्राविशत् ; तदनुप्रविश्य सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च

---

कथमचिद्वस्तुवाची मृत्युशब्दः ? तमःशब्दवदिति चेत्— तमश्शब्दो वा कथमचिद्वस्तुवाची ? तत्राऽऽह **सर्वेषा**मिति । ज्ञानावरणरूपत्वात् तमश्शब्दवाच्यम् ; तदेव ज्ञानावरणरूपानर्थमूलत्वात् मृत्युशब्दवाच्यमित्यर्थः । 'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु' इत्यत्र लयशब्दाप्रयोगो लयस्थानत्वाभावात् । तत्र साहित्यमात्रं विवक्षितम् । **तन्मात्रेष्वि**ति बहुवचने न तात्पर्यम् । अदितिः पाशानितिवत् । शब्दतन्मात्रे इत्यर्थः । लयशब्देन जीवब्रह्मणोः स्वरूपैक्यशङ्काव्यावृत्त्यर्थमाह **अविभागापत्ती**ति । यद्वा न केवलं प्रलये चित्संसृष्टाचिद्वस्त्ववस्थानं श्रुत्याऽवगम्यते ; श्रुत्यर्थापत्त्या चेत्याह **अविभागापत्ती**ति । विषमसृष्ट्यनुपपत्त्या चेतनबहुत्वस्थितिवत् तत्कर्मानुगुणदेहसृष्ट्यनुगुणाचिद्वस्तुस्थितिरपि स्वरूपपरिणामानुपपत्तिबलसिद्धेत्यर्थः । यद्वा लयदशायां सूक्ष्मरूपेणाचिद्वस्त्ववस्थानं दर्शितम् ; सकर्मवासनजीवबहुत्वावस्थानं दर्शयति—**अविभागापत्ती**ति । आनन्दवल्लीवाक्यस्थस्य निर्विकारत्वादिपरवाक्यस्य उपादानत्वपरवाक्यस्य चाविरोधनिर्वाहार्थे हि श्रुत्यन्तराण्युदाहृतानि ; ततः किं प्रस्तुतस्य विरोधस्येति शङ्कायामविरोधं पश्चात् दर्शयितुं प्रथमं विरुद्धार्थतया प्रतिपन्नानाम् एतत्प्रकरणस्थवाक्यानां विशिष्टपरिणामपरत्वमाह **एवं स्वस्मा**दिति । एकत्वावधारणादिना चिदचिच्छरीरकत्वमयुक्तमित्यत्राह **विभागव्यपदेशानर्हतये**ति । **एकस्मादेवाद्वितीया**दिति । अतिसूक्ष्मचिदचिच्छरीरकत्वमेकत्वावधारणविवक्षितम् ; श्रुत्यन्तरैकार्थ्यात् विषमसृष्ट्यन्यथानुपपत्त्यादिभिश्चेत्यभिप्रायः । यद्वा आनन्दवल्ल्यामनुक्तमप्यविभक्तनामरूपत्वं श्रुत्यन्तरस्थेन एकत्वावधारणादिना यथाऽवगम्यते, एवं चिदचिच्छरीरकत्वमपि कारणावस्थायामिह विवक्षितमित्यभ्युपगन्तव्यमिति भावः । स्वरूपैक्यानुपपत्तिद्योतनाय प्राकरणिकान् कल्याणगुणानाह **निरतिशयानन्दा**दित्यादिपदैः । उक्तकल्याणगुणविषयवाक्यान्यादत्ते **सत्यं ज्ञान**मिति । विशिष्टस्य परिणामपरवाक्यान्युपादत्ते **सोऽकामयते**ति । उदाहृतवाक्येषु कर्मसम्बन्धप्रतीतिव्युदासार्थं तपश्शब्दं व्याचष्टे

निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" इति । अत्र तपश्शब्देन प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानमभिधीयते; यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः। प्राक्सृष्टं जगत्संस्थानमालोच्येदानीमपि तत्संस्थानं जगदसृजदित्यर्थः; तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत् सृजति, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो सुवः", "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानितान्येव तथा भावा युगादिषु" इति श्रुतिस्मृतिभ्यः (भ्याम्) ।

तदयमर्थः—स्वयमपरिच्छिन्नज्ञानानन्दस्वभावोऽत्यन्तसूक्ष्मतयाऽसत्कल्पस्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः, पुनः सत्त्यच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोऽभवत्—इति । "तदेवानुप्राविशत् । तदनुप्रविश्य" इति, कारणावस्थायामात्मतयाऽवस्थितः परमात्मैव कार्यरूपेण विक्रियमाणद्रव्यस्याप्यात्मतयाऽवस्थाय तत्तदभवदित्युच्यते ।

एवं परमात्मचिदचित्संघातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदंशगताः सर्वे

---

**अत्रे**ति । **प्राक्सृष्ट**मिति । औचित्यात् जगदालोचनमर्थ इत्यर्थः । "तप आलोचने" इत्यस्माद्धातोस्तपश्शब्दनिष्पत्तिरिति भावः । पूर्वजगदालोचनं किमर्थम्, सिसृक्षितं जगदेव पर्यालोचनीयमित्यत्राह **तत्संस्थान**मिति । यथापूर्वं सृष्ट्यर्थमित्यभिप्रायः । न केवलमौचित्यादयमर्थः; लिङ्गादपीत्याह **तथैव ही**ति । यथापूर्वसृष्टिप्रतिपादनं हि तदालोचने लिङ्गं भवति । अथ पूर्वोदाहृतश्रुत्यन्तरवाक्यानुगृहीतस्य एतत्प्रकरणस्थवाक्यजातस्यार्थाविरोधित्वं वक्तुं प्रतिपन्नमर्थमाह—**तदयमर्थ** इति । 'सत्यं ज्ञानम्', 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यादेरर्थमाह **स्वयमपरिच्छिन्ने**ति । "सोऽकामयत" इत्यत्र 'स' इति पदस्य वाक्यान्तरानुगृहीतस्यार्थमाह **अत्यन्तसूक्ष्मतये**ति । अकामयतेत्यस्यार्थमाह **विचित्रे**ति । **प्रकृतिपुरुषसमष्टिपरम्परया तत्तच्छरीरकमात्मानं महाभूतपर्यन्तं परिणमय्ये**त्यन्वयः । **समष्टिपरम्परया** महदादिक्रमेणेत्यर्थः । **तत्तच्छरीरकम्**—महदादिशरीरकम् । पूर्वपूर्वतत्त्वशरीरकः परमात्मा ह्युत्तरोत्तरतत्त्वकारणम् । **तत्तच्छरीरकं परिणमय्ये**त्यन्तेन समष्टिसृष्टिरुक्ता । **पुनरि**ति व्यष्टिसृष्टिः । नन्वनुप्रवेशस्य सृष्ट्यनन्तरभावित्वश्रवणात् कारणावस्थायां चिदचिच्छरीरकत्वं न सिध्येदिति शङ्कायामुदाहृतप्रकरणस्थवाक्येषु घटकस्य वाक्यविशेषस्यार्थमाह **तदेवे**ति । **विक्रियमाणद्रव्यस्यापी**ति । "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्", 'अनुप्रविश्य नामरूपे व्याकरवाणि' इति वचोभ्यां सृष्ट्यनुप्रवेशयोः पौर्वापर्यनियमोऽपि न विवक्षितः, अनुप्रवेशपूर्वकसृष्टिवचनात् सृष्टिपूर्वकानुप्रवेशवचनाच्च । तस्मात् समकालीनत्वमेव विवक्षितम्, वक्त्रं व्यादाय स्वपितीतिवत् । [1]तथा 'तस्य त्वष्टा विदधद्रूपमेति' इति ह्युच्यत इत्यभिप्रायः । यद्वा सृष्टिपूर्वकानुप्रवेशः स्थितिहेतुरित्यभिप्रायः । तदानीम्--इहोक्तमनुप्रवेशस्य सामानाधिकरण्यहेतुत्वं श्रुत्यन्तरसिद्धमव्यक्ताक्षरतमःप्रभृत्यन्तरात्मत्वं चोपजीव्याह **विक्रियमाणद्रव्यस्यापी**ति । प्रकृतविरोधः कथं परिहृत इत्यत्राह **एवमि**ति । तर्हि कथं ब्रह्मणः

---

[1] तथा—समानकालिकत्वेन । विदधदिति शतृप्रयोगात् ।

एवापुरुषार्थाः; तथाभूताचिदंशगताश्च सर्वे विकाराः; परमात्मनि कार्यत्वम्; तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वम्; परमात्मा तु तयोः स्वशरीरभूतयोर्नियन्तृतयाऽऽत्मभूतः तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते; अपरिच्छिन्नज्ञानानन्दमयः सर्वदैकरूप एव जगत्परिवर्तनलीलयाऽवतिष्ठते। तदेतदाह, "सत्यं चानृतं च सत्यमभवत्" इति। विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवत्—निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकरूपमेवाभवदित्यर्थः।

'सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि; सृष्ट्यादयश्च लीला' इति भगवद्द्वैपायनपराशरादिभिरुक्तम्, "अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम्", "क्रीडतो बालकस्येव चेष्टां तस्य निशामय", "बालः क्रीडनकैरिव" इत्यादिभिः। वक्ष्यति च "लोकवत्तु लीलाकैवल्यम्" इति।

"अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः" इति च ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिदंशगताः सर्वे विकाराः तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्था इति विवेक्तुं प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोः तदानीं तथा निर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः; "तदात्मानं स्वयमकुरुत" इत्यादिभिरैकार्थ्यात्। तथा च मानवं वचः,

---

कार्यत्वमित्यत्राह—**परमात्मनीति**। तत्संसर्गप्रयुक्तदोषः स्यादित्यत्राह—**परमात्मा त्विति**। उक्तदोषासंस्पृष्टत्वं प्राकरणिकवाक्येन दर्शयति **तदेतदाहेति**। सत्यञ्चेत्यादिवाक्यस्यार्थमाह **विचित्रेति**। पूर्वः सत्यशब्दोऽनृतशब्दसाहचर्यात् कार्यचेतनपरः; उत्तरस्तु विशेष्या(षा?)काङ्क्षायामधिक्रियमाणत्वात् ब्रह्मणस्तद्विषयवाक्योक्तव्यष्टयवस्थचिदचिच्छरीरकत्वानुवादेन सत्यत्वं विधत्त इत्यर्थः।

एवमुपादानभावविरोधिनी श्रुत्यर्थापत्तिः परिहृता; सद्वारकत्वेन परिणामस्य निर्विकारत्वश्रुत्यविरोधात्। अथावाप्तसमस्तकामस्य व्यापारानुपपत्तिरूपां निमित्तभावविरोधिनीं[1] श्रुत्यर्थापत्तिं वक्ष्यमाणाधिकरणार्थोपजीवनेन परिजिहीर्षन् अवाप्तसमस्तकामस्यापि लीलया सृष्टिसंभवे प्रमाणमाह **सर्वाणीति**। निमित्तमात्रत्वे परोक्तायाः, "अस्मान्मायी सृजते" इति श्रुतेरर्थमाह—**अस्मादिति**। **अस्मात्**—स्वशरीरभूतादित्यर्थः; श्रुत्यन्तरैकार्थ्यात्। अस्मान्मायीतिभेदव्यपदेशप्रयोजनं स्वभावासङ्करज्ञापनम्। निमित्तभूतस्यैव ब्रह्मण उपादानभावतन्निबन्धनजगत्सामानाधिकरण्यानुबन्धिबह्वनुपपत्तिपरिहारपरानेकाधिकरणार्थजातस्य एतदधिकरणार्थोपपादकत्वेन स्मारणपरमिदं सूत्रम्।

इदं सूत्रं **ब्रह्माज्ञान**पक्षविरुद्धम्। न हि विवर्तादिति सूत्रम्। **भेदाभेद**पक्षेऽपि भोग्यांशेन परिणाम इति वक्तव्यम्। अत्र तु विशेषणांशेन परिणाम उच्यते। अतः अंशतः परिणामपरतया सङ्कोचास्वारस्यं तुल्यम्। श्रुत्यन्तरोपपत्त्यानुगुण्यमस्मन्मत इति वैषम्यम्। इदं सूत्रं पूर्वसूत्रेणैकीकृत्य, सिद्धस्य कर्तुः साध्यत्वमवस्थाभेदादुपपन्नमित्येवंपरमन्यैर्व्याख्यातम्। तदयुक्तम्; पूर्वपक्ष्युक्तश्रुत्यर्थापत्तिपरिहारस्यापेक्षितस्याकथनेन अनपेक्षितविधानायोगात्। एकस्य कार्यत्वकारणत्वाविरोधोऽवस्थाभेदेनोपपन्न इति ह्यर्थसिद्धम्॥

---

1 निमित्तेति। इदमेवाभिप्रेत्य टीकायामेतत्सूत्रारम्भे उत्तरत्रेत्यादि।

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत्" इति । अत एव ब्रह्मनिर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः ।

अतो ब्रह्मैव जगतो निमित्तमुपादानञ्च ॥ २७ ॥

**योनिश्च हि गीयते । १ । ४ । २८ ॥**

इतश्च जगतो निमित्तमुपादानञ्च ब्रह्म, यस्मात् योनित्वेनाप्यभिधीयते, "कर्तारमीशं पुरुषं ब्रह्म योनिम्" इति, "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च । योनिशब्दश्चोपादानवचन इति "यथोर्णनाभिः सृजते गृह्णते च" इति वाक्यशेषादवगम्यते ॥ २८ ॥ इति प्रकृत्यधिकरणम् ॥ ७ ॥

---

**योनिश्च हि गीयते** ॥ अस्य च सूत्रस्य निमित्तोपादानैक्यसाधकत्वमाह **निमित्तञ्चो-पादानञ्चेति** । **कर्तार**मिति विषयवाक्ये हि श्रुतम्; "तपसा चीयते ब्रह्म", 'यः सर्वज्ञः सर्ववित्' इति च । 'शास्त्रयोनित्वात्', 'योनिष्ट इन्द्र निषदे अकारि'इत्यादिष्विव **ब्रह्मयोनिशब्द**स्य कारणमात्र-परत्वव्यावृत्त्यर्थं तं व्याचष्टे—**योनिशब्दश्चेति** ।

इयं सूत्रसङ्गतिः—प्रतिज्ञादृष्टान्ताभ्यां निमित्तोपादानैकत्वमुपपादितमाद्यसूत्रे । तत्र(त) उपरित-नवाक्यस्थहेतुपरं द्वितीयसूत्रम् । एवं श्रुत्यर्थापत्तिद्वयमुक्तम् । अथ श्रुतिप्रदर्शकं तृतीयम् । 'ब्रह्म वनम्' इत्यादिवाक्यस्यास्फुटत्वात् स्फुटार्थवाक्योपस्थापकं चतुर्थम् । आत्मकृतिप्रतिपादकवाक्यस्य स्फुटार्थतया वाक्यान्तरनिरपेक्षार्थनिश्चयत्वाद्धेतोर्नैरपेक्ष्याभिप्रायश्चशब्दाप्रयोगः । तत्प्रकरणस्थपूर्वापरवाक्यविरोधः पञ्चमेन परिहृतः । "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति वाक्यं जगत्कारणोपासनफलपरम्; भूतयोनिमिति वाक्यं तूपादानत्वमात्रप्रतिपादकम्; तस्यैव निमित्तत्वं "यस्सर्वज्ञः" इत्याद्युपरितनवाक्यपर्यालोचनया विलम्बेना-वगम्यते । एवमन्यपरत्वविलम्बान्वितवाक्यद्वयविषयत्वात्, "योनिश्च हि गीयते" इति सूत्रमुभयप्रति-पादकवाक्यविषयमपि, "साक्षाच्चोभयाम्नानात्" इति सूत्रानन्तरं न निवेशितम् । अनन्यपरस्पष्टार्थवाक्ये लब्धे तदेकार्थतयानिश्चितवाक्यद्वयविषयत्वात्, 'योनिश्च हि गीयते' इति सूत्रं चरममभूदिति ॥

उपादानत्वं **ब्रह्माज्ञान**पक्षे न संगच्छते; लक्षणायोगात् । 'यद्ग्रहणेन विना यन्न गृह्यते तत् तस्योपादानम्' इत्ययुक्तम् । अतीन्द्रियं लिङ्गिनं प्रति लिङ्गस्योपादानत्वप्रसङ्गात् । न हि पुण्या-पुण्ययोः सुखदुःखे उपादाने । नाप्यनुवृत्तं व्यावृत्तस्योपादानम्, गुरुत्वं प्रति रूपस्योपादानत्वप्रसङ्गात् । रूपं हि तेजोवन्नेष्वनुवृत्तम्; गुरुत्वं तु तेजसो व्यावृत्तम् ॥ भ्रमाधिष्ठानत्वमुपादानत्वमिति चेत्— शुक्तिरूप्यं प्रति देवदत्तस्योपादानत्वप्रसङ्गः । स हि भ्रान्तिज्ञानाश्रयः ॥ अध्यस्ताधिष्ठानत्वमध्यस्तं प्रत्युपादानत्वमिति चेत्—अधिष्ठानशब्दस्य कोऽर्थः? यदधिकरणतयाऽध्यस्तं प्रतीयते, तत् तस्याधिष्ठानमिति चेत्-तर्हि रजतस्य शुक्तिरुपादानं न स्यात्; तदधिकरणत्वेन रजतप्रतीत्यभावात् । इदं रजतमिति हि प्रतीतिः; न त्वस्मिन् रजतमिति ॥ अध्यस्तं यत्सामानाधिकरण्येन प्रतीयते, तत् तस्योपादानमिति चेत्-तर्हि पीतः शङ्ख इत्यत्र पीतिम्नः शङ्ख उपादानं न स्यात् । न हि पीतिमा शङ्ख इति सामानाधिकरण्येन प्रतीतिः; अपि तु पीतिमयुक्तः शङ्ख इति हि प्रतीतिः । द्रव्यान्तरवाचिशब्दसमानाधिकरणः पीतशब्दो हि पीतिमगुणान्विते वर्तते ॥ पीतशङ्खस्य शङ्खान्तरेण

सामानाधिकरण्यात् युक्तं लक्षणमिति चेन्न; पीतिममात्रस्यैव बाधदर्शनात् शङ्खस्याबाधितत्वात् तदुभयव्यतिरेकेण बाध्यशङ्खान्तरकल्पनायोगात् । किञ्च द्वौ चन्द्रावित्यत्र द्वितीयचन्द्रस्य प्रथमचन्द्रे उपादानं न स्यात् । न हि द्वौ घटावित्युक्ते घटयोः सामानाधिकरण्यम्; विशेष्यभेदात् ॥ द्वित्वमात्रमध्यस्यत इति चेत्-ततोपि लक्षणाव्याप्तिः, द्वित्वस्य विशेषणतया प्रतीतेः; विशेषणविशेष्ययोरैक्याप्रतीतेश्च । न हि दण्डिनौ पुरुषावित्युक्ते दण्डतद्वतोरैक्यम् । किञ्च आत्मानं प्रति देहस्योपादानत्वं प्रसजेत्; आत्मनो देहेऽधिष्ठानेऽध्यस्तत्वात् ॥ आत्मनि देहाध्यास इति चेत्— देहेप्यात्माध्यासो भवदभिमतः; शास्त्रसिद्धश्च । "असत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्च विषयेऽध्यासो [1]मिथ्येति भवितुं युक्तम्" इति "अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य" इति च, विषये युष्मदर्थे देहे विषयिणोऽस्मदर्थस्य ह्यध्यास उक्तः । "पञ्चभूतात्मके देहे देही मोहतमोवृतः । अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम्", इति "आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते । आत्मन्यात्ममयं भावं कः करोति कलेबरे" इति च । अतोऽतिव्याप्तिः । न केवलं पराभिमतस्थल एवाव्याप्त्यतिव्याप्ती, किंतु श्रुतिस्मृतिलोकप्रसिद्धेषूदाहरणेष्वव्याप्तिश्च । मृत्पिण्डलोहमणिनखनिकृन्तन तत्कार्यादिदृष्टान्तो वेदसिद्धः । कटकमु(म)कुटादिदृष्टान्तश्च स्मृतिसिद्धः । तेष्वव्याप्तिः, तत्कार्याणां मिथ्यात्वाभावात् ॥ तन्मिथ्यात्वं विवक्षितमिति चेत्—यथेति प्रसिद्धवदुपन्यासो न घटते; अश्रुतवेदान्तस्य श्वेतकेतोः घटादिमिथ्यात्वासिद्धेः ॥ तन्मिथ्यात्वं युक्तिभिरुपपादयिष्याम इति चेन्न—कुयुक्तीनां प्रबलयुक्तिभिर्निरस्तत्वात् । तच्च दर्शितम्; दर्शयिष्यामश्च । अत एव लोकसिद्धेष्वव्याप्तिः सिद्धा । अस्तु वा मिथ्यात्वं घटादीनाम्; तथाऽपि तदधिष्ठानत्वं नोपादानशब्दप्रवृत्तिनिमित्तम्, तद्विषयतया व्युत्पत्त्यभावात्; प्रयोगाभावाच्च । यद्यत् वस्तुनि विद्यते, न तत् सर्वं शब्दवाच्यम् । न हि,'अयं ब्राह्मण'इत्युक्ते तद्गतसुखदुःखादिकमपि ब्राह्मणशब्दवाच्यम् । यदाकारविषयतया शब्दो व्युत्पन्नः, स तस्य प्रवृत्तिनिमित्तम् । न चोपादानशब्दोऽध्यस्ताधिष्ठानविषयतया व्युत्पन्नः । न च तद्विवक्षया प्रयुज्यते । तस्मादव्याप्तिरिति ।

[2]**यश्चापि**—"ईश्वर एव ब्रह्म, तेन स्वत एव भिन्नाभिन्ना प्रकृतिः" इति वदति—तन्मतेऽपि जगदुपादानत्वं ब्रह्मणोऽनुपपन्नम्; चेतनांशस्यानादित्वादेव ॥ जीवत्वावस्था सर्गात्पूर्वं नास्तीति चेत्—जीवस्याऽऽदिमत्त्वं तत्प्रयुक्ता दोषाश्च स्युः । घटत्वावस्थायाः पूर्वमभावादेव हि घटस्याऽऽदिमत्त्वम् जीवत्वं प्रागप्यस्तीति चेत्—तदुपादानत्वानुपपत्तिः ॥ देवमनुष्यादिनामरूपाभिमानित्वावस्थामपेक्ष्योपादानत्वमिति चेन्न—कार्यकारणयोरनन्यत्वस्य दुरुपपादत्वात् . अनन्यत्वं वदता हि कार्ये कारणासाधारणाकारस्य वा परमकारणाकारस्य वा अनुवृत्तिर्वक्तव्या; यथा कुण्डले तत्कारणस्य स्वर्णत्वा-

1 मिथ्येति भवितुं युक्तमित्यस्य न संभवतीत्यर्थकत्वेऽपि, प्रसक्तस्यैव प्रतिषेधात् अध्यासप्रसक्तिर्ग्रन्थतोऽवगम्यते । उत्तरग्रन्थतस्तु सुतरामिति भावः । 2 य इति भास्कर उच्यते ।

कारेणानुवृत्तिः, यथा च वृश्चिके तत्कारणस्य पृथिवीत्वाकारेणानुवृत्तिः । तत्र ब्रह्मणः कारणान्तराभावात् द्वितीयः कल्पो नोपपद्यते । प्रथमे च तत्र केनाकारेण जीवब्रह्मणोरैक्यम् ? न तावत् हेयप्रत्यनीक-नित्याविर्भूतज्ञानानन्दादिरूपेण ; जीवे तदसंभवात् । नापि जीवत्वरूपेण ; कारणे परब्रह्मणीश्वरे तदभावात् । यदि सत्त्वद्रव्यत्वचेतनत्वादिरूपेण, तर्हि ततश्च इदानीं देवाद्यवस्थाः जीवाः कारणावस्थायां सन्तो द्रव्यभूताश्चेतना इत्युक्तं भवति । वैशेषिकादिमतेऽप्येतावत् सम्प्रतिपन्नम् । ततश्च ब्रह्मकार्यत्वोपदेशवैयर्थ्यम् । न हि पूर्वं जीवा[असन्तः ?] अचेतना अद्रव्यभूता इति कश्चिन्मन्यते । अतः ईश्वरासाधारणाकारानुवृत्त्यभावाद्ब्रह्मोपादानकत्वं न सिध्येत् । न हि घटे द्रव्यत्वानुवृत्त्या तन्तूपादानकत्वं सिध्येत्, तन्तुतत्कारणकार्पासतूलाद्यसाधारणाकारानुवृत्तेरनन्यत्वाभावात् । अनेनैव न्यायेन महदादिकं प्रति ब्रह्मोपादानत्वं च निरस्तम् ।

यादवप्रकाशीये तु—प्रकृतिश्चेति मूलप्रकृतिश्च ब्रह्मेति व्याख्यातम्—तदयुक्तम् । तथा हि—प्रतिज्ञादृष्टान्तौ हि जगदुपादानत्वसाधकौ । तौ कथं ब्रह्मण एव मूलप्रकृतित्वसाधकौ ॥ "गौरना-द्यन्तवती" इत्यादिवाक्यान्तरैर्महदादिप्रपञ्चस्य प्रकृतिकार्यत्वप्रतिपादनात् तदेकत्वाभावे ब्रह्मण उपादानत्वा-नुपपत्त्या प्रतिज्ञादृष्टान्तोपरोधप्रसङ्गादिति चेत्—सौत्रहेतुपदस्याव्यवहितसाध्येनान्वये संभवति व्यवहितसाध्यान्वये क्लिष्टत्वमेव फलम् ॥ ननु प्रकृतेर्ब्रह्माव्यतिरिक्तत्वमुपादानत्वोपयोगि ॥ सत्यम् । अव्यवहितं प्रधानसाध्यं च वक्तव्यम् । ब्रह्माव्यतिरेकनिर्वाह्यमुपादानत्वं हि प्रधानसाध्यम् ॥ तत् आर्थ-मस्त्विति चेन्न—अव्यवहितस्य प्रधानसाध्यस्य श्रौतत्वेन तदुपयोग्यर्थान्तरस्यार्थसिद्धत्वोपपत्तेः । तदुपयोगि ब्रह्मात्मकत्वं तु निर्दोषत्वश्रुत्यविरोधेनान्यत्र सम्यङ्निरूपितमिहार्थसिद्धमिति प्रकृतिशब्दस्योपादानपरत्वं युक्तम् । एवं सति चशब्दश्चार्थवान् । निमित्तभूतमेवोपादानं चेति ह्यर्थः । मूलप्रकृति[पर ?]त्वे चशब्दस्य न प्रयोजनम् । बहुभवनसमानकर्तृकाभिध्योपदेशश्च निमित्तभूतस्यैवोपादानभावं प्रथममवगमयति । तृतीय-सूत्रार्थः पूर्वमेव शिक्षितः । परिणामादित्यस्य व्याख्यानावसरे च यदुक्तम्—बहुस्यां प्रजायेयेति, बहुस्या-मिति प्रकृतिपुरुषेश्वरभावेन विभागं दर्शयति; प्रजायेयेति महदादिरूपेण विक्रियामिति—तत् सकलप्रमाणो-पपत्तिविरुद्धम् । प्रकृतिपुरुषेश्वराणां नित्यत्वानादित्वश्रुतिविरोधात् अकृताभ्यागमादिप्रसङ्गात् जीवस्याप्यन्त वत्त्वेन मोक्षशास्त्रानर्थक्यप्रसङ्गाच्च ॥ शक्तिरूपेणावस्थानान्नित्यत्वादिकमिति चेत्—यदि शक्तिशब्दस्त-दुत्पादनसामर्थ्यवाची, तदा घटादितुल्यत्वम् । यदि त्रिविधशक्तिमद्द्रव्यमवस्थितम्, तदा स्वशक्ति-भेदेन प्रलयदशायामपि द्रव्यत्रयं विलक्षणं स्थितमिति प्रकृतिपुरुषेश्वरभावेन बहु स्यामिति सङ्कल्पोऽनुपपन्नः । किञ्च सङ्कल्पमात्रमेवानुपपन्नम् । ईश्वरांशस्य विभागो नाम ज्ञानादिगुणोद्बोधः ; न तु खण्डितत्वम् ; प्रलये नियन्त्रंशस्यापि शक्तिमात्रावशिष्टतया तदानीं सार्वज्ञ्याद्युद्भवाभावात् । यदि सार्वज्ञ्यादिकमुद्भूतं तदानीम्, ईश्वरः स्यामिति सङ्कल्पोऽनुपपन्नः । उद्भूतसर्वज्ञत्वादिगुणकत्वमेव हीश्वरत्वम् ॥ चैतन्य-शक्तियोगात् सङ्कल्पोपपत्तिरिति चेन्न—घटरूपेण परिणामशक्तियोगेऽपि घटत्वानुदये सलिलाहरणादि-कार्यानुपपत्तिवत् ज्ञानादिगुणानुद्भवेन तत्कार्यसङ्कल्पविशेषानुपपत्तेः । अतः सङ्कल्पादीश्वरत्वविभागः,

ईश्वरत्वविभागात् सङ्कल्प इत्यन्योन्याश्रयः ॥ पूर्वं जगदवसाने इयन्तं कालं स्वप्स्यामि, ततः प्रबोद्धाऽहमिति सङ्कल्पबलात् प्रबुद्धः सङ्कल्पयतीति चेत्—तर्हि ईश्वरांशस्य प्रबुद्धत्वमेव विभाग इति प्रबुद्धस्य प्रकृतिपुरुषेश्वररूपेण विभक्तः स्यामिति सङ्कल्पोऽनुपपन्नः ॥ त्रिधा विभागविषयः बहु स्यामिति सङ्कल्पः पूर्वजगत्संहारसमय इति चेन्न—"सदेव सोम्येदमग्र आसीदेकमेव" इति श्रुतिविरोधात् । न हि प्रलयात्पूर्वमेकत्वापत्तिः । अतः परोक्तार्थोऽनुपपन्नः । "योनिश्च हि गीयते' इत्यत्रापि, ब्रह्मयोनिमिति पदस्य ब्रह्मणः अव्यक्तस्योपादानमिति व्याख्यानमप्यनुपपन्नम्; ब्रह्मशब्दस्य मुख्यार्थे बाधकाभावात् । समासेऽपि निषादस्थपतिन्यायेन षष्ठीसमासात् कर्मधारयस्य प्रबलत्वात् । अलुप्तविभक्तिकत्वेन द्वितीयार्थत्वे संभवति लुप्तविभक्तित्वाश्रयणेनाश्रुतविभक्त्यर्थलक्षणायोगाद् । अस्मिन् प्रकरणे 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति पुरुषशब्दासन्नब्रह्मशब्दस्य पुरुषविषयत्वदर्शनेन पुरुषं ब्रह्मयोनिमिति ब्रह्मशब्दस्यापि पुरुषशब्दसमानविषयत्वोपपत्तेश्च ।

किञ्च, स्वाभाविकभेदाभेदपक्षे ब्रह्मण उपादानत्वमपि दुर्घटम् । भोक्तृभोग्यनियन्तॄणामंशानामनादित्वात् तेषां न ब्रह्मोपादानकत्वमुपपन्नम् । ईश्वरातिरिक्तस्यांशिनः कस्यचिदप्रामाणिकत्वं च वक्ष्यते । त्रयाणामप्यंशानां शक्तिरूपेणानादित्वमप्यनुपपन्नम्; विकल्पासहत्वात् । किं तदुपादानसामर्थ्यं शक्तिः, उत त एवांशाः सूक्ष्मरूपाः? प्रथमेऽनादित्वं न स्यात् । न हि घटकरकशरावोत्पादनसामर्थ्यं मृत्तिकायामस्तीति घटादीनामनादित्वम् । द्वितीये च सूक्ष्मरूपास्त एव कारणमिति तेषामेव ब्रह्मलक्षणयोगित्वात् कारणातिरिक्तब्रह्मणो मानशून्यत्वात् तेषां मिथःप्रकारप्रकारिभावानभ्युपगमाच्च ब्रह्मबहुत्वं स्यात् । किञ्च, किं भोग्यभोक्तृनियन्तारः प्रत्येकं ब्रह्म, उतांशत्रयसमुदायो ब्रह्म, उत तेष्वनुगतं तैर्भिन्नाभिन्नस्वरूपं सन्मात्रं ब्रह्म,? प्रथमे प्रकृतेरेव महदाद्युपादानत्वं स्यात् । न द्वितीयः; समुदायरूपस्य ब्रह्मण उपादानत्वेन भोक्तरि नियन्तरि च महदाद्यवस्थान्वयप्रसङ्गात् । तृतीये जगदुपादानवस्तुवाचिनः शब्दस्य किं प्रवृत्तिनिमित्तम्? किं सत्ता सामान्यम्, उत मानार्हत्वव्यवहारार्हत्वरूप उपाधिः, उत द्रव्यत्वम्, उत अर्थान्तरम्? तत्र सामान्यं भवद्भिरनभ्युपगतम् । अभ्युपगमेऽपि चतुर्ष्वपि शिरस्सु शास्त्रवैयर्थ्यम्; सामान्यस्य वैशेषिकादिभिरभ्युपगमात् । प्रामाणिकं व्यवहारार्हद्रव्यं जगत्कारणमित्यस्यार्थस्य प्रधानपरमाणुकारणवादिनामविगीतत्वाच्च । न च द्रव्यमस्यवहार्यं मानशून्यं जगदुपादानमिति तैरभिमतम् । अर्थान्तरं चेत्—तत्र चिद्रूपत्वं वा त्रिविधशक्तिमत्त्वं वा निरतिशयबृहत्त्वं वा यत्किञ्चिद्भवतु । तत् किं वृक्षसमुदाये वनत्ववत् अंशत्रयसमुदाये वर्तते? उत समुदाये(दायिषु)एकैकस्मिन्? प्रथमे अंशत्रयसमुदायो ब्रह्म स्यात् । एकत्वञ्च समूहैक्यमेव भवेत्; न तु समूहान्तर्गतद्रव्यैक्यम् । ततश्च यथा सहकारफलानां न वनगतकृत्स्नवृक्षसमुदाय उपादानम्; अपि तु सहकार एव—एवं महदादीनां प्रकृतिरेवोपादानं स्यात्; न तु समुदायः । द्वितीये च तत्प्रवृत्तिनिमित्तं किं गोत्वादिवत् साधारणम्, उत खण्डत्वादिवदसाधारणम्? प्रथमे त्रयाणामेकत्वं नाम एकजातीयत्वमेव भवेत् । ततश्च प्रकृतिरेव महदाद्युपादानं स्यात्, यथा खण्डगतरोम्णां खण्ड

एवोपादानम् ; न मुण्डः—यथा च द्रव्यत्वेनैकजातीयत्वेऽपि घटस्य मृत्पिण्ड एवोपादानम् ; न कुलालादिद्रव्यमात्रम्—तद्वत् ॥ त्रयाणां मिथो भिन्नत्वेऽपि सन्मात्ररूपेणाभिन्नत्वाद् सन्मात्रस्यैकस्यांशिनो ब्रह्मण उपादानत्वं युक्तमिति चेन्न—खण्डमुण्डादीनां व्यक्तीनां मिथो भिन्नत्वेऽपि तासां द्रव्यत्वगोत्वाद्याकारेणाभिन्नत्वादंशिन एकस्य गोद्रव्यमात्रस्य शृङ्गलोमाद्युपादानत्ववचनतुल्यत्वात् । द्वितीये च कस्यैकस्यांशस्यासाधारणम्? (णः?) यदि प्रकृत्यंशस्य, तदा प्रकृतिरेवोपादानमित्युक्तं स्यात् । इतरांशयोरन्यतरासाधारणत्वे प्रकृतेरब्रह्मत्वात् महदादिकं ब्रह्मोपादानकं न स्यात् ॥ यथा वृक्षत्वं स्कन्धप्रकाण्डशाखाद्यनेकांशानाम् अंशिभूतैकद्रव्यवृत्ति, एवं सच्छब्दनिमित्तमपि त्रयाणामंशानामंशिभूतैकद्रव्यवृत्तीति चेन्न—तथा सति सन्मात्रस्य तदंशभूतेषु वस्तुषु पूर्णवृत्तित्वानुपपत्तेः । न हि वृक्षः शाखापत्रपुष्पादिषु प्रत्येकं पूर्णः, तत्समुदायो हि पूर्णवृक्षः । यदि बह्वंशेषु प्रत्येकं सत्त्वं पूर्णवृत्ति, तदा जातिरेव स्यात् । मिथो विरुद्धाकारेषु बहुषु प्रत्येकं पूर्णवृत्तिराकारो हि जातिः, यथा गोत्वम् । ततश्च ब्रह्मैकत्वं नाम जात्यैक्यं स्यात् । आकारत्वेन ब्रह्मणो जातित्वप्रसङ्गः । यदि वृक्षत्ववत् संहतेष्वंशेषु वर्तते, तदा ब्रह्मैकत्वं नाम समूहैकत्वं स्यात् ॥

नन्वेकजातीयानां समूहभावमुपगतानामपि पत्राणामेकवृक्षानन्यत्ववत् त्रयाणामेकद्रव्यानन्यत्वमुपपद्यत इति चेत्—तर्हि नीरन्ध्रसंबन्धविशेषेणैकत्वं स्यात् ; भेदकाकारवतां बहूनां निश्छिद्रसंश्लेषविशेषेण विनैकत्वानुपपत्तेः । तत्र वनस्य वृक्षस्य चैतावान् भेदः— परस्परं निरन्तरसंश्लेषरहितवृक्षसमूहो वनम्, निरन्तरसंसर्गविशेषयुक्तपदार्थसङ्घातो वृक्ष इति । तत्तदवयवानां स्वावयवसजातीयवस्त्वसाधारणकार्योत्पादनानुगुणः संसर्गो विशेषशब्देन विवक्षितः । तेन छिन्नानां वृक्षावयवानां मिथःसंसर्गव्यावृत्तिः । उक्तलक्षणसंबन्धविशेष एव वृक्षस्यैकत्वप्रतीतिव्यवहारहेतुः । तदभावात् तदुत्थबीजान्तरोत्पन्नवृक्षाणां वृक्षान्तराणां चान्योन्यैकत्वव्यवहाराभावः । तत्र केचित् पदार्थाः भेदकाकारप्रहाणेनैकत्वं भजन्ते, यथा विलीनाः कटकमकुटादयः पिण्डत्वम् । केचिच्च भेदकाकाराप्रहाणेनैकत्वं भजन्ते, यथा इष्टका इष्टकात्वाप्रहाणेन भित्तित्वम् । तत्र भेदकाकारप्रहाणाप्रहाणे यथाप्रमाणमभ्युपगन्तव्ये ।

तत्र भोक्तृभोग्यनियन्तॄणामसङ्कीर्णस्वभाववत्त्वस्य तत्तदसाधारणशक्तियोगस्य नित्यत्वाभ्युपगमात् स्वासाधारणाकाराप्रहाणेनैव ब्रह्मात्मनैकत्वं वर्णनीयम् । तत्र भेदकाकारस्य यथाप्रमाणमङ्गीकार्यत्वे सति नियन्त्रंशस्याऽऽश्रयत्वमितरांशद्वयस्य तदाश्रितत्वं च भवति; 'एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठति' इत्यादिश्रुतेः । तथा च सति ईश्वरं प्रति चिदचितोः शरीरत्वमर्थसिद्धम् । चेतनेन धार्यद्रव्यविशेषो हि शरीरम् । वृक्षे तु प्रकाण्डशाखांशिनोऽचेतनत्वाच्छाखादीनां न तच्छरीरत्वम् । ईश्वरस्य तु चेतनत्वादंशान्तरस्य तद्धार्यत्वेन शरीरत्वं फलितम् । एतदुक्तं भवति—सन्मात्रस्य ब्रह्मणो मृत्पिण्डवदेकत्वे त्रयाणां नित्यत्वानादित्वश्रुतिविरोधः । स्वतो भिन्नेष्वंशेषु प्रत्येकं पूर्णवृत्तिसत्त्वाकारेणैकत्वे जात्यैक्यम् । सत्त्वं संहतेषु वर्तते

चेत्—समूहैक्यम् । अतो निमित्तोपादानभेद एव भवेत् ; धर्म्यैक्याभावात् । संहतेषु वर्तते चेत्—अनादिभेदाप्रहाणेन संहतत्वादाश्रयाश्रयिभावादिलक्षणस्य भेदस्य प्रामाणिकत्वात् चिदचितोः शरीरत्वमर्थसिद्धमिति चिदचिच्छरीरकं ब्रह्म सच्छब्दवाच्यमुपादानं स्यात् । ततश्चास्मदीयः पक्षः परिगृहीतः स्यात् । आश्रयाश्रयिभावानभ्युपगमे जात्यैक्यं वा समूहैक्यं वा स्यात् । ततश्च निमित्तोपादानैक्यासिद्धिरिति । किञ्च बहु स्यामिति सङ्कल्पश्च घटः स्यामिति कुलालसङ्कल्पकल्पः स्यात् । सङ्कल्पस्य सद्द्रव्यैकदेशगतत्वात् परिणामस्य तदेकदेशान्तरगतत्वाच्च सामानाधिकरण्येनैक्योपदेशाः सर्वेऽप्यमुख्याः स्युरिति प्रथमसूत्रे सम्यगुपपादितम् ।

सन्मात्रं ब्रह्म किं स्वांशगतं नरकादिदुःखं स्वगतत्वेन जानाति, न वा ? न चेत्—अज्ञत्वमेव । स्वगतत्वेन जानाति चेत्—दुःखित्वं स्यात् ॥ जीवांशस्य भिन्नत्वाददोष इति चेन्न—भेदे सत्यपि अभेदाभिमानस्यापरोक्षस्य विद्यमानतया दुःखित्वमेव स्यात् । पाणिपादादीनां पुरुषांशतया भेदे सत्यपि अभिन्नत्वप्रतिपत्त्या हि—पन्नगदष्टपादस्य पुरुषस्य अङ्गान्तरेषु प्रदाहो भवति ; पाणौ सञ्जातव्रणस्य करणान्तरपाटवं च शिथिलीभवति ; हृदि निहितहरिचन्दनबिन्दोः सर्वाङ्गाप्यायनं भवति । छिन्नायामङ्गुलौ चन्दनलिप्तायां ज्वलनज्वलितायां च सुखदुःखे पुरुषस्य न भवतः ; स्वगतत्वेन ज्ञानाभावात् । अतः स्वगतत्वेन ज्ञानवत्त्वे ब्रह्मणो दुःखित्वं स्यात् । ततश्च बहु स्यामिति दुःखाकरबहुभवनसङ्कल्पः सर्वज्ञस्य न स्यात् । किञ्च "तदरूपमनामयम्" इत्यादयोऽपुरुषार्थनिषेधश्रुतयो निर्विषयाः ।

किञ्च, निर्विकारत्वश्रुतयश्च निष्फलाः ॥ ननु नियन्त्रंशविषया निर्विकारत्वश्रुतयः, ब्रह्मविषयाः विकारित्वश्रुतय इति सविषयत्वम् ॥ नैतदुपपद्यते—"यत्तच्छान्तमजरममृतम्", 'एतदमृतमेतदभयमेतद्ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यतो वा इमानि भूतानि जायन्ते, तद्ब्रह्म', 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति ब्रह्मण एव विकारतदभावश्रवणात् ; 'नित्यो नित्यानां', 'ज्ञाज्ञौ द्वौ', 'स वा एष महानज आत्माऽजरोऽमरः', 'स वा एष महानज आत्माऽन्नादो वसुदानः', 'स त आत्माऽन्तर्याम्यमृतः', 'स कारणं करणाधिपाधिपः', 'यः सर्वज्ञः सर्ववित्', 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते', 'धातुः प्रसादान्महिमानमीशम्', 'सप्त प्राणाः प्रभवन्ति तस्मात्', 'सहस्रशीर्षा पुरुषः', 'तस्माद्विराडजायत । विराजो अधि पुरुषः' इति ईश्वरस्यैव विकारतदभावश्रवणाच्च । तथा स्मृतिष्वपि, 'तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥', 'कारणं कालगगने यथा संनिधिमात्रतः । अविकारतया ब्रह्म तथा सृष्टेर्महीप(य)ते' इति, 'सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि'इति ब्रह्मण एव विकारित्वाविकारित्वस्मरणात् । 'संनिधानात् यथाऽऽकाशकालाद्याः कारणं तरोः । तथैवापरिणामेन विश्वस्य भगवान् हरिः', 'कटकमकुटकर्णिकादिभेदैः कनकमनेकमपीष्यते यथैकम् । सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः' इति ईश्वरेऽपि विकारतदभावस्मरणाच्च ॥ विकारवाक्येषु ईश्वरवाचिशब्दा ब्रह्मपराः, अविकारित्ववाक्येषु ब्रह्मवाचिशब्दाः ईश्वरविषया इति चेन्न ; सार्वज्ञ्यादिगुणविशिष्टेश्वरवाचिनां द्रव्यमात्रवाचित्वस्यामुख्यत्वात् ; पत्रमात्रे वृक्षशब्दवत् ब्रह्मैकदेशे ब्रह्मवाचिशब्दानाममुख्यत्वाच्च । ईश्वरातिरिक्तस्य कारणस्याप्रामाणिकत्वस्य वक्ष्यमाणत्वाच्च ।

अतो निमित्तोपादानयोर्मृत्कुलालयोरिवैक्यानुपपत्तेः, अपुरुषार्थान्वयप्रसङ्गात्, विकारविधिनिषेधविरोधानुपपत्तेश्च स्वाभाविकभेदाभेदपक्षे उपादानत्वमनुपपन्नम् ॥

ननु कथं तर्हि भवत्पक्षे सविकारत्वं निर्विकारत्वं च ईश्वरस्योपपद्यत इति चेत्—शरीरभूतप्रकृतिद्वारको विकारान्वयः, निर्विकारत्वं चाव्यवधानेन घटत इत्यविरोधः ॥ ननु तर्ह्युपादानत्वममुख्यं स्यात्, देवादिनामरूपाभिमानानुगुणज्ञानप्रसरस्य महदाद्यवस्थायाश्चेश्वरगतत्वाभावात्। भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम्। अवस्थाविशेषशब्दः स्थूलावस्थापरः, तेनाप्रलीनजगतः प्रलयावस्थामपेक्ष्य उपादानत्वव्युदासः ॥ उच्यते। चिदचिच्छरीरकं ब्रह्म महदादिकार्यं प्रति मुख्योपादानम्, उपादानलक्षणयोगित्वात्, मकुटं प्रति कनकवत् ॥ ननु असिद्धो हेतुः, महदाद्यवस्थानां ब्रह्मगतत्वाभावात् ॥ न; ब्रह्मणः चिदचिच्छरीरकतया प्रकृतेर्ब्रह्मस्वरूपान्तर्गतत्वात् प्रकृत्यवस्थानां ब्रह्मावस्थात्वात्। न हि विशेष्यमात्रं कस्यचित् स्वरूपम्, विशिष्टस्य वस्तुनो विशिष्टमेव हि स्वरूपम्। न हि घटस्य मृण्मात्रं स्वरूपम्; किन्तु घटत्वविशिष्टम् ॥ ननु यदि विशेषणमपि स्वरूपान्तर्भूतम्, तर्हि दण्डादयः संयोगादयश्च स्वरूपं स्युः ॥ न; यावद्विशेष्यभाविनामपृथक्सिद्धप्रकाराणामेव स्वरूपान्तर्भावात्। किञ्च घटादिवस्तुन उदकाहरणादितत्तदसाधारणकार्ययोग्यमेव स्वरूपम्; न मृण्मात्रम्; पिण्डेष्टकादीनामपि घटस्वरूपत्वप्रसङ्गात्। घटस्योदकाहरणं प्रति योग्यता नाम अच्छिद्रघटत्वमेव। यस्य वस्तुनो यत् कार्यं यदाकारान्वयव्यतिरेकानुविधायि, स आकारस्तस्य वस्तुनस्तत् कार्यं प्रति योग्यता। यथा अग्नेरुष्णत्वं स्फोटजनने, यथा च परशोर्नैशित्यं छेदने, यथा च मृदो मृत्त्वं घटादिरूपपरिणामे, श्लक्ष्णार्द्रभावश्च—एवं प्रकृतिपुरुषकालाश्च जगद्रूपेण बहुभवने परमात्मनो योग्यतास्थानीयाः अयुतसिद्धप्रकाराः। अत एव हि क्वचिच्छक्तिशब्देन जगदभिधीयते। कार्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिः। सा च योग्यता योग्यवस्तुनः स्वरूपान्तर्गता। अतो महदाद्यवस्थाश्चिदचिद्विशिष्टब्रह्मस्वरूपगता इति न हेत्वसिद्धिः। यतो विशिष्टं ब्रह्मस्वरूपम्, अत एव हि, "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः" इत्यरनाभिदृष्टान्त उपन्यस्यते। न हि नाभिमात्रं रथचक्रम्; किन्तु नाभिवत् अरनेमी अपि हि स्वरूपान्तर्गते। तथा "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकाम्" इति मुञ्जेषीकादृष्टान्तः श्रुतः। न हीषीकामात्रं मुञ्जः; किन्तु बाह्यदलविशिष्टेषीका हि मुञ्जस्वरूपम्। विशेष्यांशस्य दृष्टान्त इषीका। तथा, "यथा हि कदली नान्या त्वक्पत्रान्नाथ जायते। ([1]त्रादथदृश्यते) एवं विश्वस्य नान्यस्त्वं त्वं चापीश्वर! दृश्यसे (त्वत्स्थायीश्वरदृश्यते)" इति त्वक्पत्रकदलीदृष्टान्तश्च चिदचिद्विशिष्टं ब्रह्मस्वरूपमवगमयति। न हि बाह्यत्वक्पत्रेण विना काण्डमात्रं कदली; अपि तु त्वक्पत्रविशिष्टकाण्डस्वरूपा; एवं विश्वविशिष्टं यत् स्वरूपम् तत्र विशेष्यभूतस्त्वं विशेषणांशविलक्षणश्च दृश्यस इत्यर्थः। इयान् भेदः—नाभीषीकाकाण्डानाम् अरनेमिबाह्यदलत्व-

1. अत्र कुण्डलितपाठौ विष्णुपुराण(1-12-67)व्याख्यासंमतौ।

वपत्राणां चाचेतनतया मिथो नियन्तृनियाम्यभावाभावान्न शरीरशरीरिभावः। अत एव नेम्यादिशब्दाश्च न विशेष्यवाचकाः। इह तु नियन्तृनियाम्यभावादिना शरीरात्मभावसंभवाच्छरीरवाचिशब्दाः ब्रह्मपर्यन्ता इति। अतो महदाद्यवस्थानां विशिष्टब्रह्मस्वरूपगतत्वादुपादानत्वं मुख्यम्। किञ्च मा भूत् प्रकृतिपुरुषयोः स्वरूपान्तर्भावः, तथापि मुख्यत्वं युक्तम्। न हि शरीरद्वारकं ब्रह्मणो महदाद्युपादानत्वममुख्यम्, मुख्यनिर्वाहकव्यवहितत्वात्; ज्वालाव्यवहितस्य काष्ठस्य करणत्ववत्। न चाव्यवहितत्वमुपाधिः, दर्शितसपक्षे वृत्त्यभावेन साध्यसमव्याप्त्यभावात्॥ ननु मृद्द्रव्यव्यवहितकुलालस्यापि घटं प्रत्युपादानत्वं स्यात्॥ न; निर्वाहकव्यवहितत्वाभावात्। तदभावश्च [1]स्वनिष्ठस्य मृत्पिण्डस्य घटं प्रत्युपादानत्वनिर्वाहकत्वायोगात्। करणकारकस्य तु [1]स्वनिष्ठत्वात् तन्निष्ठज्वालायास्तन्निर्वाहकत्वं युक्तम्। आश्रयिनिष्ठामवस्थां प्रति आश्रयभावस्य स्वनिष्ठस्य निर्वाहकत्वं हि न घटते॥

नन्ववस्थातद्धेतोर्व्यवहितत्वादाश्रयाश्रयिभावाभावादुपादानत्वममुख्यमिति॥ किमुपादान एवायं निर्बन्धः, उत कर्त्रादिकारकान्तरेष्वपि? न प्रथमः, दर्शितसपक्षानादरेण पक्षपातस्य निर्निबन्धनत्वेनाकिञ्चित्करत्वात्। द्वितीये तु कुलालस्य घटं प्रति कर्तृत्वं न सिध्येत्, तद्व्यापकहेतुत्वासिद्धेः; वृक्षत्वनिवृत्तौ शिंशुपात्वनिवृत्तिवत्। हेतुत्वासिद्धिश्च हेतुहेतुमतोः पुरुषघटयोः पाणिव्यापारदण्डचक्रादिहेत्वन्तरव्यवहितत्वात्। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" इत्यत्र रवेः प्रकाशकत्वं न मुख्यं सिद्ध्येत्, किरणव्यवहितत्वात्। जगतः प्रकाशमानत्वे रविः किरणव्यवहितो हेतुः। तथा जलं वहतीत्यत्र जलस्य कर्मत्वं न सिद्ध्येत्, घटव्यवहितत्वात्। पाके काष्ठस्य करणत्वं न सिद्ध्येत्, ज्वालाव्यवहितत्वात्। 'गवा यजेत', 'अरुणया क्रीणाति' इति जातिगुणयोर्याग-क्रयसाधनत्वं द्रव्यद्वारकत्वादमुख्यं स्यात्। यज्ञाय पशव इत्यत्र पशूनां यज्ञतादर्थ्यं न स्यात्, तेषां हविरर्थतया तद्व्यवहितत्वात्। 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इत्यत्राऽऽदित्यादीनां वृष्ट्याद्युपादानत्वं च न सिद्ध्येत्। किरणमेघादिव्यवहितत्वात्। 'इक्ष्वाकूणामियं भूमिः' इत्यादौ स्वस्वातन्त्र्यलक्षणसंबन्धोऽपि न सिद्ध्येत्, करदानां राज्ञामवान्तरस्वातन्त्र्यव्यवहितत्वात्। पर्यङ्के शेते इति पर्यङ्कस्याधिकरणत्वं न स्यात्, आस्तरणव्यवहितत्वात्॥ सर्वेषां व्यवहारो न मुख्य इति चेन्न; मुख्यत्वे संभवत्यनेकव्यवहारामुख्यताश्रयणानुपपत्तेः। उक्तं हि निर्वाहकव्यवधानं न मुख्यत्वविरोधीति।

किञ्च व्यवहितस्य कार्यं प्रति हेतुत्वे को विरोधः॥ लक्षणाभाव इति चेन्न; नियतपूर्वभावित्वस्य लक्षणस्य संभवात्॥ नियतानन्तरपूर्वभावित्वं लक्षणमिति चेन्न। तद्धि सामग्र्या एव; न हेतुमात्रस्य। अन्यथा कृष्यादिव्यवहितवृष्टिनदीपूरादेः सुभिक्षताहेतुत्वं न स्यात्। तद्धेतुत्वं हि व्यवह्रियते। काष्ठादीनां करणत्वादिकं च न स्यात्। अपूर्वस्य कृतिसाध्यत्वं च न स्यात्; भावार्थव्यवहितत्वात्॥ ननु व्यवहितस्यापि हेतुत्वेऽतिप्रसङ्गः स्यादिति चेत्—तर्ह्यव्यवहितस्यापि हेतुत्वे रासभाद्यतिप्रसङ्गः

---

1. स्वनिष्ठेति। पिण्डस्य कुलाले पृथक्सिद्धत्वान्न कुलाले उपादानता निर्वाहकत्वम्। काष्ठस्य पक्तृपृथक्सिद्धत्वात् ज्वालानिर्वाह्यकरणत्वाश्रयत्वं तस्यैवेत्यर्थः। आश्रयि—पिण्डयुक्तं चक्रपुरुषादि। भावस्य—वस्तुनः।

स्यात् ॥ न; अन्वयव्यतिरेकाभ्यामतिप्रसङ्गस्य निवार्यमाणत्वादिति चेत्—तुल्यम् । अव्याप्तिस्तु भवतोऽधिका ॥ सजातीयव्यवहितस्य न कारणत्वमिति चेत्—किं येन केनाप्याकारेण सजातीयत्वम्, उत हेतुत्वाकारेण, उत हेतुत्वावान्तराकारेण ? न प्रथमः; व्यवहितपत्रवेधे पुरुषस्याहेतुत्वप्रसङ्गात् । न द्वितीयः; कुलालस्य घटं प्रत्यहेतुत्वप्रसङ्गात् । न तृतीयः; शरव्यवहितस्य धनुषो जयसाधनत्वाभावप्रसङ्गात् ॥ व्यवहितहेतुरन्यथासिद्धत्वान्न व्यवहितकार्यं प्रति हेतुरिति चेत्—व्यवहितस्यान्यथासिद्धिः किं तस्मिन् सत्यपि कार्यानुदयात्, उतासत्यपि कार्योदयात्, उत कार्यान्तरनिष्पत्त्यर्थत्वात्, उत व्यवहितकार्यं प्रति किञ्चित्कारायोगात्, उत व्यवहितत्वादेव । न प्रथमः; अव्यवहिते बीजादौ हेतौ सत्यपि कदाचिदङ्कुराद्यनुदयेन बीजादेरहेतुत्वप्रसङ्गात् ॥ सामग्रीवैकल्यादनुदयः; नाहेतुत्वादिति चेत्—इहापि—स्वकार्यस्य सामग्रीवैकल्यादनुदयः, न त्वहेतुत्वादिति तुल्यम् । न द्वितीयः; वृष्टि-नदीपूराद्यभावे सस्यानुदयात् । न तृतीयः; गमनादिकार्यान्तरहेतूनां कुलालादिशरीराणां घटादिकार्यान्तरोत्पत्तिहेतुत्वात् । न चतुर्थः; कर्तुः कार्यं प्रति करणप्रेरणरूपकिञ्चित्कारवत् काष्ठस्यौदनं प्रति ज्वालोत्पादनरूपकिञ्चित्कारवत् तन्निष्पादककार्यनिष्पादनरूपकिञ्चित्कारसद्भावात् । व्यवहितव्यापारस्यापि किञ्चित्काररूपत्वेऽतिप्रसङ्गः परिहृतः । पञ्चमेऽपि—किं व्यवहितत्वम् अव्यवहितकारणत्वं वारयति, उत व्यवहितकारणत्वम् । प्रथममिष्टम् । द्वितीये तु, कथमिदमहेतुत्वसाधकम् ॥ व्यवहितानामशनिपातादीनां सस्याद्यहेतुत्वदर्शनादिति चेत्—अव्यवहितरासभादेरप्यहेतुत्वात् अग्न्यादेरपि धूमादिहेतुत्वं न स्यात् । संनिकर्षमनादृत्य अन्वयव्यतिरेकाभ्यां हेतुत्वनिश्चये, व्यवधानमप्यनादृत्य अन्वयव्यतिरेकाभ्यां हेतुत्वनिश्चय इहाप्युपपन्नः । अन्यथा कुलालादेर्घटादिहेतुत्वाभावप्रसङ्गात् । एवं हेतुमात्रस्य सद्वारकत्वोपपत्तेः तदवान्तरविशेषस्य निमित्तत्ववत् उपादानत्वमपि सद्वारकं मुख्यम् ॥

ननूपादानस्य कार्यावस्थाश्रयत्वं वाच्यम् । कथं व्यवहितस्यावस्थाविशेषाश्रयत्वम् ॥ उच्यते । कुम्भोदरसंभृतमम्भः प्रति पुरुषस्येव परमात्मनो महदाद्यवस्थाश्रयत्वमुपपन्नमिति । कुम्भव्यवहितस्याम्भसः पुरुषानाधेयस्यापि स्वाधारधारकायत्तस्थितित्वं हि दृश्यते । न च वाच्यम्—परमाधारः स्वाधेयधारणोपक्षीणः; न तु व्यवहितधारणपर इति । पुरुषस्य सलिलधारणफलान्वयदर्शनात् । न हि निरुदकस्येवोदकपूर्णस्य घटस्य धारणे गुरुत्वातिशयनिबन्धनश्रमातिशयो न भवति । यदि घट एव पुरुषेण धार्यते, न जलम्—तर्हि निरम्भःकुम्भधारण इव श्रमातिशयो न स्यात्; कुम्भमात्रधारणस्याविशेषात् ॥ जलस्य घटसंसर्गमात्राच्छ्रमातिशयः, न धार्यत्वादिति चेन्न—अन्येन धृतस्य सोदकघटस्य पाणिस्पर्शमात्रेण श्रमप्रसङ्गात् । विमतं देवदत्तधार्यम्, तदुपरिभागस्थत्वे सति तच्छ्रमहेतुत्वात्; तुल्यगौरवसम्प्रतिपन्नपदार्थवत् ॥ उदकविशिष्टघटो धार्य इति श्रमातिशयोपपत्तिः; व्यवहितधारणं च न स्यादिति चेत्—तत्र विशेषणांशस्य धार्यत्वमस्ति वा, न वा ? न चेत्—श्रमातिशयो न स्यात् । अस्ति चेत्—तद्वदेव महदाद्यवस्थाविशिष्टमचिद्द्रव्यं परमात्मधार्यमिति विशेषणभूतमहदाद्यवस्थाविशेषस्यापि परमात्मायत्तस्थितित्वात् तस्य तदाश्रयत्वमुपपन्नम् । किञ्च अव्यवहितादपि व्यवहितस्यैवाश्रयत्वं मुख्यं दृश्यते; यथा आस्तरणांशुकादपि

३८ सर्वव्याख्यानाधिकरणम् १--७-८ ॥

## एतेन सर्वे व्याख्याता व्याख्याताः । १ । ४ । २९ ॥

पर्यङ्कस्य; यथा दर्भेभ्यो भूतलस्य । अव्यवहितमपि ह्यंशुकं न पुरुषस्य धारकम्, असामर्थ्यात् । श्वभ्रमुखपिधायकं विस्तीर्णमंशुकं हि न पदन्यासं धारयितुं प्रभवति । कूपाच्छादका हि दर्भास्तत्र निहितपदं पुरुषं न धारयन्ति । तस्मादंशुकस्य दर्भाणां च धारणासामर्थ्यात् पर्यङ्कभूतलयोरेव हि धारणसामर्थ्यान्मुख्यमाश्रयत्वम् । पर्यङ्कभूतलस्थयोरास्तरणदर्भयोरपि धारणसामर्थ्यकल्पने गौरवं स्यात् । अतश्चास्तरणदर्भाणां संयोगमात्रेण व्यवधायकत्वम् । एवं महदाद्यवस्थामपेक्ष्य प्रकृतेराश्रयत्वासंभवेन परमात्मनः सर्वशक्तेस्तदाश्रयत्वं मुख्यम् । व्यवधायकसद्भावस्तु व्यवहितयोर्नाश्रयाश्रयिभावविरोधी । विमतं व्यवधायकं स्वसम्बन्धिनोर्व्यवहितयोर्नाश्रयाश्रयिभावविरोधि, स्वधारणसमर्थवस्तुनिष्ठव्यवधायकत्वात् आस्तरणवत् दर्भवच्च । एवं महदाद्यवस्थां प्रति चिदचिच्छरीरकस्य परब्रह्मणः आश्रयत्वोपपत्तेः जगदुपादानत्वं मुख्यम् ॥

ननु यद्येवं शरीरशरीरिभावमाश्रित्योपादानत्वमुच्यते; वैशेषिकादिपक्षात् को भवत्पक्षस्य भेदः? नियाम्यविशेषो हि शरीरमभिमतम् । चिदचितोरीश्वरप्रेर्यत्वं हि तन्मतेऽप्यस्ति ॥ अहो महत्तरोऽयं पर्यनुयोगः । वैशेषिकादयश्चेत्, अप्रामाणिकमेव ब्रूयुः; तदुक्तं चेत्, अनादरणीयमिति न नः प्रतिज्ञा । अस्मदुक्तार्थस्तदभ्युपगतश्चेत्, प्रामाणिकोऽर्थोऽङ्गीकृतः स्यात्; का नः क्षतिः । किञ्च साम्यमपि दुरुपपादम्; कालदिगाकाशाद्यचेतनस्येश्वरधार्यत्वानभ्युपगमात् ॥ शब्दादिगुणोत्पत्तावेवाकाशादीनां तद्भोक्तृपुरुषादृष्टप्रेरणमुखेनेश्वरापेक्षा, न त्वाकाशादिस्वरूपस्य । चेतनानामप्यदृष्टानुगुणदेहेन्द्रियसंयोजनमुखेन सुखदुःखज्ञानादिहेतुरीश्वर इत्येतावता तत्प्रेर्यत्वम्; न तु स्वरूपस्थितौ तदपेक्षा । मुक्त्यवस्थायां तु न कदाचिदपि तदपेक्षा ॥ पश्चाद्दुःखाद्यसंयोगाय तदपेक्षेति चेन्न; पुण्यपापयोरात्यन्तिकविच्छेदादेव तत्सिद्धेः । प्रध्वंसस्यानन्ततया तन्निरपेक्ष्याच्च ॥ अदृष्टाभावेऽपि दुःखोत्पादनक्षम ईश्वरः; अतस्तदनुदयाय तदपेक्षेति चेन्न—अपार्थिवत्वेऽपि खे पुष्पं जनयितुमीश्वरः क्षम इति पुष्पानुदयाय खस्येश्वरापेक्षेति वचनतुल्यमिदम्; उभयोरप्ययोग्यत्वाविशेषात् । अतो धारणाद्यनुगुणमसङ्कुचितमीशनं तन्मते नास्तीति यावद्द्रव्यभावितया तन्नियाम्यत्वधार्यत्वाद्यभावात् पराभिमतेन वाऽस्मदभिमतेन वा लक्षणेन कथञ्चिदपि चिदचितोः शरीरशरीरिभावानुपपत्तेर्जगदुपादानत्वं तन्मते दुरुपपादम् । अतो भाष्योक्तप्रकारमेव परमात्मनो जगदुपादानत्वमिति स्थितम् ॥ इति प्रकृत्यधिकरणम् ।

॥ **एतेन सर्वे व्याख्याता व्याख्याताः** ॥ कृत्स्नाधिकरणन्यायातिदेशरूपत्वात् सङ्गतिः । प्रथमसूत्रस्य समन्वयसूत्रस्य च सिद्धपराः सर्वे वेदान्ताः विषयाः । वाक्यविशेषा इतरेष्वधिकरणेषु विषयाः। एष्वनुदाहृतवाक्यविशेषाः सर्वेऽप्यस्य पञ्चत्रिंशस्य विषयाः । पूर्वाधिकरणेष्विव विचारोऽर्थसिद्धः । अनुदाहृताः कारणवादिवाक्यविशेषाः किमुक्तलक्षणचिदचिद्विलक्षणब्रह्मपराः, उत नेति विचारः । तदर्थं ते किमुक्तन्यायानामविषयाः, उत विषयाः इति; विषयत्वं संभवति नेति । यदा न संभवति, तदा तदविषयत्वादुक्तलक्षणब्रह्मपरत्वाभावः । यदा संभवति, तदोक्तन्यायविषयत्वादुक्तलक्षणब्रह्मपरा

एतेन—पादचतुष्टयोक्तन्यायकलापेन, सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्यविशेषाः चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपराः व्याख्याताः ।

इति फलफलिभावः । **एतेने**तिपदस्य 'एतेन योगः प्रत्युक्तः', "एतेन शिष्टापरिग्रहाः' इति सूत्रस्थैतच्छब्दवत् अनन्तरपूर्वप्रकृतार्थविषयतया प्रकृत्यधिकरणन्यायमात्रपरामर्शित्वव्युदासाय व्याचष्टे **पादचतुष्टयोक्ते**ति । उपासनतत्फलादिप्रतिपादकवाक्यानां निरूपयिष्यमाणानां व्यवच्छेदायाह **जगत्कारणप्रतिपादनपरा** इति । इदं पदं हेतुगर्भम् । कारणविषयत्वमेव ह्यधिकाशङ्कायाः परिहारहेतुः । निरूपितवाक्यव्यवच्छेदाय **वाक्यविशेषा** इत्युक्तम् । पूर्वमनुदाहृता अनिश्चितार्था **इत्यर्थः** । यथा एतेषु त्रय एव यज्वान इत्युक्ते अन्येषाम् अयज्वत्वं व्याख्यातं भवति, एवमुदाहृत-वाक्यानां चिदचिद्विलक्षणब्रह्मपरत्वप्रतिपादनेनान्येषामतत्परत्वेन व्याख्यातत्वशङ्कां व्यावर्तयितुमाह **चेतनाचेतनविलक्षणे**ति । वैलक्षण्यहेतुभूतगुणप्रदर्शनार्थं तेषु प्रधानं गुणद्वयमाह **सर्वज्ञसर्वशक्ति**-शब्दाभ्याम् । सर्वज्ञत्वसर्वशक्तित्वे हि निमित्तोपादानतोपयोगिनी ।

का पुनरत्राधिकाशङ्का ॥ उच्यते । जगत्कारणत्ववादिवाक्यविशेषेषु केचित् सर्वसाधारण-शब्देन कारणनिर्देशपराः, यथा सदेव सोम्येत्यादयः सद्ब्रह्माक्षरशब्दैः । केचित् चेतनमात्रासाधारण-शब्दान्विताः, यथा 'तावेतौ सत्त्वक्षेत्रज्ञौ' इति पैङ्गिश्रुतिः क्षेत्रज्ञशब्देन । केचिदचिन्मात्रासाधारण-शब्दान्विताः, यथा 'गौरनाद्यन्तवती', 'अजामेकाम् ' इत्यादि (?) । केचिज्जीवेश्वरसाधारणशब्दान्विताः, यथा 'आत्मन आकाशः' इति, ''पुरिशयं पुरुषम् ' इति च । केचिच्चिदचिद्विशेषासाधारणशब्दाः, यथा वैश्वानरशब्दवती श्रुतिः । केचिच्चाचिद्विशेषासाधारणशब्दाः, यथा 'आकाशादेव समुत्पद्यन्ते' इति । केचिच्चेतनविशेषासाधारणशब्दाः, यथेन्द्रशब्दवती प्रतर्दनोपासनश्रुतिः । केचित्तु परमपुरुषा-साधारणशब्दाः, यथान्तरादित्यविद्याश्रुतिः, यथा च पुरुषसूक्तम् । एवंविधेष्वेव वाक्येषु केचित् साक्षादेव कारणत्वप्रतिपादकाः, केचिच्च कारणत्वव्याप्तवेदितव्यत्वनिरतिशयदीप्तियोगादिपराः—इति विभागो यथासंभवं द्रष्टव्यः । उक्तकोटिष्वनन्तर्भूतं कारणविषयं वाक्यं न क्वचित् संभवति । तत्र चिदचित्सा-धकैर्लिङ्गशब्दादिभिः पूर्वपक्षे प्राप्ते चिदचिद्व्यावर्तनक्षमैरीक्षणविशेषानन्दविशेषसर्वप्रशासितृत्वसमस्तहेय-प्रत्यनीकत्वसर्वचिदचिद्धारकत्वपतित्वान्तरात्मत्वमुक्तप्राप्यत्वादिभिर्धर्मविशेषैस्तेषां वाक्यानां चिदचिद्वि-लक्षणजगदेककारणभूतदेवताविशेषप्रतिपादकत्वं समर्थितम् । उक्तकोट्यन्तर्भूतेष्वपि येष्वनुदाहृतवाक्य-विशेषेषु जगत्कारणत्वमात्रं श्रुतम् , न त्वीक्षणविशेषादयश्चिदचिद्व्यावर्तकाः परमपुरुषासाधारणधर्माश्च श्रुताः—तेषु यथाप्रतिपन्नवस्त्वभ्युपगमे विरोधाभावान्न परमात्मपरत्वमित्यनुयायिनी अधिका शङ्का ; अभ्युच्चयहेतवश्च यथासंभवं तत्र तत्र द्रष्टव्याः । ईक्षणविशेषादिधर्मान्तराश्रवणेऽपि जगत्कारणत्वस्येक्षण-विशेषादिवत् परमपुरुषासाधारण्यस्य द्वात्रिंशदधिकरणन्यायनिर्णीतत्वाज्जगत्कारणत्वमेव चिदचि-द्विलक्षणसर्वविधकारणभूतपरब्रह्मशब्दवाच्यदेवताविशेषपरत्वसाधकमित्यधिकानुयायिपरिहारः । परिहारे चाभ्युच्चययुक्तयस्तत्रतत्र द्रष्टव्याः ॥

ननु जगत्कारणत्वं परमात्मलिङ्गं स्यात् , कथं परमात्मनो देवताविशेषत्वसाधकम् ॥ "जन्माद्यस्य यतः" इत्यादीनामधिकरणानां सर्वेषां देवताविशेषनिर्णयपर्यन्तत्वादिति ब्रूमः । तथा हि—ब्रह्मशब्दस्य भगवच्छब्दतुल्यत्वं प्रथमसूत्रे प्रतिपादितम् । यत इति यच्छब्दस्यानुवादरूपतया प्रापकवाक्यानुरोधित्वात् तेषु च सदादिशब्दानां देवताविशेषपर्यन्तत्वावगमात् , सूत्रे च यत इति जनिकर्तुः प्रकृतौ न पञ्चमी, किन्तु हेताविति समर्थनेन नारायणातिरिक्तनिमित्तविरोधित्वाच्च जन्माद्यधिकरणं देवताविशेषनिष्ठमेव लक्षणं स्थापयति । तृतीयं तु सामान्येनोपयुक्तम् । चतुर्थं देवताविशेषनिष्ठं परमप्रयोजनत्वं दर्शयति ; "आनन्दो ब्रह्म', 'रसो वै सः', इत्यादिवाक्यानामानन्दवल्लीस्थत्वात् तस्याश्चान्तरादित्यविद्यैकार्थ्यात् । ईक्षत्यधिकरणे तु गतिसामान्यस्योक्तत्वात् साधारणस्य सच्छब्दस्य देवताविशेषनिष्ठत्वमेव दर्शितम् । आनन्दवल्ल्यास्तु "स यश्चायं पुरुषे यश्चासावादित्ये" इत्यन्तरादित्यविद्यैकार्थ्यावगमात् , 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यन्तरात्मशब्देन सुबालोपनिषत्प्रत्यभिज्ञानात् , उपक्रमस्थस्यानन्तशब्दस्य रूढिपरित्यागे हेत्वभावाच्च सिद्धं भगवत्परत्वम् । अन्तरादित्यविद्यायां तु पुण्डरीकाक्षत्वप्रतिपादनात् , पुरुषशब्देन हिरण्मयत्वविशेषणेन च पुरुषसूक्तप्रत्यभिज्ञानात् , सर्वपाप्मभ्य उदयेन 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति सुबालोपनिषदैकार्थ्यावगमाच्च सिद्धं परमपुरुषपरत्वम् । इतराधिकरणचतुष्टयस्य आकाशप्राणज्योतिरिन्द्रादिशब्दानामपि पुरुषसूक्तप्रतिपाद्यपरमपुरुषविषयतया समर्थनपरत्वं तत्रतत्र स्फुटम् । मनोमयत्वभारूपत्वप्रत्यभिज्ञापितैर्विद्युद्वर्णहिरण्मयपुरुषपरैः , "हृदा मनीषा मनसाऽभिक्लृप्तः', 'विद्युतः पुरुषादधि', 'तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः' इत्यादिभिरैकार्थ्यात् शाण्डिल्यविद्या देवताविशेषविषया । कठवल्ली भगवत्परेति स्फुटम् ; अध्वनःपारभूतवैष्णवपरमपदविषयत्वात् तस्याः । अक्ष्यन्तरः परमपुरुषः ; पुरुषशब्दवाच्यत्वादमृतत्वाच्च तस्मिन्नयमिति वाक्यप्रत्यभिज्ञानात् । अन्तर्यामिविद्या नारायणविषयेति स्फुटम् ; सुबालोपनिषदैकार्थ्यात् । मुण्डोपनिषदः कार्त्स्न्येन परमपुरुषविषयत्वं ब्रह्माक्षरशब्दयोश्च पुरुषशब्दसमानार्थत्वं च दर्शितम् । तत्रश्रुतरूपविशेषान्वयादेव वैश्वानरविद्या तदेकविषया ; 'पुरुषमपि चैनमधीयते' इति च स्फुटमुक्तम् । द्युभ्वाद्यधिकरणं तु मुण्डोपनिषद्विषयत्वादेव परमपुरुषपरम् । भूमविद्या तु निरतिशयसुखरूपवस्तुविषयत्वादानन्दवल्लीतुल्यविषया । अम्बरान्तधारकमक्षरं सूर्यचन्द्रादिप्रशासितृत्वादानन्दवल्लीप्रत्यभिज्ञानात् , अक्षरशब्दवाच्यतया मुण्डकोपनिषत्प्रत्यभिज्ञानाच्च, बृहदारण्यके अन्तर्यामिविद्यानन्तरवाक्यप्रतिपाद्यत्वाच्च परमपुरुषः । ईक्षतिकर्म परमपुरुष एव श्रुतः । दहराधिकरणं तु व्योमातीतमतप्रत्यनीकत्वात् , 'स उत्तमः पुरुषः' इति परमपुरुषविषयत्वाच्च देवताविशेषसाधकम् । प्रमितश्च पुरुष एव श्रुतः । देवताधिकरणमधुविद्ये हिरण्यगर्भेन्द्रादीनामपि गुरुशिष्यभावप्रदर्शनेन आदित्यान्तर्यामिविषयत्वेन च भगवतो महामहिमप्रतिपादिके । "आकाशो ह वै नाम' इति वाक्यं पुरुषसूक्तप्रत्यभिज्ञानात् परमपुरुषविषयम् । चतुर्थांघे तु, "पुरुषान्न परं किञ्चित्' इति समर्थितम् । अनन्तरे

चाधिकरणे अजायाः परमपुरुषात्मकत्वं स्थितम्; तैत्तिरीयके अजावाक्यचिह्नितानुवाके 'यस्मात्परम्' इति वाक्यस्याधीतत्वात्। 'यस्मिन् पञ्च पञ्चजनाः' इति वाक्यं च भगवत्परम्; अमृतात्मब्रह्मशब्दनिर्देशात्। 'अन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्म', 'अमृतो हिरण्मयः', 'स त आत्मान्तर्याम्यमृतः'' इति वाक्यैकार्थ्यं हि तस्य प्रतीयते। 'यश्चक्षुषि तिष्ठन्' इत्याद्यन्तर्यामिब्राह्मणैकार्थ्येन पञ्चजनसंज्ञानामिन्द्रियाणां भगवदधीनत्वमपि ह्यवगम्यते। 'कारणत्वेन च' इत्यत्र आनन्दवल्लीवाक्यस्य विषयत्वात् सिद्धं परमपुरुषत्वनिर्धारणम्। बालाक्यजातशत्रुसंवादे च वेदितव्यतयोक्तः परमपुरुषः, यस्येत्यनुवादस्य प्रापकसापेक्षत्वात्, वेदितव्यत्वस्य च 'तमेवं विद्वान्' इत्यादिवाक्यैकार्थ्यज्ञापकत्वाच्च। अवस्थितेरिति सूत्रस्यान्तर्यामिब्राह्मणविषयत्वात् मैत्रेयीब्राह्मणे च जीवसमानाधिकरणवाक्यानां नारायणपरत्वं स्थितम्। प्रकृत्यधिकरणस्य तु निमित्तोपादानभेदवादिपाशुपतप्रक्रियाविरोधित्वात् रुक्मवर्णपुरुषस्य योनित्वकथनाच्च परमपुरुषविषयत्वं स्पष्टम्।

एतदुक्तं भवति—केचिद्वाक्यविशेषा अनुवादरूपतया प्रापकसाकाङ्क्षाः, 'यतो वा इमानि', 'यो वै बालाके एतेषां पुरुषाणां कर्ता' इत्येवमादयः। केचित् साधारणशब्दचिह्नितत्वात् विशेषाकाङ्क्षाः, यथा सदेवेत्यादयः। केचिच्च अयोग्यस्वार्थतया योग्यविशेषाकाङ्क्षाः, यथा आकाशप्राणादिशब्दचिह्निताः। केचिच्च योग्यविशेषप्रत्यभिज्ञापकविशेषणोपस्थापकाः, यथा, सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादयः। सर्वव्यापित्वं सर्वभूतान्तरात्मत्वमपि नारायणप्रत्यभिज्ञापकम्; 'व्याप्य नारायणः स्थितः', 'सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रूयमाणत्वात्। केचिच्च योग्यविशेषोपस्थापकाः, 'हिरण्मयः पुरुषः', 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी', 'सहस्रशीर्षा पुरुषः', 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्', 'परात्परं पुरुषमुपैति', 'परमपुरुषमभिध्यायीत', 'दिव्यो देव एको नारायणः' इत्यादयः। अतो योग्यविशेषपरेषु वाक्यविशेषेषु तदितरकोटिचतुष्टयनिविष्टवाक्यविशेषाः पर्यवस्यन्ति; अन्यथा निराकाङ्क्षत्वायोगादिति।

अतो जगदेककारणचिदचिद्विलक्षणदेवताविशेषे कारणवाक्यानां समन्वयोऽध्यायप्रतिपाद्य इति स्थितम्; अतोऽधिकाशङ्कास्पदानामनुदाहृतवाक्यविशेषाणामपि नारायणपरत्वमेव चरमाधिकरणे सूत्रकारैरुपपिपादयिषितमिति सिद्धम्।

एवं पादचतुष्टयेऽपि विषयत्वेनोदाहृतानां वाक्यानामैककण्ठ्यं स्थितम्। अनुदाहृतवाक्यविशेषाणां तु न कस्मिंश्चिदर्थे ऐककण्ठ्यं प्रतीयते। अतस्तेष्वेकैकं निरूप्यमाणेषु निरूपितचराणां भूयसां वाक्यानां बलीयस्त्वादेकैकस्य वाक्यस्य तदनुगुणत्वं युक्तमिति च सिद्धम्।

के पुनस्ते वाक्यविशेषाः, येषूक्तन्यायातिदेशः॥ उच्यते। अनुदाहृतवाक्यानामानन्त्यान्न कार्त्स्न्येन तत्प्रदर्शनं शक्यम्; अतः केषुचिद्वाक्येषु दिङ्मात्रं प्रदर्श्यते।

**बृहदारण्यके** श्रूयते—'ब्रह्म वा इदमग्र आसीदेकमेव' इत्यादि। अत्र न परं ब्रह्म प्रतिपाद्यम्; तदसाधारणेक्षणविशेषाद्यभावात्। अत्र ब्रह्मशब्दो ब्राह्मणजातिपरः, तदभिमान्यग्निदेवतापरो वा,

तदधिष्ठितब्राह्मणजातिपरो वा; 'अत्यसृजत क्षत्रम्' इति क्षत्रियसृष्टिश्रवणात्; 'तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये' इति क्षत्रप्रशंसनवाक्ये ब्राह्मणशब्देन निर्देशात्; 'य उ एनं हिनस्ति, स्वां स योनिमृच्छति स पापीयान् भवति' इति ब्राह्मणहिंसायां प्रत्यवायकथनात्, परस्य हिंसाप्रसङ्गाभावात्। 'स विशमसृजत', 'स शौद्रं वर्णमसृजत' इति 'स' इति पुँल्लिङ्गेन शब्देन ब्राह्मणं परामृश्य वैश्यशूद्रयोरपि तत्सृष्टत्वकथनात्, 'तदेतद्ब्रह्म क्षत्रं विट्छूद्रः' इति वर्णचतुष्टय-निगमनाच्च ब्रह्मशब्दो ब्राह्मणपरः तदभिमान्यग्निपरो वा तदधिष्ठितब्राह्मणवर्णपरो वा। "आग्नेयो वै ब्राह्मणः" इति श्रुत्यन्तरात्; इहापि 'अग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु' इति निर्देशेन ब्राह्मणवर्णस्याग्निसंबन्धप्रतिपत्तेश्चेति।

तदेतत् त्रयमनुपपन्नम्; 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यसारूप्यभङ्गायोगात्; कारणत्वस्य परमात्मासाधारण्यस्य समर्थितत्वाच्च। किंच उपक्रमस्थब्रह्मशब्दस्य मुख्यार्थहानिप्रसङ्गः। वर्णमात्रस्य अग्निसंज्ञदेवतायास्तदधिष्ठितवर्णस्य च इन्द्रवरुणसोमादिसमस्तदेवतास्रष्टृत्वायोगश्च। 'ब्राह्मणोऽस्य मुखमासीत्,' 'पद्भ्यां शूद्रः', 'मुखादिन्द्रश्चाग्निश्च' इति ब्राह्मणस्येन्द्रादेरग्नेश्च परमपुरुषसृष्टत्वश्रवणेन इन्द्रादीनामग्निसृष्टत्वायोगश्च। अस्याः श्रुतेर्गत्यन्तरसंभवेन कल्पभेदेन सृष्टिभेदपरत्वकल्पनञ्चानुपपन्नम्। 'तदग्निनैव देवेषु ब्रह्माभवत्, ब्राह्मणो मनुष्येषु' इति तच्छब्दपरामृष्टप्रकृतब्रह्मणोऽग्निब्राह्मणान्यत्वं च प्रतीयते, 'तस्मादग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येषु। एताभ्यां हि रूपाभ्यां ब्रह्माभवत्' इत्यग्निब्राह्मणयोर्वैयधिकरण्येन ब्रह्मरूपत्वनिर्देशेन ताभ्यां रूपिणो ब्रह्मणो विलक्षणत्वं च प्रतीतम्। एवमिन्द्रादिस्रष्टृत्वात् पृथग्व्यपदेशाच्च ब्रह्मशब्दस्य अग्न्यवस्थब्रह्मपरत्वञ्च व्युदस्तम्। न ह्यग्निरूपाद्ब्रह्मण इन्द्राद्युत्पत्तिः। अतोऽग्निविशिष्टत्वोपस्थापनकल्पन-वैयर्थ्यम्। अशाब्दत्वञ्च। न हि केवलब्रह्मशब्दोऽग्न्यवस्थपरमात्मवाची। प्रथमब्रह्मशब्दोऽग्न्यवस्थ-ब्रह्मपरश्चेत्, 'तदग्निनैव' इति प्रकृतपरामर्शिनस्तच्छब्दस्य वैयधिकरण्यमनुपपन्नम्। अग्न्यवस्थस्य ब्रह्मणोऽग्निना विशिष्टत्वं चायुक्तम्; एकस्यैवाग्नेर्विशेषणत्वविशेष्यत्वानुपपत्तेः। अग्न्यन्तरकल्पने च तस्याग्न्यन्तरं प्रति रूपत्वानुपपत्तेश्च॥

नन्विन्द्रादिसृष्टिरविवक्षिता। तद्विवक्षायां ह्यग्निब्राह्मणपरत्वानुपपत्तिः। किन्तु तद्देवताधिष्ठेयक्षत्रादिसृष्टि-रेव विवक्षिता। 'तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभवत्' इति च वाक्यद्वयं ब्राह्मणवर्णस्यैव देवमनुष्यविभागेन द्वैविध्यपरमिति॥ उच्यते। न तावदिन्द्रादिसृष्टचवि-वक्षा वाच्या; 'तदेतद्ब्रह्म क्षत्रं विट्छूद्रः' इति चातुर्वर्ण्यनिगमने, 'कथं चातुर्वर्ण्यम्, क्षत्रादिवर्णत्रय-सृष्टिर्ह्युक्ता' इत्यपेक्षायाम्, 'तदग्निनैव देवेषु ब्रह्माभवत्' इत्यग्निना देवेषु चतुस्सङ्ख्यापूरणात्। अग्निश्च मृत्युसंज्ञसूक्ष्मचिच्छरीरकपरमात्मस्रष्टतया प्रागुक्तः, 'तस्य श्रान्तस्य तप्तस्य तेजोरसो निर-वर्तताग्निः' इति। श्रान्तशब्दः कारणलक्षणया यत्नपरः, कृतसङ्कल्पस्येत्यर्थः। तप्तस्य—"तप आलो-चने"; स्रज्यवर्गपर्यालोचनवत इत्यर्थः। एवं तत्राग्निरेव सृष्टतया श्रुतः; न तु तदधिष्ठितो ब्राह्मणवर्णः।

इहापि तेन चतुस्सङ्ख्यापूरणादग्रचपायन्यायेन क्षत्रादिविभागवत् तदभिमानीन्द्रादिसृष्टिर्विवक्षितेत्यवगम्यते; न तु तदधिष्ठितवर्णमात्रसृष्टिः। 'तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु' इत्युक्तिः पूर्वं ब्राह्मणवर्णस्य ब्रह्मशब्दानुक्ततां ज्ञापयति, पूर्वोक्तानामिन्द्रक्षत्रियादीनामनया वचनव्यक्त्या पुनरनुक्तत्वात्। न हि, क्षत्रवर्णो देवेष्विन्द्रेण क्षत्रमभवत्, मनुष्येषु क्षत्रियेणेति वाक्यं श्रूयते। अत एवाग्नेरपि ब्रह्मशब्दानुक्तत्वं सिद्धम्। न हि, इन्द्रो देवेष्विन्द्ररूपेण क्षत्रमभवन्मनुष्येषु क्षत्रियेणेति वाक्यमस्ति॥ ननु 'क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः' इति श्रूयत इति चेत्—ततः किम्॥ वर्णान्तरेष्वपि द्वैविध्यं प्रतीयत इति चेन्न—तदग्निनैवेत्यादिवाक्यवैरूप्यात्। न हि, क्षत्रवर्णो देवेष्विन्द्रादिरूपेण क्षत्रियोऽभूत् मनुष्येषु क्षत्रियेणेति श्रुतम्। तथापि वर्णान्तरद्वैविध्यपरत्वेऽध्याहारबाहुल्यप्रसङ्गः।

तर्हि अस्याः श्रुतेः कोर्थः॥ उच्यते; ब्राह्मणाभिमान्यग्निसृष्टेः पूर्वमुक्तत्वात् क्षत्राद्यभिमानीन्द्रादिसृष्टिमिहोक्त्वा अग्निसृष्टिः स्मारिता, तदग्निनैवेति वाक्येन। **अग्निनेतीत्थंभावे** तृतीया। अग्निना विशिष्टं तत् परं ब्रह्म देवेषु **ब्रह्माभवत्**—अग्निद्वारा ब्राह्मणाभिमान्यभवदित्यर्थः। अनेन इन्द्रादिद्वारा परब्रह्मण एव क्षत्राद्यभिमानित्वमित्यर्थसिद्धम्। वर्णाभिमानिदेवतानां च तपोविशेषात् ब्राह्मण्यादिविभागोऽस्तीति वा ब्रह्मक्षत्रादिव्यवहारः; "ब्रह्म बृहस्पतिः; क्षत्रमिन्द्रः; मरुतो वै देवानां विशः' इत्यादिश्रुतेः। तदानीमग्न्यादिद्वारा परब्रह्मण एव ब्राह्मणत्वादिविभागः उक्तः स्यात्। बहु स्यामिति सर्वविधबहुत्वं हि तत्तद्वारा ब्रह्मगतम्। एवं वर्णाभिमानिदेवतासृष्टिरुक्ता। अथाभिमानविषयभूतब्राह्मणादिसृष्टिम्, 'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः' इत्यादिश्रुतिप्रसिद्धामुपजीव्य तद्द्वारा तत्फलभूतमानुषवर्णविभागभाक्त्वं परमात्मन उच्यते, ब्राह्मणो मनुष्येष्विति। तत् परं ब्रह्म मनुष्येषु ब्राह्मणरूपभाक् तद्द्वारा ब्रह्माभवत्, क्षत्रियेण विशिष्टं सत् तद्ब्रह्म तद्द्वारा क्षत्रियत्ववदभूत्, यथा भूमिद्वारा काठिन्यवदभूत्, तद्वदित्यर्थः। श्रुतपदानुषङ्गेण निर्वाहे संभवति वाक्याध्याहारेण योजनानुपपत्तेः। मध्येऽग्निब्राह्मणयोः प्रशंसा, 'तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु' इति। तत्प्राशस्त्यहेतुमाह, 'एताभ्यां हि रूपाभ्यां ब्रह्माभवत्' इति। अग्निब्राह्मणरूपाभ्यां परं ब्रह्म विशिष्टमभवदित्यर्थः। इन्द्रक्षत्रादीनां च परमात्मरूपत्वाविशेषेऽपि अग्निब्राह्मणयोस्तद्रूपत्वकथनं तत्प्रशंसाया विवक्षितत्वात्। एताभ्यांहीत्यादिवाक्यस्य वर्णद्वैविध्यपरत्वं प्रयोजनाभावादयुक्तम्। न हि वर्णद्वैविध्यमात्रकथनमुत्कर्षाय भवति। इदञ्च वाक्यमुत्कर्षोपपादकमिति हिशब्देन ज्ञायते। ब्रह्मशब्दार्थवैरूप्यं तु, 'तपसा चीयते ब्रह्म', 'तस्मादेतद्ब्रह्म' इति मुण्डोपनिषदीव घटते। मुख्यार्थासंभवे लाक्षणिकार्थस्वीकारस्य, तत्संभवेऽप्यमुख्यार्थस्वीकारहेतुत्वाभावात्। वक्ष्यते हि, "स्याच्चैकस्य ब्रह्मशब्दवत्" इति। पूर्वपक्षहेतुषु क्षत्रविट्छूद्रसृष्ट्युक्तेरन्यथासिद्धिरुक्ता।

किञ्च क्षत्रादिवर्णत्रयसृष्टिश्रवणेन, ब्रह्म वा इदमिति वाक्यस्य कारणवाक्यसारूप्यनिबन्धनं परमात्मपरत्वं भङ्क्त्वा ब्रह्मशब्दस्य प्रथमवर्णतदभिमानिदेवताविषयत्वाश्रयणमयुक्तम्; 'सदेव'इत्यादिवाक्येऽपि तेजोबन्नसृष्टेर्वक्ष्यमाणत्वेन सच्छब्दस्यापि वायुतदभिमानिदेवताविषयत्वप्रसङ्गात्। 'स विश्वमसृजत'

इति पुँल्लिङ्गनिर्देशस्त्वात्मशब्दाभिप्रायः । एतद्ब्राह्मणोपक्रमे हि, 'आत्मैवेदमग्र आसीत्' इति श्रूयते । अतः स इति निर्देशो न क्षत्रप्रशंसार्थः ; प्रस्तुतब्राह्मणशब्दाभिप्रायः । व्यवहितशब्दानुगुणलिङ्ग-भावत्वं सर्वनामपदस्य श्रुतिषु दृश्यते ; यथा मुण्डोपनिषदि, 'यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्तर्हृदयं संनिधाय । तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति'' इति । अत्रात्मशब्दे सन्निहितेऽपि, 'ब्रह्म तल्लक्ष्यमुच्यते' इति व्यवहितब्रह्मशब्दाभिप्रायेण **अमृतं यत्त**दिति निर्दिश्यते ; न तु 'स त आत्माऽन्तर्याम्यमृतः' इतिवत् पुँल्लिङ्गत्वेन ॥

नन्वस्मिन्नेव ब्राह्मणे, 'तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते, किमु तद्ब्रह्मावेत् यस्मात् तत सर्वमभवत्' इति पृष्ट्वा 'तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात् तत् सर्वमभवत् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् ; तथर्षीणां तथा मनुष्याणाम्' इति ब्रह्मशब्दवाच्यस्य अविद्यातिरोहितस्य अहं ब्रह्मास्मीति ज्ञानेन सर्वात्मभावापत्तिश्रवणात् परब्रह्मणोऽविद्यातिरोधानासंभवात् ब्राह्मणादिषु तत्संभवादुपक्रमस्थब्रह्मशब्दो ब्राह्मणवर्णपर इति अत्रापि तदनुरोधेन ब्राह्मणवर्णपरत्वं ब्रह्मशब्दस्योपपन्नमिति ॥ नैवम् ; उपक्रमेऽपि ब्रह्मशब्दस्य परमात्मपरत्वात् । तत्र च नाविद्यातिरोधानं श्रूयते ; तद्वाचकशब्दाभावात् । तथा हि—ब्रह्मविद्यया **सर्वं भविष्यन्तः**—सर्वशब्दवाच्यपरमात्मपर्यन्providedाविर्भावकामाः मनुष्या मन्यन्ते—**किमु तद्ब्रह्मावेत् यस्मात्तत्सर्वमभवदिति** तद्ब्रह्म किं वेद्यं वस्त्वन्तरमवैत् यस्माद्वेदनात् तत्सर्वमभवदिति ब्रह्मणोऽपि परं तदुपास्यं वस्त्वस्ति न वेति बुभुत्सोत्थापिता । उपास्यान्तरशून्यमित्युत्तरमाह, 'तदात्मानमेवावैदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इति । **आत्मानमेवावैत्**—न त्वन्यदुपास्यम् । तस्मात् तत् सर्वमभवदित्यर्थः । अन्यवेदनस्योपायतानिषेधे तात्पर्यम् ; न तु स्ववेदनस्योपायत्वविधाने । यथा, ''स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः'' इति कारणान्तरनिषेधेन परमकारण-त्वसिद्धिः, एवमुपास्यान्तरनिषेधेन ब्रह्मणः परमोपास्यत्वमिह विवक्षितम् । कारणान्तराभावफलमु-पास्यान्तराभावः । कारणस्यैव हि ध्येयत्वम् । एवमुपास्यान्तरशून्यं ब्रह्म जानतः फलमाह, ''तद्यः'' इति । अतः उपक्रमैकार्थ्यं च परमात्मपरत्वसाधकम् । तस्मात्, 'ब्रह्म वा इदमग्र आसीदेकमेव' इत्यादिवाक्यस्य परमपुरुषपरत्वं सिद्धम् ॥

तथा **बृहदारण्यक एव**, 'आत्मैवेदमग्र आसीत् पुरुषविधः । सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्' इत्यादि श्रूयते । इहात्मशब्दादीक्षणाच्च चेतनस्य प्रतिपाद्यत्वेऽपि न स परमात्मा । स हि निरतिशया-नन्दः । इह च, 'सोऽबिभेत् । तस्मादेकाकी बिभेति । स हायमीक्षाञ्चक्रे' इति भयान्वयोऽवगतः । परमात्मा हि न भयाश्रयः ; किन्तु भयहेतुः, ''भीषाऽस्माद्वातः पवते'' इत्यादिश्रुतेरिति ॥ उच्यते । अयं परमात्मा ; कारणवाक्यसारूप्यादस्य वाक्यस्य । अग्रे, आसीदिति कारणवाक्यत्वं हि प्रतीयते । अस्यात्मनः पुरुषविधत्वं च आनन्दमयत्वं ज्ञापयति, 'आत्मनः आकाशः संभूतः' इत्युपक्रम्य 'अन्योऽन्तर

आत्माऽऽनन्दमयः' इत्युक्त्वा तस्य पुरुषविधत्वप्रतिपादनात् । "स यत् पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात्पुरुषः" इति सर्वपाप्मप्रदाहकत्वपुरुषशब्दवाच्यत्वावगमाच्च पर एव । भयान्वयस्तु न परमात्मनः, किन्तु तत्कार्यभूतपुरुषस्य । 'सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहंनामाऽभवत्' इति तत्रैव ह्युक्तम् । **अह**मिति हिरण्यगर्भनाम ; अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमत्वाद्धिरण्यगर्भस्य, तथा **मोक्षधर्मे** चतुर्मुखस्याहङ्कारसंज्ञत्वमवगम्यते, "मया सृष्टः पुरा ब्रह्मा यत् (मां) य(मद्य)ज्ञमयजत् स्वयम् । ततस्तस्मै वरान् प्रीतो ददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च । अहङ्कारकृतं चैव तथा पर्यायवाचकम्" इति । **तत्रैव भृगुभरद्वाजसंवादे,** "तस्मात् पद्मात् समभवद्ब्रह्मा वेदमयो विधिः । अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत् । ब्रह्मा वै सुमहातेजा य एते पञ्च धातवः" इत्युक्तत्वात् । तस्मादयमर्थः—**अहमस्मि**—अहं स्याम्—चतुर्मुखः स्याम् इति सङ्कल्पवाक्यं व्याहरत् । **ततोऽहंनामा** चतुर्मुखोऽभवदित्यर्थः । अतश्चतुर्मुखरूपस्य परमात्मनः प्रकृतत्वात् तस्य सर्वपाप्मप्रदाहकत्वं साक्षाद्विशेषणमुक्तम्, तद्रूपभूतश्चतुर्मुखः सोऽबिभेदिति भयाश्रयतयोच्यत इति । अतः आत्मा परमात्मेति स्थितम् ॥

तथा अत्रैव **बृहदारण्यके** श्रूयते, "नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुत" इत्यादि । अत्र मृत्युसंज्ञो न परमात्मा, तदसाधारणधर्माश्रवणात् तस्याशनायाविशिष्टत्वाच्च । 'अविजिघत्सोऽपिपासः' इति हि परः श्रूयते । सोऽर्चन्नचरदिति तस्यार्चनादिकर्मकर्तृत्वं श्रूयते । परश्चाकर्मवश्यः । "स एष सर्वेभ्यः पाप्मभ्य उदितः", "अपहतपाप्मा" इति श्रवणात् । अत एव, 'अप्तत्त्वसृष्ट्या नारायण' इति च न शङ्क्यम् ; "अपहतपाप्मा दिव्यो देव एको नारायणः" इति तस्यापहतपाप्मत्वात् । अतः प्रसिद्धमृत्युरिह विवक्षितः । सूर्यो वा ; तदर्कस्यार्कत्वमित्युक्तत्वात् ॥ उच्यते । 'अग्रे' इति कारणावस्थत्वादयं मृत्युसंज्ञोऽचिच्छरीरकः परमात्मा ; 'यस्य मृत्युः शरीरं स दिव्यो देव एको नारायणः' इति श्रुतेः । **अशनाया** नाम—जगत्सञ्जिहीर्षा ; तद्वत्तया **अशनाया**शब्दस्तस्मिन् प्रयुक्तः । तन्मनोऽकुरुतेति मनस्कारश्च परत्वसाधकः । **अर्चन्**निति पदस्यायमर्थः—अर्चनम् प्रीणनम् । कर्मकारकं च स्वयमेव, अश्रुताध्याहारादपि प्रकृतस्यैव कर्मत्वोपपत्तेः । "लक्षणहेत्वोः क्रियायाः" इति शत्रन्ततया जगद्व्यापारलीलया स्वात्मानं प्रीणयितुमचरदित्यर्थः । अपां सृष्टिश्च स्रष्टुर्नारायणत्वे लिङ्गम् ; "एको ह वै नारायण आसीत्" इत्युपक्रम्य, "ता इमा आपः" इति श्रुतेः । अर्कशब्दश्च परस्मिन् प्रीणनगुणयोगाद्वर्तते । अत एव हि **भगवन्नामसहस्रे** पठ्यते, "अर्को वाजसनिः(नः) शृङ्गी" इति । अपां **रसः**—सारांशः । 'तत् समहन्यत सा पृथिव्यभवत्' इति ब्रह्माण्डसृष्टिरुच्यते । 'ता इमा आपः तद्धिरण्मयमण्डमभवत्' इति महोपनिषदैकार्थ्यात् । अतो मृत्युशरीरो नारायण इह प्रतिपाद्यः ॥

**सुबालोपनिषदि,** "तदाहुः किं तदाऽऽसीत् । तस्मै स होवाच न सन्नासन्न सदसदिति । तस्मात्तमः सञ्जायते" इति श्रूयते । अत्रेक्षणादिकं नावगम्यते । धर्मिवाचिशब्दश्च सद्ब्रह्मादिर्न प्रयुक्तः ।

अतः सदसदनिर्वचनीयं कारणं प्रतीयते । उत्तरत्र प्रतिपाद्यमानो नारायण एव न परमकारणम् ; तमः-प्रभृतिसृष्टिमुक्त्वा, 'तदण्डं समभवत्' इति अण्डोत्पत्तिमभिधाय, 'मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः' इति तस्य कार्यान्तर्वर्तित्वप्रतिपादनात् । 'मृत्युर्वै परे देव एकीभवति परस्तान्न सन्नासन्न सदसत्' इति सदसदुभयविलक्षणस्य देवात् परत्वं चावगम्यते ॥ नैवम् । (?) उच्यते । कारणत्वादेव नारायण-परत्वं सिद्धम् । अस्यामुपनिषदि नारायणस्यैव भूयोभूयः प्रतिपादनं च तात्पर्यलिङ्गम् । (॥) 'योऽयं विज्ञानघन उत्क्रामन् स केन कतरद्वाव स्थानमुत्सृज्योत्क्रामतीति । तस्मै स होवाच' इत्युपक्रम्य, 'अपुनर्भवया कोशं भिनत्ति' इत्यारभ्य, 'अक्षरं भित्त्वा मृत्युं भिनत्ति । मृत्युर्वै परे देव एकीभवति । परस्तान्न सन्नासन्न सदसत्' इति मृत्योः परे देवे एकीभावः श्रूयते । मृत्युश्च तमः, स्थानप्रमाणात् । तद्धि अक्षरात्परं श्रुतम् । अतस्तमस्संज्ञमृत्योः कारणं सदसदुभयविलक्षणतयोक्तं वस्तु परो देव इति प्रतीयते ; विभागापादानस्यैव अविभागस्थानत्वात् । परो देवश्च नारायणः ; "दिव्यो देव एको नारायणः' इत्युक्तत्वात् । न च देवात्परं सदसदुभयविलक्षणम्, किन्तु देव एव ; मृत्युसंज्ञतमोपादानाविभागस्थानयोरेकत्वात् । अतस्तमोपादानत्वाविभागस्थानत्वाभ्यां देवत्वावगमात् देवस्य नारायणत्वात् मुक्तप्राप्यत्वाच्च नारायण एव सदसदुभयविलक्षणः । केवलाच्चेतनादचेतनान्मि-श्रित(मिश्रात्)तदुभयरूपव्यष्टिभ्यश्च विलक्षणतया नारायणो **नसन्नासन्नसदसद्**दित्युच्यते । 'मध्ये पुरुषो दिव्यः' इति वाक्यं तस्याण्डमध्ये स्वसृष्टचतुर्मुखरूपेणावस्थानं दर्शयति । केवलपुरुषशब्दः चतुर्मुखपरः । तच्छरीरकः परमात्मा 'सहस्रशीर्षा पुरुषः' इत्युच्यते । 'सोऽग्रे भूतानां मृत्युमसृजत्' इति त्रिशिरस्कमृत्युसृष्टिः चतुर्मुखरूपधरपरमात्मकर्तृका । अत एव हि, 'तस्य ब्रह्मा बिभीते' इत्यनन्तरमुच्यते । अतो **नसन्नासन्नसद**सदित्युक्तं जगत्कारणं नारायण इति स्थितम् ॥

"असावादित्यो ब्रह्मेति । ब्रह्मैव सन् ब्रह्माप्येति, य एवं वेद । तदुक्तमृषिणा— सूर्य आत्मा जगतस्तस्थुषश्च" इत्यादिष्वपि 'असावादित्यः' इत्यपरोक्षनिर्देशापवादकचिदचिद्व्यावर्तक-धर्मान्तराश्रवणात् प्रसिद्धादित्यो मुमुक्षूपास्य आत्मेति न शङ्कनीयम् ; जगदन्तरात्मत्वस्य, ब्रह्म-साम्यापत्तिपूर्वकब्रह्मप्राप्तिरूपमोक्षोपायभूतवेदनविषयत्वस्य च परमकारणत्वव्याप्तत्वात् । कारणत्वस्य च परमपुरुषत्वसाधकत्वात् । अवयवशक्त्या अपर्यवसानाद्वा सूर्यादिशब्दवाच्यपरमपुरुषविषयं सूर्य आत्मेत्यादिवाक्यम् ।

तथा **प्रश्नोपनिषदि** च, "कुतो ह वा इमाः प्रजाः प्रजायन्त इति । तस्मै स होवाच—प्रजा-कामो वै प्रजापतिः । स तपोऽ(त)प्यत.... रयिं च प्राणञ्चेति । एतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः" इत्यादि श्रूयते । इहापीक्षणविशेषनिरतिशयानन्दाद्यश्रवणात् 'स तपोऽतप्यत' इति कर्माधीनसृष्ट्यवगमाच्च चतुर्मुख एवेति न शङ्कनीयम् । किन्तु चन्द्रादित्यादिसृष्टेरण्डान्तर्वर्तिविषयाया-श्चतुर्मुखकर्तृकत्वसम्भवेऽपि तदन्तर्यामिपरमपुरुष एव प्रजापतिशब्दवाच्यः । अपर्यवसानादवयवशक्त्या वा तस्यैव वाच्यत्वं स्यात् । अस्मिन्नेव खण्डे परब्रह्मप्राप्तेरुक्तत्वात् । "तपसा ब्रह्मचर्येण श्रद्धया

विषया आत्मानमन्विष्याऽऽदित्यमभिजयन्ते" इत्युक्त्वा, "एतस्मान्न पुनरावर्तन्ते" इति अर्चिरादिगत्याऽनावृत्तिप्रतिपादनात् । "येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्, तेषामसौ विरजो ब्रह्मलोकः" इति निर्दोषपरमात्मलाभवचनाच्च । ब्रह्मैव लोको ब्रह्मलोकः; विरजशब्देन प्रसिद्धब्रह्मलोकव्यावृत्तेः । अतः परमात्मपरत्वं हि प्रतीयते । उत्तरखण्डेषु च, "एष हि द्रष्टा श्रोता घ्राता रसयिता" इत्यादिना प्रत्यगात्मा विशोध्यते । ततश्चोपरिष्टाच्च, 'परं पुरुषमभिध्यायीत' 'परात्परं पुरिशयं पुरुषमीक्षते' इति परमपुरुषोपासनं तत्प्राप्तिरूपफलं च श्रूयते । अत उपक्रमे प्रजापतिशब्दवाच्यो महावाक्यस्वारस्यात् परमपुरुष इति सिद्धम् ॥

"हिरण्यगर्भः समवर्तताग्रे" इत्यत्रापि प्रसिद्धहिरण्यगर्भ एव कारणत्वेन विवक्षितः; तद्व्यावर्तकधर्माश्रवणात् । न ह्यत्र समस्तकार्योत्पत्त्यनुगुणेक्षणविशेषानवधिकानन्दाकर्मवश्यत्वादयोऽवगम्यन्ते । पृथिव्यादिधारकत्वं तु न व्यावर्तकम्; अण्डान्तर्गतपदार्थधारणादेरण्डाधिपतौ संभवात् । अमृतमृत्युशब्दौ च देवभोग्य—प्राणापहर्तृविषयाविति तयोस्तन्नियाम्यत्वम् । पृथिव्याद्याधारत्वादीनां चिदचिद्व्यावर्तकत्वेऽपि परमपुरुषासाधारणत्वाभावात् प्रसिद्धहिरण्यगर्भपरत्वम्—इति शङ्कायामुच्यते । हिरण्यगर्भशब्दो भगवत्परः; अग्रे समवर्ततेति कारणत्वश्रवणात् । अनवच्छिन्नं पतित्वञ्च भगवदसाधारणम्; 'पतिं विश्वस्य' इति नारायणानुवाके श्रवणात् । तस्य चानन्यपरत्वं वक्ष्यते । द्युपृथिव्यादिधारणं च तदसाधारणम्; 'विष्णुना विधृते भूमी' इति श्रुतेः । कारणप्रकरणस्थौ अमृतमृत्युशब्दौ मुक्तबद्धपराविति बन्धमोक्षहेतुत्वं च तदसाधारणम् । "तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इति श्रुतेः । 'यस्य विश्व उपासते प्रशिषं यस्य देवाः,' 'यत्राधि सूर उदितौ (तो) व्येति' इति प्रतिपादितम् आदित्यादिसर्वदेवतानियमनञ्च तत्प्रत्यभिज्ञापकम्; "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः", "य आदित्ये तिष्ठन्", "यः सर्वेषु देवेषु तिष्ठन्" इत्यादिश्रुतिप्रसिद्धेः । किञ्च 'यमन्तस्समुद्रे कवयो वयन्ति', 'विद्युतः पुरुषादधि' इति समुद्रान्तर्वर्तिविद्युद्वर्णपुरुषप्रतिपादकेन, 'अम्भस्यपारे' इत्यनुवाकेन, लक्ष्मीपतित्वप्रतिपादकेनोत्तरनारायणेन [च?] अस्याष्टर्चस्यैकत्वाच्च नारायणपरत्वम् । "अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ" इति ह्युच्यते । श्रीविष्णुस्मृतौ च भगवत्समाराधने 'हिरण्यगर्भस्समवर्तताग्र इत्यष्टाभिर्हविर्निवेदयेत्' इति हविर्निवेदने विनियोगादस्याष्टर्चस्य भगवत्प्रतिपादकत्वमवगम्यते । अत एव, 'हिरण्यगर्भः शत्रुघ्नः' इति भगवन्नामसहस्रे पठ्यते । अतोऽत्र हिरण्यगर्भशब्दवाच्यो नारायण इति स्थितम् ॥

अत एव, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यत्र धातृशब्दश्च परमपुरुषविषयो निश्चितः । इदं हि वाक्यम्, 'अम्भस्यपारे' इत्यनुवाकस्थम् ॥ नन्वत्राप्युपक्रमे 'प्रजापतिश्चरति गर्भे अन्तः' इति प्रजापतिः श्रुतः । प्रजापतिश्च हिरण्यगर्भः; समुद्रशायित्वलिङ्गसचिवपुरुषशब्दश्रुतेरुपक्रमोपसंहारस्थप्रजापतिधातृशब्दरूपश्रुतिद्वयपरास्तत्वादिति ॥ न; उपक्रमस्थप्रजापतिशब्दस्य हिरण्यगर्भपरत्वानुपपत्तेः । "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रममृतं तद्ब्रह्म तदापः स

प्रजापतिः'' इत्यग्निवाय्वादीनामिव प्रजापतेरपि कारणभूतप्रजापतिविभूतितया तद्व्यतिरेको ह्यवगम्यते, यथा ''यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तमोजाः तस्मा इन्द्राय सुतमाजुहोमि'' इत्यत्र इन्द्रशब्दवाच्यस्य प्रसिद्धेन्द्रव्यतिरिक्तत्वावगमः । अतः 'सूर्याचन्द्रमसौ धाता' इत्यत्र धातृशब्दस्तत्पश्शब्देन पूर्वप्रस्तुतपरमात्मपरः ।

अत एव 'धातुः प्रसादान्महिमानमीशम्' इत्यत्र धातृशब्दोऽपि व्याख्यातः; मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तत्वात् । 'अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम् । विश्वकर्मा ह्यजनिष्ट देवः', 'स प्रजापतिरेकः पुष्करपर्णे समभवत्', 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग्विश्वरूपः', 'तत्र ब्रह्मा चतुर्मुखोऽजायत', 'नारायणाद्ब्रह्मा जायते', 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिभिश्चतुर्मुखस्य भगवन्नाभिपद्मसृष्टत्वावगमात्कार्यभूते तस्मिन्नसंभवेन मुमुक्षूपास्यत्वस्य भगवदसाधारणत्वात् उपक्रमभूते, 'अम्भस्यपारे' इत्यनुवाके, 'य एनं विदुरमृतास्ते भवन्ति' इति भगवत एवामृतत्वप्राप्त्युपायताप्रतिपादनस्यानुरोद्धव्यत्वात् उपक्रमस्थधातृशब्दैकरूप्यस्य न्याय्यत्वात् । उत्तरे चानुवाके चतुर्मुखशिवयोरिन्द्रवन्नारायणविभूतित्वप्रतिपादनात् । अस्मिन्नप्यनुवाके 'यस्मात्परं नापरम्' इति मन्त्रेण परमपुरुषस्यैव सर्वस्मात्परत्वप्रतिपादनात् । ब्रह्मकार्यवर्गप्रतिपादनप्रकरणे, ''ब्रह्मा देवानां पदवीः कवीनाम्'' इति मन्त्रेण प्राणसमुद्रादीनामिव चतुर्मुखस्य कार्यत्वावगमाच्च ॥ ननु सप्त प्राणाः प्रभवन्तीतिवन्नोत्पत्तिः श्रूयते ॥ न; महिषश्येनादीनामिवोत्पत्तेः प्रकरणसिद्धत्वात्; तस्य बाधकाभावाच्च ॥

ननु यस्मात्परमित्यतः पूर्वमेव, ''विश्वाधिको रुद्रो महर्षिः'' इति श्रवणात्, ''यः परः स महेश्वरः'' इत्युपसंहारे श्रुतत्वाच्च धातृशब्दस्यापि रुद्रपरत्वं न्याय्यमिति ॥ उच्यते; उपक्रमस्थतया प्रबलस्य धातृशब्दस्य रूढिपरित्यागे को हेतुः? उपसंहारो हि दुर्बलः ॥ रुद्रमहेश्वरशब्दरूपश्रुतिद्वयमिति चेत्—तथापि न बाधकत्वम्; तुल्यबलत्वात् । धातृपदश्रुतिरेकाऽप्युपक्रमस्थतया अनुगृहीता, रुद्रमहेश्वरश्रुत्योरनेकत्वेऽप्युपक्रमविरोधाद्दुर्बलत्वम् । तस्मात् तुल्यबलता । किञ्च, 'यो देवानां प्रथमं पुरस्तात्', 'यः परस्स महेश्वरः' इत्यनुवादरूपवाक्यस्थत्वाच्च दौर्बल्यमधिकम् । अतो धातृरुद्रमहेश्वरशब्दानामन्योन्यविरोधात्, अन्योन्यबाधकभावानुपपत्तेश्च अर्थनिश्चायकत्वेऽनुपपन्ने सति, प्रमाणान्तरायत्तोऽर्थनिश्चयः । तत्र धातृशब्दस्य भगवत्परत्वमुपपादितम् । तदुपपादकहेतुभिः धातृशब्दरूढित्यागेन अप्रचप्रायन्यायाच्च रुद्रमहेश्वरशब्दयोरपि रूढित्यागस्य न्याय्यत्वात्, 'यो देवानाम्', 'यः परः' इत्यनुवादस्यान्यसापेक्षत्वात्, 'अ इति ब्रह्म' इति श्रुत्या ब्रह्मणोऽकारवाच्यत्वावगमात् ब्रह्मणश्च लक्षणं जगत्कारणत्वमिति कारणवाक्यप्रतिपाद्यनारायणस्याकारवाच्यत्वावगमात्, तस्य लोकप्रसिद्धत्वात्, ''अकारेणोच्यते विष्णुः'' इति श्रुत्यन्तराच्च नारायणस्याकारवाच्यत्वसिद्धेश्च रुद्रमहेश्वरशब्दौ 'रोदयति', 'महानीश्वरः' इति अवयवशक्त्या भगवत्पराविति युक्तम् । नारायणस्यैव यच्छब्दानूदितत्वात् तस्यैव हि महेश्वरत्वरूपगुणविधानं युज्यते । न हि जुहूमनूद्य विधीयमानं पर्णमयत्वं कपालस्य भवति । अतो धातृरुद्रमहेश्वरशब्दवाच्यो नारायण इति स्थितम् ॥

अत एव **श्वेताश्वतरोपनिषदि** च, "विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्" इति वाक्यं च व्याख्यातम्; अनुवादरूपतया पूर्वोदाहृतप्रमाणान्तरसापेक्षत्वात् । तथा हि; बह्वृच-शतपथ-सुबाल-महोपनिषत-सामवचनादिभिर्हिरण्यगर्भजन्यत्वे, श्वेताश्वतरवाक्येन हिरण्यगर्भजनकत्वे च रुद्रस्यावगम्यमाने तयोरविरोधेन निर्वाहासंभवे प्राबल्यदौर्बल्यचिन्ता युक्ता । अविरोधश्च वस्त्वैक्येन वा कल्पभेदेन वा जन्मनोऽवताररूपतया वा संभवेत् । तत्र तावत् वस्त्वैक्यमिह नाविरोधनिर्वाहक्षमं भवेत्; क्षीराद्दधि, दध्नः क्षीरमिति वचनयोरिवावस्थाद्वयपौर्वापर्यविपर्यासविरोधस्य दुष्परिहरत्वात् । कल्पभेदादविरोधकल्पनं सूर्याकाशप्राणादिष्वपि प्रसजेत् ॥ ननु अश्रुतस्य कल्पभेदस्य कल्पनमनन्यथासिद्धेन कल्पकेन स्यात् । सूर्याकाशादिविषयवाक्यानां परमात्मपरतयाप्युपपत्तौ न तत्कल्पनमिति चेत्—इहापि तुल्यम् । अवतारपक्षोऽपि इन्द्रादिप्रकरणेष्विव हिरण्यगर्भरुद्रप्रकरणेष्वपि तस्याश्रुतत्वात् इन्द्रादीनामिव कर्मवश्यत्वं प्रतिपादयन्त्यामुत्पत्तिश्रुतौ परिपन्थिन्यामन्यतरोत्पत्तेरवताररूपत्वकल्पनायोगादनुपपन्नः । रुद्रस्यानपहतपाप्मत्वं च शतपथेऽवगतम्, "अनपहतपाप्मा वा अहमस्मि" इति रुद्रवचः । अत एव, एक एवेश्वरः कदाचिद्धिरण्यगर्भावस्थात् स्वस्मात् रुद्ररूपोऽवतरति, कदाचिद्रुद्रावस्थात् स्वस्मात् हिरण्यगर्भरूपोऽवतरतीति कल्पनमप्यनुपपन्नम् । गौरवनिरस्तं च वस्त्वैक्यम्, द्वयोरुत्पत्त्योरवताररूपत्वमपि हि कल्प्यम् । वस्त्वैक्य-कल्पभेद-जन्मद्व्यावताररूपत्वपक्षेषु रुद्रोत्कर्षवादिमतं च न जीवति । एवं विरोधस्य दुष्परिहरत्वे सति हिरण्यगर्भरुद्रशब्दयोरन्यतरपदप्रसिद्ध्यनादरेण निर्वाहः स्यात्; यथाऽऽकाशादिपदानाम् । तत्र हिरण्यगर्भशब्दस्य प्रसिद्ध्यनादरेण स्कन्दाद्युत्पत्तिरुक्ता स्यात्; ततश्च रुद्रस्य परमकारणत्वं न सिद्ध्येत्; चतुर्मुखकार्यत्वस्य श्रुत्यन्तरावगतस्यानपोदितत्वात् । ततोऽपि रुद्रशब्दस्यैव प्रसिद्ध्यनादरो न्याय्यः; प्रसिद्धेतरार्थपरिग्रहस्य मानान्तराधीनत्वात् । मानान्तरप्रसिद्धिद्योतकस्य यद्वृत्तस्य रुद्रसामानाधिकरण्याच्च रुद्रशब्दस्य मानान्तरानुगुणेऽर्थे निश्चिते तावतैव विरोधस्य परिहृतत्वेन हिरण्यगर्भशब्दप्रसिद्ध्यनादरे कारणाभावात् ॥

तथा च श्रुतयो रुद्रस्य कार्यत्वं हिरण्यगर्भस्य स्रष्टृत्वं चावगमयन्ति—**बह्वृचे** तावत्, "तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः । सद्यो जज्ञानो निरणाति शत्रून्" इति । न चास्य मन्त्रस्य उदगादिति ब्राह्मणानुरोधेनादित्यविषयत्वं शङ्कनीयम्, भूतपतित्वसद्योजातत्वाभ्यामुग्रशब्दरूढिबलाच्च रुद्रविषयत्वसिद्धेरुदयलिङ्गस्य दुर्बलत्वात् । उदगादिति पदस्य तदुत्पत्तिदर्शनयोरन्यतरपरत्वेऽपि मुख्यवृत्तिभङ्गाभावात् विरोधिहेत्वन्तराभावाच्च । तथा **सुबालोपनिषदि**, 'अपानान्निषादा यक्षराक्षसगन्धर्वाश्च अस्थिभ्यः पर्वताःलोमभ्य ओषधिवनस्पतयः, ललाटात्क्रोधजो रुद्रोऽजायत' इति । **महोपनिषदि**, 'अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत....त्र्यक्षः शूलपाणिः पुरुषोऽजायत" । **नारायणोपनिषदि**, 'नारायणाद्रुद्रो जायते' इति । **बृहदारण्यके**, 'ब्रह्म वा इदमग्र आसीत् । तदेकं सन्न व्यभवत् । यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः" इति । **शतपथे चाष्टमूर्तिब्राह्मणे**, 'अभूद्वा इदमप्रतिष्ठा' इत्यारभ्य, "भूतानां च प्रजापतिः

संवत्सरायादीक्षत भूतानां पतिर्गृहपतिरासीदुषाःपत्नी'' इत्यादिकमुक्त्वा, ''भूतानां पतिः संवत्सर उषसि रेतोऽसिञ्चत् । संवत्सरे कुमारोऽजायत । सोऽरोदीत् । प्रजापतिरब्रवीत्- कुमार ! किं रोदिषि, यच्छ्रमात् तपसोऽधिजातोऽसीति । सोऽब्रवीत्—अनपहतपाप्मा वा अहमनाहितनामा । नाम मे धेहि पाप्मनोऽपहत्या इति । तं प्रजापतिरब्रवीत् रुद्रोऽसीति । तदस्य तन्नामाकरोत् । अग्निस्तद्रूपमभवत् । अग्निर्वै रुद्रः । यदरोदीत् , तस्माद्रुद्रः । सोऽब्रवीत् ज्यायान् वा अहमस्मि धेह्येव मे नामेति । तं प्रजापतिरब्रवीत् भवोऽसीति शर्वोऽसीति ईशानोऽसीति पशुपतिरसीति उग्रोऽसीति महादेवोऽसीति'' इति । अत्र 'प्रजापतिः संवत्सरो महान् कः' इति संवत्सरशब्दवाच्यतया प्रसिद्धचतुर्मुखसृष्टत्वानपहतपाप्मत्वतद्दत्तसंज्ञामूर्त्यष्टकविशिष्टो रुद्रः प्रतीयते । **शैलालि**[1] **ब्राह्मणे** चतुर्मुखात् रुद्रोत्पत्तिः श्रूयते । **साम्नि** च, ''विरूपाक्षाय दत्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये'' इति ब्रह्मपुत्रत्वं रुद्रस्य प्रतीयते । चतुर्मुखस्य नारायणात्मकत्वात् रुद्रस्य नारायणसृष्टत्वश्रुतिश्चाविरुद्धा । 'क इमामर्सिष्यतीति । रुद्र इत्यब्रवीत् (ब्रुवन्) रुद्रो वै क्रूरः । सोऽस्त्वित्विति । सोऽब्रवीद्वरं वृणै अहमेव पशूनामधिपतिरसानीति । तस्मात् रुद्रः पशूनामधिपतिः'' इति देवतावरदानलब्धपशुपतिभावः प्रतिपाद्यते । तथा, ''[2]अस्य देवस्य मीढुषो वयो विष्णोरेषस्य प्रभृथे हविर्भिः । विदे हि रुद्रो रुद्रियं महित्वम्'' इत्यनेन च पूर्वोदाहृतवचनानुग्रहात् स्वारस्याच्च भगवदाराधनबललब्धमहिमत्वं रुद्रस्यावगम्यते । अतश्चतुर्मुखसृज्यस्य भगवत्समाराधनलब्धमहिम्नो रुद्रस्य चतुर्मुखसृष्टत्वं युक्तम् ॥

ननु परमकारणत्वं शिवशब्दवाच्यस्यैव श्रूयते, ''यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः'' इति ॥ न ; तस्य भगवदसाधारण्यस्य बहूपनिषद्वाक्यैर्न्यायानुगृहीतैर्निश्चितत्वात् । किञ्च नारायणमहापुरुषादिशब्दानामसाधारणत्वात् बहूपनिषत्स्थत्वात् एकोपनिषद्यभ्यस्तत्वात् साधारणानामेकोपनिषत्स्थानां शिवादिशब्दानां तदनुरोधेन वर्णनीयत्वात् इहाप्युपक्रमोपसंहारादिपर्यालोचनायां भगवत्प्रत्यभिज्ञापकबहुविशेषणदर्शनात् विशेषतः पुरुषसूक्तैकार्थ्यावगमाच्च शिवरुद्रादिशब्दानामपि परमपुरुषपरत्वसिद्धेः । 'रुद्रो बहुशिरा बभ्रुः' इति भगवति रुद्रशब्दः प्रयुक्तः । अग्नौ च, 'रुद्रो भूत्वाऽग्निरनूत्थायाध्वर्युं च यजमानं च हन्यात्' इति प्रयुक्तः । [मङ्गलेच ?] 'शिवः शिवानामशिवोऽशिवानाम्', 'शिवास्ते सन्तु पन्थानः', 'शिवमस्तु' इति । विशेषतो भगवति च, '' शाश्वतं शिवमच्युतम् '' इति शिवशब्दः प्रयुक्तः। पुंलिङ्गैकवचनान्तत्त्वसाधारण इति चेत्-तर्हि प्रातिपदिकसाधारण्यमनुज्ञातं भवति । पुंलिङ्गैकवचनान्तोऽप्यसाधारणो न भवति ; तादृशस्याप्यर्थान्तर-

---

1. शैलालीति । इदं समन्वयसूत्रटीकायां द्रष्टव्यम् ।

2. अस्येति । एतदर्थो गीतार्थसंग्रहरक्षायामेवं श्रीदेशिकदर्शितः—अस्य देवस्य मीढुषः—सेक्तुः उदारस्य, वयः—अवयवतयाशाखाभूतः शरीरतयाऽङ्गभूतः । वयः शाखेति यास्कः । एषस्य—एषणीयस्य प्रार्थनीयस्य विष्णोः प्रभृथे—सर्वमेधाख्ये यज्ञे विष्णवेऽर्पितैः हविर्भिः रुद्रियं महत्त्वं रुद्रो विदे—लेभे । हीति प्रसिद्धौ इति ।

परत्वशक्त्यनपगमात् । अरुणः, कपिल इति शब्दवत् । न हि तौ रविसारथि-मुनिविशेषासाधारण्यादर्थान्तरप्रत्यायनशक्तिविधुरौ भवतः । नैवं नारायणमहापुरुषादिशब्दा अन्यत्र प्रयुक्ताः । महादेवं वा महापुरुषं वाऽर्चयेदिति देवताविशेषविषयो हि प्रयोगः । पुरुषशब्दोऽपि स्वतो भगवद्विषयः ॥ पुरुषो वै रुद्रः इत्यप्यस्तीति चेत् , सत्यम् । स च भगवद्विषय एव । 'सर्वो वै रुद्रः' इत्यस्योपपादनाय रुद्रस्य पुरुषात्मकत्वपरत्वात् वाक्यस्य, 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः इतिवत् । अतो हिरण्यगर्भकार्यतया श्रुत्यन्तरसिद्धस्य तज्जनकत्वायोगः ।

किञ्च न केवलमनुवादरूपत्वादस्मिन् वाक्ये रुद्रशब्दस्य भगवद्विषयत्वनिश्चयः ; किन्तु हिरण्यगर्भजनकत्वविशेषितत्वाच्च तस्य भगवद्विषयत्वनिश्चयः; तज्जनकत्वस्य नारायणचिह्नत्वात् । यथा "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते" इति परमपुरुषस्य नामरूपनिर्वोढृत्वश्रवणात् , "आकाशो वै नाम नामरूपयोर्निर्वहिता" इत्यत्र आकाशशब्दस्य भगवद्विषयत्वनिश्चयः, तद्वत् । न चानयैव श्रुत्या हिरण्यगर्भजनकत्वं रुद्रचिह्नमिति शङ्कनीयम् , हिरण्यगर्भजनकताया रुद्रचिह्नतानिश्चयस्य हिरण्यगर्भजन्यत्वश्रुतिप्रतिबद्धत्वात् । भगवतो हिरण्यगर्भजन्यत्वश्रुत्यभावेन तज्जनकतायास्तच्चिह्नतानिश्चयस्यानपवादत्वाच्च । अस्य वाक्यस्य रुद्रपरत्वनिश्चये सति हिरण्यगर्भजनकत्वस्य रुद्रचिह्नत्वनिश्चयः ; तन्निश्चये सति अस्य वाक्यस्य रुद्रपरत्वनिश्चय इत्यन्योन्याश्रयश्च । अनुवादरूपत्वाच्च रुद्रपरत्वानिश्चय इत्युक्तम् । किञ्च कार्यभूतस्य विश्वाधिकत्वायोगाद्विश्वाधिकत्वविशेषितरुद्रशब्दस्य 'तत्राऽपि दहं गगनं विशोकः', 'दहरोऽस्मिन्नन्तराकाशः' इत्यादिवाक्यस्थगगनादिशब्दस्येव प्रसिद्धार्थपरत्वाभावेन भगवत्परत्वं सिद्धम् ॥ नन्विदमिष्टं रुद्रशब्दस्य कार्यव्यवच्छेदेन कारणरुद्रपरत्वम् ॥ सत्यम् ; स तु परमपुरुष एव, तस्यैव परमकारणत्वात् । ननु रुद्र एव कारणावस्थः प्रतिपाद्यत इति चेत्—इन्द्र एव वा आकाश एव वा कारणावस्थः तत्तद्वाक्यप्रतिपाद्यः किं न स्यात् ॥ इन्द्रादेः प्रसिद्धस्यैव परमकारणावस्थासद्भावे मानान्तराभावादिति चेत्—तत एवात्रापि प्रसिद्धस्यैव परमकारणत्वासिद्धिरिति तुल्यम् । शिवादिशब्दानां विशेषोपस्थापनाक्षमत्वमुक्तम् ; अतोऽस्य वाक्यस्य भगवद्विषयत्वं सिद्धम् । यद्यपि कल्पभेदेन हिरण्यगर्भजनकत्वेऽपि रुद्रस्य, न भगवतः परमकारणत्वविरोधः, तथापि न्यायपर्यालोचनायां नारायणपरत्वं रुद्रशब्दस्य युज्यत इति प्रतीयते ।

किञ्चास्यामप्युपनिषदि, प्रथमद्वितीयखण्डयोः 'देवात्मशक्तिम्', 'प्रेरितारं च मत्वा', 'व्यक्ताव्यक्तं भरते विश्वमीशः', 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्', 'ज्ञात्वा देवम्', 'एषो हि देवः प्रदिशो नु सर्वाः' इति देवात्मप्रेरित्रीशब्रह्मशब्दैः परमात्मा निर्दिष्टः, ते च 'दिव्यो देव एको नारायणः', विश्वं नारायणं देवमक्षरं परमं प्रभुम्', 'आत्मा नारायणः परः', 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च सामाश्रितः । ईशः सर्वस्य जगतः'; 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्', इत्यादिवाक्यप्रतिपन्ननारायणप्रत्यभिज्ञापकाः । अत्रेशशब्दश्च न रूढः(ढ्या)प्रयुक्तः; किन्तु योगात् ; 'अनीशश्चात्मा' 'द्वावजावीशनीशौ' 'ईशः सर्वस्य' इति निर्देशस्य सप्रतिसंबन्धितया

अवयवार्थविवक्षाज्ञापकत्वात् । 'अनन्तश्चात्मा विश्वरूपो ह्यकर्ता' इत्यत्रानन्तशब्दस्तु योगरूढः, रूढ्य-विवक्षानिमित्तसप्रतियोगिकनिर्देशाभावात् । तृतीये च, 'य एतद्विदुरमृतास्ते भवन्ति' इत्यनेन, 'अम्भस्यपारे' इत्यनुवाकः प्रत्यभिज्ञाप्यते । स हि परमपुरुषविषयः । एवमुपक्रमो भगवत्परः । 'एको हि रुद्रः' इत्यस्यानन्तरम् , 'विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिमन्त्रश्च भगवत्प्रत्यभिज्ञापकः ; तस्य विद्युद्वर्णपुरुषविषयत्वात् । 'द्यावापृथिवी जनयन् ' इति च, 'शीर्ष्णो द्यौःसमवर्तत ; पद्भ्यां भूमिः' इति वाक्यप्रत्यभिज्ञापकम् । 'यो देवानाम् ' इति वाक्यमनुवादरूपमिति स्फुटम् । कार्यस्य परमकारणत्वायोगात् रुद्रशब्दस्य कार्यरुद्रव्यतिरिक्तविषयत्वे सति, वाक्यस्यानुवादरूपतया योग्यार्थप्रापकवाक्यानुगुणम् अत्रत्यभगवदसाधारणविशेषणानुगुणं च भगवद्विषयत्वनिश्चयः । 'या ते रुद्र शिवा तनूः' इत्यतोऽनन्तरं 'ततः परं ब्रह्म परं बृहन्तम् ' इति वाक्यं च 'नारायणः परं ब्रह्म' इति महोपनिषत्प्रत्यभिज्ञापकम् । 'ईशं तं ज्ञात्वा अमृता भवन्ति' इत्यत्र ईशशब्दः पूर्ववत् यौगिकः, वैरूप्यायोगात् । 'वेदाहमेतम् ' इत्यनन्तरवाक्यस्थैतच्छब्दश्च पूर्वरुद्रशब्दवाच्यस्य महापुरुषतामवगमयति ; प्रकृतपरामर्शित्वात् । 'ततो यदुत्तरतरम् ' इति वाक्यं तु, 'परमतःसेतून्मान' इत्यत्र उपपादयिष्यते । सर्वाननशिरोग्रीवत्वञ्च पुंसूक्तार्थस्मारकम् । सर्वव्यापिपदं तु, 'सर्वं व्याप्य नारायणः स्थितः' इत्येतत् स्मारयति । भगवच्छब्दस्तु, 'भगवान् पवित्रं वासुदेवः पवित्रम्', 'भगवान् वासुदेवः परा प्रकृतिः', 'परं पवित्रं भगवान् वासुदेवः', 'ये भगवन्तं वासुदेवमेवं विदुः' इति वासुदेवासाधारणः । अत एव हि स्मर्यते, "एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः" इति । ['सत्त्वस्यैष प्रवर्तकः' इति ?] सत्त्व-प्रवर्तकत्वं भगवत इति स्फुटम् ; "यो ह खलु वा अस्य सात्विकोंऽशः, सोऽसौ ब्रह्मचारिणः योऽयं विष्णुः" इति मैत्रायणीयश्रुतेः । [अन्तरात्मेति ?] अन्तरात्मत्वं च तथा ; सुबालोपनिषत्प्रत्यभिज्ञापकत्वात् । 'हृदा मनीषा' इति तु विद्युद्वर्णपुरुषस्मारकम् । अथ सहस्रशीर्षेत्यादिमन्त्रद्वयमेवाधीतम् । ईशानपदं तु नपुंसकत्वात् यौगिकमेव ; न तु रूढम् ; पुँल्लिङ्गात् । 'सर्वस्य शरणं सुहृत्' इति "माता-पिता भ्राता निवासःशरणं सुहृद्गतिर्नारायणः" इति श्रुतिप्रत्यभिज्ञापकम् : 'तमाहुरग्र्यं पुरुषं महान्तम् ' इति महापुरुषः स्पष्टमुक्तः । धातृशब्दमपि महापुरुषशब्देनैकार्थयति, 'अणोरणीयान् ' इति ॥ चतुर्थे च, 'द्वा सुपर्णा' इत्यादिमन्त्रद्वयं मुण्डोपनिषदैकार्थ्यात् परमपुरुषपरत्वज्ञापकम् । अतः 'मायिनं तु महेश्वरम्' इति महेश्वरशब्दो मायाप्रेरकत्वपरः ; 'सर्वलोकमहेश्वरम् ', 'क्षीरोदस्योत्तरं तीरं जग्मुर्लोकहितार्थिनः । इतस्सद्वारम् ' इत्यारभ्य, 'वाक्यं स्वस्थो महेश्वरः' इत्यादिषु यौगिको महेश्वरशब्दो भगवति प्रयुक्तः । 'यस्मिन्निदं सञ्च वि चैति सर्वम्' इति प्रकृतस्य सर्वस्य नियन्तृत्वमीशानशब्देनोच्यते । पूर्वम् , 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्युक्तत्वात् तत्र 'ईशानो भूतभव्यस्य' इति ईशनस्य प्रतिसंबन्ध्यभिधानेनरूढि विरहाव-गमात् ; भूतभव्यशब्दनिर्दिष्टस्य इह सर्वशब्देन प्रतिपन्नत्वाच्च । "य ईशोऽस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम" इत्यनेन 'हिरण्यगर्भ' इत्याद्यष्टर्चतुरुय्विषयत्वं प्रतीयते । तच्च भगवत्परमित्युपपादितम् । एवं भगवत्परानेकोपनिषदैकार्थ्यप्रतीतेः, 'ज्ञात्वा शिवम् ', 'शिव एव केवलः' इति शिवशब्दद्वयं

तत्परमेव । मुहुरभ्यस्यमानस्यापि शिवशब्दस्य रूढार्थत्यागः आकाशशब्दस्येवोपपन्नः । 'आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' इति ह्याकाशशब्दोऽभ्यस्तः । किञ्च 'सर्वव्यापी च भगवांस्तस्मात् सर्वगतः शिवः' इत्ययं शिवशब्दः प्राकरणिकशिवशब्दानां माङ्गल्याभिप्रायत्वमेव दर्शयति । सर्वगतत्वेऽपि भगवच्छब्दवाच्यत्वान्निर्दोष इति हि तस्यार्थः । अन्यथा सर्वव्यापिसर्वगतशब्दयोः पुनरुक्तिप्रसङ्गात् । 'तदक्षरं तत्सवितुर्वरेण्यम्' इत्यनेन 'अक्षरं परमं प्रभुम्', 'तत्सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम' इति श्रुतिद्वयैकार्थ्यमवगम्यते । 'हृदा मनीषा' इति वाक्यम् ' 'नैनदूर्ध्वम्' इत्यादिमन्त्रद्वयं च मध्यगतवाक्यस्थशिवशब्दस्य परमपुरुषविषयतां ज्ञापयति । तद्धि वाक्यत्रयं समुद्रान्तर्वर्तिविद्युद्वर्णपुरुषविषयम् । अतः 'मा नस्तोके' इति मन्त्रस्थरुद्रशब्दोऽप्यवयवशक्त्या अपर्यवसानाद्वा भगवद्विषयः । अतः पञ्चमेऽपि, 'भावाभावकरं शिवम्' इति शिवशब्दो व्याख्यातः । षष्ठे च कालस्यापि परिच्छेदकः काल उक्तः । **भगेशम्**—ऐश्वर्यादिनिर्वाहकत्वस्य निरङ्कुशत्वमेवोक्तम् । 'तमीश्वराणां परमं महेश्वरम्' इति । महेश्वरमिति यौगिकनिर्देशः, न तु रूढार्थपरः ; वाक्यस्यैश्वर्यपारम्यप्रतिपादकत्वात् ; ईश्वराणामिति प्रतिसम्बन्धिनिर्देशाच्च ; देवतानां परमं दैवतम्, पतीनां परमं पतिमित्यनन्तरनिर्देशवत् । तद्धि वाक्यं दैवतत्वपतित्वपारम्यपरम् । तत्र दैवतपतिशब्दौ न क्वचिद्देवताविशेषे रूढौ ; महेश्वरशब्दश्च तत्स्थानीय इति स्फुटम् । 'न तत्समश्च', 'पराऽस्य शक्तिः' इत्यादिभिश्च तत्पारम्योपपादनम् । 'एको देव' इत्यादिवाक्यस्थविशेषणानि च नारायणप्रत्यभिज्ञापकानि ; 'गूढोत्मा न प्रकाशते', 'व्याप्य नारायणः स्थित', 'सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो एको नारायणः' इत्याद्यैकार्थ्यात् । 'न तत्र सूर्यो भाति' इति मन्त्रश्च मुण्डकोपनिषत्कठवल्ल्यधीतत्वात् विष्णोः प्रत्यभिज्ञापकः । 'नान्यः पन्थाः' इति, पुंसूक्तं स्मारयति । ईशादिशब्दानां यौगिकत्वमीशनस्य निरुपाधिकत्वं च दर्शयति, 'य ईशेऽस्य' इति । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह....शरणमहं प्रपद्ये', 'अमृतस्य परं सेतुम्' इति निर्देशाश्च नारायणत्वसाधकाः, य इत्यनुवादरूपत्वात् ; ब्रह्मणो भगवन्नाभिसंभवत्वश्रुतेर्दर्शितत्वात् ; 'निवासः शरणं सुहृद्गतिः नारायणः' इति श्रुतत्वात् ; 'अमृतस्यैष सेतुः' इति मुण्डोपनिषदि श्रुतत्वाच्च । 'यदा चर्मवत्' इति वाक्यमुपायान्तराभावपरम्, 'नान्यः पन्था' इत्युक्तार्थविवरणरूपम् ।

एवमुपक्रमोपसंहारादिभिः भगवत्परत्वावगमादस्य उपनिषदो भगवत्परत्वं सिद्धम् ॥ ननु महापुरुषादिशब्दानां शिवादिशब्दसमभिव्याहृतानां शिवपरत्वं स्यात् ॥ सत्यम् । [1]यद्येकविषयत्वमिष्टं शब्दानाम्, इष्टमेव तत् । ते हि शब्दा एकविषयाः । यदि परमपुरुषेतरविषयत्वम् - न ; साधारणस्यायोग्यार्थस्य च शब्दस्य योग्यार्थासाधारणबहूपनिषत्स्थशब्दोपस्थापितविशेषपर्यवसानं हि युक्तमिति भिदा । न हि छागशब्दः पशुमात्रे पर्यवस्यति । न च परमात्मादिशब्दः प्रसिद्धाकाशे

1. यद्यीति । विभिन्नविषयकत्वमयुक्तमित्याशयश्चेदित्यर्थः ।

पर्यवस्यति। योग्यत्वायोग्यत्ववैषम्यं तु विशदयिष्यतेऽनन्तरमेव । अतः परमपुरुषविषयत्वमुपनिषदः स्थितम् । एवमीश्वरमहेश्वरपुरुषमहापुरुषादिशब्दानां भगवद्विषयत्वात् प्रपदनोपदेशशिरस्कत्वाच्चास्या उपनिषदो **भगवद्गीतैकार्थ्यं** स्फुटतरम् ।

यत्तु कैश्चिज्जल्पितम्; सोपपदनिरुपपदपुरुषशब्दवाच्यात् तथाविधेश्वरशब्दवाच्यस्य प्रकर्ष इति-तदतिक्षुद्रम्; तथा सोपपदनिरुपपदेन्द्रशब्दवाच्यस्यात्यन्तप्रकर्षप्रसङ्गात्। 'इदि परमैश्वर्ये' इति धातोर्हीन्द्रशब्दनिष्पत्तिः। "इन्द्रो महेन्द्रः सुरनायको वा" इति हि प्रसिद्धिः ॥ श्रुत्यादिविरोधे समाख्यादौर्बल्यात् सृज्यतया संहार्यतया चावगतस्येन्द्रस्य सर्वस्मात्परत्वमनुपपन्नमिति चेत्—तुल्यम् । किञ्च जीवविषयपुरुषशब्दो निकृष्टार्थविषय इति परमात्मनः पुरुषशब्दवाच्यत्वं न निकर्षाय भवति । न ह्यात्मशब्दो जीवेऽपि प्रयुक्त इति परमात्मन आत्मशब्दवाच्यतया निकर्षः स्यात्। न हि हरिशब्दो मण्डूकवाचीति हरिशब्दवाच्यतया सिंहस्य मण्डूकसाम्यम्, इन्द्रस्याऽऽदित्यस्य वा तदुभयसाम्यम्, भगवतो वा तैः साम्यं भवतीति ॥

**अथर्वशिखायाञ्च**, "कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये" इति प्रतिपाद्यमानं ध्येयत्वं परमपुरुषासाधारणधर्मान्तराश्रवणात् प्रसिद्धशम्भुविषयम्—इति न शङ्कनीयम्; कारणत्वस्य तदसाधारण्यादेव तद्व्याप्तस्य मुमुक्षुध्येयत्वस्यापि तदसाधारणत्वात्। किञ्चास्य प्रकरणस्य, 'कश्च ध्येयः' इत्युपक्रम्य, 'कारणं तु ध्येयः' इत्यनेन कारणत्वमनूद्य ध्येयत्वविधिपरत्वावगमात् पुरुषसूक्तादिप्रतिपन्नस्यैव परमात्मनो ध्येयत्वविधानपरमिदं वाक्यम्। न च शम्भुः कारणमिति वाक्यवृत्तिः; किन्तु कारणं शम्भुर्ध्येय इति। अन्यथा 'कश्च ध्येयः' इत्यस्योत्तरत्वायोगात्। शम्भुशब्दस्यासाधारण्येऽप्याकाशप्राणादिशब्दवत् परमात्मपरत्वं न्याय्यम्। न चायमसाधारणः, 'शम्भुः स्वयम्भूर्द्रुहिणः' इति नामपाठात्। तथा **नारदीयपुराणे रुक्माङ्गदचरिते** ब्रह्माणं प्रति यमवचने, "शृणु मे वचनं **शम्भो** पितामहपितामह। मरणादधिकं देव यत् प्रतापस्य खण्डनम्" इति, तत्रैव "तमेव देवताश्रेष्ठ संप्राप्ते हरिवासरे। यदि चालयसे धैर्यात् ततोऽहं तव किङ्करः। स मे शत्रुर्महान् **शम्भो** तेन लुप्तः पदो मम" इति द्रुहिणविषयतया प्रयुक्तत्वात्। "विश्वाक्षं विश्व**शम्भुवम्**" इति भगवत्यपि श्रौतप्रयोगाच्च । 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्त' इत्युत्पत्तिवादश्चानुवादरूपत्वात् प्रापकवाक्यानुरोधीति भगवदुत्पत्तिरवताररूपाऽनूद्यते । **भगवता सूत्रकारेणैव** अथर्वशिखावाक्यस्थस्य शम्भुशब्दस्य भगवद्विषयत्वमुत्पत्तेरवताररूपत्वञ्च उपबृंहितम्, "इति नारायणः **शम्भुर्**भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्वान् अजायत यदोः कुले" इति । अवतारवचने शम्भुशब्दस्य नारायणविषयत्वदर्शनात् पूर्ववाक्यप्रतिपन्नस्य भगवज्जन्मनोऽवताररूपत्वं शम्भुशब्दस्य भगवद्विषयत्वं च हि दर्शितम् । **ईशान**शब्दश्च यौगिकः कारणविशेषणम्, 'सर्वस्येशानः' इति श्रुत्यन्तरे सप्रतियोगिकनिर्देशादिहापि तत्प्रत्यभिज्ञानात्; प्रयोगसाधारण्याच्च । मोक्षधर्मे हि, "तस्मात् प्रसूतो यः कर्ता कार्यं कारणमेव च। सोऽनिरुद्धः स **ईशानो** व्यक्तिः सा सर्वकर्मसु" इति भगवति प्रयुज्यते। तत्र भगवद्वचनेन

"नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते मामेकमीशानं पुरुषं लोकजीवनम्" इति च प्रयुक्तः॥

ननु न कारणं विशेष्यम्; किन्तु शम्भुरेव । कारणशब्दस्तु तद्विशेषणम् । अन्यथा 'कारणं तु ध्येयः' इति पुँल्लिङ्गानुपपत्तेः ॥ सत्यं शम्भुशब्दो विशेष्यसमर्पकः, ततः किम् ॥ प्रसिद्धशम्भोर्ध्येयत्वसिद्धिरिति चेन्न—कारणशब्दस्य कार्यशम्भुव्यावर्तकत्वात् । न च कारणत्वादिति हेतुगर्भता कल्प्या; कार्यत्वस्य श्रुतिसिद्धत्वात् । भगवतः, 'प्रसूयन्त' इति उत्पन्नत्वेऽप्यस्य वाक्यस्यानुवादरूपत्वात् अनुवादस्य प्रापकानुरोधित्वादुत्पत्तिप्रापकवाक्येषु चाकर्महेतुकत्वेनातत्फलार्थत्वेन च विलक्षणतया भगवज्जन्मनःस्वेच्छाकृतस्य निरङ्कुशैश्वर्याविरोधित्वात् अजहत्स्वभावतया विचित्रैश्वर्योद्दीपकत्वाच्च परमकारणत्वाप्रच्युतेः । स्वपारतन्त्र्यावहकर्त्रन्तराभावो हि परमकारणत्वम् । 'न चास्य कश्चिज्जनिता न चाधिपः' इति हि श्रुतिः । अवतारवैलक्षण्यं च, 'अजायमानो बहुधा विजायते' इति प्रतिपाद्यते । **अजायमान** इति सांसारिकवज्जन्मनिषेधः न स्वरूपनित्यत्वपरः; नापि जन्ममिथ्यात्वपरः; अस्मदादेरपि स्वरूपनित्यत्वादेरविशिष्टतया, 'तस्य धीराः परिजानन्ति योनिम्' इति वाक्यस्य निरर्थकत्वप्रसङ्गात् । इदञ्च स्पष्टमुच्यते, 'येन सूर्यस्तपति तेजसेद्धः', 'पिता पुत्रेण पितृमान् योनियोनौ', 'नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं संपराये', 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैवात्मा पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेन' इति । **योनियोना**वित्यनेन, 'परिजानन्ति योनिम्' इति श्रुतिः प्रत्यभिज्ञायते । 'येन सूर्यस्तपति' इत्यनेन, 'तस्य भासा सर्वमिदं विभाति' इति मुण्डोपनिषत् । सा हि परमपुरुषपरा । 'नावेदविन्मनुते तं बृहन्तम्' इत्यनेन 'वेदाहमेतम्' इति, "धीराः परिजानन्ति" इति श्रुतिः । पदविदिति **पद**शब्देन "तत्ते पदं सङ्ग्रहेण ब्रवीम्योमिति" 'तद्विष्णोः परमं पदम्' इति कठश्रुतिः । नकर्मणेत्यनेन, "अपहतपाप्मा दिव्यो देव एको नारायणः" इति वाक्यञ्च । अत इदं वाक्यं भगवद्विषयम् । **पुत्रेण**—स्वकार्यभूतेन दशरथादिना पितृमत्त्वं तस्यावेदविदवेद्यत्वं तदवतारस्य अकर्ममूलत्वम् तज्ज्ञानवतां भवभयध्वंसश्च अत्र प्रतिपाद्यते । ईदृशजन्मानुवादश्च ध्यानविध्युपयोगी; इतरसृज्यसजातीयतया अवतीर्णस्योपासकसौलभ्यज्ञापनार्थत्वात् । एवमत्र प्रतिपन्नस्य भगवज्जन्मनः स्वेच्छावताररूपत्वादेव हि यदोः कुले जायमानो नारायणः **शम्भु**शब्देन महाभारते विशेष्यते ॥

नन्वेवं सति ब्रह्मादीनामपि जन्म स्वेच्छावताररूपं किं न स्यात् ॥ न; प्रापकवाक्यानुरोधित्वादनुवादस्य ॥ कुतस्तेषां जन्मनः कर्ममूलत्वावगमः ॥ उत्पत्तिश्रुतेरेव । उत्पत्तिश्चेत्, कर्ममूलेत्यौत्सर्गिकम् । भगवतस्तु अवतारश्रुत्या तदपोदितम् । अपवादाभावेऽप्यकर्ममूलत्वाश्रयणे सति इन्द्रादिजन्मनोऽप्यवतारत्वप्रसङ्गः, ब्रह्मादीनामिन्द्रादीनाञ्च जन्मनि विशेषाश्रवणात्, उत्पत्तिवत् अन्यत्रापि कचिद्भगवत इवाकर्मवश्यत्वाश्रवणाच्च ॥ 'हिरण्मयः पुरुषः', 'एष हि सर्वेभ्यः पाप्मभ्य उदितः' 'अपहतपाप्मा दिव्यो देव एको नारायणः', 'अपहतपाप्मा' 'स उत्तमः पुरुषः' इति हि भगवतोऽकर्मवश्यत्वं श्रूयते ॥ तदैक्याद्ब्रह्मादीनामकर्मवश्यत्वमिति चेन्न—इन्द्रादीनामपि तथात्वप्रसङ्गात् ।

ऐक्ये सति अकर्मवश्यत्वम्, कर्मवश्यत्वरूपभेदकधर्माभावे सति ऐक्यमित्यन्योन्याश्रयश्च । भगवतोऽकर्मवश्यत्वं तु स्वप्रकरणसिद्धमिति नान्योन्याश्रयः । एवमुत्पत्तिप्रापकवाक्यसिद्धं भगवतोऽजायमानस्य जायमानत्वरूपं ब्रह्मादिभ्यो वैलक्षण्यमत्रैवोच्यते, 'न कारणं कारणानाम्' इति न प्रसूयत इति विभक्तिविपरिणामेनानुषङ्गः । कारणानां कारणस्य भगवतो न ब्रह्मादिवदुत्पत्तिरित्यर्थः । 'शिव एको ध्येयः' इत्यत्राप्येकशब्दः प्राधान्यपरः; 'किमेकं दैवतम्' इतिवत् । न ह्येकत्वसङ्ख्याश्रयदेवताप्रश्नः; प्रश्नवैयर्थ्यात् । तस्मात्, शाश्वतं शिवमितिवत् समाभ्यधिकरहित इति शिवो विशेष्यते । तेन प्रसिद्धशिवव्यावृत्तिः । अतोऽथर्वशिखायामपि भगवत एव ध्येयत्वं प्रतिपादितम् ॥

यतो हिरण्यगर्भप्रजापतिधातृस्वयंभ्वादय ईशानशम्भुरुद्रमहादेवमहेश्वरपरमेश्वरादयश्च कारणविषयाः शब्दा अवयवशक्त्या वा अपर्यवसानाद्वा नारायणपरा इति युक्तम्, अत एव हि भगवान् सूत्रकार एव भगवति तान् शब्दान् **महाभारते** प्रायुङ्क्त—यथा, "**हिरण्यगर्भ**श्शत्रुघ्नो व्याप्तो वायुरधोक्षजः' इति । कृष्णं प्रति द्रौपदी, "पूर्वे प्रजानिसर्गे त्वामाहुरेकं **प्रजापतिम्**' इति । मोक्षधर्मे, 'एकस्तद्वेद भगवान् **धाता** नारायणः स्वयम्' इति । आश्वमेधिके 'विष्णुरेवादिसर्गेषु **स्वयम्भूर्**भवति प्रभुः' इति च । स्वयम्भूर्विष्णुरेव चतुर्मुखोत्पत्तेः प्राचीनतत्त्वसृष्टौ प्रभुर्भवति; न चतुर्मुखादिरित्यर्थः । 'सोऽनिरुद्धः स **ईशानो** व्यक्तिः सा सर्वकर्मसु' इति, 'इति नारायणः **शम्भु**र्भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्वान् अजायत यदोः कुले' इति । **रुद्रो** बहुशिरा बभ्रुः', तथा, 'नमश्चकार हृष्टात्मा परमं **परमेश्वरम्** । जगाद जगतां स्रष्टा परमं परधर्मवित्' इत्यारभ्य, 'वासुदेव तदेतत् ते मया गीतं यथायथम्' इति । 'जय विश्व **महादेव** जय लोकहिते रत' इत्यारभ्य 'नारायण सुदुष्पार ! जय शार्ङ्गधनुर्धर' इति । 'भोक्तारं यज्ञतपसां सर्वलोक**महेश्वरम्**', 'यो मामजमनादिं च वेत्ति लोक**महेश्वरम्**' इति च । 'ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्' इत्यारभ्य, "ते कार्तयुगधर्माणो भागाः परमसत्कृताः । प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् । बृहन्तं सर्वगं **देवमीशानं** वरदं प्रभुम् । ततोऽथ वरदो देवस्तान् सर्वान् अमरान् स्थितान् । अशरीरो बभाषे(णे?)दं वाक्यं खस्थो **महेश्वरः**" इति च ॥

**अथर्वशिरसि** च रुद्रस्यैव सर्वात्मभावादय उच्यन्ते; परमपुरुषासाधारणलिङ्गाभावात् । सर्वात्मभावादयस्तु समस्तचिदचिद्व्यावर्तका अपि न तदसाधारणाः । अतो रुद्रस्यैते संभवन्ति । अत एवात्र प्रतर्दनविद्यान्यायोऽपि नावतरति । प्रसिद्धेन्द्रस्य क्षेत्रज्ञस्य चिदचिद्व्यावर्तकधर्मान्वयायोगात् तत्र तच्छरीरकपरमात्मोपासनपरत्वमुक्तम्; न तु परमपुरुषासाधारणधर्मासंभवात् । इन्द्रादीनामपि संहारादिकारणस्य रुद्रस्य चिदचिद्व्यावर्तकधर्मान्वयः संभवतीति स एव प्रतिपाद्यत इति न तच्छरीरकार्थान्तरपरत्वमिति शङ्कायाम्—उच्यते । कारणत्वव्याप्तो यः कश्चिदपि चिदचिद्व्यावर्तकधर्मः परमपुरुषासाधारण इति स्थितत्वात् रुद्रस्य तदसंभवेन तच्छरीरकपरमात्मपरत्वमास्थेयम् । किञ्च रुद्रस्य सृज्यत्वादिश्रवणात् परमकारणत्वाभावश्च दर्शितः संहार्यत्वं च, 'न ब्रह्मा नेशानः" इति । उपबृंहिता

चेयं श्रुतिः **श्रीविष्णुधर्मोत्तरे**, "ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा । जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा । वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति वै" इति । अतः कार्यकोटिनिविष्टस्य सर्वात्मभावायसम्भवात् प्रतर्दनोपासनन्यायेन तच्छरीरकपरमात्मपरतयैव निर्वाहो युक्तः। न चात्र न्यायापेक्षा, परमात्मानुप्रवेशस्य कण्ठोक्तेः । तथा हि ; 'देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च ; नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशत् । दिशश्चान्तरं स प्राविशत् । सोऽहं नित्योऽनित्यो ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणञ्च उदञ्चोऽहमधश्चोर्ध्वं चाहं दिशश्च विदिशश्चाहं पुमानहमपुमान् स्त्री यक्षश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुप्जगत्यनुष्टुप् चाहम् " इत्यादि ; तत्र सर्वात्मभावमनुसन्दधतो रुद्रस्य बुद्धिस्थः परमात्मा **स** इति परामृश्यते । सः (?) अन्नमयादे**रन्तरात्मनो** रुद्रस्य बुद्ध्यहङ्काररूपान्तःकरणवर्गात् **अन्तरं** जीवात्मानं **सः** परमात्मा प्राविशत् । **दिक्**छब्दोपलक्षितबाह्याचेतनाना**मन्तरं** च जीवं **सः** परमात्मा प्राविशदिति तदनुप्रवेशः कण्ठोक्तः ॥ ननु सोऽन्तरादित्यादिकं श्रुतिवाक्यम् , न तु रुद्रवाक्यम्; तस्येतिकरणेन समाप्तत्वादिति ॥ न ; 'सोऽहं नित्योनित्यः' इत्यादीनां रुद्रवाक्यानामनुगतिदर्शनेन रुद्रवाक्यापरिसमाप्तेः । तथा सति, सोऽब्रवीदिति वाक्यान्तराध्याहारप्रसङ्गः । स चानध्याहारे संभवति नोपपद्यते । तदयमर्थः-—देवतात्वेन साजात्येऽपि प्रभावातिशयदर्शनेन सन्देहात् देवा अपृच्छन्, को भवानिति । किमस्मदादिवत् देवतामात्रम् , उत परमकारणभूतः? इति प्रश्नाभिप्रायः । अहमेकः प्रथममासमिति कारणत्वमुक्तम् । 'प्रथममासं वर्त्तामि च भविष्यामि' इति सर्वात्मभाव उक्तः । अन्वयमुखेनोक्तं सर्वात्मभावं व्यतिरेकेणोपपादयति—**नान्य** इति । **इति**र्हेतौ । मद्व्यतिरिक्ताभावादित्यर्थः । अयं सर्वात्मभावव्यपदेशः किं परमात्मत्वात्, उत परमात्मात्मकत्वादिति शङ्कायां परमात्मानुप्रवेशनिबन्धन इत्याह-**सोऽन्तरा**दिति । स्वस्मिन् परमात्मानुप्रवेशस्य दृष्टान्ताभिप्रायेणेदमुक्तं **दिशश्चान्तर**मिति । यद्वा 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्युक्ते सर्वात्मव्यपदेशःकीदृश इत्याशङ्कायामाह-**इती**ति । **इतिः** प्रकारे, इत्थमित्यर्थः । विवक्षितं सर्वात्मत्वप्रकारमाह—**सोऽन्तरा**दिति । यद्वा इतिशब्दस्योत्तरत्रान्वयः, दिशश्चान्तरं स प्राविशदितीति । यस्मात् परमात्मा प्राविशत् , तस्मादस्मच्छरीरकपरमात्मनोऽन्यन्नास्तीत्यर्थः । अध्याहारादपि श्रुतपदस्यान्वयविशेषकल्पनं न्याय्यम् । अस्तु वा अय**मिति**शब्दः समाप्त्यर्थः । उत्तरत्र च सोऽब्रवीदित्यध्याहारःसह्यताम् । तदानीमप्ययमर्थः— सः रुद्रः देहेन्द्रियादेरन्तरात्—जीवादन्तरं परमात्मानं बुद्ध्या प्राविशदिति । यथा "यस्य यस्य हि यो भावः तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्" इति । एवं "मामुपास्स्व", "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च", "सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने । अहमेवाव्ययो नित्यः परमात्मेत्यचिन्तयत " इतीन्द्रवामदेवप्रह्लादादीनामिव स्वान्तर्यामिपरमात्मबुद्ध्या रुद्रस्य सर्वात्मभावोपदेश इत्युक्तं भवति । तथा ह्युपबृंहितवान् **सूत्रकारस्त्रिपुर**-

**विजये,** "विष्णुरात्मा भगवतो भवस्यामिततेजसः", **ब्रह्मरुद्रसंवादे,** "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित क्वचित्" इति च । **सोऽहमित्यादिना** सर्वात्मभावप्रपञ्चनम् । द्वितीयखण्डो रुद्रवाक्यानुवादेन स्तुतिपरत्वात् तदन्तर्यामिपरमात्मविषयः । **यो वै रुद्रः स भगवान्** इति, यो रुद्रान्तर्यामी स वासुदेव इत्यर्थः; भगवच्छब्दस्य वासुदेवासाधारणत्वात्। तच्च दर्शितम् । **यो वै रुद्रः स भगवान् यश्च विष्णुः** इति अन्तर्यामिण एव अवताररूपविशिष्टत्वमुक्तम् ! तृतीये तु परमात्मनो वैभवम्। तद्वाचकस्य ओङ्कारस्य नामधेयानि चतुर्थे ॥ तन्निर्वचनं पञ्चमे ॥षष्ठे तु 'तदेतदुपासितव्यं निचाय्य तं शान्तिमेति' इति रुद्रशरीरकपरमात्मोपासनं साङ्गमुक्तम्। **व्रतमेतत्पाशुपतम्** इति । पशुपतिरूपपरमात्मोपासनाङ्गतया पशुपतिसंबद्धं **पाशुपतम्** ; न तु पाशुपतागमप्रतिपाद्यम् , तद्धितद्वयकल्पकाभावात् । समन्त्रकभसितस्पर्शनं तु प्रकरणगृहीतत्वान्न सर्वत्र प्राप्नोति , दर्शपूर्णमासप्रकरणगृहीतप्रयाजवत् सौत्रामणीप्रकरणगृहीतसुराग्रहवच्च । तस्मादथर्वशिरसि रुद्रान्तरात्मा नारायण एव प्रतिपाद्यः , यथा प्रतर्दनविद्यायामिन्द्रान्तर्यामी । 'इन्द्रो मायाभिः पुरुरूप ईयते', 'मामुपास्स्व' 'इन्द्रं निचिक्युः परमे व्योमन्' इति कारणत्वोपास्यत्वप्राप्यत्वानीन्द्रविषयाणि यथा प्रसिद्धेन्द्रव्यतिरिक्तविषयाणि व्याख्यातानि—तथैवान्यत्रापि रुद्रविषयाणि कारणत्वादिपराणि वाक्यानि नेतव्यानि । "स ब्रह्मा स शिवः सेन्द्रः" इति तस्येन्द्रतुल्यतया भगवद्विभूतित्वात् ॥

ननु 'हिरण्यगर्भः समवर्तताग्रे' 'एको ह वै नारायण आसीत्', 'न सन्न चासच्छिव एव केवलः' इति, 'विराजोऽधिपूरुषः', 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः', ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति त्रयाणामपि कारणत्वे कार्यत्वे चाविशेषश्रुते नारायणादिशब्दानां रूढिमाश्रित्य हिरण्यगर्भादिशब्दानां प्रसिद्धार्थत्यागे को हेतुः ॥ 'आकाशादेव समुत्पद्यन्ते', 'प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते', 'इन्द्रो मायाभिः पुरुरूप ईयते',—'आत्मन आकाशः सम्भूतः', 'एतस्माज्जायते प्राणः', 'इन्द्रो वरुणः' इत्याकाशप्राणेन्द्रादीनां च कार्यत्वकारणत्वश्रवणाविशेषेऽप्याकाशादिशब्दानां रूढित्यागे को हेतुः?॥ कार्यतयाऽवगतानां परमकारणत्वायोग्यत्वमिति चेत् . तुल्यम् ॥ ननु न कारणविषययोर्हिरण्यगर्भरुद्रशब्दयोः प्रसिद्धार्थायोग्यता । कार्यत्वे सति ह्ययोग्यत्वम् । कारणविषयरुद्रादिशब्दाः प्रसिद्धपरा एव । कार्यविषयास्तु प्रसिद्धेतरविषयाः स्युः ॥ न ; कारणविषयाणां रुद्रादिशब्दानां प्रसिद्धार्थपरत्वे सति एककारणत्वानुपपत्तेः । तदनुपपत्तिश्च रुद्रादिशब्दानामेकव्यक्तिविषयत्वेन व्युत्पत्त्यभावात । कारणैकत्वञ्चावर्जनीयम् । अन्यथा अद्वितीयत्व-प्रतिज्ञा-दृष्टान्त-समाभ्यधिकनिषेधाद्यनुपपत्तेः । अतः कारणविषयाणां रूढित्यागे प्राप्ते सति अयोग्यार्थानामेव रूढिरनादरणीया; न तु योग्यस्वार्थानामपि ।

इत्थं हिरण्यगर्भादिशब्दानां प्रसिद्धार्थायोग्यत्वं नारायणादिशब्दानां योग्यार्थत्वं च दर्शितम् । अतोऽन्यत्रापि रुद्रहिरण्यगर्भादिविषयाणि वाक्यान्येवमुन्नेयानि । एवं दिङ्मात्रं दर्शितम् । अनन्ताः कारणपरवाक्यविशेषा एवं व्याख्येयाः ।

व्याख्याताः इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ २९ ॥ इति सर्वव्याख्यानाधिकरणम् ॥ ८ ॥
इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ॥ १.४ ॥
इति प्रथमोऽध्यायः । श्रीमते रामानुजाय नमः श्रीरस्तु ॥

---

यतोऽनुवादरूपतया, साधारणतया, योग्येतरार्थतया, योग्यार्थप्रत्यभिज्ञापकधर्मपरतया च प्रापकासाधारणयोग्यार्थतद्धर्मप्रत्यभिज्ञाप्यवस्तुविशेषविषयवाक्यसाकाङ्क्षाः सर्वे वाक्यविशेषाः तत्तधिकरणन्यायानुगृहीताः नारायणपराः, अत एव ह्युक्तं **भगवता व्यासेन सूत्रकारेण**, 'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ' इति । **हेतुभिः**—समन्वयलक्षणोक्तन्यायैः । **सर्वतोमुखैः**—तत्तन्मुखभेदभिन्नैरित्यर्थः । तथा सर्वविद्योपास्यश्च स एवेत्युक्तम् , 'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ' इति । **आलोड्य**ेत्यनेन प्रमाणपर्यालोचनमुक्तम् । **विचार्य**ेत्यनेन शास्त्रतः परीक्षणमुक्तम् । **सुनिष्पन्नम्**-बाह्यकुदृष्ट्यविचाल्यं निश्चितमित्यर्थः ।

तस्मादयोगान्ययोगव्यवच्छेदेन नारायणस्य कारणत्वं पादचतुष्टयेन प्रतिपादितमिति सिद्धम् ॥

**व्याख्याताव्याख्याता** इत्युक्ते व्याख्यातशब्दस्य अव्याख्यातशब्दस्य च समासेनैकपद्ये सति सर्ववाक्यविशेषाणां व्याख्यातत्वमुक्तं न स्यादिति तद्व्युदासार्थमसमस्ततया पृथक्पदत्वं ज्ञापयन् अभ्यासस्य प्रयोजनमाह **व्याख्याता इती**ति । नन्वभ्यासस्य कथं समाप्तिद्योतकत्वम् ॥ श्रुतिसमाधेरिति ब्रूमः । श्रुतिषु हि कर्मभागे ज्योतिष्टोमदर्शपूर्णमासादिविषयतत्तत्प्रकरणावसानेषु नाभ्यासो दृश्यते । वेदान्तेषु दृश्यते, यथा, ' न च पुनरावर्तते न च पुनरावर्तते ', ' नावर्तन्ते नावर्तन्ते ', ' अमृतः समभवदमृतः समभवत्', 'इति वेदानुशासनमिति वेदानुशासनम् ', 'तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमाप्नोति ' इति च (?) । अत्रायमभिप्रायः—कस्यचित्पुरुषस्य पुरुषार्थतदुपायप्रतिपादनं हि शास्त्रकृत्यम् । ज्योतिष्टोमादिज्ञानमात्रेण पुरुषार्थतदुपायज्ञानं वस्तुतो न परिसमाप्तम् ; अपवर्गतत्साधनयोरविदितत्वात् । अमृतत्वतदुपायविशेषज्ञाने सति हि ज्ञातव्यज्ञानं समाप्तं भवति ; तदधिकपुरुषार्थान्तरतदुपाययोरभावेनाज्ञातव्यत्वात् । अपवर्गोपायभूतविद्यान्तरेषु सत्स्वपि, एकेनैव विद्याविशेषेण पुरुषार्थसिद्धेर्विद्यान्तरस्य कृतकरत्वादनपेक्षितत्वेन ज्ञातव्यत्वनियमाभावात् । अतः पुरुषार्थसिद्ध्यर्थं ज्ञातव्यार्थस्य समाप्तिसूचको वेदान्तभागेषु तत्तत्प्रकरणावसानस्थोऽभ्यास इत्यवगम्यते । अत एव कर्मविचारलक्षणावसानेष्वनभ्यासः शारीरकलक्षणावसानेष्वभ्यासश्चेत्यवगम्यते । तत्राध्यायावसानशास्त्रावसानवैषम्यद्योतनार्थमाद्याध्यायत्रयावसानेषु पदाभ्यासः, शास्त्रावसाने सूत्राभ्यासश्च कृतः ॥

**यादवमिश्र**पक्षस्थास्त्वेवमाहुः—नाध्यायपरिसमाप्तिद्योतकत्वमभ्यासस्य युक्तम् , अर्थसमाप्तेरेवाध्यायपरिसमाप्त्यवगमात् सूचनस्य विफलत्वात । अतोऽध्यायावसानसूचकोऽप्यभ्यासोऽर्थापरिसमाप्तिद्योतकः, अध्यायशेषार्थविचारश्च द्वाभ्यां पादाभ्यां वर्तिष्यते—इति । नैतद्युक्तम् ; काष्ठैः स्थाल्यामित्येतावता वाक्यार्थापरिसमाप्तावपि वाक्यपरिसमाप्तेरिव अध्यायार्थापरिसमाप्तावध्यायपरिसमाप्तेरनुपपन्नत्वात् । कर्मभीमांसायामिवाध्यायानां पादचतुष्टयात्मकत्वनियममतिलङ्घ्य प्रथमाध्यायस्य पादषट्कात्मकत्वेन निबन्ध-

नीयत्वप्रसङ्गाच्च । किं प्रथमाध्यायार्थस्यैवापरिसमाप्तिद्योतक इत्युच्यते ? उत वृत्तवर्तिष्यमाणयोः परस्पर-साकाङ्क्षत्वद्योतकः इति । प्रथमे दूषणद्वयं दत्तम् । द्वितीये त्वभ्यासवैयर्थ्यमेव ; द्वितीयाध्याय-निवन्धनादर्थस्वभावाच्च परस्परसाकाङ्क्षत्वसिद्धेः ॥ शास्त्रान्ते सूत्राभ्यासश्चानुक्तनिखिलन्यायास्तित्वसूचक इति चायुक्तम् ; अर्थापरिसमाप्तौ शास्त्रपरिसमाप्तेः काष्ठैः स्थाल्यामिति वाक्यसमाप्तिवदनुपपन्नत्वात् । अध्यायान्तरनिबन्धने चिरं जीवतः सूत्रकारस्याशक्त्यभावाच्च । अखिलन्यायजातमसंभवविध्वस्तञ्च ; अदर्शनात ॥ साङ्ख्यादिषु शास्त्रेषु दृश्यत इति चेन्न, तत्राविरुद्धांशस्योपादेयतायाः विरुद्धांशस्य त्याज्य-तायाश्चास्मिन्नेव शास्त्रे निर्णीतत्वात् । सुगतागमादीनां कार्त्स्न्येन त्याज्यतानिर्णयात् तदुक्तन्यायानामखिल-न्यायत्वेनास्तित्वद्योतने हानोपादानरूपोभयविधप्रयोजनाभावात् । इतिहासपुराणादीनां वेदान्तोपबृंहणतया जगत्कारणवस्तुविषयाणां मन्वादिधर्मशास्त्राणां [च?] जैमिनीयन्यायैरिव शारीरकन्यायैरेवानुगृहीतार्थत्वाच्च ॥

किं तर्ह्यभ्यासस्य फलम्?। अर्थपरिसमाप्तिर्हि सर्वे व्याख्याता इत्यनेनैवावगता ; उक्तन्यायाविषय-वाक्याभावात् ॥ नैवम् ; 'एतेन योगः प्रत्युक्तः' 'एतेन शिष्टापरिग्रहाः' इतिवदेतच्छब्दस्या-नन्तरपूर्वोक्तार्थपरामर्शकत्वे प्रकृत्यधिकरणोक्तन्यायपरामर्शितया निमित्तोपादानभेदपरवाक्यविशेषा व्या-ख्याता इत्युक्तं स्यात् । ततश्च **सर्वे व्याख्याता** इत्यनेनाप्यध्यायसमाप्त्यवगमो न स्यात् । अतः पदा-भ्यासेन अध्यायसमाप्त्यवगमे सत्येव **एत**च्छब्दस्य पादचतुष्टयोक्तन्यायपरामर्शित्वावगम इत्यध्यायपरि-समाप्तिद्योतनमभ्यासफलम् ॥ शास्त्रावसाने प्रकृतपरामर्शिपदाभावात् तदसङ्कोचेन, अवसानसूचनफलकाभ्या-सोऽनुपपन्न इति चेन्न ; शास्त्रावसाने तु सर्वे व्याख्याता इतीदृशनिर्देशाभावात् शास्त्रपरिसमाप्तेरभ्यासेनैव ज्ञाप्यत्वात् । पादावसानेषु पादार्थपरिसमाप्तावप्यनभ्यासः पादार्थस्याल्पतया ज्ञातव्यान्तरबाहुल्येन कृतां-शसन्तोषाभावात् । अतोऽध्यायार्थपरिसमाप्तिद्योतनमेवाभ्यासप्रयोजनम् ।

न केवलमभ्यासप्रयोजनमेवानुपपन्नम् ; तैः कृता सूत्रयोजनाऽप्यनुपपन्ना । "प्रकृतेर्ब्रह्मत्वसमर्थनेन सर्वे महदादयोऽपि ब्रह्मत्वेन व्याख्याता" इति हि तद्योजना । प्रकृतिश्चेति सूत्रे प्रकृतिशब्द उपादानपरः, न त्वव्यक्तपर इति समर्थनेन सा व्युदस्ता भवति । किञ्च प्रकृतेर्ब्रह्मानन्यत्वेन ब्रह्मण उपादानत्वे प्रति-पादिते महदादीनां ब्रह्मत्वं न पृथक् समर्थनीयम् ; तेषां प्रकृतिकार्यतया तद्द्रव्यानन्यत्वात् ॥ कार्य-कारणयोरनन्यत्वं समर्थनीयमिति चेन्न ; तस्यारम्भणाधिकरणकृत्यत्वात् । 'महतः परमव्यक्तम्' इत्यादि-वाक्यानां च महदादितत्त्वप्रतिपादकत्वं चतुर्थाद्यविरुद्धम् । न च चतुर्थाद्ये वैभववादः, इह त्वर्थतत्त्वो-क्तिरिति कल्प्यम् ; अस्य सूत्रस्य गत्यन्तरसंभवेन कल्पकाभावात् । महदादितत्त्वप्रतिपादनपरत्वे 'पुरुषान्न परं किञ्चित्' इति वाक्यस्य प्रकृतिपुरुषातिरिक्तेश्वरनिषेधकत्वप्रसंगाच्च ॥

**एतेन**—प्रधानकारणनिरासेन **सर्वे**—परमाण्वादिकारणवादाः हेयतया व्याख्याता इति **भास्करः** । तदप्ययुक्तम् ; तत्स्वरूपप्रतिक्षेपस्य तर्कपादकृत्यत्वात् पूर्वमकृतत्वाच्च । तेषां श्रुतिसिद्धत्वं प्रतिक्षेप्यमिति चेत्—उदाहृतवाक्यानामतत्परत्वं तन्निरूपणादेव सिद्धमिति न पृथग्वक्तव्यम् ॥ अनुदा-हृतवाक्यानामतत्परत्वं विवक्षितं चेत्—तर्हि तेषां प्रधानकारणताप्रतिपादकत्वं च प्रतिक्षेप्यम् । तदानी-

मयमर्थः—अनुदाहृतवाक्येष्वपि प्रधानपरमाणुकारणवादादयो निरस्ता इति। तदानीमेतेनेतिपदस्य प्रधानकारणवादनिराकारणेनेति व्याख्यानमयुक्तम्, परब्रह्मपरत्वसमर्थनेनेति वक्तव्यम्। तस्माद्भाष्योक्तयोजनैव सामञ्जस्यवती ॥

पादचतुष्टयविभागमेवं वर्णयन्ति **केचिदाचार्याः**—प्रथमे पादे परमकारणभूतचिदचिद्विलक्षणपुरुषविशेषनिर्णयः, द्वितीये जगच्छरीरकत्वम्, तृतीये सर्वात्मकत्वप्रकारः, चतुर्थे तु अतत्कार्यातच्छरीरातदात्मकवस्त्वसंभवः प्रतिपाद्यत इति। तेषु द्वितीयाद्येन सर्वजगच्छरीरकत्वम्, 'सर्वं खल्विदं ब्रह्म' इत्यत्र दर्शितम्। तत्र च न सौभरिवत् ज्ञानाधिष्ठितशरीरकत्वम्, किन्तु स्वरूपेण सर्वशरीरेषु गुहाप्रविष्टस्य तच्छरीरकत्वमित्युक्तं द्वितीये। न केवलमिन्द्रियाश्रयशरीराणामेव (वेति ?), इन्द्रियाणामपि तच्छरीरत्वमुक्तं तृतीये। चतुर्थे तु न केवलमिन्द्रियाणाम्, किन्तु सर्वतत्त्वानामपि तच्छरीरकत्वं प्रत्येकमुक्तम्। पञ्चमे तु समुदायरूपेण च शरीरत्वमुक्तम् 'रूपोपन्यासात्' इति। तस्य मुमुक्षूपास्यत्वं प्रपञ्चितं षष्ठ इति द्वितीयपादार्थः। तृतीये तु—'स्थित्यदनाभ्याञ्च' इति सर्वहेयास्पृष्टत्वमुक्तमाद्ये। न तावन्मात्रम्; निरतिशयानन्द उक्तो द्वितीये, 'यो वै भूमा तत्सुखम्' इति। न मुक्तस्येवानन्दमात्रम, किन्तु प्रशासितृत्वमुक्तं तृतीये। भयानकत्वमात्रव्यावृत्त्यर्थं मुक्तप्राप्यत्वं चतुर्थे। प्राप्यस्यैव निरतिशयभोग्यं गुणाष्टकमुक्तं पञ्चमे। तस्य मातृवदविजुगुप्सनम्, पितृवत् शिक्षकतयाऽभयहेतुत्वमुक्तं षष्ठे। त्रितयं प्रासङ्गिकम्। सुषुप्त्यादिसर्वावस्थास्वप्रहाणमुक्तं चरमे। एवमात्मत्वप्रकारः तृतीयपादार्थः। शरीरगतदोषास्पृष्टतया स्वासाधारणरूपान्यथाभावाभावेन च स्थितस्य सर्वावस्थासु शरीरधारकस्य ह्यात्मत्वम्। 'तमेवैकं जानथाऽऽत्मानम्' इति हि आद्याधिकरणविषयवाक्यम्। चतुर्थपादे त्वतदधीनत्वं जगत आद्ये व्युदस्तम्; अतत्कार्यत्वं द्वितीये; अतदात्मकत्वं तृतीये—'तमेवमन्य आत्मानम्' इति हि वाक्यम्; असदव्याकृतादिना येन केनापि शब्देन प्रतिपन्नस्यापि वस्तुनोऽतदात्मकत्वं चतुर्थे; विशेषतश्चेतनस्यातदात्मकत्वं पञ्चमषष्ठयोः। सेश्वरसाङ्ख्योक्तमतदात्मकत्वं व्युदस्तं सप्तमे। समर्थितस्यार्थस्य सार्वत्रिकत्वमुक्तमष्टमे। एवं जगतः तदधीनत्वतत्कार्यत्वादिप्रतिपादनमुखेन अतादधीन्यातत्कार्यत्वादिव्युदसनात् ब्रह्मैककारणत्वं स्थिरीकृतं चतुर्थपादेनेति। अयं च विभागः सम्प्रदायसिद्धत्वादुपपन्नश्चानुसन्धेयः॥

॥ इति सर्वव्याख्यानाधिकरणम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन
श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां
प्रथमस्याध्यायस्य चतुर्थः पादः ॥
इति प्रथमोऽध्यायः ॥
प्रथमाध्याये-समुदिताधिकरणसंख्या-३५-समुदितसूत्रसंख्या-१३८ ॥

———

॥ श्रीमते रामानुजाय नमः ॥

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## द्वितीयाध्याये प्रथमः पादः ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २-१-१ ॥**

प्रथमेऽध्याये प्रत्यक्षादिप्रमाणगोचरादचेतनात् तत्संसृष्टात् तद्वियुक्ताच्च चेतनादर्थान्तरभूतं निरस्तनिखिलाविद्याद्यपुरुषार्थगन्धमनन्तज्ञानानन्दैकतानमपरिमितोदारगुणसागरं निखिलजगदेककारणं सर्वान्तरात्मभूतं परं ब्रह्म वेदान्तवेद्यमित्युक्तम् ॥ अनन्तरमस्यार्थस्य संभावनीयसमस्तप्रकारदुर्धर्षणत्वप्रतिपादनाय द्वितीयोऽध्याय आरभ्यते ।

प्रथमं तावत् कपिलस्मृतिविरोधात् वेदान्तानामतत्परत्वमाशङ्क्य तन्निराक्रियते ॥ कथं स्मृतिविरोधाच्छ्रुतेरन्यपरत्वम् ? । उक्तं हि "विरोधे त्वनपेक्ष्यं स्यात्" इति श्रुतिविरुद्धायाः

---

### श्रीसुदर्शनसूरि विरचिता श्रुतप्रकाशिका

॥ **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** ॥ प्रथमद्वितीयाध्याययोः सङ्गतिज्ञापनार्थं प्रथमाध्यायपादचतुष्टयार्थस्य सङ्ग्रहेण ज्ञापनार्थं च प्रथमाध्यायार्थं सङ्ग्रहेणाह **प्रथमेऽध्याय** इत्यादिना । **प्रत्यक्षादिप्रमाणगोचरा**दित्यनेनेक्षत्यानन्दमयाधिकरणयोः पौर्वापर्यहेतुर्विवक्षितः । **आदिशब्दो**ऽनुमानपरः । प्रत्यक्षपृथिव्यादीनामनुरूपं कारणं ह्यनुमीयते । तस्मादचेतनस्य प्रथमं बुद्धिस्थतया तन्निरास इत्यर्थः । अर्थान्तरत्वमुपपादयति **निरस्ते**ति । मुक्तव्यावृत्त्यर्थं **निरस्तनिखिलाविद्याद्यपुरुषार्थगन्ध**मित्युक्तम् । धर्मिस्वरूपमाह **अनन्ते**ति । **सागरशब्देन** समूहो विवक्षितः । अपरिमितः उदारगुणसागरो यस्येति बहुव्रीहिः । **निखिलजगदेककारणम्**—आकाशादेरपि कारणम् , निमित्तोपादानरूपोभयविधकारणं चेत्यर्थः । जगत्कारणत्वे पूर्वोक्तहेयप्रत्यनीकत्वानुपपत्तिमाशङ्क्याह **सर्वान्तरात्मभूत**मिति । एवं प्रथमाध्यायार्थमुक्त्वा द्वितीयाध्यायार्थमाह **अनन्तर**मिति । प्रसक्तविरोधो हि परिहार्यः । अतो विरोधप्रसङ्गमाह— **संभावनीये**ति । **समस्तप्रकार**शब्देन पादचतुष्टयेऽपि ये विरोधावतरणमुखभेदाः, ते विवक्षिताः । प्रथमेऽध्यायेऽयोगान्ययोगव्यवच्छेदमुखेन वेदान्तवाक्यानां ब्रह्मैककारणतापरत्वं वाक्यतात्पर्यपर्यालोचनया समर्थितम् । अथ द्वितीयेऽध्याये बाह्यतर्कविरोधपरिहार उच्यत इत्यर्थः । पादार्थो द्वितीयपादसङ्गत्यर्थं वक्ष्यते ; तस्मात् प्रथमाधिकरणकृत्यमाह **प्रथमं ताव**दिति । प्रथमाध्यायनिरूपितं कारणत्वं विषयः । कपिलमन्वादिस्मृतिविप्रतिपत्तेः संशयः । अत्रैवं विचारः—किं ब्रह्मणो जगत्कारणत्वं चालयितुं शक्यते, न वेति । तदर्थं किं वेदान्तवाक्यानि ब्रह्मकारणत्वपराणि, उतान्यपराणीति । तदर्थं साङ्ख्यस्मृतिविरोधो वेदान्तवाक्यानामतत्परत्वमापादयति, नेति । तदर्थं साङ्ख्यस्मृत्या वेदान्तोपबृंहणं कार्यम् , उत मन्वादिस्मृत्येति । तदर्थं साङ्ख्यस्मृतिः किं भ्रान्तिमूला, उत नेति । यदा न भ्रान्तिमूला, तदा तया वेदान्तानामुपबृंहणीयत्वेन तद्विरोधात् तेषामन्यपरत्वात् ब्रह्मकारणत्वं चालयितुं शक्यमिति । यदा भ्रान्तिमूला, तदा तया तेषामनुपबृंहणीयत्वात् तद्विरोधे तेषामन्यपरत्वाभावात् ब्रह्मकारणत्वमविचाल्यमिति ।

अधिकरणारम्भमाक्षिपति **कथ**मिति । **कथंशब्दः** क्षेपे । हेतुमाह **उक्त**मिति । **हिर्हेतौ** ।

**स्मृतेरनादरणीयत्वम् ॥ सत्यम् ; "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इत्यादिषु स्वत एवार्थनिश्चयसंभवात् तद्विरुद्धा स्मृतिरनादरणीयैव ; इह तु वेदान्तवेद्यतत्त्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे सति अयमर्थ इति निश्चयायोगात् स्मृत्या श्रुतेरतत्परत्वोपपादनमविरुद्धम् । एतदुक्तं भवति—प्राचीनभागोदितनिखिलाभ्युदयसाधनभूताग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छता, श्रुतिस्मृतीतिहासपुराणेषु "ऋषिं प्रसूतं कपिलम्" इत्यादिवाक्यैराप्तत्वेन सङ्कीर्तितेन परमर्षिणा कपिलेन परमनिःश्रेयसतत्साधनावबोधित्वेनोपनिबद्धस्मृत्युपबृंहणेन विना अल्पश्रुतैर्मन्दमतिभिर्वेदान्तार्थनिश्चयायोगात् यथाश्रुतार्थग्रहणे चाऽऽप्तप्रणीतायाः साङ्ख्यस्मृतेः सकलाया एवानवकाशप्रसङ्गाच्च स्मृतिप्रसिद्ध एवार्थो वेदान्तवेद्य इति बलादभ्युपगमनीयमिति ।**

**न च वाच्यं मन्वादिस्मृतीनां ब्रह्मैककारणत्ववादिनीनामेवं सति अनवकाशत्वदोषप्रसङ्ग इति; धर्मप्रतिपादनपरप्राचीनभागोपबृंहण एव सावकाशत्वात् । अस्यास्तु कृत्स्नायाः तत्त्वप्रतिपादन-**

---

"विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" इति सूत्रम् । प्रत्यक्षश्रुतिविरुद्धं स्मृतिवचनमन**पेक्ष्यम्**—अनादरणीयम् । 'स्मृतेरपि श्रुतिमूलत्वानुमानादादरणीयत्वमित्यत्राह **असति ह्यनुमान**मिति । असति प्रत्यक्षश्रुतिविरोधे हि स्मृतिमूलश्रुत्यनुमानमित्यर्थः । तदेतदभिप्रेत्याह-**उक्तं ही**ति । परिहरति **सत्य**मिति । **सत्यम्**—तत्र श्रुतिविरोधात्स्मृतेरनादरणीयत्वमुक्तमेव, अत्र तु विशेषोऽस्तीत्यर्थः । **औदुम्बरी**मित्यादि । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिः, "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः । अत्रायं विवक्षितो भेदः—औदुम्बरीमित्यादिषु प्रत्यक्षश्रुतेरर्थो न नानाशिरस्कः, अपि तु एकरूप एव प्रतीयते । अतस्तत्र प्रत्यक्षश्रुतेरव्याकुलत्वेन स्मृतिन्यायनिरपेक्षं स्वत एवार्थो निश्चेतुं शक्यते । तत्र विरुद्धार्था स्मृतिरुपेक्ष्या । वेदान्तवाक्येषु नानाशिरस्कतयाऽर्थः प्रतीयते । अतो व्याकुलत्वाद्वेदान्तवाक्यानामर्थः स्मृतिन्यायनिरपेक्षं स्वतो निश्चेतुं न शक्यते । श्रुतेरयमर्थ इति निश्चिते सति हि तद्विरोधात् स्मृतेरनादरणीयत्वम् । स च स्वतो दुर्निश्चय इति तदर्थं स्मृत्यपेक्षा ॥ प्रथमाध्यायोक्ततर्कैरर्थो निश्चित इति चेन्न ; वचनविरोधे न्यायस्य दुर्बलत्वात् । अतः स्मृत्यैवार्थे निश्चिते तद्विरुद्धस्तर्क आभासः स्यात् । अतः स्मृतिवचनविरुद्धन्यायेन श्रुत्यर्थो न निर्णेतव्यः, स्मृतिवचनेनैव तु निर्णेतव्य इति । इममर्थमभिप्रेत्याह-**स्वत एवार्थनिश्चयसंभवाद्वेदान्तवेद्यतत्त्वस्य दुरवबोधत्वेने**ति । कपिलस्य परमर्षित्वे किं प्रमाणम् ? तथा सत्यपि तादृशबृहस्पत्याद्युक्त**लोकायता**दिवत् अनादरणीयम् । श्रुतेः स्मृत्यपेक्षा च नास्ति, न्यायेनैव निरपेक्षत्वादित्यत्राह **एतदुक्त**मिति । **ज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छते**त्यन्तेन लोकायतव्यावृत्तिरुक्ता । **"ऋषिं प्रसूतं कपिलम्"** इति तस्याऽऽप्तत्वे प्रमाणमुक्तम् । **परमनिःश्रेयसे**त्यादिना अनन्यपरत्वमुक्तम् । **स्मृत्युपबृंहणेन**—स्मृति**रूपोपबृंहणेन** । **अल्पश्रुतैर्मन्दमतिभि**रित्यनेन स्मृतिसापेक्षत्वमुक्तम् । अनन्तशाखानुगतस्य वाक्यार्थस्यैकदेशज्ञैर्दुरवबोधत्वादिति भावः । अन्यथाऽनिष्टमाह **यथाश्रुतेति** । **सकलाया** इति सूचितमर्थं शङ्कोत्तरमुखेन विवृणोति **नचे**ति । न हि मन्वादिस्मृतेः कर्मपरत्वात् साकल्येनानवकाशत्वम् । साङ्ख्यस्मृतेर्निरवकाशत्वं [1]न सह्यम् , आप्ततमत्वेन श्रुतिगतत्वादनन्तशाखानुगतवाक्यार्थस्य दुर्बोधत्वेना-

---

1 नेति । अनवकाशत्वरूपदोषो न सह्य इत्यर्थः ।

परत्वात् तथानभ्युपगमे निरवकाशत्वमेव स्यात् । तदिदमाशङ्कते—स्मृत्यनवकाशदोषप्रसङ्ग इति चेदिति ॥

तत्रोत्तरम्—नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति । अन्या हि मन्वादिस्मृतयो ब्रह्मैककारणतां वदन्ति । यथाह मनुः, "आसीदिदं तमोभूतम्" इत्यारभ्य "ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः" सोऽभिध्याय शरीरात् स्वात्

---

पेक्षितत्वाच्चेति ग्रन्थाभिप्रायः । पूर्वपक्षस्यानुत्सूत्रत्वमाह **तदिदमिति** ।

परिहारखण्डमवतारयति **तत्रोत्तरमिति** । काः पुनरन्याः स्मृतयः, कथं तासामनवकाशत्वमित्यत्राह **अन्या हीति** । स्मृतिवचनं दर्शयति **यथाह मनुरिति** । प्रलयावस्थाज्ञापनार्थमाह **आसीदिदं तमोभूतमित्यारभ्येति** । भाष्ये—**'ततः स्वयम्भूः' 'सोऽभिध्याय'** इति श्लोकद्वयमुपात्तम् । तयोरर्थवैशद्याय, आसीदिदमित्यारभ्य—

सप्तश्लोकी व्याख्यायते । त इमे श्लोकाः—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥ योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ ॥ सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ आपो नारा इति प्रोक्ताः आपो वै नरसूनवः । ता यदस्यायनं पुंसस्तेन नारायणः स्मृतः ॥ यत्तत् कारणमव्यक्तं नित्यं सदात्मकम् । तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते" इति । 'धर्मान्नो वक्तुमर्हसि' इति मुनिभिः पृष्टो भगवान् मनुर्धर्मान् विवक्षन् भगवदाराधनरूपस्य वर्णाश्रमधर्मस्याऽऽराध्यज्ञानसापेक्षत्वात् प्रथममाराध्यस्वरूपमाह आसीदिदमित्यादिभिः श्लोकैः । तत्र परमकारणभूतस्यैव सर्वतादात्म्यसंभवादग्नीन्द्रादिसर्वदेवतातादात्म्योपपत्त्यर्थम्, 'यतो वा इमानि' इत्याद्यनुसारेण लक्षणं च विवक्षन् भगवतः परमकारणत्वं वक्तुं वेदान्तेषु सृष्टेः प्रलयपूर्वकत्वेन प्रतिपादितत्वात् प्रथमं प्रलयदशामाह **आसीदिति** । अत्र सुबालोपनिषदर्थो भगवता मनुना अनुसंधीयते । अतः सुबालोपनिषदुक्तप्रकारेणात्र प्रलय उच्यते । तत्र हि, 'पृथिव्यप्सु[प्र]लीयते' इत्यादिना पृथिव्यादिक्रमेण तमःपर्यन्तप्रलय उक्तः । तमाह **इदं तमोभूतमासीदिति** । तत्र पृथिव्यादीनां स्वकारणेषु लयो वैयधिकरण्येन प्रतिपादितः, 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत्' इति प्रक्रियया सत्कार्यवादकाष्ठामभिप्रेत्य सामानाधिकरण्येन **इदं तमोभूतमित्युक्तम्** । **तमोभूतम्**—तमोभाववत्, तमोवस्थमासीदित्यर्थः । 'तमसि लीयते' इति निर्देशस्यायमर्थ इत्यभिप्रायः । यथाह भगवान् बादरायणपिता **पराशरः**, 'अग्न्यवस्थे च सलिले वाय्ववस्थे च तेजसि' इति । तमोवस्थस्य कारणस्य योग्यानुपलब्धिनिरस्तत्वशङ्काव्यावृत्त्यर्थमाह-**अप्रज्ञातमिति** । प्रकृष्टं ज्ञानमपरोक्षज्ञानम्; तेन विषयीकर्तुमशक्यमित्यर्थः । अयोग्यत्वादनुपलब्धिः; तस्मान्न योग्यानुप-

सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत्" इति।

लब्धिरित्यभिप्रायः। अयोग्यत्वमुपपादयति **अलक्षण**मिति। 'शब्दस्पर्शविहीनं तत् रूपादिभिरसंहितम्' इत्युक्तप्रकारेण रूपादिलक्षणरहितत्वात् प्रत्यक्षयितुमयोग्यमित्यर्थः। कार्येषु रूपादिमत्त्वदर्शनात् कारणेनापि रूपादिविशेषगुणवता भाव्यम्। अतो न यथोक्तकारणमुपपद्यत इत्यत्राह–**अप्रतर्क्य**मिति। प्रतर्कः—बाह्यतर्कः; तदगोचरभूतम्। ते तर्काः कालात्ययापदिष्टा इति भावः। यद्वा, अप्रज्ञातमिति प्रत्यक्षागोचरत्वस्योक्तत्वादप्रतर्क्यमित्यनुमानागोचरत्वमुक्तं स्यात्। 'तम एकीभवति' इति वाक्योक्तमविभागावस्थत्वं तमसो दर्शयति **अविज्ञेय**मिति। **विज्ञानम्**—विभागेन ज्ञानम्। परस्माद्ब्रह्मणः पृथग्व्यपदेशानर्हावस्थां क्षीरे नीरमिव प्राप्तमित्यर्थः। स्वरूपैक्याशङ्कापरिहारार्थमाह **प्रसुप्तमिव सर्वत** इति। यथा सुषुप्तौ जीवस्य परमात्मनः पृथग्व्यवहारानर्हावस्थापत्तिरेव, न तु स्वरूपैक्यम्— एवं चिदचिदात्मकस्य जगतो ब्रह्मणि पृथग्व्यवहारानर्हसंसर्ग एव, न स्वरूपैक्यमित्यर्थः। सुषुप्तौ सर्वथा साम्यव्यावृत्त्यर्थं **सर्वत** इति पदम्। यद्वा, पूर्वमचिदंशप्रलयप्रकारः उक्तः; **प्रसुप्तमिव सर्वत** इति तु चिदंशप्रलयप्रकार उक्तः (1)। **तत** इति। **ततः**—सर्गकाले प्राप्ते इत्यर्थः। 'संप्राप्ते सर्गकाले व्ययाव्ययौ' इतिवत्, भगवतः कारणान्तरसद्भावकृतोत्पत्तिप्रलयव्यावृत्त्यर्थमाह **स्वयम्भू**रिति। परमकारणविषयो हि स्वयम्भूशब्दोऽवयवार्थपौष्कल्यान्नारायणपरो दृष्टः। यथा **सभापर्वणि**, 'अव्यक्तोऽव्यक्तलिङ्गस्थो य एष भगवान् प्रभुः। पुरा नारायणो देवः **स्वयम्भूः** प्रपितामहः' इत्यारभ्य, 'ततः स भगवाँस्तोये ब्रह्माणमसृजत् स्वयम्' इति। **मोक्षधर्मे** च, 'नारायणो जगन्मूर्तिः' इत्यारभ्य, 'ततस्तेजोमयं दिव्यं पद्मं सृष्टं **स्वयम्भुवा**। तस्मात् पद्मात् समभवत् ब्रह्मा वेदमयो निधिः' इति। **आश्वमेधिके** च, 'विष्णुरेवादिसर्गेषु **स्वयम्भू**र्भवति प्रभुः' इति च। अतोऽयं स्वयम्भूशब्दो नारायणविषयः, चतुर्मुखस्रष्टरि प्रयुक्तत्वात्, प्रबन्धान्तरवचनैतत्प्रकरणानुगुण्यात्, भगवच्छब्दसामानाधिकरण्याच्च। देवताविशेषनिर्णयार्थं कारणत्वोपयोगिगुणपौष्कल्यज्ञापनार्थं चाह **भगवा**निति। 'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः' इति वचनात्। **इदं व्यञ्जयन्**—व्यष्टिरूपकार्यजातं व्यञ्जयितुम्। 'लक्षणहेत्वोः क्रियायाः' इति शतृप्रत्ययः। **महाभूतादिवृत्तौजाः**—व्यष्टिकारणानि पृथिव्यादीनि **महाभूतानि**। **आदि**शब्देन तत्कारणभूतमहदहङ्कारौ गृह्येते। तेषु प्रवृत्तसङ्कल्पज्ञानरूपतेजाः। तदर्थम**व्यक्तः** प्रादुरासीत्। अर्शआद्यजन्तत्वात् पुँल्लिङ्गता। अत्राक्षरावस्थाप्यर्थसिद्धा। 'महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति हि क्रमः। पूर्वमविभक्ततमश्शरीरको भगवान् व्यष्टिसृष्टिहेतुभूततन्मात्राहङ्कारसृष्ट्यर्थं स्वसङ्कल्पाद्विभक्ततमश्शरीरकोऽक्षरावस्थाप्राप्तिपूर्वकमव्यक्तावस्थप्रकृतिशरीरकोऽभूदित्यर्थः(2)। अव्यक्तशब्दमपि विवृण्वन् समष्टिव्यष्टिसृष्टिमनन्तरवर्तिनीं संक्षेपेणाह–**योऽसा**विति। **अतीन्द्रियग्राह्यः**—इन्द्रियमतीत्य वर्तमानेन शास्त्रेणैव ग्राह्यः। यद्वा, इन्द्रियग्राह्यानतीत्य वर्तमानः। इन्द्रियग्राह्यानतीत्य वर्तमानत्वं तुच्छस्याप्यस्तीति तद्व्यावृत्त्यर्थमाह–**सूक्ष्म** इति। अत एवाव्यक्तः, न तुच्छतयेत्यर्थः। **सनातनः** अव्यक्तशरीरकत्वेऽपि स्वयमप्रच्युतस्वभाव इत्यर्थः। **स एष** इति कार्यकारणयोरेक-

द्रव्यत्वं सूचितम् । स्वयमेव कारणं कार्यं चेत्, निमित्तान्तरापेक्षा स्यादित्यत्राह—**स्वयमि**ति । मृत्कुलालादौ निमित्तोपादानयोर्भेददर्शनादेकस्यैव निमित्तोपादानत्वे अनुपपन्ने इत्यत्राह **अचिन्त्य** इति । बाह्यतर्काः श्रुतिनिरस्ता इति भावः । **सर्वभूतमय उद्बभौ**—सर्वसमष्टिव्यष्टिरूप उद्बभौ । कार्यकारणयोरेकद्रव्यत्वे कार्यकारणवैषम्यं किमित्यत्राह **उद्बभा**विति । **सूक्ष्मः, उद्बभा**विति पदाभ्यां सूक्ष्मत्वस्थूलत्वे एव कार्यकारणदशावैषम्यम्, न तु द्रव्यभेद इत्युक्तं भवति(3)। एवं संक्षेपेण समष्टिव्यष्टिसृष्टिमुक्त्वा समष्टिसृष्टिं पृथगाह **सोऽभिध्याये**ति । **अभिध्यानम्**—सङ्कल्पः । स्वरूपेणैव समष्टिव्यष्टिरूपेण परिणतश्चेत्, भगवच्छब्दोक्तनिर्दोषत्वादिविरोध इत्यत्राह—**शरीरात्स्वा**दिति । **शरीरशब्देन** तमोऽव्यक्तावस्थं चित्संसृष्टमचिद्वस्तूच्यते । **सिसृक्षुर्विविधाः प्रजाः**—व्यष्टिसिसृक्षयेत्यर्थः । **अप एव ससर्जादौ** अप्छब्दोऽण्डकारणसमस्ततत्त्वप्रदर्शनार्थः । पृथिवीमयस्याण्डस्यानन्तरकारणं ह्यापः । अतोऽप्शब्दनिर्देशः । **अप** इति व्याख्येयश्रुतिगताप्छब्दः स्मारितः, "ता इमा आपः तद्धिरण्मयमण्डमभवत्" इति हि श्रुतिः । **अप्**छब्दार्थश्च पूर्वमेव **महाभूतादिवृत्तौजा** इत्यादिना व्याख्यातः । **एव**कारेण त्रिवृत्करणं व्यावर्त्यम् । अत्रिवृत्कृता अप इत्यर्थः । **तासु वीर्यमपासृजत् । वीर्यम्** त्रिवृत्करणजनितामण्डोत्पादनशक्तिं तास्वजनयदित्यर्थः । अत्र,"नानावीर्याः पृथग्भूताः...नाशक्नुवन्नित्याद्यनुसन्धेयम्(4) । एवं समष्टिसृष्टिमुक्त्वा अथ व्यष्टिसृष्टिमाह **तदण्ड**मिति । **तत्**—अण्डकारणतत्त्वजातम् । इतरहेयव्यावृत्त्यर्थमाह **सहस्रांशुसमप्रभ**मिति । तत्र चतुर्मुखसृष्टिमाह—**तस्मिन्नि**ति । **सर्वलोकपितामह** इत्यनेन देवमनुष्यादीनां दक्षादयः स्रष्टारः, तेषां स्रष्टा चतुर्मुख इति भगवतोऽण्डान्तर्गतवस्तुसर्गः सद्वारक इत्युक्तं भवति । **स्वयम्**—भगवान्नारायणः परमकारणभूतः स्वयमेव चतुर्मुखशरीरकोऽभवदित्यर्थः ; 'विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः' इति वचनात् (5)। सुबालोपनिषदि 'अज एको नित्यः' इति निर्विकारत्वं जगत्कारणत्वं जगदन्तरात्मत्वं चोक्त्वा नारायणशब्दोऽसकृदावर्तितः । अतो जगत्कारणत्वादिकं त्रितयमपि नारायणशब्दस्यावयवार्थ इति श्रुतेरभिप्राय इति मत्वा जगत्कारणत्वादिप्रवृत्तिनिमित्तकं नारायणशब्दं परमकारणस्य वाचकत्वेनाऽऽह **आपो नारा** इति । चित्संसृष्टानि अण्डकारणतत्त्वानि आपः । तासां नारत्वमुपपादयति **आपो वै नरसूनव** इति । 'रीङ् क्षये' इत्यस्माद्धातोर्डप्रत्यये टिलोपे च कृते र इति भवति । **नरः**—अक्षयः ; निर्विकार इत्यर्थः । 'जह्नुर्नारायणो नरः' इति वचनान्नर इति भगवन्नाम । तस्माज्जाता इति अण्प्रत्यये कृते नारा इति भवति ; नाराख्या आपोऽयनमस्येति नारायणः । एवं **नर**शब्देन निर्विकारत्वम्, **नार**शब्देन जगत्कारणत्वम् **अयन**शब्देन जगदन्तरात्मत्वं चेत्यर्थत्रयमुक्तं भवति । 'तस्मिन् जज्ञे स्वयं ब्रह्मा' इति भगवत एव प्रस्तुतत्वात् स एवात्र **अस्ये**ति सर्वनामशब्देन परामृश्यत इति न व्यवहितपरामर्शित्वदोषः । यत्तु **व्याख्यातन्तरैः**—सर्वनामशब्दः प्रधानपरामर्शी ; शाब्दप्राधान्यं च प्रथमानिर्दिष्टस्य चतुर्मुखस्येति स एव नारायणसंज्ञ इत्याशङ्क्य, बहुश्रुतिवचनविरोधात् उपरि चतुर्मुखस्य भगवद्विसृष्टतावचनाच्च भगवत एव नारायणसंज्ञेति परिहृतम्—तच्चाविरुद्धम् (6) । अथ चतुर्मुखस्य नारायणसंज्ञत्वव्यावृत्त्यर्थमितरदेवानां द्रुहिणसृष्टानां

भगवद्गीतासु च, "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा", "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति च। महाभारते, "कुतः सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम्। प्रलये च कमभ्येति तन्मे ब्रूहि पितामह" इति पृष्टे आह, "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः" इति। तथा, "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति, "अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते" इति च। आह च भगवान् पराशरः, "विष्णोस्सकाशादुद्भूतं जगत् तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः" इति। आह च आपस्तम्बः, "पूः प्राणिनः सर्व एव गुहाशयस्य अहन्यमानस्य विकल्मषस्य" इत्यारभ्य, "तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति।

यदि कपिलस्मृत्या वेदान्तवाक्यार्थव्यवस्था स्यात्, तदैतासां स्मृतीनामनवकाशत्वरूपो महान् दोषः प्रसज्यते। अयमर्थः—यद्यपि वेदान्तवाक्यानामतिक्रान्तप्रत्यक्षादिसकलेतरप्रमाण-संभावनाभूमिभूतार्थप्रतिपादनपरत्वात् तदर्थवैशद्यायाल्पश्रुतानां प्रतिपत्तॄणां तदुपबृम्हणमपेक्षितम्- तथापि तदर्थानुसारिणीनामाप्ततमप्रणीतानां बह्वीनां स्मृतीनां तदुपबृंहणाय प्रवृत्तानामनवकाशत्वं

---

परत्वशङ्कादूरोत्सारणार्थं च चतुर्मुखस्य भगवद्विसृष्टतामाह **यत्तदिति**। यत्तदित्यनुवादरूपत्वात् स भगवानत्रानूद्यते। अव्यक्तस्य चिदचित्समुदायरूपत्वादव्यक्तशरीरकं ब्रह्म सदसच्छरीरकं भवति। **तद्विसृष्टः**—तेन **विशेषेण** जीवबुद्ध्यव्यवधानेन भगवतैव सृष्टः स ब्रह्मेति कीर्त्यत इत्यर्थः (?)। अस्मिन् प्रबन्धेऽवसानेपि, 'प्रशासितारम्' इत्यादिना भगवान् कीर्तितः। मध्ये च, 'ब्रह्मविद्भ्यः' इत्यादिना भगवज्ज्ञानविदः कीर्तिताः।

एवं भगवता मनुना पुरुषसूक्तनारायणानुवाकप्रतिपाद्यस्य परब्रह्मशब्दवाच्यस्य भगवतः समाराधनरूपाणि कर्माणि विवक्षता भगवत्स्वरूपमुपदिष्टम्। एवं स्मृत्यन्तरेषु च द्रष्टव्यम्। कार्त्स्न्येन तत्त्वपराणामपि स्मृतीनामनवकाशत्वं स्यादित्यभिप्रायेणाह—**भगवद्गीतासु चेति**। **आपस्तम्बोक्तिमाह आहेति**। अध्यात्मखण्डयोः प्रथमे खण्डे, 'पूः प्राणिनः' इति वाक्यम्। द्वितीये खण्डे, 'तस्मात् कायाः' इति वाक्यम्। तस्मादित्युक्ते कस्मादित्यपेक्षापूरणार्थं कायशब्दस्य भगवच्छरीरपरत्वदर्शनार्थं च, 'पूः प्राणिनः' इति वाक्यमुपात्तम्। **पूः**—पुरम्, शरीरमित्यर्थः। यथा **भट्टहलायुधः**, 'अङ्गं वपुर्वर्ष्म पुरं प्रतीकम्' इति। ननु न तावदुपबृंहणनैरपेक्ष्यात् कपिलस्मृतेरुपेक्ष्यत्वं सुवचम्। मन्वादिस्मृतेः सावकाशत्वं चोक्तम्। कपिलस्याप्तत्वे प्रमाणं चोक्तम्। कपिलस्मृतिं विहाय स्मृत्यन्तरेणोपबृंहणे च को हेतुरिति शङ्कयामाह **अयमर्थ** इति। **सम्भावनाभूमिभूतेति**। **भूत**शब्दः सिद्धपरः; सिद्धार्थप्रतिपादनपरत्वात्। अयमर्थः—कार्यपरत्वे तुल्यविकल्पत्वेनाधिकारिभेदेन वाऽर्थविरोधः सुपरिहरः। सिद्धवस्तुपरत्वेऽन्यतरस्मृत्यनुगुणं वेदार्थो नेयः; न तूभयानुगुणमिति। **तथापीत्यादिना** कपिलस्मृतिं विहाय मन्वादिस्मृतिभिरेवोपबृंहणीयत्वे वैषम्यमाह। **आप्ततम**शब्दस्यायं भावः—यथावस्थितवस्तुदर्शित्वम्, यथादृष्टार्थवादित्वं चेति द्विविधा **आप्तिः**। तत्र 'ऋषिं प्रसूतं कपिलम्' इति कपिलस्य महर्षित्वमुच्यमानं मन्त्रद्रष्टृत्वातीन्द्रियानेकार्थद्रष्टृत्वादिनाऽप्युपपद्यते; न तु सार्वत्रिकं यथावस्थितार्थदर्शित्वमपेक्षते। मन्वादीनां तु, 'यद्वै किञ्चन मनुरवदत्', 'स होवाच व्यासः पाराशर्यः' इत्यादिभिः सार्वत्रिक-

मा प्रसाङ्क्षीदिति श्रुतिविरुद्धार्था कपिलस्मृतिरुपेक्षणीया। उपबृंहणं च श्रुतिप्रतिपन्नार्थविशदीकरणम्। तच्च विरुद्धार्थया स्मृत्या न शक्यते कर्तुम्।

न चैतासां स्मृतीनां प्राचीनभागोदितधर्मांशविशदीकरणेन सावकाशत्वम्; परब्रह्मभूतपरमपुरुषाराधनत्वेन धर्मान् विदधतीनामेतासामाराध्यभूतपरमपुरुषप्रतिपादनाभावे सति तदाराधनभूतधर्मप्रतिपादनासंभवात्। तथा हि परमपुरुषाराधनरूपता सर्वेषां कर्मणां स्मर्यते, "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः", "ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु। ब्रह्मलोकमवाप्नोति न चेहाऽऽवर्तते पुनः", "यैः स्वकर्मपरैर्नाथ नरैराराधितो भवान्। ते तरन्त्यखिलामेतां मायामात्मविमुक्तये" इति। न चैहिकामुष्मिकसांसारिकफलसाधनकर्मप्रतिपादनेनैतासां सावकाशत्वम्; यतः तेषामपि कर्मणां परमपुरुषाराधनत्वमेव स्वरूपम्। यथोक्तम्, "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्। अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इति; तथा "यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत। हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्" इति।

यदुक्तम्, 'ऋषिं प्रसूतं कपिलम्' इति कपिलस्य आप्ततया सङ्कीर्तनात् तत्स्मृत्यनुसारेण वेदा-

---

यथावस्थिततदर्शनपूर्वकयथादृष्टार्थवादित्वमुक्तम्। तस्मादाप्ततमाः मन्वादयः, कपिलस्य त्वाप्तिमात्रमिति। **श्रुतिविरुद्धार्था**—न्यायानुगृहीतश्रुतिविरुद्धार्थेति भावः। अत्रायमर्थः—परेण, 'न हि वचनविरोधे न्यायः प्रवर्त्तते' इति न्यायानुगृहीतश्रुतेरपि स्मृत्यनुगृहीतश्रुतिः प्रबलेत्युक्तम्। तत्रोत्तरम्, 'न्यायविरुद्धस्मृत्यनुगृहीतश्रुतेरपि न्यायाविरुद्धस्मृत्यनुगृहीतश्रुतिः प्रबला, ऋषिमात्रप्रणीतस्मृत्यनुगृहीतश्रुतेरप्याप्ततमप्रोक्तस्मृत्यनुगृहीतश्रुतिः प्रबला, एकस्मृत्यनुगृहीतश्रुतेरपि बहुस्मृत्यनुगृहीतश्रुतिः प्रबला' इति। आप्ततमप्रणीतन्यायानुगृहीतानेकस्मृत्यनुगृहीतश्रुतिराप्तमात्रोक्तन्यायविरुद्धैकस्मृत्यनुगृहीतश्रुतेरपि प्रबलेति सङ्ग्रहोक्तिः। दूषणान्तरमाह **उपबृंहणं चेति**। **विरुद्धार्थया**—न्यायानुगुणस्मृत्यनुगृहीतश्रुतिविरुद्धार्थया। उपबृंहणानुपपत्तिर्दूषणमित्यर्थः। सावकाशत्वं प्रतिवदति **न चैतासामिति**। अस्थिराणां कालान्तरभाविफलप्रदत्वं सद्वारकमेव। तत्र कृष्यादेरङ्कुरादिद्वारकत्ववत् किमचेतनद्वारकत्वम्, उत राजसेवादेरिव चेतनद्वारकत्वमित्यपेक्षायां चेतनद्वारकत्वं श्रुतिरेवाहेति श्रुतहानाश्रुतकल्पनानुपपत्त्या परब्रह्मणि तासां तात्पर्यमस्तीत्यर्थः। कर्मणां भगवदाराधनरूपत्वे प्रमाणमाह **तथा हीति**। **यतः प्रवृत्तिरिति** भगवद्गीता। **'ध्यायेन्नारायणं देवम्'** इति दक्षस्मृतिः। **यैःस्वकर्मेति** वैष्णवे पुराणे। अत्रायमभिप्रायः—पूर्वभागोपबृंहणपराणामपि स्मृतीनां कर्माराध्ये भगवति तात्पर्यमस्त्येव। उपनिषद्भागोपबृंहणपराणामत एवान्यत्र निरवकाशानामितिहासपुराणानामतीव तात्पर्यमस्ति। इतिहासपुराणयोः कर्मकीर्तनं भगवदुपासनाङ्गत्वेन; धर्मशास्त्रेषु ब्रह्मकीर्तनं कर्माराध्यत्वेनेति॥ अनभिसंहितफलकर्मणां हि भगवदाराधनरूपता; फलप्रदानां तु कर्मणां तदाराधनरूपत्वाभावान्न तत्प्रतिपादकशास्त्रस्य ब्रह्मणि तात्पर्यमित्याशङ्क्य परिहरति-**न चैहिकेत्यादिना**।

**यदुक्तमित्यादि**॥ ननु न लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसङ्गः। न हि लोकायतेऽग्निहोत्राद्यभ्युपेतम्। कपिलस्य तु तदभ्युपगतौ तद्वाक्येन श्रुत्यर्थव्यवस्थापनं युक्तमिति चेन्न—बृहस्पतिप्रणीत-

न्तार्थव्यवस्थापनं न्याय्यमिति—तदसत्; बृहस्पतेः श्रुतिस्मृतिषु सर्वेषामतिशयितज्ञानानां निदर्शनत्वेन सङ्कीर्तनात् तत्प्रणीतेन लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसक्तेरिति ॥ १ ॥

अथ स्यात्, कपिलस्य स्वयोगमहिम्ना वस्तुयाथात्म्योपलब्धेः तत्स्मृत्यनुसारेण वेदान्तार्थो व्यवस्थापयितव्य इति; अत उत्तरं पठति—

**इतरेषां चानुपलब्धेः ॥ २-१-२ ॥**

चशब्दस्तुशब्दार्थः, चोदिताशङ्कानिवृत्त्यर्थः । इतरेषाम्—मन्वादीनां बहूनां स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यानां निखिलजगद्भेषजभूतस्ववाक्यतया, "यद्वै किञ्चन मनुरवदत्, तद्भेषजम्" इति श्रुतिप्रसिद्धानां कपिलदृष्टप्रकारेण तत्त्वानुपलब्धेः श्रुतिविरुद्धा कपिलोपलब्धिः भ्रान्तिमूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्य इति सिद्धम् ॥ ॥ इतिस्मृत्यधिकरणम् ॥

## योगप्रत्युक्त्यधिकरणम् २-१-२.

**एतेन योगः प्रत्युक्तः ॥ २-१-३ ॥**

एतेन—कापिलस्मृतिनिराकरणेन योगस्मृतिरपि प्रत्युक्ता ॥ का पुनरत्राधिकाशङ्का, यन्निराकरणाय न्यायातिदेशः॥ योगस्मृतावपीश्वराभ्युपगमात् मोक्षसाधनतया वेदान्तविहितयोगस्य चाभिधानात्, वक्तुर्हिरण्यगर्भस्य सर्ववेदान्तप्रवर्तनाधिकृतत्वाच्च तत्स्मृत्या वेदान्तोपबृंहणं न्याय्यमिति । परिहारस्तु—अब्रह्मात्मकप्रधानकारणवादात्, निमित्तकारणमात्रेश्वराभ्युपगमात्, ध्यानात्मकस्य

---

स्यापि लोकायतस्य परित्यागो यद्धेतुकः, स श्रुत्यर्थविरोधोऽत्रापि विद्यते चेत्—तद्वदेव कपिलस्मृतिरपि विरुद्धांशे त्याज्या । तथा च 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यत्र च निर्णीतम् । तद्वदिति परिहारः(1)॥

उत्तरसूत्रशङ्कामाह **अथस्यादि**ति । मन्वादीनां धर्मप्रवर्तनादिष्वन्यपरत्वान्न योगावसरः । कपिलस्तु योगसाक्षात्कृतार्थतत्त्व इति तत्स्मृतिरा (तिर्न अना) दरणीयेत्यर्थः। **इतरेषांचानुपलब्धेः**॥ व्याचष्टे **चशब्द** इति । यदि कपिलस्य स्वस्मृतिप्रकारेणोपलब्धिरस्ति,सा बहूनां स्मर्तॄणां तत्त्वोपलब्धिविरोधात् भ्रान्तिरित्यर्थः। न च तेषां धर्मानुष्ठानेऽन्यपरत्वात् योगानवसरः, अनभिसंहितफलधर्मानुष्ठानस्य योगाङ्गतयाऽत्यन्तानुकूलत्वात् तद्रहितस्य योगो न समीचीनः, सरजस्तमस्कत्वात् ॥ (2) ॥ इति स्मृत्यधिकरणम् ॥

**एतेन योगः प्रत्युक्तः** ॥ अत्र विषयसंशयहेतू पूर्ववत् । ब्रह्मकारणत्वं विचाल्यम्, उत नेति विचारः । तदर्थमीश्वराधिष्ठितं प्रधानं कारणम्, उत ब्रह्मेति । किं योगस्मृतिविरोधेन वेदान्तानामन्यपरत्वमापाद्यम्, उत नेति । किं तया वेदान्तोपबृंहणं कार्यम्, उत नेति । किं सा भ्रान्तिमूला, उत नेति । किं हिरण्यगर्भस्य भ्रमः संभवति, नेति । यदा न संभवति. तदा तदुपबृंहणीयतया वेदान्तानां तद्विरोधेऽन्यपरत्वादीश्वराधिष्ठितं प्रधानं कारणमिति ब्रह्मकारणत्वं विचाल्यमिति । यदा भ्रमः संभवति, तदा तयोपबृंहणीयत्वाभावात् वेदान्तवाक्यानां तद्विरोधेऽन्यपरत्वाभावादीश्वराधिष्ठितप्रधानस्य जगत्कारणत्वाभावात् ब्रह्मकारणत्वमविचाल्यमिति । सूत्रस्याक्षरार्थमाह **एतेने**ति । वैदिकतत्त्वाभ्युपगममनुष्ठानाभ्युपगमं चाह **ईश्वराभ्युपगमात् योगस्य चाभिधानादि**ति । परिहारे—तत्त्ववैषम्यमाह **अब्रह्मात्मके**ति । अनुष्ठानवैषम्यं चाह **ध्यानात्मकस्ये**ति । न हि ध्यानस्य ध्यानत्वान्मोक्षोपायत्वम्; गर्दभध्यानादिषु व्यभिचारात् । तस्मात्

**योगस्य ध्येयैकनिरूपणीयस्य ध्येयभूतयोरात्मेश्वरयोर्ब्रह्मात्मकत्वजगदुपादानतादिसर्वकल्याणगुणात्मकत्वविरहेणावैदिकत्वात्, वक्तुर्हिरण्यगर्भस्यापि क्षेत्रज्ञभूतस्य कदाचिद्रजस्तमोभिभवसम्भवाच्च योगस्मृतिरपि तत्प्रणीतरजस्तमोमूलपुराणवत् भ्रान्तिमूलेति न तया वेदान्तोपबृंहणं न्याय्यमिति ॥ ३ ॥ ॥ इति योगप्रत्युक्त्यधिकरणम् ॥**

---

ध्येयविशेषविषयमेव ध्यानं मोक्षसाधनमिति ध्येयवैषम्यात् तदेकनिरूपणीयध्यानवैषम्यादित्यर्थः। **आत्मेश्वरयोरि**ति। ब्रह्मात्मकत्वं जीवस्य; जगदुपादानतादिकल्याणगुणयोग ईश्वरस्य। **क्षेत्रज्ञभूतस्ये**ति। 'यो ब्रह्माणं विदधाति' इति सृज्यत्वश्रुतिरवतारश्रुत्यनपोदिता ब्रह्मणः क्षेत्रज्ञत्वे प्रमाणम्; यथेन्द्रवरुणादीनाम्। कर्मकृतनामरूपाभ्यां योजनीयत्वं हि चेतनस्य सृज्यत्वमिति भावः। **कदाचिद्रजस्तमोभिभवादि**ति कल्पविशेषेषु गुणविशेषोन्मेषविषयपुराणवचनार्थोऽभिप्रेतः॥

ननु शौनकेनैव (पौराणिकेनैव) ब्रह्मणो भगवदंशत्वं भगवद्वचनेनैव प्रदर्श्यते, 'त्वमप्यत्र महाभाग! मदंशः कमलोदरात्। मन्नाभिसंभवाज्जातः प्रजासृष्टिकरः परः' इति। तस्मात् 'आब्रह्मस्तम्बपर्यन्ताः' इति न अभिविधिर्विवक्षितः; किन्तु मर्यादेति॥ नैवम्; स्तम्बस्याप्यकर्मवश्यत्वप्रसङ्गात्। स्थावरदेहस्य कर्मनिबन्धनत्वं च स्मर्यते, 'पुमान्न देवो न नरो न पशुर्न च पादपः। शरीराकृतिभेदास्तु भूपैते कर्मयोनयः' इति। भगवदंशत्वव्यपदेशस्तत्तदनुप्रवेशनिबन्धन इति तत्रैवोक्तम्। 'यदि तेऽनुग्रहकृता मयि बुद्धिर्जनार्दन। तन्मां भक्त इति ज्ञात्वा कथयाऽऽत्मानमच्युत' इति ब्रह्मणः प्रागविदितभगवत्स्वरूपजिज्ञासया प्रार्थनमुक्तम्। **अनुग्रहकृता**—अनुग्रहरूपेण कृता, अनुग्रहाय कृता वा। 'कथयामि तवाऽऽत्मानमनाख्यागोचरं परम्। न वाचां विषयो योऽसावविशेषस्वलक्षणः। प्रसादसुमुखः सोऽहमिमं यच्छामि ते वरम्। अनाख्यातस्वरूपं मां भवान् ज्ञास्यति योगतः। भक्तो मां तत्त्वतो वेत्ति मयि भक्तिश्च ते परा। जिज्ञासा परमा ब्रह्मँस्तेन जाता मतिस्तव। एवमुक्तस्ततो ब्रह्मा विष्णुना प्रभविष्णुना। विष्णुस्वरूपजिज्ञासुर्युयोजात्मानमात्मना। स ददर्शातिसूक्ष्माणां सूक्ष्मं ज्योतिरजं प्रभुम्। निमेषार्धार्धमात्रेण व्याप्ताशेषचराचरम्। आत्मानमिन्द्ररुद्रार्कचन्द्राश्विवसुमारुतान्। खादीनपि च शब्दादीन् ददृशे स च तन्मयान्' इति भक्तिप्रीतभगवत्प्रसादलब्धयोगेन ब्रह्मणा युगपद्विश्वव्यापिभगवत्स्वरूपसाक्षात्कारः तत्र भगवत्स्वरूपे च इन्द्रवस्वादिजीववदाकाशाद्यचेतनवच्च स्वात्मनो रुद्रस्य च दर्शनं चोक्तम्। तत्रावतारप्रश्नानन्तरं भगवता, 'परित्राणाय साधूनाम्' इत्यारभ्य, 'पूर्वोत्पन्नेषु भूतेषु नृदेवादिषु चाप्यहम्। अनुप्रविश्य धर्मस्य करोमि परिपालनम्। प्रविश्य च तथाऽपूर्वां तनुं धर्मभृतां वर। जगतोऽस्य जगत्यस्मिन् करोमि परिपालनम्' इत्यवतारद्वैविध्यमुक्त्वा, 'यद्वै धर्मोपकाराय यच्च दुष्टनिबर्हणम्। चरितं मानुषादीनां तद्वै जानीष्व मत्कृतम्' इत्यनेनानुप्रवेशावतारेषु स्वानुप्रविष्टजीवगतप्रकृष्टचेष्टितानामेव स्वचेष्टितत्वम्, न निकृष्टचेष्टितानामिति प्रतिपाद्य, 'उत्पाद्य पृथिवीं सम्यक् स्थापयित्वा यथा पुरा। सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापतिम् (ते)' इति चतुर्मुखस्य भगवदंशत्वमनुप्रवेशकृतमिति सुस्पष्टमुक्तम्। तत्र ब्रह्मणो युक्तावस्थायामिन्द्रस्येव रुद्रस्य(?) भगवदात्मकत्व-

दर्शनस्योपक्रमावगततया, 'सङ्कर्षणात्मकश्चैव कल्पान्ते च रसातलात्। समुत्पत्स्ये तदा रुद्रः कालाग्निरिति विश्रुतः' इति च संकर्षणानुप्रवेशेन रुद्रस्य भगवदात्मकतायाः प्रतिपादितत्वात्, 'नृत्यत्यन्ते च यद्रूपम्' इति रूपतयोक्तत्वात्, 'तवान्तरात्मा मम च' इति भगवदन्तर्यामिकत्ववचनाच्च रुद्रस्यापि भगवदंशत्वमनुप्रवेशकृतम्। तथा श्रीविष्णुधर्मोत्तरे, 'ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः। एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा। जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा। वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति च' इति ब्रह्मादीनां भगवत्तेजोवियोगेन प्रलयप्रतिपादनाच्चानुप्रवेशः सिद्धः। तथा मोक्षधर्मे, "नारायणो महायोगी शुभाशुभविवर्जितः। ससर्ज नाभिजं पुत्रं ब्रह्माणममितप्रभम्। ततः स प्रादुरभवदथैनं वाक्यमब्रवीत्। मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः। सृज प्रजास्त्वं विविधाः ब्रह्मन् सजडपण्डिताः। स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः। प्रणम्य वरदं देवमुवाच हरिमीश्वरम्। का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते। अप्रज्ञावानहं देव विधत्स्व यदनन्तरम्। स एवमुक्तो भगवान् भूत्वान्तर्हितस्ततः। चिन्तयामास विश्वेशो बुद्धिं बुद्धिमतां वरः। स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम्। योगेन चैनां संयोज्य स स्वयं युयुजे तदा। स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम्। उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः। ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये। तदर्थमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा। अथैनं बुद्धिसंयुक्तं पुनस्तं ददृशे हरिः। भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः। बाढमित्येव जग्राह यथाज्ञां शिरसा हरेः। तथाऽकरोच्च धर्मात्मा ब्रह्मा लोकपितामहः" इति भगवदनुप्रविष्टया तदाहितशक्त्या बुद्ध्याऽनुप्रविष्टत्वात् सृष्टिसामर्थ्यं ब्रह्मण एक्तम्। 'स स्वयं युयुजे' इति बुद्धेरन्तरनुप्रवेशो ह्युक्तः, अर्थान्तरानुपपत्तेः। अतश्चतुर्मुखस्य भगवदवतारत्वमनुप्रवेशकृतम्। तस्मात् 'आब्रह्मस्तम्बपर्यन्ताः' इत्यभिविधिरेव विवक्षितः॥

परैस्त्वाद्ये द्वितीयं सूत्रमेवं व्याख्यातम्—**इतरेषाम्**—अहङ्कारादीनां तत्त्वानां श्रुतावनुपलब्धेः। अतः कार्यस्मृत्यनुपपत्त्या च कारणस्मृत्यनुपपत्तिस्तात्पर्यार्थ इति; तदयुक्तम्; श्रुतावेवोपलब्धेः, "तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते" इति, तथा, "बुद्धिरध्यात्मं, बोद्धव्यमधिभूतं, ब्रह्मा तत्राधिदैवतम्" इति 'अहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्' इति, तथा 'यस्याहङ्कारः शरीरं, यस्य बुद्धिः शरीरं, यस्याव्यक्तं शरीरम्' इति, तथा 'मनो भित्त्वा भूतादिं भिनत्ति, भूतादिं भित्त्वा महान्तं भिनत्ति, महान्तं भित्त्वाऽव्यक्तं भिनत्ति' इति। एषु वाक्येषु बुद्धिशब्दो महत्तत्त्वव्यापारपरः, "महान् वै बुद्धिलक्षणः" इति श्रुतेः। अतोऽव्यक्तमहदहङ्काराः श्रुतावुपलभ्यन्ते। स्मर्यन्ते च, "यत्तत्कारणमव्यक्तम्" इत्युपक्रम्य, "त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत" इति; अतः स्मृत्युपबृंहिता श्रुतिर्महदादौ प्रमाणम्। सूत्रकारैस्तु, 'महतः परमव्यक्तम्" इत्यादेः कठवल्लीवाक्यस्यैव महदादितत्त्वपरत्वं प्रतिक्षिप्तम्; अर्थविरोधात्। सुबालोपनिषद्वाक्यानां तु विरोधाभावान्न प्रतिक्षिप्तम्। अतः श्रुतावनुपलब्धेरिति व्याख्यानमयुक्तम्॥ अब्रह्मात्मकानां महदादीनां श्रुतावनुपलब्धिर्विवक्षितेति चेत्—अब्रह्मात्मकप्रधानमपि श्रुतिष्वनुपलब्धमिति, "प्रधानादितरेषां लोके वेदे चानुपलब्धेः" इति व्याख्यानमनुपपन्नम्।

**न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २-१-४॥**

**पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते—यत् साङ्ख्यस्मृतिनिराकारणेन**

---

एतेन योगः प्रत्युक्तः' इत्यत्र अधिकशङ्कापरिहारौ **परैरेवमुक्तौ**—'त्रिरुन्नतं स्थाप्य समं शरीरम्', 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्', 'विद्यामेतां योगविधिं च कृत्स्नम्' इत्यादिषु श्रुतिषु योगस्मृत्यर्थस्य परिगृहीतत्वात् योगस्मृतेः प्रामाण्यशङ्का। एकदेशसंप्रतिपत्तावप्येकदेशान्तरविप्रतिपत्तेरप्रामाण्यमिति परिहार इति। तत्र तावदधिकशङ्कोक्तिरनुपपन्ना; आधिक्याभावात् शङ्कायाः। श्रुतिपरिग्रहो हि साङ्ख्यस्मृतेरपि तुल्यः, 'तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः', 'पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः' इति। श्रुत्यविरुद्धांशस्य श्रुत्या परिग्रह इति निर्वाहश्च द्वयोरपि तुल्यः। अतः शङ्काया अधिकत्वाभावात् परिहारश्चानधिकः। एकदेशसंप्रतिपत्तावप्येकदेशविप्रतिपत्तेरप्रामाण्यमपि द्वयोस्तुल्यम्। अतः शङ्कापरिहारावनुपपन्नौ ॥

**यादवप्रकाशैस्तु** द्वितीयं सूत्रमेवं व्याख्यातम्—कार्येषु सुखदुःखमोहदर्शनेन कथञ्चित् प्रधानानुमानेऽपि कुण्डलादौ स्वर्णादेरिव कार्येष्वनुपलब्धानां पुरुषमहदहङ्कारादीनां तत्त्वान्तरत्वेन परिकल्पनमयुक्तम्; पृथिव्यादीनामेव कश्चिदंशो हृदयादिस्थानस्थः पुरुषो महदहङ्कारादयश्च स्युरित्युपगमे बाधाभावादिति। अतः कार्यस्मृत्यनुपपत्तेश्च कारणस्मृत्यनुपपत्तिरिति। **एतेने**ति सूत्रञ्च कपिलादिस्मृतीनामेव योगिप्रत्यक्षमूलत्वं स्मृत्यनवकाशदोषनिराकरणेन प्रत्युक्तमिति व्याख्यातम्।

तत्र तावत् इतरेषामिति सूत्रयोजनाऽनुपपन्ना, भोक्तृत्वाध्यवसायाभिमानादिकार्योपलम्भात् ॥ तानि कार्याणि पृथिव्यादीनामंशविशेषेष्वेव स्युरिति चेत्— सुखदुःखमोहादयश्च तेष्वेव स्युरिति प्रसङ्गस्याविशिष्टत्वात् प्रधानकल्पनमनुमत्य पुरुषमहदादिव्युदासो निर्निबन्धनः। तस्यापि व्युदासोऽभिमतश्चेत्, इतरेषामिति पदवैयर्थ्यम्। तदा हि, सर्वेषां चानुपलब्धेरिति वक्तव्यम्। तथा च मन्दफलम्, युक्तिभिस्तत्कल्पनानां तर्कपादे निरसिष्यमाणत्वात्। अतः कपिलस्मृतेर्योगिप्रत्यक्षमूलत्वव्युदसनमपेक्षितमिति तदेव विवक्षितम् ॥ **एतेने**ति सूत्रेण तद्व्युदस्यत इति चेन्न; साङ्ख्यस्मृतेरिव योगस्मृतेः श्रुतिविरुद्धांशव्युदसनस्यापेक्षितत्वात्। तस्य च शब्दानुकूलत्वादपेक्षितसिद्ध्यनुगुणनिर्वाहे संभवति तदननुगुणनिर्वाहाश्रयणस्यानुपपन्नत्वात् ॥ स्मृत्यनवकाशसूत्रेणैव योगस्मृतिव्युदासोऽपि सिद्धः, तुल्यन्यायत्वादिति चेन्न; अधिकशङ्कायाः संभवात्। अतो योगस्मृतिविषयमतिदेशाधिकरणम् **एतेने**ति सूत्रितमिति युक्तम् (३) ॥

**न विलक्षणत्वादस्य तथात्वं च शब्दात्** ॥ सङ्गतिमाह **पुनरपीति**। मन्वादिस्मृतिभिरुपबृंहणं कार्यमित्युक्तम्। मन्वादिस्मृतयस्तर्कविरुद्धाः; साङ्ख्यस्मृतिस्तर्कानुगृहीता; अतस्तयोपबृंहणं कार्यमिति प्रत्यवस्थानात सङ्गतिरित्यर्थः। प्रथमविचारः पूर्ववत्। तदर्थं किं चेतनाद्ब्रह्मणोऽचेतनजगदुत्पत्तिः संभवति, नेति विचारः। तदर्थं किं जगत्कारणस्य जगत्सालक्षण्यानुमितिहेतुरनैकान्तिकः, नेति। यदा नानैकान्तिकः, तदा चेतनात् ब्रह्मणोऽचेतनजगदुत्पत्तेरसंभवात् ब्रह्मकारणवादश्चात्यः। यदा त्वनैकान्तिकः, तदा ब्रह्मणो विलक्षणजगदुत्पत्तिसंभवात् ब्रह्मकारणत्वमविचाल्यमिति। सौत्रं नेतिपदं व्याचष्टे **यदिति**।

जगतो ब्रह्मकार्यत्वमुक्तम्, तन्नोपपद्यते; अस्य प्रत्यक्षादिभिरचेतनत्वेनाशुद्धत्वेनानीश्वरत्वेन दुःखात्मकत्वेन चोपलभ्यमानस्य चिदचिदात्मकस्य जगतः भवदभ्युपेतात् सर्वज्ञात् सर्वेश्वरात् हेयप्रत्यनीकादानन्दैकतानात् ब्रह्मणो विलक्षणत्वात्। न केवलं प्रत्यक्षादिभिरेव जगतो वैलक्षण्यमुपलभ्यते, शब्दाच्च तथात्वम्—विलक्षणत्वम् उपलभ्यते। 'विज्ञानं चाविज्ञानं च', 'एवमेवैताः भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः', 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः', 'अनीशश्चात्मा बध्यते भोक्तृभावात्' इत्यादिभिः कार्यस्य हि जगतोऽचेतनत्वदुःखित्वादयो निर्दिश्यन्ते। यद्धि यत्कार्यम्, तत् तस्मादविलक्षणम्; यथा मृत्सुवर्णादिकार्यं घटरुचकादि। अतो ब्रह्मविलक्षणस्यास्य जगतस्तत्कार्यत्वं न संभवतीति साङ्ख्यस्मृत्यनुरोधेन कार्यसलक्षणं प्रधानमेव कारणं भवितुमर्हति। अवश्यं च शास्त्रस्यानन्यापेक्षस्यातीन्द्रियार्थगोचरत्वेऽपि तर्कोऽनुसरणीयः। यतः सर्वेषां प्रमाणानां क्वचित् क्वचिद्विषये तर्कानुगृहीतानामेवार्थनिश्चयहेतुत्वम्। तर्को हि नाम अर्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम्। तदपेक्षा च सर्वेषां प्रमाणानां समाना। शास्त्रस्य तु विशेषेण आकाङ्क्षासंनिधियोग्यताज्ञानाधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा। उक्तश्च मनुना, "यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति। तदेव हि तर्कानुगृहीतशास्त्रार्थप्रतिष्ठापनं श्रुत्या च, 'मन्तव्यः' इत्युच्यते।

---

**अस्ये**ति व्याख्येयम्। तद्व्याचष्टे **प्रत्यक्षादिभिरि**ति। **अस्ये**ति पदं लौकिकप्रमाणसिद्धाकारविशिष्टपरामर्शीति भावः। **विलक्षणत्वादि**ति पदं व्याचष्टे **भवदभ्युपेता**दिति। **अचेतनत्वेने**त्यादिविशेषणचतुष्टयप्रतियोगित्वेन **सर्वज्ञादि**त्यादिविशेषणचतुष्टयमुक्तम। **तथात्व**मित्यादिकं सूत्रखण्डं व्याचष्टे **न केवल**मिति। **तथात्व**पदव्याख्यानं **विलक्षणत्व**मिति। विलक्षणत्वोपलम्भकं शब्दमुदाहरति **विज्ञान**मिति। ततः किमित्यत्राह **यद्धि यत्कार्य**मिति। अपौरुषेयस्य शास्त्रस्य मानान्तरगोचरार्थविषयत्वात् प्रत्यक्षादिदृष्टव्याप्तिमूलः तर्कः शास्त्रसिद्धमर्थं न गोचरयतीत्यत्राह **अवश्यं** चेति। **अनन्यापेक्षस्य**—प्रमाणान्तरानपेक्षस्य। प्रमाणान्तरनैरपेक्ष्येऽपि प्रमाणाङ्गभूतस्तर्कोऽनुसरणीय इत्यर्थः। कुत इत्यत्राह **यत** इति। **क्वचित्क्वचिद्विषये**—स्वत एवास्पष्टार्थे। प्रामाण्यस्य परानपेक्षत्वं नाम प्रमित्यन्तरनैरपेक्ष्यम्, न त्वितिकर्तव्यतानैरपेक्ष्यमित्यभिप्रायः। तर्केण प्रमाणस्य किञ्चित्कारं दर्शयति **तर्को हि नामे**ति। यन्नभसो नीलरूपत्वादचाक्षुषत्वमुच्यते, तत् **अर्थस्वभावविषयनिरूपणेनार्थविशेषे प्रमाणव्यवस्थापनम्**। वैधहिंसायाः श्रेयस्करत्वप्रमितिजनकवाक्यनिरूपणेन 'न हिंस्यात्' इति वाक्यस्य वैधहिंसाव्यतिरिक्तविषयत्वं यदुच्यते, तत् **सामग्रीविषयनिरूपणेनार्थविशेषे प्रमाणव्यवस्थापनम्**; प्रत्यक्षस्य ज्वालैक्यविषयत्वं विना ज्वालोत्पत्तिनिरूपणेन तत्स्वरूपमात्रविषयत्वनिर्णयश्च। यद्वा—**अर्थस्वभावविषयनिरूपणं** नाम बाध्यत्वाबाध्यत्वनिरूपणम्। कारणदोषस्य बाधकप्रत्ययस्य वा भावाभावनिरूपणेन प्रमाणस्य विषयविशेषपरिच्छेदकत्वनिश्चयो विवक्षितः। **शास्त्रस्य त्वि**ति। **तुशब्दः** साध्यवैषम्यं द्योतयति; **विशेषेणे**ति शब्दः साधनवैषम्यम्। आकाङ्क्षासंनिधियोग्यतापेक्षत्वं साधनवैषम्यम्। तेन सर्वत्र तर्कसापेक्षत्वं साध्यवैषम्यमित्यभिप्रायः।

अथोच्येत—श्रुत्या जगतो ब्रह्मैककारणत्वे निश्चिते सति तत्कार्यस्यापि जगतश्चैतन्यानुवृत्तिरभ्युपगम्यते । यथा चेतनस्य सुषुप्तिमूर्च्छादिषु चैतन्यानुपलम्भः, तथा घटादिष्वपि सदेव चैतन्यमनुद्भूतम्; अत एव चेतनाचेतनविभाग इति ॥ नैतदुपपद्यते ; यतो नित्यानुपलब्धिरसद्भावमेव साधयति । अत एव चैतन्यशक्तियोगोऽपि तेषु निरस्तः । यस्य हि क्वचित् कदाचिदपि यत्कार्यानुपलब्धिः, तस्य तत्कार्यशक्तिं ब्रुवाणो वन्ध्यासुतसमितिषु तज्जननीनां प्रजननशक्तिं ब्रूताम् । किञ्च वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चये सति घटादीनां चैतन्यशक्तेः चैतन्यस्य वाऽनुद्भूतस्य सद्भावनिश्चयः, तन्निश्चये सति वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चय इतीतरेतराश्रयत्वम् । विलक्षणयोर्हि कार्यकारणभावः प्रतिपादयितुमेव न शक्यते ॥

किं पुनः प्रकृतिविकारयोः सालक्षण्यमभिप्रेतम्, यदभावात् जगतो ब्रह्मोपादानताप्रतिपादनासंभवं ब्रूषे ? न तावत् सर्वधर्मसारूप्यम्, कार्यकारणभावानुपपत्तेः । न हि मृत्पिण्डकार्येषु घटशरावादिषु पिण्डत्वाद्यनुवृत्तिर्दृश्यते । अथ येन केनचिद्धर्मेण सारूप्यम्, तत् जगद्ब्रह्मणोरपि सत्तादिलक्षणं संभवति ॥ तदुच्यते—येन स्वभावेन कारणभूतं वस्तु वस्त्वन्तराद्व्यावृत्तम्, तस्य स्वभावस्य तत्कार्येऽप्यनुवृत्तिः कार्यस्य कारणसालक्षण्यम् । येन ह्याकारेण मृदादिभ्यो हिरण्यं व्यावर्तते, तदाकारानुवृत्तिः तत्कार्येषु कुण्डलादिषु दृश्यते । ब्रह्म च हेयप्रत्यनीकज्ञानानन्दैश्वर्यस्वभावम्, जगच्च तत्प्रत्यनीकस्वभावमिति न तदुपादानम् ॥

ननु च वैलक्षण्येऽपि कार्यकारणभावो दृश्यते, यथा चेतनात्पुरुषादचेतनानि केशनखदन्तलोमानि जायन्ते, यथा चाचेतनाद्गोमयाच्चेतनो वृश्चिको जायते ; चेतनाच्चोर्णनाभेरचेतनस्तन्तुः ॥

नैतदेवम्, यतस्तत्राप्यचेतनांश एव कार्यकारणभावः ॥ ४ ॥

अथ स्यात्—अचेतनत्वेनाभिमतानामपि चैतन्ययोगः श्रुतिषु श्राव्यते, "तं पृथिव्यब्रवीत्",

---

यादवप्रकाशमतेन चोद्यं शङ्कते **अथे**ति । चैतन्यानुपलम्भः कथमित्यत्राह **यथा चेतनस्ये**ति । वेदान्तिभिर्नित्यस्यात्मस्वरूपावभासरूपस्य चैतन्यस्य विद्यमानस्यापि सुषुप्तौ स्फुटतरोपलम्भाभावाभ्युपगमात् तं प्रतिबन्दीकृत्य परिहार उक्तः । सर्वत्र चैतन्यस्य सद्भावे चेतनाचेतनव्यवस्था कथमित्यत्राह **अत एवे**ति । परिहरति **नैतदि**ति । इतरवादिभिः सुषुप्तौ चैतन्योत्पत्तिशक्तियोगस्याभ्युपगतत्वात् तत्प्रतिबन्दीकारेण घटादीनां चैतन्यानुपलम्भेऽपि चैतन्यशक्तियोगात् कारणसालक्षण्यसिद्धिरित्याशङ्क्याह **अत एव चैतन्ये**ति । वेदान्तप्रामाण्यमभ्युपगच्छता त्वयाऽप्येवमङ्गीकार्यमित्याशङ्क्याह **किञ्चे**ति । ब्रह्मोपादानताप्रतिपादनस्य कथं घटादिषु चैतन्यनिश्चयसापेक्षत्वमित्यत्राह **विलक्षणयोर्ही**ति न हि 'आदित्यो यूपः' इत्यादिवाक्यमयोग्यार्थप्रतिपादनक्षमम् । तस्मात् योग्यत्वनिश्चये सति ब्रह्मोपादानताप्रतिपादनसंभव इत्यन्योन्याश्रय इत्यर्थः । सिद्धान्तिच्छायया चोदयति **किंपुनरि**ति । **सत्तादी**ति आदिशब्देन द्रव्यत्वं विवक्षितम् । परिहरति **तदुच्यत** इति । सालक्षण्यमेवं स्यात्; ततः किमित्यत्राह **ब्रह्म चे**ति । ब्रह्मणो जगतश्च द्रव्यत्वावान्तरजातिविशेषः सालक्षण्यमिति फलितम् । तच्चात्र चेतनत्वम् । तेन च सालक्षण्यं नास्तीत्यर्थः । एवं वैलक्षण्यस्यासिद्धिराशङ्क्य परिहृता ; अथानैकान्त्यमाशङ्क्य परिहरति **ननु चे**ति ॥

उत्तरसूत्रमवतारयति **अथ स्यादि**ति । **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॥

"आपो वा अकामयन्त", "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्माणं जग्मुः" इति । नदी-समुद्रपर्वतादीनामपि चेतनत्वं पौराणिका आतिष्ठन्ते । अतो न वैलक्षण्यमिति । अत उत्तरं पठति-

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २-१-५ ॥**

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः । पृथिव्याद्यभिमानिन्यो देवताः, 'तं पृथिव्यब्रवीद्' इत्यादिषु पृथिव्यादिशब्दैर्व्यपदिश्यन्ते । कुतः? विशेषानुगतिभ्याम्—विशेषः—विशेषणम्, देवताशब्देन विशेष्य पृथिव्यादयोऽभिधीयन्ते । 'हन्ताहमिमास्तिस्रो देवताः' इति तेजोबन्नानि देवताशब्देन विशेष्यन्ते । सर्वा ह वै देवता अहंश्रेयसे विवदमानाः', 'ते देवाः प्राणे निःश्रेयसं विदित्वा' इति च । अनुगतिः—अनुप्रवेशः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्यादिना वागाद्यभिमानित्वेनाग्न्यादीना-मनुप्रवेशः श्रूयते ॥ ५ ॥

अतो जगतोऽचेतनत्वेन विलक्षणत्वाद्ब्रह्मकार्यत्वानुपपत्तेस्तर्कानुगृहीतस्मृत्यनुरोधेन जगतः प्रधानोपादानत्वं वेदान्तैः प्रतिपाद्यते इति—एवं प्राप्तेऽभिधीयते—

**दृश्यते तु ॥ २-१-६ ॥**

तुशब्दात् पक्षो विपरिवर्तते । यदुक्तम्—जगतो ब्रह्मविलक्षणत्वेन ब्रह्मोपादानत्वं न संभव-तीति । तदयुक्तम्; विलक्षणयोरपि कार्यकारणभावदर्शनात् । दृश्यते हि माक्षिकादेर्विलक्षणस्य क्रिम्यादेस्तस्मादुत्पत्तिः ॥ ननूक्तमचेतनांश एव कार्यकारणभावात् तत्र सालक्षण्यम् ॥ सत्य-मुक्तम्; न तावता कार्यकारणयोर्भवदभिमतसालक्षण्यसिद्धिः । यथाकथञ्चित्सालक्षण्ये सर्वस्य सर्वसालक्षण्येन सर्वस्मात्सर्वोत्पत्तिप्रसङ्गभयात् वस्तुनो वस्त्वन्तराद्व्यावृत्तिहेतुभूतस्याऽऽकारस्या नुवृत्तिस्सालक्षण्यं भवताऽभ्युपेतम् । स तु नियमः माक्षिकादिभ्यः क्रिम्याद्युत्पत्तौ न दृश्यत इति ब्रह्मविलक्षणस्यापि जगतो ब्रह्मकार्यत्वं नानुपपन्नम् । न हि मृद्धिरण्यघटमकुटादिष्विव वस्त्वन्तरव्यावृत्तिहेतुभूतासाधारणाकारानुवृत्तिर्माक्षिकगोमयक्रिमिवृश्चिकादिषु दृश्यते ॥ ६ ॥

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २-१-७ ॥**

---

तुशब्दस्य पूर्वपक्षव्यावृत्त्यर्थता मा भूदिति व्याचष्टे—**तुशब्द** इति । 'हन्ताऽहमिमाः' इत्यादिवाक्ये पृथिव्यादीनामस्पष्टत्वादाह-**तेजोबन्नानीति** ।

**दृश्यते तु** ॥ किं येन केनचिदाकारेण कार्यकारणयोः सालक्षण्यं विवक्षितम्? तदसत्पक्षेऽप्यस्ति । सर्वधर्मसादृश्यं चेत्, मृद्घटादिष्वपि नास्ति । द्रव्यत्वावान्तरचेतनत्वजात्यनु-वृत्तिश्चेत्, ब्रह्मकारणत्ववादिबहुश्रुतिस्मृतिविरोधात् बाह्यस्तर्क इति, 'तर्काप्रतिष्ठानात्' इति सूत्रेण परिहरिष्यते । 'चेतनत्वानुवृत्तिरप्यस्ति; विशिष्टस्य कारणत्वात् । कार्येऽप्यचिदंशे अचेतन-त्वानुवृत्तिवत् चिदंशे चेतनत्वानुवृत्तिरपि विद्यते' इति साक्षात् परिहार उपरितनाधिकरणेषु वक्ष्यते । कारणं येनाऽऽकारेण वस्त्वन्तराद्व्यावृत्तम्, तेनाऽऽकारेण कार्यस्य सालक्षण्यं चेत्, तस्य व्यभिचारोऽस्मिन् सूत्रे विवक्षितः । माक्षिकस्य वस्त्वन्तरव्यावर्तकाकारो माक्षिकत्वम्; तत्तु क्रिम्यादौ नास्तीत्यर्थः । **न दृश्यत** इत्येतत् विवृणोति-**न हीति** ।

**असदिति चेन्न प्रतिषेधमात्रत्वात्** ॥ आरम्भणाधिकरणार्थः प्रसङ्गादनेन सूत्रेण स्मारितः ।

यदि कार्यभूताज्जगतः कारणभूतं ब्रह्म विलक्षणम्, तर्हि कार्यकारणयोर्द्रव्यान्तरत्वेन कारणे परस्मिन् ब्रह्मणि कार्यं जगन्न विद्यत इत्यसत एव जगत उत्पत्तिः प्रसज्यत इति चेत्—नैतदेवम्। कार्यकारणयोः सालक्षण्यनियमप्रतिषेधमात्रमेव हि पूर्वसूत्रेऽभिप्रेतम्; न तु कारणात् कार्यस्य द्रव्यान्तरत्वम्; कारणभूतं ब्रह्मैव स्वस्माद्विलक्षणजगदाकारेण परिणमत इत्येतत्तु न परित्यक्तम्। क्रिमिमाक्षिकयोरपि हि सति च वैलक्षण्ये कुण्डलहिरण्ययोरिव द्रव्यैक्यमस्त्येव ॥ ७ ॥

अत्र चोदयति—

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २-१-८ ॥**

अपीताविति अपीतिपूर्वकसृष्ट्यादेः प्रदर्शनार्थम्। 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिषु अप्ययावस्थोपदेशपूर्वकत्वदर्शनात्सृष्ट्यादेः। यदि कार्यकारणयोर्द्रव्यैक्यमभ्युपेतम्, तदा कार्यस्य जगतो ब्रह्मणि अप्ययसृष्ट्यादिषु सत्सु ब्रह्मण एव तत्तदवस्थान्वय इति कार्यगताः सर्वे एवापुरुषार्था ब्रह्मणि प्रसज्येरन्, सुवर्ण इव कुण्डलगता विशेषाः। ततश्च वेदान्तवाक्यं सर्वमसमञ्जसं स्यात्; "यस्सर्वज्ञस्सर्ववित्", "अपहतपाप्मा विजरो विमृत्युः", "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते", "तयोरन्यः पिप्पलं स्वाद्वत्ति", "अनीशश्चात्मा बध्यते भोक्तृभावात्", "अनीशया शोचति मुह्यमानः" इत्येकस्मिन्नेव वस्तुन्येषां परस्परविरुद्धानां प्रसक्तेः॥

अथोच्येत—चिदचिद्वस्तुशरीरकस्य परस्यैव ब्रह्मणः कार्यकारणभावात्, शरीरभूतचिदचिद्वस्तुगतत्वाच्च दोषाणाम्, न शरीरिणि ब्रह्मणि कार्यावस्थे कारणावस्थे च प्रसङ्ग इति। तदयुक्तम्; जगद्ब्रह्मणोः शरीरशरीरिभावस्यैवासंभवात्; संभवे च ब्रह्मणि शरीरसंबन्धनिबन्धनदोषाणामनिवार्यत्वात्। न हि चिदचिद्वस्तुनोर्ब्रह्मणः शरीरत्वं संभवति।

शरीरं हि नाम कर्मफलरूपसुखदुःखभोगसाधनभूतेन्द्रियाश्रयः पञ्चवृत्तिप्राणाधीनधारणः

---

**यदी**ति। विलक्षणत्वकथनेन द्रव्यान्तरत्वमुक्तं भवति। ततोऽसत्कार्यवादः स्यादिति पूर्वपक्षिणोऽभिप्रायः। **नैतदेव**मित्यादि। कार्यकारणयोः सजा[1]तीयत्वमेव—अस्येदमिति प्रत्यभिज्ञानार्हावान्तरजात्या सालक्षण्यनियमः प्रतिषिद्धः; न त्वेकद्रव्यत्वमित्यर्थः।

उत्तरसूत्रमवतारयति—**अत्रे**ति। **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** ॥ **सृष्ट्यादे**रिति आदिशब्देन स्थितिरुच्यते। अपीतेः सृष्ट्यादिप्रदर्शनार्थत्वं कथमित्यत्राह-**सदेवे**ति। सुवर्णकुण्डलादिदृष्टान्तस्य बुद्धिस्थत्वात् **तद्वदि**त्युक्तम्। यद्वा ब्रह्मणि जगद्वत् अपुरुषार्थादिप्रसङ्गादित्यर्थः। यद्वा **तद्वदि**ति मत्वर्थीयप्रत्ययः; जगद्गतापुरुषार्थादिमत्त्वप्रसङ्गादित्यर्थः। असमञ्जसत्वं दर्शयति **यः सर्वज्ञ** इत्यादिना। **परस्परविरुद्धानाम्**—विरुद्धार्थानां वाक्यानामित्यर्थः।

सिद्धान्ती शङ्कते- **अथोच्येते**ति। **शरीरसंबन्धनिबन्धनदोषाणा**मिति। रूमागतवस्त्वन्तराणां लवणत्वापत्तिर्दृश्यते; 'तत्संयोगी च पञ्चमः' इत्युच्यते चेत्यभिप्रायः। शरीरत्वासंभवमुपपादयितुं शरीरस्वभावमाह—**शरीरं ही**ति। व्यापकनिवृत्त्या व्याप्यशरीरत्वनिवृत्तिं दर्शयितुं शरीरत्वव्यापकाकारान् दर्शयति **कर्मफले**ति। अत्र परोक्तं लक्षणमप्यन्तर्गतम्; सुखदुःखेनि

---

1 सजातीयत्वमेवेत्यस्य सालक्षण्यनियम इत्यत्राभेदेनान्वयः।

पृथिव्यादिभूतसङ्घातविशेषः। तथाविधस्यैव लोकवेदयोः शरीरत्वप्रसिद्धेः। परमात्मनश्च 'अपहतपाप्मा विजरः", "अनश्नन्नन्यो अभिचाकशीति", "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः", "अप्राणो ह्यमनाः" इत्यादिभिः कर्मतत्फलभोगयोरभावादिन्द्रियाधीनभोगत्वाभावात् प्राणवत्त्वाभावाच्च न तं प्रति चेतनाचेतनयोः शरीरत्वम्। न चाचेतनव्यष्टिरूपतृणकाष्ठादीनां समष्टिरूपस्य भूतसूक्ष्मस्य चेन्द्रियाश्रयत्वादि संभवति। भूतसूक्ष्मस्य पृथिव्यादिसङ्घातत्वं च न विद्यते। चेतनस्य तु ज्ञानैकाकारस्य सर्वमेतन्न संभवतीति नतरां शरीरत्वसंभवः।

न च भोगायतनत्वं शरीरत्वमिति शरीरत्वसंभवः; भोगायतनेषु वेश्मादिषु शरीरत्वाप्रसिद्धेः॥ यत्र वर्तमानस्यैव सुखदुःखोपभोगः, तदेव भोगायतनमिति चेन्न; परकायप्रवेशजन्मसुखदुःखोपभोगायतनस्य परकायस्य प्रविष्टशरीरत्वाप्रसिद्धेः, ईश्वरस्य तु स्वतस्सिद्धनित्यनिरतिशयानन्दस्य भोगं प्रति चिदचितोरायतनत्वनियमो न संभवति, एतेन भोगसाधनमात्रस्य शरीरत्वं प्रत्युक्तम्॥

अथ मतम्—यदिच्छाधीनस्वरूपस्थितिप्रवृत्ति यत् तत् तस्य शरीरमिति—सर्वस्येश्वरेच्छाधीनस्वरूपस्थितिप्रवृत्तित्वेनेश्वरशरीरत्वं संभवतीति—तदपि न साधीयः, शरीरतया प्रसिद्धेषु तत्तच्चेतनेच्छायत्तस्वरूपत्वाभावात्, रुग्णशरीरस्य तदिच्छाधीनप्रवृत्तित्वाभावात्, मृतशरीरस्य तदायत्तस्थितित्वाभावाच्च। सालभञ्जिकादिषु चेतनेच्छाधीनस्वरूपस्थितिप्रवृत्तिषु तच्छरीरत्वाप्रसिद्धेश्च। चेतनस्य नित्यस्येश्वरेच्छायत्तस्वरूपत्वाभावाच्च न तच्छरीरत्वसंभवः। न च यत् यदेकनियाम्यम्, यदेकधार्यम्, यस्यैकशेषभूतम्, तत् तस्य शरीरमिति वाच्यम्; क्रियादिषु व्यभिचारात्। "अशरीरं शरीरेषु" "अपाणिपादो जवनो गृहीता" इत्यादिभिश्चेश्वरस्य शरीराभावः प्रतिपाद्यते।

---

भोगाश्रयत्वोक्तेः(क्तिः)। **कर्मफलभोगसाधनत्वं** मुक्तेश्वरशरीरस्थेन्द्रियव्यावर्तकम्। **पञ्चवृत्ती**ति चेष्टाश्रयत्वोक्तिः। ततः किमित्यपेक्षायां शरीरितयाऽभिमतपरमात्मस्वभावपर्यालोचनया शरीरत्वासंभवमाह **परमात्मनश्चे**ति। कर्मसंबन्धराहित्यमाह—**अपहते**ति। तत्फलाभावमाह **अनश्नन्नि**ति। इन्द्रियानपेक्षतामाह **अपाणी**ति। चेष्टाश्रयत्वाभावमाह **अप्राण** इति। शरीरतयाऽभिमतानां शरीरलक्षणविरुद्धस्वभावतां दर्शयति—**न चाचेतने**ति। भोगायतनत्वं पृथक् दूषयति **न चे**ति। चेष्टाश्रयत्वेन्द्रियाश्रयत्वयोः पूर्वोक्तं दूषणमेव। **भोगायतनम्**—भोगसाधनविशेषः। अत एव हि **भोगसाधनमात्रस्येत्युक्तम्**।

सिद्धान्त्यभिमतलक्षणं दूषयति **अथ मत**मित्यादिना। अव्याप्तिमाह—**शरीरतये**ति। अतिव्याप्तिमाह **सालभञ्जिकादिष्वि**ति। [1]असंभवमाह **चेतनस्ये**ति। **न चे**त्यादि। आदिशब्देन गुणो विवक्षितः। तद्वैविध्याद्बहुवचनम्। एवं परमात्मनश्चिदचितोश्च स्वभावालोचनया शरीरत्वं प्रतिक्षिप्तम्। अथ परस्य शरीरप्रतिषेधाच्च कस्यचित् तं प्रति शरीरत्वासंभवमाह **अशरीरमि**ति। **अपाणी**त्यादिवाक्यमिन्द्रियाभावज्ञापनाय पूर्वमुपात्तम्; इदानीमिन्द्रियाधिष्ठानावयवनिषेधमुखेन शरीराभावज्ञापनार्थम्॥

---

1 **असंभवमाहेति। सर्वस्य....संभवतीति तदुक्तम्; तन्नेत्याहेत्यर्थः।**

अतो जगद्ब्रह्मणोः शरीरशरीरिभावस्यासंभवात् सं(तत्सं)भवे च ब्रह्मणि दोषप्रसङ्गाद्ब्रह्मकारणवादे वेदान्तवाक्यानामसामञ्जस्यमिति ॥ ८ ॥ अत्रोत्तरम्—

**न तु दृष्टान्तभावात् ॥ २-१-९ ॥**

नैवमसामञ्जस्यम्—एकस्यैवावस्थाद्वयान्वयेऽपि गुणदोषव्यवस्थितेर्दृष्टान्तस्य विद्यमानत्वात्। तुशब्दोऽत्र हेयसंबन्धगन्धस्यासंभावनीयतां द्योतयति। एतदुक्तं भवति—चिदचिद्वस्तुशरीरतया तदात्मभूतस्य परस्य ब्रह्मणः सङ्कोचविकासात्मककार्यकारणभावावस्थाद्वयान्वयेऽपि न कश्चिद्विरोधः; यतः सङ्कोचविकासौ परब्रह्मशरीरभूतचिदचिद्वस्तुगतौ। शरीरगतास्तु दोषाः नात्मनि प्रसज्यन्ते, आत्मगताश्च गुणा न शरीरे; यथा देवमनुष्यादीनां सशरीराणां क्षेत्रज्ञानां शरीरगताः बालत्वयुवत्वस्थविरत्वादयो नात्मनि संबध्यन्ते; आत्मगताश्च ज्ञानसुखादयो न शरीरे; अथ च 'देवो जातो मनुष्यो जातः', तथा, 'स एव बालो युवा स्थविरश्च' इति व्यपदेशश्च मुख्यः। भूतसूक्ष्मशरीरस्यैव क्षेत्रज्ञस्य देवमनुष्यादिभाव इति, 'तदन्तरप्रतिपत्तौ' इति वक्ष्यत(ति) इति।

यत्पुनः उक्तम्—चिदचिदात्मकस्य जगतः स्थूलस्य सूक्ष्मस्य च परमात्मानं प्रति शरीरभावो नोपपद्यत इति—तत् अनाकलितसम्यङ्न्यायानुगृहीतवेदान्तवाक्यगणस्य स्वमतिपरिकल्पितकुतर्कविजृम्भितम्। सर्वे एव हि वेदान्ताः स्थूलस्य सूक्ष्मस्य चेतनस्याचेतनस्य च समस्तस्य परमात्मानं प्रति शरीरत्वं श्रावयन्ति; वाजसनेयके तावत् काण्वशाखायां माध्यन्दिनशाखायां चान्तर्यामिब्राह्मणे, "यःपृथिव्यां तिष्ठन् ...यस्य पृथिवी शरीरम्" इत्यारभ्य पृथिव्यादिसमस्तमचिद्वस्तु, "यो विज्ञाने तिष्ठन्...यस्य विज्ञानं शरीरम्", 'य आत्मनि तिष्ठन्...यस्यात्मा शरीरम्' इति चेतनञ्च पृथक्पृथङ्निर्दिश्य तस्य तस्य परमात्मशरीरत्वमभिधीयते। सुबालोपनिषदि च, 'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम्' इत्यारभ्य तद्वदेव चिदचितोः सर्वावस्थयोः परमात्मशरीरत्वमभिधाय, "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति तस्य सर्वभूतानि प्रति आत्मत्वमभिधीयते। स्मरन्ति च, "जगत् सर्वं शरीरं ते", "यदम्बु वैष्णवः कायः", "तत् सर्वं वै हरेस्तनुः", "तानि सर्वाणि तद्वपुः", "सोऽभिध्याय शरीरात् स्वात्" इत्यादि। भूतसूक्ष्मात् स्वाच्छरीरादित्यर्थः।

---

**न तु दृष्टान्तभावात्** ॥ अक्षरार्थमाह—**नैव**मिति। **ने**ति पदेनैव पूर्वपक्षे व्यावर्तितेऽपि तुशब्दः शरीरशरीरिभावसंभवज्ञापनार्थः। **तुशब्दोऽत्रे**ति। शरीरात्मत्वसंभवादित्यभिप्रायः। हेयसंबन्धस्यासम्भावनीयत्वे दृष्टान्तः क इत्यत्राह-**एतदुक्त**मिति। अमुख्यत्वमाशङ्क्याह **अथ चे**ति। 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्यपामेव देवत्वादिधर्माः, न पुरुषस्येत्यत्राह—**भूतसूक्ष्मशरीरस्ये**ति। यद्वा जीवस्य शरीरोत्पत्तेः प्रागप्यचित्संबन्धे सति हि ब्रह्मणः कार्यकारणोभयावस्थायामपि चिदचिद्विशिष्टस्य तद्गततद्दोषराहित्ये दृष्टान्तत्वमित्यत्राह—**भूतसूक्ष्मे**ति। परोक्तं शरीरत्वासंभवमनुवदति **यत्पुन**रिति। **सम्यङ्न्यायः**—प्रमाणानुगुणन्यायः। **कुतर्कः**—प्रमाणविरुद्धस्तर्कः। सर्वत्र व्याप्तं लक्षणं विवक्षुश्चिदचितोर्ब्रह्मशरीरत्वेन वेदे प्रयोगं दर्शयति **सर्वे एव ही**ति। 'सोऽभिध्याय शरीरात् स्वात्' इत्यत्र चिदचितोः शरीरत्वमस्पष्टमिति तद्याचष्टे—**भूतसूक्ष्मा**दिति। 'आसीदिदं

लोके च शरीरशब्दो घटादिशब्दवत् एकाकारद्रव्यनियतवृत्तिमनासादितः क्रिमिकीटपतङ्गसर्पनरपशुप्रभृतिष्वत्यन्तविलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते। तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम्। त्वदुक्तं च, 'कर्मफलभोगहेतुः' इत्यादिकं प्रवृत्तिनिमित्तलक्षणं न सर्वप्रयोगानुगुणम्, यथोक्तेष्वीश्वरशरीरतयाऽभिहितेषु पृथिव्यादिष्वव्याप्तेः। किञ्च, ईश्वरस्येच्छाविग्रहेषु मुक्तानां च, "स एकधा भवति" इत्यादिवाक्यावगतेषु विग्रहेषु तल्लक्षणमव्याप्तम्; कर्मफलभोगनिमित्तत्वाभावात् तेषाम्। परमपुरुषेच्छाविग्रहाश्च न पृथिव्यादिभूतसङ्घातविशेषाः; "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति स्मृतेः। अतो भूतसंघातरूपत्वं च शरीरस्याव्याप्तम्, पञ्चवृत्तिप्राणाधीनधारणत्वं च स्थावरशरीरेष्वव्याप्तम्। स्थावरेषु हि प्राणसद्भावेऽपि तस्य पञ्चधाऽवस्थाय शरीरस्य धारकत्वेनावस्थानं नास्ति। अहल्यादीनां कर्मनिमित्तशिलाकाष्ठादिशरीरेष्विन्द्रियाश्रयत्वं [च] सुखदुःखहेतुत्वं चाव्याप्तम्।

अतः, यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छे·

---

तमोभूतम्' इति प्रकृतमेव शरीरत्वेनोच्यत इत्यर्थः। **लोके** चेत्यादि। **घटादिशब्दवत्**। यथा घटादिशब्दाः एकाकारवस्तुषु मुख्याः प्रयुज्यन्ते, न तथा शरीरशब्दः; अपित्वनेकाकारवस्तुषु मुख्यः प्रयुक्तः। अतोऽनुगतत्वाय हि क्रिमिकीटादिव्यापकं लक्षणमुक्तम्। त्वस्याप्यव्याप्तत्वात् सार्वत्रिकं लक्षणान्तरं स्वीकार्यमिति भावः। **अगौणः प्रयुज्यमानो दृश्यत** इति। अस्यायमभिप्रायः—द्विपात्त्वं मनुष्यत्वं ब्राह्मणत्वं वा शरीरलक्षणत्वेन किमिति नोच्यते॥ अन्यत्रापि मुख्यप्रयोगदर्शनादिति चेत्—तर्हि लोकवेदयोर्यत्र यत्र प्रयोगो दृश्यते, तदनुयायिलक्षणं वाच्यम्; न त्वननुयायिलक्षणमुक्त्वाऽन्यत्र गौणत्वं कल्पनीयमिति। ततः किमित्यत्राह—**तेन तस्ये**ति। अनुगुणं निमित्तं ह्युक्तमित्यत्राह— **त्वदुक्तं चे**ति। **प्रवृत्तिनिमित्तलक्षण**मिति। **प्रवृत्तिनिमित्तम्**— समुदायशक्तिनिमित्तम्. वाच्यभूतम्। तच्च तत् लक्षणम्। तेन व्युत्पत्तिनिमित्तभूतस्योपलक्षणभूतस्य च लक्षणस्य व्यावृत्तिः। गोशब्दस्य गमिधात्वर्थो व्युत्पत्तिनिमित्तम्। पृथिवीशब्दवाच्यस्य पृथिवीत्वस्योपलक्षणभूतं गन्धवत्त्वम्। तदुभयमपि न प्रवृत्तिनिमित्तम्। अयमर्थः—शरीरदेहादिव्युत्पत्तिनिमित्तभूता विशरणोपचयादयो नानुगताः, गन्धोपलक्ष्यपृथिवीत्ववत शब्दप्रवृत्तिनिमित्तभूतमुपलक्षणान्तरोपलक्ष्यं जात्यादिकमपि न दृश्यते। अतो लक्षणतयाऽभिमतमिदमेव प्रवृत्तिनिमित्तमेष्टव्यम्। तच्चायुक्तम्; अननुगतत्वादिति। पाणिपादादिमच्छरीरेष्वव्याप्तिमाह—**किञ्चे**ति। **तल्लक्षण**मिति प्रथमोपात्तं कर्मफलोपभोगहेतुत्वं विवक्षितम्। भूतसङ्घातरूपत्वस्याव्याप्तिं दर्शयितुमाह— **परमपुरुषेच्छे**ति। **पञ्चवृत्ती**ति। प्राणसद्भावमात्रविवक्षायां चेतनेषु अव्यक्तादिषु चेश्वरशरीरभूतेष्वव्याप्तिरभिप्रेता। **अहल्यादीना**मिति। **इन्द्रियाश्रयत्वम्**—ज्ञानप्रवृत्तिजननपटुतरेन्द्रियाश्रयत्वम्। इन्द्रियसद्भावमात्रविवक्षायां पूर्ववदव्याप्तिरभिप्रेता। **अत** इति। अतः—अनुयायिनो लक्षणत्वात् त्वदुक्तस्य चाननुयायित्वादित्यर्थः। 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति न्यायसूत्रे शरीरस्य लक्षणत्रयमुक्तम्। 'चेष्टाभोगेन्द्रियाश्रयः' इति हि **न्यायविदः**। अस्य लक्षणत्रयस्याव्याप्तत्वात् व्यापिलक्षणत्रयमाह **यस्येत्यादिना**। यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यम्, तत् तस्य शरीरम्;

षतैकस्वरूपं च, तत् तस्य शरीरमिति शरीरलक्षणमास्थेयम्। रुग्णशरीरादिषु नियमनाद्यदर्शनं विद्यमानाया एव नियमनशक्तेः प्रतिबन्धकृतम्; अग्न्यादेः शक्तिप्रतिबन्धादौष्ण्याद्यदर्शनवत्। मृतशरीरं च चेतनवियोगसमय एव विशरितुमारब्धम्, क्षणान्तरे च विशीर्यते। पूर्वं शरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन च तत्र शरीरत्वव्यवहारः। अतः सर्वं परमपुरुषेण सर्वात्मना स्वार्थे नियाम्यं धार्यं तच्छेषतैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम्। 'अशरीरं शरीरेषु' इत्यादि च कर्मनिमित्तशरीरप्रतिषेधपरम्; यथोक्तसर्वशरीरत्वश्रवणात्। उपरितनाधिकरणेषु चैतदुपपादयिष्यते। 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्', 'न तु दृष्टान्तभावात्' इति सूत्रद्वयेन 'इतरव्यपदेशात्' इत्यधिकरणसिद्धोऽर्थः स्मारितः॥ ९॥

## स्वपक्षदोषाच्च ॥ २-१-१० ॥

न केवलं ब्रह्मकारणवादस्य निर्दोषतयैतत्समाश्रयणम्; प्रधानकारणवादस्य दुष्टत्वाच्च तत् परित्यज्य, एतदेव समाश्रयणीयम्। प्रधानकारणवादे हि जगत्प्रवृत्तिर्नोपपद्यते। तत्र हि निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसंनिधानेन प्रकृतिधर्माध्यासनिबन्धना जगत्प्रवृत्तिः। निर्विकारस्य चिन्मात्ररूपस्य प्रकृतिधर्माध्यासहेतुभूतं प्रकृतिसंनिधानं किंरूपमिति विवेचनीयम्। किं प्रकृतेः सद्भाव एव, उत तद्गतः कश्चिद्विकारः, अथ पुरुषगत एव कश्चिद्विकारः? न तावत् पुरुषगतः, अनभ्युपगमात्। नापि प्रकृतेर्विकारः, तस्याध्यासकार्य-

---

यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यम्। तत् तस्य शरीरम्, यस्य चेतनस्य यद्द्रव्यं शेषतैकस्वरूपम् तत् तस्य शरीरमिति लक्षणत्रयम्। **तच्छेषतैकस्वरूप**मिति। अत्र **एक**शब्दप्रयोगः **सर्वात्मने**ति पदस्यस्थाने द्रष्टव्यः। **सर्वात्मने**ति पदेन यावद्द्रव्यभावित्वं विवक्षितम्। **तच्छेषतैकस्वरूप**मिति पृथगुक्तिः **स्वार्थशक्य**शब्दप्रयोगानपेक्षणात। **यस्येति** पदेन शरीरस्य न घटपटादिवत् अप्रतियोगिपदार्थत्वम्, अपि तु पितृपुत्रादिवत् सप्रतियोगिकपदार्थत्वमिति दर्शितम्। सप्रतियोगिकपित्रादीनां शरीरत्वव्यावृत्त्यर्थं **नियाम्य**मित्युक्तम्। नियाम्यमित्युक्ते भृत्यादीनामपि शरीरत्वं स्यादिति तद्व्यावृत्त्यर्थं **सर्वात्मने**ति पदम्। यावद्द्रव्यभावीत्यर्थः। क्रियागुणादिव्यावृत्त्यर्थं **द्रव्य**मित्युक्तम्। आकाशादिप्रदेशगमनादिषु अशक्येष्वर्थेषु शरीरस्य नियमनासंभवात् तद्व्यावृत्त्यर्थं **स्वार्थ** इत्युक्तम्। स्वविषये इत्यर्थः। 'अर्थः स्याद्विषये मोक्षे' इत्य**भिधान**विदः। **स्व**शब्दः शरीरपरः। तत्तच्छरीरसंपाद्येषु कार्येष्विति यावत। रुग्णशरीरेषु व्यभिचारो मा भूदिति **शक्य**मित्युक्तम्। तत्र **शक्तेः** प्रतिबन्ध एव; न तु शक्त्यभावः। अग्न्यादावौष्ण्यादिवत्। ज्ञानव्यावृत्त्यर्थं **चेतनस्ये**त्युक्तम्। **न हि** ज्ञानं ज्ञानविशिष्टेन नियाम्यम्; अपि तु स्वाश्रयेण। तस्माच्चेतननियाम्यत्वाभावेन न तत्रानैकान्त्यम्। एवं लक्षणान्तरद्वयेऽपि व्यावर्त्यमुच्यते— **यस्य, सर्वात्मना, द्रव्यं**, शक्यमिति पदानां पूर्ववद्व्यावृत्तिः। **चेतनस्ये**ति पदेन प्रभाव्यावृत्तिः।

शरीरित्वप्रयुक्तदोषादिशङ्काव्यावृत्त्यर्थमाह **उपरितनाधिकरणे**ष्विति।

**स्वपक्षदोषाच्च**॥ या तु परेण पूर्वं निर्दोषत्वजगदुपादानत्वादिव्याहतिरुक्ता, सैव व्याहतिरनेन सूत्रेण परस्याऽऽपादिता। **अनभ्युपगमात्**। नित्यनिर्विकारत्वादिति भावः॥

तयाऽभ्युपेतस्याध्यासहेतुत्वासंभवात्। सद्भावमात्रस्य संनिधानत्वे मुक्तस्याप्यध्यासप्रसङ्गः इति त्वत्पक्षे जगत्प्रवृत्तिर्नोपपद्यते। अयमर्थः साङ्ख्यपक्षप्रतिक्षेपसमये, "अभ्युपगमेऽप्यर्थाभावात्" इत्यादिना प्रपञ्चयिष्यते॥ १०॥

**तर्काप्रतिष्ठानादपि॥ ११॥**

तर्कस्याप्रतिष्ठितत्वादपि श्रुतिमूलो ब्रह्मकारणवाद एव समाश्रयणीयः, न प्रधानकारणवादः। शाक्यौलूक्याक्षपादक्षपणककपिलपतञ्जलितर्काणामन्योन्यव्याघातात् तर्कस्याप्रतिष्ठितत्वं गम्यते॥११॥

**अन्यथाऽनुमेयमिति चेत् एवमप्यनिर्मोक्षप्रसङ्गः॥१२॥**

इदानीं विद्यमानानां शाक्यादीनां तर्कान् उद्दूष्य, अन्यथा प्रधानकारणवादमतिक्रान्ततदुपदर्शितदूषणत्वेनानुमास्यामह इति चेत्-एवमपि पुरुषबुद्धिमूलतर्कैकावलम्बनस्य तथैव देशान्तरकालान्तरेषु त्वदधिककुतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसंभावनया तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः। अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्। तदुपबृंहणायैव तर्क उपादेयः। तथाचाऽऽह, "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति। वेदाख्यशास्त्राविरोधिनेत्यर्थः। अतो वेदविरोधित्वेन, वेदार्थविशदीकरणरूपवेदोपबृम्हणतर्कोपादानाय साङ्ख्यस्मृतिर्नादरणीया॥ १२॥ ॥ इति विलक्षणत्वाधिकरणम्॥ ३॥

---

**तर्काप्रतिष्ठानादपि॥ तर्कस्ये**ति। केवलतर्कस्येत्यर्थः।

**अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः॥** 'तर्काप्रतिष्ठानात्' इत्यादिकम् 'अनिर्मोक्षप्रसङ्गः' इत्यन्तं नैकं सूत्रम्; सूत्रकारशैलीविरोधात्। प्रयुक्तहेतुशैथिल्याशङ्कापरिहारौ हि सूत्रान्तरकृतौ दृष्टौ, यथा, 'ईक्षतेर्नाशब्दम्,' 'गौणश्चेन्नात्मशब्दात्; आनन्दमयोऽभ्यासात्, विकारशब्दान्नेति चेन्न प्राचुर्यात्; ज्ञेयत्वावचनाच्च, वदतीति चेन्न प्राज्ञो हि प्रकरणात्' इति च॥ ननु 'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः' इत्यत्र कथं सूत्रैक्यम्? उक्तहेतुदौस्स्थ्यशङ्कापरिहारपरत्वाभावात्। साध्याभावेऽनिष्टप्रसञ्जनमुखेन हेतुदार्ढ्यपरो हि नचेदित्यादिकः सूत्रांशः; न तूक्तहेतुदौःस्थ्यशङ्कापरिहारपरः। **इदानी**मित्यादि। भूततर्कस्य भूततर्कान्तरप्रतिहतिवत् भावितर्कस्यापि भावितर्कान्तरप्रतिहतिः संभवतीत्यर्थः। **वेदशास्त्राविरोधिने**त्यत्र वेदशास्त्रशब्दयोर्वैयधिकरण्ये साङ्ख्यशास्त्रस्याप्यनुरोधः स्यादिति तद्व्यावृत्त्यर्थं व्याचष्टे **वेदे**ति। यथा, 'पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्। अतर्क्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः' इति। **अतर्क्यम्**—बाधकागोचरभूतम्। **अप्रमेयम्**—साधकाविषयभूतम्॥

**अपीता**वित्यादिसूत्रत्रयं **परै**स्त्वेवं व्याख्यातम्—अपीतौ लीयमानं कार्यं स्वाकारेण कारणं दूषयेत्, लवणमिव मधुरोदकम्। ततश्च स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वादिधर्मकत्वं ब्रह्मणः स्यात्। समस्तस्य ब्रह्मण्यविभागे सति नियामकाभावात् पुनर्भोक्तृविभागस्तेषां भोग्यनियमश्चानुपपन्नः। प्रलयेऽपि ब्रह्मणि विभक्तं चेत्, अपीतिरेव न संभवति। ब्रह्मणि प्रलीनानां पुनरुत्पत्तौ मुक्तानामप्युत्पत्तिप्रसङ्ग इत्यसामञ्जस्यपरमपीताविति सूत्रम्। तत्र दृष्टान्तेन परिहरति **न तु दृष्टान्ते**ति। घटशरावादय उच्चावचाः सन्तोऽपि स्वाकारप्रहाणेन प्रलीनत्वात् नोच्चावचाकारेण कारणं दूषयन्ति। एवं जगदपि स्थूलत्वाद्याकारप्रहाणेन लीनत्वादविभागदशायामपि न ब्रह्म दूषयति। स्वप्नदर्शी च पुरुषः स्वमायया न स्पृश्यते।

सुषुप्तप्रबुद्धपुरुषाणामिव पुनर्विभागेन निष्क्रमणोपपत्तिः ; मिथ्याज्ञानस्यानपोदितत्वात् । तस्यापोदितत्वादेव मुक्तानां न पुनरुत्पत्तिः । जगतो ब्रह्मणि विभागेन स्थित्यभावादप्ययोपपत्तिरिति । 'शब्दादिहीनात् प्रधानात् तद्युक्तविलक्षणकार्योदयानुपपत्तिः ; सर्वविकारप्रलये पुनःसृष्टौ, इदमस्योपादानम् , न त्विदमिति नियामकाभावात् भोक्तॄणां भोग्याव्यवस्थितिः ; नियामकाभावेऽपि नियमाभ्युपगमे कारणाभावसाम्यान्मुक्तानां पुनर्बन्धप्रसङ्गः ; कतिपयविभागस्थितौ तेषां प्रधानकार्यत्वाभावः'—इति दोषसाधारण्यापादनं स्वपक्षदोषाश्चेति सूत्रितमिति ।

तदिदमनुपपन्नम् । तथा हि—स्थूलत्वह्रस्वत्वाद्याकारे परित्यक्तेऽपि जडत्वानृतत्वपरित्यागाभावात् अविद्याकर्मवासनाप्रहाणाभावाच्च ब्रह्मण्यविभक्तं जगत् तेनाकारेण ब्रह्म दूषयेत् । यदि जडत्वानृतत्वकर्मवासनादिप्रहाणेन प्रपञ्चलयः, तर्ह्यविद्यातत्कृतजीवभेदश्च निवृत्तः स्यात् । न हि जडत्वानृतत्वविरहे निःस्वभावायाः अविद्याया अवस्थानमुपपद्यते । सवासनकर्मप्रहाणात् तन्मूलाविद्यानिवृत्त्या च जीवाश्च मुक्ताः स्युः । ततश्च पुनर्जगदुत्पत्तिर्न संभवेत् । अविद्यान्तरेण सर्वसंभवे, तस्यास्तत्कल्पितजीवानां च आदिमत्त्वं स्यात् , वैषम्यनैर्घृण्यादि च प्रसजेत् । मोक्षोपायनिष्पादनवैयर्थ्यं च ; प्राकृतप्रलयादेवाविद्यानिवृत्तेः ; तस्यास्सदादियत्ननिरपेक्षत्वाच्च । अतोऽप्ययदशायामपि जडत्वानृतत्वादिप्रहाणाभावात् तेनाकारेण ब्रह्मणो दूष्यत्वं दुस्तरम् ॥ जडत्वाद्याकारोऽपरमार्थ इति चेत् , तर्ह्यपरमार्थत्वं ब्रह्मास्त्रं विहाय किमर्थं स्वाकारप्रहाणदुर्बलयष्टिग्रहणे प्रयस्यते । अपरमार्थत्वापाश्रयणमपि विफलम् । मिथ्यात्वमपि हि प्रपञ्चाकारः । न हि मिथ्यात्वस्य मिथ्यात्वम् । अतो न मिथ्यात्वप्रहाणमिति मिथ्याभूतं जगत् अविभक्तं स्वाकारेण मिथ्यात्वेन ब्रह्म दूषयत्येव । मिथ्याभूतेनापि जडत्वाद्याकारेण च दूषयेत् ॥ ननु न मिथ्यात्वेन मिथ्याभूतजडत्वादिना च दूषितत्वप्रसङ्गः, शुक्तिरूप्यस्य मिथ्यात्वेऽपि मिथ्यात्वेन मिथ्याभूतरजताकारेण च शुक्तेर्दूषितत्वाभावादिति चेन्न—शुक्तेरपि त्वन्मते मिथ्यात्वात् । पातकिसंसर्गेण पुरुषस्य, रुमासंसर्गेण तद्गतवस्तुनश्च मिथ्याभूतपातकित्वलवणत्वाकारापत्त्या दूषितत्वदर्शनाच्च । पातकिरुमादयो हि पदार्थास्त्वन्मते मिथ्याभूताः ॥ तेषां व्यावहारिकसत्यत्वाद्दूषकत्वमिति चेत्—तर्हि जगतश्च व्यावहारिकसत्यत्वात् ब्रह्माविभक्तं जगत् दूषकं स्यात् ।

स्वप्नद्रष्टृपुरुषो मायया न स्पृश्यत इतीदमपि निरूपणीयम् । अस्पर्शो न तावदज्ञानस्य पुरुषानाश्रितत्वम् ; आरोप्यग्राहिपुरुषाश्रयत्वात् तत्कल्पकाज्ञानस्य । नाप्यकार्यकारित्वम् ; हस्तिशस्त्रादिकार्यकल्पकत्वात् । नापि कार्यस्य देशविप्रकर्षः ; हस्तिशस्त्रादेरविप्रकर्षात् । नापि कार्यस्यापुरुषार्थत्वविरहः ; स्वप्ने भयशोकव्यथादर्शनात् । नापि दुःखस्यापरमार्थत्वम् ; शस्त्रादिदुःखहेतोरिव दुःखस्य प्रबोधे बाधाभावात् । अपरमार्थभूतस्यापि तस्य निरसनीयतया पुरुषं प्रत्यवभासमानत्वात् । जाग्रद्दशायामपि स्वगतत्वेन दुःखसाक्षात्कर्तृत्वमेव हि दुःखित्वम् ॥ अवभासप्रतिसम्बन्धित्वमप्यपरमार्थ इति चेन्न ; बाधकप्रत्ययाभावात् । हस्तिशस्त्रादिविषयस्यैव प्रबोधे बाधः; न तु शस्त्रादिज्ञानस्य, भयादेश्च ।

भोक्तृभेदानियमप्रसङ्गस्य साङ्ख्यपक्षे तुल्यत्वापादनमप्ययुक्तम् ; आत्मनां स्वतो भिन्नत्वात्

तत्पक्षे कृत्स्नविकारप्रलयेऽपि तेषां तत्कर्मानुगुणभोग्यविशेषे पुनरपि भोक्तृत्वव्यवस्थोपपत्तेः । त्वन्मते तु आत्मभेदस्यान्तःकरणभेदकल्पितत्वात् मनोबुद्ध्यहङ्काराणां प्रलये अप्ययश्रवणादात्मभेदाभावेन पुनःसृष्टावन्येनान्तःकरणेनोपहितस्याऽऽत्मनः इदमदृष्टम् इदं शरीरम् इदं भोग्यमिति नियमानुपपत्तेश्च । प्रलयेऽप्यन्तःकरणस्थित्यभ्युपगमे तेषामन्तःकरणानामनादितया ब्रह्मकार्यत्वं न स्यात् । सांख्यपक्षे तु तेषां न प्रधानकार्यत्वहानिः, अन्तःकरणप्रलयेऽपि स्वत आत्मभेदसद्भावेनान्तःकरणस्थितेरनपेक्षितत्वात् । आत्मभेदस्य तत्तत्कर्मविशेषाणां च सद्भावात नियामकहेत्वभावसाम्यं दुर्वचम्: साङ्ख्यपक्षे मुक्तानां पुनर्बन्धप्रसङ्गोऽपि दुर्वचः ; यस्य सम्यग्ज्ञानेन निश्शेषकर्मक्षयः, तस्य हेत्वभावेन पुनः शरीरयोगाभावात् अक्षीणकर्मणां पुनर्बन्ध इति पुनर्देहसम्बन्धोपपत्तेश्च । त्वन्मते मूलभूताविद्याया एकत्वादात्मन एकत्वादिदानीमपि बन्धानुवृत्तेश्च इतःपूर्वं न कश्चिन्मुक्तः संभवति । अस्ति चेत्—स एवात्मा पुनरपि देहयोगमनुभवतीति मुक्तस्य पुनरुत्पत्तिप्रसङ्गो दुर्वारः । वर्तमानाविद्याया आदिमत्त्वं च भवेत् । जीवाज्ञानपक्षस्य भवद्भिरेव दूषितत्वात् तदवष्टम्भेन बन्धमोक्षव्यवस्थोक्तिरयुक्ता । तत्रापि मुक्तानां पुनरुत्पत्तिप्रसङ्गो दुष्परिहरः । अध्यस्तजीवभावनिवृत्त्या ब्रह्मैकतापत्तिर्हि मोक्षः । तत्रापि ध्वस्तजीवभावोऽयमंशो मुक्तः, अध्यस्तजीवभावमंशान्तरं तु देहभाग् भवतीति न वक्तुं शक्यम्, ब्रह्मणः स्वतो निरंशत्वात् । अतो ब्रह्मैकतापन्नानामेव पुनरुत्पत्तिःस्यात्, उपहितांशभेदाभावात् ॥ नन्वंशभेदस्यापि काल्पनिकतयाऽभ्युपगमान्नोक्तदोष इति चेत्—मुक्तौ निवृत्तजीवभावे अंशे स काल्पनिकभेदोऽस्ति वा, न वा? अस्ति चेत्, मुक्त एव न स्यात् । न चेत्—पूर्वोक्तदोषः स्यात् ॥ निवृत्तोपाधित्वमेव भेद इति चेत्—उपाधिनिवृत्तिः स्वरूपातिरिक्ता, न वा? न चेत्—तत्स्वरूपमेव जीवभावेन पुनरपि संसरतीत्युक्तदोषः स्थितः । अतिरिक्तत्वे, स निवृत्तिरूपविशेषः किं कृत्स्नब्रह्मवृत्तिः, उत ब्रह्मैकदेशवृत्तिः? आद्ये पूर्वोक्तदोषः । द्वितीये त्वेकदेशस्यांशान्तराद्भेदो वक्तव्यः ॥ भेदकान्तरयोगेन चेत्-तस्य भेदकोपाधेः पारमार्थ्ये अद्वैतहानिः । अपारमार्थ्ये मुक्तांशस्यैव बद्धत्वं स्यात । अपरमार्थोपाधिसंबन्धो हि त्वन्मते बन्धः ॥ न भेदकान्तरयोगापेक्षा, अपि तूपाधिविरह एव भेद इति चेत्—स किं बाध्यः, उताबाध्यः? उपाधिविरहस्य बाध्यत्वे तदवच्छिन्नांशस्य पुनरुपाधिसंबन्धान्मुक्तोत्पत्तिः स्यात् । अंशभेदस्याबाध्यत्वे, तस्य भेदस्याभेदवत् परमार्थत्वात् भेदाभेदपक्ष एवाङ्गीकृतः स्यात् । अथ तत्परिहाराय परमार्थतोंऽशभेदो नाभ्युपगतः, तर्हि मुक्तस्य पुनरुत्पत्तिरवर्जनीया स्यात् ॥

यत एवं शरावादीनां पृथिव्यामिव स्थूलत्वादिस्वाकारप्रहाणेन ब्रह्मण्यविभागापन्नस्य जगतस्तद्दूषकत्वाभावः प्रतिक्षिप्तः, अत एव, 'न तु दृष्टान्तभावात्' इति सूत्रस्य **भास्करोक्तयोजनाऽपि** व्युदस्ता भवति । तस्यापरमार्थत्वानाश्रयणेन क्षणमात्रमप्यपसरणमशक्यमिति विशेषः ।

**यादवमिश्रास्तु**—असदिति चेदिति सूत्रमेकमधिकरणान्तरम्, नासदासीदित्यादिविषयं वर्णयन्ति । सत्त्वासत्त्वनिषेधौ न परस्परप्रतिपक्षविधिरूपौ, व्याघातात् । अतोऽनुभयात्मकं निःस्वभावं शून्यं प्रतीयत इति पूर्वपक्षीकृत्य—लोकतः प्राप्तस्य प्रतिषेध्यत्वात् लोके च कार्यावस्थायामेव घटसंस्थानादिव्याप्तिरूपसत्त्वं तदभावरूपकपालत्वादिव्याप्तिलक्षणमसत्त्वञ्चोपलभ्यत इति कारणदशायां तदुभयं निषिध्यते ।

'आनीदवातम्' इति वाक्यशेषविरोधाच्च। अतो न स्वरूपसत्त्वनिषेधः ; अह्रस्वमदीर्घं व्योमेतिवत्। न ह्यत्र परस्परप्रतिपक्षविधिः ; नापि निःस्वभावत्वोक्तिः, तद्वदिति सिद्धान्तितम्। अपीतावित्यादि चाधिकरणान्तरमाहुः। तत्र—'भावाभावरूपसर्वावस्थाप्रतिषेधोऽनुपपन्नः ; विनाशहेतुवैयर्थ्यप्रसङ्गात्। विनाशहेतुना न कारणमेव निष्पाद्यम् ; तस्य प्रागपि सत्त्वात्। नापि कार्यान्तरम् ; प्रलये सर्वकार्यविनाशानुपपत्तिप्रसङ्गात्। अतोऽवस्थान्तरोत्पादः प्रलयः। अतः पूर्वाधिकरणसिद्धान्तानुपपत्तेः शून्यं तत्त्वम्' इत्याक्षिप्य, घटत्वकपालत्वादिस्थानीयभावाभावरूपविकल्पशब्दवाच्यस्थूलावस्थानिषेधेऽपि शक्तिमात्रावशेषसूक्ष्मावस्थाभ्युपगमात् तत्र दृष्टान्तभावाच्च तद्वत्प्रसङ्गादसामञ्जस्यमिति सिद्धान्तितम्। दृष्टान्तश्च तप्तलोहसमावर्तितं जलम्। तद्धि जलं जलरूपेणानुपलभ्यं सक्तुपिण्डशैथिल्यहेतुजलवत् खड्गधाराद्यशैथिल्यहेतुसूक्ष्मरूपेण, पुनर्जलपरिणामशक्तियुक्तं लोहादन्यत्वबुद्ध्यविषयस्तिष्ठतीत्युक्तम्।

तत्र तावत् असदिति चेदिति सूत्रव्याख्यानमयुक्तम् ; सूत्राक्षरानुगुण्याभावात्। सदसतोरन्यतरकोटिवाचकोऽसच्छब्दः कथं कोटिद्वयोत्तीर्णतामुपस्थापयेत्? अन्यतरकोटिसमर्पकतया हि सच्छब्दस्यानुभयात्मकत्वानुपस्थापकत्वम्॥ निरूपणीयाभावाच्च तदयुक्तम्। 'नासदासीन्नो सदासीत् तदानीम्' इत्यत्र प्रलयदशायां निषिध्यमानं सच्छब्दवाच्यं कार्यावस्थं किमपीति सिद्धम्। सहप्रयोगात् नञ्समाससामर्थ्याच्चासच्छब्दवाच्यमपि सद्व्यतिरिक्तमिति सर्वसंमतम्। तदुभयं किमित्यपेक्षायाम्, 'तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सः त्यच्चाभवत्। विज्ञानं चाविज्ञानं च' इति वाक्येन चेतनमचेतनं चेति ज्ञायते। इदञ्च गतिसामान्यनय-स्थानप्रमाणाभ्यां सिद्धमिति न पूर्वपक्षोत्थानम्। किञ्च यदि अर्थान्तरपरत्वं शङ्कनीयम्, तर्हि सदसदात्मकत्वं किं न शङ्क्यते? एकस्य तथात्वं विरुद्धमिति चेत्—एकस्यानुभयात्मकत्वमपि विरुद्धम् ; अदर्शनात्॥ अह्रस्वमदीर्घं व्योमेतिवदनुभयात्मकत्वमविरुद्धमिति चेत्—दशाङ्गुलं चतुरङ्गुलापेक्षया दीर्घं द्वादशाङ्गुलापेक्षया ह्रस्वमितिवत् अविरोधादुभयात्मकत्वमपि शङ्कनीयम्॥ सदसद्रूपेणोभयात्मकत्वं विरुद्धमिति चेत्—तदुभयवैलक्षण्यरूपमनुभयात्मकत्वमपि विरुद्धत्वान्न शङ्क्यम्॥ आपाततः शङ्केत्यप्ययुक्तम् ; उभयात्मकत्वेऽप्यापाततः शङ्काया निवारकाभावात्।

किञ्च उत्तरत्र 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण' इति शङ्कापरिहारयोरुत्थानायोगाच्च नैवमधिकरणद्वयं कल्पनीयम्। तत्र हि कार्यस्यासत्त्वात् कारणादभेदोऽनुपपन्न इत्याक्षिप्य भावविकारषट्कान्तर्गतनामरूपसंयोगलक्षणसत्त्वादर्थान्तरेण शक्तिमात्रावशेषवस्तुमात्रत्वरूपेण धर्मान्तरेणासद्व्यपदेशः, न तु स्वरूपसत्त्वाभावेनेति भवद्भिर्व्याख्यास्यते। इह च विकल्पसंज्ञकभावाभावात्मकस्थूलरूपनामसंयोगलक्षणं सत्त्वं प्रलयदशायां निषेध्यम्, न तु स्वरूपसत्त्वमित्यधिकरणद्वयेन निर्णीयते। कथमसद्व्यपदेशः स्वरूपासत्त्वशङ्कामङ्कुरयेत्?॥ नन्वत्र सत्त्वासत्त्वयोरुभयोरपि प्रतिषेधो निरूपितः ; तत्र तु केवलासत्त्वविधिर्निरूप्यत इति चेन्न ; अपीतावित्यधिकरणे प्रलयदशायां निषेध्यं सत्त्वं स्थूलावस्थायोगलक्षणम्, शक्तिमात्रावशेषवस्तुमात्ररूपेण सत्त्वं तु न निषेध्यमिति शिक्षितत्वात् असच्छब्दस्य सत्त्वप्रतिषेधकत्वात् तदभावस्य शक्तिमात्रावशेषसूक्ष्मदशारूपत्वादसच्छब्दस्य तदवस्थवस्तुमात्रोपस्थापकत्वसिद्धेः ; अधिका-

अथ शिष्टापरिग्रहाधिकरणम्—२-१-४.

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २-१-१३ ॥

शिष्टाः—परिशिष्टाः। न विद्यते वेदपरिग्रहो येषामिति अपरिग्रहाः; शिष्टाश्चापरिग्रहाश्च शिष्टापरिग्रहाः। एतेन—वेदापरिगृहीतसाङ्ख्यपक्षक्षपणेन परिशिष्टाश्च वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः ॥

परमाणुकारणवादेऽमीषां सर्वेषां संवादात् कारणवस्तुविषयस्य तर्कस्याप्रतिष्ठितत्वं न शक्यते वक्तुमित्यधिकाराशङ्का। तावन्मात्रसंवादेऽपि तर्कमूलत्वाविशेषात् परमाणुस्वरूपेऽपि शून्यात्मकत्वाशून्यात्मकत्व-ज्ञानात्मकत्वार्थात्मकत्व-क्षणिकत्वनित्यत्व-एकान्तत्वानेकान्तत्व-सत्यासत्या-

---

शङ्काऽभावाच्च। परस्परप्रतिपक्षाकारद्वयनिषेधेन व्याकुलत्वाभाव एव असद्वा इदमिति वाक्यस्य वैषम्यम्। तत् कथं शिक्षितार्थशैथिल्यशङ्कां जनयेत्?

तस्मात् सालक्षण्यनियमनिषेधानन्तरमसतः कार्यत्वशङ्कानिरासपरम्, असदिति चेदिति सूत्रम्, कार्यकारणयोरनन्यत्वे कारणस्य ब्रह्मणः परिणामादिदोषशङ्काव्युदासकमपीतावित्यादिसूत्रद्वयमित्येषां सूत्राणां परमप्रकृतसालक्षण्यनियमभङ्गानुबन्धित्वादैकाधिकरण्यं युक्तम् ॥ १२ ॥

**एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥** किं ब्रह्मकारणत्वं विचाल्यम्, उत नेति; किं वेदान्तवाक्यानां कणादाक्षपादादितर्कविरोधोऽन्यपरत्वमापादयति, नेति; किं बहुवादिसंमतपरमाणुकारणवादनिरसने तर्काप्रतिष्ठानहेतुः प्रभवति, नेति। यदा न प्रभवति, तदा कणादाद्युक्ततर्कविरोधेन श्रुतीनामन्यपरत्वात् ब्रह्मकारणत्वं विचाल्यं भवति; यदा प्रभवति, तदा तदुक्तविरोधस्य श्रुतीनामन्यपरताहेतुत्वाभावात् ब्रह्मकारणत्वमविचाल्यं भवति। शिष्टशब्दमपरिग्रहशब्दं समासं च व्याचष्टे **शिष्टा** इत्यादिना। अनेन 'शिष्टैरपरिगृहीता' इति **परोक्तव्याख्यानव्यावृत्तिः**। तथा सति हि प्रधानकारणवादस्यापि शिष्टैरपरिगृहीतत्वासिद्धिः ॥

ननु कथं मोक्षधर्मादिषु परिगृहीतस्य साङ्ख्यस्य शिष्टापरिगृहीतत्वम्॥ कथं धर्मशास्त्रपरिगृहीतस्य न्यायवैशेषिकादिपक्षस्य शिष्टापरिगृहीतत्वम्? स्मर्यते हि, 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश' इति। 'अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश' इति पराशरः। तत्प्रणीता प्रमाणप्रमेयव्यवहारमर्यादा सर्वाङ्गीकार्या। वेदप्रामाण्यम्, ईश्वरः, तदुपासनान्मोक्ष इत्यादि च तैरभ्युपेतम्। तत् कथं तस्यापरिग्रहः? नैयायिको वैशेषिकश्चेति नातीव भेद इति ॥ कारणतत्त्वस्य प्रधानप्रतिपाद्यत्वात् परमाणुकारणवादस्यौपनिषदब्रह्मकारणत्वविरोधात् विरुद्धांशस्यापरिगृहीतत्वात् तदभिप्रायो वैशेषिकादीनां शिष्टापरिग्रहव्यपदेश इति चेत्-स्वतन्त्रप्रधानकारणवादस्यापि ब्रह्मकारणवादविरुद्धत्वादुपनिषद्विरुद्धे प्रधानप्रतिपाद्ये परिग्रहाभावाच्च साङ्ख्यपक्षस्यापि शिष्टापरिग्रहव्यपदेशस्तुल्यतया प्राप्तः; एकदेशाविरोधेऽपि प्रधानप्रतिपाद्यांशविरोधस्याविशिष्टत्वात्।

सूत्राभिप्रेतार्थमाह **परमाण्वित्यादिना**। माध्यमिकमतं शून्यात्मकत्वं; योगाचारमतं ज्ञानात्मकत्वम्; क्षणिकत्वं बौद्धत्रयाभिमतम्; एकान्तत्वमार्हतव्यतिरिक्तानामभिमतम्; सत्यत्वं वैशेषिकादिमतम्; असत्यत्वं

त्मकत्वादिविसंवाददर्शनाच्चाप्रतिष्ठितत्वमेवेति परिहारः॥ इति शिष्टापरिग्रहाधिकरणम्॥

अथ भोक्त्रापत्त्यधिकरणम्—२-१-५.

**भोक्त्रापत्तेरविभागश्चेत्—स्याल्लोकवत्॥ २-१-१४॥**

पुनरपि साङ्ख्यः प्रत्यवतिष्ठते—यदुक्तम्—स्थूलसूक्ष्मचिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणरूपत्वात् जीवब्रह्मणोः स्वभावविभाग उपपद्यत इति—स तु विभागो न संभवति; ब्रह्मणः सशरीरत्वे तस्य भोक्तृत्वापत्तेः; सशरीरत्वे जीवस्येवेश्वरस्यापि सशरीरत्वप्रयुक्तसुखदुःखयोर्भोक्तृत्वस्यावर्जनीयत्वात्। ननु च 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इत्यत्रेश्वरस्य भोगप्रसङ्गपरिहार उक्तः॥ नैवम्; तत्र ह्युपास्यतया हृदयायतने संनिहितस्य शरीरान्तर्वर्तित्वमात्रेण भोगप्रसङ्गो न विद्यत इत्युक्तम्। इह तु जीववत् ब्रह्मणोऽपि सशरीरत्वे तद्वदेव सुखदुःखयोर्भोक्तृत्वप्रसङ्गो दुर्वार इत्युच्यते। दृश्यते हि सशरीराणां जीवानां शरीरगत-

---

योगाचारमतम्। आदिशब्देनैकविधत्वचतुर्विधत्वं विवक्षितम्। एकविधत्वमार्हतमते।

परैस्तु—सौगतवैशेषिकादीनां तर्ककुशलताप्रसिद्धेरधिका शङ्का, तर्कमूलत्वाविशेषात् परिहार इत्युक्तम्। तर्कमूलत्वाविशेषेऽपि परमाणुकारणवादे सर्वसंवादात् प्रतिष्ठितत्वमिति शङ्का त्ववतिष्ठते। अस्यां तु परिहृतायां तार्किकत्वप्रसिद्धिरकिञ्चित्करी। अतः प्रबलशङ्कापरिहारावेव सूत्राभिप्रेताविति युक्तम्॥ इति शिष्टापरिग्रहाधिकरणम्॥

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्॥** सङ्गतिमाह **पुनरपीति**। 'न तु दृष्टान्तभावात्' इत्यत्र शरीरगतबालत्वयुवत्वादिधर्माणां शरीरिण्यप्रसङ्गं दृष्टान्तीकृत्य परमात्मनि शरीरभूतचिदचिद्गतदोषाप्रसक्तिरुक्ता; अत्र शरीरसंसर्गप्रयुक्तभोक्तृत्वप्रसङ्गः परिह्रियते। पूर्ववदेव प्रथमो विचारः। तदर्थं किं भोक्तृजीवशरीरकस्य ब्रह्मणः स्वशरीरभूताज्जीवात् निरतिशयानन्दस्वभावतया विलक्षणत्वमस्ति, नेति; तदर्थं किं ब्रह्मणः सशरीरत्वे जीववत् सुखदुःखभोक्तृत्वं प्रसज्यते, उत नेति। दुःखादिभोक्तृत्वं किं शरीरप्रयुक्तम्, उतान्यप्रयुक्तमिति। 'न ह वै सशरीरस्य' इति श्रुतौ शरीरशब्दः किं शरीरमात्रपरः, उत पुण्यापुण्यनिमित्तशरीरपरः इति। अत्र चरमो विचारः प्रस्तुतोपयोगेन बुद्धिस्थतया कृतः; न त्वसाधारणतया कर्तव्यत्वात्। यदा शरीरमात्रपरः, तदा दुःखादिभोगस्य शरीरि(र)त्वप्रयुक्तत्वात् ब्रह्मणोऽपि तद्भोगप्रसङ्गेन शरीरभूताज्जीवान्निरतिशयानन्दतया विलक्षणत्वं नास्तीति स्यात्। यदा तस्मिन् वाक्ये शरीरशब्दः कर्मकृतशरीरपरः, तदा दुःखादिभोगस्य शरीरि(र)त्वप्रयुक्तत्वाभावात् ब्रह्मणः तद्भोगाप्रसङ्गेन शरीरभूताज्जीवान्निरतिशयानन्दतया वैलक्षण्यमस्तीति सिध्यति। कथं शरीरित्वे भोक्तृत्वमिति शङ्कायां विवृणोति **सशरीरत्व** इति। अधिकरणारम्भमाक्षिपति **ननु चेति**। परिहरति **नैवमिति**। **शरीरान्तर्वर्तित्वमात्रेणेति**। मात्रशब्देन शरीरं प्रति स्वाम्यव्यावृत्तिः। **जीववत्....सशरीरत्व** इत्यनेन शरीरस्वाम्यमभिप्रेतम्। एवं शङ्काया मुखभेदो दर्शितः। यथा कार्यवशात् परगृहं प्रविष्टस्य गृहसंनिधिमात्रेण गृहपतित्वप्रयुक्तानर्थाभ्युदयभाक्त्वं न भवति, तथोपास्यत्वाय हृदयस्थस्य शरीरसंनिधिमात्रेण शरीरित्वप्रयुक्तभोक्तृत्वापत्तिर्नास्तीति, 'संभोगप्राप्तिरिति चेत्' इत्यत्रोक्तम्; अत्र तु शरीरस्वामित्वप्रयुक्तभोक्तृत्वमाशङ्क्यमिति **भेद इत्यर्थः**॥ **तथापि परिहारैक्याच्छङ्कानुदय इति न वाच्यम्**; अत्रैव वक्तव्यं दुःखादेः कर्मोपाधि-

बालत्वस्थविरत्वादिविकारासंभवेऽपि शरीरधातुसाम्यवैषम्यनिमित्तसुखदुःखयोगः । श्रुतिश्च, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत." इति । अतः सशरीरब्रह्मकारणवादे जीवेश्वरस्वभावविभागासंभवात् केवलब्रह्मकारणवादे मृत्सुवर्णादिवत् जगद्गतापुरुषार्थादिसर्वविशेषाश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव ज्यायानिति चेत्—

अत्रोत्तरम्—स्याल्लोकवदिति । स्यादेव विभागो जीवेश्वरस्वभावयोः । न हि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तं सुखदुःखयोर्भोक्तृत्वं सशरीरत्वकृतम्, अपि तु पुण्यपापरूपकर्मकृतम् । 'न ह वै सशरीरस्य' इत्यपि कर्मारब्धदेहविषयम्; 'स एकधा भवति त्रिधा भवति', 'स यदि पितृलोककामो भवति', 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः' इति कर्मबन्धविनिर्मुक्तस्याऽऽविर्भूतस्वरूपस्य सशरीरस्यैवापुरुषार्थगन्धाभावात् । अपहतपाप्मनस्तु परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरत्वेऽपि कर्मसंबन्धगन्धो नास्तीति नतरामपुरुषार्थगन्धप्रसङ्गः । लोकवत्—यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनां च राजानुग्रहनिग्रहकृतसुखदुःखयोगेऽपि न शरीरित्वमात्रेण शासके राज्यपि शासनानुवृत्त्यतिवृत्तिनिमित्तसुखदुःखयोर्भोक्तृत्वप्रसङ्गः । यथाऽऽह द्रमिडभाष्यकारः, "यथा लोके राजा प्रचुरदन्दशूके[1] घोरेऽनर्थसङ्कटेऽपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते; अभिप्रेतांश्च लोकान् परिपालयति; भोगांश्च गन्धादीन् अविश्वजनोपभोग्यान् धारयति—तथाऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते, रक्षति च लोकान् ब्रह्मलोकादीन्; भोगांश्चाविश्वजनोपभोग्यान् धारयति" इति । मृत्सुवर्णादिवत् ब्रह्मस्वरूपपरिणामस्तु नैवाभ्युपगम्यते; अविकारत्वनिर्दोषत्वादिश्रुतेः ।

यत्तु परैर्ब्रह्मकारणवादे भोक्तृभोग्यविभागाभावमाशङ्क्य समुद्रफेनतरङ्गदृष्टान्तेन विभागप्रतिपादनपरं सूत्रं व्याख्यातम्—तदयुक्तम्; अन्तर्भावितशक्त्यविद्योपाधिकात् ब्रह्मणः सृष्टिमभ्युपगच्छतामेवमाक्षेपपरिहारयोरसङ्गतत्वात् । कारणान्तर्गतशक्त्यविद्योपाध्युपहितस्य

---

कत्वमुपजीव्य संनिधिमात्रप्रसक्ताया भोक्तृत्वशङ्कायास्तत्र [2]परिहृतत्वात् । सूत्रभेदस्तु भोक्तृत्वाशङ्काद्वारभेदनिबन्धनः । **असंभवेऽपीति** । अनेन, 'न तु दृष्टान्तभावात्' इत्यत्र परिहृतांश उक्तः । अपरिहृतांशमाह—**अत** इति । परिहरति **अत्रोत्तर**मिति । अत्र व्युत्पाद्यन्यायं दर्शयति-**अपि त्विति** । **न ह वै सशरीरस्ये**त्यपीति । मुक्तिपादे वक्ष्यमाणमर्थमुपजीव्यात्र निर्वाहः कृतः; न त्वत्रैव निर्वाह्यत्वाच्छ्रुतेः । **व्यजनादी**ति आदिशब्देन तत्तदनिष्टनिवारणसाधनानि विवक्षितानि । **भ्रमत्स्वसामर्थ्यचामर** इति । अत्र चामरग्रहणमनिष्टनिवारणानुरूपवस्तूनामुपलक्षणम् । सशरीरब्रह्मकारणत्वे जीवेश्वरविभागाभावः परिहृतः; केवलब्रह्मकारणवादे पूर्वोक्तजगद्गतापुरुषार्थादिप्रसङ्गमनभ्युपगमेन परिहरति-**मृत्सुवर्णादी**ति ।

अस्य सूत्रस्य **परैः** कृतमन्यथाव्याख्यानमनुवदति **यत्त्विति** । **भोक्तृ**शब्दो भोक्तृत्वपर इति तैरप्युक्तम् । भोग्यस्य भोक्तृत्वापत्तिं भोक्तुर्भोग्यत्वापत्तिं चाशङ्क्य परैः परिहृतम् । तत् दूषयति—**तदयुक्त**मिति । आक्षेपपरिहारयोरसङ्गतत्वमुपपादयति—**कारणान्तर्गतेति** । **उपाधेश्च भोग्यत्वादित्य**त्रोपाधिशब्दः शक्त्यविद्योपाधीनां त्रयाणामपि वाचकः । यथा वादशब्दः कथासामान्यवाची, कथाविशेषवाची च—तद्वत् । यद्वा **उपाधिशब्दे**नाचिदंशो विवक्षितः । उपहितब्रह्मणो भोक्तृत्वमुपाधेर्भोग्यत्वं

---

1. दंदश्यते इत्यवयवव्युत्पत्त्या दंशमशकादिः दन्दशूक इति भावप्रकाशिका ।

2. परीति । तस्य गुणसूत्रत्वादेतदधिकरणसिद्धार्थस्मरणमात्रमित्येव न : विशेषोप्यस्तीति भावः ॥

भोक्तृत्वात् उपाधेश्च भोग्यत्वात् विलक्षणयोस्तयोः परस्परभावापत्तिर्हि न संभवति । स्वरूपपरिणामस्तु तैरपि नाभ्युपेयते; 'न कर्माविभागादिति चेन्नानादित्वात्' इति क्षेत्रज्ञानां तद्गतकर्मणां चानादित्वप्रतिपादनात् । स्वरूपपरिणामाभ्युपगमेऽपि भोक्तृभोग्याविभागाशङ्का कस्यचिदपि न जायते; मृत्सुवर्णादिपरिणामरूपघटशरावकटकमकुटादिविभागवत् भोक्तृभोग्यविभागोपपत्तेः। स्वरूपपरिणामे च ब्रह्मण एव भोक्तृभोग्यत्वापत्तिरिति पुनरप्यसामञ्जस्यमेव ॥ १४ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ अथ आरम्भणाधिकरणम्—२-१-६.

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २-१-१५ ॥

'असदिति चेन्न प्रतिषेधमात्रत्वात्' इत्यादिषु कारणभूताद्ब्रह्मणः कार्यभूतस्य जगतोऽन-

---

चास्तु, तथापि तयोरुपाधिब्रह्मणोरविभाग आशङ्क्य परिह्रियत इत्यत्राह-**विलक्षणयो**रिति। स्वरूपस्यैव परिणामे शङ्कापरिहारावुपपद्येते इत्यत्राह-**स्वरूपे**ति। कुत इत्यत्राह-**न कर्मे**ति। क्षेत्रज्ञानादित्वाभ्युपगमे उपहितस्य ब्रह्मणः क्षेत्रज्ञत्वेन, उपाधेश्च भोग्यस्वरूपेण नित्यत्वाभ्युपगमात् नित्यत्वेनाभ्युपगतयोस्तयोरविभागाभावः सिद्ध एवेत्यर्थः। अभ्युपगम्य दूषणमाह **स्वरूपपरिणामाभ्युपगमे**ऽपीति। दृष्टान्तमाह **मृत्सुवर्णादी**ति। कटकमकुटादीनां कालभेदेन अविभाग उपपद्यत इति चेत्—तत् फेनतरङ्गदृष्टान्तेऽपि समानम्; यस्तु विभागः फेनतरङ्गदृष्टान्तेन साध्यते, स स्वरूपपरिणामाभ्युपगमेऽपि स्वयमेव सिध्यतीति भावः। स्वरूपपरिणामाभ्युपगमे, 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्', 'न तु दृष्टान्तभावात्' इति विकारापुरुषार्थापातात् निर्विकारत्वादिश्रुतीनामसामञ्जस्यमुक्तं परिहृतम्; तच्च दूषणमपरिहृतं स्यादित्याह **स्वरूपपरिणामे चे**ति ॥

**तदनन्यत्वमारम्भणशब्दादिभ्यः** ॥ सङ्गतिमाह **असदि**तीति। **इत्यादिषु**—सूत्रेष्वित्यर्थः। ब्रह्मणो जगत्कारणत्वं संभवति, नेति। किं ब्रह्मकार्यत्वे जगतः श्रुतिसिद्धं ब्रह्मणोऽनन्यत्वं संभवति, नेति। किं वाचारम्भणमित्यादिवाक्यानि कारणस्यैवावस्थान्तरापत्त्या कार्यत्वं बोधयितुं प्रभवन्ति, नेति। किं बुद्धिशब्दान्तरादयोऽवस्थाभेदनिबन्धनाः, उत द्रव्यभेदनिबन्धनाः इति। यदा बुद्धिभेदादयः स्वरूपान्यत्वनिबन्धनाः, तदा कार्यस्य कारणादन्यतया जगतो ब्रह्मान्यत्वापत्तेस्तदनन्यतया व्यपदिश्यमानं ब्रह्म न कारणं भवतीति स्यात्। यदा बुद्धिभेदादीनामवस्थान्तरनिबन्धनत्वम्, कार्यस्य कारणादनन्यत्वेन जगतो ब्रह्मानन्यत्वसिद्धेस्तदनन्यतया व्यपदिश्यमानस्य ब्रह्मणो जगत्कारणत्वं संभवतीति सिध्यति।

**अत्र केचित्** तदनन्यत्वं वर्णयन्ति, **तस्मात्**—कारणाद्ब्रह्मणः **कार्यस्यानन्यत्वम्**—परमार्थतो व्यतिरेकेणाभाव इति। जडाजडयोरेकत्वायोगादनन्यत्वं नाम नैक्यम्, किं तु भेदाभावः। भेदस्य प्रतीयमानत्वादसत्त्वस्य दुर्वचत्वात् परमार्थतो व्यतिरेकेणाभाव इत्युक्तम्। तत् तावत् निरूप्यम्। यद्य**नन्यशब्दो** बहुव्रीहिरभिमतः, तदाऽन्यशून्यत्वमनन्यत्वम्। तेन कार्यधर्मिनिषेधात् प्रपञ्चमिथ्यात्वं सिध्यति; यथा निर्धनत्वमिति धनाभावः। तथा सति तस्यानन्यत्वमिति योजनीयम्, न तु तस्मादिति। पुरुषस्य निर्धनत्वमिति हि व्यपदेशः; न तु पुरुषान्निर्धनत्वमिति। '**तस्मात्** कारणात् परमार्थतो**ऽनन्यत्वम्**—व्यतिरेकेणाभावः कार्यस्यावगम्यते'

**न्यत्वमभ्युपगम्य ब्रह्मणो जगत्कारणत्वमुपपादितम्; इदानीं तदेवानन्यत्वमाक्षिप्य समाधीयते।**

इति हि तेषां योजना। अतस्तत्पुरुषसामर्थ्याद् अनन्यत्वमन्यत्वाभावः स्यात्। ततश्चैक्यं विहितं स्यात्; न तु मिथ्यात्वम्, यथा मनुष्यादनन्यत्वं ब्राह्मणस्य, वृक्षादनन्यत्वं पलाशस्येति। न हि ब्राह्मणपलाशयोर्मिथ्यात्वमुच्यते। अतोऽनन्यत्वशब्देन न कार्यमिथ्यात्वसिद्धिः। परमार्थत इत्यध्याहारश्च तन्निरपेक्षार्थे संभवति अनुपपन्नः। यदि परमार्थव्यतिरेकाभावशब्द ऐक्यपरो न भवेत्, तदा व्यतिरेकशब्दवैयर्थ्यञ्च; परमार्थतोऽभाव इत्येतावता कार्यमिथ्यात्वसिद्धेः। अतस्तदसत्त्वमिति सूत्रं शिक्षणीयम्। 'मृत्तिकेत्येव' इति विषयवाक्यस्थ इतिशब्दश्च वृथा स्यात्॥ ननु तत्पुरुषपक्षेऽपि चन्द्रादनन्यो द्वितीयश्चन्द्र इत्यत्र द्वितीयचन्द्रस्यैव कार्यस्य मिथ्यात्वसिद्धिरिति चेन्न; तत्रापि द्वित्वस्यैव मिथ्यात्वाच्चन्द्रैकत्वसिद्धेः॥ रज्जोरनन्यः सर्प इत्यत्र सर्पमिथ्यात्ववत् कार्यमिथ्यात्वमिति चेन्न; मातुरनन्या वन्ध्येतिवत् वाक्यस्य व्याहतार्थत्वात्॥ न व्याहतिः, सर्पमिथ्यात्वस्य विवक्षितत्वादिति चेन्न; अशाब्दत्वान्मिथ्यात्वस्य॥ ननु अग्निना सिञ्चेदित्यत्र सेचनवाचिशब्दस्य दाहवाचित्वाभावाद्धि व्याघातः। अत्र तु अमुख्यवृत्त्या व्याहतिपरिहार इति चेत्—अनन्यसर्पशब्दयोः कस्यामुख्यता मता? यद्यनन्यशब्दस्यारोपितपरत्वमाश्रित्य सर्पो रज्ज्वारोपित इत्यर्थो विवक्षितः स्यात्, तर्हि तद्वदेव तदनन्यत्वमिति सौत्रं पदमप्यारोपितपरं स्यात्। तदानीम्, 'सत्त्वाच्चापरस्य' इति सूत्रवैघट्यं स्यात्। तद्धि कारणदशायामपि कार्यस्य कारणे सत्त्वं ब्रूते। न हि, 'आरोपः पाश्चात्त्यः, आरोपितवस्तु प्रागपि सत्' इति युज्यते॥ प्रागपि कारणात्मना सत्त्वं युक्तमिति चेन्न; असतः कार्यस्य परमार्थभूतकारणात्मना सत्त्वायोगात्। यदि सर्पशब्देनाधिष्ठानं लक्ष्यते, एवमेव कार्यशब्दोपलक्षितस्य सन्मात्रस्य कारणादनन्यत्वं स्यात्। तथा सति कार्यस्य कारणादनन्यत्वं न सिध्यति। सन्मात्रस्यापरिणामिनो निर्दोषस्य कारणत्वाभावात्; अविकारस्याकल्पितस्य कार्यत्वाभावाच्च॥ ननु सन्मात्रमेव कारणाविद्याशबलं कारणम्; कल्पिताकारोपहितम्, घटस्सन् पटस्सन् इत्यवभासमानं तदेव कार्यमित्यनन्यत्वमिति चेत्—अविद्याशबलत्वं नाम किमविद्योपलक्षितत्वम्, उताविद्याविशिष्टत्वम्? प्रथमे ब्रह्मकारणत्वासिद्धिरेव। न हि शाखोपलक्षितस्य चन्द्रस्य पत्रपुष्पाद्युपादानत्वम्; नापि सारसोपलक्षितकेदारस्य सारसगतगतिशब्दाद्युपादानत्वम्। यदि कारणाविद्याविशिष्टं सन्मात्रमेव कल्पिताकारविशिष्टं कार्यमित्यनन्यत्वम्, ततोऽपि कारणावस्थप्रकृतिशरीरकमेव ब्रह्म कार्यावस्थप्रकृतिशरीरकमित्यनन्यत्वोपपादनं वरम्, 'यस्याव्यक्तं शरीरम्', 'यस्य पृथिवी शरीरम्' इति श्रुतानुगुणनिर्वाहे संभवत्यश्रुतकल्पनानुपपत्तेः; सकलप्रमाणबाधाभावात्, परमार्थत इत्यध्याहारनैरपेक्ष्यात्; श्रुतौ इतिशब्दवैयर्थ्याभावाच्च।

यद्व्यतिरेकेण यस्य नोपलम्भसद्भावौ, स तस्मादनतिरिक्तः; यथा मृदो घट इत्यनुमानपरम्। 'भावेचोपलब्धेः' इति सूत्रं व्याख्यातम्; उपलम्भसद्भावयोः समुच्चयात् धूमाग्न्योरालोकचाक्षुषरूपयोश्चानन्यत्वव्युदास इति। अत्रोच्यते। न तावत् कार्यावस्थायाः कारणेनैकत्वं साध्यम्; अनुवृत्तसत्यनित्याजडस्य तस्य व्यावृत्तासत्यानित्यजडावस्थायाश्चैकत्वव्याघातात्; जातिव्यक्त्योरनेका[1]न्तत्वाच्च। तत्राप्य-

1. अनेकान्तत्वात—भेदनियमाभावप्रसंगादित्यर्थः।

भेदेऽभिमते गुणगुणिनोरनैकान्त्यम्। तत्राप्यभिन्नत्वं दुर्वचम्, जातिगुणयोरैक्यप्रसङ्गात्। जात्यभिन्नं हि वस्तु जातिरेव ; तस्यैव गुणादभिन्नत्वे जातिरेव गुणः स्यात्। अस्त्विति न वाच्यम् ; अयं नीलः पटः, नायं नील इति जातिसद्भावेऽपि गुणाभावव्यवहारदर्शनात्। कार्यमिथ्यात्वे साध्ये दृष्टान्तः साध्यविकलः, मृत्कार्यस्य घटस्य बाधादर्शनात्। शुक्तिरूप्यदृष्टान्तपरिग्रहेऽप्यनैकान्त्यम् ; हेतोर्घटेऽपि वृत्तेः। प्रतिपन्नोपाधौ बाधितत्वेन सोपाधिकञ्च (कत्वञ्च ?) कार्यग्राहिप्रमाणबाधितत्वञ्च।

तृतीये च सूत्रे—यस्य कारणे पूर्वं सत्त्वं नास्ति, न तत् ततो जायते, यथा सिकतासु तैलमित्यनन्यत्वे युक्तिरुक्ता। इयं च कार्यमिथ्यात्ववादिनोऽनुपपन्ना। रज्जौ प्रागसतः काल्पनिकसर्पस्यारोपदर्शनात्। प्रागपि सोऽस्ति चेत्, प्रतीयेत। काल्पनिकानामर्थानां प्रतीयमानतयैव हि सत्त्वम्॥ ननु कल्पिताकारोपहितमधिष्ठानं कार्यम्। तत्राधिष्ठानस्वरूपं प्राङ्नास्ति चेत्, न तत्र कार्यकल्पना भवतीति सूत्रार्थ इति चेत्—तत्तु निरधिष्ठानभ्रमासंभवनिराकरणेन दत्तोत्तरं भवति। यदुक्तं कारणस्य सत्त्वं प्रामाणिकम्; कार्यं च सदेवावभासते। तत्र सत्त्वद्वयानुपलम्भात् सन्मात्रातिरिक्तः कार्याकारो मिथ्येति—तदयुक्तम् ; सामान्यरूपमुपाधिरूपमसद्व्यावृत्तिरूपं वा सत्त्वं विशेषणविशेष्ययोः साधारणं दृष्टमिति तावता विशेषणमिथ्यात्वासिद्धेः। न हि दण्डिनि स्पन्दमाने स्पन्दमानत्वमेकं दृष्टमिति दण्डदेवदत्तयोरनन्यत्वम्। अतो मृषावाद्यभिमतमनन्यत्वमनुपपन्नम्॥

**औपाधिकभे[दाभे]दवादे**ऽपि परिणामास्पदस्योपाधेश्च ब्रह्मणश्च भिन्नाभिन्नतयाऽनन्यत्वं वाच्यम्। तत्र खण्डगतशृङ्गलोमादीनां खण्डादभिन्नेन मुण्डेनानन्यत्ववत् - जगद्ब्रह्मणोरनन्यत्वममुख्यम्। ननु न केवलं खण्डमुण्डयोरिव भिन्नाभिन्नत्वमात्रमचिद्ब्रह्मणोः ; किन्तु—ब्रह्मणः शक्तिरूपत्वादुपाधेः ; यथाऽग्नेरौष्ण्यादिः। अतः—शक्तिशक्तिमद्रूपेणोपाधिब्रह्मणोर्भिन्नाभिन्नत्वाज्जगतो ब्रह्मानन्यत्वमिति॥ उच्यते; शक्तिर्नाम किं सामर्थ्यपर्यायो ब्रह्मधर्मविशेषः, उत सूक्ष्मावस्था प्रकृतिरेव ? आद्ये ब्रह्मणो निर्विकारत्वश्रुतिविरोधः ; ब्रह्मणो मृत्पिण्डनिर्विशेषत्वात्। मृत्पिण्डो हि घटादिपरिणामशक्तियुक्तो विकारीत्युच्यते। द्वितीये तु खण्डकार्यस्य शृङ्गादेर्मुण्डादनन्यत्ववदमुख्यत्वम्। अतस्तदनुपपन्नम्॥

**यादवप्रकाश**मतेऽपि भोक्तृभोग्यनियन्तॄणां ब्रह्मांशत्वाभ्युपगमात् महदादिकार्याणां भोक्तृनियन्तृभ्यामनन्यत्वम् अयःकार्यस्य रूपस्य सुवर्णरजताभ्यामिवानुपपन्नम् ; महदादीनां प्रकृतेरनन्यत्वे ब्रह्मकारणवादासिद्धिः। सन्मात्रब्रह्मणोऽनन्यत्वं सच्छब्दप्रवृत्तिनिमित्तविशेषनिरूपणाच्छिथिलीभवति। अबाध्यत्वादिकं हि प्रवृत्तिनिमित्तत्वेन वर्तते। जगत् सतोऽनन्यदित्युक्ते, जगदबाध्यमित्युक्तं भवति। ततश्च ब्रह्मानन्यत्वमनुक्तं स्यात्। 'यस्य भाव एव यदुपलब्धिः, तत् तस्य कारणम्। तदवस्थतन्त्वादिभाव एव प्रावरणादिकार्यदर्शनात् तन्त्वादिकं प्रावरणादेः कारणम्। एवं तत्कारणभूते तन्तावपि न द्रव्यान्तरं कारणम्' इति द्रव्यान्तरकल्पकतया पराभिमतस्य कार्यभेदस्यान्यथासिद्धिपरं द्वितीयसूत्रं व्याख्यातम्। तदयुक्तम् ; पूर्वपक्षयुक्तीनामन्यथासिद्धेराद्यसूत्र एव विवक्षितत्वात् तद्विषयभूते वाक्यैकदेश एव विकारनामधेययोर्वाक्पूर्वकसर्वव्यवहारसिद्ध्यर्थतोपपादनात्। अतस्तत्रान्यत्वहेत्वन्यथासिद्धावुक्तायामनन्यत्वनियामक-

तत्र काणादाः प्राहुः—न कारणात् कार्यस्यानन्यत्वं सम्भवति, विलक्षणबुद्धिबोध्यत्वात्; न खलु तन्तुपटमृत्पिण्डघटादिषु कार्यकारणविषया बुद्धिरेकरूपा। शब्दभेदाच्च; न हि तन्तवः पट इत्युच्यन्ते, पटो वा तन्तव इति। कार्यभेदाच्च; न हि मृत्पिण्डेनोदकमाह्रियते, घटेन वा कुडयं निर्मीयते। कालभेदाच्च; पूर्वकालञ्च कारणम्, अपरकालं च कार्यम्। आकारभेदाच्च; पिण्डाकारं कारणम्, कार्यं च पृथुबुध्नोदराकारम्। तथा सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते। सङ्ख्याभेदश्च दृश्यते—बहवस्तन्तवः, एकश्च पटः।

कारकव्यापारवैयर्थ्यञ्च। कारणमेव चेत् कार्यं किं कारकव्यापारसाध्यं स्यात्? सत्यपि कार्ये कार्योपयोगितया कारकव्यापारेण भवितव्यं चेत्, सर्वदा कारकव्यापारेण नोपरन्तव्यम्। सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात्॥

अथ—कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते। अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चेत्युच्यते॥ तदसत्; अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वेऽनवस्थानात्; अनपेक्षत्वे कार्यस्य नित्योपलब्धिप्रसङ्गात्; तदुत्पत्त्यभ्युपगमे चासत्कार्यवादप्रसङ्गात्। किञ्च कारकव्यापारस्याभिव्यञ्जकत्वे घटार्थेन कारकव्यापारेण करकादेरप्यभिव्यक्तिः प्रसज्यते। संप्रतिपन्नाभिव्यञ्जकभावेषु दीपादिष्वभिव्यङ्ग्यविशेषनियमादर्शनात्। न हि घटार्थमारोपितः प्रदीपः करकादीन्नाभि-

---

हेतुपरत्वं द्वितीयस्य युक्तम्। इदं सत् इदं सदिति कार्यस्य सर्वस्य सत्त्वविषयप्रतीतिः सर्वैरविभज्यमानं सन्मात्रमुपस्थापयति; तदेव सन्मात्रं ब्रह्म; अतो ब्रह्मानन्यत्वमिति प्रत्यक्षादेवानन्यत्वोपपादनपरं सत्त्वाच्चावरस्येति सूत्रं व्याख्यातम्। तदत्यन्तानुपपन्नम्। 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः' 'सहैव सन्तं न विजानन्ति देवाः', 'न संदृशे तिष्ठति रूपमस्य', 'हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति', 'क इत्था वेद यत्र सः', 'तं दुर्दर्शं गूढमनुप्रविष्टम्', 'अध्यात्मयोगाधिगमेन देवं मत्वा' इत्यादिभिः श्रुतिभिः प्रत्यक्षाद्यगोचरत्वाभिधानात्, योगैकदृश्यत्वाभिधानाच्च॥ अदृश्यत्वादिविषयं शास्त्रमीश्वरविषयम्; न तु सन्मात्रब्रह्मविषयमिति चेन्न—'यत्तदद्रेश्यमग्राह्यम्.... यद्भूतयोनिं परिपश्यन्ति धीराः।', 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति कृत्स्नोपादानस्य ब्रह्मण एवादृश्यत्वाद्यभिधानात्; ईश्वरातिरिक्तब्रह्मणो निष्प्रमाणकत्वात्; कारणवाक्यानां निर्विषयत्वप्रसङ्गाच्च। सद्द्रव्यं हि प्रत्यक्षसिद्धम्; अवस्थाविशेषाश्च(च)। द्रव्यानन्यत्वं [च] अनन्यत्वसाधकयुक्तिभिः सिद्धम्। किमत्र वेदान्तकृत्यम्॥ अतः सूत्राणां वक्ष्यमाण एवार्थ उपपन्नः॥

**काणादाः**—वैशेषिकाः। विलक्षणबुद्धिबोध्यत्वम्, शब्दभेदः, कार्यभेदः, कालभेदः, आकारभेदः, परिमाणभेदः, भावाभावविरोधः, सङ्ख्याभेदः, कारकव्यापारवैयर्थ्यम्, नित्यानित्यविभागानुपपत्तिश्चेति हेतवः उच्यन्ते **नकारणा**दित्यादिना। **न खल्वि**त्यादिभिस्तत्तद्धेतुनिर्देशानन्तरभाव्यमन्यैर्हेत्वसिद्धिशंकाव्यावृत्तिः क्रियते। **सत्यपी**ति। **कार्योपयोगितया**—उदकाहरणादिकार्योपयोगितयेत्यर्थः। कार्योपयोगः सामर्थ्योत्पादनद्वारेण वा, साक्षाद्वा। तत्र वैशेषिकैः शक्त्यनभ्युपगमात् साक्षादुपयोगः परिशिष्यत इति तत्र दूषणमुक्तम्। **तदसदि**त्यादि। किमभिव्यक्तिरुत्पद्यते, उताभिव्यज्यते, उताभिव्यक्त्यनपेक्षा नित्या इति विकल्पाभिप्रायेण दूषयति—**अभिव्यक्तेरि**त्यादिना। दूषणान्तरमाह—**किञ्चे**ति।

व्यनक्ति। अतोऽसतः कार्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वम्। अतश्च सत्कार्यवादासिद्धिः।

न च नियतकारणोपादानं सत एव कार्यत्वं साधयति, कारणशक्तिनियमादेव तदुपपत्तेः॥

नन्वसत्कार्यवादिनोऽपि कारकव्यापारो नोपपद्यते। प्रागुत्पत्तेः कार्यस्यासत्त्वात् कार्या-दन्यत्र कारकव्यापारेण भवितव्यम्। तत्रान्यत्वाविशेषात् तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्यते॥ नैवम्; यत्कार्योत्पादनशक्तं यत् कारणम्, तद्गतकारकव्यापारेण तत्कार्योत्पत्तिसिद्धेः।

अत्राहुः—कारणादनन्यत् कार्यम्। न हि परमार्थतः कारणव्यतिरिक्तं कार्यं नाम वस्त्वस्ति; अविद्यानिबन्धनत्वात्सकलकार्यतद्व्यवहारयोः। अतः—यथा कारणभूतात् मृद्द्रव्यात् घटादिषु विकारेषूपलभ्यमानाद्व्यतिरिक्तं घटशरावादिकार्यं व्यवहारमात्रालम्बनं मिथ्या, कारणभूतं मृद्द्रव्यमेव सत्यम्, तथा—निर्विशेषसन्मात्रात् कारणभूताद्ब्रह्मणोऽन्योऽहङ्कारादिव्यवहारालम्बनः कृत्स्नः प्रपञ्चो मिथ्या, कारणभूतं सन्मात्रं ब्रह्मैव सत्यम्। तस्मात् कारणव्यतिरिक्तं कार्यं नास्तीति कारणादनन्यत् कार्यम्।

न च वाच्यं शुक्तिकारजतादीनामिव घटादिकार्याणामसत्यत्वाप्रसिद्धेर्दृष्टान्तानुपपत्तिरिति; यतस्तत्रापि युक्त्या मृद्द्रव्यमात्रमेव सत्यतया व्यवस्थाप्यते, तदतिरिक्तं तु युक्त्या बाध्यते॥ का पुनरत्र युक्तिः? मृद्द्रव्यमात्रस्यानुवर्तमानत्वं तदतिरिक्तस्य च व्यावर्तमानत्वम्। रज्जुसर्पादिषु ह्यनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेः सत्यता, व्यावर्तमानस्य च सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा। तथाऽनुवर्तमानमधिष्ठानभूतं मृद्द्रव्यमेव सत्यम्; व्यावर्तमानास्तु घटशरावादयोऽसत्य-भूताः। किञ्च सत आत्मनो विनाशाभावादसतश्च शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाश-योगि कार्यं सदसद्भ्यामनिर्वचनीयमिति गम्यते। अनिर्वचनीयं च शुक्तिकारजतादिवन्मृषैव। तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम्।

---

**न चे**ति। मृत्पिण्डे घटो न विद्यते चेत्—असत्त्वाविशेषात् तन्तुरपि घटचिकीर्षुणोपादीयेत। न च तथा क्रियते। अतः कारणविशेषोपादाननियमानुपपत्त्या कार्यं सदेवेत्यर्थः। परिहरति-**कारणे**ति। घटो मृत्पिण्ड एव विद्यते, न तन्तुष्विति नियमः कथम्? तदेव तत्सद्भावयोग्यमिति चेत्—तदुत्पादनयोग्यं तदेवेति तस्यैवोपादाननियमो युक्त इत्यर्थः। एवमुपादानकारणनियमानुपपत्तिरूपं चोद्यं परिहृतम्। अथ कारकव्यापारानुपपत्तिमुखेन चोदयति **नन्वि**ति। परिहरति **नैव**मिति। अनन्यत्वश्रुतीनाममुख्यत्वमभिमतम्।

अस्मिन् पक्षे सिद्धान्त्येकदेशिमुखेनोत्तरमाह **अत्राहु**रिति॥ वाचारम्भणमित्यादि-वाक्यस्यार्थमभिप्रेत्याह- **अतः यथे**ति। **विकारेषूपलभ्यमाना**दित्यनेनानुवर्तमानत्वहेतुर्विवक्षितः। एकमेवाद्वितीयमित्यस्यार्थमाह **तथे**ति। **अहङ्कारादिव्यवहारालम्बनः**। 'अहमिति प्रथमोऽध्यासः' इति हि तेषां ग्रन्थः। **आदिशब्देन** ज्ञेयमुच्यते। ब्रह्मव्यतिरिक्तपरमार्थभूतकार्याभावस्त**दनन्यत्वशब्दा**र्थ इति भावः। दृष्टान्तस्य साध्यविकलतां शङ्कते **न च वाच्यमि**त्यादिना। परिहरति—**यत** इति। यथा ज्वालावत् क्षणिकमित्युक्ते ज्वालाभेदस्याप्रत्यक्षत्वेन न साध्यवैकल्यम्, तद्वदित्यर्थः। **का पुन**-रित्यादि। सदसद्विलक्षणत्वं नाम मिथ्यात्वे हेत्वन्तरमाह—**किञ्चे**ति। कार्यस्य सदसद्विलक्षणत्वे व्यतिरेकिणं हेतुमाह **सत आत्मन** इति। सदसद्विलक्षणत्वं मिथ्यात्वेऽन्वयिहेतुरिति दर्शयति **अनिर्वचनीयं चे**ति। सपक्षस्य शुक्तिरजतादेरनिर्वचनीयत्वं दर्शयति-**तस्य चे**ति।

किञ्च कार्यमुत्पादयन्मृदादिकारणद्रव्यं किमविकृतमेव, कार्यमुत्पादयति, उत कञ्चन विशेषमापन्नम्? न तावदविकृतम् उत्पादयति; सर्वदोत्पादकत्वप्रसङ्गात्। नापि विशेषान्तरमापन्नम्; विशेषान्तरापत्तेरपि विशेषान्तरापत्तिपूर्वकत्वेन भवितव्यम्, तस्या अपि तथेत्यनवस्थानात्॥ अविकृतमेव देशकालनिमित्तविशेषसंबद्धं कार्यमुत्पादयतीति चेन्न; देशादिविशेषसम्बन्धोऽपि ह्यविकृतस्य, विशेषान्तरमापन्नस्य च पूर्ववन्न संभवति॥ न च वाच्यम्—मृत्सुवर्णदुग्धादिभ्यो घटरुचकदध्यादीनामुत्पत्तिर्दृश्यते; शुक्तिकारजतादिवत् देशकालादिप्रतिपन्नोपाधौ बाधश्च न दृश्यते; अतः प्रतीतिशरणानां कारणात्कार्योत्पत्तिरवश्याश्रयणीयेति—विकल्पासहत्वात्। किं हेमादिमात्रमेव स्वस्तिकादेरारम्भकम्, उत रुचकादिः, अथ रुचकाद्याश्रयो हेमादिः? न तावत् हेमादिमात्रमारम्भकम्; हेमव्यतिरिक्तस्य कार्यस्याभावात्, स्वात्मानं प्रति आत्मन आरम्भकत्वासंभवाच्च॥ हेमव्यतिरिक्तं स्वस्तिकं दृश्यत इति चेत्—न हेमव्यतिरिक्तं तत्; हेमप्रत्यभिज्ञानात्; तदतिरिक्तवस्त्वन्तरानुपलब्धेश्च॥ बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं साधितमिति चेन्न; अनिरूपितवस्त्ववलम्बनानां बुद्धिशब्दान्तरादीनां शुक्तिकारजतबुद्धिशब्दादिवत् भ्रान्तिमूलत्वेन वस्त्वन्तरसद्भावस्यासाधकत्वात्। नापि रुचकादि स्वस्तिकादेरारम्भकम्। स्वस्तिके हि रुचकम्, पट इव तन्तवः, भवताऽपि नोपलभ्यते। नापि रुचकाश्रयभूतं हेम; रुचकाश्रयाकारेण हेम्नः स्वस्तिकेऽनुपलब्धेः।

अतो मृदादिकारणातिरिक्तस्य कार्यस्यासत्यत्वदर्शनाद्ब्रह्मव्यतिरिक्तं कृत्स्नं जगत् कार्यत्वेन मिथ्याभूतम्। तदिदं ब्रह्मव्यतिरिक्तमिथ्यात्वसुखप्रतिपत्तये काल्पनिकमृदादिसत्यत्व-

---

व्यावर्तमानत्वहेतोरुपाधिशङ्कापरिहाराय कार्यस्य दुर्निरूपतामनुग्राहकतर्करूपेणाह—**किञ्चेति**। सत्यं चेत्, सुनिरूपं स्यादित्यर्थः। **नापीति**। विशेषान्तरापत्तिः किं विकृतस्य, उत न? नो चेत्, सर्वदा विशेषान्तरापत्तिप्रसङ्गः। विशेषान्तरापत्तिपूर्वकत्वे तस्यापि विशेषान्तरापत्तिपूर्वकत्वम्, तस्यापि तथेत्यनवस्थेत्यर्थः। **अविकृतमेवे**त्यादि। **विशेष**शब्दो देशकालनिमित्तैः प्रत्येकं संबध्यते। अविकृतस्य चेत्, सर्वदा देशकालादिसमवधानं स्यात्; विकृतस्य चेत् अनवस्थेत्यर्थः। उक्ततर्कस्य प्रत्यक्षविरोधमाशङ्क्याह **न च वाच्यमि**ति। परिहरति **विकल्पासहत्वादि**ति। किं द्रव्यमात्रं कारणम्, उत आकारमात्रम्, उत आकारविशिष्टं द्रव्यमिति विकल्पाः। तेषु प्रथमं शिरो दूषयति—**न तावदि**त्यादिना। समवायिकारणांशविषयं प्रत्यभिज्ञानमित्याशङ्क्याह **तदतिरिक्ते**ति। तर्हि तत्र व्यक्तिद्वयमुपलभ्येत; न तथोपलब्धिरित्यर्थः। द्वितीयं शिरो दूषयति **नापी**ति। कार्ये समवायिकारणानुवृत्त्या तदुपलब्धिः परेणाभ्युपगम्यते, तत्र पटे तन्तव इव स्वस्तिके रुचकमुपलभ्येतेत्यर्थः। तृतीयं शिरो दूषयति—**नापी**ति। रुचकाकारविशिष्टं कारणं चेत्, स्वस्तिके रुचकाकारविशिष्टहेमोपलम्भप्रसङ्ग इत्यर्थः। एवमत्र केवल प्रमाणात् तर्कानुगृहीतं प्रमाणं प्रबलमिति प्रत्यक्षविरोधपरिहार इत्युक्तं भवति। **अत** इति। कारणातिरिक्तवस्त्वनुपलब्ध्या न प्रत्यक्षबाध इत्यर्थः। तत एव न सोपाधिकत्वम्, पक्षेऽपि साधितत्वेनोपाधित्वाभावादिति भावः। ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वे मृत्तिकादीनां सत्यत्वं व्याहतमित्यत्राह **तदिदमि**ति। न मृत्तिकासत्यत्वे तात्पर्यम्; अपि तु ब्रह्मव्यतिरिक्तमिथ्यात्व एव तात्पर्यमित्यर्थः। न केवलं ब्रह्मकार्य-

माश्रित्य कार्यस्यासत्यत्वं प्रतिपादितम् । परमार्थतस्तु मृत्सुवर्णादि कारणमपि घटरुचकादि-कार्यवन्मिथ्याभूतम्, ब्रह्मकार्यत्वाविशेषात् । 'ऐतदात्म्यमिदं सर्वं तत् सत्यम्', 'नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्', 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्येवमादिभिः श्रुतिभिश्च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वमवगम्यते । न चाऽऽगमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीयः; यथोक्तप्रकारेण कार्यस्य सर्वस्य मिथ्यात्वावगमात् ; प्रत्यक्षस्य सन्मात्रविषयत्वाच्च । विरोधे सत्यप्यसम्भावितदोषस्य चरमभाविनः, स्वरूपसद्भावादौ प्रत्यक्षाद्यपेक्षत्वेऽपि प्रमितौ निराकाङ्क्षस्य निरवकाशस्य शास्त्रस्य बलीयस्त्वात् । अतः कारणभूताद्ब्रह्मणोऽन्यत् सर्वं मिथ्या ।

न च प्रपञ्चमिथ्यात्वेन जीवमिथ्यात्वमाशङ्कनीयम्, ब्रह्मण एव जीवभावात् । ब्रह्मैव हि सर्वशरीरेषु जीवभावमनुभवति, "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य", "एको देवः सर्वभूतेषु गूढः", "एको देवो बहुधा निविष्टः", "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते", "नान्योऽतोस्ति द्रष्टा", इत्येवमादिभ्यः ॥

नन्वेकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवतीति चेत्, 'पादे मे वेदना', 'शिरसि मे सुखम्' इतिवत् सर्वशरीरेषु सुखदुःखप्रतिसन्धानं स्यात्, जीवेश्वरबद्धमुक्तशिष्याचार्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात् ॥

अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एवैवं समादधते—एकस्यैव ब्रह्मणः प्रतिबिम्बभूतानां जीवानां सुखित्वदुःखित्वादयः, एकस्यैव मुखस्य प्रतिबिम्बानां मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत् तत्तदुपाधिवशात् व्यवस्थाप्यन्ते ॥ ननु 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' इत्यादिश्रुतेर्न जीवा ब्रह्मणो भिद्यन्त इत्युक्तम् । सत्यं परमार्थतः । काल्पनिकं तु भेदमाश्रित्येयं व्यवस्थोच्यते ॥ कस्य पुनः कल्पना? न तावद्ब्रह्मणः; तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात् । नापि जीवानाम्; इतरेतराश्रयत्वप्रसङ्गात्—कल्प-

---

त्वेन जगतो मिथ्यात्वं सिध्यति, कण्ठोक्तमपीत्याह **ऐतदात्म्य**मिति । 'ऐतदात्म्यमिदं सर्वम्' इति बाधार्थे सामानाधिकरण्यमिति भावः । 'आदित्यो यूपः' इत्यादिषु प्रत्यक्षेण बाधमभिप्रेत्य इहापि तमाशङ्कयाह **न चागमावग**तेति । परिहरति **यथोक्ते**ति । आदित्यो यूप इत्यादिवाक्यमन्यपरम् । अत्र तूपक्रमोपसंहारादिलिङ्गैस्तात्पर्यमस्त्येवेति न प्रत्यक्षेण बाध इत्यभिप्रायः । अविरोधमाह-**प्रत्यक्षस्ये**ति । यद्वा किं शब्दतः प्रतीत्यभावात्, प्रत्यक्षविरोधाद्वाऽन्यपरत्वं शङ्कयत इत्यभिप्रेत्य शब्दतः प्रतिपत्त्यभावं परिहरति **यथोक्ते**ति । प्रत्यक्षविरोधं परिहरति **प्रत्यक्षस्ये**ति । विरोधमभ्युपगम्याह **विरोधे सत्यपी**ति । भेदवासनामूलत्वं **सम्भावितदोषत्वम्**, अपच्छेदन्यायाभिप्रायेणाह **चरमभाविन** इति । **स्वरूपेति । आदि**-शब्देन व्युत्पत्तिरभिप्रेता । **प्रमितौ निराकाङ्क्षस्ये**ति । **प्रमितौ**—प्रमितिहेतुत्वे ; अर्थनिश्चायकत्व इत्यर्थः । शास्त्रस्य शब्दस्वरूपग्रहणव्युत्पत्त्यादिषु प्रत्यक्षाद्यपेक्षा अस्ति, तथापि शास्त्रज्ञानं स्मृतिज्ञानवत् स्वार्थविषयज्ञानान्तरानुभूतत्वेन न स्वविषयं दर्शयति ; अपि तु अनन्यगोचरमेव दर्शयतीत्यर्थः । **नन्वि**-त्यादि । **पादे मे वेदना** इत्यादिना जीवेश्वरेत्यादिना च लौकिकवैदिकव्यवस्थानुपपत्तिरुक्ता । एतद्व्यवस्थासिद्ध्यर्थं जीवाज्ञानवादपक्षमुपन्यस्यति **अत्र केचि**दिति । **नन्वि**त्यादि । **सत्यं परमार्थतः**—परमार्थतो न **भिद्यन्त इति सत्यम्** ; वयं त्वौपाधिकभेदमाश्रित्य ब्रूम इत्यर्थः । **कस्येत्यादि** । अत्रोक्तमितरेतराश्रयं

नाधीनो हि जीवभावः, जीवाश्रया च कल्पनेति ॥ नैतदेवम्; अविद्याजीवभावयोर्बीजाङ्कुरन्यायेनानादित्वात्। किञ्च प्रासादनिगरणादिवदनुपपन्नैकवेषायामवस्तुभूतायामविद्यायां नेतरेतराश्रयत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्ति। वस्तुतो ब्रह्माव्यतिरिक्तानां जीवानां स्वतो विशुद्धत्वेऽपि कृपाणादिगतमुखप्रतिबिम्बश्यामतादिवत् औपाधिकाशुद्धिसंभवादविद्याश्रयत्वोपपत्तेः काल्पनिकत्वोपपत्तिः। प्रतिबिम्बगतश्यामतादिवत् जीवगताशुद्धिरपि भ्रान्तिरेव; अन्यथाऽनिर्मोक्षप्रसङ्गात्। जीवानां भ्रमस्य प्रवाहानादित्वान्न तद्धेतुरन्वेषणीय इति।

तदेतदविदिताद्वैतयाथात्म्यानां भेदवादश्रद्धालुजनसबहुमानावलोकनलिप्साविजृम्भितम्। तथा हि—जीवस्याकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वे, ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात्। तदतिरिक्तेन तस्मिन् कल्पितेनाऽऽकारेणाविद्याश्रयत्वे, जडस्याविद्याश्रयत्वमुक्तं स्यात्। न खल्वद्वैतवादिनस्तदुभयव्यतिरिक्तमाकारमभ्युपगच्छन्ति ॥ कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमिति चेत्—तन्न; स्वरूपस्याखण्डैकरसस्याविद्यामन्तरेण विशिष्टरूपत्वासिद्धेः। अविद्याश्रयाकार एव हि निरूप्यते। किञ्च बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं हि जीवाज्ञानवादाश्रयणम्। सा तु व्यवस्था जीवाज्ञानपक्षेऽपि न सिध्यति। अविद्याविनाश एव हि मोक्षः। तत्रैकस्मिन् मुक्ते अविद्याविनाशादितरेऽपि विमुच्येरन्॥ अन्यस्यामुक्तत्वादविद्या तिष्ठतीति चेत्—तर्ह्येकस्याप्य-

---

परिहरति नैतदेवमिति। मुखान्तरेणापि परिहरति। किञ्चेति। अवस्तुभूतायाम्—अपरमार्थभूतायाम्। अनवक्लृप्तिः असिद्धिः। यथा ब्रह्मणः स्वतःशुद्धत्वेन नाविद्याश्रयत्वम्, तथा ब्रह्माव्यतिरिक्तस्यापि जीवस्य स्वतःशुद्धत्वेनाविद्याश्रयत्वानुपपत्त्या तत्कार्यजन्मजरामरणादिभ्रमानुपपत्तिरित्यत्राह वस्तुतो ब्रह्मेति। यथौपाधिकाशुद्धिर्वस्तुतो मुखाव्यतिरिक्तत्वेऽपि मुखप्रतिबिम्बे संभवति, तथा वस्तुतो ब्रह्माव्यतिरिक्तत्वेन स्वतःशुद्धत्वे सत्यप्यौपाधिकाशुद्धिसंभवादविद्याश्रयत्वेन काल्पनिकत्वमित्यर्थः। अशुद्धिर्नाम स्वतःशुद्धत्वप्रतियोग्याकारः; अविद्यासंबन्धयोग्यतेत्यर्थः। काल्पनिकत्वोपपत्तिः—जन्मजरामरणादेः काल्पनिकत्वोपपत्तिरित्यर्थः। औपाधिकाशुद्धेरपि ज्ञानानिवर्त्यत्वं स्यादित्यत्राह प्रतिबिम्बगतेति। अशुद्धिविषयभ्रमेणोत्तरोत्तराविद्याश्रयत्वम्, अविद्याश्रयत्वेनोत्तरोत्तराशुद्धिविषयभ्रम इत्यन्योन्याश्रयत्वमाशङ्क्याह जीवानां भ्रमस्येति। जीवाज्ञानपक्षसमाप्तिद्योतनार्थमितिकरणम्।

दूषयति तदेतदिति। अविदिताद्वैतयाथात्म्यानाम्—अद्वैतानिपुणानाम्। श्रद्धालुशब्देन भेदवादेऽप्यकौशलं विवक्षितम्। उभयतोपि भ्रष्टैरेवमुक्तमिति भावः। किमकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वम्, उत कल्पिताकारेण, अथ कल्पिताकारविशिष्टरूपेणेति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति जीवस्येति। द्वितीयं दूषयति तदतिरिक्तेनेति। कथं जडस्याविद्याश्रयत्वमुक्तं स्यात्। जीवो ह्यविद्याश्रय इत्यत्राह न खल्विति। ब्रह्म चिद्रूपम्; कल्पितं तु जडम्; तदुभयातिरिक्तानभ्युपगमात् कल्पिताकारेण अविद्याश्रयत्वे जडस्यैवाविद्याश्रयत्वमुक्तं स्यादित्यर्थः। तृतीयं शिरः शङ्कते कल्पितेति। दूषयति तन्नेति। ततः किमित्यत्राह अविद्याश्रयाकार इति। अविद्याश्रयत्वे सति विशिष्टत्वम्, विशिष्टाकार एवाविद्याश्रय इत्यात्माश्रयणमित्यर्थः। किञ्चेत्यादि। अविद्या किमेका, उत बह्वी इति विकल्पमभिप्रेत्य एकत्वपक्षे दूषणमाह तत्रैकस्मिन्निति। तत्रापि किमविद्या नश्यति, उत न नश्यति इति विकल्पमभिप्रेत्य नाशपक्षे दूषणमुक्तं तत्रेति। अविनाशपक्षं दूषयति अन्यस्येति। अथा-

मुक्तिः स्यात्; अविद्याया अविनष्टत्वात् ॥ प्रतिजीवमविद्याभेदः कल्प्यते । तत्र यस्याविद्या विनष्टा, स मोक्ष्यते; यस्य त्वविनष्टा, स भन्त्स्यत इति चेत्—तन्न; प्रतिजीवमिति जीवभेदमाश्रित्य ब्रूषे। स जीवभेदः किं स्वाभाविकः, उताविद्याकल्पितः? न तावत् स्वाभाविकः; अनभ्युपगमात्; भेदसिद्ध्यर्थस्य चाविद्याकल्पनस्य व्यर्थत्वात्। अथाविद्याकल्पितः, तत्रेयं जीवभेदकल्पिकाऽविद्या किं ब्रह्मणः, उत जीवानाम्? ब्रह्मण इति चेत्—आगतोऽसि मदीयं मार्गम्। अथ जीवानाम्, किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसि॥ अथ प्रतिजीवं बद्धमुक्तव्यवस्थासिद्ध्यर्थं याः अविद्याः कल्प्यन्ते, ताभिरेव जीवभेदोऽपीति मनुषे—जीवभेदसिद्धौ ताः सिद्ध्यन्ति, तासु सिद्धासु जीवभेदसिद्धिरितीतरेतराश्रयत्वम्। न चात्र बीजाङ्कुरन्यायः सिद्ध्यति। बीजाङ्कुरेषु ह्यन्यदन्यद्बीजमन्यस्यान्यस्याङ्कुरस्योत्पादकम्; इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते, तानेवाश्रित्य तासां सिद्धिरित्यश(शं)कनीयता॥ अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे—तथा सति जीवानां भङ्गुरत्वमकृताभ्यागमकृतविप्रणाशादिप्रसङ्गश्च। अत एव ब्रह्मणः पूर्वपूर्वजीवभावा[1]श्रयाभिरविद्याभिरुत्तरोत्तरजीवभावकल्पनमित्यपि निरस्तम्। अविद्याप्रवाहेऽभ्युपगम्यमाने तत्तत्कल्पितजीवभावस्यापि तद्वत् प्रवाहानादिता स्यात्; न ध्रुवरूपता। आमोक्षाच्च जीवस्य ध्रुवत्वमिष्टं न सिद्ध्येत्।

---

विद्याबहुत्वपक्षमनुवदति—**प्रतिजीवमिति**। **भन्त्स्यते**—बद्धो भविष्यतीत्यर्थः। दूषयति—**तन्नेति**। अत्रापि विकल्पयति **स जीवभेद** इति। **अनभ्युपगमात्**—अद्वैतहानिप्रसङ्गेनानभ्युपगमात्। द्वितीयं शिरो विकल्पयति **किमिति**। प्रथमपक्षस्योत्तरमाह **ब्रह्मण इति चेदिति**। द्वितीयं शिरो दूषयति **अथेति**। **किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसीति**। जीवभेदकल्पकाविद्या जीवकल्पनात् प्रागेव न जीवान् आश्रयितुं क्षमा, जीवासिद्धेरित्यर्थः। या जीवभेदकल्पिका अविद्याः, ता एव जीवाश्रयाः बद्धमुक्तादिव्यवस्थाहेतव इति पक्षमनूद्य दूषयति **अथ प्रतिजीवमिति**। बीजाङ्कुरन्यायेन परिहारस्यानुपपत्तिमाह **नचेति**। बीजाङ्कुरेषूत्पादकबीजस्योत्पाद्याङ्कुरापेक्षा नास्ति। उत्पादकाङ्कुरमन्यत्, उत्पाद्यं चान्यत्। अत्र तु जीवभेदकल्पकाविद्यायाः कल्पनीयजीवाश्रयापेक्षाऽस्ति; कल्पकाविद्याश्रयो जीवः, स एव कल्प्यश्चेति वैषम्यम्। **अशकनीयता**—साधयितुमशक्यतेत्यर्थः। उत्पाद्योत्पादकाङ्कुरव्यक्तिभेदवत् कल्पकाविद्याश्रय-कल्प्यजीवव्यक्तिभेदार्थं प्रवाहानादित्वाभ्युपगमे दूषणमाह **अथेति**। **अकृताभ्यागमकृतनाशः**[2] (?) श्रुत्यर्थापत्तिः, **आदि**शब्देन जीवस्वरूपनित्यत्वादिश्रुतिविरोधो विवक्षितः। एवं जीवाख्यधर्मिणः प्रवाहानादित्वकल्पने दूषणमुक्तम्; जीवत्वधर्मतत्कल्पकाविद्ययोः प्रवाहानादित्वेऽप्युक्तं दूषणमतिदिशति **अत एवेति**। **पूर्वपूर्वजी[वभा]वाश्रयाविद्ययोत्तरोत्तरजीवभावकल्पनम्**—तत्त (द्व ?)-दाश्रयाविद्यया तदुत्तरोत्तरजीवभावकल्पनमित्यर्थः। अस्य पक्षस्य निरस्ततां विवृणोति **अविद्याप्रवाह इति**। धर्मिधर्मकल्पनपक्षयोरुभयोरपि तुल्यं दूषणमाह **आमोक्षाच्चेति**। **जीवस्य**—जीवभावविशिष्टस्येत्यर्थः।

---

1. जीवभावाश्रयेति तालकोशपाठ एव भावप्रकाशिकायामपि। जीवभावाश्रयेति जीवभावनिमित्तकेत्यर्थ इत्युक्तम॥

2. अकृताभ्यागमकृतविप्रणाशेति श्रुत्यर्थापत्तिविरोधः इतिरीत्या पाठः स्यात्। विवक्षित इत्यत्रान्वयः।

यच्चोक्तम्—अविद्याया अवस्तुरूपत्वेनानुपपन्नतैकवेषायाः नेतरेतराश्रयत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्तीति—तथा सति मुक्तान् परं च ब्रह्म आश्रयेदविद्या ॥ शुद्धविद्यास्वरूपत्वाद् शुद्धिरूपा न तत्र प्रसजतीति चेत्—किमुपपत्त्यनुवर्तिनी अविद्या? एवं तर्ह्युक्ताभिरुपपत्तिभिर्जीवानपि नाश्रयेत्।

किञ्च, जीवाश्रयाया अविद्यायास्तत्त्वज्ञानोदयान्नाशे सति, जीवो नश्येद्वा, न वा? यदि नश्येत्, स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्। नो चेत्, अविद्यानाशेऽप्यनिर्मोक्षः, ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात्।

यच्चोक्तम्—मणिकृपाणदर्पणादिषूपलभ्यमानमुखमलिनत्वविमलत्वादिवत् शुद्ध्यशुद्ध्यादिव्यवस्थोपपत्तिरिति—तत्रेदं विमर्शनीयम्—अल्पत्वमलिनत्वादय औपाधिका दोषाः कदा नश्येयुरिति ॥ कृपाणाद्युपाध्यपगमे इति चेत्—किं तदा अल्पत्वाद्याश्रयः प्रतिबिम्बं तिष्ठति वा, न वा? ॥ तिष्ठतीति चेत्—तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः। नश्यति चेत्—तद्वदेव जीवनाशात् स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्। किञ्च यस्य ह्यपुरुषार्थरूपदोषप्रतिभासः, तस्य तदुच्छेदः पुरुषार्थः। तत्र किमौपाधिकदोषप्रतिभासो बिम्बस्थानीयस्य ब्रह्मणः, उत प्रतिबिम्बस्थानीयस्य जीवस्य, उतान्यस्य कस्यचित्?। आद्ययोः कल्पयोर्दृष्टान्तोऽयं न सङ्गच्छते; मुखस्य मुखप्रतिबिम्बस्य चाल्पत्वादिदोषप्रतिभासशून्यत्वात्। न हि मुखं तत्प्रतिबिम्बं वा चेतयते। ब्रह्मणो दोषप्रतिभासे ब्रह्माविद्याप्रसङ्गश्च। तृतीयोऽपि कल्पो न कल्पते; जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात्। किञ्च, अविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयम्। न तावदविद्या; अचेतनत्वात्। नापि जीवः; आत्माश्रयदोषप्रसङ्गात्. शुक्तिकारजतादिवदविद्या-

---

अविद्यायाः दुर्घटत्वेन परिहारं दूषयति—**यच्चोक्तमि**ति। **शुद्धविद्यास्वरूपत्वात्**—शुद्धज्ञप्तिरूपत्वात्। **उक्ताभिरुपपत्तिभिः**—अन्योन्याश्रयादिभिः। मोक्षानुपपत्त्या दूषयति **किञ्चे**ति। **नोचेदि**ति। अविद्याकार्यस्य जीवत्वस्यावस्थानादनिर्मोक्ष इत्यर्थः। दार्ष्टान्तिकपर्यालोचनया दूषणमुक्तम्; अथ दृष्टान्तालोचनया दूषयति **यच्चोक्तमि**ति। अपुरुषार्थप्रतिभासानुपपत्तिमुखेन दूषयिष्यन् दोषप्रतिभासस्यावश्यम्भाविता, माह **किञ्च यस्य ही**ति। अपुरुषार्थदोषप्रतिभासस्य निरसनीयत्वात् तन्निरासाय हि वेदान्तारम्भः। बिम्बप्रतिबिम्बस्थानीययोर्जीवब्रह्मणोर्दोषप्रतिभासायोगात् तन्निरासार्थो वेदान्तोऽनारभ्य इति दूषणं दर्शयितुं **यस्य** हीत्याद्युक्तम्। दृष्टान्ते मुखतत्प्रतिबिम्बतद्व्यतिरिक्तचेतनसद्भावात् तदभिप्रायेण विकल्पयति—**उतान्यस्य कस्यचिदि**ति। **न हि मुखं तत्प्रतिबिम्बं वा चेतयत** इति। रूपवदचेतनविशेषस्यैव प्रतिबिम्बं दृष्टम्। तस्माद्ब्रह्मजीवयोर्बिम्बप्रतिबिम्बभावाभ्युपगमे तयोरचेतनत्वमापततीति भावः। ब्रह्मणो दोषप्रतिभासपक्षेऽधिकं दूषणमाह **ब्रह्मण** इति। **अन्यस्ये**ति पक्षं दूषयति—**तृतीयोऽपी**ति। पूर्वमविद्याश्रयानुपपत्तिरुक्ता, इदानीमविद्याकार्यभ्रमाश्रयो निरूप्यते **किञ्चे**ति। **कः कल्पकः**—को भ्रमाश्रय इत्यर्थः। **नापि जीव** इति। कल्पकत्वात् सिद्धिः कल्प्यत्वादसिद्धिश्चेति स्वसिद्धेः स्वापेक्षा। जीवविषयभ्रमाश्रये सिद्धे हि जीवक्लृप्तिः; जीवसिद्धेः स्वविषयभ्रमाश्रयभूतेन स्वेनैव सापेक्षत्वादात्माश्रयत्वमित्यर्थः। अनुपपत्त्यन्तरमाह **शुक्तिके**ति। कल्पकत्वाच्च भ्रमाश्रयत्वमनुपपन्नम्। न हि दोषकल्प्यं

कल्प्यत्वाच्च जीवभावस्य॥ ब्रह्मैव कल्पकमिति चेत्—ब्रह्माज्ञानमेवायातम्। किञ्च ब्रह्माज्ञानाभ्युपगमे किं ब्रह्म जीवान् पश्यति वा न वा? न पश्यति चेत्—ईक्षापूर्विका विचित्रसृष्टिर्नामरूपव्याकरणमित्यादि ब्रह्मणो न स्यात्। अथ पश्यति, अखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्माज्ञानप्रसङ्गः। अत एव मायाऽविद्याविभागवादोऽपि निरस्तः। अज्ञानमन्तरेण हि मायिनोऽपि ब्रह्मणो जीवदर्शित्वं न स्यात्। न च मायावी परानदृष्ट्वा मोहयितुमलम्। नापि माया मायाविनो दर्शनसाधनम्। दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात् तस्याः। अथ ब्रह्मणो माया तस्य जीवदर्शित्वं कुर्वती जीवमोहनस्य हेतुरिति मन्यसे--तर्हि परिशुद्धस्याखण्डैकरसस्वप्रकाशस्य ब्रह्मणः परदर्शनं कुर्वती माया मायापरपर्याया अविद्यैव स्यात्॥ अथ मतम्—विपरीतदर्शनहेतुरविद्या, माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः। अतस्तस्या नाविद्यात्वमिति॥ नैवम्; चन्द्रैकत्वे ज्ञायमाने द्विचन्द्रदर्शनहेतोरप्यविद्यात्वात्। यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्तं जानाति, न तर्हि तन्मोहयति। न ह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान् मोहयितुमीहते। अथापुरुषार्थपरमार्थदर्शनहेतुरविद्या। माया तु ब्रह्मणो नापुरुषार्थदर्शनहेतुः। अतोऽस्या नाविद्यात्वमिति मतम्—तन्न; द्विचन्द्रज्ञानस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव; तन्निरसने च प्रयस्यन्ति। यदि च नापुरुषार्थदर्शनकरी माया, तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनी स्यात्॥ अस्तु को दोष इति चेत्-द्वैतदर्शनमेव दोषः। 'यत्र हि द्वैतमिव भवति....यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्याद्यद्वैतश्रुतयः प्रकुप्येयुः॥ परमार्थविषया अद्वैतश्रुतयः, मायायास्त्वपरमार्थत्वादविरोध इति चेत्—अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोऽपरमार्थभूतमायादर्शनं तद्वत्ता च अविद्यामन्तरेण नोपपद्यते। किञ्च अपरमार्थभूतया नित्यया मायया किं प्रयोजनं ब्रह्मणः? जीवमोहनमिति चेत्- अपुरुषार्थेन मोहनेन किं प्रयोजनम्? क्रीडेति चेत् – अपरिच्छिन्नानन्दस्य किं क्रीडया?॥ परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति चेत्—नैवमिहोपपद्यते। न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थ-

---

रजतमर्थान्तरविषयभ्रमाश्रय इत्यर्थः। **किञ्चे**त्यादि। **अथ पश्यती**ति। अपरमार्थजीवप्रतीतिरविद्यया विना न संभवतीत्यर्थः। **अत एव**—ईक्षापूर्वकसृष्ट्याद्यर्थं ब्रह्मणोऽपरमार्थजीवदर्शनार्थं चाविद्यान्वयाभ्युपगमादेवेत्यर्थः। माया परभ्रमहेतुः, अविद्या स्वभ्रमहेतुरिति हि तन्मतम्। 'मायिनं तु महेश्वरम्' इति श्रुतिरेतद्विभागहेतुः। अपरमार्थजीवदर्शनमज्ञानेनैव संभवतीत्येतदेवोपपादयति **अज्ञानमित्या**दिना। किमविद्यया विना जीवदर्शित्वम्; उत जीवदर्शनेन विना तन्मोहनमिति पक्षयोः प्रथमं दूषितम् **अज्ञानमि**ति। अनन्तरं शिरो दूषयति **न चे**ति। माययैव जीवदर्शनहेतुरित्यत्राह **नापी**ति। न हि परमोहनहेतुरेव माया मोहयितुर्मोहनीयदर्शनहेतुः। अस्यास्तु मायाया अयं विशेष इत्याशङ्कते **अथे**ति। प्रतिवदति **तर्ही**ति। नामनि विवाद आवयोरित्यर्थः। शङ्कते **अथे**ति। परिहरति **नैवमि**ति। न केवलं सत्यत्वेन दर्शनहेतुरेव दोषः. अपरमार्थप्रतिभासमात्रहेतुर्दोष इत्यभिप्रायेणाह—**चन्द्रैकत्व** इति। अपुरुषार्थदर्शनहेतुत्वतदभावरूपं वैषम्यं शङ्कते **अथे**ति। परिहरति **तन्ने**ति। **अपरिच्छिन्ने**ति। स्वरूपस्यैवापरिच्छिन्नानन्दत्वात् इच्छया मायादर्शनमनुपपन्नम्। तस्याश्चापरमार्थत्वादविद्याकृतमेव तद्दर्शनमित्यर्थः। **तद्वत्ता** तत्सम्बन्धः। **किञ्चे**ति। अपुरुषार्थत्वाभावेन निरसनीयत्वाभावाभिप्रायेणाह **नित्यये**ति। आश्रय-

तया प्रतिभासमानैर्निष्पन्नयाऽपरमार्थभूतया क्रीडया अपरमार्थभूतेन च तत्प्रतिभासेनानुन्मत्तानां क्रीडारसो निष्पद्यते। मायाश्रयतयाऽभिमतब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनासंभवश्च पूर्ववदेव द्रष्टव्यः। अतो ब्रह्मैवानाद्यविद्याशबलं स्वगतनानात्वं पश्यतीत्यद्वितीयत्वं ब्रह्मणोऽभ्युपयद्भिरभ्युपेत्यम्।

यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति—न तत् ब्रह्माज्ञानवादिनश्चोद्यम्; एकस्यैव ब्रह्मणोऽज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वात् बद्धमुक्तादिव्यवस्थाया एवाभावात्। व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्यादिव्यवस्थायाः काल्पनिकत्वात् स्वप्नदर्शिन इव चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः। स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्यादयः तदविद्याकल्पिता एव। अत एव बह्वविद्याकल्पनमपि न युक्तिमत्। पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिनाऽपि नाभ्युपेयते। अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते।

प्रयोगश्च—बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वाविद्याकल्पिताः, अपारमार्थिकत्वात्, स्वप्नदृष्टव्यवस्थावदिति। शरीरान्तराण्यपि मयैवात्मवन्ति, शरीरत्वात्, एतच्छरीरवत्। शरीरान्तराण्यपि मदविद्याकल्पितानि शरीरत्वात् कार्यत्वात् जडत्वात् कल्पितत्वाद्वा, एतच्छरीरवत्। विवादाध्यासितं चेतनजातमहमेव, चेतनत्वात्, यदनहम् तदचेतनं दृष्टम्, यथा घटः; अतः स्वपरविभागो बद्धमुक्तशिष्याचार्यादिव्यवस्थाश्चैकस्याविद्याकल्पिताः।

द्वैतवादिनाऽपि बद्धमुक्तव्यवस्था दुरुपपादा; अतीतानां कल्पानामानन्त्यादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसंभवादमुक्तानुपपत्तेः॥ अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत्, किमिदमनन्तत्वम्? असङ्ख्येयत्वमिति चेन्न; भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वेऽपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव। तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात्॥ आत्मनां निस्सङ्ख्यत्वादीश्वरस्याविद्यमान-

---

विभागानुपपत्त्या [निरसनीयत्वाभावानुपपत्त्या] च मायाऽविद्याविभागानुपपत्तिमाह **मायाश्रयतये**ति। **पूर्ववदे**वेति। अन्योन्याश्रयादिभिर्दूषणैरित्यर्थः। मायाविद्याविभागानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वमुपसंहरति **अत** इति। बन्धमोक्षादिव्यवस्थानुपपत्तिं जीवाज्ञानकल्पनहेतुभूतां पूर्वोक्तामनूद्य परिहरति **यत्त्वि**ति। नेदं चोद्यमनिष्टमित्यर्थः। तर्हि बद्धमुक्तादिव्यवहारः कथमित्यत्राह—**व्यवह्रियमाणाया-श्चे**ति। वक्ष्यमाणानुमानगर्भमाह **काल्पनिकत्वादि**ति। स्वाप्नव्यवस्थाः काल्पनिकत्वात् यथैकाविद्ययोपपद्यन्ते, तथा सर्वासां व्यवस्थानां काल्पनिकत्वादेकाविद्यैव तत्कल्पनोपपत्तिरित्यर्थः। **सर्वकल्पनोपपत्तेरि**ति। अन्यथानुपपन्नं हि कल्पकम्; अन्यथोपपन्नत्वान्नाविद्याभेदकल्पस्सिर्न्याय्येत्यर्थः। दृष्टान्तं शिक्षयति **स्वप्नदृशाही**ति। **अत एव**—आश्रयैकत्वेऽपि सर्वव्यवस्थोपपत्तिर्येन हेतुना सिद्धा, तेनैव काल्पनिकत्वेन हेतुना अविद्याबहुत्वकल्पनमपि न युक्तमित्यर्थः। परमार्थकार्याणां हि बहुहेत्वपेक्षा, अपरमार्थानां त्वेकेनैवालमित्यभिप्रायेणाह **पारमार्थिकी**ति। ततः किमित्यत्राह **अपारमार्थिकीत्वि**ति। **प्रयोगश्चे**ति। जीवाज्ञानवादिनं प्रति प्रथमतृतीये अनुमाने उच्येते; तच्च, भेदवादिनं च प्रति द्वितीयहेतुः प्रयुज्यते। तृतीयः प्रत्येकनिरपेक्षहेतुचतुष्टयगर्भः। तुरीयं व्यतिरेक्यनुमानम्। व्यवस्थानुपपत्तिपरिहारमुपसंहरति **अत** इति। काणादपक्षेपि स्वपक्षोक्तं दोषमापादयति **द्वैतवादिनापी**त्यादि। **असङ्ख्येयत्वमिति चेदि**ति। देशकालाद्यपरिच्छेदस्यानन्तशब्देन विवक्षितत्वव्यावृत्त्यर्थमसङ्ख्येयत्व-

सङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेत्—भिन्नत्वे सङ्ख्याविधुरत्वं नोपपद्यते। आत्मानः सङ्ख्यावन्तः, भिन्नत्वात्; माषसर्षपघटपटादिवत्। भिन्नत्वे चात्मनाम्, घटादिवत् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते। ब्रह्मणश्चानन्तत्वं न स्यात्। अनन्तत्वं नाम—परिच्छेदरहितत्वम्। भेदवादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं न शक्यते वक्तुम्। वस्त्वन्तरभाव एव हि वस्तुतः परिच्छेदः। वस्तुतः परिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं न युज्यते। वस्त्वन्तराद्विलक्षणत्वेन वस्तुतः परिच्छिन्ना एव घटादयो देशतः कालतश्च परिच्छिन्ना हि दृष्टाः, तथा सर्वे चेतनाः ब्रह्म[1] च वस्तुतः परिच्छिन्नाः देशकालाभ्यामपि परिच्छिद्यन्ते। एवञ्च 'सत्यं ज्ञानमनन्तम्' इत्यादिभिः सर्वप्रकारपरिच्छेदरहितत्वं वदद्भिर्विरोधः। उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन्। कालपरिच्छेद एव ह्युत्पत्तिविनाशभागित्वम्।

अतः एकस्यैवापरिच्छिन्नस्य ब्रह्मणोऽविद्याविजृम्भितं ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्; सुखदुःखप्रतिसन्धानव्यवस्थादयोऽपि स्वाप्नव्यवस्थावदविद्यास्वाभाव्यादुपपद्यन्ते। तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यविद्यावशात् जगदाकारेण विवर्तत इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात् तदनन्यत्वं जगत इति॥

अत्रोच्यते—निर्विशेषस्वप्रकाशमात्रं ब्रह्म अनाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत्—प्रकाशस्वरूपस्य निरंशस्य प्रकाशनिवृत्तिरूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधाना-

---

मित्युक्तम्। भिन्नत्वेन सङ्ख्यावत्त्वं साधयति **आत्मान** इति। **माषसर्षपघटपटादिवदि**ति। सङ्ख्यावत्तारतम्येऽपि सङ्ख्यावत्त्वमविशिष्टमिति भावः। भिन्नत्वे दूषणान्तरं चाह **भिन्नत्वे चे**ति। अत्र व्यतिरेकिलयं विवक्षितम्—आत्मा न भिन्नः, आत्मत्वात्; यद्भिन्नं न तदात्मा; यथा घटादिः। आत्मा न भिन्नः, अजडत्वात्; यद्भिन्नं न तदजडम्, यथा घटादिः। आत्मा न भिन्नः, अक्षयित्वात्; यद्भिन्नं न तदक्षयि, यथा घटादिरिति। दूषणान्तरमाह **ब्रह्मणश्चे**ति। अनन्तत्वं नाम किम्, तस्य भेदवादेऽनुपपन्नत्वं कथमित्यत्राह **अनन्तत्वं नामे**ति। **वस्त्वन्तरभाव** इति। **वस्त्वन्तरवत्त्वं** वस्तुतः परिच्छेद इत्यर्थः। वस्तुतःपरिच्छेदव्याप्तं देशकालपरिच्छिन्नत्वमप्यापततीत्याह **वस्तुत** इति। व्याप्तिं दर्शयति **वस्त्वन्तरादि**ति। अस्यार्थस्यानिष्टत्वं दर्शयति **एवञ्चे**ति। निरुपपदमनन्तपदमसङ्कुचितवृत्ति त्रिविधपरिच्छेदराहित्यमाहेति भावः। एवमपरिच्छिन्नस्य परिच्छिन्नत्वप्रसङ्ग उक्तः; अथाविकारस्य सविकारत्वप्रसङ्गमाह **उत्पत्ती**ति। अविकारत्वश्रुतिविरोधश्चेत्यर्थः। एकस्याविद्यया सर्वव्यवस्थोपपत्तिमुपसंहरति **अत** इति। ब्रह्माज्ञानवादपक्षमुपसंहरति **तस्मादि**ति। **विवर्तते**—अध्यासाधिष्ठानं भवति, न तु परिणमतीत्यर्थः। **ब्रह्मव्यतिरिक्ताभावात् तदनन्यत्वं जगत** इति। ब्रह्मणः परमार्थभूतमन्यन्न जगदित्यर्थः।

ब्रह्माज्ञानवादिनं वैशेषिकः प्रतिवदति **अत्रोच्यत** इति। तिरोधानेऽपि तद्रहितांशस्तिष्ठतीति न वक्तुं युक्तम्, निरंशत्वादित्यभिप्रायेण **निरंशस्ये**त्युक्तम्। **स्वरूपनाशप्रसङ्गेने**ति। तिरोधानं नाम प्रकाशनिवृत्तिः। तत्र जडस्य प्रकाशव्यतिरिक्तत्वात् प्रकाशनिवृत्तावपि तस्य स्थितिरुपपद्यते। प्रकाशैक-

---

1. चेतना इत्येतदेव परिच्छिन्ना इत्यस्य विशेष्यम्। चेतनपदेन ब्रह्मणोऽपि ग्रहणज्ञापनाय ब्रह्मचेत्युक्तम्। अतः पुंलिङ्गता।

तया प्रतिभासमानैर्निष्पन्नयाऽपरमार्थभूतया क्रीडया अपरमार्थभूतेन च तत्प्रतिभासेनानुन्मत्तानां क्रीडारसो निष्पद्यते। मायाश्रयतयाऽभिमतब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनासंभवश्च पूर्ववदेव द्रष्टव्यः। अतो ब्रह्मैवानाद्यविद्याशबलं स्वगतनानात्वं पश्यतीत्यद्वितीयत्वं ब्रह्मणोऽभ्युपयद्भिरभ्युपेत्यम्।

यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति—न तत् ब्रह्माज्ञानवादिनश्चोद्यम्; एकस्यैव ब्रह्मणोऽज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वात् बद्धमुक्तादिव्यवस्थाया एवाभावात्। व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्यादिव्यवस्थायाः काल्पनिकत्वात् स्वप्नदर्शिन इव चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः। स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्यादयः तदविद्याकल्पिता एव। अत एव बह्वविद्याकल्पनमपि न युक्तिमत्। पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिनाऽपि नाभ्युपेयते। अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते।

प्रयोगश्च—बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वाविद्याकल्पिताः, अपारमार्थिकत्वात्, स्वप्नदृष्टव्यवस्थावदिति। शरीरान्तराण्यपि मयैवात्मवन्ति, शरीरत्वात्, एतच्छरीरवत्। शरीरान्तराण्यपि मदविद्याकल्पितानि शरीरत्वात् कार्यत्वात् जडत्वात् कल्पितत्वाद्वा, एतच्छरीरवत्। विवादाध्यासितं चेतनजातमहमेव, चेतनत्वात्, यदनहम् तदचेतनं दृष्टम्, यथा घटः; अतः स्वपरविभागो बद्धमुक्तशिष्याचार्यादिव्यवस्थाश्चैकस्याविद्याकल्पिताः।

द्वैतवादिनाऽपि बद्धमुक्तव्यवस्था दुरुपपादा; अतीतानां कल्पानामानन्त्यादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसंभवादमुक्तानुपपत्तेः॥ अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत्, किमिदमनन्तत्वम्? असङ्ख्येयत्वमिति चेन्न; भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वेऽपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव। तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात्॥ आत्मनां निस्सङ्ख्यत्वादीश्वरस्याविद्यमान-

---

विभागानुपपत्त्या [निरसनीयत्वाभावानुपपत्त्या] च मायाऽविद्याविभागानुपपत्तिमाह **मायाश्रयतये**ति। **पूर्ववदे**वेति। अन्योन्याश्रयादिभिर्दूषणैरित्यर्थः। मायाविद्याविभागानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वमुपसंहरति **अत** इति। बन्धमोक्षादिव्यवस्थानुपपत्तिं जीवाज्ञानकल्पनहेतुभूतां पूर्वोक्तामनूद्य परिहरति **यत्त्वि**ति। नेदं चोद्यमनिष्टमित्यर्थः। तर्हि बद्धमुक्तादिव्यवहारः कथमित्यत्राह—**व्यवह्रियमाणाया-श्चे**ति। वक्ष्यमाणानुमानगर्भमाह **काल्पनिकत्वादि**ति। स्वाप्नव्यवस्थाः काल्पनिकत्वात् यथैकाविद्ययोपपद्यन्ते, तथा सर्वासां व्यवस्थानां काल्पनिकत्वादेकाविद्ययैव तत्कल्पनोपपत्तिरित्यर्थः। **सर्वकल्पनोप-पत्तेरि**ति। अन्यथानुपपन्नं हि कल्पकम्; अन्यथोपपन्नत्वान्नाविद्याभेदकल्पसिर्द्ध्येत्यर्थः। दृष्टान्तं शिक्षयति **स्वप्नदृशाही**ति। **अत एव**—आश्रयैकत्वेऽपि सर्वव्यवस्थोपपत्तिर्येन हेतुना सिद्धा, तेनैव काल्पनिकत्वेन हेतुना अविद्याबहुत्वकल्पनमपि न युक्तमित्यर्थः। परमार्थकार्याणां हि बहुहेत्वपेक्षा, अपरमार्थानां त्वेकेनैवालमित्यभिप्रायेणाह **पारमार्थिकी**ति। ततः किमित्यत्राह **अपारमार्थिकीत्वि**ति। **प्रयोगश्चे**ति। जीवाज्ञानवादिनं प्रति प्रथमतृतीये अनुमाने उच्येते; तच्च, भेदवादिनं च प्रति द्वितीयहेतुः प्रयुज्यते। तृतीयः प्रत्येकनिरपेक्षहेतुचतुष्टयगर्भः। तुरीयं व्यतिरेक्यनुमानम्। व्यवस्थानुपपत्तिपरिहारमुपसंहरति **अत** इति। काणादपक्षेपि स्वपक्षोक्तं दोषमापादयति **द्वैतवादिनापी**त्यादि। **असङ्ख्येयत्वमिति चेदि**ति। देशकालाद्यपरिच्छेदस्यानन्तशब्देन विवक्षितत्वव्यावृत्त्यर्थमसङ्ख्येयत्व-

सङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेत्—भिन्नत्वे सङ्ख्याविधुरत्वं नोपपद्यते। आत्मानः सङ्ख्यावन्तः, भिन्नत्वात्; माषसर्षपघटपटादिवत्। भिन्नत्वे चात्मनाम्, घटादिवत् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते। ब्रह्मणश्चानन्तत्वं न स्यात्। अनन्तत्वं नाम—परिच्छेदरहितत्वम्। भेदवादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं न शक्यते वक्तुम्। वस्त्वन्तरभाव एव हि वस्तुतः परिच्छेदः। वस्तुतः परिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं न युज्यते। वस्त्वन्तराद्विलक्षणत्वेन वस्तुतः परिच्छिन्ना एव घटादयो देशतः कालतश्च परिच्छिन्ना हि दृष्टाः, तथा सर्वे चेतनाः ब्रह्म[1] च वस्तुतः परिच्छिन्नाः देशकालाभ्यामपि परिच्छिद्यन्ते। एवञ्च 'सत्यं ज्ञानमनन्तम्' इत्यादिभिः सर्वप्रकारपरिच्छेदरहितत्वं वदद्भिर्विरोधः। उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन्। कालपरिच्छेद एव ह्युत्पत्तिविनाशभागित्वम्।

अतः एकस्यैवापरिच्छिन्नस्य ब्रह्मणोऽविद्याविजृम्भितं ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्; सुखदुःखप्रतिसन्धानव्यवस्थादयोऽपि स्वाप्नव्यवस्थावदविद्यास्वाभाव्यादुपपद्यन्ते। तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यविद्यावशात् जगदाकारेण विवर्तत इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात् तदनन्यत्वं जगत इति॥

अत्रोच्यते—निर्विशेषस्वप्रकाशमात्रं ब्रह्म अनाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत्—प्रकाशस्वरूपस्य निरंशस्य प्रकाशनिवृत्तिरूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधाना-

---

मित्युक्तम्। भिन्नत्वेन सङ्ख्यावत्त्वं साधयति **आत्मान** इति। **माषसर्षपघटपटादिवदि**ति। सङ्ख्यावत्तारतम्येऽपि सङ्ख्यावत्त्वमविशिष्टमिति भावः। भिन्नत्वे दूषणान्तरं चाह **भिन्नत्वे चे**ति। अत्र व्यतिरेकित्रयं विवक्षितम्—आत्मा न भिन्नः, आत्मत्वात्; यद्भिन्नं न तदात्मा; यथा घटादिः। आत्मा न भिन्नः, अजडत्वात्; यद्भिन्नं न तदजडम्, यथा घटादिः। आत्मा न भिन्नः, अक्षयित्वात्; यद्भिन्नं न तदक्षयि, यथा घटादिरिति। दूषणान्तरमाह **ब्रह्मणश्चे**ति। अनन्तत्वं नाम किम्, तस्य भेदवादेऽनुपपन्नत्वं कथमित्यत्राह **अनन्तत्वं नामे**ति। **वस्त्वन्तरभाव** इति। **वस्त्वन्तरवत्त्वं** वस्तुतः परिच्छेद इत्यर्थः। वस्तुतःपरिच्छेदव्याप्तं देशकालपरिच्छिन्नत्वमप्यापततीत्याह **वस्तुत** इति। व्याप्तिं दर्शयति **वस्त्वन्तरादि**ति। अस्यार्थस्यानिष्टत्वं दर्शयति **एवञ्चे**ति। निरुपपदमनन्तपदमसङ्कुचितवृत्ति त्रिविधपरिच्छेदराहित्यमाहेति भावः। एवमपरिच्छिन्नस्य परिच्छिन्नत्वप्रसङ्ग उक्तः; अथाविकारस्य सविकारत्वप्रसङ्गमाह **उत्पत्ती**ति। अविकारत्वश्रुतिविरोधश्चेत्यर्थः। एकस्याविद्यया सर्वव्यवस्थोपपत्तिमुपसंहरति **अत** इति। ब्रह्माज्ञानवादपक्षमुपसंहरति **तस्मादि**ति। **विवर्तते**—अध्यासाधिष्ठानं भवति, न तु परिणमतीत्यर्थः। **ब्रह्मव्यतिरिक्ताभावात् तदनन्यत्वं जगत** इति। ब्रह्मणः परमार्थभूतमन्यन्न जगदित्यर्थः।

ब्रह्माज्ञानवादिनं वैशेषिकः प्रतिवदति **अत्रोच्यत** इति। तिरोधानेऽपि तद्रहितांशस्तिष्ठतीति न वक्तुं युक्तम्, निरंशत्वादित्यभिप्रायेण **निरंशस्येत्युक्तम्**। **स्वरूपनाशप्रसङ्गेने**ति। तिरोधानं नाम प्रकाशनिवृत्तिः। तत्र जडस्य प्रकाशव्यतिरिक्तत्वात् प्रकाशनिवृत्तावपि तस्य स्थितिरुपपद्यते। प्रकाशैक-

---

1. चेतना इत्येतदेव परिच्छिन्ना इत्यस्य विशेष्यम्। चेतनपदेन ब्रह्मणोऽपि ग्रहणज्ञापनाय ब्रह्मचेत्युक्तम्। अतः पुंल्लिङ्गता।

संभवादिभ्यः सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तम्।

यत् पुनरुक्तम्—कारणव्यतिरिक्तं कार्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद्भ्रम इति—तदयुक्तम्; युक्तेरभावात्। यत्त्वनुवर्तमानस्य कारणमात्रस्य सत्यत्वं व्यावर्तमानानां घटशरावादिकार्याणामसत्यत्वमिति-तदपि अन्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिकेत्यादिभिः पूर्वमेव परिहृतम्। यच्चोपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्यस्य मृषात्वमिति—तदसत्। उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति; किन्त्वनित्यत्वम्। यद्देशकालसंबन्धितया यत् उपलब्धम्, तद्देशकालसंबन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतुः। देशान्तरकालान्तरसंबन्धितयोपलब्धस्यान्यदेशकालसंबन्धित्वेन बाधितत्वं देशान्तरकालान्तराव्याप्तिमात्रं साधयति, न तु मिथ्यात्वम्। प्रतिप्रयोगश्च—घटादिकार्यं सत्यम्, देशकालादिप्रतिपन्नोपाधावबाधितत्वात्, आत्मवत्।

यच्चोक्तम्—कारणस्वरूपादविकृताद्विकृताच्च कार्योत्पत्तिर्न संभवतीति—तदसत्; देशकालादिसहकारिसमवहितात् कारणात् कार्योत्पत्तिसंभवात्॥ तत्समवधानं च विकृतस्याविकृतस्य च न संभवतीति यदुक्तम्—तदयुक्तम्; पूर्वमविकृतस्यैव कालादिसमवधानसंभवात्॥ अविकृतत्वाविशेषात् पूर्वमपि देशकालादिसमवधानं प्रसज्येत इति चेन्न; देशकालादिसमवधानस्य कारणा-

---

रूपस्य ब्रह्मणः प्रकाशनिवृत्तिरूपतिरोधानं नाम स्वरूपनिवृत्तिरेवेत्यर्थः। **स्ववचनविरुद्धं चेतीति**। नित्यत्वादिसाधकवचनविरुद्धं निर्विशेषत्वम्, ज्ञप्तित्वविरुद्धमसत्प्रत्ययगोचरत्वमित्यर्थः। **पूर्वमेवोक्तम्**—अस्मिन् प्रबन्धे सिद्धान्तिनोक्तमित्यर्थः।

**यत्पुनरिति**। [**इत्यादिभिरिति** ?] सोपाधिकत्वकालात्ययापदिष्टत्ववचनव्याहतिभिरनैकान्त्यादिभिश्च पूर्वमेव परिहृतमित्यर्थः। मिथ्यात्वानित्यत्वयोर्भेदं दर्शयति **यद्देशकालेति**। यद्यनित्यत्वमेव मिथ्यात्वमुच्यते, तर्हि सिद्धसाधनं मिथ्यात्वानुमानम्। यद्यनित्यत्वविलक्षणं मिथ्यात्वं साध्यते, तर्हि सोपाधिकत्वादिदूषणानि स्युरिति भावः। प्रत्यनुमानमाह **प्रतिप्रयोगश्चेति**। ननु मिथ्यात्वानुमानं न सोपाधिकम्, उपाधेरभावात्। प्रतिपन्नदेशकालोपाधौ बाधो न साध्यसमव्याप्तः, देशकालभ्रमेषु प्रतिपन्नोपाधौ बाधाभावात्। न हि देशकालभ्रमस्य देशकालान्तरोपाधिप्रतिपत्तिः। तस्मान्न साध्यसमव्याप्तिः। यदि बाधमात्रमेव हेतुः—तन्न; पक्षेऽपि विद्यमानत्वात्। पक्षेष्वविद्यमानः सर्वसपक्षानुयायी ह्युपाधिः। तस्मान्न सोपाधिकत्वमिति॥ अत्रायं परिहारः—देशकालभ्रमेष्वपि प्रतिपन्नोपाधौ बाधोऽस्ति। न हि देशकालावेव सर्वत्रोपाधिः। तौ तु देशकालव्यतिरिक्तविषयभ्रमेषु। देशकालविषयभ्रमेष्वन्ये पदार्था उपाधयः। यथा दुर्दिने सायङ्कालभ्रमान्वितः पुरुषः पश्चादादित्यदर्शनात् प्रबुद्ध एवं मन्यते—यदाहं सन्ध्यामुपासितवान्, तदा सायमिति; यदा अहं बुद्धः, न तदानीं प्रभातमिति च; यत्राहं सुप्तः, नायं स देश इत्यादि। किञ्च देशभ्रमे काल उपाधिः स्यात्; कालभ्रमे देश उपाधिः स्यात्। न चान्योन्याश्रयः; भ्रमव्यक्तिभेदात्। तस्मात् प्रतिपन्नोपाधौ बाधस्य साध्यसमव्याप्तिरस्त्येव। इममर्थमभिप्रेत्य देशकाला**दि**प्रतिपन्नोपाधावबाधितत्वादित्यत्र **आदिशब्दः** प्रयुक्तः। देशकालादिप्रतिपन्नोपाधौ बाधार्हत्वं मिथ्यात्वम्। तत्कार्यभूतः प्रतिपन्नोपाधौ बाधो मिथ्यात्वसाधकः; यथा अग्नेर्दाहार्हस्य दाहकार्यं दाहार्हत्वे लिङ्गम्, तद्वत्। अतः साध्याविशिष्टत्वचोद्यमपास्तम्। **समवहितात्**—समन्वितात्। **कारणान्तरम्**—कर्म, ईश्वरसङ्कल्प

न्तरायत्तस्यैतदायत्तत्वाभावात्। अतो देशकालादिसमवधानरूपविशेषमापन्नं कारणं कार्यमुत्पादयतीति न किञ्चिदवहीनम्। कारणस्य च कार्यं प्रति आरम्भकत्वमबाधितं दृश्यमानं न केनापि प्रकारेणापह्नोतुं शक्यते।

यत्तु हेमादिमात्रस्य, रुचकादिकार्यस्य, एतदाश्रयस्य वा हेमादेरारम्भकत्वं न संभवतीति—तदयुक्तम्; हेमादिमात्रस्यैव यथोक्तपरिकरयुक्तस्यारम्भकत्वसंभवात्। न चारम्भकहेमव्यतिरिक्तं कार्यं न दृश्यत इति वक्तुं शक्यम्; हेमातिरिक्तस्य स्वस्तिकस्य दर्शनात्; बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वाच्च। न चायं शुक्तिकारजतादिवद्भ्रमः, उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्य तद्देशकालसंबन्धितया बाधादर्शनात्। न चास्या उपलब्धेर्बाधिका काचिदपि युक्तिर्दृश्यते। प्रागनुपलब्धस्वस्तिकोपलब्धिवेलायामपि हेमप्रत्यभिज्ञा स्वस्तिकाश्रयतया हेम्नोऽप्यनुवृत्तेरविरुद्धा। श्रुतिभिस्तु प्रपञ्चमिथ्यात्वसाधनं पूर्वमेव निरस्तम्। यच्चान्यदत्र प्रत्यक्षाविरोधादि प्रतिवक्तव्यम्, तदपि सर्वं पूर्वमेव सूक्तम्।

यच्चोक्तम्—एकेनाऽऽत्मना सर्वाणि शरीराण्यात्मवन्तीति—तदसत्; एकस्यैव सर्वशरीरप्रयुक्तसुखदुःखप्रतिसन्धानप्रसङ्गात्। सौभरिप्रभृतिषु ह्यात्मैकत्वेनानेकशरीरप्रयुक्तसुखादिप्रतिसन्धानमेकस्य दृश्यते। न च—अहमर्थस्य ज्ञातृत्वात् तद्भेदात् प्रतिसन्धानाभावः, नात्मभेदात् इति

---

इत्यादि। **एतदायत्तत्वाभावात्**—विकारायत्तत्वाभावात्। एवमनुग्राहकस्तर्क उक्तः; अथानुग्राह्यं प्रमाणमाह **कारणस्य चे**ति। पूर्वपक्षिणा कार्यकारणभावमिथ्यात्वग्राहिप्रमाणानुग्राहकत्वेन हि तर्क उक्तः। तथाऽत्राप्यनुग्राहकतर्कपूर्वकं प्रमाणमुक्तम्। परोक्ततर्कश्च जात्युक्तिः, स्वव्याघातात्। कार्यकारणभावभङ्गवाचि वाक्यं किं परस्य कार्यकारणभावभङ्गविषयप्रमितेः कारणम्? तर्हि न कार्यकारणभावभङ्गः। उत न? ततोऽपि न तद्भङ्गः। सा प्रतीतिर्मिथ्या चेत्—ततोऽपि न भङ्गः; बाधबाधे पूर्वबाधितस्य सत्यत्वात्। एवं कार्यकारणभावस्य प्रामाणिकत्वात् तद्विरुद्धबाह्यतर्कानुदय एवेति स्थितम्।

**यत्त्वि**ति। हेममात्रस्य, रुचकादिकार्यमात्रस्य, कार्याश्रितद्रव्यमात्रस्य (द्रव्यस्य?) न सम्भवतीत्युक्तमित्यर्थः। **यथोक्तपरिकरः**—देशकालादिः। अनिरूपितवस्त्ववलम्बनबुद्धिशब्दादीनामसाधकत्वं पूर्वपक्षिणोक्तं प्रतिक्षिपति **न चाय**मिति। **उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्ये**ति। अनित्यत्वे साध्ये सिद्धसाधनत्वम्। प्रतिपन्नोपाधौ बाधश्चेत्, (?) तदनुपलम्भादेव निरस्तमिति भावः। हेमप्रत्यभिज्ञा कथं घटत इत्यत्राह **प्रागि**ति। **श्रुतिभिस्त्वि**ति। सिद्धान्तिना निरस्तमित्यर्थः। **यच्चान्यदि**ति। 'प्रत्यक्षं सन्मात्रग्राहि; विरोधे सत्यपि शास्त्रं बलीयः' इत्यादिकं त्वदुक्तं पूर्वमेवानेन ग्रन्थकारेण निरस्तमित्यर्थः।

**तदुक्तमनुमानगणं दूषयति यच्चोक्त**मिति। व्याप्तिविरोधमाह **एकस्यैवे**ति। यत् सम्प्रतिपन्नैकात्मकं शरीरम्, तत्र हि सुखादिप्रतिसन्धानं दृष्टमिति भावः। प्रतिसन्धानाभावः शरीरभेदनिबन्धन इत्यत्राह **सौभरिप्रभृतिष्वि**ति। विलक्षणज्ञानानां केषाञ्चिच्छरीरभेदेऽपि पूर्वजन्मसुखादिप्रत्यभिज्ञानादिति **प्रभृति**शब्दस्य भावः। किञ्च किमेकशरीरवर्त्यात्मन एकत्वं साध्यते, उतानेकशरीरवर्तिनः। प्रथमे कल्पे सिद्धसाधनत्वम्। द्वितीये धर्मिग्राहकप्रमाणबाधः; परशरीरे तच्चेष्टादिभिरात्मा ह्यनुमीयते। तच्चानुमानं स्वस्मादन्यत्वेनैवैनं दर्शयति। स्वात्मा ह्यहमित्यपरोक्षमवभासते। न हि परशरीरगत आत्मा अपरोक्ष इति। **अन्तःकरणभेदात् प्रतिसन्धानाभाव इत्याशङ्क्य दूषयति न चे**ति। अन्तःकरणस्य ज्ञातृत्वेऽपि

वक्तुं शक्यम्; आत्मा ज्ञातैव, स चाहमर्थ एव, अन्तःकरणभूतस्त्वहङ्कारो जडत्वात् करणत्वाच्च शरीरेन्द्रियादिवन्न ज्ञातेत्युपपादितत्वात्। यच्च—शरीरत्वजडत्वकार्यत्वकल्पितत्वैः सर्वशरीराणामेकस्याविद्याकल्पितत्वमुक्तम्—तदपि सर्वशरीराणामविद्याकल्पितत्वस्यैवाभावादयुक्तम्। तदभावश्चाबाधितस्य सत्यत्वोपपादनात्। यच्च चेतनादन्यस्य जडत्वदर्शनात् सर्वचेतनानामनन्यत्वमुक्तम्—तदपि सुखदुःखव्यवस्थया भेदोपपादनादेव निरस्तम्। यत्तु—मयैवात्मवन्ति मदविद्याकल्पितानि, अहमेव सर्वं चेतनजातमित्यहमर्थस्यैक्यमुपपादितम्—तत् अज्ञातस्वसिद्धान्तस्य भ्रान्तिजल्पितम्; अहंत्वमाद्यर्थविलक्षणं चिन्मात्रं ह्यात्मा त्वन्मते।

किञ्च, निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः; अविद्याकार्यत्वात्; शुक्तिकारजतादिषु रजताद्युपादानादिप्रयत्नवत्। मोक्षार्थप्रयत्नो व्यर्थः, कल्पिताचार्यायत्तज्ञानकार्यत्वात् शुकप्रह्लादवामदेवादिप्रयत्नवत्। तत्त्वमस्यादिवाक्यजन्यज्ञानं न बन्धनिवर्तकम्, अविद्याकल्पितवाक्यजन्यत्वात्, स्वयमविद्यात्मकत्वात्, अविद्याकल्पितज्ञात्राश्रयत्वात्, कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा; स्वाप्नबन्धनिवर्तनवाक्यजन्यज्ञानवत्। किञ्च, निर्विशेषचिन्मात्रं ब्रह्म मिथ्या, अविद्याकार्यज्ञानगम्यत्वात् अविद्याकल्पितज्ञात्राश्रयज्ञानगम्यत्वात् अविद्यात्मकज्ञानगम्यत्वाद्वा; यदेवं तत् तथा, यथा स्वाप्नगन्धर्वनगरादिः। न च निर्विशेषचिन्मात्रं ब्रह्म स्वयं प्रकाशते, येन न प्रमाणान्तरमपेक्षते। यत्तु आत्मसाक्षिकं स्वयंप्रकाशज्ञानं दृश्यते, तत्तु ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव दृश्यत इति पूर्वमेवोक्तम्। यानि च तस्य निर्विशेषत्वसाधकानि यौक्तिकानि ज्ञानान्युपन्यस्तानि, तानि चानन्तरोक्तैरविद्याकार्यत्वादित्यादिभिरनुमानै-

---

पूर्वपूर्वकल्पेषूत्पन्नविनष्टान्तःकरणानामपि सनकादीनां तत्प्रतिसन्धानसंभवान्नान्तःकरणभेदः प्रतिसन्धानाभावहेतुः। अन्तःकरणस्य ज्ञातृत्वमेव नास्ति, तत्तु आत्मन इत्याह **आत्मा ज्ञातैवे**ति। **यच्चे**ति। शरीराणामविद्याकल्पितत्वे सिद्धे ह्येकविद्याकल्पितत्वसिद्धिः; तदेव नास्तीति सपक्षभूतशरीरस्याविद्याकल्पितत्वाभावात् दृष्टान्तस्य साध्यविकलत्वमुक्तं भवति; कल्पितत्वहेतोरन्यतरासिद्धिश्च। कल्पितत्वाभावमुपपादयति **तदभावश्चे**ति। सर्वं चेतनजातमहमेव चेतनत्वादिति यत् व्यतिरेकि पूर्वमुक्तम्, तत् अर्थत उदाहृतं भवति **यच्चे**ति। दूषयति **तदपी**ति। कालात्ययापदिष्टत्वं दूषणमुक्तं भवति। एष्वनुमानेषूक्तिदूषणमाह **यत्त्वि**ति। बद्धमुक्तादिव्यवस्थानामेकाविद्याकल्पितत्वं यदुक्तम्, तत्राप्यपारमार्थिकत्वहेतोरसिद्धिः सोपाधिकत्वं चानुसन्धेयम्।

**किञ्चे**ति। अविद्याकार्यत्वादित्यादिहेतुगणैरनिष्टप्रसङ्गमाह—**तत्त्वमस्यादी**ति। अविद्यामूलत्वाश्रयणे तत्त्वमस्यादिवाक्यजन्यज्ञानस्यानिवर्तकत्वप्रसङ्ग इत्यर्थः। यथा **संवित्सिद्धौ**, "अभाविन्येव सा पश्चाद्भाविनीत्युपदिश्यताम्। सन्ति हि स्वप्नदृष्टानि दृष्टान्तवचनानि ते" इति। **सा**—मुक्तिः। मृषावादिनां द्विधा प्रक्रिया, 'ब्रह्म न वेदान्तैः प्रतिपाद्यते, अपि तु भेदनिषेध एव क्रियत' इति, 'स्वरूपपरवाक्यैः प्रतिपाद्यते' इति च। तत्र स्वरूपपरवाक्यप्रतिपाद्यत्वपक्षेऽनिष्टं प्रसञ्जयति—**किञ्च निर्विशेषे**ति। **न चेत्यादि**। **ज्ञेयविशेषसिद्धिरूपम्**—ज्ञेयविशेषव्यवहारानुरूपमित्यर्थः। **यानि चे**ति। **अनुमानैः**—तर्कैः। तर्कस्यानुमानशब्दवाच्यत्वं व्याप्तिसापेक्षत्वात्। 'ऊहस्तर्कोऽनुमानो(यु?)क्तिः' इति

निरस्तानि। न च निर्विशेषस्य चिन्मात्रस्याज्ञानसाक्षित्वमहङ्कारादिजगद्भ्रमश्चोपपद्यते। साक्षित्वभ्रमादयोऽपि हि ज्ञातृविशेषगता दृष्टाः; न ज्ञप्तिमात्रगताः। न च तस्य प्रकाशत्वं स्वायत्तप्रकाशता वा सिध्यति। प्रकाशो हि कस्यचित् पुरुषस्य कञ्चनार्थविशेषं प्रति सिद्धिरूपो दृश्यते। तत एव हि तस्य स्वयंप्रकाशतोपपाद्यते भवद्भिरपि। न चाता(च ता) दृशस्य निर्विशेषस्य प्रकाशता संभवति।

यः पुनः स्वगोष्ठीषु, अपरमार्थादपि परमार्थकार्यं दृश्यत इत्युद्घोषः—सोऽपि, 'तानि कार्याणि सर्वाण्यबाधितकल्पानि व्यावहारिकसत्यानि; वस्तुतस्त्वविद्यात्मकान्येव' इति स्वाभ्युपगमादेव निरस्तः। अस्माभिरपि सर्वत्र परमार्थादेव कारणात् सर्वकार्योत्पत्तिमुपपादयद्भिः पूर्वमेव निरस्तः। न च त्वयैषामनुमानानां श्रुतिविरोधो वक्तुं शक्यते; श्रुतेरप्यविद्याकार्यत्वेनाविद्यात्मकत्वेन चोक्तदृष्टान्तेभ्यो विशेषाभावात्।

यत्तु—ब्रह्मणोऽपारमार्थिकज्ञानगम्यत्वेऽपि पश्चात्तनबाधादर्शनाद्ब्रह्म सत्यमेवेति—तदसत्; दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिञ्चित्करत्वात्। यथा शून्यमेव तत्त्वमिति वाक्यजन्यज्ञानस्य पश्चात्तनबाधादर्शनेऽपि दोषमूलत्वनिश्चयादेव तदर्थस्यासत्यत्वम्। किञ्च 'नेह नानाऽस्ति किञ्चन', 'विज्ञानमानन्दं ब्रह्म' इति विज्ञानमात्रातिरिक्तस्य कृत्स्नस्य वस्तुजातस्य निषेधकत्वेन सर्वस्मात् परत्वात् पश्चात्तनबाधादर्शनमुच्यते। शून्यमेव तत्त्वमिति तस्याप्यभावं वदतस्तस्मात्परत्वेन पश्चात्तनबाधो दृश्यते। सर्वशून्यत्वातिरेकिनिषेधासंभवात् तस्यैव पश्चात्तनबाधादर्शनम्। दोषमूलत्वं तु प्रत्यक्षादीनाम्, वेदान्तजन्मनः सर्वशून्यज्ञानस्याप्यविशिष्टम्।

अतः—सर्वं विज्ञानजातं पारमार्थिकज्ञातृगतम्, स्वयं च परमार्थभूतमर्थविशेषसिद्धिरूपम्; तत्र किञ्चित् ज्ञानं दोषमूलम्; दोषश्च परमार्थः, किञ्चिच्च निर्दोषं पारमार्थिकसामग्रीजन्यमिति यावन्नाभ्युपेयते, न तावत् सत्यमिथ्यार्थव्यवस्था, लोकव्यवहारश्च सेत्स्यति। लोकव्यवहारो हि पारमार्थिको भ्रान्तिरूपश्च पारमार्थिकज्ञातृगतार्थविशेषसिद्धिरूपप्रकाशपूर्वकः। निर्विशेषसन्मात्रस्य

---

**हलायुधः।** **निरस्तानी**ति। अविद्याकार्यत्वादिहेतुभिः स्वाभिमतार्थसाधकत्वं निरस्तमित्यर्थः। **उपपाद्यते भवद्भि**रिति। स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वादिति हेतोरित्यर्थः। **न चे**ति। **अतादृशस्य**—निर्विशेषत्वात् कर्मकर्तृरहितस्येत्यर्थः। **तादृशस्ये**ति पाठेऽयमर्थः—**तादृशस्य**—कर्मकर्तृसहितो यः प्रकाशते तस्य निर्विशेषत्वेऽभिमते सा न सिद्ध्यतीति। पूर्वमपरमार्थहेतोः शुक्तिरजताद्युपादानादिप्रयत्नवन्निष्फलत्वमुक्तम्; तन्न, अपरमार्थादपि परमार्थोत्पत्तेरिति शङ्कते **यः पुन**रिति। किमियमपरमार्थात्परमार्थोत्पत्तिर्भवत्पक्षेणोच्यते, उतासत्पक्षेणेति विकल्पमभिप्रेत्य आद्यपक्षे तदसिद्धिमाह **सोऽपि तानी**ति। द्वितीयपक्षे दूषणमाह **अस्माभि**रिति। **विशेषाभावात्।** प्रबलविरोधे हि दौर्बल्यमिति भावः।

बाधादर्शनाभ्युपगमेन दूषयति **दुष्टकारणे**ति। तदनभ्युपगमेन दूषयति **किञ्चे**ति। प्रत्यक्षादिप्रमाणं वेदेऽपि सविशेषपरवाक्यजातं च विहाय निषेधपरवाक्यप्राबल्यं हि त्वदुक्तम्। तत्र विधिरूपत्वात् पूर्वेषां दौर्बल्यम्, निषेधरूपत्वाच्च पश्चात्तनस्य प्राबल्यम्। तच्च सर्वशून्यवादिन एवेत्यर्थः। **अतः सर्व**मिति। अत इत्यस्य **न सेत्स्यती**त्यन्वयः। लोकव्यवहारस्यासिद्धिमुपपादयिष्यन्नाह **लोके**ति। तामुपपादयति **लोकव्यवहारो ही**ति। ततः किमित्यत्राह **निर्विशेषे**ति। निर्विशेषज्ञानस्य ज्ञातृत्वाभावान्न

तु पारमार्थिकस्यापारमार्थिकस्य च प्रतिभासादेर्हेतुत्वासंभवाल्लोकव्यवहारो न संभवति।

यच्च तैर्निरधिष्ठानभ्रमासंभवात् सर्वाध्यासाधिष्ठानस्य सन्मात्रस्य पारमार्थिकत्वमुक्तम्—तदपि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेर्निरस्तम्, अथ अधिष्ठानापारमार्थ्ये न क्वचिद्भ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यसे—हन्त तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न कश्चिद्विशेषोऽन्यत्र तत्संरम्भात्।

यत्तु-भेदपक्षेऽप्यतीतकल्पानामानन्त्यात् सर्वेषामात्मनां मुक्तत्वेन बद्धासंभवात् बद्धमुक्तव्यवस्था न संभववतीति; तत् आत्मानन्त्येन परिहृतम्। यच्चात्मनां भिन्नत्वे माषसर्षपघटपटादिवत् सङ्ख्यावत्त्वमवर्जनीयमिति—तत्र घटादीनामप्यनन्तत्वात् दृष्टान्तः साध्यविकलस्स्यात्॥

---

प्रतिभासहेतुत्वम्। ज्ञातृगतज्ञानं हि स्वपरव्यवहारहेतुतया दृष्टमित्यर्थः। यद्वा निर्विशेषज्ञानस्य ज्ञातृत्वाभावात् प्रतिभासस्याश्रयतया हेतुत्वं नास्ति। निर्विशेषत्वादेव कारणतया हेतुत्वमपि नास्तीत्यर्थः। **पारमार्थिकापारमार्थिक**शब्दौ परमार्थापरमार्थविषयत्व(यक?)परौ। **प्रतिभासादे**रित्यत्र आदिशब्दो व्यवहारपरः।

**यच्चे**त्यादि। **न कश्चिद्विशेषोऽन्यत्र तत्संरम्भा**दिति। अत्रायमभिप्रायः—अधिष्ठानस्यापारमार्थ्ये तस्याप्यधिष्ठानान्तरापेक्षयाऽनवस्थेति चेन्न। दोषस्यापारमार्थ्ये तस्यापि दोषान्तरमित्यनवस्था स्यात्। तत्र स्वरूपानादित्वेन परिहारस्तुल्यः। प्रवाहानादित्वेन परिहारश्चेत्—सोऽपि तुल्यः। दुर्घटत्वेन परिहारश्चेत्—सोऽपि तुल्यः॥ परमार्थत्वप्रयुक्तोपपत्तिरपरमार्थत्वप्रयुक्तोपपत्तिरिति द्विधा; तत्र परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वं दुर्घटत्वम्। इयं चापरमार्थत्वप्रयुक्तोपपत्तिरधिष्ठानपारमार्थ्यापेक्षेति चेत्—दोषपरमार्थत्व(?)मप्यपरमार्थत्वप्रयुक्तोपपत्तिरित्यपि तुल्यमिति। **यच्चि**त्यादि। **तदात्मानन्त्येन परिहृतम्**। यथा माषसर्षपादिष्वेकैकजातीया एवानन्ताः, समुदिताश्चानन्ताः—तथा बद्धाश्चानन्ताः मुक्ताश्च अनन्ताः समुदिताश्च सर्वे चेतना अनन्ता इत्यर्थः। सर्वेषामात्मनामेकत्वसङ्ख्या प्रत्येकमस्त्येव। अतो न सङ्ख्यावत्त्वमात्रं निषिध्यते। द्वित्वादिसङ्ख्याया अवधिरेव निषिध्यते। अतीतकल्पानामानन्त्यादेकस्मिन् कल्पे एकघटसद्भावेऽपि घटानामानन्त्यं सिद्धमिति साध्यविकलता दृष्टान्तस्य। किं देशकालकर्माद्युपाध्यवच्छिन्ना घटाः सपक्षीकृताः, उत कृत्स्नघटाः? तत्रानन्तरपक्षे साध्यविकलता। आद्येऽपि देशाद्यवच्छेदप्रयुक्तत्वात सोपाधिकत्वम्। सपक्षदर्शनानुगुण्येन पक्षेऽपि साध्यधर्मस्य वक्तव्यत्वादुपाध्यवच्छिन्नचेतनानां सङ्ख्यावत्त्वं साध्यं स्यात्; तदा सिद्धसाध्यता। किमेतदण्डान्तर्वर्तिनां चेतनानामवधिमत्सङ्ख्यावत्त्वं साध्यम्? उत सर्वेषाम्? प्रथमे सिद्धसाध्यता। अन्यत्र धर्मिग्राहकप्रमाणबाधः। अतीताण्डानां तदन्तर्वर्तिनां चेतनानां च सद्भावे प्रमाणं वक्तव्यम्; नो चेत्, आश्रयैकदेशासिद्धिप्रसङ्गात्। प्रमाणं च शास्त्रम्। तच्च तान् अनन्तत्वेन प्रतिपादयतीति तद्विरुद्धत्वात् कालात्ययापदिष्ट इत्यर्थः। विगीतः कालः सावधिः कालत्वात् माससंवत्सरादिवदिति वक्तुं शक्यत्वेऽप्यतीतकल्पानामानन्त्यं हि शास्त्रबलादभ्युपगतम्। तथा सङ्ख्यावत्त्वसाधकहेतोः शास्त्रबाधात् चेतनानन्त्यमभ्युपगन्तव्यमित्यर्थः। दृष्टान्तस्य साध्यविकलत्वं कण्ठोक्तम्; विकल्पमुखेन सोपाधिकत्वकालात्ययापदेशसिद्धसाधनता अभिप्रेताः। घटसर्षपादिव्यक्तिबाहुल्यानां परस्परं सङ्ख्या-

दश घटाः सहस्रं माषा इति सङ्ख्यावत्त्वं दृश्यत इति चेत्—सत्यम् ; तत्तु न घटादिस्वरूपगतम् ; अपि तु देशकालाद्युपाधिमद्घटादिगतम् । तादृशं तु संख्यावत्त्वमात्मनामभ्युपगच्छामः । न च तावता सर्वमुक्तिप्रसङ्गः ; आत्मस्वरूपानन्त्यात् । यत्तु आत्मनां भिन्नत्वे घटादिवज्जडत्वानात्मत्व-क्षयित्वप्रसङ्ग इति—तदयुक्तम् ; एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीयत्वानापादकत्वात् । न हि घटादीनां भेदस्तेषां पटत्वमापादयति ।

यत्तु भिन्नत्वे वस्तुतः परिच्छेदात् देशकालाभ्यामपि परिच्छेदो ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिध्यतीति—तदयुक्तम् ; वस्तुतःपरिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिक-

---

वधिन्यूनाधिकभावे सत्यपि तथात्वेन तेषामानन्त्यं दर्शयितुं **दश घटाः सहस्रं माषा** इत्युक्तम् । **देश-कालाद्युपाधिम**दिति । अत्रादिशब्देन कर्ता विवक्षितः ; एतत्कुलालनिर्मिता घटा दशेत्यपि वक्तुं शक्यत्वात् । **आत्मस्वरूपानन्त्या**दिति । देशाद्युपाधिराहित्ये आत्मस्वरूपमात्रस्यासङ्ख्येयत्वादित्यर्थः। **यत्त्वि**-त्यादिना भिन्नत्वेन अनात्मत्वादिप्रसङ्गमनूदि(द्य ?) तं परिहरति **तदयुक्त**मिति । **न हीति**। घटो न भिन्नः घटत्वात् ; यत् भिन्नम् न तद् घटः, यथा पट इत्युक्ते यथा कालात्ययापदिष्टत्वम् , तथा त्वदुक्तव्यतिरेकिणामपि कालात्ययापदिष्टत्वमित्यर्थः ।

वस्तुतःपरिच्छिन्नत्वे देशकालपरिच्छेदप्रसङ्गं दूषयति **यत्त्वि**ति । **भिन्नत्वे वस्तुतःपरिच्छेदा**-दिति । इदमिदं न भवतीति सामानाधिकरण्यानर्हत्वं वस्तुतःपरिच्छेद इति मृषावाद्यभिमतमिति ज्ञापितम् । सिद्धान्त्यभिमतः प्रकारान्तरेण वस्तुपरिच्छेदस्तु मृषावाद्यनभिमतः ; तद्विपरीतरूपस्यापरिच्छेदस्य निर्विशेषत्वविरोधात् । अतो मृषावादिना स्वाभिमतवस्तुपरिच्छेदस्य देशकालपरिच्छेद-प्रयोजकत्वाभिमानेन देशकालपरिच्छेदौ प्रसञ्जितौ । तौ दूषयति—**तदयुक्त**मिति । कुत इत्यपेक्षायामप्रयोजकत्वं वक्तुं तदुपयोगिनमर्थमाह **वस्तुत** इति । ततः किमित्यत्राह **देशकाले**ति । **प्रमाणान्त-रायत्तनिर्णयत्वेने**ति । वस्तुपरिच्छेदोऽप्रयोजक इति भावः । प्रतिबन्द्यभिप्रायेणैवमुक्तम् । अयमर्थः— देशकालपरिच्छेदयोर्न्यूनाधिकभावो दृश्यते । पराभिमतस्य वस्तुपरिच्छेदस्य तु स नास्ति, तथापि परिच्छेदत्वात् सोऽपि न्यूनाधिकभाववानिति प्रसञ्जनस्य प्रमाणबाधितत्वेन परिच्छेदत्वं यथा न्यूनाधिकभाववत्त्वस्याप्रयोजकम् , तथा वस्तुतःपरिच्छिन्नत्वमपि देशकालपरिच्छेदयोरप्रयोजकम् , प्रमाणबाधादिति । यद्वा, यथा वस्तुतःपरिच्छेदो मुहूर्तावधिककालपरिच्छेदविशेषे माषमात्रावधिकदेश-परिछेदविशेषे च प्रयोजक इत्यभ्युपगन्तुमयुक्तम् , तयोर्न्यूनाधिकभावग्राहिप्रमाणेन बाधात् । एवं देश-कालपरिच्छेदावान्तरविशेषस्येव देशकालपरिच्छेदमात्रस्यापि प्रमाणबाधात् वस्तुतः परिच्छेदो न प्रयोजक इति भावः। अथवा प्रयोज्याकारतारतम्यं प्रयोजकाकारतारतम्यनिबन्धनं दृष्टम् ; यथा पतनतारतम्यं गुरुत्वतारतम्यनिबन्धनम् , यथा वा गतिशैघ्र्यतारतम्यं वेगतारतम्यनिबन्धनम् । अतस्तारतम्यवति प्रयोज्यधर्मे प्रयोजक-धर्मेण तारतम्यवता भाव्यम् , अतो वस्तुपरिच्छेदस्य देशकालपरिच्छेदप्रयोजकत्वे सति न्यूनाधिकभाववत्त्व-प्रसङ्गः । न च वस्तुपरिच्छेदो न्यूनाधिकभाववान् दृश्यते । तस्माद्देशकालपरिच्छेदप्रयोजकत्वं तस्यानुपपन्नम् । अतो वस्तुतः परिच्छिन्नस्यापि ब्रह्मणो देशकालपरिच्छेदाभाव उपपन्न इत्यर्थः । भाष्ये

भावेनानियमदर्शनात् देशकालसंबन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णयत्वेन [च] ब्रह्मणः सर्वदेशकालसंबन्धस्यापि प्रमाणान्तरादापततो विरोधाभावात्॥ वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावादानन्त्यासिद्धिरिति चेत्, तद् भवतोऽप्यविद्याविलक्षणत्वं ब्रह्मणोऽभ्युपयतः समानम्। अतः सतोऽविद्याविलक्षणत्वाभ्युपगमाद्ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषाःसर्वे तवापि प्रसज्येरन्। यद्यविद्याविलक्षणत्वं नाभ्युपेयते, तर्ह्यविद्यात्मकमेव ब्रह्म स्यात्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणवाक्यमपि तत एवापार्थकं स्यात्। भेदतत्त्वानभ्युपगमे हि स्वपक्षपरपक्षसाधनदूषणादिविवेकाभावात् सर्वमसमञ्जसं स्यात्। आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण; न वस्तुतोऽपि परिच्छेदरहितत्वेन, तथाविधस्य शशविषाणायमानस्यानुपलब्धेः। भेदवादिनस्तु

---

न्यूनाधिकभावेनानियमदर्शनादिति, प्रमाणान्तरायत्तनिर्णयत्वेन चेति निर्देशेनायमर्थो विवक्षित इति स्फुटमवगम्यते। अथानन्त्यश्रुतेः सङ्कोचं शङ्कते वस्तुतः परिच्छेदमात्रादपीति। सङ्कोचस्य परपक्षेऽपि तुल्यतां दर्शयति तद्भवतोपीति। ततः किमित्यत्राह अतः सतोऽविद्येति। प्रसङ्गदार्ढ्याय प्रसञ्जकस्य विपर्ययेऽनिष्टमाह यद्यविद्येति। ततोऽपि किमित्यत्राह सत्यं ज्ञानमिति। परमार्थादन्यत्वं वस्तुपरिच्छेदः ; स तु ब्रह्मणो नास्तीति चेत्—तदयुक्तम्; परमार्थादन्यत्वं हि मिथ्यात्वम्; तच्च बाध्यत्वम्; बाधफलं च कदाचिन्निवृत्तिरिति तस्य कालपरिच्छेदान्तर्भावात्। अतो विलक्षणत्वमात्रं वस्तुपरिच्छेद इति त्वया वक्तव्यम्; उक्तञ्च। अतोऽविद्याविलक्षणब्रह्मणो वस्तुपरिच्छेदप्रसङ्गो दुर्वारः। पूर्वस्मिन् ग्रन्थे अविद्याब्रह्मणोर्भेदानभ्युपगमे दूषणमुक्तम्। अथ सामान्येन, भेदो नाम कश्चिदस्तीत्यनभ्युपगमे दूषणमाह भेदतत्त्वेति। स्वपक्षो निर्दूषणः प्रबलः, परपक्षः सदूषणो दुर्बल इति भेदः किमस्ति वा, न वा? अस्ति चेत्, भेदाङ्गीकारः। न चेत्, परपक्ष एव प्रबलः स्यात्। स्वेनापि स एवाभ्युपगतः स्यात्॥ स भेदोऽपरमार्थ इति चेत्, ततोऽपि परपक्षप्राबल्यं स्यादित्यर्थः। ब्रह्माज्ञानपक्षं खण्डयन् वैशेषिकः स्वाभिमतनिर्वाहमाह आनन्त्यप्रसिद्धिश्चेति। साक्षात्सिद्धान्तिपक्षे वस्त्वपरिच्छेद उपपन्न इत्याह भेदवादिनस्त्विति। ब्रह्मणः सर्वप्रकारत्वादित्यनेन सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेद इति भाष्यकाराभिप्राय इत्यवगम्यते। इदमिदं न भवतीति हि वस्तुपरिच्छेदः। इदमिदं भवतीति निर्देशयोग्यत्वं वस्त्वपरिच्छेदः। सर्ववस्तुसामानाधिकरण्यार्हत्वमित्यर्थः। अनेकविशेषणानामेकविशेष्यपर्यन्ताभिधानं हि सामानाधिकरण्यकृत्यम्। तच्च वस्तुनस्तथाविधत्वात्। यद्वा वस्त्वपरिच्छेदो नाम वस्तुगतस्वभावविशेषो देशकालापरिच्छेदविलक्षणः। यथा देशकालपरिच्छेदसाम्येऽपि षड्वर्णस्वर्णस्य दशवर्णात् परिच्छेदो देशकालपरिच्छेदविलक्षणो दृश्यते। षड्वर्णतया परिच्छेदो दशवर्णस्य स्वर्णस्य नास्ति—तथा ब्रह्मणोऽपि वस्त्वपरिच्छेदो नाम स्वभावतोऽपरिच्छेदः, गुणानन्त्यमिति फलितम्। उक्तं प्रकारद्वयं साधीयः। वस्त्वन्तराप्रतिहतिर्वस्त्वपरिच्छेद इति केचित्। आलोकादिर्हि सर्वदेशसंबन्धयोग्योऽपि प्रतिहन्यते, न तथेत्यर्थः। केचिदेवमाहुः—वस्तुपरिच्छेदो वस्तुनः परमितत्वम्, तदभावो वस्त्वपरिछेदः। देशापरिच्छेदस्तत्कार्यः, वस्तुनः परिमितत्वाभावाद्धि सकलदेशसंबन्ध इति। इतोऽपि पूर्वोक्तपक्षद्वयं वरम्। स्वतः परतोऽपि

सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतोऽपि परिच्छेदो न विद्यते ।

तदेवं कारणाद्भिन्नस्य कार्यस्य सत्यत्वाद्ब्रह्मकार्यं कृत्स्नं जगत् ब्रह्मणोऽन्यदेव—इति प्राप्ते प्रचक्ष्महे—तदनन्यत्वमारम्भणशब्दादिभ्यः। तस्मात्—परमकारणाद्ब्रह्मणः, अनन्यत्वं जगतः आरम्भणशब्दादिभ्यः तदुपपादयद्भ्योऽवगम्यते। आरम्भणशब्द आदिर्येषां वाक्यानाम्, तान्यारम्भणशब्दादीनि, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत"; "अनेन जीवेनात्मनाऽनुप्रविश्य", "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः....ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्येतानि; प्रकरणान्तरस्थान्यप्येवंजातीयकान्यत्राभिप्रेतानि । एतानि हि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद्ब्रह्मणोऽनन्यत्वमुपपादयन्ति। तथा हि—"स्तब्धोऽसि । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति, कृत्स्नस्य जगतो ब्रह्मैककारणत्वम्, कारणात्कार्यस्यानन्यत्वं च हृदि निधाय, कारणभूतब्रह्मविज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति, कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण, "कथं नु भगवः स आदेशः" इत्यन्यज्ञानेनान्यज्ञातताऽसंभवं चोदितः, जगतो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावत्, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति दर्शयति । यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः ।

---

**परिच्छेदो न विद्यत** इति। **स्वत** इति घटादिव्यावृत्तिः ; घटादयो हि स्वतः परिच्छिन्नाः। **परत** इति धर्मभूतज्ञानव्यावृत्तिः ; तद्धि पराधीनसङ्कोचम् । एवं देशकालपरिच्छेदाभाव उक्तः । यद्वा **स्वत** इति स्वतःपरिमितत्वाभाव उक्तः। अयं वस्त्वपरिच्छेदः। तत्कार्यपरिमितदेशकालसंबन्धाभाव उक्तः **परत** इति।

अथ वैशेषिकपक्षमुपसंहरन् सूत्रमवतारयति **तदेव**मिति **तदनन्यत्वमारम्भणशब्दादिभ्यः**। कस्य कस्मादनन्यत्वमित्यत्राह **तस्मा**दिति । पूर्ववाक्यखण्डानुपादानेनारम्भणशब्दोपादानस्य हेतुमाह **तदुपपादयद्भ्य** इति। पूर्ववाक्ये एकविज्ञानं प्रतिज्ञातम् । तत्र दृष्टान्तश्चोक्तः। प्रतिज्ञादृष्टान्तवाक्यद्वयं प्रकृत्यधिकरण उपात्तम् । उक्तदृष्टान्तेऽपि वैशेषिकमतेन कारणात् कार्यस्यान्यत्वादेकविज्ञानेन सर्वविज्ञानानुपपत्तिमाशङ्क्य तदुपपादयति—वाचारम्भणमित्यादिवाक्यम् । अतस्तदिदं वाक्यमनेन सूत्रेणोपात्तमित्यर्थः ॥ तर्हि **आरम्भणशब्दादिभ्य** इति किमर्थमुक्तम्; न तु वाचादिभ्य इति ॥ उच्यते—**केचित्** वाचारम्भणमित्येकं पदं व्याचक्षते वागालम्बनमिति, 'यथा वाचा दिशा निशा' इति वचनात् । तद्व्यावृत्त्यर्थं **वाचे**ति पदान्तरम्, आरम्भणमित्यपि पदान्तरमिति दर्शयितुम् **आरम्भणशब्दादिभ्य** इत्युक्तम् । समासस्य षष्ठीतत्पुरुषत्वव्यावृत्त्यर्थं व्याचष्टे **आरम्भणे**ति । आदिशब्दोपात्तानि वाक्यान्याह **सदेवे**ति । एतदभिप्रेतान्याह **प्रकरणान्तरे**ति । एषां वाक्यानामनन्यत्वबोधकतामुपपादयति **तथा ही**ति । एकविज्ञानेन सर्वविज्ञानं प्रतिजानतोऽभिप्रायमाह **कृत्स्नस्ये**ति । दृष्टान्तवाक्यं व्याचष्टे **यथे**ति । **मृण्मय**मिति पदं व्याचष्टे **मृत्पिण्डारब्धाना**मिति । वाक्याभिप्रेतार्थमाह **तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेने**ति। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति', 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इत्यादिश्रुत्यन्तरानुगुण्यात्, दृष्टान्त-

अत्र काणादवादेन कारणात् कार्यस्य द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्यस्यानन्यतामुपपादयति, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । आरभ्यते- आलभ्यते, स्पृश्यत इत्यारम्भणम् । "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युट् । वाचा— वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः । घटेनोदकमाहरेत्यादिवाक्पूर्वको ह्युदकाहरणादिव्यवहारः । तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः—संस्थानविशेषः तत्प्रयुक्तं च घट इत्यादि नामधेयम्, स्पृश्यते—उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति । अतो घटाद्यपि मृत्तिकेत्येव सत्यम् । मृत्तिकाद्रव्यमित्येव, सत्यम्—प्रमाणेनोपलभ्यते इत्यर्थः (?) न तु द्रव्यान्तरत्वेन। अतस्तस्यैव मृद्धिरण्यादेः द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तरादय उपपद्यन्ते; यथैकस्यैव देवदत्तस्यावस्थाभेदैः, बालः, युवा, स्थविरः इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते ।

---

सामर्थ्यात् दार्ष्टान्तिकसामर्थ्याच्च **तज्ज्ञानेने**ति व्याख्यातम् । न हि मृत्पिण्डसत्तया घटशरावादि ज्ञातं भवति; न हि परब्रह्मसद्भावात् सर्वं जगद्विज्ञातं च भवति । वाचारम्भणमित्यादिवाक्यस्य शङ्कामाह **अत्रे**ति । कार्यमिथ्यात्वपक्षे प्रतीतिमात्रेण सतः कार्यस्य वागारब्धत्वाभावात् वाचः पूर्वमपि प्रतीयमानत्वात्, परिणामपक्षे च ब्रह्मकार्यस्य जगतः शब्दपरिणामत्वाभावाच्च **आरम्भण**शब्दस्योपादानार्थत्वमयुक्तम् । **आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भण**मिति । "आलम्भः स्पर्शहिंसयोः" इति निघण्टुकाराः । नामधेयस्य मृदारब्धत्वाभावाद्विकारनामधेययोरुभयोरप्यारम्भणशब्दवाच्यत्वसिद्धये स्पर्शार्थत्वेन व्याख्यातम् । 'विभ्राजमानः सरिरस्य मध्यात्' इत्यत्र यथा सरिरशब्देन सलिलमुच्यते, तद्वत् आरभ्यत इत्यत्रापि रलयोरभेदो विवक्षित भावः । वाचेति तृतीयान्तं पदम्; अजहल्लक्षणेयम् । विकारनामधेययोरुभयोरपि हेतुत्वाय **वाक्पूर्वकेण व्यवहारेण हेतुने**ति व्याख्यातम् । हेतुत्वं च प्रयोजनतया, न तु साधनतया हेतुत्वमित्यर्थः। तदाह **तस्य व्यवहारस्य सिद्धय** इति । केन स्पृश्यत इत्यपेक्षायां पूर्ववाक्यप्रस्तुतेन मृद्द्रव्येणेत्याह **तेनैवे**ति । धर्मिपरत्वव्यावृत्त्यर्थं विकारशब्दं व्याचष्टे **संस्थानविशेष** इति। स्पर्शशब्दार्थं विवृण्वन् उक्तमर्थं संग्रहेणाह **उदकाहरणादी**ति । व्याहारपूर्वकव्यवहारसिद्ध्यर्थं कारणद्रव्यमेवावस्थान्तरनामान्तरभाग्भवतीत्युक्तम् । आस्ते शेत इत्यादिष्ववस्थान्तरेणापि बुद्धिशब्दान्तरादयो दृश्यन्ते; घटः पट इत्यादिषु वस्त्वन्तरत्वेनापि बुद्धिशब्दान्तरादयो दृश्यन्ते; अत्र त्ववस्थान्तरनिबन्धनत्वे किं निश्चायकमित्यपेक्षायां प्रत्यभिज्ञाप्रत्यक्षमिति श्रुतिराहेत्याह **अतो घटाद्यपी**ति। सत्यशब्दं व्याचष्टे **प्रमाणेनोपलभ्यत** इति । एवकारं व्याचष्टे **न तु द्रव्यान्तरत्वेने**ति । विकारासत्यत्वं विवक्षितं चेत्, इतिकरणवैयर्थ्यं स्यात् । द्रव्यान्तरत्वसाधकतया परोक्तानां बुद्धिशब्दान्तरादीनां सामान्येनान्यथासिद्धिमाह **अत** इति। दृष्टान्तमाह—**यथैकस्ये**ति । बालयुवशरीराणामपि वस्त्वन्तरत्वं वैशेषिकैरुच्यत इति दृष्टान्तो विप्रतिपन्न इति चेन्न; बालयुवादिशब्दाः शरीरद्वारा शरीरिणमभिदधते; तस्य च नश्वरत्वाभावाच्चेतनपर्यन्तबुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति । यद्वा आस्ते शेते तिष्ठति गच्छतीत्यादिवत् बुद्धिशब्दान्तरादीनामवस्थाभेदनिबन्धनत्वोपपत्तेर्बाल्युवादिशरीरस्याबाधितप्रत्यभिज्ञागोचरस्याभङ्गुरत्वसिद्धवत्कारेण दृष्टान्ततयोपन्यासः ।

यदुक्तम्—सत्यामेव मृदि, घटो नष्ट इति व्यवहारात् कारणादन्यत् कार्यमिति—तत् उत्पत्ति-विनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतम्। तत्तदवस्थस्य तस्यैव (एकस्यैव) द्रव्यस्य ते ते शब्दास्तानि तानि च कार्याणीति युक्तम् । द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थवत्त्वम् । अभिव्यक्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि। उत्पत्त्यभ्युपगमेऽपि सत्कार्यवादो न विरुध्यते; सत एवोत्पत्तेः॥ विप्रतिषिद्धमिदमभिधीयते, पूर्वमेव सत्, तदुत्पद्यते चेति ॥ अज्ञातोत्पत्तिविनाशयाथात्म्यस्येदं चोद्यम् । द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः; स्वावस्थस्य तूत्पत्तिः। अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात् सत्कार्यवादो न विरुध्यते॥ संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेत्—असत्कार्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसङ्गः; उत्पत्तिमत्त्वे चानवस्था। अस्माकं तु अवस्थानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम्। कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावत् एकत्वावस्थाप्रहाणेन बहुत्वावस्था, तत्प्रहाणेनैकत्वावस्था चेति न कश्चिद्विरोधः।

---

भावाभावविरोधं पृथक् परिहरति—**यदुक्त**मिति। तस्य परिहृतत्वं दर्शयन् कार्यभेदं परिहरति **तत्तदवस्थस्य तस्यैवे**ति। कारकव्यापारवैयर्थ्यं परिहरति **द्रव्यस्ये**ति। अभिव्यक्तिपक्षचोद्यानि अनभ्युपगमात् परिहरति **अभिव्यक्त्यनुबन्धीनी**ति। अभिव्यक्तिरनभ्युपेता चेत्, उत्पत्तिः स्वीकृता स्यात्; तदानीमसत्कार्यवादः स्यादित्यत्राह **उत्पत्त्यभ्युपगम** इति। अनित्यधर्मोऽवस्था। चोद्यं शङ्कते **संस्थानस्ये**ति। परिहरति **असत्कार्ये**ति। अयमर्थः—यथोत्पत्तेरुत्पत्तिचोद्यं धर्मान्तरारोपणेन [1]नित्यसमाख्या(व)ज्जात्युक्तिर्हि (?) भवति, तथा अवस्थायामुत्पत्तिचोद्यमपि जात्युक्तिः॥ ननु तत्रोत्पत्तेरुत्पत्तिचोद्यं जात्युक्तिर्भवति; न त्ववस्थाया उत्पत्तिकथनं जात्युक्तिरिति चेन्न—अवस्थैवोत्पत्तिरित्यभ्युपगमात् अवस्थाया उत्पत्तिमत्त्वचोदनमुत्पत्तेरुत्पत्तिमत्त्वचोदनमेवेति जात्युक्तिरिति। तदेतदभिप्रेत्य प्रतिबन्दीमुखेनोक्तम्—**उत्पत्तेरनुत्पत्तिमत्त्व** इति। **अस्माकं त्वि**ति। अपृथक्सिद्धधर्मतया पृथक्प्रतिपत्तिकार्यानर्हव्यतिरिक्तोनाम् उत्पत्त्यादिकं पृथगपेक्ष्यते। पृथक्प्रतिपत्तिकार्यानर्हधर्माः पृथगुत्पत्तिनिरपेक्षाः। अत एव ह्युत्पत्तेरुत्पत्त्यादिनैरपेक्ष्यम्। तस्मादपृथक्सिद्धधर्मास्तु स्वयं धर्मिण उत्पत्त्याद्यवस्थाभूता इत्यर्थः। अवस्थैव वस्तुन उत्पत्तिः; न त्ववस्थाया उत्पत्तिर्नामास्तीति स्वपक्षवैषम्यद्योतनार्थ**स्तु**शब्दः। सङ्ख्याभेदं परिहरति **कपालत्वे**ति। सद्वारकत्वादविरोधः, कालभेदाच्चाविरोध इत्यर्थः।

एवं वाचारम्भणमित्यादिवाक्यस्यार्थ उक्तः। अथ सूत्रस्थादिशब्दोपात्तेषु वाक्येषु सदेवेत्यादिकं

---

1. नित्यसमेति। (न्यायदर्शने 5-1-35). एवमुल्लेख्यम्—अनित्यः शब्द इति पक्षे शब्दगतानित्यत्वं नित्यञ्चेत् शब्दनित्यत्वापत्तिः। तदनित्यत्वे तु तस्यानित्यत्वस्याप्यनित्यत्वान्तरमित्यनवस्थेति नित्यत्ववादिनोच्यते चेत्—अनित्यत्ववादिनाऽप्याक्षिप्यते, शब्दगतनित्यत्वस्यानित्यत्वे शब्दानित्यत्वम्, नित्यत्वे चानवस्थेति जात्युत्तरमिति। तद्वदिदमुत्पत्त्यादिचोद्यम्। नित्यसमेत्यस्य, धर्मे क्वचित् तद्धर्मसदसद्भावशंका नित्यसमेति सामान्यतः सर्वानुगमकार्थपरत्वे तु प्रकृते नित्यसमात्वमेवेति ध्येयम्। अत्र यथेति पदे सति, हीति न स्यात्।

तथा, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति, सदेवेदम्—इदानीं विभक्तनाम-रूपत्वेन नानारूपं जगत् अग्रे नामरूपविभागाभावेनैकमेवासीत्, सर्वशक्तित्वेनाधिष्ठात्रन्तरासहतया अद्वितीयं चेत्यनन्यत्वमेवोपपादितम्। तथा, "तदैक्षत बहु स्यां प्रजायेय" इति स्रक्ष्यमाणतेजः-प्रभृतिविविधविचित्रस्थिरत्रसरूपजगत्त्वेनात्मनो बहुभवनं सङ्कल्प्य जगत्सर्गाभिधानात् कार्य-भूतस्य जगतः परमकारणात् परस्माद्ब्रह्मणोऽनन्यत्वमवसीयते। सच्छब्दवाच्यस्य परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य निरवद्यस्यैव सदेवेदमिति निर्देशार्हजगत्त्वम्, सच्छब्दवाच्यस्यैव जगतो नामरूपविभागाभावेनैकत्वम्, अधिष्ठात्रन्तरनिरपेक्षत्वम्, पुनरपि तस्यैव विचित्रस्थिरत्रसरूप-जगत्त्वेन बहुभवनसङ्कल्परूपेक्षणम्, यथासङ्कल्पं सर्गश्च कथमुपपद्यत इत्याशङ्क्याह, "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतम्" इत्यादि। "तिस्रो देवताः" इति कृत्स्नमचिद्वस्तु निर्दिश्य स्वात्मकजीवानु-

---

दार्ष्टान्तिकवाक्यं व्याचष्टे **तथेति**। **तथा अनन्यत्वमेवोपपादित**मित्यन्वयः। सच्छब्दः प्रमाण-सम्बन्धार्हतां वदति; यद्वा ब्रह्म वदति। अन्यतरार्थत्वेऽप्यनन्यपदार्थत्वं सिध्यति। सदेवेत्यवधारणेन कदाचिदसत्त्वं व्यावर्तितम्; **एकमेवे**ति नामरूपविभागाभाव उक्तः; **अद्वितीयपदे**नाधिष्ठात्रन्तर-निषेध इत्यर्थः। सदेवेत्यादिवाक्यस्थमिदंशब्दं व्याचष्टे—**विभक्तनामरूपत्वेने**ति। इदं जगत् सदेव चेत्, कथं सृष्ट्याद्युपपत्तिरित्यत्राह—**अग्र** इति। **अद्वितीयपदं** व्याचष्टे **सर्वशक्तित्वेने**ति। एषां पदानामुक्तार्थपरत्वमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थत्वादेवावगम्यते। न हि सजातीय-विजातीयादिव्यावृत्त्या प्रतिज्ञोपपादनोपयोगः। एषां पदानामुक्तार्थैकपरत्वमुपरितनवाक्यैरप्युपपादयति **तथा तदैक्षतेति....तेजःप्रभृतीति**। सङ्कल्पानन्तरं तेजःप्रभृतिसृष्टिप्रतिपादनात्—बहु स्यामिति बहुशब्दस्तेजःप्रभृतिरूपेण बहुत्वपर इत्यर्थः[1], **बहुशब्दो**क्तनामरूपविभागाभाव **एकशब्दो**क्त इति गम्यते; ऐक्षतेत्यनेन अद्वितीयपदस्याधिष्ठात्रन्तरनिवारकत्वं ज्ञातम्; 'कथमसतः सज्जायते' इत्यनेन सदेवेत्यवधारणस्य कदाचिदसत्त्वव्यावृत्तिपरत्वमवगतम्; कारणभूतस्यैव ब्रह्मणो बहुभवनसङ्कल्पाभिधानात् कार्यकारणयोरनन्यत्वं च लब्धमित्याह—**तथा तदैक्षतेति** [2] **(आत्मनो बहुभवनं संकल्प्य(?))** इति। व्यष्टिसृष्टिसङ्कल्पवाक्यस्य शङ्काविशेषव्युदासकत्वात् तद्व्युदसनीयां शङ्कामाह **सच्छब्दवा-च्यस्येति**। सच्छब्दस्य[3] ब्रह्मपरत्वे इदंशब्दवाच्यजगत्सामानाधिकरण्यमनुपपन्नमित्यभिप्रायेणाह **सच्छब्द-वाच्य[स्य पर (?) ]स्येति**। सच्छब्दस्य जगत्परत्वे तदैक्षतेत्यादिभिर्विरोध इत्यभिप्रायेणाह **सच्छब्दवा-च्यस्यैव जगत** इति। चेतनांशस्यैक्यानुपपत्तिमभिप्रेत्याह **नामरूपविभागाभावेनैकत्वमिति**। **सेयमि-**त्याद्युदाहृतवाक्यसमुदायस्यार्थोऽन्यत्रोक्तः; तत्र वाक्यैकदेशेनोक्तार्थविरोधशङ्कां परिहरिष्यन् उदाहृतवाक्य-समुदायप्रतिपन्नमर्थं साधारण्येन वदति **तिस्र** इति। अस्मिन् वाक्ये स्वात्मकजीववाचिपदं दर्शयन्ननुप्रवेशव-

---

1. इत्यर्थ इति न स्यात्। 2. प्रथमावतारिकाविवरणं द्वितीयावतारिकयेति स्यात्। आत्मन इत्यादिपाठोऽयं भावप्रकाशिकोल्लिखितः। 3. सच्छब्दवाच्यस्येत्यस्य पूर्वं ब्रह्मण इति पश्चात् जगत इति च विशेष्यं भाष्ये प्रयुक्तम्। तत्र दृष्टिं पातयन् विविनक्ति। अत एवं पाठोऽपि युक्तः। भावप्रकाशिकायां तु तदैक्षतेति पदद्वयाऽन्यथोक्तम्।

प्रवेशेनैतद्विचित्रनामरूपभाक्करवाणीत्युक्तम् । अनेन जीवेनात्मना—मदात्मकजीवेन आत्मतया अनुप्रविश्यैतद्विचित्रनामरूपभाक् करवाणीत्यर्थः। स्वात्मनः, जीवस्य चात्मतयाऽनुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति । "तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुत्यन्तरेण स्पष्टम्, सजीवं जगत् परेण ब्रह्मणा आत्मतयाऽनुप्रविष्टमिति ।

तदेतत् कार्यावस्थस्य च कारणावस्थस्य च चिदचिद्वस्तुनः सकलस्य स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वम्, परस्य च ब्रह्मण आत्मत्वमन्तर्यामिब्राह्मणादिषु सिद्धं स्मारितम्। अनेन पूर्वोक्ताशङ्का निरस्ता—अचिद्वस्तुनि सजीवे ब्रह्मण्यात्मतयाऽवस्थिते नामरूपव्याकरणवचनात् चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति "सदेवेदमग्र एकमेवासीत्" इत्यादि सर्वमुपपन्नतरम् ; शरीरभूतचिदचिद्वस्तुगताः सर्वे विकाराश्चापुरुषार्थाश्चेति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं च सुस्थितम् । तदेतत्, "अधिकं तु भेदनिर्देशात्" इत्यनन्तरमेव वक्ष्यति । तथा, "ऐतदात्म्यमिदं सर्वम्" इति कृत्स्नस्य चेतनाचेतनस्य ब्रह्मतादात्म्यमुपदिशति । तदेव च तत्त्वमसीति निगमयति ।

तथा प्रकरणान्तरस्थेष्वपि वाक्येषु, "सर्वं खल्विदं ब्रह्म" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्...इदं सर्वं यदयमात्मा", "ब्रह्मैवेदं सर्वम्', आत्मैवेदं सर्वम्" इत्यनन्यत्वं प्रतीयते । तथाऽन्यत्वं च निषिध्यते, "सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद", "नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति । तथा, "यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यविदुषो द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयत् अनन्यत्वमेव तात्त्विकमिति प्रतिपादयति ।

तदेवमारम्भणशब्दादिभ्यो जगतः परमकारणात् परस्माद्ब्रह्मणोऽनन्यत्वमुपपाद्यते ।

अत्रेदं तत्त्वम्—चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम्। तत् कदा-

---

द्गगनादिव्यावृत्त्यर्थं नियन्तृतयाऽनुप्रवेशं च दर्शयति-अनेनेति । स्वात्मकजीवेनेत्युक्ते मृदात्मक इतिवत् स्यादिति शङ्कायां विवक्षितार्थविशेषमाह **स्वात्मनः जीवस्य चेति**। 'सिंहेन[1] भूत्वा बहवो मयात्ताः' इतिवत् जीवेनात्मनेत्यस्यार्थ इति भावः। इममर्थं श्रुत्यन्तरेण स्पष्टयति **तत्सृष्ट्वेति**। **आत्मतयाऽनुप्रविष्टमिति श्रुत्यन्तरेण स्पष्टमि**त्यन्वयः। [2]बहुत्वे सति ह्यनुप्रवेशः. स तु कारणावस्थायामेकत्वान्नोपपद्यत इत्यत्राह **तदेतदि**ति। ततः किमित्यत्राह **अनेनेति**। **पूर्वोक्ताशङ्का**—इदंशब्दसामानाधिकरण्येन ब्रह्मणि जगद्गतदोषाशङ्केत्यर्थः। तदुपपादयति **अचिद्वस्तुनीत्या**दिनाऽनन्तरवाक्येन। **उपपन्नतरम्**—मुख्यमेवेति भावः। अथ प्रकरणान्तरस्थवाक्यानामप्येतत्सूत्राभिप्रेतत्वात् तैरनन्यत्वमुपपादयति **तथा प्रकरणान्तरस्थेष्वि**ति। द्वैतदर्शनस्यातात्त्विकत्वं कदाचिन्निवृत्तिवचनेनापि सिद्धमित्याह **यत्रत्वस्येति**।

**तदेव**मित्यादि। ब्रह्मणश्चिदचितोरुत्पत्तिप्रलयश्रवणात् कारणात्कार्यस्यानन्यत्वात् कारणावस्थायां बहुत्वाभावाच्छरीरशरीरिभावस्यानुपपन्नत्वेन स्वभावव्यवस्था न स्यादित्यत्राह—यद्वा भेदव्यपदेशादित्यादिभिः सूत्रैर्भेदोपपादनेनेदमनन्यत्वोपपादनं व्याहतमित्यत्राह **अत्रेदं तत्त्वमिति**। विशिष्टात्कारणा-

---

1. सिंहेनेति। आत्मनि सिंहशरीर(भावा)भवनायोगात् सिंहपदं विशिष्टपरमेव वाच्यम् ; तद्वत् जीवेनेत्यपि जीवविशिष्टपरमिति भावः। 2. बहुभवनोपपादकनामरूपश्रुत्या कार्येऽनुप्रवेशलाभेऽपि सत्पदस्य सूक्ष्मशरीरकत्वपरत्वं दुर्लभमिति शंकायामाहेत्यवतारिकार्थः।

चित् स्वस्मात् स्वशरीरतयापि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरम्; तत् कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरम्; तच्च कार्यावस्थमिति कारणात्परस्माद्ब्रह्मणः कार्यरूपं जगदनन्यत्, शरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायां च श्रुतिशतसिद्धया स्वभावव्यवस्थया गुणदोषव्यवस्था च, "न तु दृष्टान्तभावात्" इत्यत्रोक्ता॥

ये तु कार्यकारणयोरनन्यत्वं कार्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति; न तेषां कार्यकारणयोरनन्यत्वं सिध्यति, सत्यमिथ्यार्थयोरैक्यानुपपत्तेः। तथा सति ब्रह्मणो मिथ्यात्वं जगतः सत्यत्वं वा स्यात्॥

ये च कार्यमपि पारमार्थिकमभ्युपयन्त एव, जीवब्रह्मणोरौपाधिकमन्यत्वम्, स्वाभाविकं चानन्यत्वम्, अचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकमिति वदन्ति—तेषामुपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्निरवयवस्याखण्डितस्य ब्रह्मण एवोपाधिसंबन्धाद्ब्रह्मस्वरूपस्यैव हेयाकारपरिणामात्, शक्तिपरिणामाभ्युपगमे शक्तिब्रह्मणोरनन्यत्वाच्च जीवब्रह्मणोः कर्मवश्यत्वापहतपाप्मत्वादिव्यवस्थावादिन्यः अचिद्ब्रह्मणोश्च परिणामवादिन्यः श्रुतयो व्याकुलीभवेयुः (व्याकुप्येयुः)॥

ये पुनः—निरस्तनिखिलभोक्तृत्वादिविकल्पविप्लवं सर्वशक्तियुक्तं सन्मात्रद्रव्यमेव कारणं ब्रह्म; तच्च प्रलयवेलायां शान्ताशेषसुखदुःखानुभवविशेषं स्वप्रकाशमपि सुषुप्तात्मवत् अचिद्विलक्षणमवस्थितम्, सृष्टिवेलायाम्, मृत्तिकाद्रव्यमिव घटशरावादिरूपम्, समुद्र इव च फेनतरङ्गबुद्बुदादिरूपः, भोक्तृभोग्यनियन्तृरूपेणांशत्रयावस्थमवतिष्ठते; अतो भोक्तृभोग्यनियन्तृत्वानि तत्प्रयुक्ताश्च गुणदोषाः शरावत्वघटत्वमणिकत्ववत् तद्गतकार्यभेदवच्च व्यवतिष्ठन्ते; भोक्तृभोग्यनियन्तृणां सदात्मनैकत्वं च घटशरावमणिकादीनां मृदात्मनैकत्ववदुपपद्यते; अतः सन्मात्रद्रव्यमेव सर्वावस्थावस्थितम् इति—ब्रह्मणोऽनन्यज्जगदातिष्ठन्ते—तेषां सकलश्रुतिस्मृतीतिहासपुराणन्यायविरोधः। सर्वा हि श्रुतयः सस्मृतीतिहासपुराणाः सर्वेश्वरेश्वरं सदैव सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं निरवद्यं देशकालानवच्छिन्नानवधिकातिशयानन्दं परमकारणं ब्रह्म प्रतिपादयन्ति; न पुनरीश्वरादपि परमीश्वरांशि सन्मात्रम्। तथा हि, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति', 'ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः" इति, 'आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किञ्चन मिषत्। स ऐक्षत लोकान्नुसृजा इति', "एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः। स एकाकी न रमते तस्य ध्यानान्तःस्थस्य" इत्यादिभिः परमकारणं सर्वेश्वरेश्वरो नारायण एवेत्यवगम्यते। सद्ब्रह्मात्मशब्दा हि तुल्यप्रकरणस्थाः तत्तुल्यप्रकरणस्थेन नारायणशब्देन विशेषिताः तमे

---

द्विशिष्टं कार्यं जायत इति शरीरशरीरिभावादिरुपपद्यत इत्यर्थः। **ब्रह्माज्ञानवादिभिरस्य सूत्रस्योक्तमर्थं दूषयति ये त्विति।** **भास्करमतं** दूषयति **ये चेति।** निरवयवत्वादिविशेषणं ब्रह्मणि दोषसंबन्धज्ञापनाय। **शक्तिपरिणामाभ्युपगम** इति। शक्तेर्ब्रह्मानन्यत्वाभ्युपगमात् तेनापि व्याकुलमेवेत्यर्थः।

**यादवप्रकाशमतं** निरस्यति **ये पुनरिति।** **विप्लवः** विकारः। **तेषामित्यादि।** **सदैव सर्वज्ञमिति।** अनेन कारणावस्थायामपि सर्वज्ञत्वादिकं विवक्षितम्, 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति हि श्रुतिः। महोपनिषद्येव नारायणकारणत्वं श्रूयते; अन्यत्र तु सद्ब्रह्मात्मादीनाम्; तत् कथं सर्वोपनिषत्स्वीश्वरस्य कारणत्वं श्रूयत इत्यत्राह **सद्ब्रह्मेति।** **सद्ब्रह्मशब्दौ**

यावगमयन्ति, "तमीश्वराणा परमं महेश्वरं[तं देवतानां परमं च दैवतम् ]," "स कारणं करणाधिपा-धिपो न चास्य कश्चिज्जनिता न चाधिपः' इतीश्वरस्यैव कारणत्वं श्रूयते। स्मृतिरपि मानवी, "ततः स्वयंभूर्भगवान्" इति प्रकृत्य, "सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत्" इति। इतिहासपुराणान्यपि पुरुषोत्तममेव परमकारणमभिदधति, "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः। स सिसृक्षुः सहस्रांशादसृजत्पुरुषान् द्विधा", "विष्णोःसकाशादुद्भूतं जगत् तत्रैव च स्थितम्" इत्यादिषु। न चेश्वरः सन्मात्रमेवेति वक्तुं शक्यम् ; तस्य तदंशत्वाभ्युपगमात्; सविशेषत्वाच्च। न च तस्य ज्ञानानन्दाद्यनन्तकल्याणगुणयोगः कादाचित्क इति वक्तुं शक्यते ; तेषां स्वाभाविकत्वेन सदातनत्वात् , 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'यः सर्वज्ञः सर्ववित्' इत्यादिभ्यः। ज्ञानानन्दादिशक्तियोग एवास्य स्वाभाविक इति मा वोचः; शक्तिः स्वाभाविकी, ज्ञानबलक्रिया च स्वाभाविकीति पृथङ्निर्देशात् ; लक्षणाप्रसङ्गाच्च। न च पाचकादिवत् 'सर्वज्ञः' इत्यादिषु शक्तिमात्रे कृत्प्रत्यय इति वक्तुं शक्यम् ; कृत्प्रत्ययमात्रस्य शक्तावस्मरणात्। "शक्तौ हस्तिकवाटयोः" इत्यादिषु केषाञ्चिदेव कृत्प्रत्ययानां शक्तिविषयत्वस्मरणात्। पाचकादिषु त्वगत्या लक्षणा समाश्रीयते।

किञ्च—ईश्वरस्य तदंशविशेषत्वात् तस्य चांशित्वे तरङ्गात् समुद्रस्येवांशादंशिनोऽधिकत्वात् 'तमीश्वराणां परमं महेश्वरम्', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादीनीश्वरविषयाणि परःशतानि वचांसि बाध्येरन्। किञ्च सन्मात्रस्य सर्वात्मकत्वे अंशित्वे च, ईश्वरस्य तदंशविशेषत्वात् तस्य सर्वात्मकत्वांशित्वोपदेशा व्याहन्येरन्। न हि मणिकात्मकत्वं तदंशत्वं वा घटशरावादेः॥ स्वांशेषु सर्वेषु सन्मात्रस्य पूर्णत्वेनेश्वरांशेऽपि तस्य पूर्णत्वात् तदात्मकानि तदंशाश्चेतराणि वस्तू-

---

दृष्टान्तार्थौ। यथा सद्ब्रह्मशब्दौ सामान्यविशेषशब्दावेकार्थतया स्वीकृतौ, तद्वदिति भावः। **तमीश्वराणा-मित्यादि**। ईश्वरस्यैवेत्येवकारेण, 'न चास्य कश्चित्' इत्युक्तनिषेधो विवक्षितः। **ततः स्वयंभूरिति**। अत्र **भगव**च्छब्द ईश्वरवाचीति भावः। न्यायविरोधमाह **न चेति**। **सविशेषत्वाच्च**—नियन्तृत्वरूपविशेषवत्त्वात्। सन्मात्रं हि नियन्तृत्वादिविशेषरहितम्। **शक्तिः स्वाभाविकी**त्यादि। शक्तिविशेषे अघटितघटनासामर्थ्यरूपे शक्तिशब्दो वर्तते ; ज्ञानादिकार्यकरत्वे च। तत्रोभयमप्यसङ्कुचितं **शक्तिशब्दे**नोच्यते। तत्सङ्कोचेन पृथङ्निर्देशावैयर्थ्यमाशङ्क्याह **लक्षणाप्रसङ्गाच्चे**ति। ज्ञानादिशब्दैस्तत्तच्छक्तिः प्रतिपाद्या चेत् , लक्षणा ; शक्तिशब्दस्य सङ्कोचोऽप्यस्वरसः ; असङ्कोचे पृथङ्निर्देशवैयर्थ्यमित्यर्थः। न लक्षणा ; शक्तिमात्रेऽपि प्रत्ययविधानादित्यत्राह **न चेति**। **शक्तौ हस्तिकवाटयोरित्यादि**ष्विति। अत्रा**दि**-शब्देन 'शकि लिङ् च' इत्यादिसूत्रं विवक्षितम्। शकि लिङ् चेत्यत्र **च**शब्दात् कृत्प्रत्ययान्तराणामपि[1] शक्तौ विधानं सूचितम्॥ तत्र विशेषविधानाभावेऽपि पाचकादिषु शक्तौ कृदन्तत्वेन प्रयोगदर्शनात् कतिपयविधानमुपलक्षणमिति चेन्न ; विशेषोपादानान्यथानुपपत्त्या कृन्मात्रस्य [2]शक्त्यर्थानुपपत्तेरित्यर्थः। शक्तिविषयप्रत्ययाभावेऽपि पाचकादिषु शक्त्यर्थत्वं दृश्यत इत्यत्राह **पाचकादि**ष्विति।

---

1. कृत्प्रत्ययान्तराणाम् कृत्यप्रत्ययरूपाणां केषाञ्चित्।
2. अनुपपत्तेरिति। अनुपपत्तेरेव सिद्धेरिति यावत्।

नीति चेन्न ; घटेऽपि सन्मात्रस्य पूर्णत्वादीश्वरस्यापि घटात्मकत्वतदंशत्वप्रसङ्गात् । न च सन्मात्रस्य घटोऽस्तीति वस्तुधर्मतयाऽवगतस्य द्रव्यत्वं कारणत्वं वोपपद्यते । व्यवहारयोग्यता हि सत्त्वम् ; विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्यासत्त्वम् । द्रव्यमेव सदित्यभ्युपगमे क्रियादीनामसत्त्वप्रसङ्गः । क्रियादिषु काशकुशावलम्बनेनापि सर्वत्रैकरूपा सत्ता दुरुपपादा । सदात्मना च सर्वस्याभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभावप्रतिसन्धानात् सर्वगुणदोषसङ्करप्रसङ्गश्च पूर्वमेवोक्तः ।

अतो यथोक्तप्रकारमेवानन्यत्वम् ॥ १५ ॥

अथोच्येत—एकस्यैवावस्थान्तरयोगेऽपि बुद्धिशब्दान्तरादयो बालत्वयुवत्वादिषु दृश्यन्ते ; मृद्दारुहिरण्यादिषु द्रव्यान्तरत्वेऽपि दृश्यन्ते ; तत्र मृद्घटादिषु कार्यकारणेषु बुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति कुतो निर्णीयत इति—तत्रोत्तरम्—

**भावे चोपलब्धेः ॥ २-१-१६ ॥**

कुण्डलादिकार्यसद्भावे च कारणभूतहिरण्यस्योपलब्धेः। 'इदं कुण्डलं हिरण्यम्' इति हिरण्यत्वेन प्रत्यभिज्ञानादित्यर्थः । न चैवं हिरण्यादिषु द्रव्यान्तरेषु मृदादय उपलभ्यन्ते । अतो बालयुवादिवत् कारणभूतमेव द्रव्यमवस्थान्तरापन्नं कार्यमिति गीयते । द्रव्यान्तरवादिनाऽप्यभ्युपेतेनावस्थान्तरयोगेन बुद्धिशब्दान्तरादिषूपपन्नेष्वनुपलब्धद्रव्यान्तरकल्पनानुपपत्तेश्च । न च जातिनिबन्धनेयं प्रत्यभिज्ञा ; जात्याश्रयभूतद्रव्यान्तरानुपलब्धेः । एकमेव हेमजातीयं द्रव्यं कार्यकारणोभयावस्थं दृश्यते । न च द्रव्यभेदे समवायिकारणानुवृत्त्या कार्ये प्रतिसन्धानमिति वक्तुं शक्यम्, द्रव्यान्तरत्वे सति आश्रयानुवृत्तिमात्रेण तदाश्रितद्रव्यान्तरे प्रतिसन्धानानुपपत्तेः ॥ गोमयादिकार्ये वृश्चिकादौ गोमयादिप्रतिसंधान न दृश्यत इति चेन्न ; तत्राप्याद्य(दि)कारणभूतपृथिवीद्रव्यप्रत्यभि-

---

**न च सन्मात्रस्ये**ति । अनुवर्तमानं सन्मात्रं किं वस्तुधर्मः, उत द्रव्यम् इति विकल्पमभिप्रेत्य धर्मपक्षे दूषणमाह **न चे**ति । सत्त्वप्रसङ्गादसत्त्वं शिक्षयति **विरोधी**ति । द्रव्यपक्षे दूषणमाह **द्रव्यमेवे**ति । **क्रियादिष्वि**ति। काशस्य कुशत्वेन कुशस्थानेऽवलम्बनं **काशकुशावलम्बनम् ;** अमुख्यमित्यर्थः । द्रव्यसंबन्धः क्रियादेः सत्त्वं चेत्—एकं प्रयोजकं न स्यादित्यर्थः। स्वोक्तस्यैव सूत्रार्थत्वमुपसंहरति **अत** इति॥

मृत्तिकेत्येव सत्यमिति वाक्योक्तप्रत्यभिज्ञाप्रत्यक्षसिद्धानन्यत्वं वदत उत्तरसूत्रस्य शङ्कामाह **अथोच्येते**ति। **भावे चोपलब्धेः ॥** कस्य भावे कस्योपलब्धेरित्यत्राह-**कुण्डलादी**ति । इदं कुण्डलं हिरण्यमिति सामानाधिकरण्येन प्रत्यभिज्ञानमत्राभिप्रेतम् ; समवायिकारणानुवृत्तिं वदतोऽसत्कार्यवादिनोऽप्यभिमताया वैयधिकरण्येन प्रत्यभिज्ञायाः स्वपक्षासाधकत्वात् । तथापि बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं कल्प्यत इत्यत्राह **द्रव्यान्तरवादिने**ति । **अभ्युपेतेन**—असमवायिकारणत्वेनाभ्युपेतेनेत्यर्थः । अनन्यथासिद्धं हि कल्पकम् ; बुद्धिशब्दान्तरादीनामन्यथासिद्धत्वान्न कल्पकत्वमित्यर्थः । **न चे**ति। सोऽयं गौरित्यादिषु जातिनिबन्धनं प्रत्यभिज्ञानं दृष्टम् ; तथाऽत्रापि जातिनिबन्धनमित्यर्थः । परिहरति **जात्याश्रये**ति । तत्र हि व्यक्तिद्वयोपलब्धिरस्ति ; अत्र तु न तथा व्यक्त्यन्तरमुपलभ्यत इत्यर्थः । कथमुपलभ्यत इत्यत्राह **एकमेवे**ति। पुनः शङ्कते **न चे**ति । परिहरति **द्रव्यान्तरत्वेसती**ति । न हि घटस्थे जले घटो जलमिति सामानाधिकरण्येन प्रत्यभिज्ञानं भवतीत्यर्थः । चोद्यं शङ्कते-**गोमये**ति । परिहरति **ने**ति । अयमर्थः—समवायिकारणानुवृत्तिं वदता त्वयापि प्रतिसंधानाभावचोद्यं परिहरणीयम्।

ज्ञानात् ॥ अग्निकार्ये धूमेऽग्निप्रत्यभिज्ञानं न दृश्यत इति चेत्—भवतु न तत्र प्रत्यभिज्ञानम्। तथापि न दोषः; अग्नेर्निमित्तकारणमात्रत्वात्। अग्निसंयुक्तादार्द्रेन्धनाद्धि धूमो जायते। गन्धैक्याच्चार्द्रेन्धनकार्यमेव धूमः। अतः कार्यभावे च तदेवेदमित्युपलब्धेर्बुद्धिशब्दान्तरादयोऽवस्थाभेदमात्रनिबन्धना इत्यवगम्यते। तस्मात् कारणादनन्यत् कार्यम् ॥ १६ ॥ इतश्च—

**सत्त्वाच्चापरस्य ॥ २ १-१७ ॥**

अपरस्य—कार्यस्य कारणे सत्त्वाच्च कारणात् कार्यस्यानन्यत्वम्। लोकवेदयोर्हि कार्यमेव(यं) कारणतया व्यपदिश्यते; यथा लोके 'सर्वमिदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्' इति; वेदे च 'सदेव सोम्येदमग्र आसीत्' इति ॥ १७ ॥

**असद्व्यपदेशान्नेति चेन्न; धर्मान्तरेण; वाक्यशेषात् युक्तेः शब्दान्तराच्च ॥ २-१-१८ ॥**

यदुक्तं कारणे कार्यस्य सत्त्वं लोकवेदाभ्यामवगम्यत इति—तदयुक्तम्; असद्व्यपदेशात्—'असदेवेदमग्र आसीत्', 'असद्वा इदमग्र आसीत्', 'इदं वा अग्रे नैव किञ्चनासीत्' इति; लोके च, 'सर्वमिदं घटशरावादिकं पूर्वाह्णे नासीत्' इति। अतो यथोक्तं नोपपद्यत इति चेत्—तन्न; धर्मान्तरेण तथा व्यपदेशात्। स खल्वसद्व्यपदेशस्तस्यैव कार्यद्रव्यस्य पूर्वकाले धर्मान्तरेण—संस्थानान्तरेण; न भवदभिप्रेतेन तुच्छत्वेन। सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तम्। तत्र सत्त्वधर्मात् धर्मान्तरमसत्त्वम्। इदंशब्दनिर्दिष्टस्य जगतः सत्त्वधर्मो नामरूपे; असत्त्वधर्मस्तु तद्विरोधिनी सूक्ष्मावस्था। अतो जगतो नामरूपयुक्तस्य तद्विरोधिसूक्ष्मदशापत्तिरसत्त्वम् ॥ कथमिदमवगम्यते ॥ वाक्यशेषा-

---

तत्रादिकारणपृथिवीप्रत्यभिज्ञानमस्तीति वदसि चेत्—तदस्माकमपि तुल्यमिति। पुनरप्यापातप्रतीतिनिबन्धनं चोद्यं शङ्कते **अग्निकार्य** इति। परिहरति **भवत्विति**। निमित्तकारणाप्रत्यभिज्ञानं न दोषः। उपादानमेव प्रत्यभिज्ञातव्यम्। तच्च धूमे गन्धवत्त्वात् पृथिवीत्वं (तत्त्वं ?) प्रत्यभिज्ञायत एवेत्यर्थः। सूत्रार्थमुपसंहरति **अत** इति। अधिकरणार्थेन सूत्रस्यान्वितत्वमाह-**तस्मादिति** ॥

**सत्त्वाच्चापरस्य** ॥ **कारणे सत्त्वात्**—कारणावस्थायां सत्त्वात्। केचिदनयोः सूत्रयोरिमां भिदामाहुः—सोऽयमिति ज्ञानं प्रत्यभिज्ञा, सा पूर्वोक्ता; अयं स इति ज्ञानमभिज्ञा, साऽत्रोच्यते इति। अथवा पूर्वत्रैकद्रव्यताविषयबुद्धिरुक्ता, अत्र तु तथा व्यपदेश उच्यत इति भिदा। अत एव ह्युत्तरसूत्रे, 'असद्व्यपदेशान्नेति चेत्' इत्युक्तम्। एतदभिप्रायेण भाष्येपि **कार्यमेव कारणतया व्यपदिश्यत** इत्युक्तम्। श्रुतिसिद्धं प्रत्यभिज्ञानं पूर्वमुक्तम्; लोकवेदयोरुभयत्रापि व्यपदेशस्त्वत्रोक्तः। अत्र कार्ये कारणव्यपदेशो न कथितः; कारणे कार्यव्यपदेश उक्तः। तत्र हेतुः सदेवेदमग्र एकमेवेति श्रुत्यनुसारः ॥ ननु मृदयं घट इति प्रत्यभिज्ञानं ज्वालाप्रत्यभिज्ञानवत् भ्रान्तं स्यात्, बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वात् ॥ नैवम्; ज्वालायां ह्यनन्यथासिद्धहेतुना भेदसिद्धेः प्रत्यभिज्ञानस्य भ्रान्तत्वनिर्णयः। अत्र बुद्धिशब्दान्तरादयोऽन्यथासिद्धाः, ज्ञानं तु स्वतःप्रमाणमिति यथोक्त एवार्थ ॥

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च** ॥ **यदुक्तमिति**। सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तमिति। व्यवहारयोग्यता सत्त्वम्, विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्य असत्त्वम्" इत्युक्तमित्यर्थः। **धर्मान्तरेणे**त्यत्रान्तरशब्दस्यार्थमाह **तत्रे**ति। सत्त्वासत्त्वयोरापेक्षिकत्वमभिप्रेत्याह **इदंशब्दनिर्दिष्टस्ये**ति। **वाक्यशेषादि**ति। **असद्वा इदमग्र आसीदि**त्यत्र, 'तदात्मानं

युक्तेः शब्दान्तराच्च। वाक्यशेषस्तावत्, 'इदं वा अग्रे नैव किञ्चनासीत्' इत्यत्र, 'तदसदेव सन्मनोऽकुरुत स्यामिति'' इति। अनेन वाक्यशेषगतेन मनस्कारलिङ्गेनासच्छब्दार्थे तुच्छातिरिक्ते निश्चिते, तदैकार्थ्यात् 'असदेवेदम्' इत्यादिष्वप्यसच्छब्दस्यायमेवार्थ इति निश्चीयते। युक्तेश्चासत्त्वस्य धर्मान्तरत्वमवगम्यते; युक्तिर्हि सत्त्वासत्त्वे पदार्थधर्माववगमयति। मृद्द्रव्यस्य पृथुबुध्नोदराकारयोगो घटोऽस्तीति व्यवहारहेतुः। तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीति व्यवहारहेतुः। तत्र कपालाद्यवस्थायास्तद्विरोधित्वेन सैव घटावस्थस्य नास्तीति व्यवहारहेतुः। न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते। न च कल्प्यते; तावतैवाभावव्यवहारोपपत्तेः। तथा शब्दान्तराच्च पूर्वकाले धर्मान्तरयोग एवावगम्यते। शब्दान्तरं च पूर्वोदाहृतम्, 'सदेव सोम्येदमग्र आसीत्' इत्यादिकम्। तत्र हि, 'कुतस्तु खलु सोम्यैवं स्यात्' इति तुच्छत्वमाक्षिप्य, 'सदेव सोम्येदमग्र आसीत्' इति स्थापितम्। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति सुस्पष्टमुक्तम्॥

इदानीं कार्यस्य कारणादनन्यत्वे निदर्शनद्वयं द्वाभ्यां सूत्राभ्यां दर्शयति—

**पटवच्च॥ २-१-१९॥**

यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं भजन्ते; तद्वद्ब्रह्मापि॥१८॥

---

स्वयमकुरुत' इति वाक्यशेषः। अश्रुतवाक्यशेषेषु प्रदेशेषु निर्वाहमाह **तदैकार्थ्या**दिति। [1]**युक्तेश्चे**ति(?)। पिण्डत्वकपालत्वावस्थयोः साधारणमाह **तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीति व्यवहारहेतु**रिति। एतद्विवृणोति **तत्रे**ति। **न च तद्व्यतिरिक्त** इति। [2]अभावान्तरवादिनापि अभावाभावो भाव इत्यभ्युपगतः; अन्यथा अनवस्थाप्रसङ्गात्। तद्वत् सर्वत्राभावव्यवहारस्य विरोध्यवस्थान्तरेणैवोपपन्नत्वान्न तद्व्यतिरिक्तस्य कल्पनमित्यर्थः। पिण्डत्वकपालत्वे घटस्य प्राक्प्रध्वंसाभावौ। घटत्वमेव पटादन्योन्याभावः। कालविशेषविशिष्टदेशविशेषत्वं संसर्गाभावः। यथा मध्याह्नविशेषितप्राङ्गणत्वम्। यद्वा, घटस्याल्पत्वविशेषितदेशान्तरसंसर्ग-पिण्डत्व-कपालत्वेष्वन्यतमस्तद्देशापेक्षया संसर्गाभावः॥

उत्तरसूत्रद्वयकृत्यमाह **इदानी**मिति। निदर्शनत्वेन वक्ष्यमाणस्य पटादेरपि विप्रतिपन्नत्वान्न दृष्टान्तत्वमुपपद्यत इति शङ्काव्युदासार्थम् **इदानी**मित्युक्तम्। पूर्वसूत्रैरनन्यत्वे साधिते सतीत्यर्थः। **निदर्शनद्वय**मिति। लौकिकं वैदिकमिति निदर्शनयोर्विभागः। बहूनामेकावस्थत्वे, एकस्य बहुत्वावस्थत्वे च दृष्टान्त इति वा विभागः॥ **पटवच्च**॥ इह बहूनामेकावस्थत्वे लौकिकदृष्टान्त उक्तः। **व्यतिषङ्गः**—मिथः संसर्गः॥ ननु तन्तुबहुत्वाप्रहाणेन पटैकत्वदर्शनात् द्रव्यभेदाभावाच्च एकस्मिन्नेव द्रव्ये युगपद्बहुत्वैकत्वे वर्तेते इति भिन्नाभिन्नत्वमभ्युपगतं स्यात्॥ उच्यते; दूष्यभिन्नाभिन्नत्वाविवेकनिबन्धनमिदं परिचोदनम्। न हि भिन्नाभिन्नशब्दवाच्यं सर्वं दूष्यम्; अपि तु यत्र भावाभावविरोधः, तदेव भिन्नाभिन्नत्वं दूष्यम्। तच्च धर्मधर्मिणोर्धर्मिद्वयस्य च मिथस्तादात्म्यतदभावलक्षणम्, यथा जातिर्व्यक्तिर्भवति, न भवति चेति; यथा खण्डो मुण्डो भवति, न भवति चेति; न चैवं तन्तुपटेषु भावाभावविरोधः। तन्तुभ्यः पटो ह्यभिन्न एवाभ्युपगतः, न तु भिन्नः।

---

1. एतत्प्रतीकधारणं व्यर्थमिव; भा. प्र. १. 2. अभावान्तरेति—भावातिरिक्ताभावेत्यर्थः।

तन्तवश्च मिथो भिन्ना एवाभ्युपगताः, न त्वभिन्नाः। तेषां च पटादभिन्नत्वं नाम तस्य परस्परसंसृष्टेभ्योऽनन्यत्वम्। न च तेषामन्योन्याभेदः। यद्यभेदो नाम एकस्य तन्तोस्तन्त्वन्तरानतिरेकः, तर्हि द्वितीयतन्त्वनुपलम्भप्रसङ्गः; परिमाणाधिक्यं च न स्यात्। यदि संसर्ग एवाभेदः, नास्मि विवादः स्यात्। यद्येकत्वं सङ्ख्योत्पत्तिः, सा तर्हीष्टा; पटत्वावस्थाप्राप्तावेवैकत्वोत्पत्त्यभ्युपगमात्॥ तर्हि भेदाभेदाभ्युपगम इति चेन्न; तस्य भेदप्रतिक्षेपकत्वाभावात्, यथा विशिष्टे वस्तुनि विशेष्यैक्यं न विशेषणभेदप्रतिक्षेपकम्, तद्वत्॥ कथं तत्तुल्यत्वम्॥ उच्यते। तन्तुषु तन्तुत्वस्येव पटत्वस्य प्रत्येकतन्तुपरिसमाप्तत्वाभावात् कृत्स्नतन्तुवृत्तिना पटत्वेन तन्तव एककार्यतां भजन्ते। पृथगवस्थानदशायां कस्यचिदनंशभूता अपि तन्तवः पटत्वावस्थायां सङ्घातापेक्षया अंशत्वं भजन्ते। अतः तन्तुगताश्च संस्थानवर्णपरिमाणादयः पटस्य प्रादेशिकविशेषणानि भवन्ति; गगनस्य दुन्दुभ्यादिशब्दवत्; भेदकाकारेण विना अंशभेदस्य प्रतिपत्तुं वक्तुं चाशक्यत्वात्। अंशभेदो नाम विशेषणभेदः, अंशिन एकत्वं च विशेष्यैक्यमिति फलितम्। इयान् विशेषः—केचित् प्रादेशिकधर्माः यावद्द्रव्यभाविनः, केचिदयावद्द्रव्यभाविनश्चेति। यतो नभसि प्रादेशिकविशेषाः कादाचित्काः, अत एव तत्र स्वाभाविकांशभेदवादोऽपि निरस्तः॥ ननु गगनं घटाद्युपाधिभिः कार्त्स्न्येन संबध्यते चेत्, गगनस्याल्पत्वं घटस्य विभुत्वं वा स्यात्। गगनांशभेदेन चेत्—सोंऽशभेदः किमुपाधिकृतः? तदानीं तस्याप्युपाधेः कार्त्स्न्येन संबन्धायोगात् अंशभेदेन संबन्धार्थमुपाध्यन्तरापेक्षायामनवस्था स्यात्। अतो घटादिसंयुक्तगगनांशभेदः स्वाभाविक इत्यभ्युपगन्तव्यः॥ नैवम्; गगनादिव्यापकपदार्थानां तत्तत्सूक्ष्मतरोपाध्यन्वितात्यल्पांशभेदानां स्वाभाविकत्वे परमाणुपुञ्जात्मकत्वप्रसङ्गात् क्षणिकत्वप्रसंगाच्च। गगनादीनां परिणामविशेषाः क्षणिकाः क्षणिकसंयोगादयश्च गगनादिभिः किं कालानवच्छिन्नैः संबध्यन्ते, उत कालभेदावच्छिन्नैः? क्षणोपाधयश्च किं कालेनानवच्छिन्नेन संबध्यन्ते, उतावच्छिन्नेन? आद्ये गगनादीनां क्षणकालवर्तित्वं परिणामविशेषसंयोगादीनां नित्यत्वादिकं वा स्यात्। द्वितीये च अवच्छेदकोपाधीनां पूर्ववदनवच्छिन्नगगनादिना संबन्धायोगेन अवच्छिन्नेन संबन्धसिद्ध्यर्थम् अवच्छेदकोपाध्यन्तरापेक्षया अनवस्था स्यादिति तत्परिहाराय गगनादेः प्रतिक्षणभेदस्य स्वाभाविकत्वमुपगन्तव्यमिति गगनादीनां क्षणिकत्वं स्यात्। एवं ब्रह्मपर्यन्तानां व्यापकपदार्थानां क्षणिकत्वं परमाणुपुञ्जात्मकत्वं स्यात्। त्वया च भिन्नाभिन्नत्वमभ्युपगतम्। अतो भिन्नाभिन्नस्वभावक्षणिकपरमाणुपुञ्जकारणकं जगदिति ब्रह्मकारणवादः परित्यक्तः स्यात्। अतो गगनादिषु प्रदेशभेद औपाधिको,ऽभ्युपगन्तव्यः। उपाधिश्च न कृत्स्नाकाशेन संबध्यते; परिमितत्वात्। नापि स्वतो भिन्नांशेन; स्वतोंऽशभेदे पूर्वोक्तदूषणस्य दुस्तरत्वात्। नाप्युपाध्यन्तरभिन्नेन; तन्नैरपेक्ष्यात्। तन्नैरपेक्ष्यं चोपाधित्वादेव। स्वतस्तदाकाररहिते वस्तुनि तदाकारनिष्पादनसमर्थो ह्युपाधिः। स्वतो निर्दुःखे ह्यात्मनि उपाधिर्दुःखहेतुः। स हि न पूर्वमेवात्मनि सहजदुःखान्तरयोगमपेक्षते। अतः उपाधिः कश्चित् कल्प्याकारकल्पने सहजतज्जातीययोगं नापेक्षते। किञ्च उपाधिसंबन्ध एव गगनस्य भेदः; अर्थान्तरादर्शनात्। तावता भेदव्यवहारे संभवत्यर्थान्तरकल्पनायोगाच्च। उपाधिसंबन्धरूपो भेदश्च स्वावच्छेद्यवस्त्ववच्छेदे भेदान्तर-

**यथा च प्राणादि[ः] ॥ २-१-२० ॥**

यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते; तद्वत् ब्रह्मैकमेव विचित्रस्थिरत्रसरूपं जगद्भवतीति परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्व जगतः सिद्धम् ॥ इति आरम्भणाधिकरणम् ॥

अथ इतरव्यपदेशाधिकरणम्—२-१-७.

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २-१-२१ ॥**

जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिः 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यते इत्युक्तम्; तत्रेदं चोद्यते—यदि इतरस्य—जीवस्य ब्रह्मभावोऽमीभिर्वाक्यैर्व्यपदिश्यते, तदा ब्रह्मणः सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्यात्मनो हितरूपजगदकरणमहितरूपजगत्करणमित्यादयो दोषाः प्रसज्येरन्। आध्यात्मिकाधिदैविकाधिभौतिकानन्तदुःखाकरं चेदं जगत्। न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान् प्रवर्तते। जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः, भेदे सति अनन्यत्वासिद्धेः॥ औपाधिकभेदविषयाः भेदश्रुतयः; स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चेत्—तत्रेदं वक्तव्यम्—स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा. न वा? न जानाति चेत्, सर्वज्ञत्वहानिः। जानाति चेत्, स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या ॥ जीवब्रह्मणोरज्ञानकृतो भेदः, तद्विषया भेदश्रुति-

---

निरपेक्षः; भेदत्वात्; स्वतःसिद्धभेदवत्। न हि देहात्मनोर्भेदः स्वाश्रयावच्छेदे भेदान्तरमपेक्षते। अतो न स्वतो नभसि भिन्नांशत्वम्. पटस्यांशभेदे सत्यपि भावाभावविरोधगर्भं भिन्नाभिन्नत्वं नास्तीति दर्शितम्। तत्रांशभेदश्च विशेषणभेदे पर्यवस्यतीत्युक्तम्। अतो निर्दोषः सत्कार्यवादः ॥

**यथा च प्राणादिः** ॥ एकस्य बहुत्वावस्थत्वे वैदिकदृष्टान्तोऽत्र प्रदर्श्यते। अधिकरणार्थमुपसंहरति **इतीति** ॥ इति आरम्भणाधिकरणम् ॥

॥ **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** ॥ किं ब्रह्मणो जगत्कारणत्वं संभवति, उत नेति। किं ब्रह्मणो जगत्स्रष्टृत्वे हिताकरणादिदोषः प्रसज्यते, नेति। किं ब्रह्मणः तत्त्वमसीत्यादिसामानाधिकरण्यावगतं तादात्म्यमैक्यलक्षणम्, उतात्मशरीरभावलक्षणमिति। किमात्मशरीररूपतादात्म्य एव भेदश्रुतिसामञ्जस्यम् उतैक्यलक्षणेऽपीति। यदा स्वरूपैक्यलक्षणतादात्म्येऽपि भेदश्रुतिसामञ्जस्यम्, तदा तत्त्वमस्यादिवाक्यानां स्वरूपैक्यपरत्वेन हिताकरणादिदोषप्रसङ्गात् ब्रह्मकारणत्वासंभव इति फलितम् (फलम्)। यदा आत्मशरीरभाव एव भेदश्रुतिसामञ्जस्यम्, तदा तत्त्वमस्यादिवाक्यानां शरीरात्मभावपरतया हिताकरणादिदोषप्रसङ्गाभावात् ब्रह्मकारणत्वसंभव इति सिध्यति। अवान्तरसङ्गतिमाह **जगत इति। सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्येति** ॥ हितानभिज्ञश्चेत्, अहितजगत्कारणत्वमुपपद्यते। तन्न; सर्वज्ञत्वात्। हितज्ञस्यापि सत्यसङ्कल्पत्वाभावादहितजगत्कारणत्वमिति न वाच्यम्; सत्यसङ्कल्पत्वादिति भावः। भेदश्रुतिभिर्जीवविलक्षणत्वप्रतिपादनान्न दोष इति वदन्तं सिद्धान्तिनमाशङ्क्याह **जीवाद्ब्रह्मण इति।**

भास्करमतमनूद्य दूषयति-**औपाधिकेति। अहितकरणादीति** आदिशब्देन सुखदुःखभोक्तृत्वं विवक्षितम्। ब्रह्माज्ञानवादिनोऽस्मिन्नधिकरणेऽनवकाशत्वमाह **जीवब्रह्मणोरिति।**

रिति चेत्—तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलं च तदवस्थम् । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न संभवति । अज्ञानेन प्रकाशस्तिरोहितश्चेत्, तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात् स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम् । अत इदमसङ्गतं ब्रह्मणो जगत्कारणत्वम् ॥

इति प्राप्तेऽभिधीयते—

## अधिकं तु भेदनिर्देशात् ॥ २-१-२२ ॥

तुशब्दः पक्षं व्यावर्तयति ; आध्यात्मिकादिदुःखयोगार्हात् प्रत्यगात्मनः अधिकम्—अर्थान्तरभूतं ब्रह्म । कुतः? भेदनिर्देशात्—प्रत्यगात्मनो हि भेदेन निर्दिश्यते परं ब्रह्म, "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः,' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति', 'स कारणं करणाधिपाधिपः,' 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति,' 'ज्ञाज्ञौ द्वावजावीशनीशौ,' 'प्राज्ञेनात्मना सम्परिष्वक्तः,' 'प्राज्ञेनात्मनाऽन्वारूढः,' 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः", 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्', 'योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद; योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद[यो मृत्युमन्तरे सञ्चरन् यस्य .... मृत्युर्नवेद] एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिः ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २-१-२३ ॥

अश्मकाष्ठलोष्टतृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्य-निर्विकार-निखिलहेयप्रत्यनीक-कल्याणैकतान-स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूप-नानाविधानन्तमहाविभूतिब्रह्मस्वरूपैक्यं यथा नोपपद्यते, तथा चेतनस्याप्यनन्तदुःखयोगार्हस्य खद्योतकल्पस्यापहतपाप्मेत्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरब्रह्मभावानुपपत्तिः । सामानाधिकरण्यनिर्देशः, 'यस्यात्मा शरीरम्' इत्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वात् ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेर्जीवप्रकारब्रह्मप्रतिपादनपरश्च, एतदविरोधी प्रत्युतैतस्यार्थस्योपपादकश्चेति 'अवस्थितेरिति काशकृत्स्नः' इत्यादिभिरसकृदुपपादितम् । अतः सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीरमिति, सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्, तदेव ब्रह्म स्थूलचिदचिद्वस्तुशरीरं जगदाख्यं कार्यमिति जगद्ब्रह्मणोः सामानाधिकरण्योपपत्तिः जगतो ब्रह्मकार्यत्वम्, ब्रह्मणोऽनन्यत्वम् अचिद्वस्तुनः जीवस्य च ब्रह्मणश्च परिणामित्वदुःखित्वकल्याणगुणाकरत्वस्वभावा-

---

**अधिकं तु भेदनिर्देशात्** ॥ **दुःखयोगार्हा**दिति । अत्रार्हशब्दो मुक्तव्यावृत्तिपरः ॥ २२ ॥

एवं श्रुतिर्दर्शिता । अथ श्रुत्यर्थापत्तिरुच्यते **अश्मादिवच्च तदनुपपत्तिः** ॥ चिदचिद्वाचकशब्दैः सामानाधिकरण्ये तुल्येऽपि यथा ब्रह्मणो जडस्य च स्वरूपैक्यासंभवात् व्यावृत्तिरभ्युपेता ब्रह्माज्ञानवादिना, तथा चेतनस्यापीत्यभिप्रायेणाह—**अश्मकाष्ठेति** । तर्हि जीवसामानाधिकरण्यं कथमित्यत्राह—**सामानाधिकरण्ये**ति । 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रमेतदधिकरणशेषमित्यभिप्रायेणाह **अवस्थिते**रिति । **आदि**शब्देन "न तु दृष्टान्तभावात्", "उभयेऽपि हि भेदेनैनमधीयते" इत्यादिकं विवक्षितम् । उभयेऽपीत्यादिसूत्रं भेदज्ञापनार्थमपि घटकवाक्यविषयम् । इत्थं चेतनसामानाधिकरण्यनिर्वाहः कृतः ; चिदचिदात्मकजगत्सामानाधिकरण्यनिर्वाहमाह—**अतः सर्वे**ति । कारणावस्था-

सङ्करः सर्वश्रुत्यविरोधश्च भवति। 'सदेव सोम्येदमग्र आसीदेकमेव' इत्यविभागावस्थायामप्य-चिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम्; 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्', 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' इति सूत्रद्वयोदितत्वात् तदानीमपि सूक्ष्मरूपेणावस्थानस्य। अविभागस्तु नामरूपविभागाभावादुपपद्यते। अतो ब्रह्मका रणत्वं संभवत्येव।

ये पुनरस्यैव जीवस्याविद्यावियुक्तावस्थामभिप्रेत्येवं भेदं वर्णयन्ति, तेषामिदं सर्वमसङ्गतं स्यात्। न हि तदवस्थस्य सर्वज्ञत्वं सर्वेश्वरत्वं समस्तकारणत्वं सर्वात्मत्वं सर्वनियन्तृत्वमित्यादीनि सन्ति। अनेनैव रूपेण ह्याभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रतिपाद्यते। [तस्य सर्वस्याविद्यापरिकल्पितत्वात्।] तत् सर्वं ह्यविद्यापरिकल्पितं त्वन्मते। न चाविद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजतादिभेदवत् परस्परभेदोऽत्र सूत्रकारेण 'अधिकं तु भेदनिर्देशात्' इत्यादिषु प्रतिपाद्यते; ब्रह्मजिज्ञासा कर्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जगज्जन्मादिकारणस्य वेदान्तवेद्यत्वम्, तस्य च स्मृतिन्यायविरोधपरिहारश्च क्रियते।

---

यामेकत्वावधारणाच्चिदचिच्छरीरकत्वाभावेन गुणदोषव्यवस्था नोपपद्यत इत्यत्राह—**सदे**वेति। अविभागः कथमित्यत्राह **अविभागस्त्व**ति।

अनयोः सूत्रयोः परोक्तमर्थं दूषयति **ये पुन**रिति। जीवादविद्याविमुक्तस्य ब्रह्मणः किं भेद उच्यते, उताविद्यासंसृष्टस्येश्वरस्येति विकल्पमभिप्रेत्य प्रथमं पक्षं दूषयति **तेषा**मिति। ततः किमित्यत्राह **अनेनै**वेति। तेषां तदानीमभावः कथमित्यत्राह **तत्सर्व**मिति। **तस्य सर्वस्याविद्यापरिकल्पितत्वा**दिति पाठे **असंगतं स्या**दिति पूर्वेणान्वयः। **तत् सर्वं ह्यविद्या परिकल्पितं त्वन्मते** इति च पाठोऽस्ति। अविद्यापरिकल्पितस्येश्वरस्य भेद उच्यत इति पक्षं दूषयति **न चाविद्ये**ति। कल्पितभेदो न प्रतिपाद्यते; अकल्पितजीवस्वरूपज्ञानस्य प्रक्रान्तत्वादित्यर्थः। **वेदान्तवेद्यत्व**मिति समन्वयाध्यायार्थः। **स्मृतिन्यायविरोधपरिहार** इति द्वितीयाध्यायार्थः।

किञ्च, तत्त्वमस्यादिवाक्यार्थप्रतिबोधनात् प्राक् ईश्वरस्य भेदेन प्रतिपद्यमानस्य मिथ्याभूतैर्जीवगतदोषैरात्मनो लेपाभावं पश्यत उदासीनवृत्तेर्हिताकरणाद्यप्रसक्तिः, ऐक्यज्ञानोदयात् पश्चाज्जगत्स्रष्टृत्वं दुःखादिभोक्तृत्वं च नास्तीति न हिताकरणादिप्रसक्तिरिति च **परै**रुच्यते। तदयुक्तम्; वक्तॄणां स्ववाक्यविषयादधिकविषयज्ञानवत्त्वात् समस्तशास्त्रयोनिभूतस्येश्वरस्य ब्रह्मणः शास्त्रेभ्योऽप्यधिकविषयज्ञानतया सर्वज्ञत्वं हि शास्त्रयोनित्वादित्यत्र परैः समर्थितम्; अतः शास्त्रादप्यधिकार्थाभिज्ञस्येश्वरस्य तत्त्वमस्यादिवाक्यार्थानवबोधात् भेदेन प्रतिपत्तेरहितकरणादिदोषपरिहारोऽनुपपन्नः। 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः', 'क्षेत्रज्ञं चापि मां विद्धि' इत्यर्जुनादीनां तत्त्वमुपदिशत ईश्वरस्य ऐक्यज्ञानाभावोऽनुपपन्नः। ऐक्यज्ञाने जाते सति स्रष्टृत्वभोक्तृत्वाद्यभावादहितकरणाद्यप्रसक्तिश्चायुक्ता, गीतोपदेशात्पश्चादपि ईश्वरेण संसारस्य प्रवर्त्यमानत्वात्। न च वाच्यम्—इदानीं संसारप्रवृत्तिर्नेश्वराधीना, किन्तु चक्रभ्रमणवत् वासनयाऽनुवर्तत इति। "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते"; 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इति संसारप्रवर्तनस्य स्वेच्छाधी-

'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' 'न तु दृष्टान्तभावात्' इति सूत्रद्वयमेतदधिकरणसिद्ध-

नत्वाभिधानात् । 'मत्प्रसादात्तरिष्यसि' इति भविष्यतः संसारतरणस्य स्वप्रसादाधीनत्वाभिधानाच्च । न हि चक्रभ्रमनिवृत्तेः पूर्ववेगोपरमनिबन्धनायाः पुरुषविशेषप्रसादापेक्षत्वम् । बाधितानुवृत्तिश्चानुपपन्नेत्यु-क्तम् । किञ्च वासनाधीना संसारानुवृत्तिः किमवधिमती, उतावधिविधुरा ? प्रथमे, 'अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः'' इति शास्त्रविरोधः । द्वितीये वाक्यार्थज्ञानवैयर्थ्यप्रसङ्गः ; वाक्यार्थज्ञानोदयेऽपि बन्धभ्रमानुवृत्तेरवसानाभावात् ; आगामिनां स्वर्गनरकादिसर्गाणामीश्वरसङ्कल्पाधीनत्वादहितकरणदोषस्य दुर्वारत्वात् । स्वप्नदृश्यभावानां वैचित्र्यवत् जीवप्राज्ञपृथक्त्वोपपत्तिरिति दोषपरिहारश्चानुपपन्नः । स्वप्नद्रष्टुः पुरुषस्य स्वाप्नपुरुषान्तरस्य च परस्परैक्य-ज्ञानाभावात् परस्परदुःखापादनं नाहितकरणदोषावहम् । स्वप्ने सर्पव्याघ्रादिभिः पीड्यमानस्य परवशतया स्वाहितकरणं न स्यात् । ऐक्यज्ञानवतः स्वतन्त्रस्येश्वरस्य नरकादिसर्गे स्वाहितकरणादिप्रसङ्गो दुष्परिहरः ॥

पृथिवीपाषाणत्वाद्यविशेषेऽपि वज्रवैडूर्यसूर्यकान्तादिवैचित्र्यवत्, एकस्मिन्नपि वृक्षे पत्रपुष्पफलादिवच्च ब्रह्मानन्यत्वेऽपि जीवप्राज्ञपृथक्त्वप्रतिपादक**मश्मादिव**दिति सूत्रमितरैर्व्याख्यातं सर्वैरपि । तदयुक्तम् ; ईश्वरस्य मृषा वा परमार्थतो वा सार्वज्ञ्यस्य श्रौतस्य सर्वाभ्युपगतत्वात् । स्वानन्यतया सर्वं जानत ईश्वरस्य नरकसृष्टिपापकरणतत्फलप्रदानादिषु स्वाहितकरणप्रसङ्गस्यानिवार्यत्वात् । अहितकरणस्य दोषत्वं हि फलभोक्तुः स्वानन्यत्वज्ञाननिबन्धनम् ; न रववैचित्र्यकृतम् । पाणिपादचक्षुः-श्रोत्रादीनामाकारवैचित्र्ये सत्यपि स्वप्ने वा प्रबोधे वा दुःखितमात्मानं स्वानन्यत्वेन जानतो दुःखं साक्षात्कुर्वतश्चेतनस्य स्वहस्तादिच्छेदनं हि स्वाहितकरणमेव भवति ॥ ननु स्वशरीरगतत्वेन दुःखं जानत ईश्वरस्यापि स्वाहितकरणं स्यात् ॥ न; शरीरगतत्वेन दुःखज्ञानस्य क्वचिदप्यपुरुषार्थत्वदर्शनाभावात् । आत्मगतं हि दुःखं जीवानाम् ; न शरीरगतम् ॥ स्वशरीरगतत्वेन छेदनभेदनदहनादिकं जानतः स्वात्मनि दुःखदर्शनात् शरीरभूतजगत्संहारादिव्यापारः परमात्मनश्चाहितकरणं स्यात् ॥ नैवम् ; छेदनादेर्दुः-खहेतुतायाः शरीरमात्रान्वयप्रयुक्तत्वाभावात् । स्वकर्मभोगार्थशरीरप्रतिकूलत्वं हि छेदनादीनां दुःखावहत्वे प्रयोजकम् । एवं कर्मारब्धेन कर्मवश्येन वा वस्तुनाऽनन्यत्वं जानत ईश्वरस्य सर्वशक्तेः स्वाहितकरणादिदोष-प्रसङ्गो **ह्यपरेषां सर्वेषा**मवर्जनीयः । **मृषावादिनस्तु** ईश्वरत्वं तदनुबन्धिगुणजातं चाविद्याकल्पितमिति वदतः, 'स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय', 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतिविरोधो ह्य(ऽप्य ?)धिक इति वैषम्यम् ।

वैलक्षण्यम् **अपीता**वित्यादिनाऽधिकरणान्तरोक्तमित्यत्राह **अपीता**वित्यादि । न 'अपीता' वित्यादिसूत्रद्वयं तत्र सङ्गतम् । अपीतावित्यादिसूत्रमस्मिन्नधिकरणे पूर्वपक्षसूत्रेण सङ्गतम् ; तथा परिहारसूत्रं च सिद्धान्तसूत्रेण संगतम् । अपीतावित्यादिसूत्रद्वये ब्रह्मण्यचिद्गतदोषशङ्कापरिहारः कृतः ; इतरव्यपदेशादित्यादौ चिद्गतदोषशङ्कापरिहारः । एवं विलक्षणत्वे सिद्धे सामानाधिकरण्यनिर्वा-हार्थमवस्थितेरिति काशकृत्स्न इति सूत्रमत्रैव सङ्गतम् । एवं सूत्रत्रयमेतदधिकरणशेषमित्यर्थः । **अधिकरण-**

मनुवदति ; तत्र हि विलक्षणयोः कार्यकारणभावसम्भव एवाधिकरणार्थः । "असदिति चेन्न प्रतिषेधमात्रत्वात्" इति च पूर्वाधिकरणस्थमनुवदति ॥ २३ ॥ इति इतरव्यपदेशाधिकरणम् ॥

अथ उपसंहारदर्शनाधिकरणम्—२-१-८.

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २-१-२४ ॥

परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य स्थूलसूक्ष्मावस्थसर्वचेतनाचेतनवस्तुशरीरतया सर्वप्रकारत्वेन सर्वात्मत्वं सकलेतरविलक्षणत्वं चाविरुद्धमिति स्थापितम् ; इदानीं सत्यसङ्कल्पस्य परस्य ब्रह्मणः सङ्कल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते ॥ ननु च परमितशक्तीनां कारककलापोपसंहारसापेक्षत्वदर्शनेन सर्वशक्तेर्ब्रह्मणः कारककलापानुपसंहारेण जगत्कारणत्वविरोधः कथमाशङ्क्यते ॥ उच्यते। लोके तत्तत्कार्यजननशक्तियुक्तस्यापि तत्तदुपकरणापेक्षित्वदर्शनात् सर्वशक्तियुक्तस्य परस्य ब्रह्मणोऽपि तत्तदुपकरणविरहिणः स्रष्टृत्वं नोपपद्यत इति कस्यचिन्मन्दधियः शङ्का जायत इति सा निराक्रियते। घटपटादिकारणभूतानां कुलालकुविन्दादीनां तज्जननसामर्थ्ये सत्यपि कानिचिदुपकरणान्युपसंहृत्यैव जनयितृत्वं दृश्यते। 'तज्जननाशक्ताः कारककलापोपसंहारेऽपि जनयितुं न शक्नुवन्ति ; शक्ताः पुनः कारककलापोपसंहारे जनयन्ति' इत्येतावानेव विशेषः। ब्रह्मणोऽपि सर्वशक्तेः,सर्वस्य जनयितृत्वं तदुपकरणानामनुपसंहारेण नोपपद्यते। प्राक्सृष्टेश्च असहायत्वं 'सदेव सोम्येदमग्र आसीत्', 'एको ह वै नारायण आसीत्', इत्यादिषु प्रतीयते। अतः स्रष्टृत्वं नोपपद्यत इत्येवं प्राप्तम्। तदिदमाशङ्कते-उपसंहारदर्शनान्नेति चेदिति॥

परिहरति—न क्षीरवद्धीति। न सर्वेषां कार्यजननशक्तानामुपसंहारापेक्षत्वमस्ति ; यथा

---

**सिद्धमनु**[1]**वदति**—तस्य शेषत्वेन वदतीत्यर्थः । तस्याधिकरणस्यायमर्थो न प्रतिपाद्यश्चेत् , तत्र कोऽर्थः प्रतिपाद्यत इत्यत्राह **तत्र हीति** । तत्रासत्कार्यवादनिराकरणं दृश्यत इति, विलक्षणयोः कार्यकारणभावसंभव एव कथं प्रतिपाद्यत इति; अत्राह **असदिति चेदिति**। प्रसङ्गादारम्भणाधिकरणार्थानुवादस्तस्मिन्नधिकरणे । अभेदश्रुत्यविरोधेन भेदश्रुतीनां मुख्यार्थप्रतिपादनमत्रैव क्रियत इत्यर्थः ॥

॥ **उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि** ॥ अवान्तरसङ्गतिमाह **परस्येति** । सत्यसङ्कल्पत्वादिभिर्वैलक्षण्यं प्रतिपादितम्; तत्र सत्यसङ्कल्पमात्रपरिकरत्वमनुपपन्नमिति तस्य सत्यसङ्कल्पत्वस्य सङ्कुचितवृत्तित्वशङ्कयोत्थानात् सङ्गतिरित्यर्थः । **सर्वात्मत्वम्**—सर्वभाव इत्यर्थः । किं ब्रह्मणो जगत्कारणत्वं सभवति, नेति । किं कार्यजननसमर्थस्य कार्यजनकत्वं नियमेन सहकार्यन्तरापेक्षम् , उत नेति विचारः । यदा अपेक्षानियमः, तदा सहकारिशून्यस्य कारणत्वासंभवः ; यदा न सहकार्यपेक्षानियमः, तदा कारणत्वसंभव इति सिद्धम् । पूर्वपक्षोत्थानमाक्षिपति—**ननु चेति** । सर्वशक्तेरुपकरणविरहः कारणत्वविरोधीति शङ्कैव न जायते, सर्वशक्तित्वादिति चोदितम् । उपकरणसापेक्षत्वनिरपेक्षत्वरूपं न शक्ताशक्तयोर्वैषम्यम् ; शक्तः परिकरसम्पत्तौ करोति, अशक्तस्तु परिकरसम्पत्तावपि न करोतीति तयोर्वैषम्यम् । तस्मात् ब्रह्मणः सङ्कल्पमात्रपरिकरत्वमयुक्तमित्यनुत्थानचोद्यपरिहारं सङ्ग्रहेणाह-**उच्यत** इत्यादिना । इममर्थं विवृण्वन् पूर्वपक्षमाह **घटपटादीति** । ततः किमित्यत्राह **प्राक्सृष्टेश्चेति** । सूत्रे चोद्यखण्डो व्याख्यातः ; परिहारखण्डं व्याचष्टे—**न क्षीरवद्धीति** । जलं स्वयमेव हिमरूपेण

---

1. अनुशब्दार्थमाह शेषत्वेनेति। तेनास्याप्यर्थस्य तत्र फलफलिभावेऽन्वयोऽस्तीति ज्ञाप्यते।

क्षीरजलादेर्दधिहिमजननशक्तस्य तज्जनने ; एवं ब्रह्मणोऽपि स्वयमेव सर्वजननशक्तेः सर्वस्य जनयितृत्वमुपपद्यते । हीति प्रसिद्धवन्निर्देशः चोद्यस्य मन्दताख्यापनाय । क्षीरादिष्वातञ्चनाद्यपेक्षा न दध्यादिभावाय ; अपि तु शैघ्र्यार्थं रसविशेषार्थं च ॥ २४ ॥

देवादिवदपि लोके ॥ २-१-२५ ॥

यथा देवादयः स्वे स्वे लोके सङ्कल्पमात्रेण स्वापेक्षितानि सृजन्ति, तथाऽसौ पुरुषोत्तमः कृत्स्नं जगत् सङ्कल्पमात्रेण सृजति । देवादीनां वेदावगतशक्तीनां दृष्टान्ततयोपादानम्, ब्रह्मणो वेदावगतशक्तेः सुखग्रहणायेति प्रतिपत्तव्यम् ॥ २५ ॥ इत्युपसंहारदर्शनाधिकरणम् ॥

अथ कृत्स्नप्रसक्त्यधिकरणम्—२-१-९.

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २-१-२६ ॥

"सदेव सोम्येदमग्र आसीत्', 'इदं वा अग्रे नैव किञ्चनासीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिषु कारणावस्थायां ब्रह्मैकमेव निरवयवमासीदिति—कारणावस्थायां निरस्तचिदचिद्विभागतया-निरवयवं ब्रह्मैवासीदित्युक्तम् । तदविभागमेकं—निरवयवमेव ब्रह्म बहु स्यामिति सङ्कल्प्य आकाशवाय्वादिविभागं ब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञविभागं चाभवदिति चोक्तम् ; एवं

---

परिणमति, रविकिरणास्तु तदुत्सर्गमात्रहेतव इति भावः । क्षीरस्याऽऽतञ्चनकार्थौ शैघ्र्यरसविशेषार्थौ ॥

अथ वैदिकं दृष्टान्तमाह—॥ **देवादिवदपि लोके**॥दृष्टान्तान्तरोपादानफलमाह **देवादीना**मिति ॥

॥ **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा** ॥ दृष्टान्ततयोपन्यस्तस्य क्षीरजलादेः सावयवत्वं दृष्टम् ; तद्वद्ब्रह्मणोऽपि सावयवत्वम्, निरवयवत्वे कृत्स्नप्रसक्तिर्वा स्यादिति शङ्कया सङ्गतिः । किं ब्रह्मणो जगत्कारणत्वं संभवति, नेति । तदर्थं किं ब्रह्मणो जगदाकारेण कार्यत्वे निरवयवत्वश्रुतिर्बाध्यते, नेति । तदर्थं किं सर्वशक्तियोगो युज्यते, नेति । यदा न युज्यते, तदा निरवयवत्वश्रुतिबाधप्रसङ्गात् कारणत्वासंभवः ; यदा युज्यते, तदा निरवयवत्वश्रुत्यबाधात् कारणत्वसंभव इति । **सदेवे**त्यादि । एकमेवाद्वितीयमित्यनन्तरवाक्यं प्रसिद्धत्वादनुदाहृतमप्यर्थत उपात्तम् । **तत्रैक**शब्दस्त्ववयवतोऽपि विभागासहः । यावद्बाधं हि सङ्कोचः । इह तदभावादसङ्कुचितमेकपदं विभागासहमिति भावः । एकशब्दसिद्धं निरवयवत्वं ब्रह्मण इति ज्ञापनार्थं सदेवेति वाक्यमुपात्तम् । **इदं वा इति** । अत्र, नैव किञ्चनासीदिति देवादिप्राणिजाताभाव उच्यते । अत्रापि 'न द्यौरासीन्न पृथिवी' इत्यादिकमपि प्रतीकग्रहणेनोपात्तं भवति । द्युपृथिव्यादिजगदवयवाभावकथनान्निरवयवत्वसिद्धिरिति भावः । **आत्मा वा इद**मिति । अत्राप्ये**क**शब्दोऽवयवतोऽपि विभागासहः । उदाहृतवाक्यानामर्थमाह-**इत्यादिष्वि**ति । **आदि**शब्दात् 'निष्कलं निष्क्रियम्' इत्यादिर्गृह्यते । **एकमेवे**ति व्याख्येयपदम् ; निरवयवमिति व्याख्यानम् । उदाहृतश्रुत्यर्थफलितमाह **कारणावस्थाया**मिति । निरवयवत्वस्य कारणवाक्यप्रतिपन्नत्वात् कारणावस्थायां चिदचिद्विभागाभावसिद्धिरित्यर्थः । विरोधं दर्शयितुमाह—**तदविभाग**मिति । **एकं निरवयवमविभाग**मित्यन्वयक्रमः । वेदान्तेष्वेकशब्देन प्रतिपादितत्वान्निरवयवम् ; अतो निरस्तचिदचिद्विभागमित्यर्थः । सिद्धान्तिना अनभ्युपगतेऽप्यापातप्रतीते स्वरूपैक्यपक्षे दूषणमाह **एवं**

सति तदेव परं ब्रह्म कृत्स्नं कार्यत्वेनोपयुक्तमित्यभ्युपगन्तव्यम्॥ अथ चिदंशः क्षेत्रज्ञविभागविभक्तः, अचिदंशश्चाकाशादिविभागविभक्त इत्युच्यते, तदा 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्', 'ब्रह्मैकमेव', 'आत्मैक एव' इत्येवमादयः कारणभूतस्य ब्रह्मणो निरवयवत्ववादिनः शब्दाः कुप्येयुः—बाधिता भवेयुः। यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्, स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यमित्यभ्युपगम्यते—तथापि शरीरैंशस्यापि कार्यत्वाभ्युपगमादुक्तदोषो दुर्वारः। तस्य निरवयवस्य बहुभवनं च नोपपद्यते। कार्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते। तस्मादसमञ्जसमिवाभाति। अतो ब्रह्मकारणत्वं नोपपद्यते—इत्याक्षिप्ते समाधत्ते—

श्रुतेस्तु शब्दमूलत्वात् ॥ २-१-२७ ॥

तुशब्द उक्तदोषं व्यावर्तयति। नैवमसामञ्जस्यम्। कुतः? श्रुतेः—श्रुतिस्तावन्निरवयवत्व ब्रह्मणस्ततो विचित्रसर्गं चाह। श्रौतेऽर्थे यथाश्रुति प्रतिपत्तव्यमित्यर्थः। ननु च श्रुतिरपि अग्निना सिञ्चेदितिवत् परस्परान्वयायोग्यमर्थं प्रतिपादयितुं न समर्था; अत आह शब्दमूलत्वादिति। शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्यार्थस्य विचित्रशक्तियोगो न विरुध्यत इति, न सामान्यतो दृष्टं साधनं दूषणं वा अर्हति ब्रह्म ॥२७॥

आत्मनि चैवं विचित्राश्च हि ॥ २-१-२८ ॥

किञ्च, एवम्—वस्त्वन्तरसंबन्धिनो धर्मस्य वस्त्वन्तरे चाऽऽरोपणे सति, अचेतने घटादौ दृष्टा धर्मास्तद्विसजातीये चेतने नित्ये आत्मन्यपि प्रसज्यन्ते। तदप्रसक्तिश्च भावस्वभाववैचित्र्यादित्याह—विचित्राश्च हीति। यथा अग्निजलादीनामन्योन्यविसजातीयानामौष्ण्यादिशक्तयश्च विसजातीया दृश्यन्ते; तद्वत् लोकदृष्टविसजातीये परे ब्रह्मणि तत्रतत्रादृष्टाः सहस्रशः शक्तयः सन्तीति न किञ्चिदनुपपन्नम्। यथोक्तं भगवता पराशरेण, "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" इति सामान्यदृष्ट्या परिचोद्य, "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः। भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता" इति। श्रुतिश्च, "किं स्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदुतद् यदध्यतिष्ठद्भुवनानि

---

सतीति। तत्रांशभेदेन परिहारं शङ्कते अथेति। सौत्रं पदमाख्यातरूपेण दर्शयति कुप्येयुरिति। मुख्यार्थायोगाद्व्याचष्टे बाधिता भवेयुरिति। बाधफलभूतकोपशब्देन बाध उपचरित इति भावः। यद्यपीति। एकशरीरे शरीरैंशः परिसमाप्त इति नान्यत्र स्यादित्यर्थः ॥

॥ श्रुतेस्तु शब्दमूलत्वात् श्रुतेस्त्विति सूत्रखण्डं व्याचष्टे तुशब्द इत्यादिना। खण्डान्तरं शङ्कया अवतारयति ननु चेति। शब्दमूलत्वादितीति। अग्निना सिञ्चेदित्यादिषु सेचनसाधनतानर्हत्वं धर्मिणः प्रत्यक्षसिद्धम्। अतो न तदर्हत्वं वाक्यं प्रतिपादयति। प्रमाणान्तरागोचरस्य तु धर्मिणो विलक्षणत्वं शास्त्रेण प्रतिपन्नमिति विलक्षणधर्मिणो विलक्षणधर्मयोगो न विरुद्ध इत्यर्थः। सामान्यतो दृष्टमिति। लोके द्रव्यत्वादग्निरनुष्ण इतिवत् येन केनचिदाकारेण यस्य कस्यचित् साहचर्यमात्रदर्शनेन तत्सामान्यात् यत् साधनं दूषणं वा क्रियते, न तदर्हतीत्यर्थः ॥

आत्मनि चैवं विचित्राश्च हि ॥ तदप्रसक्तिश्चेत्यध्याहारेण व्याख्यातम्। उक्तस्फुटीकरणायाह यथोक्तमिति। पुराणवचनस्य स्फुटार्थत्वात् पूर्वोपादानम्। वचनद्वयमध्यगतस्य परिचोद्येतिपदस्य

धारयन्। ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति। सामान्यतो दृष्टं चोद्यं सर्ववस्तुविलक्षणे परे ब्रह्मणि नावतरतीत्यर्थः॥ २८॥ इतश्च—

स्वपक्षदोषाच्च॥ २-१-२९॥

स्वपक्षे—प्रधानादिकारणवादे लौकिकवस्तुविसजातीयत्वाभावेन प्रधानादेः, लोकदृष्टा दोषास्तत्र भवेयुरिति सकलेतरविलक्षणं ब्रह्मैव कारणमभ्युपगन्तव्यम्। प्रधानं च निरवयवम्। तस्य निरवयवस्य कथमिव महदादिविचित्रजगदारम्भ उपपद्यते॥ सत्त्वं रजस्तम इति तस्यावयवा विद्यन्त इति चेत्—तत्रेदं विवेचनीयम्—किं सत्त्वरजस्तमसां समूहः प्रधानम्, उत सत्त्वरजस्तमोभिरारब्धं प्रधानम्? अनन्तरे कल्पे, प्रधानं कारणमिति स्वाभ्युपगमविरोधः; स्वाभ्युपेतसङ्ख्याविरोधश्च; तेषामपि निरवयवानां कार्यारम्भविरोधश्च। समूहपक्षे च तेषां निरवयवत्वेन प्रदेशभेदमनपेक्ष्य संयुज्यमानानां न स्थूलद्रव्यारम्भकत्वसिद्धिः। परमाणुकारणवादेऽपि तथैव अणवो निरंशाः निष्प्रदेशाः प्रदेशभेदमनपेक्ष्य परस्परं संयुज्यमाना अपि न स्थूलकार्यारम्भाय प्रभवेयुः॥ २९॥

सर्वोपेता च तद्दर्शनात्॥ २-१-३०॥

सकलेतरवस्तुविसजातीया परा देवता सर्वशक्त्युपेता च। तथैव परां देवतां दर्शयन्ति हि श्रुतयः, "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", तथा "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इति सकलेतरविसजातीयतां परस्या देवतायाः प्रतिपाद्य, "सत्यकामः सत्यसङ्कल्पः" इति सर्वशक्तियोगं प्रतिपादयन्ति (न्ती?), तथा "मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति च॥

विकरणत्वान्नेति चेत् तदुक्तम्॥ २-१-३१॥

यद्यप्येकमेव ब्रह्म सकलेतरविलक्षणं सर्वशक्ति, तथापि, 'न तस्य कार्यं करणं च विद्यते'

---

**यथोक्त**मिति पूर्वेणान्वयः। पुराणश्रुतिवचनयोरर्थमाह **सामान्यत** इति।

**स्वपक्षदोषाच्च**॥ दर्शनानुगुणमनुमीयमानस्यैव लोकदृष्टप्रसङ्ग इत्यर्थः। **स्वाभ्युपगमविरोधः** प्रधानस्य परमकारणत्वासिद्धेः। **सङ्ख्याविरोधश्च**तुर्विंशतितत्त्वाधिक्यात्। **प्रदेशभेदमनपेक्ष्य संयुज्यमानाना**मिति। असंयुक्तप्रदेशभेदरहितसंयोगवतामित्यर्थः। लोके हीष्टकादयः पूर्वपूर्वासंयुक्तैः प्रदेशैः संयुज्यमानाः पृथुकार्यारम्भका दृष्टा इत्यर्थः।

**सर्वोपेता च तद्दर्शनात्**॥ श्रुत्या निरवयवत्वकार्यत्वप्रतिपादनात् तदनुगुणशक्तियोगः कल्प्यः, धर्मिवैजात्यं च कल्प्यमित्युक्तम्; इदानीं धर्मिवैलक्षण्यविलक्षणधर्मयोः कण्ठोक्तिः प्रदर्शितेति भेदः। **अपहतपाप्मे**त्यादिना धर्मिवैलक्षण्यसिद्धिः। एवं धर्मिवैलक्षण्याद्धर्मवैलक्षण्यकल्पनादपि सर्वशक्तित्वकार्येण सत्यसङ्कल्पत्वेन विलक्षणशक्तिप्रतीतिरासन्नेत्यभिप्रायेणाह **सत्यकामः सत्यसङ्कल्प** इति।

**विकरणत्वान्नेति चेत्तदुक्तम्**॥ उपसंहारदर्शनादिति सूत्रे परिकराभावेऽपि सङ्कल्पमात्रेण सृष्ट्युपपत्तिरुक्ता: अत्र तु दण्डचक्रादिपरिकरनिरपेक्षस्यापि करणकलेबरापेक्षा दृष्टेति शङ्का परिह्रियत इति विशेषः। **न तस्ये**ति वाक्ये **कार्यशब्देन** शरीरमुच्यते। **करणम्**—इन्द्रियम्। सूत्रे भाष्ये च **करणशब्दः** कार्यस्य शरीरस्याप्युपलक्षणार्थः॥

इति करणविरहिणस्तस्य न कार्यारम्भः संभवतीति चेत्—तत्रोत्तरम् 'शब्दमूलत्वात्', 'विचित्राश्च हि' इत्युक्तम्। शब्दैकप्रमाणकं सकलेतरविलक्षणं तत्तत्करणविरहेणापि तत्तत्कार्यसमर्थमित्यर्थः। तथा च श्रुतिः, "पश्यत्यचक्षुः स शृणोत्यकर्णः। अपाणिपादो जवनो ग्रहीता' इत्येवमाद्या ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥

---

**अत्र मृषावादिन** आहुः—निरवयवं ब्रह्म, एकदेशेन कार्योपयुक्तं चेति व्याहतम्। अतस्तदुभयं न शास्त्रेण शक्यप्रतिपादनम्; शब्दस्याकाङ्क्षासन्निधियोग्यतापेक्षप्रतिपादनात्। अतः परमार्थरूपेण निरवयवस्य सावयवत्वमविद्याकल्पितरूपभेदेनेति वाच्यम्; न हि चन्द्रद्वित्वाभावेऽपि चन्द्रो बहुधा विभज्यते इति। अत्रोच्यते—तत्र तावत् **शब्दमूलत्वादिति** सूत्राननुगुणत्वम्। तदा मिथ्यात्वादिति हि वक्तव्यम् ॥ प्रपञ्चमिथ्यात्वगोचरशब्दो विवक्षित इति चेन्न; 'नात्मा श्रुतेः', 'शब्दविशेषात्', 'अनावृत्तिः शब्दात्' इतिवदत्रापि मिथ्याविषयत्वाप्रतीतेः; प्रपञ्चमिथ्यात्वविषयस्य कस्यचिदपि वाक्यस्याभावाच्च। किञ्च अविद्याकल्पितरूपेण सावयवं ब्रह्मेति ननूक्तं भवद्भिः। अविद्या किं ब्रह्मैकदेशाश्रया तदेकदेशे कार्यं कल्पयति, उत कृत्स्नब्रह्मणि? आद्ये सावयवत्वप्रसङ्गः। द्वितीये अविद्यानिर्मुक्तब्रह्मासंभवः। ततश्च सुषुप्तौ सत्सम्पत्तिः द्रष्टव्यत्वमिन्द्रियागोचरत्वम् 'अतो ज्यायान्' इत्यादिकमनुपपन्नं स्यात्। विकृतेन ब्रह्मणा नित्यसम्पन्नत्वात् तस्यैन्द्रियकत्वात् अतो ज्यायस्त्वाभावाच्चेति भवद्भिरेवोक्तम् ॥ यदेव ब्रह्म काल्पनिकरूपेण कारणम्, तदेव परमार्थतोऽविद्यानिर्मुक्तमिति चेत्—परमार्थतोऽविद्यानिर्मुक्तत्वं नाम किं निवृत्ताविद्यत्वम्? उत अनिवृत्तस्याप्यविद्यासंसर्गस्यापरमार्थत्वम्?। प्रथमे च किं ब्रह्मस्वरूपे क्वचिदविद्याविरहः, उत सर्वत्र?। आद्ये, सावयवत्वम्। इतरत्र, संसारभ्रमानवभासप्रसङ्गः। प्रथमविकल्पे द्वितीयशिरसि च, अपरमार्थभूतोऽविद्यासंसर्गः किं ब्रह्मणि काचित्कः, उत सार्वत्रिकः? आद्ये, सावयवत्वम्। द्वितीये, कृत्स्नप्रसक्तिरङ्गीकृता स्यात्; कृत्स्नस्य ब्रह्मणोऽविद्यातिरोहितत्वात् ॥ परमार्थभूतोऽविद्यायोगो नास्तीति चेत्—न तावता अविद्यानिर्मुक्तब्रह्मसिद्धिः। अविद्यायोगो यादृशोऽभिमतः, तादृशस्यानिवृत्तत्वात्। यथा स्वप्नदृष्टापरमार्थपङ्कसंसर्गाभावेन जाग्रद्दशायां परमार्थपङ्कलिप्तो न लिप्तो न भवति। किञ्च किम् अविद्याकल्पितरूपमिति अविद्याविशिष्टं ब्रह्म विवक्षितम्, उत तदुपलक्षितम्, उत त्रिगुणात्मकं प्रधानमविद्याकल्पितरूपमिति विवक्षितम्। आद्ये, विशेषणांशस्येव विशेष्यांशस्यापि सावयवत्वं स्यात्। द्वितीये, विशेष्यांशस्यैव सावयवत्वं स्यात्। तृतीये च, प्रधानं सावयवं परिणमते चेत्—ब्रह्मणः कथं कारणत्वम्? प्रकृतेर्ब्रह्माश्रयत्वेनेति चेत्—तर्ह्यनादेरबाधितायास्तस्या अविद्याकल्पितत्वाभावेन प्रकृतिशरीरकं ब्रह्म वास्तवप्रपञ्चकारणमित्यभ्युपगमो वरम्; सकलप्रमाणन्यायानुपरोधित्वात् ॥ ननु प्रकृतिविशिष्टस्य कारणत्वे विशेष्यांशस्यापि सावयवत्वं त्वन्मतेऽपि स्यात् ॥ नैवम्; विशिष्टताङ्गीकारे विशेषणविशेष्ययोः स्वभावव्यवस्थादर्शनात्। शरीरविशिष्टस्य प्रवृत्तिहेतुत्वेऽपि शरीरात्मनोः स्वभावव्यवस्था हि दृश्यते। विशिष्टस्य कारणत्वमेव ह्यभ्युपगतम्, न तु सावयवत्वम्। तत्तु विशेषणांशस्यैव। अतो न कश्चिद्दोषः। आत्मनि स्वप्नदर्शिनि-स्वरूपानुपमर्देन विविधसृष्टिवत् मायाविनो हस्त्यादिसृष्टिवच्च ब्रह्मस्वरूपानुपमर्देन अनेकाकारसृष्टिरिति,

अथ प्रयोजनवत्त्वाधिकरणम्—२-१-१०.

## न प्रयोजनवत्त्वात् ॥ २-१-३२ ॥

'आत्मनि चैवम्' इति सूत्रव्याख्यानमप्ययुक्तम्, स्वप्नसृष्टिवाक्यस्य परमात्मविषयत्वात्। 'स हि कर्ता', 'तस्मिन् लोकाः श्रिताः', इति हि वाक्यशेषः। ततश्च परमात्मकारणत्वविमतौ तदेव दृष्टान्तत्वेन वक्तुमयुक्तम्। मन्त्रौषधादिभिः सृजतो मायाविनश्च हस्त्यादिकार्ये प्रत्युपादानत्वाभावात् सावयवत्वाच्च घटशरावादिकं प्रति कुलालादेरिव कर्तृत्वमात्रमिति निरवयवस्याकृत्स्नप्रसक्तौ दृष्टान्तत्वमनुपपन्नम्।

**यादवमिश्रास्तु**—भोक्तृभोग्यनियन्तृष्वन्यतमांशे कृत्स्नपरिसमाप्तेरितरांशद्वयासम्भव इति पूर्वपक्षं कृत्वास्वतोनिरवयत्वमपि सर्वशक्तियोगात् परिणामेन सावयवं बहु भवतीति सिद्धान्तयन्ति। तदयुक्तम्; एकस्य बीजस्य शक्तिमतः परिणामेन शाखापत्रपुष्पादिरूपेणेव प्रकृत्यादिरूपेण बहुभवने प्रकृतिपुरुषेश्वराणाम् अनादित्वनित्यत्वश्रुतिविरोधस्यावर्जनीयत्वात्। सद्द्रव्यमात्रानादितया तेषामनादित्वे शाखापत्रपुष्पादीनामपि तथाऽनादित्वात् तैरविशेषप्रसङ्गः। परिणामानपेक्षानाद्यंशभेदे स्वतो निरवयवत्वं न स्यात्। निरवयवत्वश्रुतिरीश्वरांशविषयेति चेत्, तर्हि जगदुपादानस्य ब्रह्मणः कृत्स्नप्रसक्तिनिरवयत्वविरोधोऽपरिहृतः स्यात्; निरंशस्योपादानत्वाभावात्। एवं जीवानामपि प्रत्येकं निरवयवत्वे दोषः समानः, भोक्त्रंशस्याप्युपादानत्वाभावात्। प्रकृत्यंशस्य तदुभयविरोधपरिहारे, प्रधानकारणवादे चोद्यं परिहृतं स्यात्, न तु ब्रह्मकारणवादे।

किञ्च निरवयवत्वाकृत्स्नोपयोगविषयश्रुतिबलात् ब्रह्मणो विलक्षणत्वेऽपि निरवयवत्वमाकाशरूपरसादीनां निरवयवत्वादविलक्षणं सावयवतया परिणामप्रतिभटमित्युक्तदोषप्रसङ्ग इत्याशङ्क्य, निरवयवत्वमपि शब्दमूलत्वादपूर्वं ब्रह्मणस्सावयवतया परिणामार्हत्वानिवारकमिति व्याख्यातम्। तदप्ययुक्तम्; धर्मिवैलक्षण्ये सति विलक्षणधर्मासंभवशङ्कानुदयात्। धर्मवैलक्षण्याभावे हि धर्मिवैलक्षण्यमेव न स्यात्। तस्माद्विलक्षणधर्मयोगे **श्रुते**रिति प्रतिपादिते, तदसंभवशङ्कायां तदसंभवाय **शब्दमूलत्वा**दिति धर्मिवैलक्षण्यप्रतिपादनमेव युक्तम्।

तथा **सर्वोपेते**त्यधिकरणान्तरं च वर्णितम्। 'अशब्दमस्पर्शम्', 'सर्वकर्मा सर्वकामः' 'बहु स्याम्', 'आसीनो दूरं व्रजति शयानो याति सर्वतः', 'अनेजदेकं मनसो जवीयः....तद्धावतोन्यानत्येति तिष्ठत्' 'पश्यत्यचक्षुः' इत्यादिविरुद्धकार्याणां भ्रान्तिसिद्धत्वं पूर्वपक्षीकृत्य अंशभेदेनोपपन्नानि तानि सत्यानि, तेषां च कार्याणां चक्षुःश्रोत्रपादादिसापेक्षत्वव्याप्तिभङ्गेन सर्वशक्तियोगोपपत्तेरिति सिद्धान्तितम्। तत्राधिकरणभेदोऽनुपपन्नः; सर्वोपेता चेति **चशब्देन** पूर्वसूत्रसाध्यस्यैवोपपादकत्वावगमात् प्रकृतसाध्यं प्रत्युपयोगितया पाश्चात्यसूत्रद्वयार्थस्य तादर्थ्यसंभवाच्च। तत्संभवश्च फलफलिभावे दर्शितः। सर्वनामरूपोपेतत्वं च **सर्वोपेत**शब्दार्थ उक्तः। भाष्ये तु तदनुक्तिस्तस्योपपादकत्वाभावात्। निरवयवस्यापि सर्वकारणत्वे सर्वशक्त्यन्वय एव ह्युपपादकः, नामरूपोपेतत्वं तूपपाद्यकोटिघटकम्। श्रुतिवाक्यं तु **श्रुते**स्त्वित्यत्रैव विवक्षितम्। अत इह तदनुपादानम् ॥ ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥

**न प्रयोजनवत्त्वात्** ॥ सङ्गतिः स्पष्टा। कारणत्वं संभवति, नेति विचारः। तदर्थमवाप्त-

यद्यपीश्वरः प्राक्सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थशक्तियुक्तः स्वयमेव विचित्रं जगत् स्रष्टुं शक्नोति—तथापीश्वरकारणत्वं न संभवति ; प्रयोजनवत्त्वाद्विचित्रसृष्टेः , ईश्वरस्य च प्रयोजनाभावात् । बुद्धिपूर्वकारिणामारम्भे द्विविधं हि प्रयोजनं स्वार्थः परार्थो वा । न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किञ्चन प्रयोजनमनवाप्तमवाप्यते । नापि परार्थः अवाप्तकामस्य परार्थता हि परानुग्रहेण भवति । न चेदृशगर्भजन्मजरामरणनरकादिनानाविधानन्त-दुःखबहुलं जगत् करुणावान् सृजति ; प्रत्युत सुखैकतानमेव जनयेज्जगत् करुणया सृजन् । अतः प्रयोजनाभावाद्ब्रह्मणः कारणत्वं नोपपद्यत इति ॥ ३२ ॥ एवं प्राप्ते प्रचक्ष्महे—

लोकवत्तु लीलाकैवल्यम् ॥ २ १ ३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसङ्कल्पविकार्यविविधविचित्रचिदचिन्मिश्रजगत्सर्गे लीलैव केवला प्रयोजनम् । लोकवत्—यथा लोके सप्तद्वीपामेव मेदिनीमधितिष्ठतः संपूर्णशौर्यवीर्यपराक्रम-स्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते—तथैव परस्यापि ब्रह्मणः स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति निरवद्यम् ॥ ३३ ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ २-१-३४ ॥

यद्यपि परमपुरुषस्य सकलेतरचिदचिद्वस्तुविलक्षणस्याचिन्त्यशक्तियोगात् प्राक्सृष्टेरेकस्य निरवयवस्यापि विचित्रचिदचिन्मिश्रजगत्सृष्टिः संभाव्येत, तथापि देवतिर्यङ्मनुष्यस्थावरात्मनो-त्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसज्येत, अतिघोरदुःखयोगकरणान्नैर्घृण्यं चावर्जनीयमिति । तत्रोत्तरम्—न सापेक्षत्वादिति । न प्रसज्येयातां वैषम्यनैर्घृण्ये । कुतः? सापेक्षत्वात्—सृज्यमानदेवादिक्षेत्रज्ञकर्मसापेक्षत्वाद्विषमसृष्टेः । देवादीनां क्षेत्रज्ञानां देवादिशरीरयोगं तत्तत्कर्मसापेक्षं दर्शयन्ति हि श्रुतिस्मृतयः, "साधुकारी साधुर्भवति । पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा भवति पापः पापेन," तथा भगवता पराशरेणापि देवादिवैचित्र्यहेतुः सृज्यमानानां क्षेत्रज्ञानां प्राचीनकर्मशक्तिरेवेत्युक्तम्, "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।

---

समस्तकामस्य लीला प्रयोजनम्, नेति ; लीलायां वैषम्यनैर्घृण्ये प्रसज्येते, नेति च । यदा प्रसज्येते, यदा च लीला न प्रयोजनम्, तदा लीलारूपव्यापारासंभवात् कारणत्वासंभवः । यदा न वैषम्यादिप्रसङ्गः, यदा च लीला प्रयोजनम्, तदा अवाप्तसमस्तकामस्य लीलारूपव्यापारसंभवात् कारणत्वसंभव इति सिध्यति । प्रयोजनवत्त्वं कस्येत्यपेक्षां पूरयति **विचित्रसृष्टेरि**ति । तस्य नेतिपदेनान्वयस्य विरुद्धत्वादभि प्रेतमाह **ईश्वरस्य चे**ति । तदेव विवृणोति **बुद्धिपूर्वे**ति ॥

**लोकवत्तु लीलाकैवल्यम्** । **लीलैव केवले**ति । पणबन्धपूर्वकद्यूतादिव्यावृत्त्यर्थः **केवल**शब्दः। प्रयोजनान्तरानुद्देशेन प्रवृत्तत्वेपि यदृच्छोपनतप्रयोजनस्यार्थात् सिद्धिव्युदासार्थ **एव**कारः । ननु कन्तुका-द्यारम्भस्य लीलात्वं युक्तम्, यत्नगौरवाभावात् ; जगद्व्यापारस्य तु लीलात्वमनुपपन्नम्, महायासरूपत्वा-दिति शङ्कानिवृत्त्यर्थमाह **स्वसङ्कल्पमात्रावक्लृप्ते**ति ॥

**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति** ॥ वैषम्यशब्दः **पक्षपात**शब्देन व्याख्यातः । कस्य किमपेक्ष्यमित्यत्राह **सृज्यमाने**ति । ईश्वरश्चेत्, न सृष्टौ कर्मसापेक्षः ; किन्तु वैषम्यांश एव तदपेक्षा । अतो **विषमसृष्टेरि**त्यध्याहृतम् । **निमित्तमात्रमेवासा**विति । अप्रधानकारणं **निमित्त**शब्द-

प्रधानकारणीभूता यतो वै सृज्यशक्तयः॥ निमित्तमात्रं मुक्त्वैव नान्यत् किञ्चिदपेक्षते। नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम्" इति। स्वशक्त्या—स्वकर्मणैव देवादिवस्तुताप्राप्तिरिति॥

**न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च॥ २-१ ३५॥**

प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति। कुतः? अविभागश्रवणात्, "सदेव सोम्येदमग्र आसीत्' इति। अतस्तदानीं तदभावात् तत्कर्म न विद्यते; कथं तदपेक्षं सृष्टिवैषम्यमित्युच्यत इति चेत्—न; अनादित्वात् क्षेत्रज्ञानां तत्कर्मप्रवाहाणां च। तदनादित्वेऽप्यविभाग उपपद्यते च; यतस्तत् क्षेत्रज्ञवस्तु परित्यक्तनामरूपं ब्रह्मशरीरतयाऽपि पृथग्व्यपदेशानर्हमतिसूक्ष्मम्। तथा अनभ्युपगमे अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च। उपलभ्यते च तेषामनादित्वम्, "न जायते म्रियते वा विपश्चित्" इति। सृष्टिप्रवाहानादित्वं च, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यादौ। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम्। स्मृतावपि, "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति। अतः सर्वविलक्षणत्वात् सर्वशक्तित्वाल्लीलैकप्रयोजनत्वात् क्षेत्रज्ञकर्मानुगुण्येन विचित्रसृष्टियोगाद् ब्रह्मैव जगत्कारणम्॥ ३५॥

**सर्वधर्मोपपत्तेश्च॥ २-१-३६॥**

प्रधानपरमाण्वादीनां कारणत्वे यद्धर्मवैकल्यमुक्तम्, वक्ष्यमाणं च, तस्य सर्वस्य धर्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम्॥ ३६॥

इति प्रयोजनवत्त्वाधिकरणम्॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
द्वितीयस्याध्यायस्य प्रथमः पादः॥

---

विवक्षितम्; 'प्रधानकारणीभूता' इति तत्रैव निर्देशात्। यथा, "निमित्तमात्रं भव सव्यसाचिन्" इति, तद्वत्। प्राधान्यञ्च असाधारणकारणत्वम्। साधारणकारणत्वमप्राधान्यम्। यथा क्षेत्रसलिलादिकं सर्वसस्यसाधारणकारणम्; तत्तद्बीजशक्तिविशेषा अङ्कुरविशेषोत्पत्तावसाधारणकारणम्—तथेश्वरस्य साधारणकारणत्वान्निमित्तमात्रत्वम्; कर्मणां विषमसृष्ट्यसाधारणकारणत्वात् प्राधान्यमित्यर्थः॥

**न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च॥** अपिशब्दं व्याचष्टे **तदनादित्वेऽपीति**। **उपपद्यते** चेत्यत्र चशब्दाभिप्रेतार्थमाह **अकृताभ्यागमेति**। **स्वरूपानादित्वे** सत्यपि सृष्टिप्रवाहानादित्वे सति हि कर्मप्रवाहानादित्वसिद्धिः। अतः सृष्टिप्रवाहानादित्वं दर्शयति **सूर्याचन्द्रमसाविति**। प्रतिकल्पमधीतस्यास्य वाक्यस्यार्थवत्त्वात् सृष्टेरनादित्वसिद्धिः। तत्तत्सूत्रोक्तान् अर्थान् यथाक्रमं वदन्नधिकरणार्थमुपसंहरति **अत** इति।

**सर्वधर्मोपपत्तेश्च॥** इदं सूत्रं सर्वाधिकरणशेषम्। के धर्माः, कस्मिन्नुपपत्तिः, किं व्यवच्छेद्यम् इत्यपेक्षायां व्याचष्टे **प्रधानेति**। पञ्चम्या अन्वयं दर्शयति **ब्रह्मैवेति**। परमप्रकृतसाध्येनान्वय इत्यर्थः॥

इदमधिकरणं **ब्रह्माज्ञानपक्षे** न सङ्गच्छते, जगद्व्यापारस्य निष्प्रयोजनतया चोदिते लीलात्वेन परिहारात्। प्रपञ्चस्य भ्रान्तिपरिकल्पितत्वे भ्रान्तकृत्यस्य निष्प्रयोजनत्वं न दोष इति हि वक्तव्यम्।

न हि शुक्तिरूप्यचन्द्रद्वित्वाध्यासादिकं प्रयोजनाय प्रवर्तते । न च पित्तोपहतः प्रयोजनाकाङ्क्षया घटं भिनत्ति, गृहं च दहति । न हि स्वप्नदर्शी प्रयोजनापेक्षया स्वशिरश्छेदं पश्यति ॥ ननु भ्रान्तस्यापि हि क्रीडा संभवति ; अतस्तदुक्तिरिति चेन्न—केषाञ्चिद्व्यापाराणां क्रीडातुल्यत्वेऽपि स्वशिरःप्रहारादीनामिव भ्रान्तव्यापारत्वादेव तेषां क्रीडात्वानुपपत्तेः । किञ्च, बहु स्यामिति सङ्कल्पेन हीश्वरः सृष्ट्यादि करोति । तदयुक्तम् । न हि कश्चित् भ्रान्तःस्यामिति सङ्कल्प्य भ्राम्यति । किञ्चेश्वरः सर्वज्ञश्चेत्, स्वानर्थरूपसंसार-प्रवर्तनं क्रीडेति न मन्यते । अज्ञश्चेत्, सर्वज्ञत्वश्रुतिविरोधः ॥ विवेकज्ञाननिष्पादनेन स्वानर्थपरिहाराय जगत् सृजतीति चेत्—तथा(दा ?)पि लीलात्वमनुपपन्नम् । न हि व्याध्युपहतस्य औषधानयनप्रवृत्तिर्लीला भवति । स्वयंप्रयोजनरूपव्यापारो हि लीला । ऋग्वेदादिप्रवर्तकस्य शास्त्रादधिकविषयज्ञानवत ईश्वरस्य जगत्सृष्टिनिष्पाद्यं विवेकज्ञानं न संभवति, 'यः सर्वज्ञस्सर्ववित्....तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति हि श्रुतिः । यदीश्वरः स्वबन्धभ्रमनिवर्तनाय जगत् सृजति, तर्हि बन्धच्छेदनौपयिकानेवार्थान् सृजेत् ; किमर्थं बन्धवर्धकान् अर्थकामादीन् सृजति ? । किञ्च किं भ्रान्तिहेतुर्लीला, उत भ्रान्तिकार्या, उत भ्रान्तिरेव ? । नाद्यः—लीलया स्वभ्रमसंपादनानुपपत्तेः । न द्वितीयः ; प्रथमसङ्कल्पस्य लीला-त्वानुपपत्तेः ; तद्वदेवोत्तरत्रापि लीलामन्तरेण भ्रमोपपत्तेश्च । नापि तृतीयः, द्विचन्द्रज्ञानस्य लीलात्वा-प्रसिद्धेः । स्वयमभ्राम्यन्नीश्वरो लीलया परान् मोहयतीति चेन्न ; त्वन्मते भ्रान्त्या विना परदर्शना-योगात् ; परदर्शने संभवति तेषां स्वानन्यत्वज्ञानाच्च निर्विशेषसन्मात्रस्य ब्रह्मणो निर्विशेषत्वादेव न लीलासंभवः । ईश्वरस्य तु सर्वज्ञत्वेन संसारम् अहितत्वेन, जीवान् स्वानन्यत्वेन च जानतो जन्मजरामर-णादिनिर्वर्तननरकपातनादिव्यापारो न लीला भवितुमर्हति । अत इदमधिकरणं ब्रह्माज्ञानवादिनां विरुद्धम् ।

**वैषम्ये**त्यादिसूत्राणि चाधिकरणान्तरं **सर्वै**र्वर्णितम् । न च तद्युक्तम् ; फलफलिभावेन प्रकृतसाध्येन तेषामन्वितार्थत्वात् । फलफलिभावश्च दर्शितः । कर्मसापेक्षतया वैषम्यनैर्घृण्यपरि-हारश्च **भ्रान्तब्रह्मवादिनां** न घटते । पित्तोपहतो हि शुभाशुभानपेक्षः कञ्चित् स्तौति; सान्त्ववादिनमपि कञ्चिन्निन्दति, कांश्चिदम्भसा सिञ्चति; कांश्चिन्मुसलेन हन्ति । न च तस्मिन् वैषम्यनैर्घृण्ययोर्दोषरूपता ; न च युक्त्या परिहर्तव्यत्वम् ॥ **सापेक्षत्वा**दिति पदं च विषमसृष्ट्या संबन्धमर्हति । न हीश्वरश्चेत्, कर्मसापेक्षः ; तस्य स्वतन्त्रत्वात् । सृष्टिश्चेत्, न कर्मसापेक्षा ; समष्टितत्त्वसृष्टौ सर्वशक्तितयेश्वरस्य निरपेक्षत्वात् । यस्मिन्नंशे वैषम्यनैर्घृण्यप्रसङ्गः, तत्रैव हि कर्मणोऽपेक्षा । अतः प्राप्ताप्राप्तविवेकेन वैषम्यांशस्य कर्मसापेक्षत्वा**द्विषमसृष्टे**रित्युक्तम् । **उपपद्यत** इति च अनादित्वमुपपद्यत इति व्याख्यातम् । तदानी**मविभागा**दिति शङ्कितहेतुरपरिहृतः स्यात् । अतः **क्षेत्रज्ञानामनादित्वेऽपि अविभाग उपपद्यत** इति व्याख्यातम् । उक्तलक्षणस्याविभागस्य तथात्वोपपादकत्वेन अकृताभ्यागमादिप्रसङ्ग-रूपस्तर्कोऽपि सूत्राभिप्रेतो भवतीत्यभिप्रायेणाह **तथाऽनभ्युपगम** इति । **अकृताभ्यागम**शब्देन मुक्तानामप्युत्पत्तिप्रसङ्गोऽभिप्रेतः । एवम् **उपपद्यते उपलभ्यते** इति द्वयं यथाक्रममविभागानादित्वयोः समर्थनपरम् । **सर्वधर्मोपपत्तेश्चे**ति सूत्रं निर्विशेषवादेऽत्यन्तमघटितमिति दुरपह्नवम् । ब्रह्मणो

महामायत्वात् तस्मिन् मायाकल्पितधर्मोपपत्तिरिति तु श्रद्धामात्रम्; अशाब्दत्वात् । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिविरोधाच्च ॥

**यादवमिश्रानुसारिणस्तु—सर्वधर्मोपपत्तेश्चे**ति सूत्रमप्यधिकरणान्तरमाहुः । तत्र—चैतन्यशक्तिक्रियाशक्तिपरिणामशक्तिरूपाः सर्वे धर्मा ब्रह्मणि नोपपद्यन्ते, नित्यसर्गादिप्रवृत्तिप्रसङ्गात् । न चेच्छया नित्यप्रसङ्गपरिहारः; इच्छाया नित्यत्वे नित्यप्रसङ्गात् । अनित्यत्वेऽपि, हेतुसापेक्षत्वात्; हेतोश्चामानकत्वात् । कथञ्चिद्धेत्वन्वेषणे, तस्यापि नित्यानित्यविकल्पे पूर्वोक्तदोषप्रसङ्गादिच्छया व्यवस्थाऽनुपपत्तेर्नित्यसर्गप्रसङ्गः । अतो ब्रह्मणि सर्वे धर्मा नोपपद्यन्ते—इति पूर्वः पक्षः कृतः । इच्छायाः प्रलयकालात्ययज्ञानजन्मत्वात् तज्ज्ञानस्य, प्रलयादौ 'कञ्चित्कालं स्वप्स्यामि ततः प्रबोद्धाहे' इति सङ्कल्पस्य नष्टत्वेऽपि, तदाहितविशेषप्रबोधशक्त्या प्रलयकालात्यये जन्यत्वात्, प्रलयकालस्य प्रकृतिपरिणामरूपत्वादन्त्यपरिणामस्य नित्यं प्रसङ्गाभावात् इच्छायाः कादाचित्कत्वोपपत्तेर्नित्यसर्गादिप्रसङ्गाभावात् ब्रह्मणि ज्ञानक्रियापरिणामशक्तिरूपसर्वधर्मोपपत्तिरिति राद्धान्तितम् ।

तत्र तावदधिकरणान्तरत्वमयुक्तम्; सन्मात्रस्यापि ब्रह्मणः प्रकृत्यंशेन महदाद्युपादानत्वात् परिणामशक्तिमतोऽपि प्रकृत्यंशस्यान्तर्यामिब्राह्मणादिष्वीश्वरनियाम्यतयाऽवगतस्य स्वातन्त्र्येण परिणामायोगात् 'सदेव सोम्येदमग्र आसीत .... तदैक्षत बहु स्याम्', 'सोऽकामयत' इति जगत्सर्गादिविषयस्येश्वरसङ्कल्पस्य कादाचित्कत्वावगमाच्च नित्यसर्गादिप्रवृत्त्यप्रसङ्गेन पूर्वपक्षोत्थानासंभवात् । आद्विपरार्द्धकालभाविसदृशतरसूक्ष्मपरिणामपरम्परासु अन्त्यपरिणामलक्षणस्य प्रलयकालात्ययस्य ज्ञानं सिसृक्षाहेतुः । तत्र यदुक्तम्—सुषुप्तस्येश्वरस्य पूर्वसङ्कल्पाहितविशेषा प्रबोधशक्तिः प्रलयकालात्ययसहकृता प्रबोधं जनयति, तेन प्रलयात्ययं ज्ञात्वा सङ्कल्पयतीति—तदयुक्तम् . स्वतः सर्वज्ञस्य ज्ञानसङ्कोचककर्मपारवश्यरहितस्येश्वरस्य स्वापायोगात् ॥ स्वेच्छया स्वाप इति चेन्न; इच्छानुपपत्तेः । अज्ञातांशेऽपि ज्ञानमेव हि सर्वे वाञ्छन्ति; न तु ज्ञानलोपम् ॥ निद्राया अभिमतत्वं दृश्यत इति चेत् . आहाराजरण-तीव्रामय-दुःख-परिश्रम-तमोगुणाभिभूतानां तत्तदनिष्टशमनाय निद्राकाङ्क्षा । लघुशरीरस्य व्याध्यादिरहितस्य प्रसन्नमनसो विचित्रमभिमतं विषयमवलोकयतो हि निद्राऽनभिमतैव भवति । अतः ऊर्मिषट्कातिगस्यानामयस्य सर्वशक्तेस्तमसःपरस्येश्वरस्य कथं ज्ञानलोपोऽभिमतः स्यात्? प्रबोधशक्तेः पूर्वसङ्कल्पाहितविशेषत्वमप्ययुक्तम्; विशेषस्य प्रबोधजननयोग्यतालक्षणत्वात् योग्यतायां योग्यतान्तरानुपपत्तेः, द्रव्यस्यैव सर्वविषयोग्यतापादनदर्शनाच्च । स च योग्यतालक्षणविशेषः किं प्रलयकालात्ययज्ञानात् प्रबोधमीश्वरे जनयति, उताज्ञानात्? । न प्रथमः, योग्यतायाश्चैतन्याभावात् । द्वितीये, स योग्यतारूपविशेषस्तदानीमीश्वराधिष्ठितः, न वा? । न प्रथमः, अप्रबुद्धस्याधिष्ठातृत्वायोगात् । द्वितीये च, अनधिष्ठितस्य विशेषस्य यथा प्रबोधकार्यकरत्वम्; एवमीश्वरानधिष्ठितस्य प्रकृत्यंशस्यैव जगज्जननसम्भवात् प्रबोधपरिकल्पनं विफलम् । तद्धि कल्प्यम्; अश्रुतत्वात् । प्रबोधानन्तरभावितया त्वदभिमतः सङ्कल्प एव हि तदैक्षतेति श्रुतः; न तु प्रबोधः ॥ अप्रबुद्धस्य सङ्कल्पायोगात् तत एव प्रबोधः कल्प्यत

श्रीमते रामानुजाय नमः ॥

## श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

### द्वितीयाध्याये द्वितीयः पादः ।

### १. रचनानुपपत्त्यधिकरणम्—२-२-१.

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ २-२-१ ॥**

उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति । तत्र परैरुद्भाविताश्च दोषाः परिहृताः । इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्ते । इतरथा कस्यचित् मन्दधियस्तेषां पक्षाणां युक्त्याभासमूलतामजानतः प्रामाणिकत्वशङ्कया वैदिकपक्षे किञ्चित् श्रद्धावैकल्यं जायेतापि । अतः

---

इति चेन्न ; स्वापप्रबोधयोरुभयोः कल्पनादपीश्वरज्ञानस्य नित्यतामात्रकल्पनस्य न्याय्यत्वात् ; श्रुत्यनुरोधाच्च ॥ स्वापप्रबोधावपि वचनसिद्धाविति चेत्, नित्यज्ञानत्वं च वचनसिद्धम् ॥ तद्वचनं ज्ञानशक्तिनित्यत्वपरमिति चेत्—स्वापप्रबोधवचनमपि जगद्व्यापारवैमुख्यौन्मुख्यविषयं स्यात् । इयान् विशेषः—क्वचित् ज्ञानलोपस्याभिमतत्वानुपपत्तिः, शक्तेराहितविशेषत्वानुपपत्तिः, ईश्वरानधिष्ठितायाः कार्यकरत्वेऽतिप्रसङ्गश्च, जगत्सर्गादिविषयसङ्कल्पातिरेकेण स्वापप्रबोधयोरश्रुतयोः परिकल्पनगौरवञ्च ; अन्यत्र तद्विरहश्चेति । किञ्च स्वापशब्दस्यामुख्यत्वं चाम्रचप्रायन्यायसिद्धम् । "यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति" इति ह्युच्यते, निमीलनशब्दस्य हि प्रवृत्त्यनर्हसूक्ष्मदशापत्तिविषयत्वममुख्यम् । प्रबोधानन्तरभाविसङ्कल्पानुपपत्तिश्च भवताम् । बहु स्यां प्रजायेयेति हि सङ्कल्पः । प्रकृतिपुरुषेश्वरस्वरूपेण बहु स्याम्, महदादिरूपेण प्रजायेयेति हि भवद्भिर्व्याख्यातं प्रकृत्यधिकरणे । ईश्वरांशस्य विभागो नाम प्रबोध एव । न हि खण्डितत्वम् । अतः प्रबोधात् सङ्कल्पः, सङ्कल्पाद्विभाग इत्यन्योन्याश्रयः ॥ बहु स्यामिति सङ्कल्पः पूर्वं प्रलयादाविति चेन्न ; प्रजायेयेति सङ्कल्पतुल्यकालताप्रतीतिस्वारस्यात् ॥ सोऽपि सङ्कल्पः पूर्वं प्रलयादाविति चेन्न ; 'तत्तेज ऐक्षत', 'तदपोऽसृजत' इत्यादिसर्गानन्तरपूर्वभाविसङ्कल्पपरप्रकरणविरोधात् ; 'सदेव सोम्येदमग्र आसीदेकमेव' इति पूर्ववाक्यविरोधाच्च । 'स एकाकी न रमेत' इत्यरतिरपि हि न प्रलयारम्भे युज्यते । अतः सङ्कल्पानुपपत्तेश्च राद्धान्तवर्णनमयुक्तम् ॥ इति प्रयोजनवत्त्वाधिकरणम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन
श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां
द्वितीयास्याध्यायस्य प्रथमः पादः ॥

---

२-२.

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च** ॥ प्रथमाध्यायार्थपूर्वकं प्रथमपादार्थं वदन् द्वितीयपादेन सङ्गतिमाह उक्तमिति । स्वपक्षे कारणविषये परोक्तदोषाः परिहृताः । परपक्षोक्तकारणविषयं दूषणं क्रियत इत्यर्थः । अनेन तृतीयपादस्य पूर्वभावित्वशङ्का निरस्ता । तत्र कार्यविषये परोक्तदूषणपरिहारो हि क्रियते । अतः कारणविषये स्वमतस्थापनं परपक्षदूषणं च सङ्गतम् । किमर्थं परपक्षप्रतिक्षेप इत्यत्राह—**इतरथे**ति ।

परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते। तत्र प्रथमं तावत् कापिलमतं निरस्यते, वैदिकानुमतसत्कार्यवादाद्यर्थसङ्ग्रहेणैतस्य सत्पक्षनिक्षेपसंभावनाभ्रमहेतुत्वातिरेकात्। 'ईक्षतेर्नाशब्दम्' इत्यादिभिर्वैदिकवाक्यानामतत्परत्वमात्रमुक्तम्; अत्रैव तत्पक्षस्वरूपप्रतिक्षेपः क्रियत इति न पौनरुक्त्याशङ्का।

एषा हि साङ्ख्यानां दर्शनस्थितिः—

"मूले प्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः"

इति तत्त्वसङ्ग्रहः। मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि लाघवप्रकाश-चलनोपष्टम्भन-गौरवावरणकार्याणि अत्यन्तातीन्द्रियाणि कार्यैकनिरूपणविवेकानि अन्यूनानतिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि द्रव्याणि। सा च सत्त्वरजस्तमसां साम्यरूपा प्रकृतिरेका स्वयमचेतना अनेकचेतनभोगापवर्गार्था नित्या सर्वगता सततविक्रिया न कस्यचिद्विकृतिः; अपि तु परमकारणमेव। महदाद्यास्तद्विकृतयोऽन्येषां च प्रकृतयः सप्त—महान् अहङ्कारः शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तत्राहङ्कारस्त्रिधा—वैकारिकस्तैजसो भूतादिश्च—क्रमात् सात्त्विको राजसस्तामसश्च। तत्र वैकारिकः सात्त्विक इन्द्रियादिः; भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः; तैजसो राजसस्तूभयोरनुग्राहकः। आकाशादीनि पञ्च महाभूतानि, श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि, वागादीनि पञ्च कर्मेन्द्रियाणि, मनः इति केवलविकाराः षोडश। पुरुषस्तु निष्परिणामत्वेन न कस्यचित्प्रकृतिः, न कस्यचिद्विकृतिः। तत एव निर्धर्मकश्चैतन्यमात्रवपुर्निष्क्रियः सर्वगतः प्रतिशरीरं भिन्नश्च। निर्विकारत्वान्निष्क्रियत्वाच्च तस्य कर्तृत्वं भोक्तृत्वं च न संभवति।

---

कापिलमतनिरासप्राथम्यहेतुमाह **तत्रेति**। **सत्कार्यवादादीति**। **आदिशब्देन** चतुर्विंशतितत्त्वस्वीकारो विवक्षितः। पौनरुक्त्यमाशङ्क्य निराकरोति **ईक्षतेरिति**। किं ब्रह्मकारणवाद एकान्ततः श्रद्धेयः, उत नेति। तदर्थं प्रधानं जगत्कारणम्, नेति। किं प्रधानस्य पुरुषसंनिधानात् पङ्गुसंनिधानादन्धस्येव प्रवृत्तिः संभवति, नेति। किमन्धस्य पङ्गुसंनिधानात् मार्गावलोकनव्यापारवत् पुरुषसंनिधानात् तच्छायापत्त्या वा ज्ञातृत्वं संभवति, नेति। यदा ज्ञातृत्वसंभवः, तदा प्रवृत्तिसंभवात् प्रधानकारणत्वमुपपन्नमिति नैकान्ततो ब्रह्मकारणवादः श्रद्धेयः। यदा ज्ञातृत्वासंभवः, तदा प्रवृत्त्यसंभवात् प्रधानकारणवादानुपपत्तेर्ब्रह्मकारणवाद एकान्ततः श्रद्धेय इति सिध्यति। **एषेत्यादि**। तत्त्वसङ्ग्रहश्लोकं व्याचष्टे—**मूलप्रकृतिर्नामेत्यादिना**। **उपष्टम्भनम्**—धारणम्। **अत्यन्तातीन्द्रियाणि**—नित्यानुमेयानीत्यर्थः। **समतामुपेतानी**त्युक्ते केनचिदाकारेण साम्यं स्यादिति तद्व्यावृत्त्यर्थं **सम**शब्दव्याख्यानाय **अन्यूनानतिरेकाणी**त्युक्तम्। सत्त्वरजस्तमस्समूहः प्रकृतिरित्यर्थः। **विकृतिः** कार्यम्। **महदाद्या** इति। स्वकारणापेक्षया विकृतयः, स्वकार्यापेक्षया प्रकृतय इत्यर्थः। **षोडशकश्च विकार** इत्यत्र **चः** एवकारार्थः; षोडशको विकार एवेत्यर्थः। **न प्रकृतिरित्यादि**श्लोकखण्डं व्याचष्टे **पुरुषस्त्विति**। **निर्धर्मकः**—ज्ञातृत्वरहितः। तद्ध्यन्तःकरणस्येति तन्मतम्। तर्हि

श्रीमते रामानुजाय नमः ॥

## श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

### द्वितीयाध्याये द्वितीयः पादः ।

### १. रचनानुपपत्त्यधिकरणम्—२-२-१.

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ २-२-१ ॥**

उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति । तत्र परैरुद्भाविताश्च दोषाः परिहृताः । इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्ते । इतरथा कस्यचित् मन्दधियस्तेषां पक्षाणां युक्त्याभासमूलतामजानतः प्रामाणिकत्वशङ्कया वैदिकपक्षे किञ्चित् श्रद्धावैकल्यं जायेतापि । अतः

---

इति चेन्न; स्वापप्रबोधयोरुभयोः कल्पनादपीश्वरज्ञानस्य नित्यतामात्रकल्पनस्य न्याय्यत्वात्; श्रुत्यनुरोधाच्च ॥ स्वापप्रबोधावपि वचनसिद्धाविति चेत्, नित्यज्ञानत्वं च वचनसिद्धम् ॥ तद्वचनं ज्ञानशक्तिनित्यत्वपरमिति चेत्—स्वापप्रबोधवचनमपि जगद्व्यापारवैमुख्यौन्मुख्यविषयं स्यात् । इयान् विशेषः—क्वचित् ज्ञानलोपस्याभिमतत्वानुपपत्तिः, शक्तेराहितविशेषत्वानुपपत्तिः, ईश्वरानधिष्ठिताया; कार्यकरत्वेऽतिप्रसङ्गश्च, जगत्सर्गादिविषयसङ्कल्पातिरेकेण स्वापप्रबोधयोरश्रुतयोः परिकल्पनगौरवञ्च; अन्यत्र तद्विरहश्चेति । किञ्च स्वापशब्दस्यामुख्यत्वं चाभ्रप्रायन्यायसिद्धम् । "यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति" इति ह्युच्यते, निमीलनशब्दस्य हि प्रवृत्त्यनर्हसूक्ष्मदशापत्तिविषयत्वममुख्यम् । प्रबोधानन्तरभाविसङ्कल्पानुपपत्तिश्च भवताम् । बहु स्यां प्रजायेयेति हि सङ्कल्पः । प्रकृतिपुरुषेश्वरस्वरूपेण बहुस्याम्, महदादिरूपेण प्रजायेयेति हि भवद्भिर्व्याख्यातं प्रकृत्यधिकरणे । ईश्वरांशस्य विभागो नाम प्रबोध एव । न हि खण्डितत्वम् । अतः प्रबोधात् सङ्कल्पः, सङ्कल्पाद्विभाग इत्यन्योन्याश्रयः ॥ बहु स्यामिति सङ्कल्पः पूर्वं प्रलयादाविति चेन्न; प्रजायेयेति सङ्कल्पतुल्यकालताप्रतीतिस्वारस्यात् ॥ सोऽपि सङ्कल्पः पूर्वं प्रलयादाविति चेन्न; 'तत्तेज ऐक्षत', 'तदपोऽसृजत' इत्यादिसर्गानन्तरपूर्वभाविसङ्कल्पपरप्रकरणविरोधात्; 'सदेव सोम्येदमग्र आसीदेकमेव' इति पूर्ववाक्यविरोधाच्च । 'स एकाकी न रमेत' इत्यरतिरपि हि न प्रलयारम्भे युज्यते । अतः सङ्कल्पानुपपत्तेश्च राद्धान्तवर्णनमयुक्तम् ॥ इति प्रयोजनवत्त्वाधिकरणम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां द्वितीयास्याध्यायस्य प्रथमः पादः ॥

---

२-२.

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च** ॥ प्रथमाध्यायार्थपूर्वकं प्रथमपादार्थं वदन् द्वितीयपादेन सङ्गतिमाह **उक्तमिति** । स्वपक्षे कारणविषये परोक्तदोषाः परिहृताः । परपक्षोक्तकारणविषयं दूषणं क्रियत इत्यर्थः । अनेन तृतीयपादस्य पूर्वभावित्वशङ्का निरस्ता । तत्र कार्यविषये परोक्तदूषणपरिहारो हि क्रियते । अतः कारणविषये स्वमतस्थापनं परपक्षदूषणं च सङ्गतम् । किमर्थं परपक्षप्रतिक्षेप इत्यत्राह—**इतरथेति** ।

परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते। तत्र प्रथमं तावत् कापिलमतं निरस्यते, वैदिकानुमतसत्कार्यवादाद्यर्थसङ्ग्रहेणैतस्य सत्पक्षनिक्षेपसंभावनाभ्रमहेतुत्वातिरेकात्। 'ईक्षतेर्नाशब्दम्' इत्यादिभिर्वैदिकवाक्यानामतत्परत्वमात्रमुक्तम्; अत्रैव तत्पक्षस्वरूपप्रतिक्षेपः क्रियत इति न पौनरुक्त्याशङ्का।

एषा हि साङ्ख्यानां दर्शनस्थितिः—

> "मूले प्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
> षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः"

इति तत्त्वसङ्ग्रहः। मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि लाघवप्रकाश-चलनोपष्टम्भन-गौरवावरणकार्याणि अत्यन्तातीन्द्रियाणि कार्यैकनिरूपणविवेकानि अन्यूनानतिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि द्रव्याणि। सा च सत्त्वरजस्तमसां साम्यरूपा प्रकृतिरेका स्वयमचेतना अनेकचेतनभोगापवर्गार्था नित्या सर्वगता सततविक्रिया न कस्यचिद्विकृतिः; अपि तु परमकारणमेव। महदाद्यास्तद्विकृतयोऽन्येषां च प्रकृतयः सप्त—महान् अहङ्कारः शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तत्राहङ्कारस्त्रिधा—वैकारिकस्तैजसो भूतादिश्च—क्रमात् सात्त्विको राजसस्तामसश्च। तत्र वैकारिकः सात्त्विक इन्द्रियादिः; भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः; तैजसो राजसस्तूभयोरनुग्राहकः। आकाशादीनि पञ्च महाभूतानि, श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि, वागादीनि पञ्च कर्मेन्द्रियाणि, मनः इति केवलविकाराः षोडश। पुरुषस्तु निष्परिणामत्वेन न कस्यचित्प्रकृतिः, न कस्यचिद्विकृतिः। तत एव निर्धर्मकश्चैतन्यमात्रवपुर्निष्क्रियः सर्वगतः प्रतिशरीरं भिन्नश्च। निर्विकारत्वान्निष्क्रियत्वाच्च तस्य कर्तृत्वं भोक्तृत्वं च न संभवति।

---

कापिलमतनिरासप्राथम्यहेतुमाह **तत्रेति**। **सत्कार्यवादादीति**। आदिशब्देन चतुर्विंशतितत्त्वस्वीकारो विवक्षितः। पौनरुक्त्यमाशङ्क्य निराकरोति **ईक्षतेरिति**। किं ब्रह्मकारणवाद एकान्ततः श्रद्धेयः, उत नेति। तदर्थं प्रधानं जगत्कारणम्, नेति। किं प्रधानस्य पुरुषसंनिधानात् पङ्गुसंनिधानादन्धस्येव प्रवृत्तिः संभवति, नेति। किमन्धस्य पङ्गुसंनिधानात् मार्गावलोकनव्यापारवत् पुरुषसंनिधानात् तच्छायापत्त्या वा ज्ञातृत्वं संभवति, नेति। यदा ज्ञातृत्वसंभवः, तदा प्रवृत्तिसंभवात् प्रधानकारणत्वमुपपन्नमिति नैकान्ततो ब्रह्मकारणवादः श्रद्धेयः। यदा ज्ञातृत्वासंभवः, तदा प्रवृत्त्यसंभवात् प्रधानकारणवादानुपपत्तेर्ब्रह्मकारणवाद एकान्ततः श्रद्धेय इति सिध्यति। **एषेत्यादि**। तत्त्वसङ्ग्रहश्लोकं व्याचष्टे—**मूलप्रकृतिर्नामेत्यादिना**। **उपष्टम्भनम्**— धारणम्। **अत्यन्तातीन्द्रियाणि**—नित्यानुमेयानीत्यर्थः। **समतामुपेतानीत्युक्ते** केनचिदाकारेण साम्यं स्यादिति तद्व्यावृत्त्यर्थं **सम**शब्दव्याख्यानाय **अन्यूनानतिरेकाणीत्युक्तम्**। सत्त्वरजस्तमस्समूहः प्रकृतिरित्यर्थः। **विकृतिः** कार्यम्। **महदाद्या** इति। स्वकारणापेक्षया विकृतयः, स्वकार्यापेक्षया प्रकृतय इत्यर्थः। **षोडशकश्च विकार** इत्यत्र चः एवकारार्थः; षोडशको विकार एवेत्यर्थः। **न प्रकृति**रित्यादिश्लोकखण्डं व्याचष्टे **पुरुषस्त्विति**। **निर्धर्मकः**—ज्ञातृत्वरहितः। तद्ध्यन्तःकरणस्येति तन्मतम्। तर्हि

एवम्भूतेऽपि तत्त्वे मूढाः प्रकृतिपुरुषसंनिधिमात्रेण पुरुषस्य चैतन्यं प्रकृतौ अध्यस्य प्रकृतेश्च कर्तृत्वं स्फटिकमणाविव जपाकुसुमस्यारुणिमानं पुरुषेऽध्यस्य, अहं कर्ता भोक्तेति मन्यन्ते। एवमज्ञानाद्भोगः, तत्त्वज्ञानाच्चापवर्गः।

तदेतत् प्रत्यक्षानुमानागमैः साधयन्ति। तत्र प्रत्यक्षसिद्धेषु पदार्थेषु नातीव विवादपदमस्ति। आगमोऽपि कपिलादिसर्वज्ञज्ञानमूल इति, सोऽपि प्रथमे काण्डे प्रमाणलक्षणे निरस्तप्रायः। यदिदं प्रधानमेव जगत्कारणमित्यनुमानम्, तन्निरसनेन तन्मतं सर्वं निरस्तं भवतीति तदेव निरस्यते।

ते चैवं वर्णयन्ति—कृत्स्नस्य जगतः एकमूलत्वमवश्याभ्युपगमनीयम्; अनेकेभ्यः कार्योत्पत्त्यभ्युपगमे कारणानवस्थानात्। तन्तुप्रभृतयो ह्यवयवाः स्वांशभूतैः षड्भिः पार्श्वैः परस्परं संयुज्यमाना अवयविनमुत्पादयन्ति, ते च तन्त्वादयः स्वावयवैस्तथाभूतैरुत्पाद्यन्ते, ते च तथाभूतैः स्वावयवैरिति परमाणुभिरपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानैरेव स्वकार्योत्पादनमभ्युपेतव्यम्; अन्यथा प्रथिमानुपपत्तेः। परमाणवोऽप्यंशित्वेन स्वांशैस्तथैवोत्पाद्यन्ते, ते च स्वांशैरिति न क्वचित् कारणव्यवस्थितिः। अतः कारणव्यवस्थासिद्ध्यर्थमेकं द्रव्यं विविधविचित्रपरिणामशक्तियुक्तं स्वयमप्रच्युतस्वरूपमेव महदाद्यनन्तावस्थाश्रयः कारणमाश्रयणीयम्। तच्चैकं कारणं गुणत्रयसाम्यरूपं प्रधानमिति तत्कल्पने हेतून् उपन्यस्यन्ति—

“ भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य॥ कारणमस्त्यव्यक्तम्” इति।

अयमर्थः—विश्वरूपमेव वैश्वरूप्यम्; विचित्रसंनिवेशं तनुभुवनादि कृत्स्नं जगत्। तच्च जगत् विचित्रसंनिवेशत्वेन कार्यभूतं तत्सरूपाव्यक्तकारणकम्. कुतः? कार्यत्वात्। कार्यस्य हि सर्वस्य तत्सरूपात् कारणविशेषात् विभागस्तस्मिन्नेवाविभागश्च दृश्यते; यथा घटमकुटादेः कार्यस्य तत्सरूपात् मृत्सुवर्णादेः कारणाद्विभागः तस्मिन्नेव चाविभागः। अतो विश्वरूपस्य

---

भोगमोक्षौ न स्यातामित्यत्राह **एवम्भूतेऽपी**ति। **तत्त्वम्** अर्थस्थितिः। **तदेत**दित्यादि। **नातीव विवादपदमस्ती**ति। सत्कार्यवादसमवायानभ्युपगमादिभिर्न विवाद इत्यर्थः। अभिव्यक्त्यवस्थावैषम्यादिकमभिप्रेत्य **नातीवे**त्युक्तम्। **निरस्तप्राय** इति। आगमः किं कपिलप्रोक्तः, उत वेदः? तत्र वेदस्य प्रधानादिपरत्वव्यावृत्तिः प्रथमाध्याये दर्शिता। कपिलागमस्य तु निरासो धर्मविचारारम्भे फलित इत्यर्थः। अनुमानमेकं स्थितम्; तस्मिन्निरस्ते सर्वं निरस्तं भवतीत्याह **यदिद**मिति। अनुमानव्युदासाय प्रथमं विषयशुद्धिं करोति **ते चैव**मित्यादिना। अनेकेभ्यः कार्योत्पत्तौ कारणानवस्थानमुपपादयति **तन्तुप्रभृतय** इति। असंयुक्तप्रदेशेन संयुक्तैरेव पृथ्व्यादिकार्योत्पादनं दृश्यते। यद्यसंयुक्तप्रदेशभेदमनपेक्ष्यैकत्र सर्वे संयुज्यन्ते, तर्ह्येकस्मात्परमाणोरनतिरिक्तप्रदेशतया पृथ्व्यादिकार्यं नोत्पद्यते॥ प्रदेशभेदः परमाणोरस्तीति चेत्, सांशत्वात् तस्याप्यारम्भकापेक्षयाऽनवस्थेत्यर्थः। **अत** इति। एकस्मिन् कार्ये कृत्स्नस्य कारणस्य निरवशेषान्वयव्यावृत्त्यर्थमाह **स्वयमप्रच्युते**ति। एवं परमाणुव्यावृत्तिः सिद्धा। अथ ब्रह्मव्यावृत्त्यर्थमाह **तच्चैक**मिति। **भेदाना**मित्यादिश्लोकं व्याचष्टे **अयमर्थ** इति। **वैश्वरूप्य**पदं व्याचष्टे **विश्वरूप**मित्यादिना। **कारणकार्यविभागाद**विभागादित्येतद्व्याचष्टे **कार्यस्य ही**ति। व्याप्तिप्रदर्शनमित्यर्थः। व्याप्तिस्थलमाह **यथे**ति। पक्षधर्मताबलात् सिद्धमर्थमाह **अतो विश्वरूपस्ये**ति। कार्यं

जगतस्तत्स्वरूपात् प्रधानादुत्पत्तिः तस्मिन्नेव लयश्चेति प्रधानकारणकमेव जगत्।

गुणत्रयसाम्यरूपं प्रधानमेव जगत्स्वरूपं कारणम्; सत्त्वरजस्तमोमयसुखदुःखमोहात्मकत्वाज्जगतः। यथा मृदात्मनो घटस्य मृद्द्रव्यमेव कारणम्।

तदेव हि तदुत्पत्त्याख्यप्रवृत्तिशक्तिमत्, तथा दर्शनात्।

अव्यक्तस्य गुणसाम्यरूपस्य देशतः कालतश्चापरिमितस्यैव कारणत्वं भेदानाम्-महदहङ्कारतन्मात्रादीनां परिमितत्वादवगम्यते। महदादीनि च घटादिवत् परिमितानि कृत्स्नजगदुत्पत्तौ न प्रभवन्ति।

अतस्त्रिगुणं जगत् गुणत्रयसाम्यरूपप्रधानैककारणमिति निश्चीयते॥

अत्रोच्यते—रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च। अनुमीयत इत्यनुमानम्। न भवदुक्तं प्रधानं विचित्रजगद्रचनासमर्थम्, अचेतनत्वे सति तत्स्वभावाभिज्ञानधिष्ठितत्वात्; यदेवम्, तत् तथा, यथा रथप्रासादादिनिर्माणे केवलदार्वादिकम्। दार्वादेरचेतनस्य तज्ज्ञानधिष्ठितस्य कार्यारम्भानुपपत्तेर्दर्शनात्, तज्ज्ञाधिष्ठितस्य कार्यारम्भप्रवृत्तेर्दर्शनाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणमित्युक्तं भवति। चकारादन्वयस्यानैकान्त्यं समुच्चिनोति। न ह्यन्वितं शौक्ल्यगोत्वादि कारणत्वव्याप्तम्। न च वाच्यम्—मा भूदन्वितानामपि शौक्ल्यादिधर्माणां कारणत्वम्, द्रव्यस्य तु हेमादेः कार्येऽन्वितस्य कारणत्वव्याप्तिरस्त्येव; सत्त्वादीन्यपि द्रव्याणि कार्येऽन्वितानि कारणत्वव्याप्तानि—इति; यतः सत्त्वादयो द्रव्यधर्माः, न तु द्रव्यस्वरूपम्। सत्त्वादयो हि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूताः तत्स्वभावविशेषा एव; न तु मृद्धिरण्यादिवद् द्रव्यतया कार्यान्विता

---

सरूपकारणकमस्तु; तत् कथं प्रधानकारणत्वसिद्धिरिति शङ्कायां **समन्वया**दिति पदं व्याचष्टे **सत्त्वरजस्तमोमये**ति। शक्तितः प्रवृत्तेश्चेत्येतद्व्याचष्टे **तदेव ही**ति। सरूपत्वं महदादीनामप्यस्तीति तेषां कारणत्वशङ्कायां **भेदानां परिमाणा**दिति। एतद्व्याचष्टे **अव्यक्तस्ये**ति। निगमयति **अत** इति। जगत् विचित्रसन्निवेशत्वात् कार्यं रथादिवत्; जगत् स्वसमानरूपकारणकं कार्यत्वात्; यत् कार्यं तत्स्वसमानरूपकारणकं दृष्टम्; यथा घटादि इत्यनुमानशरीरम्। अत्र सत्त्वरजस्तमोमयसुखदुःखमोहानां कार्येऽन्वयदर्शनात् तदुत्पादनशक्तं सत्त्वरजस्तमोमयमेव कारणम्। तस्य परिमितत्वे कृत्स्नकारणत्वानुपपत्त्या तस्यापि कारणापेक्षयाऽनवस्थानाच्चापरिच्छिन्नं वस्तु कारणं भवतीति पक्षधर्मताबलात् सिद्धम्। यथा कार्यत्वात् सकर्तृकत्वेऽनुमीयमाने पक्षधर्मताबलादीश्वरसिद्धिः, तद्वत्। तत्र निमित्तम्, अत्रोपादानमिति विशेषः।

**अत्रोच्यत** इत्यादि। **अनुमान**शब्दस्यानुमितिपरत्वे, कस्येत्यपेक्षायां प्रधानस्येति धर्मिवाचिषष्ठ्यन्तपदाध्याहारप्रसङ्गात् तन्निरपेक्षनिर्वाहे संभवति तस्यैव न्याय्यत्वादाह-**अनुमीयत** इति। प्रत्यनुमानोपयोगिनीं व्याप्तिं शिक्षयति **न भवदुक्त**मित्यादिना। अपेक्षितान्वयव्यतिरेकौ दृष्टान्ते दर्शयन् सूत्रस्य वाक्यार्थमाह—**दार्वादे**रित्यादिना। प्रथमस्य चशब्दस्यार्थमाह-**चकारा**दिति। **कार्येऽन्वितस्य** मृदादेः कारणत्वं दृश्यते, तथा सत्त्वादिमयसुखदुःखादेः कार्येऽन्वयात् कार्ये सत्त्वाद्यन्वयः सिद्ध इति सत्त्वादीनां कारणत्वमिति ह्युक्तम्। तस्य शौक्ल्यादिष्वनैकान्त्यमित्यर्थः॥ कार्ये समन्वितद्रव्यत्वादिति चेत्—द्रव्यत्वमसिद्धमित्याह **माभूदि**त्यादिना। **सत्त्वादयो ही**ति। लघुत्वादिकार्यद्वारा सत्त्वादीनां सुखदुःखादि-

उपलभ्यन्ते । गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः ।

यच्च कारणव्यवस्थासिद्धये जगत एकमूलत्वमुक्तम्—तदपि सत्त्वादीनामनेकत्वान्नोपपद्यते । अत एव कारणव्यवस्था च न सिद्ध्यति । साम्यावस्थाः सत्त्वादय एव हि प्रधानमिति त्वन्मतम् । अतः कारणबहुत्वादनवस्था तदवस्थैव । न च तेषामपरिमितत्वेन व्यवस्थासिद्धिः । अपरिमितत्वे हि त्रयाणामपि सर्वगतत्वेन न्यूनाधिकभावाभावाद्वैषम्यासिद्धेः कार्यारम्भासंभवात् कार्यारम्भायैव परिमितत्वमवश्याश्रयणीयम् ॥ १ ॥

यत्र रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टम्, तद्व्यतिरिक्तं सर्वं पक्षीकृतमित्याह—

## पयोम्बुवच्चेत् तत्रापि ॥ २ ॥

यदुक्तं प्रधानस्य प्राज्ञानधिष्ठितस्य विचित्रजगद्रचनानुपपत्तिरिति—तन्न ; यतः पयोम्बुवत् प्रवृत्तिरुपपद्यते । पयसस्तावत् दधिभावेन परिणममानस्यानन्यापेक्षस्याऽऽद्यपरिस्पन्दप्रभृतिपरिणामपरम्परा स्वत एवोपपद्यते, यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नारिकेलतालचूतकपित्थनिम्बतिन्त्रिण्यादिविचित्ररसरूपेण परिणामप्रवृत्तिः स्वत एव दृश्यते—तथा प्रधानस्यापि परिणामस्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थायां सदृशपरिणामेनावस्थितस्य सर्गावस्थायां गुणवैषम्यनिमित्तविचित्रपरिणाम उपपद्यते । यथोक्तम्, "परिणामतः सलिलवत् प्रतिप्रतिगुणा-

---

हेतुत्वमिति मन्तव्यम् । **गुणा इत्येव चेति** । सत्त्वादीनां द्रव्यत्वस्याप्रामाणिकतया गुणशब्दस्यास्वारस्यमयुक्तमिति भावः । जगत् प्राज्ञानधिष्ठिताचेतनकारणकं न भवति, कार्यत्वात्, यत्कार्यं तत् स्वाभिज्ञानधिष्ठिताचेतनोपादानकं न भवति ; यथा घटादिकं चेतनाधिष्ठितकारणकं दृष्टम् । यत् प्राज्ञाधिष्ठिताचेतनोपादानकं न भवति, तत् कार्यमपि न भवति ; यथा नित्यं तुच्छं वा—इति प्रत्यनुमानशरीरम् । यद्वा नात्र प्रत्यनुमानं विवक्षितम् ; ईश्वरानुमान इव विशेषविरोधो विवक्षितः । अचेतनत्वं प्राज्ञाधिष्ठितत्वं साधयेदिति तदुपयोगिनी व्याप्तिर्दर्शिता **यच्चेति** । सत्त्वादीनामनेकत्वादेकमूलत्वं नास्तीत्यर्थः । **अत एवेति** । अनेकत्वादेव कारणव्यवस्था च नास्तीत्यर्थः। अनेकत्वाभ्युपगमं दर्शयति **साम्यावस्था** इति । ततः किमित्यत्राह **अत** इति । बहूनां कारणानां विषमावस्थत्वेनैव कारणत्वदर्शनात् परिमितानामेव वैषम्यदर्शनाच्च विषमावस्थानां परिमितानां पार्श्वविशेषैः संयुक्तानामेव पृथुकार्यारम्भकत्वं स्यात्, तेषामपि विषमत्वात् परिमितत्वाच्च कार्यत्वात् कारणान्तरापेक्षत्वं स्यात्, तेषामपि तस्यारम्भाय विषमत्वात् परिमितत्वाच्च सकारणत्वमित्यनवस्थेत्यर्थः । अपरिमितत्वान्नानवस्थेत्यत्राह **अपरिमितत्वे हीति** । **कार्यारम्भायैव परिमितत्वमवश्याश्रयणीय**मिति । कार्यारम्भसिद्ध्यर्थवैषम्यसिद्ध्यर्थं परिमितत्वमाश्रयणीयम् । तथा सति तेषामपि सकारणत्वमित्यनवस्थेत्यर्थः ॥

उत्तरसूत्रमवतारयति **यत्रेति** । क्षीरादिदृष्टान्तेन प्राज्ञानधिष्ठितत्वं साधयाम इति चेत्—तत् **पक्षीकृतम्**—तत्रापि प्राज्ञाधिष्ठितत्वं सिषाधयिषितमित्यर्थः । **पयोम्बुवच्चेत्तत्रापि** । **आद्यपरिस्पन्देति** । चक्रभ्रमपरिणामादिव्यावृत्त्यर्थमाद्यशब्दः । **परिस्पन्द**शब्देनान्यथाभावोद्योगो विवक्षितः ; न तु चलनम् । **यथोक्तमिति** । **प्रतिप्रतीति** । वस्तुषु प्रत्येकंगुणानामङ्गाङ्गिभावेनावस्थानरूपवैषम्यात् सलिलवत् स्वत एव परिणामात् जगत्प्रवृत्तिश्चेतननिरपेक्षोपपद्यत इत्यर्थः । रचनानुपपत्तेरिति पूर्वसूत्रनिर्देश-

श्रथविशेषात्" इति। तदेवमव्यक्तमनन्यापेक्षं प्रवर्तत इति चेत्—अत उत्तरम् तत्रापीति। यत् क्षीरजलादि दृष्टान्ततया निदर्शितम्, तत्रापि प्राज्ञानधिष्ठाने प्रवृत्तिर्नोपपद्यते। तदपि पूर्वत्र पक्षीकृतमित्यभिप्रायः। "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" इत्यत्र दृष्टपरिकरान्तररहितस्यापि स्वासाधारणपरिणाम उपपद्यत इत्येतावदुक्तम्; न प्राज्ञाधिष्ठितत्वं पराकृतम्, "योऽप्सु तिष्ठन्" इत्यादिश्रुतेः॥ २॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २-२-३ ॥

इतश्च। सत्यसङ्कल्पेश्वराधिष्ठानानपेक्षपरिणामित्वे सर्गव्यतिरेकेण—प्रतिसर्गावस्थयाऽनवस्थितिप्रसङ्गाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणम्। प्राज्ञाधिष्ठितत्वे तस्य सत्यसङ्कल्पत्वेन सर्गप्रतिसर्गविचित्रसृष्टिव्यवस्थासिद्धिः। न च वाच्यम्—प्राज्ञाधिष्ठितत्वेऽपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावात् विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोऽयं दोष इति; परिपूर्णस्यापि लीलार्थप्रवृत्तिसंभवात्; सर्वज्ञस्य परिणामविशेषापन्नप्रकृतिदर्शनरूपसर्गप्रतिसर्गविशेषहेतोः संभवात्; क्षेत्रज्ञकर्मणामेव विषमसृष्टेर्व्य(ष्टिव्य)वस्थापकत्वाच्च॥

नन्वेवं क्षेत्रज्ञपुण्यापुण्यरूपकर्मभिरेव सर्वाः व्यवस्थाः सिद्ध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा। पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथातथा व्यवस्थया परिणंस्यते; यथा विषादिदूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुभूतः परिणामविशेषो

---

सामर्थ्यानुरोधादिहाप्यनुपपत्तेरित्यध्याहार उपपन्न इत्यभिप्रायेण **नोपपद्यत** इत्युक्तम्। विरोधमाशङ्क्य परिहरति **उपसंहारेति**। शरीरव्यतिरिक्तदण्डचक्रादिस्थानीयाचिद्रूपपरिकरान्तरनैरपेक्ष्यमुक्तमित्यविरोध इत्यर्थः॥

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** ॥ **इतश्चे**ति वाक्यभेदः। **व्यतिरेक**शब्दं व्याचष्टे **सर्गे**ति। **प्रतिसर्गावस्थयाऽनवस्थितिप्रसङ्गाच्चे**ति। प्रतिसर्गावस्थोपलक्षितावस्थानाभावप्रसङ्गाच्चेत्यर्थः। **न चे**त्यादि। **अवाप्तसमस्तकामस्य**। अब्भक्ष इतिवत् अवधारणगर्भमिदम्, अवाप्ता एव समस्ताः कामा येन सोऽवाप्तसमस्तकामः। अवाप्तव्यं नास्तीत्यर्थः। कुत इत्यत्राह **परिपूर्णस्य**। गुणविभूतिभिः परिपूर्णत्वादवाप्तव्यं नास्तीत्यर्थः। विभूत्यादेरननुकूलत्वेऽप्य[1]वाप्तसमस्तकामत्वं नास्तीत्यत्राह—यद्वा तिष्ठन्तु गुणा विभूतयश्च; तथाऽपि स्वेनैवावाप्तसमस्तकामत्वमाह **अनवधिकातिशयानन्दस्ये**ति। **निरवद्यस्य** अकर्मवश्यस्य। **निरञ्जनस्य** अगुणवश्यस्य। सर्गस्थितिप्रलयाः रजःसत्त्वतमःकार्याः। गुणवश्यत्वं च कर्मवश्यस्य। अकर्मवश्यस्येश्वरस्य गुणवश्यत्वाभावात् गुणानुगुणेच्छया सर्गादिव्यापारो न संभवतीति भावः। **इति न च वाच्य**मित्यन्वयः। **सर्वज्ञस्ये**त्यादि। सर्गप्रतिसर्गव्यवस्थाहेतुरीश्वरेणानुसन्धीयमाना प्रकृतेः परिणामविशेषापत्तिः। न च तया स्वातन्त्र्यहानिः; प्रत्युत स्वातन्त्र्यपूर्तिरेव; परिणामविशेषापत्तौ सत्यामेव सर्गादिव्यापारस्य तत्सङ्कल्पायत्तत्वात्। यथासङ्कल्पमनुष्ठानं हि स्वातन्त्र्यमिति भावः। **नन्वित्यादि**। कालादिव्यवस्थायां दृष्टान्तमाह **यथे**ति। उष्णवर्जिते शीतवर्जिते

---

1. अपिशब्देन—गुणविभूत्यभावे इवेत्यर्थ उक्तः।

देशकालव्यवस्थया दृश्यते । अतः सर्गप्रतिसर्गव्यवस्था देवादिविषमसृष्टिः कैवल्यव्यवस्था च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यते इति ॥

अनभिज्ञो भवान् पुण्यापुण्यकर्मस्वरूपयो । पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये । शास्त्रं चानादिनिधनाविच्छिन्नपाठसंप्रदायानाघ्रातप्रमादादिदोषगन्धवेदाख्याक्षरराशिः । तच्च, 'परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये; तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे' इति वदति । तथाऽऽह द्रमिडाचार्यः, "फलसंबिभन्त्सया हि कर्मभिरात्मानं पिप्रीषन्ति । स प्रीतोऽलं फलायेति शास्त्रमर्यादा" इति । तथा च श्रुतिः, " इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति । तथा च भगवता स्वयमेवोक्तम्, "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति, "तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति च । स भगवान् पुरुषोत्तमोऽवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्यसङ्कल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः एतानि कर्माणि समीचीनानि, एतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय, तदुपादानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य, स्वशासनाववोधि शास्त्रं च प्रदर्श्य, तदुपसंहारार्थं चान्तरात्मतयाऽनुप्रविश्य,

---

वा वर्तमानस्य पथ्यापथ्यविभागो **देशव्यवस्था** । **कैवल्यव्यवस्था** मोक्षव्यवस्था । परिहरति **अनभिज्ञ** इत्यादिना । कपिलागमादिव्यावृत्त्यर्थमाह—**शास्त्रं चे**ति । ततः किमित्यत्राह **तच्चे**ति । शास्त्रज्ञैरेवमुक्तमित्याह **तथाऽऽहे**ति । **इष्टापूर्ते** श्रौतस्मार्तकर्मणी । बाहुविध्यं देवताफलादिभेदेन । **भुवनस्यनाभिः** । 'तद्यथा रथस्यारेषु नेमिरर्पिता' इत्यादिश्रुतिप्रक्रिययाऽन्तर्यामिरूपेण सर्वाधारभूत इत्यर्थः । **बिभर्ति**—आराधनतया स्वीकरोति । पापस्य तदपराधरूपत्वज्ञापनार्थं च भगवद्गीतावचनं दर्शयति **तथा चे**ति । 'तेषां सततयुक्तानाम्' इति वचनस्य वक्ष्यमाणत्वादत्र नोपात्तम् ॥ एभिर्वचनैः प्रस्तुतचोद्यस्य किमुक्तं भवति ? दयालुः सन् संसारिणोऽहितरूपकर्मणि कथं प्रवर्तयति ? कर्मसापेक्षनिग्रहानुग्रहत्वे स्वातन्त्र्यहानिः; तस्य स्वतन्त्रत्वे जीवानां फलान्वयानुपपत्तिरित्यत्राह **स भगवा**निति । निर्दोषत्वं मङ्गलगुणत्वं च **भगव**च्छब्दार्थः । ताभ्यां वैलक्षण्यं **पुरुषोत्तम**शब्दार्थः । विविधफलप्रदान-सर्गाद्युपयोगिविशेषणानि **सर्वज्ञ**त्वादीनि । सर्गादेरायासरूपत्वान्न लीलात्वमित्यत्राह **स्वमाहात्म्ये**ति । सर्वं तदिच्छाधीनं चेत्, ज्योतिष्टोमादेः पुण्यत्वं ब्रह्महत्यादेः पापत्वं च विपर्ययेण स्यातामित्यत्राह **एतानि कर्माणी**त्यादि । अनादिपुण्यपापव्यवस्था च तदीयानादिस्वातन्त्र्यनिबन्धनेत्यर्थः । सर्वप्रवृत्तेस्तदिच्छाधीनत्वात् क्षेत्रज्ञानां सुखादिभोक्तृत्वं न स्यात्; तस्य निर्दयत्वादिप्रसङ्गश्चेत्यत्राह **तदुपादानोचिते**ति । यथा पितृभ्यामुत्पाद्य वर्धितः शिक्षितोऽर्थगृहक्षेत्रदानादिनोपकृतः पुत्रः पितृदत्तैरेवार्थादिभिर्यज्ञादिकं वा करोति विषयचापलं वाऽनुवर्तते ; न तत्र पित्रोर्दोषः ; तदधीनवैभवत्वं च पुत्रस्य न हीयते—तद्वदिति भावः । [1]**सामान्येन प्रदिश्ये**ति (?) । देहेन्द्रियादिकं सर्वेषां ददाति ; न तु कस्यचित् दत्वा कस्यचिन्न ददाति । देहेन्द्रियादिवैषम्यं तु कर्मकृतमित्यभिप्रेत्याह **देहेन्द्रियादिक**मित्यादि । **[सामान्येनप्रदिश्येति ?]** परमात्मनः शक्तस्याप्यनिवारणं दोष इति चेन्न । उपेक्षकत्वं प्रयोजयितृत्व-

---

1. अत्रेदं न स्यात् ; किंतूपरि ।

**अनुमन्तृतया च नियच्छँस्तिष्ठति। [ते] क्षेत्रज्ञास्तु तदाहितशक्तयःतत्प्रदिष्टकरणकलेवरादिकाः तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते। ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममौक्षैर्वर्धयते; शासनातिवर्तनं च तद्विपर्ययैर्योजयति। अतः स्वातन्त्र्यादिवैकल्यचोद्यानि नावकाशं लभन्ते। दया हि नाम स्वार्थनिरपेक्षा परदुःखासहिष्णुता।**

---

मनुमन्तृत्वं चेति त्रयमस्ति। तत्र प्रयोजयितृत्वमप्रवृत्तस्य प्रवर्तकत्वम्। तच्चाऽऽज्ञापयितृत्वमर्थयितृत्वमुपदेष्टृत्व चेति त्रिधा। अनुमन्तृत्वं प्रवृत्तस्य प्रवर्तकत्वम्। उपेक्षकत्वम्—औदासीन्यम्। तत्र भगवतः पुण्यपापयोः प्रयोजयितृत्वं नास्ति। प्रथममुपेक्षमाण एवास्ते। पश्चादनुमन्तृत्वमस्त्येव। अभिमते प्रवृत्तं केनचिद्विघ्नेन निवृत्तमविघ्नं प्रवर्तयति; पश्चात् फलं च ददाति। आज्ञातिलङ्घनप्रवृत्तत्वेन कुपितत्वात् भगवान् अनुमन्ता भवति। अनुमतिः फलदानमुभयमपि दण्डप्रकार एव। तथा च दृश्यन्ते (ते?)— राजानो हि स्वशासनातिवृत्ति(त्त)प्रवृत्तं(त्तिं) ज्ञात्वा कोपात् तथा करोत्वित्यनुमन्यन्ते। अनुमतिश्च कोपकृतो दण्डविशेष एव। अतीवानुकूल्यप्रातिकूल्यप्रवृत्तयोरुत्तरोत्तरहिताहिताकर्मसु प्रयोजयिता च भवति भगवान्॥ अहितप्रवृत्तविषये उपेक्षकत्वेऽनुमन्तृत्वे प्रयोजयितृत्वे च तस्य निर्दयत्वादिप्रसङ्ग इति चेत्— ततः किम्। दया चेत्, गुणः; निग्रहश्चेत्, दोषः—इति न नियमोऽस्ति; लोकेऽस्थानदयायाः स्थान-निग्रहस्य च गुणत्वदोषत्वदर्शनाभावात्॥ राजादीनां दण्ड्यादण्डनादेर्दोषत्वं शास्त्रवश्यक्षेत्रज्ञत्वप्रयुक्तमिति चेत्—तर्हि तेषामनुग्रहादेर्गुणत्वमपि क्षेत्रज्ञत्वप्रयुक्तं स्यात्; तत्रैव निग्रहानुग्रहादेर्दोषत्वगुणत्वदर्शनात्॥ अतो निर्दयत्वहेतुरनैकान्तिकः॥ शक्तस्यापीश्वरस्य कथमुपेक्षणम्?॥ नोपेक्षणम्; शास्त्र-प्रवर्तनमुखेन सामान्येनाहितप्रवृत्तिनिवारणस्य कृतत्वात्। प्रवृत्तिकाले तु विशेषतो निवारकत्वाभाव-रूपोपेक्षकत्वं स्वातन्त्र्यात्॥ तच्च स्वातन्त्र्यं दोष इति चेत्—तत्र किं प्रमाणम्। ईश्वरस्याप्रत्यक्षत्वात् न तत् प्रमाणम्। यद्यनुमानम्, तत्रेदं वक्तव्यम्—किमीश्वराख्यं धर्मिणं शास्त्रैकसमधिगम्यमभ्युपगम्य तत्स्वातन्त्र्यस्य दोषत्वमनुमीयते, उतानभ्युपगम्य? अनभ्युपगमे, हेतोराश्रयासिद्धिः। अभ्युपगमे, धर्मि-ग्राहकप्रमाणेन शास्त्रेण तस्य गुणत्वेन प्रतिपन्नत्वात् कालात्ययापदिष्टत्वमिति। एतदभिप्रेत्याह **अनुमन्तृ-तया च नियच्छँस्तिष्ठती**ति। **क्षेत्रज्ञास्त्वि**ति अनुमन्तृतया नियन्तृत्वात् धारकत्वात् सामान्येन देहेन्द्रि-यादिप्रदत्वाच्च सर्वं तदधीनमित्यभिप्रायेण **तदाहितशक्तय** इत्यादिकं विशेषणमुक्तम्। पुण्यापुण्ययोः प्रवृत्तस्य प्रवृत्तिस्तदनुगुणेच्छया। तदनुगुणज्ञानं च क्षेत्रज्ञाधीनमेव; भगवत उपेक्षकत्वात्। तत्रोपेक्षकत्व-मपि स्वातन्त्र्यविशेष एवेत्यभिप्रायेणाह **स्वयमेव स्वेच्छानुगुण्येने**ति। कर्मानुगुणफलप्रदत्वे स्वातन्त्र्य-वैकल्यम्; नो चेत्, निर्दयत्वादिप्रसङ्ग इत्यत्राह **अत** इति। **स्वातन्त्र्यादिवैकल्य**शब्देन दयावैकल्यं सर्वेषु समत्ववैकल्यं जीवानां फलान्वयराहित्यं च विवक्षितम्। एतत्कर्मकारिणे एतत्फलं दास्यामीति तस्य सङ्कल्पः। तत्र यथासङ्कल्पं कुर्वतस्तस्य स्वातन्त्र्यपौष्कल्यमेवेति भावः। अपराधिनं दण्डयतोऽ-नपराधिनमदण्डयतश्च राज्ञो न हि स्वातन्त्र्यवैकल्यम्; तद्वदिति। तर्हि निर्दयत्वमिति शङ्कायां दयास्वरूपं शिक्षयति **दया ही**ति। उपजीविनामुपजीव्यापदि यद्दुःखासहिष्णुत्वम्, तद्व्यावृत्त्यर्थमाह **स्वार्थनिर-**

सा च स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते ; प्रत्युतापुंस्त्वमेवावहति । तन्निग्रह एव तत्र गुणः ; अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात् । स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेणाऽनाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते । यथोक्तम्, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति ।

अतः प्राज्ञानधिष्ठितं प्रधानं न कारणम् ॥ ३ ॥

अथ स्यात्—यद्यपि प्राज्ञानधिष्ठितायाः प्रकृतेः परिस्पन्दप्रवृत्तिरपि न संभवतीत्युक्तम्, तथाऽप्यनपेक्षाया एव परिणामप्रवृत्तिः संभवति, तथा दर्शनात् ; धेन्वादिनोपयुक्तं हि तृणोदकादि स्वयमेव क्षीराद्याकारेण परिणममानं दृश्यते । अतः प्रकृतिरपि स्वयमेव जगदाकारेण परिणंस्यते—इति । तत्राह—

## अन्यत्राभावाच्च न तृणादिवत् ॥ २-२-४ ॥

नैतदुपपद्यते ; तृणादेः प्राज्ञानधिष्ठितस्य परिणामाभावात् दृष्टान्तासिद्धेः ॥ कथमसिद्धिः ? अन्यत्राभावात् । यदि हि तृणोदकादिकमनडुदाद्युपयुक्तं प्रहीणं वा क्षीराकारेण पर्यणंस्यत, ततः प्राज्ञानधिष्ठितमेव परिणमत इति वक्तुमशक्ष्यत । न चैतदस्ति । अतो धेन्वाद्युपयुक्तं प्राज्ञ एव क्षीरीकरोति । 'पयोम्बुवच्चेत्तत्रापि' इत्युक्तमेवात्र प्रपञ्चितं तत्रैव व्यभिचारप्रदर्शनाय ॥ ४ ॥

## पुरुषाश्मवदिति चेत् तथाऽपि ॥ २-२-५ ॥

अथोच्येत—यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः, प्रधानमपि दृक्छक्तिविकलम्—तथाऽपि पुरुषसंनिधानादचेतनं प्रधानं प्रवर्तते, तथा दर्शनात् ; गमनशक्तिविकलदृक्छक्तियुक्त-

---

पेक्षेति । तर्हि दयाया अनवकाशत्वप्रसङ्ग इत्यत्राह—**स्वशासनातिवृत्तीति** । **यथोक्तमिति** । **प्रीतिपूर्वकं ददामी**त्यन्वयः । "सततयुक्ताना"मित्यत्र आशंसार्थेन 'आशंसायां क्तः' इति सूत्रविहितेन क्तेनोपासकप्रीतेरुक्तत्वात् । तस्याशंसार्थत्वमविवक्षितं चेत्, **सततयुक्तानां भजता**मिति पौनरुक्त्यम् । अनपेक्षितकथनमपेक्षिताकथनं च स्याताम् । तस्मादयमर्थः ।

सूत्रार्थमुपसंहरति—**अत इति** । ईश्वरस्य स्वातन्त्र्यवैकल्यादिप्रसङ्गाभावेन कर्मणां तदाराधनरूपतयैव फलप्रदत्वात् सर्गादिव्यवस्थासिद्ध्यर्थं ब्रह्मैककारणत्वं सिद्धमित्यर्थः ॥

उत्तरसूत्रशङ्कामाह—**अथ स्यादि**ति । **धेन्वादिने**ति । केवलदार्वादिव्यावृत्त्यर्थं चित्सन्निधिमात्रमेवोपगन्तव्यम् ; न तु सङ्कल्पविशेषवत्पुरुषाधिष्ठितत्वम् ; गवि सुप्तायामपि तदुपयुक्ततृणादेः क्षीरादिभावदर्शनात् । न च तदपि पक्षीकार्यम् ; तावता कार्ये संभवति अधिककल्पनायोगादिति भावः । केवलचिन्मात्रस्य परिणामे दृष्टान्तत्वं विवक्षितञ्चेत्, तत् दूषितं **प्रहीणं वे**ति । चित्सन्निधिमात्रेण परिणामो दूषितः **अनडुदाद्युपयुक्तमि**ति । सङ्कल्पविशेषान्वितचेतनविशेषाधिष्ठानेन परिणामित्वं तु परस्यानिष्टमित्यभिप्रेतं **प्राज्ञानधिष्ठितमि**ति । एवं विकल्पत्रयमत्राभिप्रेतम् ॥ अदृष्टविशेषवदात्मसंयोगात् धेनूपयुक्ततृणादेः क्षीरभाव इति चेन्न ; अदृष्टस्याप्यनडुदाद्युपयुक्तप्रहीणतृणतुल्ययोगक्षेमतया तस्यापि कार्यकरत्वे प्राज्ञाधिष्ठानमपेक्षितमिति । **एतत्सर्व**मधिकशङ्कापरिहाररूपमर्थजातमिहोपपादितं सूत्रप्रयोजनमाह **प्रपञ्चित**मिति । उक्तशङ्काविशेषपरिहाररूपं प्रपञ्चनम् । **तत्रैव**—पयोदृष्टान्त एवेत्यर्थः॥

पङ्गुसंनिधानात् तच्चैतन्योपकृतो दृक्छक्तिविकलः प्रवृत्तिशक्तोऽन्धः प्रवर्तते ; अयस्कान्ताश्मसंनिधानाच्चायः प्रवर्तते ; एवं प्रकृतिपुरुषसंयोगकृतो जगत्सर्गः प्रवर्तते । यथोक्तम्, "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति । पुरुषस्य प्रधानोपभोगार्थं कैवल्यार्थं च पुरुषसंनिधानात् प्रधानं सर्गादौ प्रवर्तत इत्यर्थः । अत्रोत्तरम्— तथापीति । एवमपि प्रधानस्य प्रवृत्त्यसंभवस्तदवस्थ एव । पङ्गोर्गमनशक्तिविकलस्यापि मार्गदर्शनतदुपदेशादयः कादाचित्का विशेषाः सहस्रशः सन्ति । अन्धोऽपि चेतनः सन् तदुपदेशाद्यवगमेन प्रवर्तते । तथाऽयस्कान्तमणेरपि अयःसमीपागमनादयः सन्ति । पुरुषस्य तु निष्क्रियस्य न तादृशविकाराः संभवन्ति । संनिधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गो नित्यमुक्तत्वेन बन्धाभावोऽपवर्गाभावश्च ॥ ५ ॥

अङ्गित्वानुपपत्तेश्च ॥ २-२-६ ॥

गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः प्रतिप्रतिगुणाश्रयविशेषादिति वदद्भिर्भवद्भिरभ्युपगम्यते । प्रतिसर्गावस्थायां तु साम्यावस्थानां सत्त्वरजस्तमसामन्योन्याधिक्यन्यूनत्वाभावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्ग उपपद्यते । तदाऽपि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः । अतश्च न प्राज्ञानधिष्ठितं प्रधानं कारणम् ॥ ६ ॥

अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २-२-७ ॥

दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगात् त एव दोषाः प्रादुःष्युः । अतो न कथञ्चिदप्यनुमानेन प्रधानसिद्धिः ॥ ७ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ २-२-८ ॥

अनुमानेन प्रधानसिद्ध्यभ्युपगमेऽपि प्रधानेन प्रयोजनाभावान्न तद[प्य]नुमातव्यम् । "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य" इति प्रधानस्य प्रयोजनं पुरुषभोगापवर्गावभिमतौ । तौ च न संभवतः । पुरुषस्य चैतन्यमात्रवपुषो निष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोगः तद्वियोगरूपोऽपवर्गश्च न संभवति । एवंरूपस्यैव प्रकृतिसंनिधानात्

---

**पुरुषाश्मवदिति चेत्—तथाऽपि** ॥ उदाहृतामार्यां व्याचष्टे—**पुरुषस्येति** । **उपभोगशब्देन दर्शनशब्दो** व्याख्यातः । **तथापीति** सूत्रखण्डं व्याचष्टे **एवमपीति** । **प्रवृत्त्यसंभवस्तदवस्थ** इति पूर्वापरसूत्रस्थानुपपत्तिशब्दानुरोधेनाध्याहारः कृतः । नित्यनिर्विकारस्य पुरुषस्य पङ्गोर्मार्गदर्शनोपदेशादिवत् न कादाचित्कविशेषोऽस्ति; अन्धस्य तदुपदेशावगतिवत् न प्रकृतेर्विशेषोऽस्ति । अयस्कान्तस्य समीपागमनादिवत् पुरुषस्य न विकारसंभवः ॥ विभुत्वात् समीपागमनापेक्षा न चेत्—नित्यसर्गप्रसङ्ग इत्यर्थः ॥

**अङ्गित्वानुपपत्तेश्च** ॥ एवं परोक्तानुमानस्य प्राज्ञाधिष्ठितत्वप्रसङ्गमुखेन विषमावस्थत्वप्रसङ्गमुखेन च विशेषविरोध उक्तः ॥

अनुमानान्तरेऽप्युक्तदूषणमतिदिशति—**अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्** ॥ ज्ञातृत्वे सति हि सङ्कल्पादधिष्ठात्रन्तरनिरपेक्षप्रवृत्त्युपपत्तिः । तच्च नास्ति । तस्मान्नित्यसर्गादिप्रसङ्ग इत्यर्थः । अचेतनत्वादेव प्रज्ञाधिष्ठितत्वं प्रसजेदिति भावः । इदं विषमावस्थत्वप्रसङ्गस्यापि प्रदर्शनार्थमुक्तम् ।

**अभ्युपगमेऽप्यर्थाभावात्** ॥ कस्याभ्युपगम इत्यपेक्षायां पूर्वसूत्रप्रत्यासत्त्याऽनुमितिरेवार्थतो बुद्धिस्थेत्यभिप्रायेणाह **अनुमानेनेति** । प्रवृत्ति(ते?) स्त्वनेकसूत्रव्यवहितत्वान्न साऽनुबन्धमर्हतीति भावः॥

तत्परिणामविशेषसुखदुःखदर्शनरूपभोगसंभावनायाम्, प्रकृतिसन्निधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति ॥ ८ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ २-२-९ ॥

विप्रतिषिद्धं चेदं साङ्ख्यानां दर्शनम्। तथाहि—

प्रकृतेः परार्थत्वेन दृश्यत्वेन भोग्यत्वेन च प्रकृतेर्भोक्तारमधिष्ठातारं द्रष्टारं साक्षिणं च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य कैवल्यमपि प्राप्यं वदन्त एव—तस्य नित्यनिर्विकारचैतन्यमात्रस्वरूपतया अकर्तृत्वं कैवल्यं च स्वरूपमेवाहुः, तत एव बन्धमोक्षसाधनानुष्ठानं मोक्षं च प्रकृतेरेवेत्याहुः; एवम्भूतनिर्विकारोदासीनपुरुषसंनिधानात् प्रकृतेरितरेतराध्यासेन सर्गादिप्रवृत्तिं पुरुषभोगापवर्गार्थत्वं चाहुः, "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च। तस्माच्च[1] विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च" इति।

"पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इत्युक्त्वैवमाहुः, "तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः" इति। तथा, "तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः॥ पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति।

साक्षित्वद्रष्टृत्वभोक्तृत्वादयो नित्यनिर्विकारस्याकर्तुरुदासीनस्य कैवल्यैकस्वरूपस्य न संभवन्ति। एवंरूपस्य तस्याध्यासमूलो (लं) भ्रमोऽपि न संभवति; अध्यासभ्रमयोरपि विकारत्वात्। प्रकृतेश्च तौ न संभवतः। तयोश्चेतनधर्मत्वात्। अध्यासो हि नाम चेतनस्यान्यस्मिन्नन्यधर्मानुसंधानम्। स च चेतनधर्मो विकारश्च। न च पुरुषस्य प्रकृतिसंनिधिमात्रेणाध्यासादयः संभवन्ति, निर्विकारत्वादेव। संभवन्ति चेत्—नित्यं प्रसज्येरन्। संनिधेरकिञ्चित्करत्वं च, "न विलक्षणत्वात्" इत्यत्र प्रतिपादितम्॥ प्रकृतिरेव संसरति बध्यते मुच्यते चेत्—कथं नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते? वदन्ति हि, "नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः। गुणवत्यगुणस्य सतः तस्यार्थमपार्थकं चरति" इति।

तथा—प्रकृतिर्येन पुरुषेण यथास्वभावा दृष्टा, तस्मात्पुरुषात् तदानीमेव निवर्तत इति चाहुः, "रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात्। पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते

---

नित्यनिर्विकारस्यापि भोगापवर्गाभ्युपगमशङ्कायामनन्तरसूत्रम्—**विप्रतिषेधाच्चासमञ्जसम्** ॥ परार्थत्वप्रतियोगित्वेनाह—**अधिष्ठातारमिति** । **अधिष्ठाता**—स्वतन्त्रः, **साक्षी** स्वरूपेणानुसन्धाता; इन्द्रियादिभिर्**द्रष्टा** । उक्तार्थविषयं तद्ग्रन्थमाह—**सङ्घातेति** । **त्रिगुणादिविपर्ययात्** । **आदिशब्दः** कार्यपरः । त्रिगुणतत्कार्यं जडम्। जडस्याधिष्ठातृत्वायोगात् तदन्योऽधिष्ठातेत्यर्थः । **अधिष्ठानादिति** । अधिष्ठेयात् त्रिगुणादेराधिष्ठातुर्विलक्षणत्वात्; कर्मकर्तृविरोधादित्यर्थः । **कैवल्यार्थप्रवृत्तेश्च** । न हि त्याज्यमेव त्यागकर्तेत्यर्थः । उक्तार्थानां विप्रतिषेधं दर्शयति साक्षित्वेति। **चेतनधर्मो विकारश्चेति** । चेतनधर्मत्वान्न प्रधानस्य संभवति, विकाररूपत्वान्नात्मनः संभवतीत्यर्थः । प्रथमभ्रमोऽध्यासः; तन्मूला अन्ये

---

1 पूर्वोक्तात् त्रिगुणप्रकृतितत्कार्यापेक्षया वैलक्षण्यात्।

प्रकृतिः॥ प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या दृष्टाऽस्मीऽति पुनर्न दर्शन-मुपैति पुरुषस्य" इति। तदप्यसङ्गतम्। पुरुषो हि नित्यमुक्तत्वान्निर्विकारत्वाच्च तां कदाचिदपि पश्यति; नाध्यस्यति च। स्वयं च स्वात्मानं न पश्यति, अचेतनत्वात्। पुरुषस्य स्वात्मदर्शनं स्वदर्शनमिति नाध्यस्यति च; स्वयमचेतनत्वात्। पुरुषस्य च दर्शनरूपविकारासंभवात्॥ अथ संनिधिमात्रमेव दर्शनमित्युच्यते—संनिधेर्नित्यत्वेन नित्यदर्शनप्रसङ्ग इत्युक्तम्। स्वरूपातिरिक्त-कादाचित्कसंनिधिरपि नित्यनिर्विकारस्य नोपपद्यते। किञ्च—मोक्षहेतुस्तु स्वसंनिधानरूपमेव दर्शनं चेत्—बन्धहेतुरपि तदेवेति नित्यवद्बन्धो मोक्षश्च स्याताम्॥ अयथादर्शनं बन्धहेतुः, यथात्र-त्स्वरूपदर्शनं मोक्षहेतुरिति चेत्—उभयविधस्यापि दर्शनस्य संनिधानरूपतानतिरेकात् सदोभय-प्रसङ्ग एव। संनिधेरनित्यत्वे—तस्य हेतुरन्वेषणीयः, तस्यापीत्यनवस्था॥ अथैतद्दोषपरिजिहीर्षया स्वरूपसद्भाव एव संनिधिरिति, तदा स्वरूपस्य नित्यत्वेन नित्यवद्बन्धमोक्षौ। अत एवमादेर्वि-प्रतिषेधात् साङ्ख्यानां दर्शनमसमञ्जसम्।

येऽपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्रं ब्रह्म अविद्यासाक्षित्वेनापारमार्थिकबन्धमोक्ष-भागि(गी)ति वदन्ति-तेषामप्युक्तनीत्याऽविद्यासाक्षित्व-अध्यासाद्यसंभवादसामञ्जस्यमेव। इयांस्तु विशेषः—साङ्ख्याः जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थं पुरुषबहुत्वमिच्छन्ति; ते तु तदपि नेच्छन्तीति सुतरामसामञ्जस्यम्। यत्तु प्रकृतेः पारमार्थ्यापारमार्थ्यविभागेन वैषम्यमुक्तम्, तदयुक्तम्; पारमार्थिकत्वेऽप्यपारमार्थिकत्वेऽपि, नित्यनिर्विकारस्वप्रकाशैकरसचिन्मात्रस्य स्वव्य-तिरिक्तसाक्षित्वाद्यनुपपत्तेः। अपारमार्थिकत्वे तु, तस्य दृश्यत्वबाध्यत्वाभ्युपगमात् सुतराम-सङ्गतम्। औपाधिकभेदवादेऽपि उपाधिसंबन्धिनो ब्रह्मणोऽयमेव स्वभाव इत्युपाधिसम्बन्धाद्यनु-पपत्तेरसामञ्जस्यं पूर्वमेवोक्तम्॥ इति रचनानुपपत्त्यधिकरणम्॥

---

भ्रमशब्दवाच्याः। प्रकृतिदर्शनं पुरुषकर्तृकं स्वात्मकर्तृकं चानुपपन्नमित्याह—**पुरुषो ही**त्यादिना। सन्निधेः स्वरूपानतिरिक्तत्वे स्वरूपातिरिक्तत्वे च दूषणमाह—**अथे**त्यादिना।

अस्मिन् साङ्ख्यपक्षनिरासे मायावादिनामनवकाशत्वमाह **येऽपी**ति। निर्विकारस्याविद्यानुभवा-ध्यासायोगादित्यर्थः, अधिकं दूषणमाह—**इयांस्त्व**ति। **दृश्यत्वबाध्यत्वाभ्युपगमा**दिति। यत् अविद्या-विरोधि, तदेव तत्साक्षीति वचनमसङ्गतमित्यर्थः। यद्वा अविद्यानुभवरूपदर्शनं तद्बाधकदर्शनमपि विकारः, स तु निर्विकारस्य नोपपद्यते इत्यर्थः। **अयमेव स्वभाव** इति। नित्यनिर्विकारत्वनिर्दोषत्वादिः स्वभाव इत्यर्थः। हेयप्रत्यनीकत्वकल्याणैकतानत्वश्रुतिविरोधोऽभिप्रेतः।

**सर्वैरपि परैः, प्रवृत्तेश्चे**ति सूत्रान्तरं कृतम्। तत्र जगद्रचनासिद्ध्यर्था प्रकृतेराद्या गुणसाम्य-प्रच्युतिव्यापाररूपा प्रवृत्तिः। साऽपि प्रधानस्य स्वतन्त्रत्वेऽनुपपन्ना, मृदादिष्वदर्शनादिति **शङ्करभास्करा-भ्याम्**, रथशकटादिष्वदर्शनादिति **यादवमिश्रैश्च** व्याख्यातम्। तदयुक्तम्—चेतनाधिष्ठितस्यैवाचेतनस्य कार्यकरत्वदर्शनरूपयुक्तेर्भेदाभावात्, जगद्रचनानुरूपव्यापारस्य, तदर्थस्य आद्यव्यापारस्य च तुल्यन्याय-विषयतया तुल्यार्थानां विषयवाक्यानामिव सूत्रभेदप्रणयने प्रयोजनाभावाच्च। अतोऽन्वयव्यतिरेकरूपेणो-भयव्याप्तिप्रदर्शकमेकसूत्रम्। पयसो वत्सविवृद्धये प्रवृत्तिवत् अम्बुनो लोकोपकाराय स्पन्दनप्रवृत्तिवच्च प्रधानस्य स्वत एव पुरुषार्थानुगुणप्रवृत्तिरिति **'पयोम्बुव'**दित्यंशो व्याख्यातः। ततोऽपि दध्यादिपरिणामे

नारिकेलादिरसात्मना परिणामे च प्रवृत्तिवदिति व्याख्यानं युक्तम्; कारणावस्थस्य प्रधानस्य कार्यजगद्रूपेण परिणतौ चेतनाधिष्ठाननिरपेक्षत्वं वदता पूर्वपक्षिणा चेतनसंबन्धानपेक्षतया प्रतिपन्नपरिणामस्य प्रदर्शयितुं युक्तत्वात्। पुरुषार्थसिद्ध्यनुगुणत्वदूषणस्य **अभ्युपगमेऽप्यर्थाभावा**दिति वक्ष्यमाणतयाऽत्र तत्पृथगुक्तेर्विलक्षणत्वात्॥ कार्यं प्रति पुरुषस्य फलित्वमेव निमित्तत्वम्; अतो नाधिष्ठानापेक्षेति शङ्का च परिहर्तव्येति चेन्न—फलित्वस्य पुरुषसंनिधितुल्ययोगक्षेमतया, 'अन्यत्राभावाच्च न तृणादिवत्' इति न्यायेनार्थतः परिहृतत्वात्। पुरुषस्य फलित्वमात्रेण कार्यं प्रति निमित्तत्वेऽनडुदाद्युपयुक्तं तृणादिकमपि क्षीरीभवेदिति हि तर्कः समानः। अम्भसः स्यन्दने च निम्नभूम्यपेक्षाऽस्तीति परिहारश्च न साधीयान्; चेतनसापेक्षत्वापादने निम्नभूम्यपेक्षणस्यानुपयोगात्। 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' इति सूत्रेणास्य सूत्रस्य व्याहतिपरिहारश्च लोकदृष्टिशास्त्रदृष्टिभेदादित्युक्तम्। तस्मिन्नधिकरणे बाह्यनिमित्तनिरपेक्षतायां लोकदृष्ट्या दर्शितस्य दृष्टान्तस्यात्र प्रतिपन्नतया शास्त्रदृष्ट्या स्वपक्षेण साध्यवैकल्ये परिचोदिते निरुत्तरत्वापत्तेः तदयुक्तम्। अतो दण्डचक्रादिवदुपकरणान्तरनैरपेक्ष्यं तत्राभिप्रेतमित्येव परिहर्तव्यम्। 'अन्यत्राभावा(च्च) न तृणादिवत्' इत्यस्यानन्तरम्, 'अभ्युपगमेऽप्यर्थाभावात्' इति सूत्रं व्याख्यातम्। भाष्ये त्वन्त्यसूत्रात्पूर्वं निवेशितम्। तत्र हेतुर्वृत्त्यनुरोध इति ज्ञातव्यम्। अर्थासङ्गतिश्चान्यथा स्यात्। प्राज्ञस्यैव क्षीरीभावनिमित्तत्वेऽभिहिते, पक्षेपि चेतनान्वयः सुवच इति शङ्कायां परिहारपरं पुरुषाश्मवदिति सूत्रं सङ्गच्छते। अभ्युपगमेऽप्यर्थाभावादिति भोगापवर्गरूपप्रयोजनाभावात् दूषिते, पुरुषाश्मवदिति चेदिति पङ्ग्वन्धायस्कान्तलोहदृष्टान्तनिबन्धनशङ्कायाः कथं सङ्गतिः? प्रवृत्त्युपपत्तौ हि पङ्ग्वन्धादिदृष्टान्तः, न पुरुषार्थोपपत्तौ; अयस्कान्तलोहयोः प्रयोजनभाक्त्वाभावात्। व्याप्तिनिबन्धनकृत्स्नानुपपत्तिषूक्तासु च अभ्युपगमेन परिहारोक्तिर्घटते। एकं करणं, त्रीणि तानि; सप्तेन्द्रियाणि, तान्येकादश; महतस्तन्मात्रसर्गः, अहङ्कारात् इति विप्रतिषेधो दर्शितः **शाङ्करे**। अन्तर्भावानन्तर्भावाभ्यां विवक्षावशात्, सद्वारकाद्वारकभावाच्च तादृशविप्रतिषेधस्य सुपरिहरत्वात् भाष्ये तदनादरः। वेदान्तविरोधादिति **भास्करः**। असामञ्जस्यप्रतिज्ञानस्य परस्परव्याहतिनिबन्धनत्वौचित्यात् तद्वाचित्वस्वारस्याच्च भाष्ये तदनादरः। वेदान्तविरोधादिति विवक्षितं चेत्—आद्यसूत्रस्थप्रधानकारणत्वप्रतिक्षेप एव साध्यतयाऽन्वीयत इति प्रतिज्ञान्तरमनपेक्षितं स्यात्। अतोऽवान्तरप्रतिज्ञान्तरासाधारणहेतुपरतया विप्रतिषेधव्याख्यानं भाष्ये। तेन परमसाध्यप्रधानकारणवादनिषेधः सिध्यतीति। निर्विशेषज्ञप्तिमात्रस्य प्रवर्तकत्वानुपपत्तिर्मृषावादिनामपि तुल्या। स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं प्रवर्तकत्वमित्यविरोधश्चानुपपन्नः; मायायाश्च ब्रह्मणि सर्वविधकार्याध्यासजननप्रवृत्तौ स्वतन्त्रत्वे तद्वत् साङ्ख्याभिमतप्रधानस्यापि प्रवृत्त्युपपत्तेः। तस्या ईश्वराधीनत्वे मायाप्रवृत्तेरीश्वराध्यासः, अध्यस्तेश्वरवशान्मायाप्रवृत्तिरित्यन्योन्याश्रयः। तदध्यासस्यानादित्वे प्रधानस्यापि पुरुषे स्वधर्माणामनाद्यध्यासमुखेन जगत्प्रवृत्तिहेतुत्वमिति तुल्यम्। नित्यसर्गप्रसङ्गश्च तुल्यः, प्रधानस्येवाविद्यायाः संनिहितत्वात्॥ अध्यस्तेश्वरेच्छया न नित्यप्रसङ्ग इति चेत्. न; ईश्वरेच्छाया अध्यासनिबन्धनत्वात् अध्यासहेतोर्मायायाः सदा संनिहितत्वात्, क्षेत्रज्ञेच्छाया इव कर्मणा व्यवस्थापयितुमशक्यत्वाच्च नित्येच्छाप्रसङ्गात्।

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २-२-१० ॥

प्रधानकारणवादस्य युक्त्याभासमूलतया, विप्रतिषिद्धत्वाच्चासामञ्जस्यमुक्तम्; संप्रति परमाणुकारणवादस्याप्यसामञ्जस्यं प्रतिपाद्यते—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामिति । असमञ्जसमिति वर्तते । वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां—द्व्यणुकपरमाणुभ्यां महद्दीर्घवत्—

---

**यादवार्यैस्तु**—'**प्रवृत्तेश्च**' इति पदं रथशकटादीनां स्पन्दात्मकप्रवृत्तेश्चेतनसापेक्षत्वदर्शनादिति व्याख्यातम् । तत्र च पूर्वोक्तमेवोत्तरमनुसन्धेयम् । अर्थान्तरं च तैरभिहितम्, स्वफलाय प्रवृत्ताः शकुन्यादयः स्वफलाय प्रवृत्तानां मनुष्याणां शुभाशुभे सूचयन्ति । तत्र च शकुनिकर्म न पुरुषप्रवर्तकम् । पुरुषकर्म च न शकुनिप्रवर्तकम् । अत उभयकर्माभिज्ञेनेश्वरेण सर्वशक्तिना शकुनिचेष्टितपुरुषफलादिकं सर्वं सङ्गमयितव्यमिति । तदपि मन्दम्; शकुनिसंनिधानस्य पुरुषव्यापारद्वारा पुरुषफलोपयोगितया, तदुपयोगिवृष्ट्यादेरिव तदौपयिकशकुनि(नि)संनिधानादीनामपि तत्फलभोक्तृपुरुषकर्मनिबन्धनत्वोपपत्तेः । परिस्पन्दप्रवृत्तेश्चेतनसापेक्षत्वेऽपि परिणाप्रवृत्तेस्तन्नैरपेक्ष्यं युक्तमिति शङ्कापरिहारपरम् **अन्यत्राभावाच्चे**त्यादि सूत्रं व्याख्यातम् । तच्च **पयोम्बुवच्चे**दिति सूत्रस्यैव परिणामप्रवृत्तौ नैरपेक्ष्यपरिहारपरत्वोपपादनादयुक्तम् । अतः पयोम्बुवदित्युक्तस्य प्रपञ्चनमिदम् । **अभ्युपगमेऽप्यर्थाभावा**दिति—प्रकृतेः प्रतिसर्गादिव्यवस्थासिद्ध्यर्थं सहकारिकारणाभ्युपगमेऽपि तादृशसहकारिरूपार्थाभावात् नित्यसर्गादिप्रवृत्तिनित्यतदभावप्रसङ्गपरिहारोऽनुपपन्न इति च व्याख्यातम् । साङ्ख्यैः प्रकृतिपरिणामसङ्ख्याविशेषव्यतिरेकेण प्रतिसर्गादिव्यवस्थानिमित्तभूतार्थविशेषानभ्युपगमाच्छङ्कापरिहारावुभावपि निष्फलौ । **विप्रतिषेधा**दिति सूत्रमेवमपि व्याचक्षते—'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्' इति प्रकृतेर्व्यक्तविपरीतत्वमभ्युपगम्यते । तत् विप्रतिषिद्धम्; व्यक्तवत् हेतुमत्त्वानित्यत्वाभ्युपगमेऽप्यनुमानप्रवृत्तिसम्भवात्, वृक्षस्य परिणामपरम्परां प्राप्तस्यावृक्ष इव त्रिगुणात्मकप्रधानस्यापि परिणामपरम्परया त्रैगुण्यातिक्रमेणावस्थान्तरं तन्मूलं स्यात्, तस्यापि प्रहाणेन ततोऽप्यवस्थान्तरमिति क्वचिदपि न तत्त्वनिष्ठा । प्रधानस्यानित्यत्वं सहेतुकत्वं तत्त्वसङ्ख्यानियमासिद्धिश्च । अतोऽसमञ्जसमिति । इदमप्यनुचितम्; अनित्यत्वप्रसङ्गादीनां विप्रतिषेधशब्दवाच्यत्वाभावात् । मिथोविरुद्धार्थभाषणं हि विप्रतिषिद्धाभिधानम् ॥ इति रचनानुपपत्त्यधिकरणम् ॥

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** ॥ सङ्गतिमाह **प्रधाने**ति । प्रधानकारणवादस्याऽऽसन्नत्वेन धीस्थत्वात् तद् दूषितम् । आनुमानिकप्रधानकारणत्वे निरस्ते आनुमानिकपरमाणुकारणत्वं स्यादिति प्रस्तावात् सङ्गतिरित्यर्थः । प्रधानकारणवादसाम्येऽपि शैवमतस्य पश्चान्निरासस्तु बाह्यत्वाधिक्याद्वेदबाह्यमतानन्तर्यस्य युक्तत्वात् । किं विपक्वजीवादृष्टसचिवाः परमाणवो जगत्कारणम्, उत न? परमाणूनां संयोगद्वाराऽवयव्यारम्भकत्वे कारणानवस्थितिकार्यप्रथिमासिद्ध्योरन्यतरप्रसक्तिरवर्जनीया, नेति । यदा न प्रसक्तिः, तदा परमाणूनां जगदारम्भकत्वोपपत्तेर्ब्रह्मकारणवादस्य श्रद्धेयतमत्वहानिः । यदा प्रसक्तिरवर्जनीया, तदा परमाणुकारणवादानुपपत्तेर्ब्रह्मकारणवादस्य श्रद्धेयतमत्वम् । **वाशब्दः चार्थे** । समुच्चये इत्यर्थः । दूष्यसमुच्चयोऽभिप्रेतः । **ह्रस्वं** द्व्यणुकम्; **परिमण्डलं** परमाणुः, **महद्दीर्घं** त्र्यणुकम् । तत्र

त्र्यणुकोत्पत्तिवादवत् अन्यच्च तदभ्युपगतं सर्वमसमञ्जसम्; परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवादवदन्यदप्यसमञ्जसमित्यर्थः। तथाहि—तन्तुप्रभृतयो ह्यवयवाः स्वांशैः षड्भिः पार्श्वैः संयुज्यमानाः अवयविनमुत्पादयन्ति। परमाणवोऽपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमाना एव द्व्यणुकादीनामुत्पादका भवेयुः; अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽप्येकस्मात्परमाणोरनतिरिक्तपरिमाणतया अणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात्। प्रदेशभेदाभ्युपगमे, परमाणवोऽपि सांशाः स्वकीयैरंशैः, ते च स्वकीयैरंशैरित्यनवस्था। न च वाच्यम्—अवयवाल्पत्वमहत्त्वाभ्यां हि सर्षपमहीधरयोर्वैषम्यम्; परमाणोरप्यनन्तावयवत्वे अवयवानन्त्यसाम्यात् सर्षपमहीधरयोर्वैषम्यासिद्धेरवयवापकर्षकाष्ठाऽवश्याभ्युपगमनीयेति; परमाणूनां प्रदेशभेदाभावे सति एकपरमाणुपरिमाणातिरेकी प्रथिमा न जायेतेति सर्षपमहीधरयोरेवासिद्धेः॥ किं कुर्म इति चेत्—वैदिकः पक्षः परिगृह्यताम्।

यत्तु परैर्ब्रह्मकारणवाददूषणपरिहारपरमिदं सूत्रं व्याख्यातम्—तदसङ्गतम्, पुनरुक्तं च। ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते।

---

द्व्यणुकत्रयारब्धम्। त्र्यणुकस्य द्व्यणुकत्रयारब्धत्वेऽपि सूत्रे द्व्यणुकेन परमाणुना चारब्धत्वं प्रतीयत इवेति तद्व्यावृत्त्यर्थम्, **अन्यच्च तदभ्युपगत**मित्युक्तस्य घटादिकार्यान्तरव्यावृत्त्यर्थं चाह **परमाणुभ्य** इति। भाष्यस्थत्र्यणुकशब्द एव कार्यान्तरस्योपलक्षणम्। परमाणुभ्यो द्व्यणुकादिकार्योत्पत्तिवादवत् गगननित्यत्वादिकमन्यत् तदभ्युपगतमसमञ्जसमित्यर्थः। सूत्रे **ह्रस्वपरिमण्डल**शब्दाभ्यां कारणद्वयमुक्तम्। **महद्दीर्घ**शब्दोऽणुह्रस्वस्य द्व्यणुकस्याप्युपलक्षणम्। द्व्यणुकपरमाणुभ्यां त्र्यणुकद्व्यणुकादिकार्यवत् अन्यच्चासमञ्जसमित्यर्थः। कार्यद्वयोपलक्षणमुत्तरत्र वक्ष्यते। **महद्दीर्घ**शब्दौ भावप्रधानौ; महत्त्वं दीर्घत्वं च। अतः सामानाधिकरण्याभावात् 'आन्महत' इत्यादिना महच्छब्दस्याऽऽत्वाभावः। एवं भावप्रधानाभ्यां महद्दीर्घशब्दाभ्यां तद्गुणकं त्र्यणुकं लक्ष्यते।

परमाणुभ्यो द्व्यणुकाद्युत्पत्त्यनुपपत्तिः कथमित्यत्राह—**तथा ही**ति। अणुत्वह्रस्वत्वे द्व्यणुकस्य धर्मौ; महत्त्वदीर्घत्वे त्र्यणुकस्य। **न च वाच्य**मित्यादि। सर्षपमहीधरवैषम्यसिद्ध्यर्थं परमाणूनां निरवयवत्वमास्थेयम्; अन्यथा अवयवानन्त्यसाम्यात् तयोर्वैषम्यासिद्धेरित्यर्थः। परिहरति **परमाणूनामि**ति। निरवयवत्वे सहस्रपरमाणुसंयोगेऽप्येकपरमाण्वनतिरिक्तपरिमाणतया सर्षपमहीधराख्यधर्म्यसिद्धेः परमाणूनां सांशत्वमास्थेयमित्यर्थः। एवं वैषम्याख्यधर्मसिद्ध्यर्थं निरवयवत्वमुक्तम्; सर्षपमहीधराख्यधर्मिसिद्ध्यर्थं सावयवत्वमुक्तम्। **किं कुर्म इति चे**दिति। सावयवत्वे वैषम्यासिद्धिः, निरवयवत्वे धर्म्यसिद्धिरिति किमवलम्बनीयमित्यर्थः। **वैदिकः पक्षः परिगृह्यताम्**। युक्तिबाधागोचरशास्त्रैकसमधिगम्यार्थः स्वीक्रियताम्। तत्र हि न ह्यल्पेन विपुलस्योत्पत्तिः। दशगुणं बृहतो ब्रह्मणः कारणादल्पस्य कार्यत्वं हि प्रतिपाद्यते। तत्तु न युक्तिबाधगोचर इत्यर्थः।

अस्य सूत्रस्य परोक्तनिर्वाहमनूद्य दूषयति-**यत्त्वि**त्यादिना। **असङ्गतं**—पादसङ्गतिर्नास्ति। **पुनरुक्तं च**—अनपेक्षितं चेत्यर्थः। तत्रासङ्गतिमुपपादयति **ब्रह्मकारणे**ति। पुनरुक्तिमुपपादयति

चेतनाद्ब्रह्मणो जगदुत्पत्तिसंभवश्च 'न विलक्षणत्वात्' इत्यत्रैव प्रपञ्चितः। अतो ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवत् अन्यच्च तदभ्युपगतं सर्वमसमञ्जसमित्येव सूत्रार्थः ॥ १० ॥

किमत्रान्यदसमञ्जसमित्यत्राह—

उभयथाऽपि न कर्मातस्तदभावः ॥ २-२-११ ॥

परमाणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते; तत्र निखिलजगदुत्पत्तिकारणभूतपरमाणुगतमाद्यं कर्म अदृष्टकारितमित्यभ्युपगम्यते—"अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति। तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितम्, आत्मगतादृष्टकारितं वा। उभयथाऽपि न संभवति, क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुगतत्वासंभवात्। संभवे च सदोत्पादकत्वप्रसङ्गः। आत्मगतस्य त्वादृष्टस्य परमाणुगतकर्मोत्पत्तिहेतुत्वं न संभवति। अथादृष्टवदात्मसंयोगादणुषु कर्मोत्पत्तिः, तदा तस्यादृष्टप्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः॥ नन्वदृष्टं विपाकापेक्षं फलायालम्। कानिचिददृष्टानि तदानीमेव विपच्यन्ते; कानिचिज्जन्मान्तरे; कानिचित् कल्पान्तरे। अतो विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसङ्ग इति॥ नैतत्; अनन्तैरात्मभिरसङ्केतपूर्वकम् अयुगपदनुष्ठितानेकविधकर्मजनितानामदृष्टानामेकस्मिन् काले एकरूपविपाकस्याप्रामाणिकत्वात्। अत एव युगपत्सर्वसंहारो द्विपरार्धकालमविपाकेनावस्थानं च न सङ्गच्छते। न चेश्वरेच्छाहितविशेषादृष्टसंयोगादणुषु कर्म; आनुमानिकेश्वरासिद्धेः 'शास्त्रयोनित्वात्' इत्यत्रोपपादितत्वात्। अतो जगदुत्पत्तेरणुगतकर्मपूर्वकत्वाभावः ॥ ११ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ २-२-१२ ॥

समवायाभ्युपगमाच्चासमञ्जसम्। कुतः? साम्यादनवस्थितेः। समवायस्याप्यवयविजातिगुण-

---

चेतनादिति। एवं हि परैर्व्याख्यातम्—यथा विलक्षणाभ्यां परमाणुद्व्यणुकाभ्यां विलक्षणं द्व्यणुकादिकार्यमुत्पद्यते, तथा विलक्षणात् ब्रह्मणो विलक्षणं जगदुत्पद्यत इति। तदिदमसङ्गतिपुनरुक्तिभ्यामनुपपन्नमित्यर्थः। अत इति। अत्र कारणद्वयोपादानं कार्यद्वयोपादानं च स्पष्टमुक्तम्; **ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदि**त्युक्तेः। द्व्यणुकात् त्र्यणुकोत्पत्तिः, परमाणोर्द्व्यणुकोत्पत्तिरि[वे ?]त्यर्थः॥

उत्तरसूत्रशङ्कामाह **किमत्रेति॥ उभयथाऽपि न कर्मातस्तदभावः॥ आत्मगतस्य चेति।** व्यधिकरणत्वादित्यर्थः। **विपाकः** फलार्हदशा। **न चेति। संयोगशब्दः** परम्परया सम्बन्धपरः। ईश्वराहितविशेषादृष्टवदात्मसंयोगादित्यर्थः। दूषयति—**आनुमानिके**ति। सिद्धेऽपीश्वरे तस्य नित्येच्छायाः पराभ्युपगमान्नित्यसर्गप्रसङ्गस्य पूर्वोक्तया दिशा स्फुटत्वात् तदनुक्तिः॥

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः**॥ प्रथमपञ्चम्यन्तपदस्य परमसाध्येनान्वयं दर्शयन् व्याचष्टे—**समवाये**ति। समवायाभ्युपगमस्यासामञ्जस्यहेतुत्वोपपादिकाऽनवस्थितिरित्यभिप्रायेणाह **कुत** इति। अनवस्थित्युपपादकं **साम्य**पदमित्यभिप्रायेण **साम्यादनवस्थिते**रित्युपादानम्। तत्र साम्यं केनाकारेणेत्यत्राह **अवयविजातिगुणवदुपपादाकान्तरापेक्षासाम्यादि**ति। अत्यन्तभेदसाम्यादिति **परे**। तदयुक्तम्; भिन्नयोर्घटयोः समवायाभावात्; भेदस्य समवायकल्पकत्वेन वैशेषिकैरनुक्तत्वाच्च।

वत् उपपादकान्तरापेक्षासाम्यादुपपादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव। एतदुक्तं भवति—अयुतसिद्धानामाधाराधेयभूतानामिहप्रत्यय[1]हेतुर्यः सम्बन्धः, स समवाय इति समवायोऽभ्युपगम्यते। अपृथक्स्थित्युपलब्धीनां जात्यादीनां तथाभावस्य निर्वाहकत्वेन चेत् समवायोऽभ्युपगम्यते, समवायस्यापि तत्साम्यात् तथाभावहेतुरन्वेषणीयः, तस्यापि तथेत्यनवस्थितिः। समवायस्य तदपृथक्सिद्धत्वं स्वभाव इति परिकल्प्यते चेत्—जातिगुणानामेवैष स्वभावः परिकल्पनीयः; न पुनरदृष्टचरं समवायमभ्युपगम्य, तस्यैष स्वभाव इति कल्पयितुं युक्तमिति ॥ १२ ॥

समवायस्य नित्यत्वे अनित्यत्वे चायं दोषः समानः। नित्यत्वे दोषान्तरं चाह—

**नित्यमेव च भावात् ॥ २-२-१३ ॥**

समवायस्य संबन्धत्वात् संबन्धस्य नित्यत्वे संबन्धिनो जगतश्च नित्यमेव भावादसमञ्जसम्॥

---

इहप्रत्ययसाम्यादित्यन्ये। तच्चायुक्तम्; कुण्डबदरयोः समवायाभावात्। तस्मादिहप्रत्ययविशेषस्य निर्वाहकान्तरसापेक्षत्वं साम्यमित्यर्थः। अवयविजातिगुणानामुपपादकान्तरापेक्षा कथम्? समवायस्य तदपेक्षासाम्यं वा कथम्? तत्र स्वपरनिर्वाहकत्वं वा स्यादित्याशङ्क्याह **एतदुक्त**मिति। **अयुतसिद्धिः** अपृथक्सिद्धिः। पृथक्सिद्धानामाधाराधेयभावोपपादकः संयोगः; अपृथक्सिद्धानां तु तदुपपादकः समवाय इत्यर्थः। **तथाभावस्य** अपृथक्स्थित्युपलब्धित्वस्येत्यर्थः। संयोगस्तु प्रत्यक्षसिद्धः; अनुपलब्धं समवायं कल्पयित्वा तस्योपपादकान्तरनैरपेक्ष्यकल्पनादपि प्रत्यक्षसिद्धस्यापृथक्सिद्धवस्त्वाधारधेयभावस्यैव सम्बधस्योपपादकान्तरनैरपेक्ष्यकल्पनं युक्तम्; 'धर्मिकल्पनातो वरं धर्मकल्पना' इति न्यायादित्यर्थः ॥

उत्तरसूत्रमवतारयति **समवायस्ये**ति। समवायस्यानित्यत्वं बहुत्वं च प्राभाकराभ्युपेतम्। वैशेषिकैरेकत्वं नित्यत्वं चाभ्युपेतमिति तत्पक्षे सूत्रमिदमुच्यते **नित्यमेव च भावात्। समवायस्य संबन्धत्वा**दिति। सम्बन्धिविनाशविनाशित्वं संयोगे दृष्टमिति समवायस्यापि सम्बन्धत्वादेव सम्बन्धिविनाशविनाशित्वोपपत्तेः (त्वापत्तेः?) तन्नित्यत्वाय सम्बन्धिजगन्नित्यत्वं स्यात्। ततश्च जगत्कारणतया परमाण्वीश्वरक्लृप्तिरयुक्तेत्यर्थः ॥ दिक्कालादिद्रव्यतद्गतसङ्ख्यापरिमाणादिनित्यसंबन्धिसद्भावान्नित्यत्वोपपत्तिरिति चेत्, न; घटाद्यनित्यसम्बन्धिविनाशप्रयुक्तानित्यत्वस्यावर्जनीयत्वात् ॥ नित्यत्वविरोधादनित्यत्वं न स्यादिति चेत्—अनित्यत्वविरोधान्नित्यत्वमेव न स्यात् ॥ उभयात्मकत्वं विरुद्धमिति चेत्—तर्हि नित्यत्वानित्यत्वरूपविरुद्धाकारयोगाय समवायानेकत्वमभ्युपगन्तव्यम्। किञ्च समवायस्य घटतद्गुणादीन् प्रति सम्बन्धात्मकत्वं स्वरूपम्, न वा? स्वरूपं चेत्, घटादिविनाशे स्वरूपाभावादनित्यत्वम्। न चेत्, स्वरूपस्य दुर्निरूपतया समवायस्य तुच्छत्वमेव स्यात् ॥ पदार्थत्वाद्याकारेण सुनिरूपमिति चेत्—न; तस्य द्रव्यादिव्यावृत्तत्वाभावात्। अव्यावृत्तत्वे हि द्रव्या[द्य?]न्तर्भावेन तदतिरिक्तसमवायस्य तुच्छतैव स्यादिति पदार्थषट्कवादो हीयेत। तस्मादयुतसिद्धसंबन्धिनः प्रति संबन्धात्मकत्वमेव समवायस्य द्रव्यादिव्यावृत्तं स्वरूपमिति घटतद्गुणादीन् प्रति संबन्धात्मकत्वं स्वरूपं घटादिविनाशान्नास्तीत्यनित्यत्वं दुर्वारम् ॥

---

1. इहेतिप्रत्ययः इहप्रत्ययः। अयुतसिद्धाधाराधेयविषये इहेदमिति प्रत्ययो यतः संबन्धात् स समवाय इति। [वैशेषिकदर्शनादौ. 7-2-26.]

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ २-२-१४ ॥**

परमाणूनां पार्थिवाप्यतैजसवायवीयानां चतुर्विधानां रूपरसगन्धस्पर्शवत्त्वाभ्युपगमादभिमत-नित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपर्ययेणानित्यत्वस्थूलत्वसावयवत्वादि प्रसज्यते, रूपादिमतां घटा-दीनामनित्यत्व-तथाविधकारणान्तरारब्धत्वादिदर्शनात्। न हि दर्शनानुगुण्येनादृष्टोऽर्थः कल्प्यमानः स्वाभिमतविशेषे व्यवस्थापयितुं शक्यः। दर्शनानुगुण्येन हि परमाणूनां रूपादिमत्त्वं त्वया कल्प्यते। अतोऽप्यसमञ्जसम् ॥ १४ ॥

अथैतद्दोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाभ्युपगम्यते, तत्राह—

**उभयथा च दोषात् ॥ २-२-१५ ॥**

न केवलं परमाणूनां रूपादिमत्त्वाभ्युपगम एव दोषः, रूपादिविरहेऽपि कारणगुणपूर्वकत्वात् कार्यगुणानां पृथिव्यादयो रूपादिशून्याः स्युः। तत्परिजिहीर्षया रूपादिमत्त्वाभ्युपगमे पूर्वोक्तदोषः इत्युभयथा च दोषादसमञ्जसम् ॥ १५ ॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २-२-१६ ॥**

कापिलपक्षस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्यवादादिना कचिदंशे वैदिकैः परिग्रहो-ऽस्ति। अस्य तु काणादपक्षस्य केनाप्यंशेनापरिग्रहादनुपपन्नत्वाच्चात्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या ॥ १६ ॥ इति महद्दीर्घाधिकरणम् ॥

---

नित्यसंबन्धिनोः संबन्धात्मकत्वं स्वरूपमस्तीति चेत्—अनित्यसंबन्धिनोः संबन्धात्मकत्वं स्वरूपं नास्तीत्यनित्यतैव स्यात्। अयुतसिद्धयोः संबन्धात्मकत्वमात्रं स्वरूपमिति चेत्—तथाऽपि नित्यानित्य-रूपसंबन्धिद्वैविध्येन उभयप्रसक्तिर्दुर्वारा। अतस्तदुभयविरोधपरिहाराय घटादिनित्यत्वं वा समवायानेकत्वं वाऽभ्युपगन्तव्यं स्यात्। तत्र घटादिनित्यत्वे प्रत्यक्षविरोधः परमाण्वीश्वरक्लृप्त्यनुपपत्तिश्च स्यात्। समवाया-नेकत्वे तु, पूर्वसूत्रोक्तप्रकारेण समवायस्यैवाकल्पनीयत्वात् तदेकत्वं दूरोत्सरितम् ॥

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात्।** प्रसञ्जकाकारस्य पराभ्युपगममाह—**परमाणूनामिति।** **विपर्यय**शब्दस्य पराभ्युपगतार्थविपर्ययपरत्वात् तद्बोधाय पराभ्युपगमप्रकारं दर्शयति **अभिमतनित्यत्वेति।** **दर्शना**दिति सौत्रं पदं विवृणोति **रूपादिमता**मिति। परमाणूनाम् अयं विशेषः, यद् घटादिवैधर्म्येण नित्यत्वम्। तद्धि धर्मिग्राहकप्रमाणसिद्धमित्यपेक्षायाम्, **दर्शना**दिति पदाभिप्रेतं विवृणोति **न हीति।**

**उभयथा च दोषात्।** **न केवल**मिति। अन्यथा चेति नोक्तम्; अपितु **उभयथे**त्युक्तम्। अत्र शिरोन्तरं नास्तीत्यभिप्रायः ॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥** **अत्यन्त**शब्दव्यावर्त्यं कापिलमतमित्यभिप्रेत्याह **कापिलेति।** वेदविरुद्धार्थत्वं दूषणमुक्तं भवति ॥

**नित्यमेव च भावादिति सूत्रं परैरेवं** व्याख्यातम्—परमाणूनां प्रवृत्तिस्वभावत्वे नित्यसर्गः; निवृत्तिस्वभावत्वे प्रलयान्तेऽपि न सर्गः। उभयस्वभावत्वं विरुद्धम्। अनुभयस्वभावत्वे अदृष्टवशात् प्रवृत्तिरिति अदृष्टस्य च नित्यसद्भावात् नित्यसर्ग इति। तदयुक्तम्, उभयथेतिवत् सर्वथेतिवच्च विकल्पद्योतक-पदाभावात्। अयं च विकल्पो ब्रह्मकारणवादेऽपि सुवचः। तथा सति—ब्रह्म स्वेच्छायां सत्यां प्रवर्तते,

इतरथा निवर्तते इति हि वक्तव्यम् । तर्हीश्वरेच्छया परमाणवोऽपि प्रवर्तन्त इति तुल्यमुत्तरं प्राप्नोति । अतः स्वपक्षे तुल्यत्वात सूत्रस्य ऐतदर्थ्यमयुक्तम् ॥ आनुमानिकेश्वरासिद्धिरधिकयुक्तिरिति चेत्—'उभयथाऽपि न कर्म' इत्यत्रैव सा अपेक्षितत्वाद्विवक्षितेति सूत्रवैयर्थ्यं स्यात् । **उभयथा च दोषादिति**—गन्धरसरूपस्पर्शगुणा स्थूला भूः, त्रिगुणाः सूक्ष्मा आपः, द्विगुणं सूक्ष्मं तेजः, स्पर्शगुणः सूक्ष्मो वायुरिति पृथिव्यादिभूतानि उपचितापचितान्युपलभ्यन्ते । तद्वत् परमाणूनामप्युपचितापचितगुणवत्त्वं कल्प्यते, न वा ? कल्प्यते चेत्—गुणोपचयापचयस्य मूर्त्युपचयापचयनिबन्धनत्वस्य कार्यभूतेषु दर्शनात् गुणोपचयापचयवत्त्वेन परमाणूनामपि मूर्त्युपचयापचयवत्त्वादपरमाणुत्वं स्यात् । उपचितापचितगुणकत्वं न कल्प्यते चेत—सर्वपरमाणूनामेकरूपत्वं स्यात् । एकैकगुणकतया ऐकरूप्ये, पृथिव्यादिषु रूपाद्यनुपलब्धिप्रसङ्गः । चतुर्गुणकतयैकरूप्ये वाय्वादिष्वपि रूपाद्युपलब्धिप्रसङ्गः—इति व्याख्यातम् । तत्रोपचितापचितगुणकत्वे मूर्त्युपचया [पचयवत्त्वा ?]दपरमाणुत्वमिति यत् , तत् नित्यत्वादिविपर्ययेणानित्यत्वस्थूलत्वादिप्रसङ्गात् पूर्वसूत्रोक्तादविशिष्टम् । अतोऽत्र तदुक्तिर्विफला ॥ विकल्पभेदेन तदापादनं प्रयोजनमिति चेन्न; मुखभेदस्य दुःस्थत्वात् । गुणोपचयस्य मूर्त्युपचयहेतुकतया ह्यपरमाणुत्वमापादितम् । तदयुक्तम् । गुणोपचयशब्दः किं गुणबाहुल्यपरः, उतापेक्षिकप्रकर्षपरः, उतोत्पत्तिपरः? नाद्यः, सार्वज्ञ्याद्यनेकगुणकस्येश्वरस्योपचितस्वरूपत्वाभावेनानैकान्त्यात् । न द्वितीयः; जीवापेक्षया प्रकृष्टज्ञानस्य तस्योपचयात्मकत्वाभावात् । न तृतीयः ; परमाणुषु स्पर्शादिगुणानां नित्यत्वाभ्युपगमात ; उत्पत्तावपि बुद्धिसुखदुःखाद्युत्पत्तिमदनेकगुणकस्य जीवस्योपचयात्मकत्वाभावाच्च ।

**अन्येऽपि, उभयथाऽपि न कर्म** इत्यादिकम् एवं व्याचक्षते—किमागन्तुकेभ्यो हेतुभ्यः परमाणुगतकर्मोत्पत्तिः, उत प्रलयदशायामपि स्थितेभ्यो हेतुभ्यः इति । प्रथमे, आगन्तुकहेतोरपि हेत्वन्तरापेक्षयाऽनवस्था । द्वितीये, सदा सर्गप्रसङ्ग इति ॥ अयं विकल्पस्तावदनिर्धारितविशेषो हेतुमात्रे नावतरितुमर्हति, "अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति हेतुविशेषस्य सूत्रितत्वादुक्तानादरेण दूषणानुपपत्तेः । स्थिते चादृष्टे तस्य तदानीमागन्तुकत्वशङ्का नोदेति ; अदृष्टस्य पूर्वकल्पसंपादितत्वात् । तस्मादात्मगतमणुगतं वेत्येव विकल्प उपपद्यते ॥ ननु प्रत्यात्मनियतभोगसाधनस्यादृष्टस्याणुगतत्वशङ्का न भवितुमलम् ; कथं विकल्प इति चेन्न—अदृष्टस्य कारणत्वेऽभिहिते कारणत्वस्य सामान्यरूपत्वाददृष्टस्य च समवायितया कारणत्वासंभवात् असमवायित्वनिमित्तत्वशङ्कोपपत्तेः । **नित्यमेव च भावादित्यत्र** प्रलयेऽप्यदृष्टसंभवादणुषु नित्यकर्मोत्पत्तिप्रसङ्ग इति व्याख्यातम् । तदप्ययुक्तम् ; 'उभयथाऽपि न कर्म' इति सूत्र एवादृष्टवदात्मसंयोगस्य कारणत्वेन शङ्कासम्भवात् परिहारस्यापि तत्रैव विवक्षितत्वोपपत्तेः ॥ तत्रापेक्षितमस्मिन् सूत्रे कण्ठोक्तमिति चेन्न ; तथा सति अस्य सूत्रस्य तदनन्तरभावित्वापत्तेः । इदं हि समवायव्युदाससूत्रव्यवहितम् । अतस्तेन व्यवहितत्वादनेनाव्यवहितत्वाच्च समवायस्य वैशेषिकाभिमते नित्यत्वपक्ष एव दूषणपरत्वं युक्तम् । 'उभयथा च दोषात्' इत्यत्रापि पार्श्वभेदेन संयोगे एकभागेनैव सर्वैः संयोगे च दोष इत्युक्तम् । तथात्वे तु महद्दीर्घवद्वेति सूत्रेणैव द्व्यणुकादिक्रमेण कार्योत्पत्त्यसा-

## समुदायाधिकरणम्—२-२-३

### समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २-२-१७ ॥

परमाणुकारणवादिनो वैशेषिका निरस्ताः; सौगताश्च जगतः परमाणुकारणत्वमभ्युपगच्छन्तीति अनन्तरं तन्मतेऽपि जगदुत्पत्तितद्व्यवहारादिकं नोपपद्यत इत्युच्यते। ते चतुर्विधाः—केचित् पार्थिवाप्यतैजसवायवीयपरमाणुसङ्घातरूपान् भूतभौतिकान् बाह्यान् चित्तचैत्तरूपांश्चाभ्यन्तरान् अर्थान् प्रत्यक्षानुमानसिद्धानभ्युपयन्ति। अन्ये तु बाह्यान् अर्थान् सर्वान् पृथिव्यादीन् विज्ञानानुमेयान् वदन्ति। अपरे तु—'अर्थशून्यं विज्ञानमेव परमार्थसत्, बाह्यार्थास्तु स्वाप्नार्थकल्पाः' इत्याहुः। त्रयोऽप्येते स्वाभ्युपगतं वस्तु क्षणिकमाचक्षते; उक्तभूतभौतिकचित्तचैत्तव्यतिरिक्तमात्माकाशादिकं स्वरूपेणैव नानुमन्यते। अन्ये तु सर्वशून्यत्वमेव संगिरन्ते।

---

मञ्जस्यं दृष्टान्तीकुर्वता परमाणूनां पार्श्वभेदाभेदप्रयुक्तदूषणजातमभिप्रेतमिति इह तदुक्तिः पुनरुक्तिः स्यात्। तस्य च सूत्रस्य पराभिमतार्थपरत्वानुपपत्तिश्च दर्शिता। अत इदं सूत्रं परमाणूनां रूपादिमत्त्व इव तद्विरहे दोषप्रतिपादकमिति युक्तम् ॥ इति महद्दीर्घाधिकरणम् ॥

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥** सङ्गतिमाह **परमाण्विति**। असत्कार्यवादसाम्यात् कार्यविशेषे शरीरे क्षणिकत्वाभ्युपगमसाम्याद्वा धीस्थतया वैशेषिकमतनिरासानन्तरं बौद्धनिरास इति **केचित्**। परमाणूनामेकान्तत्वचातुर्विध्याभ्युपगमसाम्यात् धीस्थतया बौद्धमतनिरास इति सङ्गतिः। आर्हतमते स्थिरत्वास्थिरत्वादिभिरनैकान्त्यमैकविध्यं च परमाणूनां हि स्वीकृतम् ॥ न हि सर्वैरपि बौद्धैः परमाणुकारणत्वमङ्गीकृतमित्यत्राह-**ते चतुर्विधा** इति। वैभाषिकसौत्रान्तिकयोः परमाणुकारणवादाभ्युपगमेन प्रस्तावे सति बौद्धत्वसाजात्यात् योगाचारमाध्यमिकयोरपि निरासः क्रियत इत्यर्थः। किं क्षणिकाः परमाणवो जगदारम्भकाः, नेति; क्षणिकानां तेषां किं सङ्घातकारणत्वं संभवति, नेति; अस्थिरादिषु स्थिरत्वादिरूपा अविद्या परमाणूनां पृथिव्यादिसङ्घातहेतुत्वमुपपादयति, नेति। यदोपपादयति, तदा सङ्घातहेतुत्वोपपत्तेः परमाणूनां क्षणिकानां कारणत्वं स्यात्। यदा नोपपादयति, तदा सङ्घातहेतुत्वानुपपत्तेः क्षणिकानां परमाणूनां जगदारम्भकत्वं न स्यात्। वैभाषिकादीनामभ्युपगमप्रकारं यथाक्रममाह **केचिदि**त्यादिना। **चित्तचैत्तरूपानि**ति। **चित्तं** ज्ञानसन्तानः; चैत्तं रागादिकम्। [1]रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्च स्कन्धाः। भूतेन्द्रियविषयाः **रूपस्कन्धः;** तत्तद्विषयग्राहकत्वेनाहमित्यभिमानारूढा ज्ञप्तिरेव **विज्ञानस्कन्धः;** प्रियाप्रियानुभयानुभवजन्यसुखदुःखोपेक्षात्मकः चित्तस्यावस्थाविशेषो **वेदनास्कन्धः; संज्ञास्कन्धः** सविकल्पकः प्रत्ययः; **संस्कारस्कन्धो** रागद्वेषमोहादयः। 'कायस्थत्वादान्तरचित्तविषयत्वाद्वा रूपस्कन्धोऽपि चित्तचैत्तान्तर्गतः' इति **वाचस्पत्यादयः, शाङ्करभाष्यं** च। रूपस्कन्धव्यतिरिक्तस्कन्धचतुष्टयं चित्तचैत्तान्तर्गतमिति **भास्करभाष्ये**। तदिदमाह **चित्तचैत्तरूपांश्चाभ्यन्तरान् अर्थानि**ति। **अन्ये त्वि**ति। पृथिव्यादिविषयज्ञानेन तत्तद्विषयानुमानमित्यर्थः।

---

1. आभ्यन्तरानिति विशेषणात् भूतादेर्बाह्यस्य चैत्तान्तर्भावो न भाष्येष्ट इति ज्ञापनार्थं व्याख्यातृवैमत्यं दर्शयिष्यन् पञ्चस्कन्धान् तत्रोक्तान् प्रस्तौति-रूपेत्यादिना ॥

तत्र ये बाह्यार्थास्तित्ववादिनः, ते तावन्निरस्यन्ते। ते चैवं मन्यन्ते—रूपरसस्पर्शगन्धस्वभावाः पार्थिवाः परमाणवः, रूपरसस्पर्शस्वभावाश्चाऽऽप्याः, रूपस्पर्शस्वभावाश्च तैजसाः, स्पर्शस्वभावाश्च वायवीयाः पृथिव्यप्तेजोवायुरूपेण संहन्यन्ते। तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रियविषयरूपसङ्घाता भवन्ति। तत्र च शरीरान्तर्वर्ती ग्राहकाभिमानारूढो विज्ञानसन्तान एवाऽऽत्मत्वेनावतिष्ठते। तत एव सर्वो लौकिकव्यवहारः प्रवर्तत इति।

तत्राभिधीयते—समुदाये उभयहेतुकेपि तदप्राप्तिः। योऽयमणुहेतुकः पृथिव्यादिभूतात्मकः समुदायः, यश्च पृथिव्यादिहेतुकः शरीरेन्द्रियविषयरूपः समुदायः, तस्मिन्नुभयहेतुकेऽपि समुदाये तत्प्राप्तिर्नोपपद्यते। जगदात्मकसमुदायोत्पत्तिर्नोपपद्यत इत्यर्थः। परमाणूनां पृथिव्यादिभूतानां च क्षणिकत्वाभ्युपगमात् क्षणध्वंसिनः परमाणवो भूतानि च कदा संहतौ व्याप्रियन्ते, कदा वा संहन्यन्ते, कदा विज्ञानविषयभूताः, कदा च हानोपादानादिव्यवहारास्पदतां भजन्ते। को वा विज्ञानात्मा कं च विषयं स्पृशति; कश्च विज्ञानात्मा कमर्थं कदा वेदयते; कं वा विदितमर्थं कश्च कदोपादत्ते। स्प्रष्टा हि नष्टः; स्पृष्टश्च नष्टः। तथा वेदिता विदितश्च नष्टः। कथं चान्येन स्पृष्टमन्यो वेदयते, कथं चान्येन विदितमर्थमन्य उपादत्ते। सन्तानानामेकत्वेऽपि सन्तानिभ्यस्तेषां वस्तुतो वस्त्वन्तरत्वानभ्युपगमान्न तन्निबन्धनं व्यवहारादिकमुपपद्यते। अहमर्थ एवात्मा, स च ज्ञातैवेति चोपपादितं पुरस्तात्॥ इति समुदायाधिकरणम्॥

**इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात्॥ २-२-१८॥**

अविद्यादीनामितरेतरहेतुत्वेनोपपन्नं सङ्घातभावादिकमिति चेत्—

---

**तत्र चेति।** अहं जानामीति ग्राहकत्वेनाभिमानो ग्राहकाभिमानः; तमारूढ इत्यर्थः। **तत्प्राप्तिः।** समुदायत्वप्राप्तिरित्यर्थः। तेन कथं समुदायत्वाप्राप्तिरित्यत्राह **क्षणध्वंसिन** इति। **संहतौ व्याप्रियन्त** इति। व्यापारश्चलनम्। **किंशब्दः** क्षेपे। **विषयं स्पृशति**—इन्द्रियेण संबद्धं करोति। इन्द्रियव्यापारो **ज्ञानं** हानोपादानादि च नोपपद्यत इत्यर्थः। **कदा।** न कदाचिदिति भावः। उपपादयति **स्प्रष्टा हीति।** ततः किमित्यत्राह **कथमिति।** एकसन्तानत्वादुपपद्यत इत्यत्राह **सन्तानानामिति।** स्थिरत्वेनानुयायित्वेन सन्तानस्य वस्त्वन्तरत्वानभ्युपगमादित्यर्थः। विज्ञानस्य चात्मत्वमयुक्तमित्याह **अहमर्थ एवेति।**

अणुहेतुको भूतभौतिकसङ्घातः, पञ्चस्कन्धैरारब्धः पञ्चस्कन्धीरूपसङ्घातश्चोभयहेतुकसमुदाय इति **परैर्व्याख्यातम्**! तत्र स्कन्धानामुपपन्नत्वे तत्समुदायात्मा पञ्चस्कन्धी न दुष्यति इति स्कन्धानामेव निराचिकीर्षितत्वे तद्धेतुकसमुदायशब्देन तेषामुपस्थापनमतिक्लिष्टम्। समुदायो गर्भरूपः मातृभुक्ताहारः कर्म च तद्धेतुरिति तन्निरासपरं **यादवप्रकाशैर्व्याख्यातम्**। तदप्ययुक्तम्; गर्भारम्भदूषणादपि जगदारम्भदूषणस्य प्राधान्येन चास्मिन् पादे प्रक्रान्तत्वात्। अतः समुदायशब्दस्यैवमर्थः प्रतिपादितः॥

**इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात्॥** [1]अयमेवाकृत्रिमो वृत्तिसिद्धः पाठः। **अविद्यादीनामिति।** **प्रत्ययशब्दो** हेतुवाची। **सङ्घातभावादिकमिति।** आदिशब्देन विज्ञानविषयत्वं व्यवहारास्पदत्वं च विवक्षितम्। अविद्यादयः के? कथं तेषामन्योन्यहेतुत्वम्।

---

1 अयमेवेति। ननु 'इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात्' इति परमताद्दतः पाठ इत्यर्थः।

एतदुक्तं भवति—यद्यपि क्षणिकाः सर्वे भावाः, तथाऽप्यविद्ययैतत् सर्वमुपपद्यते। अविद्या हि नाम विपरीतबुद्धिः, क्षणिकादिषु स्थिरत्वादिगोचरा। तया संस्काराख्याः रागद्वेषादयो जायन्ते, ततश्चित्ताभिज्वलनरूपं विज्ञानम्, ततश्च नामाख्याश्चित्तचैत्ताः, [ततश्च] पृथिव्यादिकं च रूपिद्रव्यम्, ततः षडायतनाख्यमिन्द्रियषट्कम्, ततः स्पर्शाख्यः कायः, ततो वेदनादयः, ततश्च पुनरप्यविद्यादयो यथोक्ता इत्यनादिरियमविद्यादिकाऽन्योन्यमूला चक्रपरिवृत्तिः। एतच्च सर्वं पृथिव्यादिभूतभौतिकसङ्घातमन्तरेण नोपपद्यते। अतः सङ्घातभावादिकमुपपन्नमिति।

तत्रोत्तरम्—न सङ्घातभावानिमित्तत्वादिति। नैतदुपपद्यते; एषामविद्यादीनां पृथिव्यादिभूतभौतिकसङ्घातभावं प्रति अनिमित्तत्वात्। न खल्वस्थिरादिषु स्थिरत्वादिबुद्ध्यात्मिकाऽविद्या तन्निमित्ताः रागद्वेषादयो वाऽर्थान्तरस्य क्षणिकस्य संहतिहेतुतां प्रतिपद्यन्ते। शुक्तिकारजतादिबुद्धिर्हि न शुक्त्याद्यर्थसंहतिहेतुर्भवति। किञ्च यस्य क्षणिके स्थिरत्वबुद्धिः, स तदैव नष्ट इति कस्य रागादय उत्पद्यन्ते? संस्काराश्रयं स्थिरमेकं द्रव्यमनभ्युपगच्छतां संस्कारानुवृत्तिरपि न शक्या कल्पयितुम्॥ १८॥

---

तेन सङ्घातभावोपपत्तिः कथमित्यत्राह **एतदुक्तंभवती**ति। अविद्यां विवृणोति **क्षणिकादिष्वि**ति। **आदि**शब्दद्वयं कार्यत्वनित्यत्वादिमिथोविरुद्धाकारपरम्। क्षणिककार्यदुःखशून्यस्वभावेषु पदार्थेषु स्थायिनित्यसुखवस्तुत्वबुद्धिरित्यर्थः। तस्या रागादिहेतुत्वं स्फुटम्। रागादयः संस्काराः। ते च ग्राहकाभिमानारूढस्य सूक्ष्मचित्तसन्तानस्य प्रदेशान्तरं नीयमानस्य प्रतिक्षणमुपजायमानस्य दीपसन्तानस्येव मातृकुक्षिप्रवेशहेतवः। गर्भगतस्य तदनन्तरभाविनी विषयज्ञप्तिर्विज्ञानम्। तदिदमाह **ततश्चित्ताभिज्वलनरूप**मिति। **ततश्चे**ति। तदुत्तरोत्तरविषयविज्ञप्तिश्चि**त्तम्**। तेन सह जन्मविनाशभाजः स्पर्शवेदनासंज्ञाचेतनावितर्कविचारप्रीत्येकाग्रताश्रद्धावीर्यस्मृतिप्रज्ञादयः कुशलाकुशलरूपा धर्माः। एते चित्तचैत्ताः नामाख्याः। ततश्च पृथिव्यादिकं च रूपिद्रव्यमिति कललादि(कालाति)क्रमेण पुञ्जीभावसिद्धिरित्यर्थः। तत इन्द्रियषट्कनिष्पत्तिमाह-**तत** इति। अत्र **स्पर्शशब्दः** चैत्तकुशलधर्मान्तर्गतस्पर्शादर्थान्तरपरः, कायवाचित्वात्। **ततो वेदनादय** इति। **वेदना** सुखदुःखादिबुद्धिः। **आदिशब्देन** तृष्णोपादानभवजातिजरामरणशोकपरिदेवनदुःखदौर्मनस्यानि उपक्लेशरूपमदमानादयः उपवासाश्च गृह्यन्ते। अत्र **तृष्णा** [[1]कर्तव्यमेतत् सुखमित्यध्यवसानम्। उपादानं] वाक्कायचेष्टा। **भवशब्दो** धर्माधर्मवाची। ततः स्कन्धप्रादुर्भावो जातिः। मानसदुःखं दौर्मनस्यम्। **अविद्यादिभिर्वेदनादयः, वेदनादिभिरविद्यादयः; अविद्यादिभिर्जन्म**जरादयः, तैरविद्यादय इति वा स्यादितरेतरप्रत्ययत्वम्; उभयथापि नार्थभेदः; वेदनादिषु जन्मजरादीनामन्तर्गतत्वात्। **एतच्चे**ति। अविद्यादिभिः सङ्घातः, सङ्घातादविद्यादिकमिति उपलभ्यमानं चक्रकम् अविद्यादिहेतुभूतसङ्घातानभ्युपगमे तु नोपपद्यत इत्यर्थः। अविद्यादीनां स्वरूपेण कार्यकरत्वानुपपत्तिमाह **शुक्तिके**ति। न हि शुक्तिकादौ रजतादिभ्रमे सति शुक्तिकाद्वयं संहतं भवतीत्यर्थः। यद्वा न शुक्तिरङ्गुलीयकादिकार्यकरी भवतीत्यर्थः। सूत्राभिप्रेतं सहकारिवैकल्यमाह-**किञ्चे**ति। संस्कारेणेति चेत्—तत्राह **संस्काराश्रय**मिति। संस्कारश्च तदाश्रयश्च नष्ट इत्यर्थः॥

---

1. भामती-भावप्रकाशिकयोरनुसारादिदं पूरितम्।

**उत्तरोत्पादे च पूर्वनिरोधात्** ॥ २-२-१९ ॥

इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिर्नोपपद्यते ; उत्तरक्षणोत्पत्तिवेलायां पूर्वक्षणस्य विनष्टत्वात् तस्योत्तरक्षणं प्रति हेतुत्वानुपपत्तेः। अभावस्य हेतुत्वे, सर्वं सर्वत्र सर्वदोत्पद्येत। अथ पूर्वक्षणवर्तित्वमेव हेतुत्वमित्युच्यते, एवं तर्हि कश्चिदेव घटक्षणस्तदुत्तरकालभाविनां सर्वेषामेव गोमहिषाश्वकुड्यपाषाणादीनां त्रैलोक्यवर्तिनां हेतुः स्यात्। अथैकजातीयस्यैव पूर्वक्षणवर्तिनो हेतुत्वमिष्यते—तथाऽपि सर्वदेशवर्तिनामुत्तरक्षणभाविनां घटानामेक एव पूर्वक्षणवर्तिघटो हेतुः स्यात्। अथैकस्यैव हेतुरेक इति मनुषे—तथाऽपि कस्यैकस्य को हेतुरिति न ज्ञायते। अथ यस्मिन् देशे यो घटक्षणः स्थितः, तद्देशसंबन्धिन एवोत्तरघटक्षणस्य स हेतुरिति—किं देशस्य स्थिरत्वं मनुषे? किञ्च चक्षुरादिसंप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकाले अनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवति ॥ १९ ॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॥ २-२-२० ॥

असत्यपि हेतौ कार्यमुत्पद्यते चेत्—सर्वं सर्वत्र सर्वदोत्पद्येतेत्युक्तम्। न केवलमुत्पत्तिविरोध एव; प्रतिज्ञा च भवतामुपरुध्येत। 'अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतवः' इति वः प्रतिज्ञा। अधिपतिरिन्द्रियम्। अथ प्रतिज्ञानुपरोधाय घटक्षणे स्थित एव घटक्षणान्तरोत्पत्तिरिष्यते—तथा च सति द्वयोः कार्यकारणयोर्घटक्षणयोर्यौगपद्येनोपलब्धिः प्रसज्येत। न च तथोपलभ्यते। क्षणिकत्वप्रतिज्ञा चैवं हीयेत॥ क्षणिकत्वं स्थितमेवेति चेत्—इन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येत ॥ २० ॥

**प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्** ॥ २-२-२१ ॥

एवं तावदसत उत्पत्तिर्निरस्ता ; सतो निरन्वयविनाशोऽपि नोपपद्यत इत्युच्यते। क्षणिकत्ववादिभिर्मुद्गराभिघाताद्यनन्तरभावितयोपलब्धियोग्यः सदृशसन्तानावसानरूपः स्थूलो यः, सदृशसन्ताने प्रतिक्षणभावी चोपलब्ध्यनर्हः सूक्ष्मश्च यो निरन्वयो विनाशः प्रतिसङ्ख्यानिरोधा-

---

**उत्तरोत्पादे च पूर्वनिरोधात्** ॥ क्षणशब्दः क्षणिकपदार्थवाची । **किं देशस्ये**त्यादिभाष्यानन्तरमिदमपि पदकपर्वाभिप्रेतम्—यद्देशसंतानस्थितो यो घटः, स तद्देशसन्तानसंबन्धिन उत्तरघटक्षणस्य हेतुरिति चेन्न ; देशान्तरं नीयमानस्य तस्याप्युत्तरोत्तरं नीयमानस्य देशान्तरसंबन्धिसन्तानदर्शनादिति । उक्तं दूषणं न वस्तुन्येव ; ज्ञानेऽपि तुल्यमित्यभिप्रायेणाह-**किञ्चे**ति ।

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॥ **सहकारी**—आलोकादिः। **आलम्बनम्**—विषयः। **समनन्तरप्रत्ययः**—अनन्तरपूर्वक्षणप्रत्ययः। अनुपरोधं शङ्कते-**अथे**ति। पूर्वक्षणस्योत्तरक्षणानुवृत्तौ युगपदुपलब्धिप्रसङ्गः क्षणिकत्वहानिश्चेति दूषणद्वयमाह **तथा चे**त्यादिना। शङ्कते **क्षणिकत्व**मिति। **क्षणिकत्वं स्थितमेवेति चे**दिति। उत्तरक्षणः पूर्वक्षणवर्ती चेदित्यर्थः। दूषयति **इन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येते**ति। ततः कार्यकारणभावाभावप्रसङ्ग इत्यर्थः। युगपदुपलब्धिप्रसङ्गश्चार्थसिद्धः। ज्ञानतत्कारणयौगपद्यप्रसङ्गः प्रदर्शनार्थः ; अर्थेष्वपि कारणभूतघटक्षणकार्यभूतघटक्षणयोर्यौगपद्यप्रसङ्ग इत्यभिप्रायः ॥

प्रतिसङ्ख्यानिरोधशब्दाभ्यामभिधीयेते, तौ न संभवत इत्यर्थः। कुतः? अविच्छेदात्। सतो निरन्वयविच्छेदासम्भवात्। असंभवश्च—'सत उत्पत्तिविनाशौ नाम अवस्थान्तरापत्तिरेव; अवस्थायोगि तु द्रव्यमेकमेव स्थिरम्' इति कारणादनन्यत्वं कार्यस्योपपादयद्भिरस्माभिः 'तदनन्यत्वम्' इत्यत्र प्रतिपादितः॥ निर्वाणस्य दीपस्य निरन्वयविनाशदर्शनादन्यत्रापि विनाशो निरन्वयोऽनुमीयत इति चेन्न; घटशरावादौ मृदादिद्रव्यानुवृत्त्युपलब्ध्या सतो द्रव्यस्यावस्थान्तरापत्तिरेव विनाश इति निश्चिते सति, प्रदीपादौ सूक्ष्मदशापत्त्याऽप्यनुपलम्भोपपत्तेः, तत्राप्यवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वात्॥ २१॥

## उभयथा च दोषात्॥ २-२-२२॥

क्षणिकत्ववादिभिरभ्युपेता तुच्छादुत्पत्तिः, उत्पन्नस्य तुच्छतापत्तिश्च न संभवतीत्युक्तम्। तदुभयप्रकाराभ्युपगतौ दोषश्च भवति—तुच्छादुत्पत्तौ तुच्छात्मकमेव कार्यं स्यात्। यद्धि यस्मादुत्पद्यते, तत् तदात्मकं दृष्टम्; यथा मृत्सुवर्णादेरुत्पन्नं मणिकमुकुटादि मृत्सुवर्णाद्यात्मकं दृष्टम्। न च जगत् तुच्छात्मकं भवद्भिरभ्युपगम्यते; न च प्रतीयते। सतो निरन्वयविनाशे सति एकक्षणादूर्ध्वं कृत्स्नस्य जगतस्तुच्छतापत्तिरेव स्यात्। पश्चात् तुच्छाज्जगदुत्पत्तावनन्तरोक्तं तुच्छात्मकत्वमेव स्यात्। अत उभयथापि दोषान्न भवदुक्तप्रकारावुत्पत्तिनिरोधौ॥ २२॥

## आकाशे चाविशेषात्॥ २-२-२३॥

बाह्याभ्यन्तरवस्तुनः स्थिरत्वप्रतिपादनाय प्रतिसंख्याऽप्रतिसंख्यानिरोधयोस्तुच्छरूपता निराकृता; तत्प्रसङ्गेन ताभ्यां सह तुच्छत्वेन सौगतैः परिगणितस्याकाशस्यापि तुच्छता प्रतिक्षिप्यते। आकाशे च निरुपाख्यता न युक्ता; भावरूपत्वेनाभ्युपगतपृथिव्यादिवत् आकाशस्यापि अबाधितप्रतीतिसिद्धत्वाविशेषात्। प्रतीयते ह्याकाशः 'अत्र श्येनः पतति, अत्र गृध्रः' इति श्येनादिपतनदेशत्वेन। न च पृथिव्याद्यभावमात्रमाकाश इति वक्तुं शक्यम्; विकल्पासहत्वात्। पृथिव्यादेः प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावो वा आकाशः—सर्वथाऽप्याकाशप्रतीत्यनुपपत्तिः स्यात्। प्रागभावप्रध्वंसाभावयोराकाशत्वे पृथिव्यादिषु वर्तमानेषु आकाशप्रतीत्ययोगात् निराकाशं जगत् स्यात्। इतरेतराभावस्याकाशत्वेऽपि, इतरेतराभावस्य तत्तद्वस्तुगतत्वेन तेषामन्तराले आकाशप्रतीतिर्न स्यात्। अत्यन्ताभावस्तु पृथिव्यादीनां न संभवति। अभावस्य विद्यमानपदार्थावस्थाविशेषत्वोपपादनाच्च आकाशस्याभावरूपत्वेऽपि न निरुपाख्यत्वम्। अण्डान्तर्वर्तिनश्चाकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वात् चाक्षुषत्वेऽप्यविरोधः॥ २३॥

---

**प्रतिसङ्ख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्॥ तदनन्यत्वमित्यत्र प्रतिपादित** इति। वस्त्वन्तरानुपलब्धेः, बुद्धिशब्दान्तरादीनामन्यथोपपत्तेश्चेत्यर्थः। **निर्वाणस्येति**। अबाधितप्रत्यभिज्ञया मृदनुवृत्तौ सत्यां न तदपह्नवो युक्तः; दृष्टेनादृष्टकल्पनं हि युक्तम्; न तु दृष्टहानमित्यर्थः॥

**उभयथा च दोषात्॥ न च प्रतीयते**। न तुच्छत्वेन प्रतीयत इत्यर्थः॥

**आकाशे चाविशेषात्॥ बाह्येत्यादि**। क्षणिकत्वदूषणोपयुक्तत्वाभावात् प्रसङ्गात्सङ्गतिरित्यर्थः। **चाक्षुषत्वेऽप्यविरोध** इति। अनेनानुमेयत्वमप्यनुमतमित्यवगम्यते। यद्वा—चाक्षुषमेव; तथापि तत्प्रयुक्तविरोधो नास्तीत्यर्थः॥

**अनुस्मृतेश्च ॥ २-२-२४ ॥**

पूर्वप्रस्तुतं वस्तुनः स्थिरत्वमेवोपपाद्यते। अनुस्मरणं पूर्वानुभूतवस्तुविषयं ज्ञानम्; प्रत्यभिज्ञानमित्यर्थः, तदेवेदमिति, सर्वं वस्तुजातमतीतकालानुभूतं प्रत्यभिज्ञायते; न च भवद्भिः ज्वालादिष्विव सादृश्यनिबन्धनोऽयमेकत्वव्यामोह इति वक्तुं शक्यम्; व्यामुह्यतो ज्ञातुरेकस्यानभ्युपगमात्। न ह्यन्यानुभूतेनैकत्वं सादृश्यं वा स्वानुभूतस्यान्योऽनुसंधत्ते। अतो भिन्नकालेवस्त्वाश्रयसादृश्यानुभवनिबन्धनमेकत्वव्यामोहं वदद्भिर्ज्ञातुरेकत्वमवश्याश्रयणीयम्। न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधनप्रमाणमुपलभामहे; येन सादृश्यनिबन्धनां प्रत्यभिज्ञां कल्पयेम।

यदपि चेदमुच्यते—प्रत्यक्षानुमानाभ्यां घटादेः क्षणिकत्वं सिद्ध्यति। प्रत्यक्षं तावत् वर्तमानार्थविषयमवर्तमानाद्वस्तुनो व्यावृत्तं स्वविषयमवगमयति, नीलमिव पीतात्, एवं च भूतभविष्यद्भ्यां वर्तमानस्य वस्त्वन्तरत्वमवगतं भवति। अनुमानमपि—अर्थक्रियाकारित्वात् सत्त्वाच्च घटादिः क्षणिकः, यदक्षणिकं शशविषाणादि तदनर्थक्रियाकारि असच्च, तथा अन्त्यघटक्षणसत्त्वात्पूर्वघटक्षणसत्त्वानि विनाशीनि घटक्षणसत्त्वात् अन्त्यघटक्षणसत्त्ववदिति—

तच्च कार्यकारणभावानुपपत्त्यादिभिः पूर्वमेव निरस्तम्। किञ्च प्रत्यक्षगम्या वर्तमानस्यावर्तमानाद्व्यावृत्तिर्न वर्तमानस्य वस्त्वन्तरत्वमवगमयति; अपि तु वर्तमानकालयोगितामात्रम्। न च तावता वस्त्वन्तरत्वं सिद्ध्यति, तस्यैव कालान्तरयोगसंभवात्।

यत्तु सत्त्वादर्थक्रियाकारित्वाच्चेति क्षणिकत्वे हेतुद्वयमुक्तम्—तत् अभिमतविपरीतसाधनत्वाद्विरुद्धम्। सत्त्वादर्थक्रियाकारित्वाद्वा घटादि स्थास्नु; यदस्थास्नु तदसत् अनर्थक्रियाकारि च; यथा शशविषाणमित्यपि हि वक्तुं शक्यम्। किञ्च, अर्थक्रियाकारित्वमक्षणिकत्वमेव साधयेत्। क्षणध्वंसिनो हि व्यापारासंभवादर्थक्रियाकारित्वं न संभवतीत्युक्तम्। तथाऽन्त्यघटक्षणस्य हेतुतो नाशदर्शनादितरेऽपि घटक्षणा हेत्वपेक्षविनाशाः स्युरिति आ मुद्गरादिहेतूपनिपातात् स्थास्नुत्वमेव। न च वाच्यम्—न मुद्गरादयो विनाशहेतवः, अपि तु कपालादिविसदृशसन्तानोत्पत्तिहेतव इति; कपालत्वावस्थापत्तिरेव घटादीनां विनाश इत्युपपादितत्वात्। कपालोत्पत्तिव्यतिरिक्तत्वाभ्युपगमेपि विनाशस्य, विनाशहेतुत्वमेव मुद्गरादेरानन्तर्यात् युक्तम्।

---

**अनुस्मृतेश्च** ॥ प्रत्यभिज्ञानादित्यर्थः। स्मृतिसादृश्यादनुस्मृतिशब्देनाभिधानम्। **घटादिषुज्वालादिष्विवेति**। उत्पत्तिविनाशसामग्र्यनुवृत्त्यभावादित्यर्थः। **तच्चकार्यकारणेति**। तर्कानुगृहीतप्रत्यभिज्ञाप्रत्यक्षेण तर्कविरुद्धमनुमानं बाधितमित्यर्थः। **कार्यकारणभावानुपपत्त्यादिभिरिति** प्रत्यक्षानुमानसाधारणं दूषणमुक्तम्; अथ प्रत्यक्षस्य क्षणिकविषयत्वं दूषयति **किञ्चेति**। **तस्यैवेति**। यथा वस्तुनो नीलत्वोत्पलत्वयोगो न वस्त्वन्तरत्वसाधकः, तथा कालद्वययोगोऽपि संभवतीत्यर्थः। अनुमानद्वयमपि दूषयति **यत्त्विति**। तत् **अभिमतविपरीतसाधनत्वात्** विपर्ययेणापि व्याप्तिसद्भावात् **विरुद्धं** विपरीतस्यापि साधकमित्यर्थः। विपरीतव्याप्तिं दर्शयति **सत्त्वादिति**। प्रकरणसमत्वमुक्तम्; अर्थक्रियाकारित्वस्य हेतोरभिमतविरुद्धस्यैव साधकत्वमाह **किञ्चेति**। **व्यापारासंभवात्**। व्यापारस्य हेतुत्वमाश्रयत्वं च न संभवति; उत्पत्त्यनन्तरक्षण एव विनष्टत्वात्। अतो नाभिमतकार्यकरत्वमित्यर्थः। 'समीहितविपर्ययसाधनो विरुद्धः' इति विरुद्धलक्षणम्। घटक्षणसत्त्वस्य हेतोः सोपाधिकत्वमाह **तथाऽन्त्येति**। **आनन्तर्यायुक्तमिति**। न हि घटे तिष्ठति कपालोत्पत्तिः; अपितु विनाशादनन्तरमेवोत्पत्तिः; मुद्गराभिघाताद्य-

अतः प्रत्यभिज्ञया स्थिरत्वमवगम्यमानं न केनापि प्रकारेणापह्नोतुं शक्यम्। पूर्वापरकाल-सम्बन्ध्यर्थैक्यविषयायाः प्रत्यभिज्ञाया अन्यविषयत्वं ब्रुवन् नीलादिज्ञानानामपि नीलादेरर्थान्तर-विषयत्वं ब्रूयात्। किञ्च,प्रमातृप्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारणतत्स्मरणपूर्वकानुमानाभ्यु-पगमोऽपि दुःशकः। तथा—इदं क्षणिकमित्यादिप्रतिज्ञापूर्वकहेतूपन्यासादिकमपि नोपपद्यते भव-ताम् । प्रतिज्ञोपक्रमक्षण एव वक्तुर्विनष्टत्वात्। न ह्यन्येनोपक्रान्तमजानद्भिरन्यैः समापयितुं शक्यम् ॥ २४ ॥

नासतोऽदृष्टत्वात् ॥ २-२-२५ ॥

एवं तावत् वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्तित्ववादिनोः साधारणानि दूषणान्युक्तानि। तत्र यदुक्तम्—संप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकाले अनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवतीति, तत्र सौत्रान्तिकः प्रत्यवतिष्ठते—न ज्ञानकालेऽनवस्थानमर्थस्य ज्ञानाविषयत्वहेतुः, ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वम्। न चैतावता चक्षुरादेर्ज्ञानविषयत्वप्रसङ्गः। स्वाकार-समर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्युपगमात्। ज्ञाने स्वाकारं समर्प्य विनष्टोऽप्यर्थो ज्ञानगतेन नीलाद्याकारेणानुमीयते ; न च पूर्वपूर्वज्ञानेनोत्तरोत्तरज्ञानाकारसिद्धिः ; नीलज्ञानसन्ततौ पीतज्ञा-नानुत्पत्तिप्रसङ्गात्। अतोऽर्थकृतमेव ज्ञानवैचित्र्यमिति। अत्रोच्यते—'नासतोऽदृष्टत्वात्' इति। योऽयं ज्ञाने नीलादिराकार उपलभ्यते, स विनष्टस्यासतोऽर्थस्याऽऽकारो भवितुं नार्हति। कुतः? अदृष्टत्वात्। न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृष्टम् । प्रतिबिम्बादिकमपि स्थिरस्यैव भवति। तत्रापि न धर्ममात्रस्य। अतोऽर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमर्थस्य ज्ञानकाले अवस्थानादेव भवति ॥ २५ ॥

पुनरपि साधारणं दूषणमाह—

उदासीनानामपि चैवं सिद्धिः ॥ २-२-२६ ॥

---

नन्तरभावी विनाशः इति अनन्तरभाविनं प्रति हेतुत्वं युक्तम् ; न तु व्यवहितं प्रतीत्यभिप्रायः। **पूर्वेति** । ज्ञानं यथा स्वविषयं दर्शयति, तस्य तथात्वमेव। अन्यथाऽतिप्रसङ्ग इत्यर्थः। **किञ्चेत्यादि प्रमातृप्रमेययो**-रित्यादिना स्वार्थानुमानस्य दुर्वचत्वमुक्तम् ; **तथे**त्यादिना परार्थानुमानानुपपत्तिरुक्ता। न च प्रत्यभिज्ञायाः सामग्र्यनुपपत्तिर्वक्तुं शक्यते, संस्कारसचिवेन्द्रियसंप्रयोगस्य सामग्रीत्वात् । लिकुचस्य कर्पूरसाहचर्यात् विलक्षणकार्यकरत्वं दृष्टम् ; तद्वत्। अतीतविषये स्मृतित्वात् संनिहितविषयेऽनुभवत्वात् प्रत्यभिज्ञास्वरूपं दुर्घटमिति चेन्न ; एकज्ञानतयैवावभासमानत्वात्। सम्प्रतिपन्नैकज्ञानवत् एकत्वं हि प्रतीयते । नापि विषयानुपपत्तिः; एकस्य वस्तुनः कालद्वयसंबन्धविषयत्वात् कालविशिष्टाकारे कालान्तरान्वयपरत्वाभावात् ॥

**नासतो दृष्टत्वात्** ॥ सौत्रान्तिकस्य प्रत्यवस्थानावसरं दर्शयति-**तत्र यदुक्त**मिति। **उत्तरो-त्पादे** चेत्यादिसूत्रषट्कं दृष्टमुखेन दूषणपरम्। अतो दृष्टानुबन्धिदूषणानन्तरं सौत्रान्तिकावसरः दृष्टा-नुबन्धिदूषणपरिहारार्थः। योगाचारमतमाशङ्क्य दूषयति **न च पूर्वे**ति। विनष्टस्याकारः प्रतिबिम्बित इत्यत्राह **प्रतिबिम्बादिक**मिति। **आदिशब्देन** स्फटिके जपाकुसुमस्य छायापत्तिर्विवक्षिता। **तत्रापीति**। न केवलं धर्ममात्रस्य प्रतिबिम्बो दृष्टः, धर्मिण एव तु दृष्ट इत्यर्थः ॥

एवं क्षणिकत्व-असदुत्पत्ति-अहेतुकविनाशाद्यभ्युपगमे उदासीनानाम्—अनुद्युञ्जानानामपि सर्वार्थसिद्धिः स्यात्। इष्टप्राप्तिरनिष्टनिवृत्तिर्वा प्रयत्नादिभिः साध्यते; क्षणध्वंसे हि सर्वेषां भावानां पूर्वपूर्वं वस्तु तद्गतो वा विशेषः संस्कारादिको विद्यादिर्वा उत्तरत्र न कश्चिदनुवर्तत इति प्रयत्नादिभिः साध्यं न किञ्चिदस्ति। एवं सति अहेतुसाध्यत्वात् सर्वसिद्धीनामुदासीनानामप्यैहिकामुष्मिकफलं मोक्षश्च सिद्ध्येत्॥ २६॥ इति समुदायाधिकरणम्॥

उपलब्ध्यधिकरणम्—२-२-४.

**नाभाव उपलब्धेः ॥ २-२-२७॥**

विज्ञानमात्रास्तित्ववादिनो योगाचाराः प्रत्यवतिष्ठन्ते—यदुक्तमर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमिति—तन्नोपपद्यते; अर्थवत् ज्ञानानामेव साकाराणां स्वयमेव विचित्रत्वात्। तच्च स्वरूपवैचित्र्यं वासनावशादेवोपपद्यते। वासना च विलक्षणप्रत्ययप्रवाह एव। यत् घटाकारं ज्ञानं कपालाकारज्ञानस्योत्पादकम्, तस्य तथाविधस्योत्पादकं तत्पूर्वघटज्ञानम्, तस्य च तथाविधस्योत्पादकं ततः पूर्वघटज्ञानमित्येवंरूपः प्रवाह एव वासनेत्युच्यते। कथं बहिःष्ठसर्षपमहीधरादे(दि)राकार आन्तरस्य ज्ञानस्यैवेत्युच्यते? इत्थम्। अर्थस्यापि व्यवहारयोग्यत्वं ज्ञानप्रकाशायत्तम्, अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात्। प्रकाशमानस्य च ज्ञानस्य साकारत्वमवश्याश्रयणीयम्; निराकारस्य प्रकाशायोगात्। एकश्चायमाकार उपलभ्यमानो ज्ञानस्यैव। तस्य च बहिर्वदवभासोऽपि भ्रमकृतः। ज्ञानार्थयोः सहोपलम्भनियमाच्च ज्ञानादव्यतिरिक्तोऽर्थः। किञ्च बाह्यमर्थमभ्युपयद्भिरपि घटपटादिविज्ञानेषु ज्ञानस्य तत्तदर्थासाधारण्यं तत्तदर्थसारूप्यमन्तरेण नोपपद्यत इत्यवश्यं ज्ञानेऽर्थसरूपं रूपमास्थेयम्। तावतैव सर्वव्यवहारोपपत्तेः तद्व्यतिरिक्तार्थकल्पना निष्प्रमाणिका। अतो विज्ञानमात्रमेव तत्त्वम्; न बाह्यार्थोऽस्तीति—

---

**उदासीनानामपि चैवं सिद्धिः ॥** उदासीनानामर्थसिद्धेरनिष्टत्वमाह **इष्टेति**। प्रयत्नसाध्यत्वासंभवमाह **क्षणध्वंसे हीति**। स्वर्गादिहेतुभूतविशेषः संस्कारादिः, मोक्षहेतुविशेषो विद्यादिः॥

**नाभाव उपलब्धेः ॥** किमर्थशून्यज्ञानवादे जगदुत्पत्तिः संभवति, नेति; स पक्षः समीचीनयुक्तिमूलः, नेति; घटाद्याकारो ज्ञानाकार उतार्थाकार इति; किमर्थासाधारण्यं नाम तत्तदर्थसारूप्यम्, उतार्थसंबन्ध इति; किं घटाद्याकारातिरेकेणार्थव्यवहारानुगुण्यं नाम ज्ञानाकारो भासते, न वेति। यदा आकारान्तरं न भासते, यदा चार्थसारूप्यलक्षणमर्थासाधारण्यम्—तदा घटाद्याकारो विज्ञानाकार इति विज्ञानमात्रवादस्य सम्यग्युक्तिमूलत्वात् तत्र जगदुदयसम्भवः; यदा ज्ञानस्य तत्तदर्थव्यवहारानुगुण्यमाकारान्तरं भासते, यदा चार्थासाधारण्यं तत्सम्बन्धलक्षणम्— तदा घटाद्याकारस्य ज्ञानाकारत्वाभावात् योगाचारमतस्य युक्तिशून्यतया तत्पक्षे न जगदुत्पत्तिसंभवः। वैचित्र्यं कथमित्यत्राह **स्वरूपेति**। विजातीयज्ञानोत्पत्तिः कथमित्यत्राह-**यद्घटाकारेति**। विसजातीयज्ञानसन्तानेषु चरमज्ञानं विजातीयोत्पादनशक्तमित्यर्थः। यथा अर्थाभ्युपगमेऽपि विजातीयघटादेर्विजातीयकपालाद्युत्पादकत्वम्, तथेति भावः। **ज्ञानार्थयोरिति**। द्विचन्द्रज्ञाने चन्द्रद्वयसहोपलम्भनियमाद्धि द्वितीयचन्द्रस्य चन्द्रादव्यतिरिक्तत्वम्, तद्वदिति भावः। **किञ्चेत्यादि**। ज्ञानानामेव वासनावशाद्वैचित्र्योपपत्तेः चरमज्ञानस्यैवार्थवत् विजातीयोत्पादनशक्तत्वाच्च, ज्ञानानां साकारतयैव प्रकाशमानत्वेन आकारद्वयानुपलब्ध्या ज्ञानस्यैव

एवं प्राप्ते प्रचक्ष्महे—नाभाव उपलब्धेरिति । ज्ञानातिरिक्तस्यार्थस्याभावो वक्तुं न शक्यते ; कुतः ? उपलब्धेः—ज्ञातुरात्मनोऽर्थविशेषव्यवहारयोग्यतापादनरूपेण ज्ञानस्योपलब्धेः । एवमे(मि)व हि सर्वे लौकिकाः प्रतियन्ति—'घटमहं जानामि' इति । एवंरूपेण सकर्मकेण सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमानेनैव, 'ज्ञानमात्रमेव परमार्थः' इति साधयन्तः सर्वलोकोपहासोपकरणं भवन्तीति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपञ्चितम् ।

यत्तु "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति, तत् स्ववचनविरुद्धम् ; साहित्यस्यार्थभेदहेतुकत्वात् । 'तदर्थव्यवहारयोग्यतैकस्वरूपस्य ज्ञानस्य तेन सहोपलम्भनियमः तस्मादवैलक्षण्यसाधनमिति न हास्यम् । निरन्वयविनाशिनां ज्ञानानामनुवर्तमानस्थिराकारविरहात् वासना च दुरुपपादा । विनष्टेन पूर्वज्ञानेनानुत्पन्नमुत्तरज्ञानं कथं वास्यते । अतो ज्ञानवैचित्र्यमप्यर्थवैचित्र्यकृतमेव । तत्तदर्थव्यवहारयोग्यतापादनरूपतया साक्षात्प्रतीयमानस्य ज्ञानस्य तत्तदर्थसंबन्धायत्तं तत्तदसाधारण्यम् । संबन्धश्च संयोगलक्षणः । ज्ञानमपि हि द्रव्यमेव । प्रभाद्रव्यस्य प्रदीपगुणभूतस्येव ज्ञानस्याप्यात्मगुणभूतस्य द्रव्यत्वमविरुद्धमित्युक्तम् । अतो न बाह्यार्थाभावः॥२७॥

यत् परैः स्वप्नज्ञानदृष्टान्तेन जागरितज्ञानानामपि निरालम्बनत्वमुक्तम् ; तत्राह—

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २-२-२८ ॥

स्वप्नज्ञानवैधर्म्यात् जागरितज्ञानानामर्थशून्यत्वं न युज्यते वक्तुम् । स्वप्नज्ञानानि हि निद्रादिदोषदुष्टकरणजन्यानि बाधितानि च, जागरितज्ञानानि तु तद्विपरीतानीति तेषां न तत्साम्यम् । सर्वेषां च ज्ञानानामर्थशून्यत्वे, भवद्भिः साध्योऽप्यर्थो न सिद्ध्यति ; निरालम्बनानु-

---

तत्तदाकारभाक्त्वाच्च, सहोपलम्भनियमाच्च, बाह्यार्थाभ्युपगमेऽपि ज्ञानस्य तत्तदर्थासाधारण्यस्य तत्तदर्थसारूप्यनिबन्धनत्वाच्च, तावतैव सर्वव्यवहारोपपत्तेश्च ज्ञानमात्रमेव तत्त्वमित्यर्थः । **एवं प्राप्त** इत्यादि । **ज्ञातुरात्मनोऽर्थविशेषव्यवहारयोग्यतापादानरूपेणे**ति । अनेन निराकारस्य प्रकाशायोगादिति हेतुः प्रत्युक्तः । न नीलादिर्ज्ञानाकारः ; तत्तन्नीलाद्यर्थव्यवहारानुगुण्यमेव ज्ञानस्याकार इत्यस्यार्थस्योक्तत्वात् । उपलब्धिं दर्शयति **एवमेव ही**ति । **एवंरूपेणे**ति । ज्ञानं सकर्मकं सकर्तृकमेव भासते. तत्र ज्ञानमात्रस्यैव पारमार्थ्यं किमनेनैव ज्ञानेन साध्यते, उत ज्ञानान्तरेण ? चरमः पक्षोऽनुपलब्धिनिरस्यः । प्रथमे च सकर्मके च सकर्तृके ज्ञाने परोक्षं भासमाने तत्र कस्यचिदंशस्यापारमार्थ्ये तदन्यस्याप्यपारमार्थ्यप्रसङ्गः । तस्मादपरोक्षसिद्धौ सर्वं ज्ञानवत् सत्यमित्यर्थः । **यत्त्वि**ति । साहित्यं द्वयोरेवेति तत् **भेदसाधकम्** ; उपलम्भनियमो भिन्नेष्वभिन्नेष्वपि नास्तीति असाधारणानैकान्तिकत्वम् ; किञ्च भेदहेतोर्नियमो भेदस्यैव साधकः इत्यभिप्रायेणोक्तं **तत्तदर्थे**त्यादि । तत्तदसाधारण्यस्य तत्तत्सारूप्यनिबन्धनत्वं परिहरति **तत्तदर्थे**ति । **सम्बन्धश्चे**ति । साक्षात्संबन्धः संयोग इत्यर्थः । संयोगो हि द्रव्ययोरित्यत्राह **ज्ञानमपि ही**ति । द्रव्यस्य द्रव्यान्तरधर्मैकस्वरूपत्वं कथमिति शङ्कायां प्रदीपदृष्टान्तेन परिहरति **प्रभाद्रव्यस्ये**ति ।

उत्तरसूत्रमवतारयति-**यत् परैरि**ति । **वैधर्म्याच्च न स्वप्नादिवत्** ॥ सोपाधिकत्वं स्वप्नादेर्मिथ्यात्वाभ्युपगमेनोक्तं सूत्रकारैः ; तदेव नास्तीति वक्ष्यते ॥

मान[ज्ञान]स्याप्यर्थशून्यत्वात्। तस्यार्थवत्त्वे ज्ञानत्वस्यानैकान्त्यात् सुतरामर्थशून्यत्वासिद्धिः॥२८॥

**न भावोऽनुपलब्धेः ॥ २९ ॥**

न केवलस्यार्थशून्यस्य ज्ञानस्य भावः संभवति; कुतः? क्वचिदप्यनुपलब्धेः। न ह्यकर्तृक-स्याकर्मकस्य वा ज्ञानस्य क्वचिदुपलब्धिः। स्वप्नज्ञानादिष्वपि नार्थशून्यत्वमिति ख्यातिनिरूपणे प्रतिपादितम्॥ २९ ॥ ॥ इति उपलब्ध्यधिकरणम्॥

सर्वथानुपपत्त्यधिकरणम्—२-२-५.

**सर्वथाऽनुपपत्तेश्च ॥ २-२-३० ॥**

अत्र सर्वशून्यवादी माध्यमिकः प्रत्यवतिष्ठते। शून्यवाद एव हि सुगतमतकाष्ठा। शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमादिना क्षणिकत्वादय उक्ताः। विज्ञानं बाह्यार्थाश्च सर्वे न सन्ति, शून्यमेव तत्त्वम्, अभावापत्तिरेव च मोक्ष इत्येव बुद्धस्याभिप्रायः। तदेव हि युक्तम्, शून्यस्याहेतुसाध्यतया स्वतः सिद्धेः। सत एव हि हेतुरन्वेषणीयः। तच्च सत् भावादभावाच्च नोत्पद्यते; भावात् तावन्न कस्यचिदुत्पत्तिर्दृष्टा। न हि घटादिरनुपमृदिते पिण्डादिके जायते। नाप्यभावादुत्पत्तिः संभवति, नष्टे पिण्डादिके ह्यभावादुत्पद्यमानं घटादिकमभावात्मकमेव स्यात्। तथा स्वतः परतश्चोत्पत्तिर्न भवति; स्वतः स्वोत्पत्तावात्माश्रयदोषप्रसङ्गात्; प्रयोजनाभावाच्च। परतः परोत्पत्तौ परत्वाविशेषात् सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः। जन्माभावादेव विनाशस्याप्य-भावः। अतः शून्यमेव तत्त्वम्। अतो जन्मविनाशसदसदादयो भ्रान्तिमात्रम्। न च निरधिष्ठान-भ्रमासम्भवाद्भ्रमाधिष्ठानं किञ्चित्पारमार्थिकं तत्त्वमाश्रयितव्यम्। दोषदोषाश्रयत्वज्ञातृत्वाद्य-पारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। अतः शून्यमेव तत्त्वमिति प्राप्ते-

उच्यते—सर्वथानुपपत्तेश्च इति। सर्वथाऽनुपपत्तेः सर्वशून्यत्वं च भवदभिप्रेतं न संभवति। किं भवान् सर्वं सदिति वा प्रतिजानीते, अन्यथा वा। सर्वथा तवाभिप्रेतं तुच्छत्वं न संभवति;

---

**न भावोऽनुपलब्धेः** ॥ **क्वचिदपी**त्यस्यायमभिप्रायः—सुषुप्तौ केवलधर्मिस्फुरणमेव; न धर्म-भूतज्ञानस्येति ॥ कथं क्वचिदनुपलब्धिः, स्वप्ने ह्यर्थशून्यं ज्ञानमित्यत्राह **स्वप्नज्ञानादिष्वपी**ति ॥

**सर्वथाऽनुपपत्तेश्च** ॥ किं माध्यमिकेनोक्तः सर्वशून्यवादः संभवति, नेति; किं सर्वं कार्यं भावरूपम्, उताभावरूपमिति; सर्वकार्येष्वपि भाव एव कारणम्, उताभाव इति; किं भावान्तरमभाव-रूपम्, उत तुच्छं नाम अर्थान्तरम्। यदा तुच्छं नाम अर्थान्तरमभावः, तदा सर्वकार्येष्वभाव एव कारणमिति कार्यस्याप्यभावात्मकतया शून्यवादः उपपन्न स्यात्। यदा भावान्तरमभावः, तदा सर्वकार्येषु भाव एव कारणमिति कार्यस्यापि भावरूपत्वात् सर्वशून्यवादोऽनुपपन्नः स्यात्। **अहेतुसाध्यतये**ति। सतो हेत्वभावादेव शून्यसिद्धिः; न तु साधकहेत्वन्तरापेक्षयेत्यर्थः। कथं सतो हेत्वभाव इत्यत्राह **तच्चे**ति। **न ही**ति। विनाशादेव जायते इत्यर्थः। **प्रयोजनाभावाच्चे**ति। स्वयंविद्यमानत्वादुत्पत्तिनैरपेक्ष्यं प्रयोजना-भावः। स्वसत्ता ह्युत्पत्तेः प्रयोजनम्। पूर्वमेव सत्त्वान्नोत्पत्त्या प्रयोजनम्। किं सत उत्पत्तिः, उतासतः? सच्चेत्, नोत्पत्त्यपेक्षा। असच्चेत्, शशविषाणवन्नोत्पत्तिरिति भावः। **न चे**त्यादि **भ्रमाज्ञानवादि**चोद्य-निराकरणम्। पूर्वपक्षमुपसंहरति **अत** इति। **सर्वथा**शब्देन प्रमाणविकल्पानुपपत्तिः प्रमेयविकल्पानुपपत्तिश्च विवक्षिता। तत्र प्रमेयं विकल्पयति **किंभवा**निति। **अन्यथा वा**। किमुभयात्मकत्वेन, उतानुभयात्म-

लोके भावाभावशब्दयोस्तत्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोऽवस्थाविशेषगोचरत्वस्य प्रतिपादितत्वात्। अतः सर्वं शून्यमिति प्रतिजानता ?, सर्वं सदिति प्रतिजानतेव सर्वस्य विद्यमानस्यावस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति भवदभिमता तुच्छता न कुतश्चिदपि सिद्ध्यति। किञ्च कुतश्चित् प्रमाणात् शून्यत्वमुपलभ्य शून्यत्वं सिषाधयिषता तस्य प्रमाणस्य सत्यत्वमभ्युपेत्यम्, तस्यासत्यत्वे सर्वं सत्यं स्यादिति सर्वथा सर्वशून्यत्वं चानुपपन्नम् ॥३०॥ सर्वथानुपपत्त्यधिकरणम् ॥

---

कत्वेनेत्यर्थः। उभयात्मकत्वेऽनुभयात्मकत्वे चावस्थान्तरापत्तिरेवोक्ता स्यात्। लोकप्रतीत्या पराभ्युपगमप्रकारेण वा सत्त्वासत्त्वयोरवस्थाविशेषरूपत्वात्। न हि शून्यवादिन उभयप्रकारातिरेकेण साधनदूषणव्यवहारसंभवः। घटत्वं स्वापेक्षया सत्, कपालापेक्षया असदित्युभयात्मकत्वम्। घटः स्वापेक्षया नासन्; कपालापेक्षया असन् (न सन् ?); अतोऽनुभयात्मकत्वमप्यवस्थाविशेष इति। **सदिति प्रतिजानतेवेति**। 'किं सत्' इति विकल्पो दृष्टान्तार्थं इत्युक्तं भवति। प्रमाणानुपपत्तिमाह **किञ्चेति**। **प्रमाण**शब्दः प्रमितेरप्युपलक्षणार्थः। किं सर्वं शून्यमिति प्रमितिः तत्कारणं वा सत्यम्, उत न सत्यम्। सत्यं चेत्, न सर्वशून्यत्वम्; असत्यं चेत्, नितरा(नतरा ?)मित्यर्थः।

अधिकरणत्र[1](द्व ?)यात्मको बौद्धमतनिरासः। अणुहेतुको भूतभौतिकसंहतिरूपः, स्कन्धहेतुकश्च पञ्चस्कन्धीरूप इत्युभयहेतुकः समुदाय इति **परे**। चित्तचैत्तहेतुकश्चाभ्यन्तरः, बाह्यश्च भूतभौतिकसङ्घात **इत्यपरे**। तत्र पञ्चस्कन्धीरूपसमुदायानादरहेतुः पूर्वोक्तः। 'उभयथा च दोषात्' इत्यत्र—अविद्यारागादीनां विनाशः सपरिकरात् सम्यग्ज्ञानाच्चेत्, विनाशस्य निर्हेतुकत्वप्रतिज्ञाभङ्गः। स्वयमेवाविद्याविनाशश्चेत्, सर्वमुक्तिप्रसङ्गः, मोक्षमार्गोपदेशानर्थक्यं चेति परे। तदयुक्तम्; 'उदासीनानामपि चैवं सिद्धिः' इति सूत्रे ऐहिकामुष्मिकफलसाधनप्रवृत्तिवैयर्थ्यस्य वक्ष्यमाणतया पुनरुक्तिप्रसङ्गात्। 'नासतो दृष्टत्वात्' इत्यत्र—अभावाद्भावोत्पत्तिरनुपपन्ना; असतः शशविषाणादेः सदुत्पत्त्यदर्शनात्। अभावादुत्पत्त्यभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्निति **परे**। तच्चायुक्तम्; 'उत्तरोत्पादे च पूर्वनिरोधात्' इत्यत्रैवाभावाद्भावोत्पत्तौ दूषणस्य दर्शितत्वात्। तत्रैव हि कार्योत्पत्तिदशायां क्षणिकस्य कारणस्यावस्थानाभावनिबन्धनं दूषणं दर्शितम् ॥ दूषणभेदान्न पुनरुक्तिरिति चेन्न; दूषणभेदाभावात्. कथं चिद्दूषणभेदोत्प्रेक्षणेऽप्यभावाद् भावोत्पत्त्यनुबन्धितन्ना सर्वस्य दूषणस्यैकसूत्राभिप्रेतत्वसंभवात्। शब्दविरोधाभावात्; **पूर्वनिरोधादिति** हि शब्दः। न हि, अत्रेदं दूषणं विवक्षितम्, न त्वन्यद्विवक्षितमिति वक्तुं शक्यते; निरोधस्य शाब्दत्वात् तदनुबन्धिदूषणस्याभिप्रेतत्वाच्च। आभिप्रायिकत्वे हि-इयदेवाभिप्रेतव्यम्, नान्यदिति को निवारकः॥ पृथग्योगकरणमेव निवारकमिति चेन्न; तस्यार्थान्तरपरत्वेन प्रयोजनवत्तरत्वात्। क्षणिकत्वप्रयुक्तदूषणस्य साधारणत्वात् असाधारणदूषणेन सौत्रान्तिकनिरसनं हि प्रयोजनवत्तरम्। अपेक्षितस्य शाब्दत्वे संभवति कथं तदुपेक्षणेनान्यथासिद्धानपेक्षितार्थान्तरपरत्वाश्रयणं युक्तम् ॥ नीलादिराकार इति पदद्वयाध्याहारस्तदा स्यादिति चेत्—तवापि तुल्यम्। भावस्योत्पत्तिरिति पदद्वया-

---

1, त्रयेत्यत्र द्वयेति युक्तम्। स्वमते त्रयम्। परमते सर्वथानुपपत्तेश्चेत्यस्य पृथगधिकरणत्वाभावात् द्वयमेवेति।

ध्याहारेण हि भवद्योजना ॥ नन्वेवं तर्हि, 'उदासीनानाम्' इत्यनन्तरसूत्रे कथं साधारणदूषणोक्तिः ॥ न ; परपक्षेष्वसाधारणदूषणान्वितेषु साधारणदूषणमप्यनुसन्धेयमिति प्रदर्शनार्थत्वात् तदुक्तेः । 'वैधर्म्याच्च' इत्यादिसूत्रव्याख्यानं **परेषां** स्वपक्षविरुद्धम् ; कृत्स्नप्रपञ्चमिथ्यात्वनिरासकत्वात् तस्य सूत्रस्य ॥ ननु न विरोधः। ज्ञानार्थयोरभेदो योगाचाराभिमतः; वयं तु भेदमङ्गीकृत्यार्थमिथ्यात्वं ब्रूम इति चेत्-अर्थमिथ्यात्वस्यैव योगाचाराभिमतत्वात् । अन्यथा ज्ञानमिथ्यात्वार्थसत्यत्वयोरन्यतरप्रसङ्गात् । नन्वर्थतुच्छत्वं तदभिमतम् ; वयं तु तन्निरासेनानिर्वाच्यत्वं ब्रूम इति चेत्—तुच्छत्वमिति किमप्रतीतत्वं विवक्षितम् ; उत प्रतीतत्वेऽपि बाधार्हत्वम् । न तावदप्रतीतत्वं योगाचाराभिमतम् ; सहोपलम्भनियमस्य तैरुच्यमानत्वात् । द्वितीये तु शब्दवैषम्यमेव तेषां युष्माकं च; प्रतीतत्वे सति बाधार्हत्वस्योभयाभिमतत्वाच्च । अस्तु वा किञ्चिद्वैषम्यं भवतां ग्रन्थेष्वन्यग्रन्थात् ; तदानीमपि सूत्रं विरुद्धम् ; कारणदोषबाधकप्रत्यययोरनिर्वाच्यपक्षेऽप्युपाधित्वोपपत्तेरविशिष्टत्वात् । न ह्यनिर्वाच्यपक्षास्पर्शी कश्चिदुपाधिः सूत्रितः, व्याख्यातश्च । अतो विरुद्धत्वं स्थितम् । 'न भावोऽनुपलब्धेः' इति—'उत्तरोत्तरज्ञानवैचित्र्यहेतुतया सुगताभिमतानामनादिवासनानां न भावः ; अर्थानुपलब्धेः ; [1]यद्वा(यथा ?)ऽर्थेन आश्रयेण विना धीवैचित्र्यहेतुभूतवासनानुपलब्धेश्च । अर्थोपलब्धिनिबन्धना स्थिराश्रयनिष्ठा हि वासना'इति व्याख्यातम् । तत्रार्थाभावेऽपि स्वप्नानुभवजन्याः पाश्चात्यस्मृतिहेतुभूताः वासना जायन्ते ; तद्वदिहापि संभवतीत्युक्ते, किमुत्तरम् ॥ स्वाप्नानि ज्ञानानि च न विषयशून्यानीति वक्तव्यमिति चेत्—तर्हि हेत्वन्तरसापेक्षयोजनाया अपि सूत्रस्य नैरपेक्ष्यसिद्ध्यर्थं चरमहेतुविषयतया वर्णनं युक्तम् । अतोऽर्थशून्यज्ञानानामनुपलब्धिपराहतत्वप्रतिपादनपरं सूत्रमिदम् । वासनानामाश्रयानुपलब्धेरिह पृथक्कथनमनपेक्षितम् ; अनुस्मृतेश्चेति सूत्रे तदवगमात् , पूर्वानुभवजनितसंस्काराश्रयस्य स्थिरस्याभावे प्रतिसन्धानानुपपत्तिस्तत्रावगता ।

'सर्वथानुपपत्तेश्चेति सूत्रमपि सुगतमात्रविषयम् ; न तु शून्यवादप्रतिक्षेपपरम् ; तस्य तु सर्वप्रमाणविरुद्धत्वान्निरसनानादरः ' इति **परे**। तदयुक्तम् ; नास्तिक्यकाष्ठागतस्यासत्तर्काकरस्य तस्यावश्यं निरसनीयत्वात । यदि सर्वप्रमाणविरोधेन दुर्बलतया न तन्निरासः, तर्हि पक्षान्तराणामपि तत्तत्प्रत्यनीकप्रमाणविरुद्धतया दुर्बलत्वात् तन्निरासस्यानादरणीयता किं न स्यात् ॥ वस्तुतो दुर्बलत्वेऽप्यापाततः प्राबल्यप्रतीतेस्तन्निरसनीयत्वमिति चेत्—तत् शून्यवादेऽपि तुल्यम् ॥ पक्षान्तराणां कतिपयप्रमाणानुगुण्यात्प्राबल्यावभासः, शून्यवादस्य तु सर्वप्रमाणविरोधान्न प्राबल्यावभास इति चेत्—पक्षान्तरेषु प्रमाणानुगुणांशस्य निरसनमशक्यम् । विरुद्धांशस्य तु प्राबल्यावभासाभावात् किं निरसनेन ॥ विरुद्धांशस्य प्रमाणविरोधनिमित्तदौर्बल्यस्यापाततोऽनवभासात् तज्ज्ञापनमपेक्षितमिति चेत्—शून्यवादस्यापि कार्त्स्न्येन प्रमाणविरोधस्य ज्ञाप्यत्वात तन्निरसनमपेक्षितम् । यदि विरुद्धैकदेशमपि मतं निरस्यते, तर्हि कार्त्स्न्येन

1. अनुपलब्धेरित्यस्यार्थान्तरमुच्यते, "संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते" इति शांकरभाष्यानुसारात् । अत्रोपरि चकारसत्त्वात् अर्थेनेत्यस्यानावश्यकत्वाभावाय च अर्थेन—विषयेण विना यथा तथेति दृष्टान्ततयैतदुक्तिरिति, यथेति पाठः स्यात् ।

विरुद्धस्य निरसनीयत्वं किम्पुनर्न्यायसिद्धम्। किंच यद्यपि प्रमाणविरोधोऽवभासते, तथाऽपि तदुक्तकुतर्काणां प्रबलत्वभ्रमो निराकरणीयः। अन्यथा ज्वालाभेदयुक्त्या तदैक्यज्ञानस्येव प्रमाणज्ञानानामपि भ्रान्तित्वशङ्काप्रसङ्गात्। अतोऽपेक्षितत्वात् शब्दानुरोधाच्च शून्यवादप्रतिक्षेपपरमिदं सूत्रमिति युक्तम्।

अन्ये त्वेवं वर्णयन्ति—मातृशरीरं प्राप्तात् कर्मणः प्रथमं हृदयवस्तु स्त्रीन्द्रियपुरुषेन्द्रिययोरन्यतरसचिवोऽष्टद्रव्यकलापः तदनन्तरं चित्तमप्युत्पद्यते। तस्माच्चित्तात्पूर्वस्माच्च कलापान्मातृभुक्ताहाराच्च यथायथमष्टद्रव्यकलाप उत्पद्यते; चक्षुरादीनि च। कर्मशब्दश्च पूर्वकर्मवासितविलक्षणचित्तसन्तानपरः। एवमुभयहेतुके—कर्ममातृभुक्ताहारहेतुकेऽपि गर्भे समुदायस्याप्राप्तिः; संयोजयितुः स्थिरस्य प्रशासितुरीश्वरस्यानभ्युपगमादिति। तदयुक्तम्; परपक्षेषु जगत्कारणानुपपत्तेर्वक्तव्यत्वात्, संयोजकेश्वरानभ्युपगमरूपहेतोः कृत्स्नजगदुत्पत्तिप्रतिक्षेपकस्य गर्भस्थदेहमात्रविषयतया सङ्कोचानुपपत्तेः। 'उभयथा च दोषात्' इत्यत्र निरोधस्य सहेतुकत्वे निर्हेतुकत्वप्रतिज्ञाविरोधः, अहेतुकत्वे नित्यनिरोधः प्रसज्येत; हेत्वभावाविशेषादित्युक्तम्। तदप्ययुक्तम्—ईदृशानामन्येषामपि प्रध्वंसविषयदूषणानां प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधप्रतिक्षेपकसूत्र एव विवक्षितत्वोपपत्तेः, कार्यकारणतुच्छताविषयदूषणस्यात्र विवक्षितत्वोपपत्तेश्च। 'नासतो दृष्टत्वात्' इति सूत्रं शून्यवादिनिरासपरं व्याख्यातम्; 'न भावोऽनुपलब्धेः' इत्यादिसूत्रद्वयं च बाह्यार्थानुमेयताव्युदासपरं वर्णितम् तदयुक्तम्; स्वारसिकक्रमाभावात्। प्रत्यक्षादिना स्थिरतयोपलब्धा बाह्यार्थाः क्षणिकाः; क्षणिकाश्चानुमेयाः; उभयविधाश्चार्था मिथ्याभूताः; तद्विषयज्ञानमपि मिथ्येति हि लोकबुद्ध्यवतरणक्रमः। वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्थिरत्वाभ्युपगमाच्च सङ्गतिर्युक्ता, न तु वैभाषिकमाध्यमिकयोः। बाह्यार्थानभ्युपगमाद् योगाचारमाध्यमिकयोः सङ्गतत्वे बुद्ध्यवतरणक्रमान्माध्यमिकस्य पाश्चात्यत्वं युक्तम्; न तु योगाचारसौत्रान्तिकयोः पौर्वापर्यं युक्तम्; उक्तसङ्गत्यभावात्॥ ज्ञानास्तित्वसाम्यात् सङ्गतिरिति चेत्—तर्हि पौर्वापर्यविपर्ययो युक्तः, ज्ञानास्तित्वसाम्यस्य, अर्थसद्भावप्रतिषेधरूपेण वैषम्यस्य चानुगुणतया सङ्गतेर्वक्तव्यत्वात्। किञ्च शब्दानौचित्यमपि भवति। 'नासतः सदुत्पत्तिर्दृष्टा; नापि स्वयमसदिति युक्तम्, असतः केनापि प्रमाणेनादृष्टत्वात्' इति हि तद्योजना। तत्रासत इति पदस्य षष्ठ्यन्तत्वे प्रथमं प्रतिज्ञावाक्यमध्याहार्यं स्यात्। पञ्चम्यन्तत्वे द्वितीयं प्रतिज्ञावाक्यमध्याहार्यं स्यात्। अस्माकं तु न वाक्याध्याहारः; न नीलादिरसत आकार इति पदद्वयाध्याहार एव, एतावांश्चाध्याहारः सर्वेषामवर्जनीयः। 'न भावोऽनुपलब्धेः' इति—न तादृशस्याप्रत्यक्षस्य भावः, अनुपलब्धेः अनुपलभ्यमानस्य व्याप्तिग्रहणायोगादिति वर्णितम्। तदयुक्तम्; नित्यातीन्द्रियाणामिन्द्रियादीनामनुमानाभावप्रसङ्गात्॥ तेषु कल्पकमनन्यथासिद्धम्; इह तु बाह्यार्थकल्पकं ज्ञानवैचित्र्यमन्यथासिद्धम्, संस्कारेण तत्सम्भवादिति चेत्—न; उत्सूत्रत्वाद्धेतोः॥ ननु न सर्वेषु हेतुः सूत्रेषु शब्दः; अभिप्रेतहेतुभिराकाङ्क्षापूरणस्य सर्वव्याख्यातृसंमतत्वादिति चेत्—सत्यम्; निर्दिष्टहेतुर्यैरुपपादकैर्विना न स्थिरीभवति, तेषामभिप्रेतत्वं युक्तम्; निर्दिष्टहेतूपयोगित्वात्। कण्ठोक्तहेतुदौःस्थ्येन तत्परिहारानुपयोगिहेत्वन्तरस्याभिप्रेतत्वकल्पनमनुपपन्नम्। न हि सम्यञ्चं हेतुं वाचकेन वक्तुमशक्नुवन्

## एकस्मिन्नसंभवाधिकरणम्—२-२-६.

## नैकस्मिन्नसंभवात् ॥ २-२-३१ ॥

निरस्ताः सौगताः। जैना अपि परमाणुकारणत्वादिकं जगतो वदन्तीत्यनन्तरं जैनपक्षः प्रतिक्षिप्यते।

ते किल मन्यन्ते—जीवाजीवात्मकं जगदेतन्निरीश्वरम्; तच्च षड्द्रव्यात्मकम्। तानि च द्रव्याणि जीवधर्माधर्मपुद्गलकालाकाशाख्यानि। तत्र जीवाः—बद्धाः, योगसिद्धाः, मुक्ताश्चेति त्रिविधाः। धर्मो नाम—गतिमतां गतिहेतुभूतो द्रव्यविशेषो जगद्व्यापी। अधर्मश्च स्थितिहेतुभूतो व्यापी। पुद्गलो नाम—वर्णगन्धरसस्पर्शवद्द्रव्यम्। तच्च द्विविधम्—परमाणुरूपम्, तत्सङ्घातरूपञ्च पवनज्वलनसलिलधरणीतनुभुवनादिकम्। कालस्तु—अभूदस्ति भविष्यतीति व्यवहारहेतुरणुरूपो द्रव्यविशेषः। आकाशोऽप्येकोऽनन्तप्रदेशश्च। तेषु चाणुव्यतिरिक्तानि द्रव्याणि पञ्च अस्तिकाया इति च संगृह्यन्ते। जीवास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायः पुद्गलास्तिकाय आकाशास्तिकाय इति। अनेकदेशवर्तिनि द्रव्येऽस्तिकायशब्दः प्रयुज्यते।

जीवानां मोक्षोपयोगिनमपरमपि संग्रहं कुर्वन्ति—"जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षाः" इति। मोक्षसङ्ग्रहेण मोक्षोपायश्च गृहीतः। स च सम्यग्ज्ञानदर्शनचारित्ररूपः। तत्र जीवस्तु ज्ञानदर्शनसुखवीर्यगुणः। अजीवश्च जीवभोग्यवस्तुजातम्। आस्रवः तदुपभोगोपकरणभूतमिन्द्रियादिकम्। बन्धश्चाष्टविधः—घातिकर्मचतुष्टयमघातिकर्मचतुष्टयं चेति। तत्राद्यम्—जीवगुणानां स्वाभाविकानां ज्ञानदर्शनवीर्यसुखानां प्रतिघातकरम्; अपरं शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूतम्। निर्जरं मोक्षसाधनम् अर्हदुपदेशावगतं तपः। संवरो नाम—इन्द्रियनिरोधः समाधिरूपः। मोक्षस्तु निवृत्तरागादिक्लेशस्य स्वाभाविकात्मस्वरूपाविर्भावः।

---

तस्याभिप्रेततासिद्ध्यर्थं दुःस्थं हेतुं सूत्रकारो वदतीति युक्तम्। शश्वदनुपलब्धस्याशक्यानुमानत्वं हि दुःस्थम्। कल्पकहेत्वन्यथासिद्धिरेव हि सम्यग्युक्तिः। 'सर्वथाऽनुपपत्तेश्च' इति निर्देशश्च विकल्पितशिरोभेदेषु अनुपपत्तेर्विवक्षितत्वमवगमयति। न त्वेकस्वरूपस्यैवार्थस्य बह्वनुपपत्तियुक्तत्वम्; 'उभयथा च दोषात्' इतिवत्। अतो रूपादीनामनुमेयत्वे प्रत्यक्षानुभवविरोधाद्यनेकोपपत्तिपरतया व्याख्यानमयुक्तम्। तत्र चार्थसङ्गतिवशात् शब्दानुरोधाच्च सर्वशून्यवादनिरासपरत्वं युक्तम् ॥ ३० ॥

**नैकस्मिन्नसंभवात्** ॥ सङ्गतिमाह **निरस्ता** इति। वैशेषिकबौद्धयोः परमाणुकारणवादिनोरेकान्तत्वपरमाणुचातुर्विध्यसाम्यात्तन्निरासौ सङ्गतौ। बौद्धानन्तरमार्हतमतनिरासः प्राप्तः। किमेकान्तब्रह्मकारणवादो विचाल्यः, उत नेति; किं जैनमतं समीचीनयुक्तिमूलम्?उत नेति; किमेकस्य वस्तुनः सत्त्वासत्त्वभिन्नत्वाभिन्नत्वनित्यत्वानित्यत्वाद्यनेकस्वभावत्वं संभवति, नेति; किं पर्यायस्वभावाभ्यामेकस्य वस्तुनोऽनेकस्वभावत्वमापादयितुं शक्यते, नेति। यदा शक्यते, तदैकस्य वस्तुनोऽनेकस्वभावत्वसंभवाज्जैनमतस्य समीचीनयुक्तिमूलतया ब्रह्मकारणवादस्याश्रद्धेयता स्यात्। यदा तु न शक्यते, तदा वस्तुनोऽनेकस्वभावत्वासम्भवेन जैनमतस्य कुतर्कमूलतया ब्रह्मकारणवादस्य श्रद्धेयतमत्वम्। **ते किले**त्यादि। **स्थितिहेतुभूतः** स्थावरत्वादिहेतुः; अप्रवृत्तिहेतुरित्यर्थः। सङ्घातरूपमेव विवृणोति **पवने**ति। अपरिमितशरीरसंस्थानं

पृथिव्यादिहेतुभूताश्चाणवो वैशेषिकादीनामिव न चतुर्विधाः, अपि त्वेकस्वभावाः । पृथिव्यादिभेदस्तु परिणामकृतः। सर्वं च वस्तुजातं सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्ति—"स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं च" इति सर्वत्र सप्तभङ्गीनयावतारात्। सर्वं वस्तुजातं द्रव्यपर्यायात्मकमिति द्रव्यात्मना सत्त्वैकत्वनित्यत्वाद्युपपादयन्ति; पर्यायात्मना च तद्विपरीतम्। पर्यायाश्च द्रव्यस्यावस्थाविशेषाः। तेषां च भावाभावरूपत्वात् सत्त्वासत्त्वादिकं सर्वमुपपन्नमिति ॥

अत्राभिधीयते--नैकस्मिन्नसंभवादिति । नैतदुपपद्यते; कुतः? एकस्मिन्नसंभवात्--एकस्मिन् वस्तुनि अस्तित्वनास्तित्वादेर्विरुद्धस्य छायातपवत् युगपदसंभवात्। एतदुक्तं भवति--द्रव्यस्य तत्तद्विशेषणभूतपर्यायशब्दाभिधेयावस्थाविशेषस्य च पृथक्पदार्थत्वात् नैकस्मिन् विरुद्धधर्मसमावेशः संभवतीति। तथा ह्येकेनास्तित्वादिनाऽवस्थाविशेषेण विशिष्टस्य तदानीमेव न तद्विपरीतनास्तित्वादिविशिष्टत्वं संभवति। उत्पत्तिविनाशाख्यपरिणामविशेषास्पदं च द्रव्यस्यानित्यत्वम्, तद्विपरीतं च नित्यत्वं तस्मिन् कथं समवैति। विरोधिधर्माश्रयत्वं च भिन्नत्वम्, तद्विपरीतं चाभिन्नत्वं कथं वा तस्मिन् समवैति; यथाऽश्वत्वमहिषत्वयोर्युगपदेकस्मिन्नसंभवः। अयमर्थः पूर्वमेव भेदाभेदवादिनिरसनसमये 'तत्तु समन्वयात्' इत्यत्र प्रपञ्चितः। कालस्य पदार्थविशेषणतयैव प्रतीतेः तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्तव्याः। कालोऽस्ति; नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः। जात्यादयो हि द्रव्यविशेषणतयैव प्रतीयन्त इति पूर्वमेवोक्तम्॥ कथं पुनरेकमेव ब्रह्म सर्वात्मकमिति श्रोत्रियैरुच्यते?;

---

तदभिमानः तत्स्थितिः तत्प्रयुक्तसुखदुःखोपेक्षा इत्येषां हेतुरित्यर्थः। अन्यथा चतुष्टयायोगात्। **पर्यायो**ऽवस्था। अवस्थाविशेषाणां भावाभावरूपत्वात् द्रव्यस्य सत्त्वादिकमुपपन्नमित्यर्थः।

दूषयति **अत्राभिधीयत** इत्यादिना। आकारभेदादविरोध इत्यत्राह **एतदुक्तंभवतीति**। किं द्रव्यावस्थे भिन्ने, उताभिन्ने, उत भिन्नाभिन्ने इति विकल्पमभिप्रेत्य भेदपक्षे दूषणमाह **द्रव्यस्येति**। अभिन्नत्वपक्षेऽपि नाकारभेदादविरोधः, भिन्नाभिन्नत्वपक्षेऽपि तदविरोधनिर्वाहकाकारान्तराभावान्नाविरोध इतीदं पूर्वमुक्तत्वान्नात्र कण्ठोक्तम्। पूर्वप्रस्तुतास्तित्वादेः कथं विरोध इत्यत्र [1]आह **तथा हीति**। सत्त्वासत्त्वादिविरोधो नाकारभेदेन परिह्रियते; अपि तु द्रव्यस्यैवोच्यत इति पूर्वं प्रस्तुतम्; तदनुपपन्नमित्याह **तथा हीति**। आकारभेदाभ्युपगमे आकारे नास्तित्वादिधर्मः, द्रव्ये त्वस्तित्वादिधर्मः। अनभ्युपगमे तु द्रव्यमेवोभयधर्मीति विरोधः। सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वविरोधः क्रमेणोपपादितः। **कालस्यपदार्थविशेषणतयैवेति**। अनेन कालस्याणुत्वनिराकरणं फलितम्। अनेककालकल्पनमयुक्तम्, एकस्मिन् कालेऽनेकपदार्थाः सन्तीत्येव प्रतीतेः, कालस्य द्रव्यविशेषणतयाऽस्तित्वं प्रतिपन्नम्। ततस्तस्य नास्तित्वशङ्का निरवकाशेत्यर्थः। **कथमित्यादिना**

---

1. 'आह तथा ही'ति भागं विना एकावतारिकावाक्यत्वं युक्तम्; अभिप्रेतविवरणाय पुनरवतरणमिति वा निर्वाह्यम्।

सर्वचेतनाचेतनशरीरत्वात् सर्वज्ञस्य सर्वशक्तेः सत्यसङ्कल्पस्य पुरुषोत्तमस्येत्युक्तम्। शरीरशरीरिणोस्तद्धर्माणां चात्यन्तवैलक्षण्यमप्युक्तम्। किञ्च जीवादीनां षण्णां द्रव्याणामेकद्रव्यपर्यायत्वाभावात् तेषु द्रव्यैकत्वेन पर्यायात्मना चैकत्वानेकत्वादयो दुरुपपादाः॥ अथोच्येत—षडेतानि द्रव्याणि स्वकीयैः पर्यायैः स्वेन स्वेन चात्मना तथा भवन्तीति—एवमपि सर्वमनैकान्तिकमित्यभ्युपगमविरोधः, अन्योन्यतादात्म्याभावात्।

अतो न युक्तमिदं जैनमतम्। ईश्वरानधिष्ठितपरमाणुकारणवादे पूर्वोक्तदोषास्तथैवावतिष्ठन्ते॥

## एवं चात्माकार्त्स्न्यम् ॥ २-२-३२ ॥

एवं भवदभ्युपगमे सति आत्मनश्चाकार्त्स्न्यं प्रसज्यते। जीवोऽसङ्ख्यातप्रदेशो देहपरिमाण इति हि भवतां स्थितिः। तत्र हस्त्यादिशरीरेऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकाशरीरे प्रविशतोऽल्पदेशव्यापित्वेनाकार्त्स्न्यं प्रसज्यते—अपरिपूर्णता प्रसज्यत इत्यर्थः॥ ३२॥

अथ सङ्कोचविकासधर्मतयाऽऽत्मनः पर्यायशब्दाभिधेयावस्थान्तरापत्त्या विरोधः परिह्रियत इत्युच्यते ; तत्राह—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २-२-३३ ॥

न च सङ्कोचविकासरूपावस्थान्तरापत्त्याऽपि विरोधः परिहर्तुं शक्यते, विकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्गात्॥ ३३॥

---

परिचोद्य परिहरति **सर्वेति**। शरीराणामन्योन्यम्, ब्रह्मणश्च भेदः, शरीरिणो ब्रह्मण एकत्वमित्यर्थः। **सर्वज्ञस्येत्या**दिविशेषणमेकस्य सर्वचिदचिन्नियन्तृत्वाद्यसंभावितत्वशङ्काव्यावृत्त्यर्थम्। शरीरदोषाणां शरीरिण्यस्पर्शमुपपादयति **शरीरशरीरिणो**रिति। अनेकान्तत्वस्य व्यभिचारमाह **किञ्चेति**।

**एवं चात्माकार्त्स्न्यम्**॥ **एवं**शब्दं व्याचष्टे **भवदि**ति। बुद्धिस्थतदभ्युपगमाकार **एवं** शब्दोक्त इत्यर्थः। यथा पूर्वोक्तदोषः, एवं दोषान्तरमिति **परे**। अन्यत्रापि दूषणान्तरे विवक्षितपूर्वोक्तदूषणस्य दृष्टान्तीकरणादर्शनात् प्रयोजनाभावाच्च धीस्थप्रकारपरत्वेन व्याख्यातम्। तत्र हि दूष्यं जीवस्य देहपरिमाणत्वमन्तर्गतमुपस्थापितं स्यात्। **असङ्ख्यातप्रदेशः**—एकरूपसङ्ख्याहीनप्रदेशः. अनियतप्रदेश इत्यर्थः॥

उत्तरसूत्रशङ्कामाह **अथेति**। **न च पर्यायादप्यविरोधो विकारादिभ्यः**॥ अवस्थाभेदादविरोधवर्णने विकारि(र)त्वमवयवोपगमापगमाभ्यामुपपादयन्ति **परे सर्वे**; तपनातपरत्नालोकादीनां सङ्कोचविकासभाजामशीर्णावयवत्वस्य पूर्वमुपपादितत्वात् सङ्कोचविकासयोरवयवापगमोपगमाभ्यां विनाऽपि सद्भवात् तदनुक्तिः। अत एव हि **सङ्कोचविकासरूपे**त्यवस्था विशेषिता। तेन वृक्षादिगत वृद्धिक्षयादिव्यावृत्तिः। **विकारः** उत्पत्तिर्विनाशश्च। **अनित्यत्वं** परिमितकालवर्तित्वम्। [यद्वा ?] **विकारो** जन्मादिः, अनित्यत्वं विनाशः। आदिशब्दः पराक्त्वचैतन्यानाश्रयत्वपरः॥ ननु त्वन्मते धर्मभूतज्ञानस्य सङ्कोचविकासाभ्युपगमे कथं नित्यत्वादि ?॥ स्वरूपेण नित्यस्य वस्तुनो निरुपाधिकधर्मत्वादिति ब्रूमः। धर्मभूतज्ञानस्य पराक्त्वं चैतन्याश्रयत्वञ्चेष्टम्। तव तु जीवस्वरूपमेव संकोचविकासभागिति तस्यालोकस्येवानित्यत्वपराक्त्वचैतन्यानाश्रयत्वप्रसङ्गो दुर्वारः॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २-२-३४ ॥**

**जीवस्य यदन्त्यं परिमाणं मोक्षावस्थागतं तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वात् आत्मनश्च मोक्षावस्थस्य तत्परिमाणस्य चोभयोर्नित्यत्वात् तदेवात्मनः स्वाभाविकं परिमाणमिति पूर्वमपि तस्मादविशेषः स्यात्। अतो देहपरिमाणत्वमात्मनो न स्यादित्यसङ्गतमेवेदमार्हतमतम् ॥**

---

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः** ॥ जीवस्य तावत् गुणादेरिवापरिमाणत्वमनभ्युपगतम्। विभुत्वं चानिष्टम्। देहपरिमाणवादेऽणुत्वं चासंभावितम्; अणुपरिमाणदेहाभावात्। एवं च यथा-स्वरूपं मोक्षावस्थावस्थितं नित्यतया पूर्वमपि सत्, तथाऽन्त्यपरिमाणं मोक्षावस्थावस्थितम् अदेहोपाधिकं नित्यतया पूर्वमपि सत् स्यात्, तत आत्मनो देहपरिमाणत्वहानिरित्यर्थः।

**अन्त्यावस्थितेश्च**—अन्त्यपरिमाणस्य नित्यत्वे तस्याभूत्वाभावित्वानुपपत्तेः; प्रागपि तदस्तीति तद्विरुद्धपरिमाणावरोधायोगात् आद्यं मध्यमं च परिमाणं तदेवेत्याद्यमध्यमपरिमाणयोरपि नित्यत्वाद**विशेषः** [1]एकशरीरपरिमाणतारूपः स्यादिति **परे**। उभयोराद्यमध्यमावस्थयोरन्त्यपरिमाणस्य नित्यत्वादविशेषः; सर्वदाऽणुत्वमेकरूपमहत्त्वं वा स्यात्—इति च **ते चापरे च** योजनान्तरमाहुः। तन्न रोचते—आत्मनोऽनादित्वात् तद्गतपरिमाणेष्ववस्थान्तरेषु वा कस्यचिदाद्यत्वानुपपत्तेः; आद्यत्वा(आद्या)भावाच्च कस्यचित् मध्यमत्वानुपपत्तेश्च। न चाऽऽद्यशब्देनाणुत्वविवक्षोपपन्ना, अणुपरिमाणशरीरासम्भवेन देहपरिमाणस्यात्मनोऽनुपपत्तेः ॥ आद्यमध्यमयोरभावे कथमन्त्यव्यपदेश इति चेन्न; अन्त्यशब्द-स्यावसानवाचित्वादनादेरप्यवसानसंभवाच्च।

**उभयेषामपि भिन्नाभिन्न**त्ववादिनामिदमधिकरणं विरुद्धम्। एकस्मिन् भिन्नाभिन्नत्वाद्यसंभव-स्योक्तत्वात्। भिन्नाभिन्नत्वयोश्च परस्परप्रतिक्षेपकत्वं दर्शितम् ॥ ननु न तयोर्मिथः प्रतिक्षेपकत्वम्; मृदा-दिद्रव्यरूपेणाभेदस्य, घटाद्यवस्थारूपेण भेदस्य च दर्शनादिति चेत्—तर्हि साधारणाकारस्यासाधारणा-कारस्य च भेदाभेद इति नाममात्रं कृतं स्यात्। ततश्च भेद एवावतिष्ठेत; असाधारणधर्मस्य स्वविरोधि-धर्माश्रयात् स्वाश्रयव्यावर्तकत्वात् ॥ नन्वभेदोऽप्यवस्थितः किं न स्यात्, साधारणाकारस्य स्वाश्रयैक्य-निर्वाहकत्वदर्शनादिति चेन्न; साधारणाकारस्य भेदसहस्यैक्यनिर्वाहकत्वाभावात्; असाधारणाकारस्य अभेदासहत्वाच्च। एकस्य वस्तुनः साधारण्यं हि बहुप्रतियोगिकम्। विरोधिधर्मानाश्रयतालक्षणत्वाद-भेदस्य, विरोधिधर्मसंसर्गस्तं प्रतिक्षिपति। अतो घटत्वाद्यवस्थाविशेषाः स्वाभावरूपैर्वा स्वाभावाविनाभूतैर्वा शरावत्वपिण्डत्वादिधर्मैराक्रान्तात् मृद्द्रव्यात् स्वाश्रयद्रव्यं भिनत्ति। यदा न भिनत्ति, तदा घटत्वादिरा-कारः स्वयं न स्यात; अभेदस्य स्वाभावरूपत्वात्, स्वाभावाविनाभावाद्वा। अतो भिन्नाभिन्नत्वयोरेकस्मिन्न-संभवो दुर्वारः।

द्रव्यपर्यायात्मना भिन्नत्वाभिन्नत्वे एकवस्तुनि वदतो **विवसनात्** किं वैषम्यं **युवयोः**?॥ पर्या-

---

1. एकशरीरेति। जीवपरिमाणस्य शरीरपरिमाणतुल्यत्ववादिनाऽपि यत्किञ्चिदेकशरीर-परिमाणतुल्यमेव परिमाणं नित्यतया वक्तव्यमित्यर्थः। **प्रथमयोजनायां उभयपदं परिमाणपरम्। द्वितीयपक्षे आद्यमध्यकालपरमित्येतावानेव भेदः।**

यान् अनपेक्षमाणस्य द्रव्यस्य पर्यायाणां च नित्यत्वानित्यत्वसत्यत्वासत्यत्वभिन्नत्वाभिन्नत्वादिकं स ब्रूते, वयं तु न तथेति चेन्न—अवस्थातद्वतोरप्यवस्थान्तरमनपेक्ष्य भिन्नाभिन्नत्वाभ्युपगमात् । यथैकस्य द्रव्यस्य स्वरूपेण नित्यत्वानित्यत्वादिकमवस्थामनपेक्ष्य न शक्यते वक्तुम् , तथा अवस्थातद्वतोः स्वरूपेणाभिन्नत्वे, कथमवस्थामनपेक्ष्य भिन्नत्वमाश्रीयते ; स्वरूपेण तयोर्भिन्नत्वे कथं घटमकुटयोरिवावस्थान्तरमनपेक्ष्याभिन्नत्वमाश्रीयते ? ॥ अवस्थायाः स्वपरनिर्वाहकत्वादवस्थान्तरनिरपेक्षत्वमिति चेत्—तर्हि द्रव्यस्यावस्थान्तरसापेक्षत्वादुभयातिरिक्तमवस्थान्तरमाश्रयणीयम् ॥ ययाऽवस्थया द्रव्यस्य भेदाभेदौ, तामेव द्रव्यं तन्निर्वहणायापेक्षते, नावस्थान्तरमिति चेन्न; विकल्पासहत्वात् । सा यद्यभेदनिर्वाहिका, तर्हि भेदनिर्वहणायावस्थान्तरमन्वेष्टव्यम् । सा यदि भेदनिर्वाहिका, अभेदनिर्वहणायावस्थान्तरमन्वेष्टव्यम् । उभयनिर्वाहकत्वमेकस्या अवस्थाया विरुद्धम् ; निर्वाह्यद्वयविरोधात् । न ह्यग्निगतं पैङ्गल्यमुष्णत्वशीतत्वयोर्निर्वाहकं भवति ॥ ननु न निर्वाह्यद्वयं विद्यते ॥ भिन्नत्वमभिन्नत्वं च सैव घटावस्थेति चेत्—तर्हि नाम्नि विवादः। तस्मादवस्थातद्वतोर्भिन्नाभिन्नत्वं नैवोक्तं स्यात् । यथा पटस्य घटत्वं कुड्यत्वं च पटत्वमेवेत्युक्ते, पटे घटत्वकुड्यत्वानुक्तिरेव स्यात् , तद्वत् । एवमवस्थान्तरमनपेक्ष्य अवस्थातद्वतोर्भिन्नाभिन्नत्वं बदताम् अर्हतो न वैषम्यम् ।

अत एव सूत्रयोजनाऽपि न संभवति । 'सत्त्वासत्त्वादेरेकस्मिन् धर्मिण्यसंभवादिति । कथमेको भावोऽस्ति-नास्ति च' इति **भास्करः** । 'न ह्येकस्मिन् द्रव्ये सन्मात्ररूपे सर्वे गुणपर्यायाः संभवन्ति तस्मिन् दर्शने; षड्द्रव्याभ्युपगमात् । यद्येकं सन्मात्ररूपमनन्तसर्वपर्यायम् अद्वितीयमभ्युपगम्यते, ततो युक्तमिदं दर्शनम् । न चैतदभ्युपगन्तुं जैनैः शक्यम् , तेषां प्रमाणाभावात्' इति **यादवार्यः** । अत्र किञ्चिद्ब्रूमः—किमेकस्मिन् भिन्नाभिन्नत्वाद्यसंभवमात्रं सूत्रकारेणाभिप्रेतम् , उत परमते तदसंभवः ? आद्ये, स्वपक्षव्याघातकत्वं स्याद्धेतोः । द्वितीये, वैषम्यं वक्तव्यम् ॥ षड्द्रव्याभ्युपगमस्तस्य वैषम्यमिति चेत्—ततः किम् ॥ षण्णां भिन्नस्वभावानां परस्परं द्रव्यपर्यायात्मना भिन्नाभिन्नत्वाभावात् सर्वानेकान्तत्वहानिरिति चेत्—तर्हि वेदान्तिनामेव सर्वानैकान्त्यवादो घटते, न त्वार्हतस्येति, सूत्रकारनिर्देशः श्वश्रूभिक्षाप्रतिक्षेपायेत । तच्चायुक्तम् ; क्षणिकवाद-ज्ञेयमिथ्यात्वसर्वशून्यवादनिराकरणेषु परपक्षेष्वनुपपन्नानां तेषां स्वपक्षे सामञ्जस्याभ्युपगमाभावात् ॥ तेषां श्रुतिविरोधात् अनभ्युपगमश्चेत्—अनेकान्तवादेऽपि श्रुतिविरोधश्च तुल्यः ; श्रुतिभिर्ब्रह्मणो वैलक्षण्यप्रतिपादनात् ॥ तादात्म्यश्रुतयः सन्तीति चेत् , तासां निर्वाहोऽसकृदुक्त इति न तासामनेकान्तत्वे प्रमाणत्वम् । किञ्च 'अणुभिश्च महद्भिश्च', 'जायस्व म्रियस्व', 'विज्ञानं चाविज्ञानं च सत्यं चानृतं च', 'नेह नानास्ति', 'नेति नेति' इत्यादीनां परमाणुत्र्यणुकक्षणिकवादज्ञेयमिथ्यात्वसर्वमिथ्यात्वपरत्वमापातप्रतिपन्नमाश्रित्य पूर्वाधिकरणेष्वपि परपक्षेष्वसामञ्जस्यं स्वपक्षे तत्सामञ्जस्यं चोच्यत इति न कस्माद्व्याख्यायते ? तेषां पूर्वापरवाक्यविरोधात् बह्वनुपपत्तिविध्वस्तत्वाच्च तथा निर्वहणमयुक्तमिति चेत्—तत् अनेकान्तवादेऽपि तुल्यम् । यथा सत्त्वासत्त्वनित्यत्वानित्यत्वादय एकदैकत्र एकस्य स्वरूपेण न संभवन्ति, एवं घटस्य घटत्वावस्थायामेव मृदन्तरेण भिन्नत्वमभिन्नत्वं च न संभवति ; अवस्थातद्वतोश्च तदुभयं न संभवति ; विरोधस्य पूर्वमेवोपपादितत्वात् । अतो

पशुपत्यधिकरणम्—२-२-७.

**पत्युरसामञ्जस्यात् ॥ २-२-३५ ॥**

कपिलकणादसुगतार्हतमतानामसामञ्जस्यात् वेदबाह्यत्वाच्च निःश्रेयसार्थिभिरनादरणीयत्वमुक्तम्; इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्याच्चानादरणीयतोच्यते । तन्मतानुसारिणः चतुर्विधाः । कापालाः, कालामुखाः, पाशुपताः, शैवाश्चेति । सर्वे चैते वेदविरुद्धां तत्त्वप्रक्रियामैहिकामुष्मिकनिःश्रेयससाधनकल्पनाश्च कल्पयन्ति । निमित्तोपादानयोर्भेदम्, निमित्तकारणं च पशुपतिमाचक्षते । तथा निःश्रेयससाधनमपि मुद्रिकाषट्कधारणादिकम् । यथाऽऽहुः कापालाः—"मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः । भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति । कण्ठिका रुचकं चैव कुण्डलं च शिखामणिः । भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ॥ आभिर्मुद्रितदेहस्तु न भूय इह जायते" इत्यादिकम् । तथा कालामुखा अपि कपालपात्रभोजन-शवभस्मस्नान-तत्प्राशन-लगुडधारण - सुराकुम्भस्थापन - तदाधारदेवपूजादिकमैहिकामुष्मिकफलसाधनमभिदधति । "रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके । कपालं भस्मना स्नानम्" इत्यादि च प्रसिद्धं शैवागमेषु । तथा केनचित् क्रियाविशेषेण विजातीयानामपि ब्राह्मण्यप्राप्तिमुत्तमाश्रमप्राप्तिं चाहुः, "दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात् । कापालं व्रतमास्थाय यतिर्भवति मानवः" इति ।

तत्रेदमुच्यते—पत्युरसामञ्जस्यादिति । नैकस्मिन्नसंभवादित्यतो नेत्यनुवर्तते । पत्युः पशुपतेर्मतं नादरणीयम्; कुतः—असामञ्जस्यात्; असामञ्जस्यं चान्योन्यव्याघातात् वेदविरोधाच्च । मुद्रिकाषट्कधारण - भगासनस्थात्मध्यान - सुराकुम्भस्थापन-तत्स्थदेवतार्चन-गूढाचार-श्मशानभस्म -

---

वेदान्तमवलम्ब्य भिन्नाभिन्नत्ववादिनामिदमधिकरणं विरुद्धम् ।

**अन्त्यावस्थिते**रित्यस्य(त्र ?)उभयोर्द्रव्यपर्याययोर्नित्यत्वादविशेषः, अनित्याः पर्यायाः द्रव्यं नित्यमिति विभागो न स्यादिति **यादवार्यः**। तदनादरहेतुः हेतुहेतुमतोरविशिष्टत्वम् । नित्यानित्यविभागाभावो ह्युभयोर्नित्यत्वमेव ॥ ननु न साध्यसाधनयोरवैशिष्ट्यम् । अनित्याः पर्यायाः, द्रव्यं नित्यमिति स्वाभ्युपगमे विरोधः साध्य इति चेत्—न, अशाब्दत्वात् । **अविशेषशब्दो** हि तद्वैषम्याभाववाची; न त्वभ्युपगमविरोधवाची ॥ अशाब्दत्वेऽप्यभिप्रेतत्वे को विरोध इति चेत्—न विरोधः । किन्तूक्तांशस्य दूषणतया पर्यवसानं नास्ति चेत्, दूषणपर्यवसानाय कक्ष्यान्तरस्याभिप्रेतत्वं कल्पनीयम् । अविशेषशब्देन यः (यदि?) पूर्वावस्थायामप्यात्मनो देहानुरूपपरिमाणतारतम्याभावः प्रसञ्जितः, तदा ततः किमित्याकाङ्क्षानुदयाद् दूषणं पर्यवस्यति । अतो हेतुहेतुमतोरवैशिष्ट्य-कक्ष्यान्तरकल्पनोपेतादपि निर्वाहाद्वरं तदुभयनिर्मुक्तो निर्वाहः ॥ इति एकस्मिन्नसंभवाधिकरणम् ॥

**पत्युरसामञ्जस्यात्** ॥ सङ्गतिमाह **कपिलेति** । प्रधानकारणत्वाभ्युपगमसाम्यात्साङ्ख्यनिरासानन्तरभावित्वे पाशुपतनिरासस्य प्राप्तेऽपि, सौगतार्हतमतनिरासानन्तरं तत्प्रतिक्षेपः तस्यात्यन्तवेदबाह्यत्वज्ञापनाय कृतः । पशुपतिमतं निःश्रेयसार्थिभिरुपादेयं नेति; किमस्य श्रुतिविरोधोऽस्ति नेति । यदा न श्रुतिविरोधः, तदानीमुपादेयता । यदा तु विरोधः, तदाऽनुपादेयता । तत्त्वविपर्ययमाह—**निमित्तेति** । अनुष्ठानविपर्ययमाह **तथेति** । **तत्रेदमुच्यत** इति । व्याघातमाह **मुद्रिकेति** । एकतन्त्रोक्तार्थस्तन्त्रान्तरेण

स्नान-प्रणवपूर्वाभिध्यानानि अन्योन्यविरुद्धानि ।

वेदविरुद्धं चेदं तत्त्वपरिकल्पनमुपासनमाचारश्च । वेदाः खलु परं ब्रह्म नारायणमेव जगन्निमित्तमुपादानं च वदन्ति—"नारायण परं ब्रह्म तत्त्वं नारायणः परः । नारायणपरो ज्योतिरात्मा नारायणः परः", "तदैक्षत बहु स्यां प्रजायेयेति", "सोऽकामयत बहु स्यां प्रजायेयेति", "तदात्मानं स्वयमकुरुत" इत्यादयः । परब्रह्मभूतपरमपुरुषवेदनमेव च मोक्षसाधनमुपासनं वदन्ति, "वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे", "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इत्यादिनैकतां गताः सर्वे वेदान्ताः । तदितिकर्तव्यताभूतं कर्म च वेदविहितवर्णाश्रमसंबन्धियज्ञादिकमेव वदन्ति—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन...एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादयः । केवलपरतत्त्वप्रतिपादनपरनारायणानुवाकसिद्धतत्त्वपराः केषुचिदुपासनादिविधिपरेषु वाक्येषु श्रुताः प्रजापतिशिवेन्द्राकाशप्राणादिशब्दा इति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यत्र प्रतिपादितम् । तथा 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यारभ्य "स एकाकी न रमेत" इति सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थाः, 'सदेव सोम्येदमग्र आसीत्' इत्यादिषु साधारणाः सद्ब्रह्मादिशब्दाः प्रतिपादयन्तीति 'जन्माद्यस्य यतः' इत्यत्र प्रतिपादितम् । अतो वेदविरुद्धतत्त्वोपासनानुष्ठानाभिधानात् पशुपतिमतमनादरणीयमेव ॥ ३५ ॥

---

दूषित इत्यन्योन्यव्याघातादुपहतम् ; न केवलं वेदविरोधादित्यर्थः । मुद्रिकाषट्कधारणादयो बहुषु तन्त्रेषूक्ताः क्रमेण परिगणिताः ; न त्वेकत्र । वैदिकपक्षस्य तद्वैषम्यमाह **वेदाः खल्विति** । **एकतां गताः** । सर्वशाखाप्रत्ययनयादिति भावः । सद्ब्रह्मात्मशम्भुशिवादिशब्दनिर्वाहार्थमाह **केवलपरेति** । नारायणानुवाकानुगुणमुपनिषदन्तरार्थः कथं निर्णेय इत्यत्राह **केवलेति** । यथा 'जुह्वा जुहोति' इति वाक्यस्य होमसाधनत्वमात्रपरत्वेन द्रव्यविशेषनिर्णये न तात्पर्यम् ; 'यस्य पर्णमयी जुहूः' इत्येतद्वाक्यस्य द्रव्यविशेषनिर्णयपरत्वेन तदनुगुणार्थत्वं 'जुह्वा जुहोति' इति वाक्यस्य भवति, तथा 'शम्भुराकाशमध्ये ध्येयः' इत्यादीनां वाक्यानामुपासनविधिपरत्वान्नोपास्यविशेषनिर्णयपरत्वम् ; नारायणानुवाकस्य तु उपासनविध्याद्यन्यपरत्वाभावादुपास्यविशेषनिर्णयैकपरत्वमस्ति । अतस्तदनुगुणार्थत्वं 'शम्भुराकाश' इत्यादिवाक्यानामभ्युपगन्तव्यमित्यर्थः । कारणवाक्येषु देवतान्तरप्रतीतिरस्तीत्यत्राह **एको ह वा** इति । सद्ब्रह्मात्मशब्देषु पूर्वपूर्वं उत्तरोत्तरशब्दं प्रति सामान्यशब्दाः, एवं पूर्वपूर्वं प्रति उत्तरोत्तरशब्दा विशेषशब्दाः । एवं नारायणशब्दं प्रति शम्भुशिवादयः सामान्यशब्दाः, 'शम्भुःस्वयम्भूर्द्रुहिणः', 'श्वश्रेयसं शिवं भद्रम्' 'विश्वाक्षं विश्वशम्भुवम्', 'शाश्वतं शिवमच्युतम्', 'शिवः शिवानामशिवोऽशिवानाम्' इत्यादिष्वनेकार्थेषु प्रयोगदर्शनात् ; नारायणशब्दस्य तथाऽर्थान्तरे प्रयोगाभावाच्च । तस्मात् 'पशुना यजेत' 'छागो वा मन्त्रवर्णात्' इति न्यायात् सामान्यशब्दानां विशेषपर्यवसानात् ब्रह्मादिसामान्यशब्दानां नारायणविशेषपर्यवसायित्वं युक्तमित्यर्थः । **जन्माद्यस्य यत इत्यत्र प्रतिपादित**मिति । 'यतो वा इमानि' इत्यादिवाक्ये अस्यार्थस्याभिप्रेतत्वात् सूत्रकारेणापि तथाऽभिप्रेतमित्यर्थः । जन्मादिसूत्रभाष्येण 'परस्मात् पुंसः' इत्यन्तेनायमर्थः सूचितः ॥

**अधिष्ठानानुपपत्तेश्च ॥ २-२-३६ ॥**

वेदबाह्यानामनुमानाद्धि केवलनिमित्तेश्वरकल्पना। तथा सति दृष्टानुसारेण कुलालादिवदधिष्ठानं कर्तव्यम्। न च कुलालादेर्मृदाद्यधिष्ठानवत् पशुपतेर्निमित्तभूतस्य प्रधानाधिष्ठानमुपपद्यते, अशरीरत्वात्। सशरीराणामेव हि कुलालादीनामधिष्ठानशक्तिर्दृष्टा। न चेश्वरस्य सशरीरत्वमभ्युपगन्तव्यम्ः तच्छरीरस्य सावयवस्य नित्यत्वे अनित्यत्वे च, 'शास्त्रयोनित्वात्' इत्यत्र दोषस्योक्तत्वात् ॥ ३६ ॥

**करणवच्चेन्न भोगादिभ्यः ॥ २-२-३७ ॥**

यथा भोक्तुर्जीवस्य करणकलेवराद्यधिष्ठानमशरीरस्यैव दृश्यते, तद्वत् महेश्वरस्याप्यशरीरस्य च प्रधानाधिष्ठानमुपपद्यत इति चेन्न; भोगादिभ्यः। पुण्यपापरूपकर्मफलभोगार्थं पुण्यपापरूपादृष्टकारितं हि तदधिष्ठानम्। तद्वत् पशुपतेरपि पुण्यपापरूपादृष्टवत्तया तत्फलभोगादि सर्वं प्रसज्येत। अतो नाधिष्ठानसंभवः ॥ ३७ ॥

**अन्तवत्त्वमसर्वज्ञता वा ॥ २-२-३८ ॥**

वाशब्दश्चार्थे। पशुपतेः पुण्यपापरूपादृष्टवत्त्वे जीववदन्तवत्त्वं सृष्टिसंहाराद्यास्पदत्वमसर्वज्ञता च स्यादित्यनादरणीयमेवेदं मतम्।

"विरोधे त्वनपेक्षं स्यात्—" इत्यादिना वेदविरुद्धस्यानादरणीयत्वे सिद्धेऽपि पशुपतिमतस्य वेदविरुद्धताख्यापनार्थं पत्युरसामञ्जस्यादिति पुनरारम्भः। यद्यपि पाशुपतशैवयोर्वेदाविरोधिन इव केचन धर्माः प्रतीयन्ते, तथाऽपि वेदविरुद्धनिमित्तोपादानभेदकल्पना-परावरतत्त्वव्यत्ययकल्पनामूलत्वात् सर्वमसमञ्जसमेवेति 'असामञ्जस्यात्' इत्युक्तम् ॥ ३५ ॥ इति पशुपत्यधिकरणम्।

---

**अधिष्ठानानुपपत्तेश्च** ॥ पौरुषेयवाक्यस्य प्रमाणमूलत्वे बुभुत्सिते सति अतीन्द्रियार्थे श्रुतिमूलत्वमनुमानमूलत्वं वा संभवेत्। तत्र श्रुतिमूलत्वं श्रुतिविरुद्धपरावरतत्त्वप्रतिपादनदर्शनादपास्तमित्यनुमानमूलत्वनिरासपरं सूत्रत्रयम्। शास्त्रयोन्यधिकरण एवाभिप्रेतानां दूषणानामत्राप्यपेक्षितत्वात् कण्ठोक्तिः कृता। तेषां वक्ष्यमाणत्वबुद्ध्या शास्त्रयोन्यधिकरणे कण्ठोक्त्यभावः। वक्ष्यमाणदूषणस्य स्वास्पर्शित्वायाह **वेदबाह्याना**मिति।

**करणवच्चेन्नभोगादिभ्यः** ॥ किं शरीरत्वेन जगदधितिष्ठति, उत तद्व्यतिरिक्तत्वेन ? शरीरत्वेन चेत्—भोगादिप्रसङ्गः। नो चेत्. शरीरान्तरसापेक्षत्वं स्यादित्यर्थः ॥ शरीरनिरपेक्षाधिष्ठानं शरीरे दृष्टमिति चेत्—न। शरीरत्वप्रयुक्तं तदित्युक्तं भवति; तदा जगतः शरीरत्वे भोगादिप्रसङ्ग इति—अयमशरीरत्वाभ्युपगमेन परिहारः। अशरीरत्वानभ्युपगमेन परिहारः **आगमप्रामाण्ये** उक्तः—'शरीरमपि सशरीरेणैवाधिष्ठीयते। शरीरं ह्यन्याधिष्ठाने करणभूतम्, स्वाधिष्ठाने करणं कर्म च। यथा दीपोऽन्यप्रकाशहेतुः स्वप्रकाशे स्वयमेव हेतुः, न दीपान्तरसापेक्षः, यथा च मनो युगपदनेकज्ञानानुत्पत्तिलिङ्गेनानुमीयमानं स्वानुमाने करणभूतं कर्म च—तथेति—एवं स्वपरनिर्वाहकत्वेन परिहारः ॥

**अन्तवत्त्वमसर्वज्ञता वा** ॥ **वेदाविरोधिन इ**वेत्यत्र इवशब्दो विप्रलम्भकत्वद्योतकः ॥ ननु वेदविरुद्धत्वख्यापनार्थत्वमधिकरणस्यायुक्तम्। तान्त्रिकग्रन्थैरेवार्थविरोधप्रतीतेः, विरोधे प्रतिपन्ने विरोधाधिकरणन्यायाद् वेदविरुद्धस्याप्यप्रामाण्यसिद्धेश्चास्याधिकरणस्य कृतकरत्वप्रसङ्गः ॥ नैवम्।

विरोधस्यापातप्रतिपन्नत्वबुद्ध्या न्यायेनाविरोधे निनीषितेऽपि, तस्यातिविरुद्धेषु कर्मसु प्रतीयमानेषु तत्स्वारस्यभञ्जके श्रुत्यन्तरे चानुपलभ्यमाने कथं बाधविकल्पसमुच्चयसंकोचैः प्रत्यक्षश्रुतयो नेतुं शक्यन्ते इति प्रतिपादनार्थत्वात् अस्य ॥ ननु स्मृत्याऽपि श्रुतिसङ्कोचो दृश्यते, 'न हिंस्यात्' इति निषेधो हि श्राद्धकल्पस्थमांसविधानेन सङ्कुचति ॥ नैवम्—मांसेनापि श्राद्धं कर्तव्यमित्यवश्यं श्राद्धकर्तव्यतातिवादरूपत्वात्[1] तादृशवचनानाम् । अत एव हि तथाऽननुष्ठानम् । यद्वा, बह्वर्थविरोधः प्रधानप्रतिपाद्यविरोधो वा यासु न विद्यते, ताः स्मृतयः श्रुतिं सङ्कोचयन्ति; न तु वेदविरोधबहुलाः प्रधानार्थविरुद्धाश्च । विरोधबाहुल्यं तत्र तत्र द्रष्टव्यम्, दर्शितप्रायं च । **यद्यपी**त्यविरोधमाशङ्क्य प्रधानप्रतिपाद्यविरोधं भाष्यकार एवाह **तथापी**ति । न च आकाशप्राणेन्द्रादिशब्दानामिव तन्त्रस्थशिवादिशब्दानां परमात्मपरताश्रयणेन परावरतत्त्वव्यत्यासः परिहर्तुं शक्यते; प्रतर्दनविद्यादिषु नारायणादिशब्दवाच्यस्य परतत्त्वस्येन्द्रादिशब्दवाच्यापेक्षयाऽपकृष्टत्वेन व्यपदेशाभावात् इन्द्रादिशब्दानामिन्द्राद्यर्थद्वारा कारणतत्तदन्तर्यामिभूतपरमात्मपरत्वाश्रयणं न पूर्वापरवाक्यश्रुत्यन्तरविरुद्धम् । न हीन्द्रस्य नारायणपरत्वं क्वचिच्छ्रुतम् । पाशुपतादिषु परत्वेनोक्तं रुद्रं प्रति अवरत्वेनोक्तस्य तत्त्वस्य कारणत्वान्तर्यामित्वव्याघातात् रुद्रशिवादिशब्दानां नारायणपरत्वेन निर्वाहोऽनुपपन्नः । वेदान्तवाक्येषु द्वैताद्वैतयोरेव हि व्याख्यातॄणां विप्रतिपत्तिः । नारायणस्य ब्रह्मशिवादीनां च द्वैतं वाऽद्वैतं वा भवतु; सर्वथाऽपि नारायणस्यावरत्वं तस्मात्कस्यचित् तत्त्वस्य परत्वं मोक्षप्रदत्वं च श्रुतिविरुद्धमिति सर्वाविगीतम् । परमपुरुषादन्यस्य परत्वेनोपासनं च मोक्षहेतुरिति श्रुतिविरुद्धम्; 'नान्यः पन्थाः' इति परमपुरुषादन्यस्य मोक्षप्रदत्वनिषेधात् ।

ननु मोक्षप्रदजगत्कारणविषयास्तन्त्रेषु शिवादिशब्दाः वस्तुमात्रविषयाः स्युः, भगवद्विषया वा; कार्यविषयाः नारायणादिशब्दाः भगवतोऽर्थान्तरपराः स्युः । अतो न विरोध इति चेन्न—अतिप्रसङ्गात् । सर्वशब्दानाममुख्यार्थपरतया विरोधशमने सुगतागमादयोऽप्यविरोधेन नेतुं शक्यन्ते—क्षणिकशब्दः क्षणपरिणामित्वपरः; चित्तसन्ततिशब्दोऽपि चित्तस्याविच्छेदपरः, नित्यज्ञानरूप आत्मेत्यर्थः; वेदा न प्रामाणमिति—उक्तप्रमाणविलक्षणा इत्यर्थः; तेषां पौरुषेयत्वं च पुरुषैरधीतत्वम् । अर्थान्तराणि तु व्याख्यातृबुद्धिदोषमूलानि, न तु सुगताभिमतानीति किमिति न व्याख्यायते । अतोऽनुष्ठानविरोधः तत्त्वविरोधश्च दुष्परिहरः ॥

ननु कथं मोहनार्थत्वं पाशुपतस्य । उक्तं हि भगवत्प्रणीते तत्प्रतिपादकतया सात्त्विके श्रीमति **वाराहे पुराणे** पाशुपततन्त्रस्यानुग्रहमूलत्वेन, वेदानुगुण्याच्च स्वर्गापवर्गार्थत्वम्, रुद्ररूपस्य भगवतस्तदुक्तमार्गेण पूजनीयत्वम्, तन्त्रान्तराणां विप्रलिप्सामूलत्वेन नरकफलत्वं च । तत्र यथा महेश्वरवचः,—

1 अवश्यं मांसमुपयोजनीयमित्यत्र तात्पर्याभावात् । मांसानुमतिमात्रेण न तदर्थहिंसाविधिस्तत्र । प्रकारान्तरेण मांसलाभसंभवात्; मांसाभावेऽप्यलोपाच्च । फलानन्त्याद्यर्थकाम्यगवालम्भादिरूपस्मार्तहिंसाविधिरिष्टत्वात् पक्षान्तरमाह यद्वेति ।

"एवमभ्यर्थितस्तैतु पुराऽहं द्विजसत्तमैः । वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् ॥
निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः । अल्पापराधा इत्येव शेषा वैला(डा)लिकाभवन्॥
मयैव मोहितास्ते हि भविष्यज्ज्ञानता द्विजाः" इति ।

तत्र—

'निश्वाससंहिता या हि लक्षमात्रा प्रमाणतः । सैव पाशुपती दीक्षा योगः पाशुपतश्च सः ॥
एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते । तच्छूद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् ॥
ये रुद्रमुपजीवन्ति कलौ वैडालिका नराः । उच्छिष्टरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थितः" इति ।

तथा—

"तेषां गौतमशापाद्धि भविष्यन्त्यन्वये द्विजाः" इति प्रक्रम्य—
"तेषां मध्ये सदाचारा ये ते मच्छासने रताः । ते स्वर्गमपवर्गं च यान्त्येव खलु निश्चयः ॥
वैडालिका ये यास्यन्ति मम संततिदूषकाः । प्राग्गौतमाग्निनिर्दग्धाः पुनर्मद्वचनात् द्विजाः ।
नरकं तु गमिष्यन्ति नात्र कार्या विचारणा" इति । तत्राष्टषष्टितमे—
"विष्णुरूपेण याज्योऽहं सर्वदेवैर्द्विजोत्तम । सात्त्विकी सा समाख्याता वृत्तिर्मे मुनिपुङ्गव ।
जटामकुटधारी च नागभूतैः समावृतः । सिद्धान्तनयमार्गस्थैरहं रुद्रेति पूजितः ।
राजसीं मे तु तां वृत्तिं जानीहि द्विजसतम"

इति । **सिद्धान्तनयमार्ग**शब्दश्च पाशुपतविषयः ; न तु शैवादितन्त्रान्तरविषयः । "तथाऽहं-दुर्बुद्धभिक्षूणां वैला(डा)लव्रतिकैरहम् । तमोतिरिक्तैर्यष्टव्यः, तांस्तमस्येव पातये" इत्यनन्तरग्रन्थे वैलाल (वैडाल)व्रतिकशब्देन तन्त्रान्तरनिष्ठानां राजसेभ्यः सिद्धान्तनयमार्गस्थेभ्यस्तामसतया पृथगुक्तेः । न च वैलालव्रतिकशब्दो बौद्धादिविषयः ; अस्मिन्नेव ग्रन्थे ततः पृथगुक्तेः । न चेतरदुष्टाशयमात्रविषयः ; 'वैलालिका ये यास्यन्ति मम संततिदूषकाः' इति रुद्रसंबन्धित्वावगमात् । न च पाशुपतविषयः ; "सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्वेदमार्गाद्धि(तु)यदन्यदिह जायते । तच्छूद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् । ये रुद्रमुपजीवन्ति कलौ वैडालिका नराः" इति पाशुपतनिष्ठेभ्यः पृथग्व्यपदेशात् । अतः पाशुपतेतरतन्त्रनिष्ठानां वैडालिकशब्दोक्ततया परिशेषात्, तामसेभ्यस्तन्त्रान्तरेभ्यः सिद्धान्तनय-मार्गस्य राजसत्वरूपवैधर्म्ययोगाच्च **सिद्धान्तनय**शब्दः पाशुपतविषयः । रौद्रत्वे तुल्ये सति वैडालिकेभ्यः पूर्वनिर्दिष्टतया स्थानप्रमाणाच्च सिद्धान्तनयशब्दः पाशुपतविषयः । 'सैव पाशुपती दीक्षा योगः पाशु-पतश्च सः' इत्युक्त्वा, 'ये रुद्रमुपजीवन्ति कलौ वैडालिका नराः' इत्यत्र वैडालिकेभ्यः पूर्वमेव हि पाशुपतमार्गः कीर्त्यते । तथा 'वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् । निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः । अल्पापराधा इत्येव शेषा बैडालिका भवन्' इत्यत्रापि वैलालिकेभ्यः पूर्वमेव हि निश्वासाख्या पाशुपतदीक्षासंहिता व्यपदिश्यते । निश्वासाख्यायाः पाशुपतगोचरत्वं तत्रैव स्पष्टम्, "निश्वास-संहिता या हि लक्षमात्रा प्रमाणतः । सैव पाशुपती दीक्षा" इति । अतः पृथग्व्यपदेशात्, तन्त्रान्तरेभ्यो

वैधर्म्यात्, स्थानप्रमाणाच्च सिद्धान्तनयशब्दः पाशुपतविषयः। अतः पाशुपतागमः तमःपतनहेतुभ्यस्तन्त्रान्तरेभ्यो विलक्षणो भगवत्तोषकरः स्वर्गापवर्गहेतुश्चावगम्यते। अतोऽनुग्रहमूलत्व-वेदानुसारित्व-भगवत्प्रीणनत्व स्वर्गापवर्गार्थत्वातामसत्वैः संमोहनार्थदुर्गतिनिमित्ततामसतन्त्रान्तरेभ्यो विलक्षणस्य पाशुपतस्य कथमवैदिकत्वमिति—

नैवम्। तन्त्रान्तरेभ्यो विवक्षितस्य वैषम्यस्याल्पतरत्वात् पाशुपतस्य त्रयीबाह्याधिकारत्वमोहनार्थत्वतमोमिश्ररजोमूलत्वैः, तन्निष्ठानां भगवच्छासनपराङ्मुखत्वोक्त्या च पञ्चरात्रस्यैव वेदतुल्यप्रामाण्यप्रतिपादनपरत्वं हि नात्रावगम्यते। तथा ह्यष्टषष्टितमे—

"पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम्। संहिताजपमास्थाय ते मां प्राप्स्यन्ति ब्राह्मणाः॥
अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि। मार्गेण मां प्रपद्यन्ते ते मां प्राप्स्यन्ति मानवाः॥
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते। शूद्रादीनां न तत् श्रोत्रपदवीमुपयास्यति।
एवं मयोक्तं विप्रेन्द्र! पुरा कल्पे पुरातनम्। पञ्चरात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यति॥
कर्मक्षये च मां (?) कश्चिद्यदि भक्तो भविष्यति। तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति॥
वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विजाः (जैः?)। प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज"

इति पञ्चरात्रस्य वेदतुल्यविकल्पभाक्त्वानुगुणं प्रामाण्यमभिहितम्।

तथा पाशुपतनिष्ठानां तन्त्रान्तरनिष्ठानामिव भगवच्छासनपराङ्मुखत्वं तामसयुगानुवर्तित्वं च तत्रोक्तम्--

"इतरे राजसैर्भावैस्तामसैश्च समावृताः। भविष्यन्ति द्विजश्रेष्ठ! मच्छासनपराङ्मुखाः।
कृतं त्रेता द्वापरश्च युगानि त्रीणि नारद!। सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोधिकाः"

इति। राजसैर्भावैरिति भावशब्दश्चेष्टापरः। राजसी वृत्तिर्विवक्षिता। सा च पाशुपती, "राजसीं मे तु तां वृत्तिं जानीहि" इति सिद्धान्तनयमार्गवृत्तेर्हि राजसत्वं पूर्वमुक्तम्। सिद्धान्तनयशब्दस्य पाशुपतगोचरत्वं पृथग्व्यपदेशवैधर्म्यस्थानप्रमाणैः पूर्वमेवोपपादितम्। तामसैर्भावैरिति भावशब्देन रौद्रान्तरसौगतादिवृत्तय उच्यन्ते। "तथाऽर्हद्बुद्धभिक्षूणां वैडालिव्रतिकैरहम्। तमोतिरिक्तैर्यष्टव्यः" इति ह्युक्तम्। भिक्षूणामिति तृतीयार्थे षष्ठी। यष्टव्य इति यजमानरूपतोक्तिस्तदभिप्रायेण; अन्यथा, "तांस्तमस्येव पातये" इति विरोधात्। अहं यष्टव्य इत्युक्तिर्वस्तुतः सर्वस्य स्वात्मकत्वात्; न तु तदभिप्रायेण। तामसशास्त्रे जगतो भगवदात्मकत्वानभ्युपगमात्। एवं राजसत्वतामसत्वयोः क्रमस्य च प्रत्यभिज्ञानात् अनेन तामसतन्त्रान्तरनिष्ठानामिव राजसपाशुपतनिष्ठानां च भगवच्छासनातिलङ्घित्वमुच्यते। तथा च,

"ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च। नयसिद्धान्तसंज्ञं हि मया शास्त्रं तु दर्शितम्॥
पाशोऽयं पशुभावस्तु स यदा पतितो भवेत्। तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम्॥

इति नयसिद्धान्तसंज्ञस्य पाशुपतस्य मोहनाय प्रवर्तितत्वं वेदानधिकारिणां तत्रैव वेदबुद्ध्या मोहितत्वं चोक्तम्। तथा राजसस्य(स्यापि) पाशुपतस्य तामसानामितरतन्त्राणां चासात्त्विकत्वमविशिष्टं प्रतीयते; 'राजसीं वृत्तिं', 'तमोतिरिक्तैः' इति ह्युक्तम्। राजसीमित्यनेन तमोमिश्ररजोमूलत्वं विवक्षितम्। रजःप्राचुर्यात् पाशुपतस्य राजसत्वनिर्देशः। तथा द्विसप्ततितमे—

"यत् सत्त्वं स हरिर्देवो यो हरिस्तत् परं पदम् । ये सत्त्वरजसी सोऽपि ब्रह्मणः कामसंभवः ।
यो ब्रह्मा सैव वेदस्तु यो वेदः स क्रतुर्बुधाः । यद्रजस्तमसोपेतं सोऽहम् ; नास्त्यत्र संशयः ।
सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते । सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ।
रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोधिकः । तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते ।
यद्वेदबाह्यं कर्म स्यान्मामुद्दिश्योपसेव्यते । तद्रौद्रमिति विख्यातं कनिष्ठगतिदं नृणाम्—
"तद्वै पाशुपतं नाम कनिष्ठं मोहनं नृणाम्" इति च पाठः—
यद्धीनं रजसा कर्म केवलं तामसं तु यत् । तद्दुर्गतिप्रदं नृणामिह लोके परत्र च"

इति सात्त्विकराजसं पैतामहं वृत्तमुक्तम् ; केवलं(ल ?) तामसं दुर्गतिप्रदमुक्तम् । तच्च बौद्धार्हतवैडालिक वृत्तम् । वैडालिकव्रतिकैस्तमोतिरिक्तैरिति ह्युक्तम् । तदुभयातिरिक्त(क्तं ?)मध्यमश्लोकोक्तं कर्म राजसतामसमित्यवगम्यते । केवलतामसमित्युत्तरत्र विशेषितत्वात् । 'यद्रजस्तमसोपेतं सोऽहम्' इत्युक्तत्वाच्च तमोमिश्ररजोमयत्वमवगम्यते ॥

ननु [च] यद्वेदबाह्यमिति श्लोकः वैडालिकविषयः, यद्धीनमिति बौद्धार्हतविषयम् ॥ नैवम् ॥ बौद्धार्हतवैलालिकानामेककोटिनिविष्टतयोक्तत्वात् पृथक्करणस्यानुचितत्वात् । तमःपतनं तेषां तुल्यमवगतम् , 'तथाऽर्हद्बुद्धभिक्षूणां वैडालव्रतिकैरहम् । तमोतिरिक्तैर्यष्टव्यस्तांस्तमस्येव पातये' इति । अत इहान्तिमश्लोके दुर्गतिरुच्यमाना बौद्धार्हतवैडालिकानां समाना भवितुमर्हति । अतो मध्यगतश्लोकः पाशुपतविषयः ।

'तद्वै पाशुपतं नाम' इति पाठे पाशुपतविषयत्वं सिद्धम् । ततश्च तस्य रजोमिश्रतमोमूलत्वं सात्त्विकराजसप्रबन्धात् कनिष्ठत्वं च वेदबाह्यत्वं च स्थितम् । मोहनाय प्रवृत्तत्वं च तल्लोक्तं पाशुपतस्य, यथा द्विसप्ततितमे—

'मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणं च द्विजोत्तमाः । यजन्ति पापकर्माणस्ते यान्ति नरकं नराः ॥
ये वेदमार्गनिर्मुक्ताः तेषां मोहार्थमेव च । नयसिद्धान्तसञ्ज्ञं हि मया शास्त्रं तु दर्शितम् ।
पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् । तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम्'

इति । न च नयसिद्धान्तमार्गो न पाशुपतः, किन्तु वैलालिकशब्दवाच्यशैवादिमार्ग इति वाच्यम् , अष्टषष्टितमे वैडालिकव्यतिरेकेण नयसिद्धान्तमार्गस्योक्तत्वात् । तत्र हि सिद्धान्तनयमार्गस्य राजसत्वेन बैडालिकमार्गस्य तामसत्वेन च भेदो दर्शितः । किञ्च तत्र रुद्रवचः,

"देवदेव जनः सर्वो मुक्तिमार्गे व्यवस्थितः । कथं सृष्टिः प्रभविता नरकेषु च को वसेत् ॥
एवमुक्तस्ततो देवैर्मामुवाच जनार्दनः । युगानि त्रीणि सहसा मामुपैष्यन्ति मानवाः ॥
अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः । एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ॥
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अल्पायासं दर्शयित्वा फलं दीर्घं प्रदर्शय ॥
कुहकानीन्द्रजालानि विरुद्धाचरणानि च । दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर ॥
एवमुक्तः (क्त्वा ?) तदा तेन देवेन परमेष्ठिना । आत्मा तु गोपितः सद्यः प्रकाशोऽहं कृतस्ततः ॥
तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तम । शास्त्रेष्वभिरतो लोको बाहुल्येन न वेद तम्"

इति मोहनार्थत्वमसात्त्विकयुगप्रवृत्तत्वं तदा भगवतस्तिरोधानं रुद्रस्य प्रकाशितत्वं चोक्तम् । पाशुपते च भगवत्प्रकाशनाभावात् तस्याप्युक्तलक्षणमोहनार्थग्रन्थान्तर्भावः सिद्धः । सिद्धान्तनयसंज्ञस्य मोहनार्थत्वोक्तेः ; तस्य च तन्त्रान्तरव्यतिरेकस्योपपादिततया पाशुपतत्वसिद्धेश्च ।

तथा गौतमशापोपहतत्रयीबाह्यजनाधिकारत्वं च पाशुपतस्य तन्त्रान्तराणामप्यविशेषेण प्रतीयते, यथा त्रिसप्ततितमे—"मोहनार्थं तु लोकानां त्वया शास्त्रं पृथक् कृतम् । तत् कदा हेतुना केन कृतं देव! वदस्व नः" इति पृष्टे—दुर्भिक्षाद् गौतमेन रक्षितैरननुमतैर्जिगमिषुभिर्मुनिभिर्गौतमातिसन्धानमुक्त्वाऽभिहितम्—

"एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति । गोवध्याकारणं मुह्यंस्तावत्पश्यति योगवित् ॥
ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै । शशाप तांस्तदा भस्ममिथ्याभूतपरांस्तथा ॥
भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः । तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः ॥
ऊचुः सप्तर्षयो मैवं सर्वकालं द्विजोत्तमाः । भवन्तु किं तु ते वाक्यममोघं नात्र संशयः ॥
त्वद्वाक्यवह्निनिर्दग्धाः सदा कलियुगे द्विजाः । भविष्यन्ति क्रियाहीनाः सर्ववेदबहिष्कृताः"
इति गौतमशापम् , तल्लघूकरणाय कलौ जन्म,
तदनुग्रहाय तद्गोत्रप्रवर्तकैः सप्तर्षिभिर्महेश्वरस्याभ्यर्थनं चोक्त्वा,
'एवमभ्यर्थितस्तैस्तु पुराऽहं द्विजसत्तमाः । वेदक्रियसमायुक्तां कृतवानस्मि संहिताम् ॥
निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः । अल्पापराधा इत्येव शेषा वैडालिका भवन् ॥
मयैव मोहितास्ते तु भविष्यज्जानता द्विजाः ।" तत्र, "निश्वाससंहिता या हि लक्षमात्रा प्रमाणतः॥
सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्वेदमार्गाद्धि यदन्यत्" इत्यादि, 'तेषां गौतमशापाद्धी'त्यादि चोक्तम् । तस्य(त्र ?)अपराधतारतम्येऽपि शापोपहतत्रयीबाह्याधिकारि(र)त्वं पाशुपतस्य तन्त्रान्तराणां चाविशिष्टम् ॥

नन्वेवं तर्हि पाशुपतस्य वेदक्रियासमायुक्तत्वस्वर्गापवर्गप्राप्तिहेतुत्वं कथं घटते-उच्यते । त्रयीबाह्याधिकारत्वस्य व्यवस्थितत्वादल्पापराधत्वाच्च बाभ्रव्यादीनां साक्षादेव वैदिककर्मान्वयेऽत्यन्तत्रयीविरुद्धाचारान्वये चानुपपन्ने सति, वेदार्थव्यामिश्रावैदिकार्थपरतया नातिविरुद्धं पाशुपततन्त्रं प्रणीतमित्येतावत(ता) वैषम्यमिति । वेदक्रियासमायुक्तामिति निर्देशो हि वैदिकावैदिकार्थसङ्करमवगमयति ॥ ननु कथं तर्हि मोहनार्थत्वम्—उच्यते । मुनिभिरभ्यर्थितेन त्रयीबाह्यतानिमित्तशापाविरोधतस्त्रातुकामेन महेश्वरेणाथर्वशिरोभिहितस्वोपासनतदङ्गभूतभस्मधारणादिपरं तन्त्रं प्रणीतम् । अथर्वशिरश्च प्रतर्दनविद्यान्यायात् परमात्मात्मकरुद्रोपासनपरमिति स्थितम् । तथा सति विपुलापराधानां तत्र श्रद्धायां सत्यामपि वेदरहस्याप्रकाशनार्थं पाशुपते रुद्रेण स्वस्य नारायणात्मकत्वं नाभिहितम ; अपित्वर्थवादरूपेणास्य प्रकर्ष एवोक्तः, बाभ्रव्यादयस्तु शापवशादव्यवधानेन श्रुतिसिद्धभगवदुपासनानर्हा अपि स्वल्पापराधतया वेदविरुद्धोक्तिमर्थवादं ज्ञात्वाऽथर्वशिरोभिप्रायानुरोधेन पाशुपतावगतं रुद्रं नारायणात्मकमुपास्य निस्तीर्णाः । अन्ये तु पापप्राचुर्यादथर्वशिरोहृदयानभिज्ञतया भगवदात्मकत्वं रुद्रस्याजानन्तः पाशुपतानुप्रविष्टा अपि सम्यगूज्ञानाभावात्

तमसि भ्राम्यन्तीति तन्मोहनफलकत्वात्, 'तेषां मोहार्थमेव च'इति महेश्वरवचनं घटते। अत एव हि तत्रोच्यते स्पष्टतरम्, 'मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणं च द्विजोत्तमाः। यजन्ते पापकर्माणस्ते यान्ति नरकं नराः। [इति?], ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च। नयसिद्धान्तसञ्ज्ञं हि मया शास्त्रं तु दर्शितम्' इति च। नयसिद्धान्तशब्दश्च निश्वासाख्यपाशुपततन्त्रविषय इति दर्शितम्। एवमधिकारिभेदेन भ्रान्त्य-भ्रान्तिजननाभिसन्धिमता तदर्थं पुष्कलोपदेशमकुर्वता महेश्वरेण प्रणीतत्वात् पाशुपतस्य मोहफलकत्वमनुग्रहनिबन्धनतया तन्त्रान्तरवैषम्यं च युक्तम्॥

इतरे त्रयोऽप्यस्याधिकरणस्य [1]पाशुपतपरीक्षार्थत्वमनभ्युपगच्छन्तो निमित्तमात्रेश्वरपक्षनिराकरण-परत्वं वर्णयन्ति। तेषु **परान् अपरांश्च** प्रति ब्रूमः—निमित्तमात्रेश्वरपक्षं निराचिकीर्षता न केवलमनुमानमेव, किन्तु तन्मूलभूत आगमोऽपि निराकार्यः; तत्प्रामाण्ये जीवति तस्य निरासायोगात्। एवं द्वयोरपि व्युदसनीयत्वे सति अनुमानं शास्त्रोपक्रम एव निरसनीयम्; तन्निरासेन विना शास्त्रारम्भानुपपत्तेः। निमित्तमात्रेश्वरविषयागमौ योगस्मृतिः पाशुपतागमश्च। तत्र 'एतेन योगः प्रत्युक्तः' इत्यत्र योगस्मृतेः प्रत्युक्तत्वात् पाशुपतनिरास एव परिशेषादत्र क्रियत इत्यभ्युपगन्तव्यम्। एवं च सति शास्त्रोपक्रमेऽनुमानं निरस्तं न वा? न चेत् अपेक्षिताकरणं स्यात्। तत्र कृतं चेत्, इहानपेक्षितकरणं स्यात्॥ अत्रैव कृतं निमित्तेश्वरानुमाननिरसनं तत्रोपजीव्यमिति चेत्-तर्हि निमित्तमात्रेश्वरागमप्रतिक्षेपस्य क्वचिदप्यकृतत्वात् पुनश्चापेक्षिताकरणं स्यात्॥ निमित्तमात्रेश्वरागमस्य श्रुतिविरुद्धत्वाद्विरोधाधिकरणन्यायेन तत्प्रतिक्षेप-सिद्धिरिति चेत्—तर्हि पञ्चरात्रस्यापरीक्ष्यत्वं स्यात्, तत्रापि भवद्भिर्विरुद्धतयाऽभिमतांशस्य विरोधनयेनैव प्रतिक्षिप्तत्वात्। ततश्चोत्पत्त्यसंभवादित्यादिसूत्रचतुष्टयवैयर्थ्यं स्यात्॥ तत्र विरोधसंभवस्याविरोधनिर्वहणा-शक्यतायाश्च ज्ञापनार्थं तन्निरूपणमिति चेत्—तर्हि तदर्थमेव पाशुपतमपि परीक्ष्यमिति तदकरणे अपेक्षिता-करणमेव स्यात्॥ यद्युच्येत—पाशुपततन्त्रेऽप्याचारांशे वेदविरोधस्य स्फुटतरत्वात् सौगतमतादेरिव निराकरणं तुल्यन्यायतया सिद्धमिति तत्त्वांशे निमित्तेश्वरवादमात्रमनुमानमूलमिति तन्निरासेन पाशुपतनिर-सनमेव फलतः कृतमिति नापेक्षिताकरणप्रसङ्ग इति—अस्त्वेवम्; तथाऽपि तत्र वेदप्रामाण्याद्यभ्युपगमेन सौगतादिवैलक्षण्यात्, तत्र कार्यकारणतत्त्वविपर्यासस्यानुमाननिरसननिरस्तत्वायोगात् तन्निरासार्थम्, आचारांशे चोत्सर्गापवादाधिकारिविशेषादिना विषयव्यवस्थादिशङ्कापरिहारार्थं विरोधाधिकरणन्यायः स्थापनीय एव। तच्चानुमाननिरासमात्रान्न सिद्ध्यति; तत्त्वानुष्ठानविपर्यय(र्यास)स्यानुमानमूलत्वाभावात्। अतोऽस्मन्मतेऽधि-करणस्य प्रयोजनवत्तरत्वं शास्त्रारम्भोपयोगिनोऽनुमाननिरासस्य स्थानपातित्वं चेति वैषम्यम्।

---

1. पाशुपतेति। नैतावता पाशुपतागमप्रामाण्यं परेष्टमिति मन्तव्यम्; वेदविरुद्धत्वात् पाशु-पतागमस्य वेदमूलकत्वायोगात् अनुमानमूलकत्वमेव पर्यवसितमिति अनुमाननिरासे आगमनिरासः सिद्ध इति तदाशयात्। स्पष्टश्च शांकरभाष्यतद्व्याख्यानुव्याख्यानेषु पाशुपतादिप्रक्रियानिरासपर-त्वम्। परंतु तत्त्वविपर्यासस्य आचारविपर्यासस्य चानुमानासाध्यत्वात् स्वतन्त्रवेदमूलकत्वशंका-यास्, सापराधजनविप्रलिप्सामूलकविपरीतोपदेशरूपशब्दमूलकत्वस्थापनेन तदनुमानवदागमोऽपि निरस्यः इति अधिकरणमिदं पूर्वाधिकरणानीव पूर्णपरग्रन्थनिरासकं युक्तमिति अस्मद्व्याख्याद्याशयः।

ननु **यादवप्रकाश**मते त्वस्याधिकरणस्यानुमानमात्रनिरासपरत्वेन पाशुपतव्युदासफलकत्वाभावेऽपि नापेक्षिताकरणप्रसङ्गः, चतुर्णामपि साङ्ख्ययोगपाशुपतपञ्चरात्राणां परीक्षार्थमुत्तराधिकरणमिति व्याख्यातत्वादिति चेन्न; 'उत्पत्त्यसम्भवात्' इत्यादिसूत्राणां वक्ष्यमाणप्रकारेण चतुष्टयपरीक्षार्थत्वानुपपत्तेः ॥ ननु भवन्मतेऽप्यनुमानं पूर्वमेव निरस्तं चेत्—अधिष्ठानानुपपत्तेरित्यादिसूत्रत्रयप्रणयनमनपेक्षितकरणं स्यात् ॥ न; प्रयोजनभेदात्। तत्र शास्त्रस्य प्राप्तार्थत्वबाधितविषयत्वाभ्यामप्रामाण्यप्रसङ्गपरिहारार्थस्तन्निरासः; इह तु श्रुतिविरुद्धागमप्रामाण्यभङ्गार्थः। अनुमानेन सर्वज्ञे जगत्कारणे सिद्धे हि तद्विषया श्रुतिः प्राप्तार्था स्यात्। तदनुवादस्यानुमानमूलतया तद्विरुद्धाकारसमर्पिका श्रुतिः प्रतिरुद्धा बाधिता वा स्यात् ॥ नन्वेवं सति पूर्वोक्तमनुमानदूषणमिह **तदुक्त**मित्यतिदेष्टव्यम्; उक्तार्थस्यान्यत्रोपजीव्यत्वेऽतिदेशदर्शनात्—यथा 'अल्पश्रुतेरिति चेत्तदुक्तम्', 'जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्' इति। पूर्वभागविचारसिद्धन्यायो विप्रकृष्टोऽपि, 'प्रदानवदेव तदुक्तम्' इत्यादिनाऽतिदिश्यते, किंपुनः संनिकृष्टे शारीरकस्यैवारम्भेऽभिहितः। अतोऽधिष्ठानानुपपत्त्यादिसूत्रद्वयवैयर्थ्यमिति चेत्—न; कण्ठोक्तत्वाभावे दूषणस्यातिदेशाप्राप्तेः। वक्ष्यमाणदूषणानामुपजीव्यत्वमभिप्रेत्य शास्त्रैकप्रमाणकत्वं हि सूत्रितम्; न तु दूषणानां कण्ठोक्तिः। भाष्ये च वक्ष्यमाणं दूषणमनुकृष्य व्याख्यातम्। अर्भकौकस्त्वपरिहारादयश्च 'न निचाय्यत्वात्' इत्यादिभिः कण्ठोक्तत्वादुत्तरत्रातिदिष्टाः। तत्र वक्तुमपेक्षितानामपि दूषणानां वक्ष्यमाणत्वबुद्ध्यैव पूर्वं कण्ठोक्त्यभावः। अत एवातिदेशाभाव उपपन्नः। यतो निमित्तमात्रकल्पनायाः तन्मतस्य चोभयोः प्रतिक्षेप्यत्वम्, अत एव सूत्रयोजनायां च, नैकस्मिन्निति सूत्रादनुषक्तस्य **न**शब्दस्य निषेध्येऽध्याहर्तव्ये सति, पत्युर्**मतमादरणीय**मित्याध्याहार उचितः; न तु, 'प्रधानपुरुषाधिष्ठातृत्वेन कारणत्वमुपपद्यते' इति वा, 'कर्तुः कल्पना' इति वा, 'परिग्रह इति वा; तथा सत्युभयोः प्रतिक्षेप्यत्वासिद्धेः।

'अन्तवत्त्वमसर्वज्ञता वा' इति सूत्रस्य **परैरपरै**श्चैवमर्थ उक्तः—प्रधानपुरुषेश्वराः सर्वज्ञेनेश्वरेण इयत्तया परिच्छिन्नाश्चेत्, अन्तवन्तः स्युः। ततश्च शून्यवादप्रसङ्गः। सर्वेषां संसारिणां क्रमेण मोक्षात् अन्तवत्त्वे पुरुषभोगार्थं प्रधानस्येश्वराधिष्ठेयत्वाभावादीश्वरस्य सार्वज्ञ्यमैश्वर्यं च निर्विषयतयाऽनुपपन्ने स्याताम्। यदि नेश्वरज्ञानेन प्रधानादयः परिच्छिन्नाः, तस्य सार्वज्ञ्यहानिरिति। तदयुक्तम्। तथा हि—न तावत् शून्यवादप्रसङ्गः; प्रधानादीनामन्तवत्त्वप्रसङ्गाभावात्। अन्तवत्त्वस्य प्रसञ्जकः किं देशतः परिच्छेदः, उत कालतः, उत संख्यातः। न प्रथमः; 'आराग्रमात्रो ह्यवरोऽपि दृष्टः', 'नित्यो नित्यानाम्', 'न जायते म्रियते' इत्यणूनामेव नित्यत्वश्रवणेन भग्नव्याप्तिकत्वात्। साङ्ख्यादीनां पक्षे प्रधानस्य पुरुषाणां च, कस्यचिदपि पक्षे ईश्वरस्य च देशतः परिच्छिन्नत्वाभावाच्च। न द्वितीयः; साध्याविशिष्टत्वप्रसङ्गात्। यदि—आदिमत्त्वं कालतः परिच्छिन्नत्वम्, तत् अन्तवत्त्वे प्रयोजकमिति विवक्षितम्—तदपि न; अविद्यानिवृत्तौ व्यभिचारात्। न तृतीयः; विकल्पासहत्वात्। किं वास्तवसङ्ख्यापरिच्छिन्नत्वं विवक्षितम्; उत व्यावहारिकसङ्ख्यापरिच्छिन्नत्वम्। आद्ये, घटादिष्वपि त्वन्मतेनासिद्धत्वाद्व्याप्तिशून्यता। द्वितीये तु,

उत्पत्त्यसंभवाधिकरणं नाम पाञ्चरात्राधिकरणम्—२-२-८.

**उत्पत्त्यसंभवात्** ॥ २-२-३९ ॥

कपिलादितन्त्रसामान्यात् भगवदभिहित—परमनिःश्रेयससाधनावबोधिनि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य तन्निराक्रियते। तत्रैवमाशङ्क्यते, "परमकारणात् परब्रह्मभूताद्वासुदेवात्

---

एकमेवाद्वितीयमित्येकत्वव्यवहारविषये नित्यतया स्वाभ्युपगते ब्रह्मणि व्यभिचारः ; वैशेषिकैः सङ्ख्याशून्यत्वेनाभिमतेषु क्रियादिष्वनित्यत्वमस्तीति तद्वदेव सङ्ख्याशून्यत्वे स्वाभिमतब्रह्मणोऽप्यनित्यत्वप्रसङ्गः स्यात् ॥ तैर्नित्यतयाऽभिमतजातौ व्यभिचारादप्रसक्तिश्चेत्—तैर्नित्यतयाऽभिमतदिक्कालादिषु व्यभिचारात् सङ्ख्यावत्त्वेऽप्यनित्यत्वाप्रसक्तिः ॥ तेषामपि पक्षीकाराद्दोष इति चेत्—नित्यतयाऽभिमतजातेरपि त्वया पक्षीकार्यत्वात् अव्यभिचरितं सङ्ख्याशून्यत्वे अनित्यत्वं क्रियादेरिव ब्रह्मणः प्रसज्येत। अतः प्रसञ्जकविपर्ययेऽपि प्रसञ्जनीयानिष्टधर्मापत्तिलक्षणप्रतितर्कपरास्तत्वाच्च तर्काभासता। आत्मानन्त्यस्य पूर्वमुपपादितत्वादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वमोक्षप्रसङ्गो न स्यादिति प्रधानपुरुषयोरीश्वराधिष्ठेयत्वसंभवान्न तज्ज्ञानशक्त्योर्निर्विषयत्वम्। सर्वमोक्षाभ्युपगमेऽपि न निर्विषयत्वम्; प्रधानस्य ज्ञानबाध्यत्वाभावेन सर्वमुक्तदशायामप्यवस्थितिसंभवात् ; मुक्तानामपीश्वरसाक्षात्कार्यत्वनियाम्यत्वोपपत्तेश्च। कदाचित्सर्वमोक्षमिच्छतां पक्षे तदानीमीश्वरेच्छायत्नादीनां निर्विषयत्वं च नानिष्टमिति न तत् प्रसञ्जनीयम् ॥

अन्ये तु परमाणूनां पुरुषाणां च सङ्ख्याया अन्तमीश्वरो गच्छति चेत्—सर्वपुरुषमोक्षादीश्वरस्येशनमविषयं स्यात्। अन्तं न गच्छति चेत्—असर्वज्ञता इति अस्य सूत्रस्यार्थमाहुः। तत्रापि वैशेषिकादिषु कदाचित्सर्वमोक्षमिच्छतां नायमनिष्टप्रसङ्गः स्यात् ॥ तदानीमपि सार्वज्ञ्यस्य न निर्विषयत्वम्, मुक्तानां परमाणूनां च नित्यतया साक्षात्कार्यत्वादतीतागामिनामपि साक्षात्कारसंभवाच्च। सर्वमुक्तिमनिच्छतां पक्षे तु अमुक्तात्मविषयमीशनं संभवतीति न तस्य निर्विषयत्वप्रसङ्गः। सर्वमोक्षाभावश्चात्मानन्त्यादुपपद्यत इत्युक्तम्। नन्वेकोपाधिगृहीतानां भिन्नानां घटादीनां सङ्ख्येयत्वदर्शनात् तद्विपरीतमानन्त्यं श्रुतिमनपेक्ष्य तर्कमात्रेण कल्पयितुमशक्यमिति चेत्—न; अनादीनां निमेषकाष्ठाकलामुहूर्तोपाधीनामसङ्ख्येयत्वस्य सर्वाभ्युपगन्तव्यत्वेन तेष्वेकोपाधिगृहीतत्वे सति भिन्नत्वस्य व्यभिचारादिति ॥ इति पशुपत्यधिकरणम् ॥

**उत्पत्त्यसम्भवात्** ॥ अवान्तरसङ्गतिमाह—**कपिलादी**ति। **आशङ्क्ये**ति पूर्वपक्षसूत्रद्वयार्थः, **निराक्रियत** इति सिद्धान्तसूत्रद्वयार्थ इति विभागः। पञ्चरात्रं किं साङ्ख्यादिवत् क्वचित् प्रमाणम्, उत कार्त्स्न्येन प्रमाणम् ; किमस्य क्वचिच्छ्रुतिविरोधोऽस्ति, उत क्वचिदपि नास्तीति ; किमत्र जीवोत्पत्त्यादिकं विवक्षितम्, उत नेति; सङ्कर्षणप्रद्युम्नादिशब्दाः किं जीवादिशब्दविशेषणतया निर्दिष्टाः, उत नेति; सङ्कर्षणप्रद्युम्नादिशब्दाः किं जीवादिशब्दविशेषणतया निर्दिष्टाः, उत जीवादिशब्दाः सङ्कर्षणादिशब्दविशेषणतया निर्दिष्टा इति। सङ्कर्षणादिशब्दानां जीवादिशब्दविशेषणत्वे जीवोत्पत्त्यादिकं विवक्षितमिति श्रुतिविरोधसद्भावादविरुद्धांशे प्रामाण्यात् तदेकदेशस्योपादेयत्वम्, जीवादिशब्दानां सङ्कर्षणादिशब्दविशेषणत्वे जीवोत्पत्त्यादेरविवक्षितत्वेन क्वचिदपि श्रुतिविरोधो नास्तीति कार्त्स्न्येन प्रमाणत्वात् कार्त्स्न्येन निःश्रेयसार्थिभिरुपादेयत्वं सिद्ध्येत्। **कथमाशङ्क्यत इत्यत्राह तत्रैवमिति**। **परमकारणादि**त्यादिः पञ्चरात्रग्रन्थः ॥

सङ्कर्षणो नाम जीवो जायते; सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते; तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायते" इति हि भागवतप्रक्रिया। अत्र जीवस्योत्पत्तिः श्रुतिविरुद्धा प्रतीयते। श्रुतयो हि जीवस्यानादित्वं वदन्ति, "न जायते म्रियते वा विपश्चित्" इत्याद्याः॥ ३९॥

**न च कर्तुः करणम्** ॥ २-२-४०॥

'सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते' इति[1] कर्तुर्जीवात् करणस्य मनस उत्पत्तिर्न संभवति; "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति परस्मादेव ब्रह्मणो मनसोऽप्युत्पत्तिश्रुतेः। अतः श्रुतिविरुद्धार्थप्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिध्यते इति ॥४०॥ एवं प्राप्ते प्रचक्ष्महे-

**विज्ञानादिभावे वा तदप्रतिषेधः** ॥ २-२-४१॥

वाशब्दात् पक्षो विपरिवर्तते। विज्ञानं चादि चेति परं ब्रह्म विज्ञानादि[2]। सङ्कर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति तत्प्रतिपादनपरस्य शास्त्रस्य प्रामाण्यं न प्रतिषिध्यते।

एतदुक्तं भवति—भागवतप्रक्रियामजानतामिदं चोद्यम्, यत् जीवोत्पत्तिर्विरुद्धाऽभिहितेति; वासुदेवाख्यं परं ब्रह्मैवाऽऽश्रितवत्सलं स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया चतुर्धाऽवतिष्ठत इति हि तत्प्रक्रिया। यथा पौष्करसंहितायाम्,

"कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते। क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत्"

इत्यादि। तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति सात्वतसंहितायामुक्तम्—

"ब्राह्मणानां हि सद्ब्रह्मवासुदेवाख्ययाजिनाम्। विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत्"

---

**न च कर्तुः करणम्** ॥ **कर्ता—जीवः** ॥

**विज्ञानादिभावे वा तदप्रतिषेधः** ॥ सिद्धान्तसूत्रतां दर्शयति **वाशब्दादिति**। 'अपि वा कर्तृसामान्यात्' 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इतिवदिति भावः। **विज्ञानं चादि चेतीति**। 'चैतन्यस्वरूपिण' इति मन्त्रलिङ्गात्, 'भगवान् वासुदेवः परा प्रकृतिः' इति वचनाच्च वासुदेवस्य ज्ञानस्वरूपत्वपरमकारणत्वे प्रतिपादिते। तस्माद्**विज्ञानादि**शब्देन भगवान् वासुदेवः स्मारित इति भावः। विज्ञानैश्वर्यादिगुणसद्भाव इति योजनायां तेषां सङ्कर्षणादीनां वासुदेवत्वमार्थं स्यात्। ततोऽपि शाब्दत्वानुगुणयोजना वरम्। 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः', 'यतो वा इमानि भूतानि जायन्ते' इति ज्ञानस्वरूपस्य ब्रह्मणः परमकारणत्वप्रतिपादकवेदान्तैककण्ठ्यद्योतनार्थं च **विज्ञानं चादि चेति** व्याख्यातम्। **सङ्कर्षणे**त्यादिना सूत्रस्य वाक्यार्थ उक्तः। के पुनः सङ्कर्षणादयः, तेषां परब्रह्मभावः कथम्, तथा ब्रह्मणः उत्पत्तिर्वा कथम्, शास्त्रप्रामाण्यं वा कथमित्यत्राह—**एतदुक्तं भवतीति**। **भागवते**त्यादि। **कर्तव्यत्वेने**त्यादिवचन**मागम**शब्दनिर्वचनपरम्। **स्वसंज्ञाभिः**-नमश्शब्दाद्युपेतैस्तत्तद्व्यूहनामभिरित्यर्थः। **क्रमागतै**रुपास्यवस्तुप्रतिपादनाच्छास्त्रस्यागमत्वमिति श्लोकार्थः। 'चातुरात्म्यमुपास्यते' इत्यनेन सङ्कर्षणादिचातुर्विध्यं समाश्रयणीयत्वायेति दर्शितम्। सङ्कर्षणादीनां परब्रह्मभावः कथमित्यत्राह **तच्चेति**। चातुरात्म्योपासनपरशास्त्रस्य वासुदेवाख्यपरब्रह्मोपासनपरत्वदर्शनाच्चातुर्विध्यं वासुदेवस्येति सिद्धम्। सङ्कर्षणाद्यर्चनं किमर्थम्? वासुदेवार्चनं हि मोक्षप्रदम्; न केवलं

---

1. इतीति। इत्येतद्वाक्यार्थभूतेत्यर्थः। 2. आदीति। 'अद भक्षणे' इति धातोः णिनिप्रत्यये रूपम्। संहर्तृ इत्यर्थः। संकर्षणादीनां संहर्तृत्वादिव्यापारं व्यञ्जयितुमेवमुक्तिः।

इति । तद्धि वासुदेवाख्यं परं ब्रह्म संपूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैर्ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक् प्राप्यते ।

"विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यते"

इति वदन्ति । विभवो हि नाम रामकृष्णादिप्रादुर्भावगणः । व्यूहो वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपश्चतुर्व्यूहः । सूक्ष्मं तु केवलषाड्गुण्यविग्रहं वासुदेवाख्यं परं ब्रह्म । यथा पौष्करे,
"यस्मात् सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम् । अस्मादवाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणा ॥"

इत्यादि । अतः सङ्कर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाविग्रहरूपत्वात्, "अजायमानो बहुधा विजायते" इति श्रुतिसिद्धस्यैवाश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसङ्ग्रहरूपजन्मनोऽभिधानात् तदभिधायिशास्त्रप्रामाण्यस्याप्रतिषेधः इति ।

तत्र जीवमनोहङ्कारतत्त्वानामधिष्ठातारः सङ्कर्षणप्रद्युम्नानिरुद्धा इति तेषामेव जीवादिशब्दैरभिधानमविरुद्धम्; यथा आकाशप्राणादिशब्दैर्ब्रह्मणोऽभिधानम् ॥ ४१ ॥

**विप्रतिषेधाच्च** ॥ २-२-४२ ॥

विप्रतिपिद्धा हि जीवोत्पत्तिस्तस्मिन्नपि तन्त्रे; यथोक्तं परमसंहितायाम्—

"अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ॥

व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च । स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥"

इति । एवं सर्वास्वपि संहितासु जीवस्य नित्यत्ववचनाज्जीवस्वरूपोत्पत्तिः पञ्चरात्रतन्त्रे प्रतिषिद्धैव । जन्ममरणादिव्यवहारस्तु लोकवेदयोर्जीवस्य यथोपपद्यते, तथा "नात्मा श्रुतेः" इत्यत्र वक्ष्यते ।

---

चातुरात्म्योपासनमेव प्रतिपाद्यते; विभवार्चनादिकमपि प्रतिपाद्यत इति शङ्कायामयोगव्यवच्छेदज्ञापनार्थम्, चातुरात्म्यविवरणार्थं चाह—**तद्धी**ति। **सूक्ष्मं पर**मित्येकार्थं पदद्वयम् । विभवादयः के इत्यत्राह **विभवो ही**ति । **चतुर्व्यूहः**—चतुर्विभागः । उक्तार्थे प्रमाणमाह **यथा पौष्कर** इति । **यस्मा**दित्यादिवचनेन परस्य ब्रह्मणो वासुदेवाख्यस्य प्राप्यत्वं दर्शितम् । **आदिशब्दोपात्तेषु तत्प्रकरणस्थ**वचनेषु व्यूहविभवार्चनतत्फलादि द्रष्टव्यमित्यर्थः । न केवलं श्रुतिविरोधाभावः, तदानुगुण्यमेवास्तीति दर्शयितुम् 'अजायमान' इत्यादिवाक्यमुपात्तम् । जीवादिसामानाधिकरण्यनिर्वाहमाह **तत्रे**ति ॥

जीवादिशब्दैः सङ्कर्षणादीनां विशेष्यत्वेऽनुकूललिङ्गमुक्तम्; सङ्कर्षणादिशब्दैर्जीवादीनां विशेष्यत्वे प्रतिकूललिङ्गमुच्यते । **विप्रतिषेधाच्च** ॥ **विप्रतिषेधो** विशेषेण प्रतिषेधः, विविधप्रतिषेधो वा; यथा, 'श्रुतिविप्रतिपन्ना' इत्यत्रासत्तः श्रवणेन विशेषतः प्रतिपन्नेत्यर्थः, तद्वत् । यथा, 'बुद्धे क्षेमप्रापणम्; तच्छास्त्रैर्विप्रतिषिद्धम्' इत्यत्र विप्रतिषेधशब्दः, तथाऽयमपि निषेधपर इति भावः । यद्वा विप्रतिषेधो व्याघातः । जीवोत्पत्तिप्रतिषेधप्रतिपादकशास्त्रेण जीवोत्पत्तिवचनस्य व्याघातमभिप्रेत्य व्याघातहेतुभूतजीवोत्पत्तिनिषेधमाह **विप्रतिषिद्धा ही**ति । **सर्वास्वपि संहितास्वि**ति । अनेन **विप्रतिषेधशब्दे विशब्दार्थो** विवक्षितः । जीवोत्पत्तिः कथ्यतां नाम; तथाऽपि न श्रुतिविरोधः; श्रुतावपि जीवोत्पत्तिदर्शनादित्याह **जन्ममरणादी**ति । तर्हि तस्य निर्वाहः कथमित्यत्राह **वक्ष्यत** इति ।

अतो जीवस्योत्पत्तिस्तत्रापि प्रतिषिद्धैवेति जीवोत्पत्तिवादनिमित्ताप्रामाण्यशङ्का दूरोत्सारिता ।

यश्चैष केषांचिदुद्घोषः, "साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान्" इति, साङ्गेषु वेदेषु पुरुषार्थनिष्ठा न लब्धेति वचनात् वेदविरुद्धं तन्त्रमिति—सोऽप्यनाघ्रातवेदवचसामनाकलिततदुपबृंहणन्यायकलापानां श्रद्धामात्रविजृम्भितः—यथा "प्रातःप्रातरनृतं ते वदन्ति, पुरोदयाज्जुह्वति येऽग्निहोत्रम्" इति अनुदितहोमनिन्दा उदितहोमप्रशंसार्थेत्युक्तम्; यथा च भूमविद्याप्रक्रमे नारदेन, "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमम्" इत्यारभ्य सर्वं विद्यास्थानमभिधाय, "सोऽहं भगवो मन्त्रविदेवास्मि, नात्मवित्" इति भूमविद्याव्यतिरिक्तासु सर्वासु विद्यासु आत्मवेदनालाभवचनं वक्ष्यमाणभूमविद्याप्रशंसार्थं कृतम्। अथवा अस्य नारदस्य साङ्गेषु वेदेषु यत् परतत्त्वं प्रतिपाद्यते, तदलाभनिमित्तोऽयं वादः; एवमेव शाण्डिल्यस्येति पश्चाद्वेदान्तवेद्यवासुदेवाख्यपरब्रह्मतत्त्वाभिधानादवगम्यते ।

तथा वेदार्थस्य दुर्ज्ञानतया सुखाववोधार्थः शास्त्रारम्भः परमसंहितायामुच्यते,

"अधीता भगवन् वेदाः साङ्गोपाङ्गाः सविस्तराः। श्रुतानि च मयाऽङ्गानि वाकोवाक्ययुतानि च॥
न चैतेषु समस्तेषु संशयेन विना क्वचित्। श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति" इति।
"वेदान्तेषु यथासारं संगृह्य भगवान् हरिः। भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम्"
इति च।

---

करणाद्याश्रयशरीरसंयोगकृतज्ञानविकाससङ्कोचलक्षणावुत्पत्तिविनाशाविति वक्ष्यत इत्यर्थः। उपसंहरति **अत** इति।

यैर्जीवोत्पत्त्यादिप्रतिपादनेन शास्त्रस्याप्रामाण्यं सिद्धान्तितम्, तैरेतच्छास्त्राविवक्षितमर्थं विवक्षितत्वेनारोप्याप्रामाण्यमुक्तं स्यात्। अतोऽप्रामाण्यं पूर्वपक्षीकार्यम्; न सिद्धान्तीकर्तव्यम्। तस्मात् परैरुक्तं सूत्रानभिमताप्रामाण्यहेतुं दूषयितुमनुवदति **यश्चैष** इति। **सोऽपी**त्यादिना, **निष्ठामलभमान** इत्यस्य परोक्तार्थाभ्युपगमेन परिहार उक्तः। अथ अन्यथा अर्थं वक्ष्यंस्तमर्थं दृष्टान्ते शिक्षयति **अथवे**ति। तमेव दार्ष्टान्तिकेऽप्याह **एव**मिति। कथमिदमवगम्यत इत्यत्राह **पश्चाद्वेदान्तवेद्ये**ति। श्रीपञ्चरात्रस्य वेदार्थविशदीकरणरूपतामाह **तथे**ति। **तथा** उक्तानुगुणमेवेत्यर्थः। **संशयेन विना क्वचि**दिति। **संशयः** अनधीतशाखासु श्रुतार्थविरोधोऽस्ति न वेत्येवंरूपः। यद्वा प्रतिपन्नेष्वर्थेषु यच्छ्रेयः, तन्न जानामीत्यर्थः॥ 'अधीता भगवन् वेदाः' इत्यादिश्लोकानामुत्तरश्लोकोऽयम्, 'वेदान्तेषु यथासारं संगृह्य भगवान् हरिः। भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम्' इति। **मोक्षधर्मे**, "ये [1]वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च। गृणन्ति सत्यधर्माणः सत्यं सत्येषु सामसु" इति। **एकायनशाखाविषये पारमेश्वरं वचनम्**, "महतो वेदवृक्षस्य मूलभूतो महानयम्। स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने" इत्यादि द्रष्टव्यम्।

बौद्धाद्युपदेशवदिदमपि विप्रलम्भाय कृतं किं न स्यात्। वेदार्थ उच्यते चेत्, अत एव वेदा अध्यापयितव्याः, किं ग्रन्थनिर्माणेनेत्याशङ्कां परिजिहीर्षुः, वेदान्तेषु यथासारमित्यादिवचनार्थश्चाभिप्रयन्नाह

---

1. वाकनिषच्छब्दौ मूलभूत-एकायन वेदभाग परौ; अनुवाकोपनिषच्छब्दौ स्कन्धशाखाभूत-ऋग्वेदादि वेदभागपरौ।

**अतः स भगवान् वेदैकवेद्यः परब्रह्माभिधानो वासुदेवो निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दाद्यपरिमितोदारगुणसागरः सत्यसङ्कल्पः चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयाऽवस्थितान् धर्मार्थकाममोक्षाख्यपुरुषार्थाभिमुखान् भक्तान् अवलोक्य, अपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः स्वस्वरूपस्वविभूतिस्वाराधनतत्फलयाथात्म्यावबोधिनो वेदान् ऋग्यजुःसामाथर्वभेदभिन्नान् अपरिमितशाखान् विध्यर्थवादमन्त्ररूपान् स्वेतरसकलसुरनरदुरवगाहांश्चावधार्य, तदर्थयाथात्म्यावबोधि पञ्चरात्रशास्त्रं स्वयमेव निरमिमीतेति निरवद्यम्।**

**यत्तु परैः सूत्रचतुष्टयं कस्यचिद्विरुद्धांशस्य प्रामाण्यनिषेधपरं व्याख्यातम्—तत् सूत्राक्षराननु-**

---

**अतः स भगवा**निति। **अतः** वेदान्तस्य दुरवबोधार्थत्वात्। **भगवा**नित्यादिविशेषणानि भ्रमविप्रलम्भादिसंभवशङ्काव्यावृत्त्यर्थानि। भगवच्छब्देन हेयप्रत्यनीक[त्व?]कल्याणैकतानत्वे विवक्षिते। किं प्रमाणमित्यत्राह **वेदैकवेद्य** इति। पुरुषत्वात् सदोष इत्याद्यनुमानस्य धर्मिग्राहकप्रमाणबाधमभिप्रेत्य **एक**शब्दप्रयोगः। 'तद्धि ब्रह्म; न वासुदेवः' इत्यत्राह **परब्रह्माभिधान** इति। भगवच्छब्दसमाख्याप्रमाणसिद्धमर्थमाह **निखिलहेये**ति। वक्ष्यमाणव्यवस्थानुगुणविशेषणमाह **सत्यसङ्कल्प** इमि। **भक्तान्।** 'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इति वचनात् भक्तिः सम्यक्शास्त्रज्ञानहेतुः। सात्त्विकजनसंरक्षणाय। वेदापाश्रयेण तदुपमर्दनकारिणामसुराणां निरसनाय कृतं बुद्धादिशास्त्रमिति तच्च न (तन्न?) रक्षणोपयुक्तम्। अतो भक्तरक्षणार्थं कृतेऽस्मिन् प्रबन्धे न दोषगन्ध इति भावः। विप्रलम्भासम्भवार्थमाह—**अपारे**ति। वेदैरेवालम्, किं पञ्चरात्रेणेत्यत्राह—**ऋग्यजुस्सामाथर्वभेदभिन्नान् अपरमितशाखा**निति। **विध्यर्थवादमन्त्ररूपा**निति। तत्त्वविषयं यदत्रोच्यते, तत् सर्वमर्थवादादिषु प्रतिपादितमिति भावः। विलक्षणज्ञानैर्ज्ञायत एव; किमनेनेत्यत्राह **स्वेतरे**ति। **निरवद्यम्।** पाशुपतादिषु यदवद्यम्, तन्नास्त्यत्रेति भावः॥

ननु बौद्धार्हतादयो भगवत्प्रणीताः। तद्वदिदं किं न स्यात्?। उच्यते। अवतारप्रयोजनं हि दुष्कृद्विनाशनं साधुपरित्राणं च। तत्र दुष्कृद्विनाशाय बौद्धादिप्रणीतिः; इदं तु नारदशाण्डिल्यादिसाधुपरित्राणायेति वैषम्यमिति। नारदादयो ह्यत्र श्रोतारः॥ नारदादिश्रोतृत्वकथनं विप्रलम्भार्थमिति चेन्न; सर्वत्राविश्वासप्रसङ्गात्। सर्वशक्तिना भगवता वेदानामपौरुषेयत्वादिख्यापनं विप्रलिप्सया कृतमिति शङ्का कर्तुं हि शक्यते। किञ्च वेदोदिता एवार्थाः सर्वत्र सहस्रशः श्रीपञ्चरात्रे श्रूयन्ते। बौद्धादिषु हि वेदप्रामाण्यनिराकरणादिकं दृश्यते। किञ्च प्रमाणभूतेषु प्रबन्धेषु बुद्धागमादीनां श्रुतिविरोधात् परित्याज्यत्वं श्रूयते; न तथा श्रीपञ्चरात्रस्य। प्रत्युत श्रुतिसारार्थविशदीकरणरूपत्वमेव दृश्यते। एवं नारदशाण्डिल्यादिसात्विकसंरक्षणाय प्रवृत्तत्वात्, वेदविहितानेकार्थप्रतिपादकत्वात्, वेदार्थावगमसौकर्याय प्रवृत्तत्वेन प्रमाणभूतप्रबन्धेषु श्रूयमाणत्वात्, वेदार्थविशदीकरणरूपत्वानुगुणं वेदान्तार्थस्य प्रतिपादनदर्शनात्, अतिशङ्कायां वेदेऽप्यनाश्वासप्रसङ्गाच्च दुष्कृद्विनाशार्थप्रवृत्त-श्रुतिविरुद्धार्थप्रतिपादकप्रमाणभूतप्रबन्धान्तरनिन्दितबुद्धागमादिसाम्यबुद्धिः श्रीपञ्चरात्रशास्त्रसमीपं नासादयतीत्यर्थः। एवं परोक्ताप्रामाण्यहेतुर्निराकृतः।

अथ परोक्तं सूत्रार्थमनूद्य दूषयति--**यत्त्वि**ति। **सूत्रचतुष्टय**मिति। न सूत्रद्वयमित्यर्थः। **सूत्राक्षराननुगुणम्।** वाशब्दतदप्रतिषेधादिसूत्रपदाननुगुणमित्यर्थः। 'अपि वा कर्तृसामान्यात्

गुणं सूत्रकाराभिप्रायविरुद्धं च। तथा हि सूत्रकारेण वेदान्तन्यायाभिधायीनि सूत्राण्यभिधाय, वेदोपबृंहणाय च भारतसंहितां शतसहस्रिकां कुर्वता मोक्षधर्मे ज्ञानकाण्डेऽभिहितम्, "गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः। य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः" इत्यारभ्य महता प्रबन्धेन पञ्चरात्रशास्त्रप्रक्रियां प्रतिपाद्य,

"इदं शतसहस्राद्धि भारताख्यानविस्तरात्। आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम्॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा। आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम्॥
इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्। ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा॥

भविष्यति प्रमाणं वै एतदेवानुशासनम्" इति। साङ्ख्ययोगशब्दाभ्यां ज्ञानयोगकर्मयोगावभिहितौ। यथोक्तम्, "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" इति। भीष्मपर्वण्यपि, "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः॥ सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः" इति। कथमेवं ब्रुवाणो बादरायणो वेदविदग्रेसरो वेदान्तवेद्यपरब्रह्मभूतवासुदेवोपासनार्चनादिप्रतिपादनपरस्य सात्त्वतशास्त्रस्याप्रामाण्यं ब्रूयात्॥

ननु च, "सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने" इत्यादिना सांख्यादीनामप्यादरणीयतोच्यते। शारीरकेऽपि(तु?)सांख्यादीनि प्रतिषिध्यन्ते। अत इदमपि तन्त्रं तत्तुल्यम्॥ नेत्युच्यते, यतस्तत्रापीममेव शारीरकोक्तन्यायमवतारयति। "किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा" इति प्रश्नस्यायमर्थः—किं सांख्ययोगपाशुपतवेदपञ्चरात्राणि एकतत्त्वप्रतिपादनपराणि, पृथक्तत्त्वप्रतिपादनपराणि वा। यद्येकतत्त्वप्रतिपादनपराणि, किं तदेकं

---

प्रमाणमनुमानं स्यात्', 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इत्यादिषु वाशब्दः पक्षविपरिवृत्तिपरो दृष्टः। **विप्रतिषेध**शब्दोऽपि **तदप्रतिषेधवाशब्दसाहचर्यान्निषेधार्थ** एवेति भावः। सूत्रकाराभिप्रायविरोधमुपपादयति **तथाहीति**। सूत्रकारेण सूत्रेऽयमर्थ उक्तश्चेत्, किमर्थं **महाभारते** कथनमिति शङ्कायां प्रयोजनभेदं दर्शयति **वेदान्तन्यायाभिधायीनीति**। **वेदोपबृंहणाय चेति**। अधीतशाखार्थस्य संशयविपर्ययादिनिरासको न्यायः; अनधीतशाखार्थैककण्ठ्येनाधीतशाखार्थज्ञापनमुपबृंहणमित्यर्थः। **गृहस्थ** इत्यादि। **महता प्रबन्धेन**—विस्तरेण। **इदं श्रेयः**—एतच्छास्त्रोक्तमेव सांसारिकफलसाधनम्। **इदं ब्रह्म**—एतदुक्तमेव परमप्राप्यं ब्रह्म, **इदमनुत्तमं हितम्**—अपवर्गसाधनमित्यर्थः। **अथर्वाङ्गिरसैः**—अथर्वणा अङ्गिरसा च दृष्टैरथर्ववेदप्रदेशैः। **ऋगादिशब्दैः** तत्तदर्थोऽभिप्रेतः। **साङ्ख्ययोगशब्दौ** व्याचष्टे **साङ्ख्येति**। कर्मज्ञानयोगोपेतमित्यर्थः।

महाभारतप्रशस्तत्वहेतोरनैकान्त्यमाह—**ननु चेति**। परिहरति—**नेतीति**। **यतस्तत्रापीति**। साङ्ख्यादीनां वेदाविरुद्धांशे प्रामाण्यम्, कृत्स्नाविरुद्धस्य श्रीपाञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यमिति न्यायमवतारयतीत्यर्थः। तदुपपादयति **किमेतानीति**। एकतत्त्वप्रतिपादनपरत्वे प्रमेयविशेषबुभुत्सा, पृथक्तत्त्वप्रतिपादनपरत्वे प्रमाणविशेषबुभुत्सा। 'अतिरात्रे षोडशिनं गृह्णाति', 'नातिरात्रे षोडशिनं गृह्णाति', 'उदिते जुहोति', 'अनुदिते जुहोति', 'व्रीहिभिर्यजेत', 'यवैर्यजेत' इत्यादिष्वधिकारिभेदेन कालभेदेन फलभेदेन विकल्पः संभवत्यनुष्ठाने। सिद्धवस्तुनि तु विकल्पासंभवेन विरोधादेकमेव प्रमाणं

तत्त्वम् ? । यदा तु पृथक्तत्त्वप्रतिपादनपराणि, तदैषां परस्परविरुद्धार्थप्रतिपादनपरत्वाद्वस्तुनि विकल्पासंभवाच्चैकमेव प्रमाणमङ्गीकरणीयम्, किं तदेकमिति । अस्योत्तरं ब्रुवन्, "ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै । सांख्यस्य वक्ता कपिलः" इत्यारभ्य सांख्ययोगपाशुपतानां कपिलहिरण्यगर्भपशुपतिकृतत्वेन पौरुषेयत्वं प्रतिपाद्य, "अवा(पा)न्तरतपा नाम वेदाचार्यः स उच्यते" इति वेदानामपौरुषेयत्वमभिधाय, "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इति पञ्चरात्रतन्त्रस्य वक्ता नारायणः स्वयमेवेत्युक्तवान् । एवं वदतश्चायमाशयः—पौरुषेयाणां तन्त्राणां परस्परविरुद्धवस्तुवादितया, अपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तुविरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यं दुर्लभम् । वेदवेद्यश्च परब्रह्मभूतो नारायणः । अतस्तत्तन्त्राभिहितप्रधानपुरुषपशुपतिप्रभृतितत्त्वस्य वेदान्तवेद्यपरब्रह्मभूतनारायणात्मकतयैव वस्तुत्वमभ्युपगमनीयमिति । तदिदमाह च, "सर्वेषु च नृपश्रेष्ठ ! ज्ञानेष्वतेषु दृश्यते । यथागमं यथान्यायं निष्ठा नारायणः प्रभुः" इति । यथागमं यथान्यायमिति न्यायानुगृहीततत्तदागमोक्तं वस्तु परामृशतः, नारायण एव सर्वस्य वस्तुनः निष्ठेति दृश्यते । अब्रह्मात्मकतया तत्तत्तन्त्राभिहितानां तत्त्वानाम्, "सर्वं खल्विदं ब्रह्म" "विश्वं नारायणः" इत्यादिना सर्वस्य ब्रह्मात्मकतामनुसन्दधानस्य नारायण एव निष्ठेति प्रतीयत इत्यर्थः ।

अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्तेति, तत्स्वरूपतदुपासनाभिधायि तत् तन्त्रमिति च तस्मिन् इतरतन्त्रसामान्यं न केनचिदुद्भावयितुं शक्यम् । अतस्तत्रैवेदमुच्यते, "एवमेकं सांख्ययोगं वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते" इति । सांख्यश्च योगश्च सांख्ययोगम्; वेदाश्चारण्यकानि च वेदारण्यकम्; परस्पराङ्गान्येतानि एकतत्त्वप्रतिपादनपरतयैकीभूतानि एकं पञ्चरात्रमिति कथ्यते । एतदुक्तं भवति—सांख्योक्तानि पञ्चविंशतितत्त्वानि, योगोक्तं च यमनियमाद्यात्मकं योगम्, वेदोदितकर्मस्वरूपाणि अङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वम्, योगस्य च ब्रह्मोपासनप्रकारत्वम्, कर्मणां च तदाराधनरूपतामभिदधति ब्रह्मस्वरूपं प्रतिपादयन्त्यारण्यकानि । एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतमिति । शारीरके च सांख्योक्ततत्त्वानामब्रह्मात्मकतामात्रं निराकृतम्; न स्वरूपम् । योगपाशुपतयोश्चेश्व-

---

स्यादित्यर्थः । **अस्योत्तर**मिति । प्रष्टुरभिप्रायं विकल्प्योत्तरमाहेति भावः । **ज्ञानान्येतानी**ति । किं त्वया तत्तद्ग्रन्थकाराभिप्रायः पृष्टः, उतार्थस्थितिः पृष्टा ? तत्तद्ग्रन्थकाराभिप्रायश्चेत्—पृथङ्निष्ठान्येव मतानीत्याह—**ज्ञानान्येतानी**ति । "साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते । हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥ उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः" इत्येतानि वचनानि **आरभ्य**शब्दोपात्तानि । 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति वक्तव्यवक्तृविशेषणद्वयं श्रूयते । एभिः फलितमाह **एवं वदत** इति । न्यायानुगृहीतवस्तुपरामर्शस्वरूपमाह **अब्रह्मात्मकतये**ति । वचनान्तरेण विशदयति—**अत** इति । **परस्पराङ्गानि एक**मिति पदद्वयं व्याचष्टे **एकीभूतानी**त्यन्तेन । एकं पञ्चरात्रमिति आर्थमेकत्वमुक्तम्; एकवचनान्तत्वात् । यद्वा **एकीभूतानी**त्यनेनाङ्गाङ्गिभावफलितार्थ उक्तः; **एकं पञ्चरात्र**मिति **एकपद**व्याख्यानम् । अत्र किमङ्गि, तस्य किमपेक्षितं प्रतिपादयन्त्यङ्गानि भवन्ति, तेषु कस्मिन्नंशेऽपेक्षा, तत् सर्वं पञ्चरात्रमेकमेव कथमासीदित्यत्राह-**एतदुक्तं भवती**ति । तर्हि शारीरके तन्निराकरणं कथमित्यत्राह-**शारीरके चे**ति ।

रस्य केवलनिमित्तकारणता, परावरतत्त्वविपरीतकल्पना, वेदबहिष्कृताचारो निराकृतः; न योगस्वरूपं पशुपतिस्वरूपं च। अतः, "सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः" इति-तत्तदभिहिततत्त्वस्वरूपमात्रमङ्गीकार्यम्; जिनसुगताभिहिततत्त्ववत् सर्वं न बहिष्कार्यमित्युच्यते। "यथागमं यथान्यायं निष्ठा नारायणः प्रभुः" इत्यनेनैकार्थ्यात् ॥ ४० ॥

इति उत्पत्त्यसंभवाधिकरणं नाम पञ्चरात्राधिकरणम् ॥

इति श्री भगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

सर्वेषां साङ्ख्यादीनां प्रामाण्यं प्रतिपादयदिव किमपि वचनं दृश्यत इति तद्भ्रमनिवृत्त्यर्थं तस्यार्थमाह **अत** इति। उक्तार्थे हेतुमाह-**अनेनैकार्थ्या**दिति। न केवलं तत्तदागममात्रपरामर्शः; न्यायपरामर्शोऽपि ह्यत्रोक्तः **यथान्याय**मिति। 'साङ्ख्यं योगः' इत्यादिवचनस्यान्यथार्थश्चेत्, वेदविरुद्धांशेपि प्रामाण्याभिधायीदं वचनम्, "विरोधे त्वनपेक्षं स्यात्" इति न्यायादप्रमाणं स्यात्, अग्नीषोमीयहिंसादीनामधर्मत्वस्य साङ्ख्ये प्रतिपादनादिति भावः। एवं विरुद्धार्थप्रबन्धप्रामाण्यप्रतिपादकत्वे अस्यापि वचनस्याप्रामाण्यप्रसङ्गात्, 'निष्ठा नारायणः' इत्याद्यैकार्थ्याच्च 'साङ्ख्यं योगः' इत्यादिवचनस्योक्त एवार्थः॥ बौद्धादिग्रन्थेष्वप्यविरुद्धार्थसंभवात् तत्स्वीकारप्रसङ्ग इति चेन्न; तत्र वेदाप्रामाण्यतद्विरुद्धार्थप्रतिपादनं कृतम्; साङ्ख्यादिषु तु वेदाङ्गीकार एवास्तीति तेष्वविरुद्धांशस्वीकार इति यथोक्त एवार्थः ॥

अत्र भाष्यकारैः सूत्रकाराभिप्रायानुगुण्यात्, कार्त्स्न्येन वेदाविरोधात्, सूत्राक्षरसामञ्जस्याच्च तन्त्रान्तरसाम्यं व्युदस्तम्। अत्र सूत्रकाराभिप्रायो **मोक्षधर्मवचनै**रवगम्यते। तथा हि तत्र श्रीपञ्चरात्रस्य बहुमुखं प्रामाण्यं प्रपञ्चितम्—तत्र, "गूढं मां प्रश्नविद्राजन् पृच्छसे त्वमिहानघ। न ह्येतद्रूहया (न ह्येष तर्कया) शक्यं वक्तुं वर्षशतैरपि। ऋते देवप्रसादाद्वै राजन् ज्ञानागमेन वा। गहनं ह्येतदाख्यानमाख्यातव्यं तवारिहन्" इति, "अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम्" इति च पृष्टार्थस्य परमरहस्यत्वं दुरवबोधत्वमयोग्येष्ववक्तव्यत्वं च दर्शितम्। "तेनैव प्रथिता ब्रह्ममर्यादा लोकभाविनी" इति लोकहिताय प्रवृत्ततया बाह्यागमव्यावृत्तिर्दर्शिता। "तत्र प्रशासतो राज्यं धर्मेणामित्रघातिनः। नानृता वाक् समभवत् मनो दुष्टं च नाभवत्॥ संस्थिते तु नृपे तस्मिञ्छास्त्रमेतत् सनातनम्। अन्तर्धास्यति तत् सत्यमेतद्वः कथितं मया" इति योग्यजनभूयिष्ठकाले प्रवृत्तिः, कालान्तरे तिरोधानं चेति वैलक्षण्यमुक्तम्। तत्राप्याविर्भावतिरोभावकथनादर्थशरीरस्य वेदार्थवत् अनादित्वं दर्शितम्। ततश्च बाह्यागमव्यावृत्तिः। "उत्पद्यन्ते व्यथन्ते च यान्यतोऽन्यानि कानिचित्। तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च" इति बाह्यागमानामर्वाक्कालिकत्वस्मरणात्। "वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ" इति सर्वमर्यादास्थापकमुनिजनभूयिष्ठे मेरौ प्रवृत्ततया देशतोऽपि वैलक्षण्यमुक्तम्। "एकाग्रमनसो दान्ता ऋषयः संयमे रताः" इति, "दिव्यं वर्षसहस्रं वै सर्वे ते मुनयः समम्" इति, "नारायणानुशिष्टा हि तदा देवी सरस्वती। विवेश तानृषीन् सर्वान् लोकानां हितकाम्यया' इति, 'तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम्' इति च प्रवर्तकानामृषीणामत्र गुणवत्त्वं तपोमहिमवत्त्वं भगवत्प्रसादलब्धसरस्वतीकत्वं बहूनामैकमत्यं च दर्शितम्। 'उशना बृहस्पतिश्चैव

यदोत्पन्नौ भविष्यतः। तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम्' इति, 'युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः। बृहस्पतेः सकाशाद्वै प्राप्स्यते द्विजसत्तमाः' इति प्रकृष्टदेवर्षिपरिग्रहः प्रकृष्टशिष्याधिगमश्च दर्शितः। 'वेदैश्चतुर्भिः समितम्', 'इदं महोपनिषदम्', 'अत्र धर्मार्थकामा हि मोक्षः पश्चाच्चिकीर्षितः' इति सर्ववेदवेदान्तसारत्वं गुडजिह्विकान्यायेन त्रिवर्गप्रतिपादकत्वं मोक्षैकपरत्वमनुत्तमहितत्वं चोक्तम्। 'सर्वे प्रमाणं हि तथा यथै(यथा तथै?)तच्छास्त्रमुत्तमम्। भविष्यति प्रमाणं वै एतन्मदनुशासनम्। अस्मात् प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवः स्वयम्'इति मन्वादिभिरप्युपजीव्यत्वम्, इतरप्रबन्धप्रामाण्ये दृष्टान्तभूतत्वम्, अव्यवधानेन भगवदनुशासनरूपत्वम्, भविष्यति प्रमाणमिति भगवता नियमितत्वं च दर्शितम्। 'तस्य यज्ञो महानासीदश्वमेधो महात्मनः। बृहस्पतिरुपाध्यायः तस्य होता बभूव ह' इति पञ्चरात्रनिष्ठस्योपरिचरस्याश्वमेधकर्तृत्वकथनाद्वैदिकपञ्चरात्रकर्मणां कर्तृसामान्यं[1] दर्शितम्। 'प्रीतस्ततो ह भगवान् देवदेवः पुरातनः। साक्षात् तं दर्शयामास अदृश्योऽन्येन केनचित्' इति वेदपञ्चरात्रोक्तकर्मणामव्यवधानेनाराध्यपरदेवतासामान्यं[1] च दर्शितम्। 'अदृश्येन हृतो भागो देवेन हरिमेधसा' इति भगवतः सर्वदेवतासाक्षात्कारिबृहस्पत्यदृश्यताया उपरिचरेण दृष्टतायाश्चोक्तत्वात् अधिकारिवैलक्षण्यं दर्शितम्। एकतद्वितत्रितवृत्तान्त मुखेनार्थवादरूपं तात्पर्यलिङ्गं दर्शितम्। 'मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः। स देशो यत्र नस्तप्तं तपः परमदारुणम्' इति, 'एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः। गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः' इति, 'ततो नो दृष्टिविषयः तदा प्रतिहतोऽभवत्' इति, 'व्रतावसानेऽस्य शुभान् नरान् ददृशिमो वयम्' इति, 'बलिः किलोपह्रियते तस्य देवस्य तैर्नरैः। वयं तु तेजसा तस्य सहसा नष्टचेतसः' इति, 'पुरुषाणां सहस्रेषु तेषु वै शुद्धयोनिषु। अस्मान् न कश्चिन्मनसा चक्षुषा वाऽप्यपूजयत्' इति भगवद्धर्मनिष्ठपुरुषाध्युषितदेशस्य प्राप्यत्वं तस्य बहुतपोलभ्यत्वं धर्मान्तरनिष्ठैस्तद्धर्मनिष्ठानां दुर्दर्शत्वं तेषां बहुतपोदृश्यत्वं तेषामितराधिकारिष्वनादरत्वं तन्मुखेनेतराधिकारिणां निकृष्टत्वं भगवद्धर्मनिष्ठानां प्रकृष्टत्वं भगवता स्वयमागत्य दर्शनप्रदानाच्च तेषां महत्त्वं [च] दर्शितम्। 'एकश्च शब्दो विरतः श्रुतोऽस्माभिरुदीरितः। आकाशं पूरयन् सर्वं शिक्षाक्षरसमन्वितः' इति भगवत्स्तोत्रश्रवणस्यापि तपःसाध्यतया भगवद्धर्मप्रकर्षो ज्ञापितः। 'दृष्टा वः पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः। दृष्टो भवति देवेशः एभिर्दृष्टैर्द्विजोत्तमाः' इति भगवद्दर्शनतुल्यत्वं तेषां दर्शनस्य प्रतिपादितम्। 'प्राप्य श्वेतं महाद्वीपं नारदो भगवान् ऋषिः। ददर्श तानेव नरान् श्वेतांश्चान्द्रप्रभान् शुभान्॥ पूजयामास शिरसा मनसा तैः सुपूजितः' इति, 'न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम्' इति च भगवद्धर्मनिष्ठानां देवर्षिवन्द्यत्वं ब्रह्मादिभ्योऽपि महत्त्वं च दर्शितम्। 'उवाच मधुरं भूयो गच्छ नारद मा चिरम्। इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः॥ एकाग्राश्चिन्तयेयुर्मां तेषां विघ्नो भवेदिति' इति चोक्तम्। नारदसम्भाषणस्यापि विघ्नरूपताकथनेन नारदादपि तेषामासन्नतरत्वं दर्शितम्। 'अहो हि दुरनुष्ठेयो मोक्षधर्मः सनातनः। यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन्॥ नूनमेकान्तिधर्मोऽयं श्रेष्ठो

---

1. सामान्यम्=ऐक्यम्, अभेदः।

नारायणप्रियः । एकान्तिनो हि पुरुषा गच्छन्ति परमे पदे ॥ यद्येकान्तिभिराकीर्णं जगत् स्यात् कुरुनन्दन । भवेत् कृतयुगप्राप्तिः' इति, 'एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् । ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम्' इति च कृतयुगैकान्तस्य भगवद्धर्मस्य परममोक्षप्रदत्वं तन्मुखेनाधिकारिवैलक्षण्यं च दर्शितम् । तथा 'मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत् स्वयम् । ततस्तस्मै वरान् प्रीतो ददावहमनुत्तमान् ॥ मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च । एष माता पिता चैव युष्माकं च पितामहः ॥ मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः । अस्यैव चानुजो रुद्रो ललाटाद्यः समुत्थितः ॥ ब्रह्मानुशिष्टो भविता सोऽपि सर्ववरप्रदः' इति, 'सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः। अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम्' इत्यादिभिर्वेदान्तवेद्यपरदेवताया एव सर्वस्मात्परत्वेनात्र प्रतिपाद्यत्वं दर्शितम् । वेदैश्चतुर्भिः समितमित्युपक्रमः ; इदं महोपनिषदमित्युपसंहारः ; अभ्यासादिलिङ्गानि दर्शितानि। एवमाशयदोषविरह-देश-काल-प्रवर्तक-वक्तृ-श्रोतृ-प्रबन्ध-तदुक्तधर्म-तत्कर्तृ-तत्फल-तत्प्रदायिदेवतावैलक्षण्यप्रतिपादनमुखेन भगवच्छास्त्रवैलक्षण्यस्य बहुमुखं प्रपञ्चनमभिप्रेत्य **महता प्रबन्धेने**त्युक्तम् ।

तथा भगवत्प्रणीते तत्प्रतिपादकतया सात्त्विके **श्रीवाराहे च पुराणे** मोक्षधर्मानुरोधेन पञ्चरात्रस्य वेदतुल्यप्रामाण्यप्रतिपादनमुखेन पाशुपतादेर्वैलक्षण्यं दृश्यते । यथा अष्टषष्टितमे, "पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् । संहिताजपमास्थाय ते मां पश्यन्ति ब्राह्मणाः ॥ अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि । मार्गेण मां प्रपद्यन्ते ते मां पश्यन्ति मानवाः ॥ ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां न तच्छोत्रपदवीमुपयास्यति ॥ एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् । पञ्चरात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यति ॥ कर्मक्षये च मां (?) कश्चिद् यदि भक्तो भविष्यति । तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति ॥ वेदेन पञ्चरात्रेण भक्त्या यज्ञेन तु द्विजाः(जैः?)। प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज" इति । अत्र वेदपञ्चरात्रयोर्विकल्पाभिधानाद्वेदतुल्यत्वं वेदाधिकृतत्रैवर्णिकाधिकारत्वम् इतरायोग्यत्वं वेदपञ्चरात्रयोः समुच्चित्य मोक्षसाधनत्वं चोक्तम् । 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय' इत्यादिभिरितरागमानां मोहनार्थत्वञ्चोक्तम् । तत्र चोद्यपरिहाराश्च पूर्वमेव प्रपञ्चेन कृताः । अतश्च पञ्चरात्रस्येतरागमवैलक्षण्यं सिद्धम् ॥

ननु कथं कात्स्न्र्येन वेदाविरुद्धत्वम् ; त्रयीधर्मपरित्यागस्य तत्रोक्तत्वात् ॥ कथं मन्वादिस्मृतीनां वेदानुरोधित्वम् ; तेषु त्रयीचोदिताग्निहोत्रपरित्यागमुखेन चतुर्थाश्रमधर्मस्य प्रतिपाद्यमानत्वात् ॥ "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिभिः प्रत्यक्षश्रुतिभिरेव चतुर्थाश्रमविधानात् तन्मूलानां स्मृतीनां न वेदविरुद्धत्वमिति चेत्—"किं भोस्त्रयीधर्मेणासंयुक्तमिमं(दं) धर्मं जिज्ञासिता । ओं भो जिज्ञासिता" इत्यादिप्रत्यक्षश्रुतिसिद्धत्वात् त्रयीचोदितधर्मविशेषत्यागस्य तन्मूलतया पञ्चरात्रवचसां न वेदविरुद्धत्वम् ॥ ननु कथमुदाहृतवाक्यानां वेदत्वम् ॥ कथं यदहरेवेत्यादिवाक्यानां वेदत्वम् ॥ जाबालश्रुत्यादीनां देशान्तरेष्वधीयमानत्वादिति चेत्—एवं तर्हि जाबालबाष्कलमाध्यन्दिनादिशाखानामिव देशान्तरे बहुभिरविच्छिन्नपारम्पर्यमधीयमानत्वादेव वेदत्वं सिद्धम् । स्मर्तव्यत्वे सति अस्मर्यमाणकर्तृकत्वादिति

हेतुनैव तद्वदेवापौरुषेयत्वम्। तैत्तिरीयादिशाखानामिवैकायनशाखायाश्चासाधारणकल्पसूत्रवत्त्वादेव वेदत्वं दुरपह्नवम् ॥

तथा भूमविद्यायाम्, 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि' इति श्रवणाच्च ऋग्वेदादिवद्वेदत्वसिद्धिः ॥ ऋग्वेदादेः पृथग्ग्रहणादवेदत्वमिति चेन्न; ब्रह्मविद्याया इव ब्राह्मणपरिव्राजकन्यायेन श्रैष्ठ्यात् पृथगुपादानोपपत्तेः। ब्रह्मविद्याशब्दो ह्युपनिषद्भागपरः; न तु ज्ञानपरः; नात्मविदित्युक्तेः। **एकायन**शब्दस्य प्रसिद्ध्यनादरेणार्थान्तरपरत्वकल्पनमयुक्तम्; प्रसिद्ध्यपवादकाभावात्। य(त?)था 'यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च। गृणन्ति सत्यधर्माणः सत्यं सत्येषु सामसु' इति भारतवचनाच्च श्रुतित्वमवगम्यते।

तथा भगवच्छास्त्रेषु चास्य वेदत्वं बहुशोऽवगम्यते यथा **श्रीकालोत्तरे,** 'ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे। पश्चिमे सामवेदं स्यादाथर्वं चोत्तरे भवेत् ॥ एकायनीयशाखोत्थमन्त्रान् सर्वासु दिक्षु च। पाठयेत् पावनान् पश्चादग्निसंस्कारमारभेत्' इति। तथा तत्रैव, 'ततः प्रीतमना नाथः साक्षात् स ब्रह्मसंज्ञितम्। वेदमेकायनं ब्रह्म व्याकर्तुमकुतोभयम् ॥ व्याजहार स सद्ब्रह्ममयं प्रणवमादितः। तत्कारणत्वाद्वेदानां मूलसंज्ञा सनातनी ॥ ततोऽन्यान्यपि दिव्यानि व्यापकान्युपदिष्टवान्' इति। एवं संहितान्तरेष्वपि बहूनि वचनानि। तानि विस्तरभयान्न लिख्यन्ते।

तथेतिहासपुराणवचनैरुपबृंहितप्रदेशविशेषता च श्रुतित्वे हेतुः। 'द्वे विद्ये वेदितव्ये.... यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इत्यादीनां श्रुतित्वेन संप्रतिपन्नानाम्, 'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति'। 'यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्। अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥ विभुं सर्वगतं नित्यं भूतयोनिमकारणम्। व्याप्तं व्याप्यं यतः सर्वं यद्वै पश्यन्ति सूरयः' इत्यादिभिरुपबृंहितत्वदर्शनात् उपबृंहितत्वं हि श्रुतित्वं स्थापयति। एकायनशाखावचनानि च तद्वत् बहून्युपबृंह्यन्ते पुराणेतिहासवचनैः, 'सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिः समृद्धिमानेव अवृद्धिरन्यून आप्तो(द्यो)वशी स्वाधीनोऽनादिरनन्तो व्यपगतनिद्राभयक्रोधतन्द्रिर्व्यपगतेच्छातमःक्लमव्याधिर्निर्दोषो निरधिष्ठो निरवद्यः' इति श्रुतिर्भगवता पराशरेणोपबृंहिता, "सर्वज्ञः सर्वकृत् (दृक्) सर्वशक्तिर्ज्ञा(ज्ञा)नबलर्द्धिमान्। अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी। क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः॥ निरवद्यः परः प्राप्तेः निरधिष्ठोऽक्षरः[1]क्रमः(ऽक्षरक्रमः)" इति।

'एवमेष महाशब्दो मैत्रेय भगवानिति। 'परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' इत्यनेन, 'सर्वज्ञः सर्वदर्शी सर्वेश्वरः

---

1. परःप्राप्तेः-प्राप्तेःपरः-दुष्प्रापः। अक्षरः इति पृथक्पदं श्रीविष्णुचित्तीये। 'वृत्तिसर्गतायनेषु क्रमः' इति पाणिनिसूत्रोक्तमर्थत्रयम्। तद्वानित्यर्थस्तत्राभिमतः। ३ २-१७ सूत्रे भाष्यार्थदर्पणो द्रष्टव्यः।

सर्वशक्तिः समृद्धिमानेव निर्दोषो निरधिष्ठो निरवद्यः ये भगवन्तं वासुदेवमेवं विदुस्त एव तं विदुः' इति वाक्यं ह्युपबृंहितं ज्ञायते। हेयप्रत्यनीकत्वकल्याणगुणकत्वनिमित्तस्य भगवच्छब्दस्य वासुदेवासाधारणत्वप्रतीतिर्ह्युभयत्र प्रती(ता?)यते।

तथा; 'नासिद्धस्य कृतमस्तीह किञ्चिन्नासंयतेष्विन्द्रियेष्वेव सिद्धिः। न संयमोऽस्त्यपरित्यज्य कामान् कामत्यागी नान्तरेणाप्रमादम्। अप्रमादो ज्ञानमयो ज्ञानं प्रकृतिसंहितम्। प्रकृतौ कर्म संदध्यात् तदा नित्यं कृतं भवेत्' इतीयं च श्रुतिरुद्योगपर्वण्युपबृंहिता, 'नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम्। आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात्॥ इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः। अप्रमादो भैमसेन ज्ञानयोनिरसंशयम्' इति।

एवं विरुद्धतयाऽभिमतानामर्थानां प्रत्यक्षश्रुतिमूलत्वात् श्रीपञ्चरात्रस्य कार्त्स्न्येन श्रुत्यविरुद्धत्वरूपं साङ्ख्यागमादिभ्यो वैलक्षण्यं सिद्धम्। अत एव, 'ग्रन्थनिर्माणानुप्रविष्टपुरुषाशयदोषनिबन्धना विरुद्धार्थप्रतीतिः' इत्यप्ययुक्तम्। अतः विरुद्धांशस्त्यज्यत इति सिद्धान्तोऽनुपपन्नः। 'साङ्ख्याद्यागमानां चावान्तरग्रन्थकर्तृबुद्धिदोषाद्विरुद्धार्थान्वयः। चतुर्णामप्यागमानामादिवक्तृप्रणीतानां न क्वचिदपि वेदविरोधः' इति साम्यं चानुपपन्नम्। 'प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः' इति, 'तुल्यं शौचं तयोर्यु(र्यु?)क्तं दया भूतेषु चानघ। व्रतानां धारणं तुल्यं दर्शनं न समं तयोः' इति च मोक्षोपाये, 'बहवः पुरुषा राजन् साङ्ख्ययोगविचारिणाम्। नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इति तत्त्वे च परस्परवैषम्यस्य श्रुत्यर्थवैरूप्यस्य च भगवता व्यासेनोक्तत्वात्। अत्र हि साक्षात्कारान्मोक्षः, शास्त्रजन्यविवेकान्मोक्षः इत्युपायवैषम्यं दृश्यते। परमात्मन उपादानत्वानभ्युपगमश्च वेदान्ताद्वैषम्यं प्रतीयते। न ह्यर्वाचीनग्रन्थकारमतं व्यासेनोच्यते॥

ननु मोक्षधर्मे, 'एवं तत्त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनाम्। यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः॥ यस्मिन् न विभ्रमाः केचिद् दृश्यन्ते मनुजर्षभ।। गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला' इति कपिलादिमतस्य विभ्रमादिदोषराहित्यं साद्गुण्यं चोक्तम्। तथा 'निष्ठा नारायणः' इत्युक्त्वा 'तमेवं शास्त्रकर्तारः प्रवदन्ति मनीषिणः' इति कपिलादिभिर्नारायणस्य प्रतिपादितत्वमुक्तम्। अतः श्रुत्यर्थवैरूप्यमवान्तरवक्तृदोषकृतमिति चेन्न—तत्रतत्र भगवता व्यासेन भीष्मवाक्यमुखेन स्वमतेन सिद्धान्तस्योक्तत्वात्। विरोधस्यावान्तरवक्तृमूलकत्वे कपिलाद्यादिवक्तृमतेनैव सिद्धान्तो वाच्यः। 'प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः' इति तत्तदभिमतस्यैकैकस्योपायत्वमुक्त्वा, 'उभे चैते मते ज्ञाने नृपते शिष्टसम्मते। अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम्' इति समुच्चित्यानुष्ठिताभ्यामुभाभ्यां पुरुषार्थ इति हि सिद्धान्तितम्। तथा, 'नैत इच्छन्ति' इति साङ्ख्यानां योगानां च परमात्मन उपादानत्वानभ्युपगममुक्त्वा, 'बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणातिगम्' इत्यारभ्य 'समासतस्तु त(य)व्यासः पुरुषैकात्म्यमुक्तवान्' इति स्वमतेन सिद्धान्त उक्तः; न तु कपिलहिरण्यगर्भादिमतेन। पुरुषाणामैकात्म्यम्—एकेनात्मना युक्तत्वम्।

अनेन जगच्छरीरकः परमात्मा हि सर्वोपादानमित्युक्तं भवति। 'तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्' इति पुरुषैकात्म्यशब्दविवक्षितस्य स्वेनैव व्याख्यातत्वात्; 'बहूनां पुरुषाणाम्' इति पूर्वमुक्तत्वाच्च। एवं सिद्धान्तदशायां कपिलाद्यभिमतत्ववर्णनाभावात् तत्तदागमेष्वर्थवैरूप्यमवर्जनीयम्।

तर्हि कपिलादीनां शास्त्रकर्तृणां भ्रमराहित्यवचनं नारायणप्रतिपादकत्ववचनं च कथं घटत इति चेत्— उच्यते। कथमवान्तरकर्तृणां भ्रमराहित्यवचनं घटते। कपिलादिभिरिति आदिशब्देन ह्यवान्तरवक्तार उच्यन्ते॥ आदिशब्दो हिरण्यगर्भादिपर इति चेन्न; 'एवं तत्त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनाम्।', 'यदुक्तं कपिलादिभिः', 'यस्मिन् न विभ्रमाः केचित्' इति यच्छब्दस्य प्रकृतसाङ्ख्यमतपरामर्शित्वात्। अत आसुरिपञ्चशिखादीनामपि भ्रमाभावस्योक्तत्वात् अवान्तरवक्तृष्वपि भ्रान्त्यारोपोऽनुपपन्नः॥ 'नैत इच्छन्ति' इति अद्यतनतार्किका विवक्षिताः इति चेन्न; इच्छन्तीति वर्तमाननिर्देशविरोधात्॥ तदात्वेऽ[1]पि कुतार्किकाः सन्तीति चेन्न; साङ्ख्ययोगविचारिणामिति निर्देशस्य कुतार्किकविषयत्वानुपपत्तेः। एतच्छब्देन हि साङ्ख्ययोगविचारिणः परामृश्यन्ते। यदि, नेच्छन्तीत्युक्तिः कुतार्किकविषया—तदा सिद्धान्ते निमित्तोपादानैक्यं कपिलहिरण्यगर्भोक्तमिति वक्तव्यम्। न च तथोक्तम्। अतोऽवान्तरवक्तृपरिकल्पनयाऽर्थभेदनिर्वाहोऽनुपपन्नः॥

ननु 'तमेव शास्त्रकर्तारः प्रवदन्ति' इति, 'यस्मिन् न विभ्रमाः केचित्' इति शास्त्रेणादिवक्तृषु भ्रमे प्रतिषिद्धे, मतभेदस्यावान्तरवक्तृमूलत्वे चानुपपन्ने, अर्थविरोधः सूत्रकारेण तन्निरसनं च कथं घटत इति चेत्—वयमपि कथं घटत इति ब्रूमः; उभयेषामप्यनुपपत्तेः परिहरणीयत्वाविशेषात्।

यद्युच्येत—भ्रमादिदोषरहितानामपि वक्तृणां तदा स्वविवक्षितादधिकार्थान्तराकथनं विवक्षितेऽर्थे प्ररोचनार्थोऽतिवादश्च संभवतः, यथा निर्दोषस्यापि वेदस्य। न हि वेदो दर्शपूर्णमासप्रकरणे वाजपेयं प्रशंसति; नापि कर्मप्रकरणे ब्रह्म प्रतिपादयति; अतिवदति च प्रतिपिपादयिषितमर्थम्, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति", "न किरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन्" इत्यादिना। न चैतावता वेदस्य कर्मान्तरं तत्त्वान्तरं चानभिमतमिष्यते; अन्यत्र वेदेनैव कर्मान्तरतत्त्वान्तरप्रतिपादनात्। एवं कपिलादयोऽपि स्वविवक्षितादधिकं तदानीं न वदन्ति; विवक्षितमतिवदन्ति च। साङ्ख्यशास्त्रे प्रकृतिप्राकृतपुरुषतत्त्वविवेकमात्रस्य विवक्षितत्वादधिकाप्रतिपादनम्, 'नास्मात्परं किञ्चित्' इत्यतिवादश्च भवति। योगे च, यमनियमाद्यङ्गकस्य समाधिपर्यन्तस्य योगस्य, तत्र ध्येयभूतस्येश्वरस्य क्लेशकर्मादिदोषास्पर्शस्य च प्रतिपिपादयिषितत्वादुपादानत्वानुक्तिः। न चैतावता तद्वक्तृणाम् ईश्वरस्तस्योपादानत्वं चानभिमतं भवति। अन्यत्र कपिलासुरिसंवादब्रह्मरुद्रसंवादादिषु कपिलहिरण्यगर्भादिभिरेवेश्वरस्य, तस्य जगदुपादानभावस्य च प्रतिपादितत्वात्। न च तदनुक्तिमात्रेण, अतिवाददर्शनाच्च साङ्ख्ययोगयोरनादरणीयता च भवति; तयोरुपजीव्यभूयिष्ठत्वात्, वेदान्तार्थप्रतिपत्त्यनुष्ठानयोस्तदाकाङ्क्षा-

1. तदात्वेऽपीति। सर्वदेत्यर्थः; अपिना कालान्तरसमुच्चयात्। अतः सन्तीति युक्तम्।

संभवात्, विप्रलिप्सादिदोषविरहदशायां प्रणीतत्वाच्च। न हि शब्दानुशासने कर्मकलापब्रह्मविद्ययोरप्रतिपादनात् तदनादरणीयत्वम्, तद्वत्। एवमबाहुश्रुत्येन तद्वक्तॄणां हृदयमजानन्तः आपातप्रतिपन्नमर्थं तात्त्विकमुपपन्नं मन्यमानास्तार्किकम्मन्या ये [1]प्रत्यवतिष्ठन्ते, तेषामुपदेशवशीकार्यत्वाभावात् सांख्यागमानामापातप्रतिपन्नार्थमात्रपरत्वमन्वारुह्य सूत्रकारैस्तन्निरसनं युक्तम्; मीमांसाशास्त्रस्य न्यायनिबन्धनत्वात्। इतिहासपुराणानां तूपदेशप्रधानत्वात् तर्ककार्कश्यं विहाय कपिलादीनां प्रबन्धान्तरेषु ब्रह्मजगदुपादानत्वादिप्रतिपादनाविरोधेन सांख्ययोगार्थप्रतिपादनमपि युक्तम्। 'तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः' इति वचनं च प्रबन्धान्तरेषु कपिलादिभिः परमात्मसद्भावजगदुपादानत्वादिप्रतिपादनं निष्ठानिर्णयस्य हेतुत्वेन वदति। भ्रमाभावश्चातिवदनातिरिक्ततत्त्वविषय इति सर्वं सङ्गतम्। एवं सांख्ययोगपाशुपतानामेकदेशप्रामाण्येनाविरुद्धांशे प्रमाणत्वं तुल्यमिति[2]——

एवं तर्हि अतिवदनस्य विवक्षामूलत्वाद्विवक्षाविशेषहेतुमनोवृत्तेश्च गुणत्रयमूलत्वादतिवदनस्योपेक्ष्यत्वाच्च कारणदोषबाधकप्रत्ययावुक्तौ स्याताम्। वेदे तु वक्तुरभावात् प्रबलतदतिरिक्तवचनाभावाच्च तदुभयासंभवः। पञ्चरात्रे तु नार्थवादरूपमपि वेदविरुद्धं वचनं दृश्यते। अतः सांख्ययोगपाशुपतपञ्चरात्राणां च वैषम्यं दुरपह्नवम्। तत्र मुमुक्षोरुपजीव्यभूयिष्ठत्वाभावात्, परावरतत्त्वविपर्यासनिषिद्धानुष्ठानमिश्रतारूपप्रधानप्रतिपाद्यविरोधस्य दुष्परिहरत्वाच्च पाशुपतमतस्य क्वचिदविरोधेऽपि नात्यन्तादरणीयत्वम्; साङ्ख्ययोगयोस्तु कतिपयार्थानुक्तेस्त्याज्यताहेतुत्वाभावादापाततो वेदविरोधभ्रमहेतुभूतातिवादांशपरित्यागेनादरणीयत्वादेकदेशप्रामाण्येन प्रमाणत्वम्; पञ्चरात्रे त्वनुक्तांशाभावात्, वेदविरोधभ्रमहेतुभूतातिवादाभावात्, विरुद्धतया भातानामर्थानां चाधीयमानश्रुतिमूलत्वसमर्थनाच्च कार्त्स्न्येन वेदाविरोधात् साकल्येन वेदवत् प्रमाणत्वमिति। अतो भाष्यकारोक्त एवाधिकरणनिष्कर्ष उपपन्नतरः॥

**परे** तु **विज्ञाना**दीति। विज्ञानैश्वर्यशक्त्यादिगुणसद्भावेन सर्वेऽपि **वासुदेवा इति चेत्**, एवमप्युत्पत्त्यसंभवाप्रतिषेधः। कथम्। वासुदेवादीनां चतुर्णां परस्परं भिन्नत्वमयुक्तम्; अनेकेश्वरकल्पनानर्थक्यात्। एकस्य चत्वारो व्यूहा इति चेत्——तदुत्पत्त्यसम्भवः। पूर्णषाड्गुण्यतया सर्वेषां तुल्यत्वाभ्युपगमात् असत्यतिशये कार्यकारणभावानवक्लृप्तेः। चतुःसङ्ख्यात्वनियमश्चानुपपन्नः; ब्रह्मादिस्तम्बपर्यन्तस्य जगतो भगवद्व्यूहत्वावगमात्। **विप्रतिषेधाच्चे**ति। 'ज्ञानबलैश्वर्यशक्तिवीर्यतेजांसि गुणाः', 'आत्मान एवैते भगवन्तो वासुदेवाः' इति गुणगुणित्वकल्पनादिलक्षणविप्रतिषेधाच्छ्रुतिविप्रतिषेधाच्चासङ्गतैषा कल्पनेत्याहुः। तत्र **विज्ञानादि**शब्दस्य भाष्योक्तनिर्वाहौचित्यं पूर्वमेव दर्शितम्। 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इत्यादिष्विव **वा**शब्दस्य सिद्धान्तद्योतकत्वात्। **तदप्रतिषेध**शब्दस्योत्पत्त्यसम्भवाप्रतिषेधवाचित्वमयुक्तम्॥ ननु तच्छब्दो हि प्रकृतपरामर्शी। उत्पत्त्यसम्भवः प्रकृतः; न तु

---

1. निरीश्वरत्वं प्रकृत्युपादानकत्वञ्च कपिलादिमतत्वेन स्वीकृत्य वेदान्तमतनिरासपरान् प्रत्येव तर्कपादपूर्वभागस्य प्रवृत्तत्वात् तन्मतरीत्या हि सांख्यादिनिरासस्तर्कपादे इति भावः।
2. यद्युच्येतेत्यारब्धस्याक्षेपस्य तुल्यमितीत्यत्र समाप्तिः, एवं तर्हीत्यादिना त्रैलक्षण्यवर्णनेनोत्तरम्।

प्रामाण्यमिति चेन्न—आद्यसूत्रद्वयस्याप्रामाण्यपरत्वे पक्षविपर्यासद्योतकेन वाशब्देन प्रामाण्यस्योपस्थापिततया धीस्थस्य तस्य तच्छब्देन परामर्शोपपत्तेः । यद्वा परीक्ष्यमाणं पञ्चरात्रशास्त्रं तावत् बुद्धिस्थम् ; अबुद्धिस्थस्य परीक्षणायोगात् । अतो बुद्धिस्थं शास्त्रं तच्छब्देन परामृश्य तस्याप्रतिषेध इत्युक्ते प्रामाण्याप्रतिषेध इति फलितं स्यात् । अतः फलितार्थपरं भाष्यमिति न किञ्चिदप्यस्वारस्यम् । चतुर्णामत्यन्तभेदो नाभिमतः । एकव्यूहत्वे कार्यकारणयोरतिशयाभावादुत्पत्त्यसम्भव इति चायुक्तम् ; तत्तद्विग्रहसंस्थानविशेषकार्यविशेषरूपातिशयसंभवात् । यदि त्वया कार्यकारणत्वतदसाधारणार्थक्रियारूपातिशयोऽवश्यम्भावितयाऽभिमतः—तर्हि सोऽस्त्येव । यदि तदतिरिक्तातिशयः, स तु मृद्घटसुवर्णकुण्डलादिष्वपि नास्तीति व्याप्तिशून्यतया तर्काभासता ॥ सर्वेषां पूर्णषाड्गुण्यत्वे कार्यव्यवस्थायाः को हेतुरिति चेत्—ईश्वरस्वातन्त्र्यमेवेति ब्रूमः । सदा सर्वज्ञस्य सर्वशक्तेरीश्वरस्य कालविशेषे सृष्टिसंहारादिव्यवस्था हि स्वातन्त्र्यकृता ; तद्वत् । समस्तजगत ईश्वरव्यूहत्वावगमात् चतुस्सङ्ख्यत्वनियमहानिरिति चासङ्गतम् ; कर्मवश्यानां क्षेत्रज्ञानामकर्मवश्येश्वरव्यूहत्वानुपपत्तेः ॥ नृसिंहवामनादिभिः सङ्ख्यानियमभङ्ग इति चेन्न ; तेषां विभवकोट्यनुप्रवेशात् । यदा भगवदंशत्वं व्यूहशब्देन विवक्षितम् , तदा चतुःसङ्ख्यानियमोऽप्यनभिमत इति नानिष्टापत्तिः' । यदा कार्यविशेषावच्छिन्नांशविशेषपरो व्यूहशब्दः, तदा चतुःसङ्ख्यानियम उपपद्यत इति तत्रानियमप्रसञ्जनं शास्त्रसिद्धव्यूहशब्दार्थानभिज्ञत्वकृतम् । गुणगुणित्वकल्पनानुपपत्तिविप्रतिषेधोऽपि स्वाज्ञानविजृम्भितः ; तत्र शास्त्रे गुणस्य गुणित्वानभ्युपगमात् ॥ यदि क्वचित् ज्ञानादिशब्देन वासुदेवादिसामानाधिकरण्यं दृष्टम् , न तत्रापि दोषः ; श्रुतिषु परब्रह्मसमानाधिकरणज्ञानानन्दादिशब्दानामिव तद्गुणसारत्वात् तदुपपत्तेः । अन्यथा, 'यः सर्वज्ञः सर्ववित्', 'सत्यं ज्ञानम्' इत्यादिश्रुतिष्वप्यप्रामाण्यं प्रसजेत्, आपाततो विप्रतिषेधसामान्यात् । वेदनिन्दादिशङ्कापरिहारस्तु दर्शितः । अतः श्रुतिविप्रतिषेधासिद्धिः । अतः परोक्तार्थोऽनुपपन्नः ।

**अन्ये** त्वेवं वर्णयन्ति—पूर्वाधिकरणेषु वादिनां तर्कावष्टम्भाः, शिष्टापरिगृहीतबाह्यागमाश्च निरस्ताः । अत्र शिष्टपरिगृहीताः साङ्ख्ययोगपाशुपतपञ्चरात्रागमाश्चत्वारः परीक्ष्यन्ते, 'अभावे (अलाभे?) वेदमन्त्राणां पञ्चरात्रोदितेन हि' इत्यादिवचनात् , महाभारते निष्ठानिर्णयाध्यायाच्च शिष्टपरिगृहीतत्वं चतुर्णां सिद्धम्[1] (मिति ?)—तत्र स्वतः सर्वज्ञवैदिकेश्वरांशभूतत्वाद्धिरण्यगर्भादीनामीश्वरज्ञानमूलतया साङ्ख्ययोगाद्यागमाः वेदविरोधेऽपि प्रमाणमिति पूर्वपक्षं कृत्वा, तेषामीश्वराणां सर्वज्ञत्वेऽपि तेषां तत्त्वार्थोपदेष्टृत्वेऽपि ग्रन्थनिर्माणे पुरुषान्तराणामप्यनुप्रवेशात् तेषामज्ञानरागद्वेषादिसंभवेन सावकाशत्वाद्वेदाविरुद्धांशः प्रमाणम् , विरुद्धांशस्त्वप्रमाणमिति चाहुः ।

तत्र चतुर्णामपि वेदानुसारित्वनिर्णयस्य प्रदर्शनार्थं पञ्चरात्रमवलम्ब्य सूत्रकारेण चिन्तितमित्युक्तम् । सूत्रयोजनायां च—**विज्ञानादिभावे वा तदप्रतिषेधः** इति । अत्र विज्ञानादिषाड्गुण्योद्भवानुद्भवभेदेन

---

1. वर्णयन्तीत्यारब्धं सिद्धमितीत्यन्तेन समासम् , तत्रेत्यादेः आहुरित्यत्र कर्मत्वमिति विभजनीयम् ; क्रियापदद्वयसत्त्वात् ।

विभागमात्रं सङ्कर्षणादीनाम्, न तु मुख्यं जन्म, जीवमनोहङ्काराधिष्ठातारश्च ते इति चेत्—उच्यते—एवं तर्हि नैतन्मतं विप्रतिषिध्यते, विरोधाभावात्। श्रुतिविरुद्धं तु विप्रतिषिध्यते। **विप्रतिषेधाच्चेति**। सर्वसिद्धान्तैर्वेदोऽनुसरणीयः। अन्यथा चतुर्णां परस्परविप्रतिषेधात्—इत्युक्तम्।

अत्रोच्यते। विप्रतिषेधाच्चेति सूत्रस्य तदप्रतिषेधशब्दोक्तपञ्चरात्राप्रतिषेधोपपादकत्वे सत्येवान्वयस्वारस्यम्। "सर्वैः सिद्धान्तैर्वेदोऽनुसरणीय" इति स्वमतिपरिकल्पितप्रतिज्ञावाक्यान्तराध्याहारस्तु ग्रन्थशय्यामार्जवेनानुसंदधानानां न धियमधिरोहति। अर्थशरीरं च निरूप्यम्। स्मृतिपाद एव 'नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' इति मन्वादिस्मृतिविरोधे साङ्ख्यस्मृतिदौर्बल्ये प्रतिपादिते, कथं साङ्ख्यादिस्मृतीनां श्रुतिविरोधेऽपि प्रामाण्यशङ्का उत्थातुमलम्? चतुर्णामागमानां प्रदर्शनार्थं पञ्चरात्रमधिकृत्य निरूपितमिति चानुपपन्नम्; साङ्ख्यवैशेषिकसुगतादिमतानामपि प्रदर्शनार्थं तेष्वन्यतमपक्षमात्रप्रतिक्षेपस्याकृतत्वात्। तत्र हि निरसनीययुक्तिभेदात् निरासकभेदाच्चाधिकरणभेदः कृतः। एवं जीवाद्युत्पत्तेरागमान्तरेष्वनवगतत्वात् तदसंभवेन तत्प्रामाण्यप्रतिक्षेपोऽपि न संभवति॥ श्रुतिविप्रतिषेधयुक्त्या सर्वं प्रतिक्षिप्तं भवतीति चेन्न; **विप्रतिषेधा**दिति पदस्य **तदप्रतिषेध** इत्यनेनान्वयात् सर्वागमप्राबल्यप्रतिक्षेपकत्वासिद्धेः।

किञ्च विरोधाधिकरणन्यायेन श्रुतिविरुद्धस्मृतिप्रामाण्यस्य विध्वस्तत्वादिह तन्निरासवैयर्थ्यं च॥ असाधारणदूषणप्रदर्शनार्थोऽयमारम्भ इति चेन्न। तर्हि पञ्चरात्रेतरागमानामप्यसाधारणदूषणज्ञापनाय किमित्यधिकरणान्तरत्रयं न निबद्धम्॥ तत्पक्षमूलयुक्तिनिरासादेव तन्मूलागमप्रतिक्षेपस्यापि सिद्धेरिति चेत्—किं चत्वारोऽप्यागमा एकयुक्तिमूलाः, उत भिन्नयुक्तिमूलाः? न प्रथमः; विरुद्धानां तुल्ययुक्तिमूलत्वानुपपत्तेः। अनेकयुक्तिमूलत्वे त्वधिकरणान्तरारम्भप्रसङ्गः॥ एकनिरासात् सर्वनिरासः कृतः स्यादिति चेन्न; जीवोत्पत्त्यादीनां तेष्वभावेनोत्पत्त्यसम्भवादिना निरासायोगात्। अतः प्रदर्शनार्थत्वमयुक्तम्। शिष्टपरिग्रहसाम्यं च न भवति; 'अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वै' इत्यत्र पाशुपततन्त्राप्रसक्तेः। महाभारते **मोक्षधर्मे** पाशुपततन्त्रोक्ततत्त्वप्रक्रियायाः, तन्निष्ठाप्रकारस्य च, साक्षाद्वा प्रणाड्या वा तस्य मोक्षोपयोगस्य च सङ्क्षेपेण विस्तरेण वाऽनुपन्यासादेव न तुल्यतया परिग्रहः। वैराग्यजननद्वारा साक्षात्कारनिष्पादनद्वारा च मोक्षोपयोगः साङ्ख्ययोगयोर्दर्शितः। 'इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतान्तेन' इति कृत्स्नस्य पञ्चरात्रस्य वेदवेदान्तसारत्वं तदविरुद्धसाङ्ख्ययोगार्थान्वितत्वं चोक्तम्। साङ्ख्ययोगयोश्च तत्त्वान्तर्भावानन्तर्भावाभ्यामविरोधं नीत्वा, 'प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः' इत्युपायांशे वैषम्यं दर्शयित्वा, अन्तर्भावानन्तर्भावाभ्यां तत्त्वसंख्यान्यूनाधिकभावाविरोधमपि दर्शयित्वा 'बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्। नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इति तयोरौपनिषदसिद्धान्ताद्वैषम्यं च दर्शयित्वा, 'नारायणपरं सांख्यं योगो नारायणात्मकः' इति तयोर्नारायणनिष्ठत्वं च वदता भगवता व्यासेन विरुद्धांशान् अनादृत्य तयोरौपनिषदमार्गनिष्ठैरुपजीव्यत्वं दर्शितमिति अविरुद्धांशे प्रामाण्यमुपजीव्यार्थभूयिष्ठत्वञ्चोक्तम्। अतः पञ्चरात्रसांख्ययोगपाशुपतानां—[पञ्चरात्रे ?] कार्त्स्न्येन प्रमाणत्वं [सांख्य

योगयोः ?] विरुद्धांशप्रहाणेनोपजीव्यत्वम्, [पाशुपते ?] उपजीव्यार्थभूयिष्ठत्वाभावं च पश्यतां कथं तुल्यतया परिग्रहशङ्का धियमधिरोहेत्।

निष्ठानिर्णयस्तु वस्तुस्थित्यभिप्रायेण कृतः। 'ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै' इति हि तत्रैवोक्तम्। किञ्च, तत्रापि नारायणस्यैव नित्यत्वकथनं साङ्ख्ययोगपाशुपतेभ्यः पञ्चरात्रस्य वैलक्षण्यं द्योतयति। तदनुरोधेन साङ्ख्याद्यागमानां निष्ठाया निर्णीततया पञ्चरात्रस्य साङ्ख्याद्यागमैरनुसरणीयत्वप्रतीतेः। तुल्यत्वेनैकार्थत्वे विवक्षिते, सच्चिद्रूपवस्तुमात्रनिष्ठत्वं हि सर्वागमानां वक्तव्यम्। न च तथा कृतम्। यथा तन्त्रान्तरानुसारेण विशेषनिर्णयाकरणात् न तन्त्रान्तरप्रधानतावगमः, एवं वस्तुमात्रनिष्ठत्वाप्रतिपादनात् तत्सत्त्वमपि दूरतो निरस्तम्। अतः पञ्चरात्रस्य तन्त्रान्तरैरनुविधेयतया तेभ्यो वैलक्षण्यं वेदतुल्यत्वं च सिद्धमिति न परिग्रहतुल्यता।

'न हन्तव्यानि हेतुभिः' इति वचनं तु सुगतागमादिव्यावृत्तिपरम्; न तु परिगणितानामपि पञ्चानां साम्यपरम्। निरपेक्षस्यानुविधेयस्य वेदस्य सापेक्षाणामनुविधायिनामितरागमानां च साम्यानुपपत्तेः। प्रमाणतामात्रेण साम्यमिति चेन्न; कार्त्स्न्येन प्रमाणस्य वेदस्याविरुद्धांशे प्रमाणानां साङ्ख्यागमादीनां च साम्यानुपपत्तेः॥ क्वचित्प्रमितिजननायोगव्यवच्छेदेन साम्यमिति चेन्न; सुगतागमादेरपि तुल्यत्वात्॥ सुगतागमादिष्वविरुद्धांशो विप्रलिप्सया निवेशित इति कारणदोषात् तत्रापि न मानत्वम्; साङ्ख्यागमादिषु त्वविरुद्धांशस्य कारणदोषाभावात् प्रामाण्यमभिहितमिति चेत्—तर्ह्यनेनैव कारणेन सुगतागमादिव्यावृत्तिरूपं साम्यमेव त्वयाऽभिहितमित्यागतोऽस्यस्मदीयं मार्गम्। अन्यथा अनुविधेयानुविधायिनां तुल्यप्रामाण्यपरत्वे सति इदमेव वचनं भ्रान्तिमूलं स्यात्। अतोऽस्य वाक्यस्य सुगतादिमतव्यावृत्तिपरत्वान्न पञ्चरात्रवैलक्षण्यविरोधित्वम्। यतः पञ्चरात्रस्य वेदवेदान्ततदविरुद्धप्रबन्धान्तरार्थप्रतिपादकतया कार्त्स्न्येन प्रमाणत्वम्, अत एव, 'पञ्चरात्रेऽपि विरुद्धांशस्त्याज्यः' इति सिद्धान्तोऽप्यनुपपन्नः॥

इति उत्पत्त्यसंभवाधिकरणम्॥

इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन
श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां
द्वितीयस्याध्यायस्य द्वितीयः पादः॥

श्रीमते वात्स्य वरदार्य महादेशिकाय नमः

समुदितसूत्रसंख्या २१६. समुदिताधिकरणसंख्या ५३

श्रीमते रामानुजाय नमः ।

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## द्वितीयाध्याये तृतीयः पादः

### वियदधिकरणम्—२-३-१

### न वियदश्रुतेः ॥ २-३-१ ॥

साङ्ख्यादिवेदवाह्यतन्त्राणां न्यायाभासमूलतया, विप्रतिषेधाच्चासामञ्जस्यमुक्तम् । इदानीं स्वपक्षस्य विप्रतिषेधादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यतयाऽभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते । तत्र वियदुत्पद्यते, न वेति संशय्यते । किं युक्तम् । न वियदुत्पद्यत इति । कुतः । अश्रुतेः । संभावितस्य हि श्रवणसंभवः । असंभावितस्य तु गगनकुसुमवियदुत्पत्त्यादेः शब्दाभिधेयत्वं न संभवति । न खलु निरवयवस्य सर्वगतस्याकाशस्यात्मन इवोत्पत्तिर्निरूपयितुं शक्यते । अत एव चोत्पत्त्यसंभवात् छान्दोग्ये सृष्टिप्रकरणे तेजःप्रभृतीनामेवोत्पत्तिराम्नायते—"तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत" इति । तैत्तिरीयकाथर्वणादिषु, "तस्माद्वा एत-

---

**न वियदश्रुतेः** ॥ पादसङ्गतिमाह **साङ्ख्यादी**ति । अयमर्थः—द्वितीयाध्यायस्य प्रथमे पादे कारणविषये परोक्तदोषाः परिहृताः ; अत्र तृतीये कार्यविषये परोक्तदोषाः परिह्रियन्ते । तस्मात् तृतीयः पादः प्रथमेन सङ्गतः ; द्वितीयस्तु परपक्षप्रतिक्षेपपरत्वाच्चरमभावीति चेत्—कारणविषये परोक्तदोषपरिहार-परपक्षप्रतिक्षेपौ सङ्गतौ ; अनन्तरं कार्यविषयपरोक्तदोषपरिहारो युक्त इति संगतिरिति । इममर्थमभिप्रेत्य **ब्रह्मकार्यतयाभिमते**त्युक्तम् । तत्र चिदचिद्वस्तुनोः कार्यत्वं किमेकरूपम्, उत भिन्नरूपमिति संशयिते सति एकरूपमिति पूर्वः पक्षः, भिन्नरूपमिति सिद्धान्तश्च पादद्वयेन क्रियत इतीममर्थमभिप्रेत्य **चिदचिदात्मकप्रपञ्चस्ये**त्युक्तम् ॥ तत्र प्रथमाधिकरणस्य संशयमाह **तत्रे**ति । किं वियदुत्पद्यते, न वेति संशयः । तदर्थम् 'आत्मन आकाशः सम्भूतः' इति वाक्यं वियदुत्पत्तिं प्रतिपादयति, नेति ; सम्भूतशब्दो मुख्योत्पत्तिपरः, उत गौणः इति ; अन्यत्र निरवयवद्रव्यस्योत्पत्त्यदर्शनमाकाशस्योत्पत्त्यनर्हतामवगमयति, नेति । यदाऽवगमयति, तदा **संभूत**शब्दस्य गौणत्वाद्वाक्यस्योत्पत्तिप्रतिपादनासामर्थ्यान्न वियदुत्पद्यत इति भवति ; यदोत्पत्त्यनर्हतां नावगमयति, तदा **संभूतशब्दस्य** मुख्यवृत्तितया वाक्यस्योत्पत्तिप्रतिपादकत्वाद्वियदुत्पद्यत इति सिध्यति । **श्रुतिः**—श्रवणम् । कथमश्रुतिः, 'आत्मन आकाशः संभूतः' इति हि श्रुतिरिति शंकायाम्—अश्रुतेरसिद्धिपरिहाराय श्रुतिशब्दार्थमाह **श्रवणसंभव** इति । श्रवणं शब्दजन्यप्रमितिः, यथा 'श्रोतव्यः' इत्यादिषु । शब्दजन्यप्रमितिविषयत्वासम्भवादित्यर्थः । न हि शब्दोऽयोग्यार्थप्रमितिजननशक्तः, 'आदित्यो यूपः' इत्यादिष्वदर्शनादिति भावः । यद्वा उत्पत्तिप्रतिपादनसमर्थश्रुतिवाक्याभावो विवक्षितः अश्रुतेरिति । **संभावितस्य हि श्रवणसंभव** इति सूत्राभिप्रायविवरणम् । एवं सति गौणीति अनन्तरं श्रुतिनिर्देशस्वारस्यं स्यात् । **गगनकुसुमो**पादानं दृष्टान्तत्वेन कृतम् । असंभावितत्वमुपपादयति **न खल्वि**ति । निरवयवद्रव्यत्वात् सर्वगतत्वाच्चेति हेतुद्वयं विवक्षितम् । केवलतर्कस्य कालात्ययापदेशसंभवात् तद्व्यावृत्त्यर्थं श्रुत्यर्थापत्तिमाह-**अत एव चे**ति । तेजस्सृष्टिप्राथम्यं श्रुत्यर्थापत्तिः । **तैत्तिरीयके**ति । तर्कविरुद्धश्रुतेरपि तर्कानुगृहीतश्रुतिः प्रबलेति भावः ॥

स्मादात्मन आकाशः संभूतः," "एतस्मात् जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योति-रापः" इत्यादिषु श्रूयमाणा वियदुत्पत्तिरर्थविरोधाद्बाध्यत इति ॥ १ ॥ एवं प्राप्तेऽभिधीयते—

अस्ति तु ॥ २-३-२ ॥

अस्ति त्वाकाशस्योत्पत्तिः। अतीन्द्रियार्थविषया हि श्रुतिः प्रमाणान्तरातीतामपि वियदुत्पत्तिं प्रतिपादयितुं समर्थैव। न च श्रुतिप्रतिपन्नेऽर्थे तद्विरोधिनिरवयवत्वादिहेतुकमनुत्पत्त्यनुमानमुदेतुमलंम्। आत्मनोऽनुत्पत्तिर्न निरवयवत्वप्रयुक्तेति वक्ष्यते ॥ २ ॥ पुनश्चोदयति—

गौण्यसंभवाच्छब्दाच्च ॥ २-३-३ ॥

"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिवियदुत्पत्तिश्रुतिर्गौणीति कल्पयितुं युक्तम्; "तत्तेजोऽसृजत" इति सिसृक्षोर्ब्रह्मणः प्रथमं तेज उत्पद्यत इति तेजउत्पत्तिप्राथम्येन

---

**अस्ति तु** ॥ तुशब्दाभिप्रेतं हेतुमाह **अतीन्द्रियेति**। **श्रुतिरिति**। एतत्सूत्रान्यथासिद्धिपरेऽनन्तरसूत्रे **गौणीति** स्त्रीलिङ्गनिर्देशेन **अस्तीति** श्रुतिः साधकतया विवक्षितेति भावः। किं प्रमाणान्तरागोचरत्वमयोग्यता, उत प्रमाणान्तरबाधितत्वम्?। प्रमाणान्तरागोचरत्वं चेत्—तदुत्पत्तिप्रमितिजननहेतुरेव अतीन्द्रियार्थविषयत्वात् श्रुतेः। द्वितीये पक्षे, बाधकप्रमाणं वक्तव्यम्। तच्च नास्ति ॥ धर्मिणः प्रत्यक्षसिद्धत्वमात्रेणागमावगतधर्मबाधश्चेत्, यागादेः क्रियात्वात् स्वर्गसाधनत्वं न स्यात्। यत्रानन्यथासिद्धप्रत्यक्षसिद्धधर्मविरुद्धधर्म आगमेन प्रतीतः, तत्र यूपादित्यैक्यवत् शास्त्रं बाधितं स्यात्; प्रत्यक्षस्य पूर्वभावित्वात्। नात्र तथा विरुद्धधर्मोपलब्धिः। धर्मिग्राहकप्रमाणं प्रत्यक्षमनुमानं वा। तदुभयमपि नित्यत्वानित्यत्वसाधारणमिति न तद्बाधः ॥ [1]अनुमानान्तरं चेत्—कालात्ययापदिष्टत्वम्। कालविशेषावच्छिन्नस्यैव हि नभस उत्पत्तिरुच्यते। नेदानीं कालविशेषावच्छिन्नं नभो नः प्रत्यक्षादिगोचरम्; किन्तु शास्त्रैकसमधिगम्यम्। अतो धर्मिग्राहकमानबाधः। निरवयवद्रव्यत्वहेतोर्महदादिष्वनैकान्त्यम्। विशेषणासिद्धिश्च; वियदेकदेशोपादानेन पञ्चीकरणवचनात्; 'आकाशवायुतेजांसि सलिलं पृथिवी तथा। शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरैः' इति संयोगविशेषवचनाच्च। सर्वगतद्रव्यत्वहेतोरपि [व्यभिचारो] विशेषणासिद्धिश्च स्यात्। महदादीनां सद्भावः शास्त्रप्रामाण्यवादिभिरभ्युपगन्तव्य इत्यर्थः। **न चेति**। अत्र कालात्ययापदेशोऽभिप्रेतः। [किं] तर्ह्यात्मनोऽप्युत्पत्तिमत्त्वं स्यात्, निरवयवद्रव्यत्वस्यासाधकत्वादित्यत्राह **आत्मनोऽपीति** ॥

उत्तरसूत्रमवतारयति **पुनरिति**। **गौण्यसंभवाच्छब्दाच्च** ॥ गौणवृत्तेः शब्दधर्मत्वात् तत्रापि स्त्रीलिङ्गान्तत्वाच्च श्रुतिर्विशेष्या; प्रस्तुतार्थवशात् श्रुतिविशेषावगम इत्यभिप्रायेणाह **तस्मादिति**। तेजःप्रभृतेः पश्चान्न वियदुत्पत्तिः संभवति। पूर्वमपि न; तेजःप्राथम्यादित्यर्थः। 'आकाशवत्सर्वगतश्च नित्यः' इत्यत्र व्याप्तिमात्रेण साम्यविवक्षाया अपि संभवात, 'आकाशशरीरं ब्रह्म' इत्यादेः सूक्ष्मनिर्मलस्वरूपत्वाभिप्रायेण निर्वाहसम्भवाच्च पूर्वपक्षसाधकत्वेनानुपन्यासः। पूर्वपक्षेऽवान्तरसाध्यविषयहेतुद्वयरूपत्वादसंभवशब्दयोरेकसूत्रप्रतिपाद्यता। अतो न सूत्रभेदो युक्तः ॥

---

1. आकाशरूपधर्मिसाधकं शब्दादिरूपं लिङ्गं तन्नित्यत्वानित्यत्वसाधारणम्; आकाशपक्षकनित्यत्वानुमानं तु बाधितमिति।

वियदुत्पत्तिप्रतिपादनासंभवात्। "वायुश्चान्तरिक्षं चैतदमृतम्" इति वियतोऽमृतत्वशब्दाच्च ॥ ३ ॥

कथमेकस्य संभूतशब्दस्याकाशापेक्षया गौणत्वम्, अग्न्याद्यपेक्षया मुख्यत्वमिति चेत्-तत्राह-

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २-३-४ ॥**

एकस्यैव, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति आकाशे मुख्यत्वासंभवात् गौणतया प्रयुक्तस्य संभूतशब्दस्य, 'वायोरग्निः' इत्यादिष्वनुषक्तस्य मुख्यत्वं स्यादेव। यथा ब्रह्मशब्दः, "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इत्यत्र प्रधाने गौणतया प्रयुक्तः तस्मिन्नेव प्रकरणे, "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" इति ब्रह्मणि मुख्यतया प्रयुज्यते; तद्वत्। अनुषङ्गे च श्रवणावृत्ताविवाभिधानावृत्तिर्विद्यत एवेत्यर्थः ॥ ४ ॥ परिहरति —

**प्रतिज्ञाहानिरव्यतिरेकात् ॥ २-३-५ ॥**

छान्दोग्यश्रुत्यनुसारेणान्यासां वियदुत्पत्तिवादिनीनां श्रुतीनां गौणत्वं कल्पयितुं न युज्यते; यतः छान्दोग्यश्रुत्यैव वियदुत्पत्तिरङ्गीकृता। "येनाश्रुतं श्रुतम्" इत्यादिना ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्। तस्या हि प्रतिज्ञाया अहानिराकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति ॥५॥

**शब्देभ्यः ॥ २-३-६ ॥**

इतश्च वियदुत्पत्तिश्छान्दोग्ये प्रतीयते; "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति प्राक् सृष्टेः एकत्वावधारणशब्दात्। 'ऐतदात्म्यमिदं सर्वम्' इत्येवमादिशब्देभ्यश्च कार्यत्वेन ब्रह्मणोऽव्यतिरेकप्रतीतेः। न च 'तत्तेजोऽसृजत' इति तेजस उत्पत्तिश्रुतिर्वियदुत्पत्तिं वारयति। विय-

---

उत्तरसूत्रशङ्कामाह **कथमिति**। **स्याच्चैकस्य ब्रह्मशब्दवत्** ॥ 'तपसा ब्रह्म विजिज्ञासस्व; तपो ब्रह्म' इत्यादिप्रयोगोऽनुसन्धेयः। 'अन्नं ब्रह्म,' 'आनन्दो ब्रह्म' इति प्रयोगानुदाहरणं तस्य मुख्यामुख्यविषयत्वाभावात्। अन्नादिष्वपि ब्रह्मबुद्ध्या हि ब्रह्मशब्दप्रयोगः। ब्रह्मशब्दोऽस्मिन् प्रकरणे द्विः प्रयुक्तः; अत्र त्वनुषङ्गः। तत् कथमेकस्य मुख्यत्वगौणत्वविभाग इत्यत्राह--**अनुषङ्गे चेति**। अनुषङ्गश्रवणावृत्त्योः फलमभिधानावृत्तिरेव। अभिधानशब्देनात्र मुख्यामुख्यसाधारणशब्दव्यापारमात्रं विवक्षितम्। बोधनार्थं ह्यनुषङ्गः। न ह्येकस्मिन् वाक्येऽनुषङ्गापेक्षा; प्रयुक्तत्वात्। अतोऽनुषङ्गो वाक्यान्तरे। वाक्यान्तरस्थस्य शब्दस्य गौणत्वं च युक्तम्; बोधनव्यापारभेदात्। सकृत्प्रयुक्तस्य हि मुख्यत्वगौणत्वविरोधः; व्यापारैक्यात्। न ह्येकबोधनव्यापारस्य मुख्यत्वगौणत्वे संभवतः। प्रयोगभेदेऽप्यविरोधो व्यापारभेदात्। अतोऽनुषङ्गेऽपि व्यापारभेदान्मुख्यत्वगौणत्वाविरोधः। तस्मादर्थौचित्यायोभयत्रापि समाधिभङ्गः कार्य इति ॥ राद्धान्तसूत्रमवतारयति **परिहरतीति**। **प्रतिज्ञाहानिरव्यतिरेकात्** ॥ कार्यकारणभावाभावेऽपि नित्यसिद्धमुक्तात्मनामव्यतिरेको ब्रह्मशरीरत्वेन भवतीति तद्व्यावृत्त्यर्थं **ब्रह्मकार्यत्वेन तदव्यतिरेकादि**त्युक्तम्। मृत्पिण्डकार्यादिदृष्टान्तवशात् कार्यतयैवाव्यतिरेको विवक्षित इति भावः ॥ **शब्देभ्यः** ॥ ऐतदात्म्यमिति वाक्यं कार्यभूतं कृत्स्नं कारणभूतब्रह्मात्मकमित्येतदर्थपरत्वादुपात्तम्। **आत्मशब्दो**ऽन्तर्यामिणमाह। **एतच्छब्देन** कारणत्वं पूर्वप्रस्तुतं विवक्षितम्। यः कारणावस्थस्यात्मा, स एव कार्यावस्थस्यापि जगत आत्मेत्यर्थः। **आदिशब्देन** 'सन्मूलाः सोम्येमाः', 'सर्वं खल्विदं ब्रह्म' इत्यादि विवक्षितम्। **न चेति**। न हि घटोत्पत्तिवचनं पटो-

दुत्पत्त्यवचनमात्रेण तेजसः प्रतीयमानं प्राथम्यं श्रुत्यन्तरप्रतिपन्नां वियदुत्पत्तिं न निवारयितुमलम् ॥

**यावद्विकारं तु विभागो लोकवत्** ॥ २-३-७ ॥

तुशब्दश्चार्थे । 'ऐतदात्म्यमिदं सर्वम्' इत्यादिभिराकाशस्य विकारत्ववचनेन तस्याकाशस्य ब्रह्मणो विभागः—उत्पत्तिरप्युक्तैव । लोकवत्—यथा लोके, 'एते सर्वे देवदत्तपुत्राः' इत्यभिधाय तेषु केषाञ्चित् तत उत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात्, तद्वत् । एवं च सति "वायुश्चान्तरिक्षं चैतदमृतम्" इति सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥ ७ ॥

**एतेन मातरिश्वा व्याख्यातः** ॥ २-३-८ ॥

अनेनैव हेतुना मातरिश्वनः—वायोरप्युत्पत्तिर्व्याख्याता । वियन्मातरिश्वनोः पृथग्योगकरणं 'तेजोऽतस्तथा ह्याह' इति मातरिश्वनः परामर्शार्थम् ॥ ८ ॥

**असंभवस्तु सतोऽनुपपत्तेः** ॥ २-३-९ ॥

तुशब्दोऽवधारणार्थः । असंभवः—अनुत्पत्तिः सतः—ब्रह्मण एव । तद्व्यतिरिक्तस्य कस्यचिदप्युनुत्पत्तिर्न खं(?)भवति; अनुपपत्तेः । एतदुक्तं भवति-वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुदाहरणार्थम् । उत्पत्त्यसंभवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमह-

---

त्पत्तिं वारयतीत्यर्थः । प्राथम्यं वारयतीत्यत्राह **वियदुत्पत्तीति** । प्राथम्यं नाम किं स्वकार्यापेक्षया पूर्वत्वम्, उत कार्यान्तरपूर्वकत्वाभावः? आद्ये वियदुत्पत्तिरबाधिता स्यात् । न द्वितीयः; पूर्वभाविकार्यान्तरनिषेधाश्रवणात् । तेजस उत्पत्तिमात्रं हि श्रुतम्; नान्यानुत्पत्तिः । अतः प्राथम्यं न श्रुतम् । अतोऽश्रुतेन श्रुतप्रहाणमयुक्तम् । श्रुतेनाश्रुतकल्पनं हि युक्तम् । किञ्चान्यानुत्पत्त्यश्रवणेपि प्राथम्यं केनावगतम्? अन्योत्पत्त्यवचनादिति चेत्—तर्ह्यार्थेन प्राथम्येन श्रुतोत्पत्तिबाधनमनुपपन्नम् । किञ्च कुत्रचित् कस्यचिदवचनमन्यत्रापि तत्प्रतिपत्तिं वारयति चेत्, सर्वशाखाप्रत्ययनयो निर्विषयः स्यादिति भावः । सिद्धान्तेऽपि परमसाध्यहेतुत्वे सति असमस्तपदोपात्तत्वात् 'शब्देभ्यः' इति सूत्रभेदः । अवान्तरसाध्यविषयहेतुभेदानाम्, परमसाध्येऽपि समस्तपदोपात्तहेतूनामपि ह्येकसूत्रप्रतिपाद्यत्वं दृष्टम् ॥

**यावद्विकारं तु विभागो लोकवत्** । विकारत्वं कार्यत्वम् । **ऐतदात्म्यमिदं सर्वमित्यादिभिरित्य**त्रादिशब्देन एकत्वावधारणादि विवक्षितम् । **एवं च सती**ति । असङ्कुचितार्थत्वे वायोरप्यनुत्पत्तिप्रसङ्ग इति भावः ॥ **एतेन मातरिश्वा व्याख्यातः** ॥ नेदमतिदेशसूत्रम्; अतो नाधिकाशङ्केत्यभिप्रायेणाह **पृथगि**ति । वियन्मातरिश्वनोरुभयोरप्युत्पत्तिर्वक्तव्या । तत्रैकसूत्रेण वक्तुं शक्येऽपि सूत्रपृथक्करणमुत्तरत्र परामर्शार्थमित्यर्थः । **योगः**—सूत्रम् ॥ **असंभवस्तु सतोऽनुपपत्तेः** ॥ ननु न ब्रह्मणोऽनुत्पत्तिर्वक्तव्या; ब्रह्मव्यतिरिक्तविषयदादेरुत्पत्तिरुक्ता; पुनरनुत्पत्त्यसंभवः केषामुच्यते; अनुपपत्तिश्च कस्येत्यत्राह **एतदुक्तं भवती**ति । महदादीनामनुत्पत्तिर्निषिध्यते । अनुपपत्तिः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानेरित्यर्थः । **आदिशब्दे**नैकत्वावधारणादिर्विवक्षितः ॥

**परे तु** वियदुत्पत्तेरनुत्पत्तेश्च श्रुतिसिद्धत्वाच्छ्रुतयो विप्रतिषिद्धा इति पूर्वः पक्षः; अनुत्पत्तिरेवेति न विप्रतिषेध इति सिद्धान्त्येकदेशी; उत्पत्तिरेवेति न विप्रतिषेध इति साक्षात्सिद्धान्तिनः इत्यधिकरण-

**दहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिरवगतकार्यभाव-स्यानुत्पत्तिर्नोपपद्यत इति ॥ ९ ॥ इति वियदधिकरणम् ॥**

---

शरीरं वर्णयन्ति । तत्र ब्रूमः—विप्रतिषेधमात्रस्य पूर्वपक्षत्वमयुक्तम्; तस्य परमसाध्यत्वाभावात् । यथा, 'कारणत्वेन चाकाशादिषु' इत्यधिकरणस्य श्रुतिवैविध्यात् संशयमूलत्वेऽपि विप्रतिषेधेन हेतुना ब्रह्मकारणवादानादरेण प्रधानकारणवादस्य ज्यायस्त्वे पर्यवसितः पूर्वः पक्षः । अतो विप्रतिषेधमात्रस्य पूर्वपक्षीकरणमयुक्तम् । अत एव हि 'नात्मा श्रुतेः' इत्यस्य च श्रुतिवैविध्यात्संशयमूल[क ?]त्वेऽपि न विप्रतिषेधमात्रं पूर्वपक्षितम्; अपितूत्पत्तिं सिद्धान्त्येकदेशिमतं कृत्वाऽनुत्पत्तिः सिद्धान्तिता । अतो विप्रतिषेधस्य क्वचित्पर्यवसानमपेक्षितम् । तत्र किं सृष्टिश्रुतिविप्रतिषेधात् प्रधानकारणवादग्राह्यत्वम्, उत सृष्टिश्रुतीनामर्थान्तरपरत्वम्, उताप्रामाण्यमेवेति । न तावदाद्यः, प्रधानकारणवादपरत्वेऽपि श्रुतिविप्रतिषेधस्य स्थितत्वात्; तत्र वक्तव्यस्य ब्रह्मकारणवादेऽपि तुल्यत्वात् । नाप्यन्यपरत्वम्; अन्याभावात् ॥ ब्रह्मविदाप्नोतीति प्रकृतं ब्रह्मवेदनं ब्रह्मणः सर्वकारणत्वोक्तिमुखेन स्तूयते; अतोऽन्यपरत्वमिति चेन्न—'कारणं तु ध्येयः' इति वेद्यब्रह्मणः कारणत्वलक्षणकत्वात् लक्षणविप्रतिषेधे लक्ष्यब्रह्मवेदनस्यासंभवात् स्तुत्यनुपपत्तेः । नापि वेदाप्रामाण्यम्; प्रथमे काण्डे तत्प्रामाण्यस्य समर्थितत्वात् । अतः पर्यवसानस्थलाभावेन विप्रतिषेधमात्रस्य पूर्वपक्षीकरणायोगादनुत्पत्तिं पूर्वपक्षीकृत्योत्पत्तिसिद्धान्तीकरणं युक्तम् ।

सूत्रयोजना चानुपपन्ना—'**अश्रुतेः**—छान्दोग्ये वियदुत्पत्त्यश्रवणात् । **अस्ति तु**—तैत्तिरीयके वियदुत्पत्तिरस्ति' इति व्याख्यातम् । वियदुत्पत्तौ श्रूयमाणायामपि क्वचिच्छ्रवणाभावस्य हेतुतयोपन्यासोऽनुपपन्नः ॥ अनधीतशाखान्तरपुरुषाभिप्रायेण हेतूक्तिरिति चेत्—तर्हि अनधीतषष्ठ-प्रपाठकपुरुषाभिप्रायेण पृथिव्याद्यनुत्पत्तेरप्युपन्यस्य सूत्रकारेण निरसनीयत्वं प्रसजेत् । महीमही-धरादीनां युगपत्सर्गप्रलयौ हि केषांचिदनभिमतौ । **अस्तित्विति** सूत्रस्य विप्रतिषेधसमर्थनाय उत्पत्तिसद्भावपरतया पूर्वपक्षविषयत्वमप्ययुक्तम्; सिद्धान्तप्रतिज्ञाया अध्याहार्यत्वप्रसङ्गात् । अनध्याहारसंभवे तदयोगाच्च । **गौण्यसंभवा**दित्यादेश्च सूत्रस्य सिद्धान्त्येकदेशिमतविषयत्वं तु परोक्ताधिकरणशरीरप्रतिक्षेपेण व्युदस्तं भवति । **यावद्विकारं**त्विति सूत्रं विभक्तत्वहेतुना घटादिवन्नभसः कार्यत्वानुमानपरं वर्णितम् । तदयुक्तम्; हेत्वनुपपत्तेः । विभक्तत्वं नाम यद्येकस्मात् कार्यतया विभक्तत्वम्, तदा साध्याविशिष्टो हेतुः । यदि भिन्नत्वम्; प्रागभावे भावरूपाज्ञाने च व्यभिचारः । तदुभयव्यतिरिक्तत्वे सति भिन्नत्वमात्मनि व्यभिचरति । आत्मा ह्यविद्यातत्कार्येभ्यो भिन्नः, प्रागभावाविद्याव्यतिरिक्तश्च । उक्तेभ्योऽतिरिक्तत्वे सति भिन्नत्वं व्यर्थविशेष्यम्; व्यवच्छेद्याभावात् ॥ प्रागभावाविद्याब्रह्मान्यत्वं कार्यत्वे हेतुरिति चेत्—सूत्रे **विभाग**पदविरोधः स्यात् । विभक्तत्वं हि सौत्रो हेतुः त्वद्योजनायाम् ॥ विभागशब्देनापि पूर्वोक्तात् त्रिकादन्यत्वं विवक्षितमिति चेन्न; आकाशसहिताच्चतुष्टयादन्यत्वमुपाधिः स्यात् । न चैतावता पक्षेतरत्वो-

पाधिना सर्वानुमानोच्छेदः ; चतुष्टयस्यापि पक्षत्वाभावेन तदन्यत्वस्य पक्षेतरत्वा(त्वरूपत्वा ?)भावात् ॥

**एतेन मातरिश्वेति** सूत्रमतिदेशाधिकरणमित्युक्तम्—तदयुक्तम् ; अधिकशङ्काया अभावात् । सर्वगतद्रव्यत्वादिहेतुप्रसङ्गविरहात् शङ्कान्यूनतैव ॥ 'सैषाऽनस्तमिता देवता, यद्वायुः' इति श्रुत्या अधिकशङ्केति चेन्न ; 'वायुश्चान्तरिक्षं चैतदमृतम्' इत्यमृतत्वश्रवणस्य वियन्मातरिश्वनोस्तुल्यतया, परिहारस्य तुल्यत्वात् । अनस्तमितशब्दस्यामृतशब्दतुल्यार्थतया पृथक्परिहरणीयत्वाभावाच्च ॥

ब्रह्मणोऽपि कारणत्वादेव गगनादिवत् कार्यत्वमाशङ्क्य तन्निरासपरम् **असम्भव** इत्यादिसूत्रमधिकरणान्तरमाहुः । कार्यत्वशङ्कानिरासः किं युक्त्या, उत श्रुत्या ? नाद्यः ; युक्तेरसंभवात् ॥ ननु कार्यत्वानुपपत्तिरेव युक्तिः । न ह्यसतः सदुत्पत्तिः ; 'कथमसतः सज्जायेत' इति तस्या व्युदस्तत्वात् । न तावत् सद्विशेषात् सन्मात्रोत्पत्तिः ; विशेषेभ्यः सामान्योत्पत्त्यदर्शनात् । सामान्येभ्यो हि विशेषोत्पत्तिर्दृष्टा । नापि सन्मात्रात् सन्मात्रोत्पत्तिः ; असत्यतिशये प्रकृतिविकारभावानुपपत्तेरिति चेन्न—पूर्वकालात् सतः पाश्चात्यसदुत्पत्त्युपपत्तेः । पूर्वापरभावातिरिक्तविशेषो नावश्यापेक्षितः ; सदृशपरिणामपरम्परायाः शास्त्रप्रामाण्यवादिभिरभ्युपगतत्वात् । पूर्वोत्तरज्वालासु सदृशीषु पौर्वापर्यातिरिक्तादर्शनाच्च । अतो युक्तिर्दुःस्थतरेति न तया शङ्कानिरासः । यदि श्रुत्या—तर्हि कृतकरत्वप्रसङ्गः, 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यादिषु 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्', 'सबाह्याभ्यन्तरो ह्यजः' इति नित्यत्वाजत्वादिधर्मकस्यैव ब्रह्मणो भूतयोनिशब्देन परमात्मकारणतया निर्दिष्टस्य परमात्मत्वनिर्णयात् तद्विरुद्धाशङ्कोत्थानं हि नोपपद्यते ॥

**अपरे** तु—शब्दादिगुणानां दिक्कालादीनां च सृष्ट्यश्रवणान्नित्यत्वमाशङ्क्य अद्वितीयश्रुत्यनुपपत्त्या तन्निरासकमधिकरणान्तरं वर्णयन्ति—तदप्ययुक्तम् ; शब्दादीनां द्रव्यावस्थारूपाणामुत्पत्त्यन्तरनैरपेक्ष्यस्य सत्कार्यवादसमर्थनेनाप्यर्थसिद्धत्वात् । 'पद्भ्यां भूमिर्दिशःश्रोत्रात्', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि', 'कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः । अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम्'' इति दिक्कालोत्पत्तिश्रवणेन च नित्यत्वशङ्कानुदयात् ॥ तर्कमात्रावष्टम्भपरवादिप्रतिपत्तिनिरासार्थोऽयमारम्भ इति चेन्न ; तस्य तर्कपादसाध्यत्वेनेहासङ्गतत्वात् । न च—नभोभागमात्रं दिशः; सूर्यादिगतिविशेषः कालः इति च युक्तम् ; ''नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौःसमवर्तत.... दिशःश्रोत्रात्'' इति, ''सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'' इति पृथगुत्पत्तिश्रवणात् । अत एवोत्पत्तिर्दिक्कालावच्छेदकविषयेति शङ्का च निरस्ता भवति । नाप्युत्पत्तिश्रुतिर्दिक्कालादिदेवतामात्रविषयेति वाच्यम्, अधिष्ठेयभेदाभावे अधिष्ठातृदेवताभेदानुपपत्तेः । आदित्यादिगतिविशेष एव कालश्चेत्, 'अग्रे' इति सूर्यादिसृष्टेः प्रागेव कालदर्शनम्, ''रूपान्तरं तद् द्विज ! कालसंज्ञम्'' इति प्रधानपुरुषातिरिक्तकालस्मरणं च विरुध्यते । अतस्तन्मतमप्यनुपपन्नम् ।

प्रथमाध्यायशेषः पादद्वयेनावसितः **इत्यन्ये**—तदयुक्तम्—पादचतुष्टयस्यापि प्रथमाध्यायशेषत्वात् । वेदान्तानां ब्रह्मैककारणतापरत्वं हि प्रथमाध्यायार्थः । तत्र साक्षादुपयोगोऽनेकान्तवादिनिरासादीनामपि नास्ति । प्रणाड्योपयोगस्तृतीयचतुर्थयोरप्यस्ति ; कार्यदौःस्थ्यस्य कारणदौस्स्थ्या-

पादकृत्वात्; तत्परिहारस्य तत्स्थिरीकारहेतुत्वाच्च । **अन्येषां पक्षे**ऽप्याद्ययोः सूत्रयोर्मतद्वय-विषयसूत्रस्य च योजनावैषम्यं पूर्ववत् दत्तोत्तरं वेदितव्यम् । **गौण्यसम्भवा**दिति । श्रुत्यन्तरविरोधाद-संभवः। श्रुत्यन्तरं च 'खं पुराणं वायुः (वायुरं?) खमिति ह स्माह' इति, 'त्रिरात्रं खमेतत् पुष्पान्तम्' इति च पुराणमेकं खम्, अपरं खं पुष्पवद्विनाशीत्युच्यते । एवंसति गगनद्वयासंभवात् घटोत्पत्त्या घटाकाशस्येव ब्रह्माण्डोत्पत्त्या तदवच्छिन्नाकाशस्योत्पत्तिरुपचर्यते । अतो न व्योम्नो मुख्यो-त्पत्तिरित्याहुः । व्योम्न एकत्वे व्योमशब्दस्य कृत्स्नव्योमविषयत्वात् पुराणमित्यादिविशेषणस्य व्यवच्छेद्यासंभवः परिह्रियते **स्याच्चैकस्ये**ति । ब्रह्मण एकत्वेऽपि 'एतद्वै सत्यकाम ! परं चापरं च' इति ब्रह्मशब्दस्य ब्रह्मैकदेशोपलक्षणतया एकदेशान्तरं यथा व्यवच्छेद्यम्, तद्वत् व्योमशब्दस्याप्युपपत्ति-रित्याहुः । **प्रतिज्ञे**ति **शब्देभ्य** इत्यन्तमेकं सूत्रम् । गगनाकार्यत्वे प्रतिज्ञाहानिमाशङ्क्य अकार्यत्वेऽपि भोक्तृवर्गस्येव नभसोऽपि ब्रह्माव्यतिरिक्तत्वात् प्रतिज्ञाया **अहानिः; अव्यतिरेकश्च** 'आत्मैवेदं सर्वम्' इत्यादिशब्देभ्यः सिद्ध इत्याहुः । एवं **गौणी**त्यादि **शब्देभ्य** इत्यन्तं पूर्वपक्षविषयम् । **यावदि**ति । यावन्तो महदादयो विकारास्तावन्तो विभागाः सूक्ष्माः शक्तिरूपाः सवितुरिव प्रभा ब्रह्मणः सन्ति । लौकिकपुरुषाणामिवेश्वरस्यापि कार्यकारणवन्तो व्यवहाराः श्रूयन्ते । अतः सूक्ष्ममाकाशं परमं व्योम । तस्मादस्य तु व्योम्न उत्पत्तिरस्तीत्याहुः ॥ तत्र तावत् खं पुराणमिति श्रुतिविरोधादुत्पत्त्य-संभवात् गौणीत्ययुक्तम्, शब्दाच्चेत्यनेन पुनरुक्तिप्रसङ्गात् । 'वायुश्चान्तरिक्षं चैतदमृतम्' इत्यमृतत्वश्रुतेः पुराणत्वश्रुतेश्च को भेदः । यतः पुराणत्वश्रुतिविरोधादसंभवो न विवक्षितः, अत एव पुराणत्वादिविशे-षणस्य व्यवच्छेद्यासंभवपरिहारपरत्वं **स्याच्चैकस्ये**ति सूत्रस्याप्ययुक्तम् । **प्रतिज्ञाहानि**रिति सूत्रस्य च पूर्वपक्षविषयतयैव तत्र शङ्काविशेषपरिहारपरत्वमयुक्तम्; तथा सत्यधिकरणसिद्धान्तसाधकयुक्तेरनुक्ति-प्रसङ्गात् ॥ 'यावद्विकारम्'इति सूत्रं सिद्धान्तसाधकयुक्तिपरम् । तत्र हि तुशब्दः श्रुत इति चेन्न—तस्य परापरव्योमभेदेन पुराणत्वोत्पत्तिमत्त्वविरोधपरिहारपरत्वेन व्याख्यातत्वात् । परिहारश्च साधकयुक्त्यन्तरे उपन्यस्ते युज्यते । अन्यथा व्योम्न एकत्वात् पुराणत्वश्रवणाच्च उत्पत्तिर्गौणीति वदता अन्योन्याश्रयोद्-घाटनस्य सुकरत्वात्—उत्पत्तेरगौणत्वे ततः पुराणव्योम्नोऽन्यत्वं तस्यान्यत्वादुत्पत्तेरगौणत्वमिति ॥ ननु गगनभेदे प्रमाणोपस्थापकं सूत्रमिति चेत्—यदि तयोर्व्योम्नोरुत्पत्त्यनुत्पत्तिभ्यां भेद उपस्थाप्यते, तदानीमौपाधिकभेदमाश्रित्य गौणोत्पत्त्या प्रमाणनिर्वाह उपपद्यते । यद्याकारान्तरेण व्योम्नो भेदः श्रुतः, तर्ह्युत्पत्तेर्गौणत्वेऽपि स उपपद्यते । उत्पत्तेरगौणत्वे हेतोः सूत्रितत्वाभावात् । किञ्च अव्यक्तात् परमक्षरं परं व्योमेति भवतां मतम् । तस्य च पुराणत्वमयुक्तम्; अक्षरं तमसि लीयत इति लयश्रवणात् ॥ आपेक्षिकं पुराणत्वमस्तीति चेत्—तर्हि व्योमभेदाभावेऽपि घटाकाशब्रह्माण्डावच्छिन्नाकाशयोरिव पुराण-त्वापुराणत्वयोरविरोधः सुवच इत्युत्पत्तिर्गौणी स्यात् । अत एव प्रलयश्च तत्र गौणस्स्यात् । यदा प्रतिज्ञाहानिरिति सूत्रं सिद्धान्तसाधकम्, तदानीं भवदुक्तशङ्का दूरोत्सारिता स्यात् । तच्च पूर्वं दर्शितम् । छान्दोग्ये गगनोत्पत्त्यवचनेऽपि तत्सिद्धिप्रतिपादनं चापेक्षितमन्तिमसूत्रे कृतं स्यात् । अत एव तत्र तुशब्दोऽपि चार्थो द्रष्टव्यः, अन्यथाऽनुपपत्तेर्दर्शितत्वात् ॥ इति वियदधिकरणम् ॥

## तेजोधिकरणम् . २-३-२.

### तेजोऽतस्तथा ह्याह ॥ २·३-१० ॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम्; इदानीं व्यवहितकार्याणां किं केवलात् तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिः; आहोस्वित् तत्तद्रूपाद्ब्रह्मणः इति चिन्त्यते ॥ किं युक्तम्। केवलात् तत्तद्वस्तुन इति॥ कुतः। तेजस्तावत् अतः—मातरिश्वन एवोत्पद्यते, "वायोरग्निः" इति ह्याह॥

### आपः ॥ २-३-११ ॥

आपोऽपि अतः—तैजस एवोत्पद्यन्ते, "अग्नेरापः", "तदपोऽसृजत" इति ह्याह ॥ ११ ॥

### पृथिवी ॥ २-३-१२ ॥

पृथिवी अद्भ्य उत्पद्यते, "अद्भ्यः पृथिवी", "ता अन्नमसृजन्त" इति ह्याह ॥ १२ ॥

नन्वन्नशब्देन कथं पृथिव्यभिधीयते? अत आह—

### अधिकाररूपशब्दान्तरेभ्यः ॥ २-३-१३ ॥

महाभूतसृष्ट्यधिकारात् पृथिव्येवान्नशब्देनोक्तेति प्रतीयते। अदनीयस्य सर्वस्य पृथिवीविकारत्वात् कारणे कार्यशब्दः। तथा वाक्यशेषे भूतानां रूपसंशब्दने, "यदग्ने रोहितं रूपम्, तेजसस्तद्रूपम्; यच्छुक्लम्, तदपाम्; यत् कृष्णम्, तदन्नस्य" इत्यप्तेजसोः सजातीयमेवान्नशब्दवाच्यं प्रतीयते। शब्दान्तरं च समानप्रकरणे, "अग्नेरापः। अद्भ्यः पृथिवी" इति श्रूयते।

---

**तेजोऽतस्तथा ह्याह** ॥ अवान्तरसङ्गतिमाह—**ब्रह्मे**ति। महदादीनां तत्त्वानां किं केवलात् पूर्वपूर्वतत्त्वमात्रादुत्पत्तिः, उत तत्तद्रूपात् ब्रह्मण इति; किमाकाशाद्वायुरित्यादिषु आकाशादिशब्दाः आकाशादिमात्रपराः, उत तदवस्थब्रह्मपराः इति; किं तेज ऐक्षतेत्यादिष्वभिध्यानलिङ्गं तेजःप्रभृतिशब्दानां तदवस्थब्रह्मपरतामवगमयति, नेति; किं तेजःप्रभृतिशब्दानां तदवस्थपरत्वे लक्षणा स्यात्, नेति; किं तेजःप्रभृतिशब्दानामपर्यवसानवृत्त्या ब्रह्माभिधाने व्युत्पत्तिविरोधादिदोषो भवति, नेति। यदा भवति—तदानीमपर्यवसानेन ब्रह्माभिधानासंभवेन लक्षणाप्रसङ्गादभिध्यानलिङ्गस्य तेजःप्रभृतिशब्दानां ब्रह्मपरतावगमकत्वाभावादाकाशादिशब्दानामाकाशादिमात्रपरत्वेन केवलाकाशादेरेव वाय्वाद्युत्पत्तिरिति भवति। यदा व्युत्पत्तिभङ्गादिदोषो न भवति, तदानीमपर्यवसानेन ब्रह्माभिधानसंभवेन लक्षणाप्रसङ्गाभावात् अभिध्यानलिङ्गस्य तेजःप्रभृतिशब्दानां ब्रह्मपरतावगमकत्वादाकाशादिशब्दाः तदवस्थब्रह्मपरा इत्याकाशाद्यवस्थाद् ब्रह्मण एव वाय्वाद्युत्पत्तिरिति सिध्यति॥ ननु प्रकृत्यधिकरणे कृत्स्नस्य ब्रह्मोपादानकत्वनिश्चयात् अवस्थितेरित्यादिषु जगद्ब्रह्मणोः शरीरात्मभावसिद्धेः, तत्र चान्तर्यामिब्राह्मणे सर्वतत्त्वानां विशेषतःशरीरत्वावगमाच्च केवलात् तत्तद्वस्तुनो वाय्वाद्युत्पत्तिरिति पूर्वपक्षानुत्थानादनारम्भणीयत्वम्॥ नैवम्। एकस्य कार्यस्य ब्रह्मप्रसूतत्वकथनात् पश्चात् तत्तत्कारणव्यहिततत्त्वसृष्टिक्रमनिर्देशबलाच्च तेषां तत्त्वानां परमात्मशरीरत्वश्रवणं सृष्ट्यनन्तरानुप्रवेशकृतमौपचारिकम्, 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः; अभिध्यानं च गौणम्, सर्वस्य ब्रह्मजत्वश्रुतिश्च पारम्पर्याभिप्रायेति पूर्वपक्षोत्थानात्॥

**आपः** ॥ **अतस्तथा ह्याहे**त्यनुषङ्गः॥ **पृथिवी** ॥ अत्राप्यनुषङ्गः॥

उत्तरसूत्रशङ्कामाह **नन्वि**ति। **अधिकाररूपशब्दान्तरेभ्यः** ॥ **अधिकारः**—प्रस्तावः। **अन्न**शब्दस्य पृथिवीवाचकत्वप्रकारमाह-**अदनीयस्ये**ति। कारणे कार्योपचार इत्यर्थः। प्रकृतं पूर्वपक्षमाह

अतः पृथिव्येवान्नशब्देनोच्यत इत्यद्भ्य एव पृथिवी जायते। उदाहृताः तेजःप्रभृतयः प्रदर्शनार्थाः। महदादयोऽपि स्वानन्तरवस्तुन एवोत्पद्यन्ते; यथाश्रुत्यभ्युपगमाविरोधात्। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी", "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते", "तस्माद्वा एतस्मादात्मनः आकाशः संभूतः", "तत्तेजोऽसृजत" इत्यादयो ब्रह्मणः परम्परया कारणत्वेऽप्युपपद्यन्त इति ॥ १३ ॥ एवं प्राप्ते प्रचक्ष्महे—

**तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ २-३-१४ ॥**

तुशब्दात् पक्षो व्यावृत्तः। महदादिकार्याणामपि तत्तदनन्तरवस्तुशरीरकः स एव पुरुषोत्तमः कारणम्। कुतः? तदभिध्यानरूपात् तल्लिङ्गात्। अभिध्यानम्—बहु स्यामिति सङ्कल्पः। "तत्तेज ऐक्षत बहु स्यां प्रजायेयेति", "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि" इत्यात्मनो बहुभवनसङ्कल्परूपेक्षणश्रवणान्महदहङ्काराकाशादीनामपि कारणानां तथाविधेक्षापूर्विकैव स्वकार्यसृष्टिरिति गम्यते। तथाविधं चेक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यते। श्रूयते च सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणोऽन्तर्यामिब्राह्मणे, "यः पृथिव्यां तिष्ठन्... योऽप्सु तिष्ठन्... यस्तेजसि तिष्ठन्...यो वायौ तिष्ठन्...य आकाशे तिष्ठन्" इत्यादि। सुबालोपनिषदि च, "यस्य पृथिवी शरीरम्" इत्यारभ्य, "यस्याहङ्कारः शरीरम्...यस्य बुद्धिः शरीरम्...यस्याव्यक्तं शरीरम्"इत्यादि॥

यच्चोक्तम्—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिषु श्रूयमाणा ब्रह्मणः प्राणादिसृष्टिः परम्परयाऽप्युपपद्यत इति—अत्रोच्यते—

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ २-३-१५ ॥**

तुशब्दोऽवधारणार्थः। अव्यक्तमहदहङ्काराकाशादिक्रमाद्विपर्ययेण यः सर्वेषां कार्याणां ब्रह्मानन्तर्यरूपः क्रमः, "एतस्माज्जायते प्राणः" इत्यादिषु प्रतीयते, स च क्रमस्तत्तद्रूपाद्ब्रह्मणस्तत्तत्कार्योत्पत्तेरेवोपपद्यते। परम्परया कारणत्वे ह्यानन्तर्यश्रवणमुपरुध्येत। अतः "एतस्माज्जायते" इत्यादिक्रमपि सर्वस्य ब्रह्मणः साक्षात्संभवोत्तम्भनम् ॥ १५ ॥

---

**उदाहृता** इति। ब्रह्मणः साक्षादेव तेषामुत्पत्तिश्रवणं कथमित्यत्राह **एतस्मादि**ति।

**तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ तदभिध्यानं**—बहुभवनविषयाभिध्यानम्। **तल्लिङ्गम्** परमात्मलिङ्गम्। तेजःप्रभृतिष्वीक्षणश्रवणात् सर्वशाखाप्रत्ययन्यायेन महदादीनामपि परमात्मशरीरतया तुल्यन्यायतया तेष्वपीक्षापूर्विका सृष्टिरित्यर्थः। ततः किमित्यत्राह–**तथाविधश्चे**ति। न केवलमीक्षापूर्वकसृष्ट्या परमात्मनस्तच्छरीरकस्य कारणत्वं गम्यते; अपि तु तच्छरीरकत्वं श्रौतमित्याह **श्रूयते चे**ति। ईक्षणश्रवणं हि तेजःप्रभृतीनाम्; न तु महदादीनाम्। अतस्तेषामपीक्षणपूर्वकसृष्टिसिद्धये तत्कारणानामपि परमपुरुषशरीरत्वमाह–**सुबालोपनिषदी**ति।

उत्तरसूत्रशङ्कामाह **यच्चोक्त**मिति—**विपर्ययेण तु क्रमोऽत उपपद्यते च॥ तुशब्दोऽवधारणार्थ** इति। "स्युरेव तु पुनर्वै चेत्यवधारणवाचिनः" इति हि नैघण्टुकाः। विपर्ययेण क्रमं व्याचष्टे **अव्यक्ते**ति। परोक्तक्रमविपर्ययेणेत्यर्थः। **अत**श्शब्दं व्याचष्टे **स चे**ति। 'एतस्माज्जायते' इत्यत्र ब्रह्मानन्तर्यप्रतीतिः स्वारस्यसिद्धा। एवं वाक्यस्वारस्येन ब्रह्मानन्तर्यरूपक्रमप्रतिपत्तेर्ब्रह्मण एव तत्तत्कार्योत्पत्तिरित्यर्थः। **उत्तम्भनं**—ज्ञापकम्। एतस्मात्प्राणो जायते, एतस्मान्मनो जायते इत्यन्वयाभिप्रायेणैवमुक्तम्।

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्** ॥ २-३-१६ ॥

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते। यदुक्तम्—"एतस्माज्जायते" इत्यादिना सर्वस्य ब्रह्मणोऽनन्तरकार्यत्वं श्राव्यते ; अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिध्यान-लिङ्गावगता उत्तभ्यत इति—तन्नोपपद्यते—क्रमविशेषपरत्वादस्य वाक्यस्य अत्रापि सर्वेषां क्रमप्रतीतेः। खादिषु तावत् श्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते। तैः सह पाठलिङ्गाद्भूत-प्राणयोरन्तराले विज्ञानमनसी अपि क्रमेणोत्पद्येते इति प्रतीयते। अतः सर्वस्य साक्षाद्ब्रह्मण एव संभवस्योत्तम्भकमिदं वाक्यं न भवति इति चेत्—

तन्न; अविशेषात्। "एतस्माज्जायते प्राणः" इत्यनेनाविशेषात् विज्ञानमनसोः खादीनां च। 'एतस्माज्जायते' इत्यनेन साक्षात्संभवरूपसंबन्धस्याभिधेयस्य सर्वेषां प्राणादिपृथिव्यन्तानाम-विशिष्टत्वात् स एव विधेयः; न क्रमः। श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरम्, "पृथिव्यप्सु प्रलीयते" इत्यारभ्य "तमः . . . एकीभवति" इत्यन्तेन क्रमान्तरप्रतीतेः। अतोऽव्यक्तादिशरीरकात् परस्माद्ब्रह्मण एव सर्वकार्याणामुत्पत्तिः। तेजःप्रभृतयश्च शब्दास्तदात्मभूतं ब्रह्मैवाभिदधति ॥ १६ ॥

नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैः शब्दैस्तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्ध उपरुध्येत ; तत्राह—

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** ॥ २-३-१७ ॥

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः। निखिलजङ्गमस्थावरव्यपाश्रयः तत्तच्छब्दव्यपदेशो भाक्तः—वाच्यैकदेशे भज्यत इत्यर्थः। समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणा-विषयत्वाद्वेदान्तश्रवणात् प्राक् प्रकार्यप्रतीतेः, प्रकारिप्रतीतिभावभावित्वाच्च तत्पर्यवसानस्य, लोके

---

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्**। व्याख्येयं पदं व्याचष्टे **विज्ञानेति**। **अत्रापि**। न केवलं श्रुत्यन्तरेष्वेवेति भावः॥ **तैस्सह पाठलिङ्गात्**। अग्रचप्रायन्यायादित्यर्थः। **तन्नेति**। अविशेषादिति पदं व्याचष्टे **एतस्मादिति**। **अनेनाविशेषात्**, 'एतस्माज्जायत' इति वाक्यप्रतिपन्नान्वयाविशेषात्। तदेव विवृणोति **एतस्माज्जायते** इति। एतस्मादित्यादिवाक्याभिधेयस्य साक्षात्संभवरूपस्य संबन्धस्य प्राणादिपृथिव्यन्तानामविशिष्टत्वादित्यर्थः। **दीपसारयोस्तु**—एतस्मादिति पञ्चम्यन्तपदान्वयाविशेषादिति शब्दपरं व्याख्यातम्। इदं त्वर्थपरम्। **श्रुत्यन्तरसिद्धक्रमविरोधाच्चेति**। प्राणो हि वायुकार्यः। स हि खस्यानन्तरमुत्पन्नः ; न भूतेभ्यः प्रागुत्पन्न इत्यर्थः। क्रमविरोधे प्रमाणमाह **पृथिव्यप्सु प्रलीयत** इति। व्यवहितकार्याणामपि ब्रह्मण उत्पत्तिश्चेत्, कथं तेजःप्रभृतिशब्दैरभिधान-मित्यत्राह **तेजःप्रभृतयश्चेति**।

अनन्तरसूत्रं चोद्यपुरःसरमवतारयति—**नन्विति**। यत्र शब्दस्य वाचकत्वशक्तिः, तत्र व्युत्पत्तिरस्ति। अतो ब्रह्मवाचकत्वेन व्युत्पत्त्यभावान्न शब्दस्य तद्वाचकत्वशक्तिरित्यर्थः। **चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्**॥ हेतुखण्डं विवृण्वन् वाक्यार्थं योजयति **समस्तेति**। व्युत्पत्त्यभावो न वाचकत्वाभावप्रयुक्तः, अपि तु प्रमाणान्तरागोचरत्वप्रयुक्त इति व्युत्पत्त्यभावस्यान्यथासिद्धिरुक्ता भवति। अस्यां योजनायां द्वितीययोजनार्थं आर्थः सिध्यति।

तत्तद्वस्तुमात्रे वाच्यैकदेशे ते ते शब्दा भङ्क्त्वाभंक्त्वा व्यपदिश्यन्ते। अथवा तेजःप्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचितया व्युत्पन्नैर्ब्रह्मणो व्यपदेशो भाक्तः स्यात्—अमुख्यः स्यादित्याशङ्क्य 'चराचरव्यपाश्रयस्तु' इत्युच्यते। चराचरव्यपाश्रयः तद्व्यपदेशः—तद्वाचिशब्दः—चराचरवाचिशब्दो ब्रह्मण्यभाक्तो मुख्य एव; कुतः? ब्रह्मभावभावित्वात् सर्वशब्दानां वाचकभावस्य। नामरूपव्याकरणश्रुत्या हि तथाऽवगतम्॥ १७॥ इति तेजोधिकरणम्॥

---

सर्वशब्दानां ब्रह्मणि मुख्यत्वे प्रमाणस्यापेक्षितत्वात् साक्षादर्थमाह **अथवे**ति। तत्र शङ्कान्तरमाह **तेज** इति। **चराचरव्यपाश्रयस्तद्व्यपदेशः**—चराचरमात्रविषयपर्यवसायित्वेन व्युत्पन्नस्तद्वाचिशब्द इत्यर्थः। ब्रह्मभावशब्देन ब्रह्मानुप्रवेश उच्यते। ब्रह्मणस्तत्र **भावो** ह्यनुप्रवेशः—अस्यां योजनायां सर्वशब्दानां ब्रह्मवाचित्वे प्रमाणोपन्यासः श्रौतः स्यात्। व्युत्पत्तिविरोधशङ्कापरिहारस्त्वार्थः सिध्यति। एवं विशेषणभूतपृथिव्यादिषु क्रमनिर्देशो मुख्यः; ब्रह्मणस्तत्तद्वस्तुविशिष्टत्वात् सर्वस्य ब्रह्मप्रसूतत्वश्रवणं मुख्यम्, सर्वतत्त्वानां यावद्द्रव्यसत्ताकविशेषणतया ब्रह्मशरीरत्वं मुख्यम्। अभिध्यानं चात एव मुख्यम्। अतः सर्वश्रुतिमुख्यत्वं सिद्धान्त उक्तं भवति॥

**परे** त्वाकाशाद्वायुरित्याकाशादनन्तरं वायुरुत्पन्नः, वायोरनन्तरमग्निरुत्पन्न इति निर्वाहसंभवात् 'तज्जलानिति', 'एतस्माज्जायते प्राणः', 'स तपस्तप्त्वेदं सर्वमसृजत' इत्यादिश्रुतिभिरविशेषेण सर्वस्य ब्रह्मजत्वावगमात् छान्दोग्यश्रुत्यनुसारेण तेजसो ब्रह्मयोनित्वं पूर्वपक्षीकृत्य 'आत्मनः संभूतः' 'पृथिव्या ओषधयः' इति पूर्वापरपञ्चम्योरुपादानविषयत्वदर्शनान्मध्यपातिन्या अपि तथात्वाद्वायुयोनित्वं तेजसः, ब्रह्मजत्वं तु वायुभावापन्नब्रह्मणो जाततया पारम्पर्येणाप्युपपद्यत इति सिद्धान्तयन्ति।

तच्चिन्तनीयम्। सिद्धान्ते किं निरसनीयम्? यदि ब्रह्मयोनित्वमात्रम्, तदा कृत्स्नस्य ब्रह्मोपादानकत्वानुपपत्तिः। यदि वाय्ववस्थानापन्नब्रह्मयोनित्वं निरसनीयम्, तदयुक्तम्; त्वन्मतेऽध्यासाधिष्ठानत्वस्योपादानलक्षणत्वात्, घटः सन्, मृदयं घटः इति मृदवस्थसदात्मकतया घटप्रतीतिवत् तेजोऽस्ति, आपः सन्तीति सद्रूपेण प्रतीयमानस्य तेजसोऽपां च वायुस्तेजः, तेजो जलमिति वायुतेजोरूपतया प्रतीयमानत्वाभावात्, अनवभातस्याधिष्ठानत्वायोगाच्च वायुभावाद्यनापन्नस्यैव सन्मात्रस्य तेजःप्रभृत्युपादानत्वोपपत्तेः। न हि रज्जुः सर्पात्मना भूदलनादेरुपादानम्; भूदलनाध्यासदशायां सर्पात्मनाऽनवभातत्वात्। यद्यनवभातमप्यधिष्ठानं स्यात्, सर्वं सर्वस्याधिष्ठानं स्यात्, अनवभातत्वाविशेषात्॥ गोमयत्वानवभासेऽपि गोमयस्य वृश्चिकोपादानत्वमुपपन्नमिति चेन्न; परिणामानभ्युपगमात्। अनवभातस्य परिणाम उपपद्यते; न त्वध्यासाश्रयत्वम्; दर्शनस्य नियामकत्वात्। न हि पुरोवर्तिनि भास्वरद्रव्येऽनवभाते रजताध्यासः। अनवभातमपि बीजमङ्कुरादिपरिणामं भजते॥ वाय्वादिकं तेजोध्यासे सत्तयोपकारकमिति चेन्न; दिक्कालादृष्टेन्द्रियतद्दोषव्यतिरिक्तस्य भ्रान्तौ गुरुत्वादेरिव सत्तयोपकारकत्वाभावात्। अतः सद्रूपेण प्रतीतेर्वाय्वादिरूपेणाप्रतीतेश्च, सन्मात्रस्यैवोपादानत्वोपपत्तेः तर्कापेतश्रुतेरपि तर्कानुगृहीतश्रुतेः प्रबलत्वात् छान्दोग्यश्रुत्यनुसारेण सद्योनित्वमेव सिद्धान्तीकर्तव्यम्। आकाशाद्वायुः वायोरग्निरित्यादिष्वाकाशादिशब्दानां लक्षणया सन्मात्रपरत्वं चाश्रयणीयम्॥

लक्षणैव दोष इति चेत्—अहो भवतां लक्षणाभीरुत्वम्, ये सत्यज्ञानानन्ततत्त्वमादिपदानि (?) व्याचक्षते। अनन्तरशब्दाध्याहारेण आत्मनो वायुः संभूत इति योजनापि वरम्; तर्कानुगृहीतश्रुत्यन्तरैकार्थ्यात्। उपक्रमावगतस्यात्ममात्रात् संभवस्य प्रबलत्वाच्च अध्याहारपञ्चमीवैरूप्ययोरनादरणीयत्वात्।

किञ्च ब्रह्मयोनित्वाकाशयोनित्वचिन्ता कस्माद्वायौ न कृता ॥ सन्मूलत्वश्रवणरूपपूर्वपक्षलिङ्गस्य तत्राभावादिति चेन्न; 'एतस्माज्जायते....खं वायुर्ज्योतिरापः' इति परमात्ममूलत्वावगतेः। अतो न पूर्वपक्षलिङ्गं तेजसि चिन्तायां हेतुः; किं तु तदैक्षतेत्यभिध्यानरूपसिद्धान्तलिङ्गवत्त्वम्। अत एव 'तेजोऽतः' इत्यादिसूत्राणां पूर्वपक्षविषयत्वमवगम्यते। अत एव 'पृथिव्यधिकाररूपशब्दान्तरेभ्यः' इति नाधिकरणान्तरम्; किं तु पृथिवीति पृथक्सूत्रम् अम्मात्रात् पृथिव्युत्पत्तिपरम्, पूर्वपक्षविषयत्वोपपादनात्। सिद्धान्तं वक्तुं विषयशुद्धिपरम्; अधिकाररूपशब्दान्तरेभ्य इति सूत्रान्तरम्, अन्नस्य पृथिवीत्वे सिद्धे हि कारणविशेषचिन्ताप्राप्तिः। सूत्रान्तरत्वं च हेतोः पूर्वसाध्येऽनन्वयादवगम्यते। पूर्वपक्षसिद्धान्तसूत्रयोर्मध्यपातित्वान्न पृथगधिकरणत्वं न्याय्यम्। तेजसि चिन्तनस्य सिद्धान्तयुक्तिनिबन्धनत्वादेव **अपरेषामपि** पक्षे व्याख्यावैषम्यं प्रत्युक्तम्।

वियदादिभूतानाम् 'आकाशाद्वायुः', 'तदपोऽसृजत' इति स्वातन्त्र्येण स्वकार्ये प्रवृत्तिप्रतिषेधकमधिकरणान्तरं तदभिध्यानादिति सूत्रमाहुः। तदयुक्तम्; रचनानुपपत्तेरित्यत्र अचेतनस्य स्वातन्त्र्येण प्रवृत्तिप्रतिषेधात्॥ तथाऽपि 'तत् तेज ऐक्षत' इति चेतनत्वश्रवणात् संशय इति चेन्न; अभिमानिव्यपदेशस्त्वित्यत्राचेतनगतेक्षणादीनामभिमानिचेतनानुप्रवेशनिबन्धनत्वस्योक्तत्वात्॥ तत् पूर्वपक्षसूत्रमिति चेत्—तथाऽपि तस्य सूत्रकारेणाप्रत्याख्यातत्वात् कृतकरत्वम्। अत एव भवद्भिरपि परमेश्वरावेशादीक्षणश्रवणमित्युक्तम्। स्वातन्त्र्यप्रतीतिश्च, 'चमसवदविशेषात्' इत्यत्र दत्तोत्तरा। तत्र 'बह्वीः प्रजाः सृजमानाम्' इति स्वातन्त्र्ये प्रतीतेऽपि प्रकरणादिना ब्रह्मात्मकत्वावगमेन हि स्वातन्त्र्यं निवारितम्, 'न स्वतन्त्रा काचित् प्रकृतिः प्रधानं नाम अजामन्त्रेणाम्नायत इति शक्यते वक्तुम्, प्रकरणात्तु सा दैवी शक्तिः' इति ह्युक्तं भवद्भिः। इहापि 'तिस्रो देवता अनुप्रविश्य' इति प्रकरणेऽनुप्रवेशो ज्ञायते। अतः कृतकरत्वम्।

'विपर्ययेण तु' इति प्रलयक्रमनिरूणपरमधिकरणान्तरं **परैरुक्तम्**। अनियतक्रमत्वं सर्गक्रमतुल्यत्वञ्च पूर्वपक्षीकृत्य प्रलयस्य सर्गप्रतिलोमक्रमत्वं सिद्धान्तितम्। स्वकारणव्यतिक्रमेण कार्याप्ययायोगः, कार्ये ध्रियमाणे कारणाप्ययायोगश्च हेतुरुक्तः। तत्र तावत् अधिकरणान्तरारम्भोऽनुपपन्नः; प्रलये क्रमवैविध्याश्रवणेन संशयानुपपत्तेः। 'पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते' इत्येकरूप एव हि प्रलयः श्रूयते॥ 'सदेव सोम्येदमग्र आसीत्', 'इदं वा अग्रे नैव किञ्चनासीन्न द्यौरासीन्न पृथिवी नान्तरिक्षम्' इति क्रमानुक्त्या द्युपृथिव्यादिक्रमान्तरोक्त्या च संशय इति चेन्न; अनुक्तस्यान्यतो ग्राह्यतयाऽनुक्तेः संशयहेतुत्वायोगात्। 'इदं वा अग्रे' इत्यत्र श्रौतक्रमाभावात्; पाठक्रमस्य श्रौतक्रमविरोधे दुर्बलत्वाच्च॥ अयमर्थोऽप्यधिकरणे व्युत्पाद्य इति चेन्न, भवद्भिः 'न द्यौरासीत्' इत्यादिपाठक्रमस्य पूर्व-

पक्षितत्वाभावात् । क्रमानियमसर्गक्रमौ हि पूर्वपक्षितौ । नद्यौरित्यादिश्रुतिस्त्वण्डान्तर्वर्त्यूर्ध्वाधरमध्यम-रूपसर्वलोकप्रलयपरा, न त्वण्डारम्भकतत्त्वप्रलयपरेत्यवगम्यते ; दिवोऽन्तरिक्षस्य च पृथगुपादानात् । अतो न क्रमान्तरप्रतीतिः । अतोऽनारम्भणीयतैव स्यात् । न च कार्यस्थितिदशायां कारणप्रलयानुपपत्तिः ; भस्मवृश्चिकस्थितिशायां तन्तुगोमयविनाशदर्शनात् । न च स्वकारणमतिक्रम्य कारणकारणे प्रलयश्चानुपपन्नः ; भस्मवृश्चिकयोस्तन्तुगोमयातिक्रमेण पृथिव्यां प्रलयात् ॥ पृथिव्येव भस्मवृश्चिकयोरुपादानम्, न तन्तुगोमये इति चेत्—न ; विलक्षणादुपादानाद्विलक्षणकार्योत्पत्तौ भवद्भिरेव स्मृतिपादे, "दृश्यते तु" इति सूत्रव्याख्याने गोमयवृश्चिकादिदृष्टान्तोपन्यासात् ; इष्टकादिदाहे भस्मोत्पत्त्यदर्शनेन पृथिवीमात्रस्य भस्मविशेषोपादानत्वायोगेन तन्तूनामेव भस्मविशेषोपादानत्वस्याभ्युपगतत्वाच्च ।

'अन्तराविज्ञान' इति सूत्रमप्यात्मन आकाश इति श्रौतक्रमभङ्गपरिहारपरम्, 'एतस्माज्जायते' इत्यादिमन्त्रस्य उत्पत्तिक्रमे विवक्षाराहित्यप्रतिपादकं व्याख्यातम् । तदयुक्तम् ; 'पृथिव्यप्सु प्रलीयते' इत्याकाशादूर्ध्वम्, 'तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते' इत्यादि-श्रुत्यैव सिद्धस्य क्रमभङ्गस्य दुष्परिहरत्वात् । 'भूतानामात्मनश्चान्तराले' इति व्याख्यानमप्ययुक्तम् ; विज्ञानमनसी इत्यन्तरालावस्थितवस्तुद्वित्वानुपपत्तेः। विज्ञानशब्दो हि विज्ञायतेऽनेनेति व्युत्पत्त्या इन्द्रिय-वर्गपरः । प्राणमनइन्द्रियवर्गाणां त्रयाणां निर्देशेऽपि प्राणमनादृत्य विज्ञानमनसी इति व्यपदेशः कथ-मुपपद्यते ॥ प्राणोऽपि यथाकथञ्चिदवयवशक्त्या विज्ञानशब्देन विवक्षित इति चेन्न ; मनसि चावयवार्थे संभवति मध्यगतं मनो बहिष्कृत्य व्यवहितयोः प्राणेन्द्रियवर्गयोरेकशब्देन विवक्षितत्वे कारणाभावात्[1] । अतो विज्ञानमनसी इति व्यपदेशो **भूतप्राणयोरन्तराल** इति व्याख्यानस्य युक्ततां सूचयति ।

चराचरव्यपाश्रयस्त्विति सूत्रमपि—देवदत्तो जातो मृतः इति लौकिकानां जन्ममरणव्यपदे-शात् चेतनस्य जातकर्मादिविधानाच्च जीवस्य जन्मप्रलयावाशङ्क्य, शास्त्रीयकर्मफलभोगानुपपत्त्या "जीवा-पेतं वाव किलेदं म्रियते" इति श्रुत्या च तौ न वस्तुतः स्तः । शरीरप्रादुर्भावतिरोभावयोर्जन्ममरणशब्द-प्रयोगात् स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ जीवात्मन्युपचरितौ । जातकर्मादिकं च देहप्रादु-र्भावाद्यपेक्षमित्येवमर्थपरं व्याख्यातम्—तदयुक्तम् । किमिदमधिकरणं जीवस्य स्वरूपेणोत्पत्तिनिवारकम्, उत देहोत्पत्त्यादेरात्मनि निवारकम् । नाद्यः, जीवस्योत्पत्तिप्रलयनिषेधस्य 'नात्मा श्रुतेः' इत्यनन्तराधि-करणसाध्यतया पूर्वोत्तरयोरधिकरणयोरन्यतरस्य पुनरुक्तिप्रसङ्गात् ॥ अत्र देहाश्रयौ जन्मप्रलयौ जीवे निषिद्धौ ; तत्र वियदादिवत् परस्मादात्मनस्तस्योत्पत्तिः 'नात्मा श्रुतेः' इति निषिध्यते इति चेन्न—देहात्मभेदासिद्धौ तयोस्तत्र प्रतिषेधाभावात् ; तद्भेदसिद्धौ गृहोत्पत्तिविनाशयोर्देवदत्त इव शरीरजन्म-मरणयोर्जीवगतत्वशङ्काया अनुदयादारम्भानुपपत्तेः॥ देहगतोत्पत्त्यादेरात्मनि प्रतिषेधाय देहात्मभेद इह सिषाधयिषित इति चेन्न ; अस्मत्पक्षे प्रथमकाण्ड एव देहात्मभेदस्य सिद्धत्वात् तस्य यावत्फलस्था-यित्वशङ्कानिवृत्तये नित्यत्वमात्रस्य समर्थनीयत्वात्, त्वत्पक्षे च 'एक आत्मनः शरीरे भावात्' इत्यधि-

1. वेदान्तदीपे भाष्यकारैरेव विज्ञानपदेन प्राण ग्रहणं तु परव्याख्यान्वारोहादनास्थयेत्याशयः।

करणस्य देहात्मभेदसाधकतया व्याख्यातत्वाच्च पुनरुक्तेरवर्जनीयत्वात् ॥ ननु तत्र लोकायतिकनिरसने तात्पर्यम् ; इह तु शास्त्रीयकर्मवैयर्थ्यानुपपत्त्या देहातिरिक्तत्वं सिषाधयिषितमिति चेन्न—वैषम्यनैर्घृण्याधिकरण एवाकृताभ्यागमकृतविप्रणाशप्रसङ्गमुखेन जीवतत्कर्मप्रवाहानादित्वसाधनेन देहातिरेकसिद्धेः कृतकत्वप्रसङ्गात्। कृतविप्रणाशपरिहारो हि शास्त्रवैफल्यपरिहारः॥ ननु तवापि 'नात्मा श्रुतेः' इत्यधिकरणवैफल्यं स्यात् ; तत एव जीवानादित्वसिद्धेरिति चेन्न—एकत्वावधारणप्रतिज्ञादृष्टान्तादिभिः प्राप्ताया जीवोत्पत्तेस्तत्र परिहृतत्वात् श्रुतिमूलाया उत्पत्तिशङ्कायास्तत्रापरिहृतत्वेन तदर्थमारम्भणीयत्वात्। किञ्च, जन्ममरणशब्दयोर्देहप्रादुर्भावतिरोभावानुविधायित्वेऽपि देहात्मभेदासिद्धौ भाक्तत्वासिद्धिः। घटविषययोरुत्पत्तिविनाशशब्दयोरभाक्तत्वं हि तत्रार्थभेदाभावात्। देहात्मभेदे सिद्धे विरुद्धस्वभावतयाऽवगतार्थद्वयविषयैक्यव्यपदेशस्य अग्निर्माणवक इत्यादिव्यपदेशस्येव भाक्तत्वं सिध्यतीति न पृथक्समर्थनीयत्वम्। अतः सूत्रवैयर्थ्यम्। जातकर्मादिविधिपरिहारपरत्वमप्ययुक्तम् ; शङ्कायाः परिहारस्य वा कण्ठोक्त्यभावे तयोरभिप्रेतत्वकल्पनायोगात् ॥ कण्ठोक्तार्थोपयुक्ततया तदभिप्रेतत्वकल्पनमिति चेत्—कण्ठोक्ततया भवदभिमतार्थस्य साध्यत्वानुपपत्तेर्दर्शितत्वात् तदुपयोगितयाऽभिप्रेतत्वकल्पनानुपपत्तेः।

अन्ये तु—'तेजोऽतः' इत्यादिसूत्रजातमेवं व्याचक्षते—

**तेजः अतः**—ब्रह्मण एवोत्पद्यते, न वायोः ; छान्दोग्ये वायोस्तदुत्पत्त्यश्रवणात्। वायोरग्निरिति श्रुतेः मुखाध्मानजन्यवायुनाऽग्न्युत्पत्त्यनुवादकतयोपपत्तेरिति पूर्वपक्षं कृत्वा—एकस्य संभूतशब्दस्य क्वचित्प्रतिपादकस्य क्वचिदनुवादकत्वायोगात्, परम्परया ब्रह्मजत्वोपपत्तेश्च वायोरपि तेज उत्पद्यत इति सिद्धान्तितम्। क्वचिदवचननिमित्तशङ्काया आद्याधिकरणे भवद्भिः परिहृतत्वात्; तत्राप्यवचनमात्रस्य हेतुत्वानुपपत्तेरस्माभिर्दर्शितत्वाच्च पूर्वपक्षोत्थानं न घटते ॥ श्रुतेर्मुखवायुना ज्वलनोत्पत्त्यनुवादकत्वमधिकशङ्कास्पदमिति चेन्न ; आकाशाद्वायुरिति श्रुतेरपि मुखावच्छिन्नाकाशाद्वायूत्पत्तेरनुवादकत्वस्य शङ्कास्पदत्वाभावात्[1] ॥ तत्रापि शङ्कापरिहारावभिप्रेताविति चेन्न ; कारणभूते वायौ कण्ठोक्तयोः तयोः कार्यभूते तेजस्यभिप्रेतताया एवोचितत्वात्। क्वचिदवचनस्य हेतुत्वानुपपत्तेर्दर्शितत्वादेव तदप्यनपेक्षितम् ॥ छान्दोग्ये वायोस्तेजउत्पत्त्यकथनमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानानुपयोगादित्यप्ययुक्तम् ; तेजसोऽपामुत्पत्तेरप्यकथनीयत्वप्रसङ्गात् ॥ तेजोरूपस्य ब्रह्मण एव कारणत्वात् प्रतिज्ञोपयोग इति चेत्, तर्हि वायुरूपस्य ब्रह्मणः कारणत्वात् तत उत्पत्तिकथनस्यापि नानुपयोगः।

**आप** इति। आप एवेदमग्र आसीदिति प्रलयेऽप्यवस्थानश्रवणादापो नोत्पद्यन्ते। यद्वा ब्रह्मण एवोत्पद्यन्ते ; न तेजसः। 'तस्मादापोऽसृज्यन्त', 'अप एव ससर्जादौ' इति वचनात्। 'अग्नेरापः' इति तूष्मणा स्वेदोत्पत्तिं किरणेभ्यो वृष्टिं वा वदतीति, अग्नेरनन्तरं ब्रह्मण आप उत्पद्यन्त इति वाऽर्थ इति द्विविधं पूर्वपक्षं कृत्वा—'अग्नेरापः' इति श्रुतावध्याहारायोगात्, संभूतशब्दार्थैकरूप्याच्च, अग्र आसीदिति श्रुतेः प्रकृत्यन्तर्गतसूक्ष्माम्बुविषयत्वावान्तरप्रलयविषयत्वयोरन्यतरसंभवाच्च तेजसोऽम्बूत्पत्तिरिति सिद्धान्ति-

1. अभावादिति। न हि तत्र शङ्का कृताऽस्तीति भावः।

तम् । 'आप एवेदमग्र आसीत्' इति वाक्यस्य पार्थिवस्य जगतोऽप्सु प्रलयपरत्वेनापामनुत्पत्तिपरत्वाप्रतीतेः पूर्वपक्षानुदयादिदमयुक्तम् ॥ उत्पत्त्यवचनात् पूर्वपक्षश्चेत्, पूर्वमेव परिहृतमिति न शङ्कोत्थानम् । अपां ब्रह्मण एवोत्पत्तिः न तेजस इति च न शङ्कोत्तिष्ठति ; अवचनस्य पूर्वमेव परिहृतत्वात् । अनन्तरशब्दाध्याहारस्य 'वायोरग्निः' इत्यत्राप्यनाशङ्कितस्य शङ्कार्हत्वे वा, तत्रैव परिहर्तव्यतया पुनःशङ्कानुपपत्तेः। सूक्ष्माणामपां प्रकृतौ स्थितिश्च चिन्त्या । किमप्त्वप्रहाणेनावस्थितिः, उताप्रहाणेन ? प्रथमेऽनवस्थितिरेवोक्ता स्यात् ; घटत्वप्रहाणे तदनवस्थितिवत् । द्वितीये 'आपस्तेजसि लीयन्ते' इति श्रुतिविरोधः ।

**पृथिव्यधिकारे**ति—अन्नशब्दस्य प्रसिद्धान्नपरत्वेन छान्दोग्ये पृथिव्युत्पत्त्यवचनादनुत्पत्तिं पूर्वपक्षीकृत्य पृथिव्युत्पत्तिसाधकमधिकरणान्तरं वर्णितम् । तदप्यवचनस्य प्लुष्टबीजवत् शङ्काङ्कुरजननासामर्थ्यादेवायुक्तम् । **'तदभिध्याना**दिति—'इदं सर्वमसृजत', 'तस्मादग्निः समिधो यस्य सूर्यः', 'तत्तेजोऽसृजत', 'आत्मन आकाशः' इत्यादिषु तत्त्वान्तरव्यवहितात् ब्रह्मणस्तदुत्तरतत्त्वसृष्टिरुच्यते, तत्त्वानामपि कारणत्वश्रवणात् ; नियतक्रमाणां तेषामुत्तरोत्तरव्यवधायकत्वाच्चेति पूर्वपक्षं कृत्वा—तदैक्षतेत्याद्युक्ताभिध्यानस्य तत्तत्कार्येषु 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यनुप्रविष्टतया श्रुतपरमात्मलिङ्गत्वात् स एव सर्वत्रोपादानम् ; तत्त्वान्तराणि तु देवदत्तस्य गृहवदनुपादानानि; उपादानत्वेऽपि, आत्मनश्च तत्त्वान्तराणां च सह कारणत्वसंभवादुभयेषामुपादानतया न व्यवधानमिति सिद्धान्तितम् । तत्र ब्रूमः—वाय्वादेरुपादानादाकाशाद्विभज्यमानोंऽशः किं वाय्वादिरूपेण परिणमते, न वा ? । न चेत् , पूर्वाधिकरणविरोधः । वायोस्तेजस उत्पत्तिः, आपस्तेजसोऽप्युत्पद्यन्त इति हि सिद्धान्तितम् । परिणमते चेत् , तेन परिणामांशेन कस्य व्यवहितकारणत्वमाशङ्क्याव्यवधानेन कारणत्वं समर्थ्यते ? किं निमित्तस्य, उतोपादानस्य ? । न प्रथमः, ईश्वरेण विना तद्व्यवधायकस्य निमित्तान्तरस्य जगत्सृष्टिवेलायामसंभवात् , कर्मणामपि सुखदुःखान्वयरूपवैषम्यमात्र एव हि निमित्तत्वम्, न तु सृष्टिमात्रे । द्वितीये—किमीश्वरस्य व्यवधानमाशङ्क्य परिह्रियते, उताव्यक्तस्य, उत सन्मात्रस्य । प्रथमे तत्तत्कार्यं प्रति ईश्वरांशस्याव्यवहितोपादानत्वे निर्विकारश्रुतयो निर्विषयाः स्युः । द्वितीयतृतीययोः, अभिध्यानलिङ्गस्यापक्षधर्मता स्यात् । तृतीयेऽपि—किं द्रव्यान्तरव्यवधानं निवार्यते, उतावस्थान्तरव्यवधानम् ? । न प्रथमः ; तदनन्यत्वमित्यत्र कृतत्वेनारम्भवैयर्थ्यात् । न द्वितीयः ; आकाशाद्वायुरिति अवस्थान्तरव्यवधानस्य श्रौततया दुर्निवारत्वात ॥ आकाशाद्यवस्थं तत्तदवस्थानापन्नं च सन्मात्रमुपादानमिति चेन्न ; युगपदेकस्य द्रव्यस्याकाशाद्यवस्थापत्त्यनापत्त्योर्विरुद्धत्वात् ॥ आकाशाद्यवस्थापन्नेन तदवस्थानापन्नेनांशान्तरेण च सन्मात्रं वाय्वाद्युपादानमिति चेत्—तदंशान्तरं किं नियन्त्रंशाव्यतिरिक्तम् , उत व्यतिरिक्तम् ? । प्रथमे, निर्विकारत्वश्रुतिकोपः । द्वितीये, अभिध्यानलिङ्गस्यापक्षधर्मता ; प्रकृतेः प्रलयावस्थपुरुषस्य च तदसंभवात् । अत आत्मनश्च तत्त्वान्तराणां च सहोपादानत्वमित्यनुपपन्नम् । अतः पूर्वाधिकरणेष्वपि—वायोश्च तेजस उत्पत्तिः, आपस्तेजसोऽप्युत्पद्यन्त इति सिद्धान्तश्चानुपपन्नः ; वाय्वाद्यवस्थापन्नतत्तद्रहिततदंशद्वयस्य प्रमाणाभावात् ; उक्तोपपत्तिविरोधाच्च ।

**तदभिध्याना**दिति सूत्रानन्तरम् **असम्भवस्त्व**ति सूत्रं निवेश्याधिकरणान्तरं वर्णितम्; अस्य पाठक्रमस्य प्रसिद्धिप्राचुर्यविरोधात्, प्रसिद्धपाठानुरोधे सङ्गतिसद्भावाच्च नात्र निवेशनीय(यत्व?)म्। चिन्तितेभ्य आकाशादिभ्योऽतिरिक्तानीन्द्रियमहदहङ्काराव्यक्तपुरुषपरमात्मतत्त्वानि षोडश। तेषां सर्वेषां छान्दोग्यतैत्तिरीययोरश्रवणादनुत्पत्तिं वस्तुत्वात् पृथिव्यादिवत् सर्वेषामुत्पत्तिं च पूर्वपक्षीकृत्य—सन्मात्रात् सद्विशेषाच्चोत्पत्त्यसम्भवेनानुत्पत्तिम्, एकत्वावधारणप्रतिज्ञानाभ्यामन्येषां सर्वेषामुत्पत्तिं च सिद्धान्तयन्ति। तत्राश्रवणात् पूर्वपक्षोदयः पूर्वमेव निरस्तः। 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्', 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' इति परस्यात्मनो नित्यत्वाजत्वयोर्धर्मयोः पूर्वनिरूपितवाक्यैरवगतत्वात् सर्वं कार्यमिति शङ्का नोदेति। न हि वस्तुत्वेनाविभुत्वानुमानमाशङ्क्य क्वचिदधिकरणे निराकृतम्, (करणीयम्?) निरूपितवाक्येषु विभुत्वश्रवणात्। अतः पूर्वपक्षानुत्थितेरधिकरणान्तरत्वमप्ययुक्तम्।

**'विपर्ययेण तु'** इत्यादिसूत्रद्वयं भूतव्यतिरिक्ततत्त्वानां सर्गक्रमविषयमधिकरणान्तरं वर्णितम्। तत्र—'एतस्माज्जायते प्राणः', 'इन्द्रियेभ्यः परा ह्यर्थाः' इति वाक्यद्वयं विषयः। अत्र प्राणशब्दो महद्वाची; ज्ञानक्रियाशक्त्यवच्छिन्नस्य महतो बुद्धिप्राणशब्दवाच्यत्वात्। मनश्शब्दोऽहङ्कारपरः; सर्वेन्द्रियशब्देन मनसोऽप्युपात्तत्वात्। इतिहासपुराणेषु, 'खे वायुः प्रलयं याति मनस्याकाशमेव च' इति प्रयोगाच्च। एवं च आत्मनो महान् जायते, महतोऽहङ्कारः, अहङ्कारादिन्द्रियाणि, इन्द्रियेभ्यो भूतानीति क्रमः स्यात्। अयमेव क्रमो ग्राह्यः, आकाशादिषु क्रमविवक्षादर्शनादिति पूर्वपक्षे प्राप्ते—एतच्छ्रुत्युक्तविपर्ययक्रमेण 'इन्द्रियेभ्यः पराः' इत्यादिश्रुत्यन्तरोक्तक्रमो ग्राह्यः; एतस्मादित्यत्र पदार्थनिर्देशमात्रावगमात्, तत्र तु कारणतया परत्वेन क्रमविवक्षाप्रतीतेरिति सिद्धान्त उक्तः। तन्मात्रावस्थानि भूतान्यर्थाः। शब्दतन्मात्रादिष्वेकैकेन युक्तादहङ्काराच्छ्रोत्राद्युत्पत्तिर्वागाद्युत्पत्तिश्च। अत इन्द्रियेभ्योऽर्थानां परत्वम्। एतस्मादिति श्रुतिश्चाविरोधेन नेया। प्राणात् पूर्वमव्यक्तमुपसंहार्यम्। न चेन्द्रियकार्यत्वं खादीनाम्। 'सर्वेन्द्रियाणि च' इति चशब्दो भिन्नक्रमः। सर्वेन्द्रियाणि खादीनि च मनसोऽहङ्काराज्जातानीत्यर्थः। **अन्तरे**ति। ननु प्राणशब्दवाच्यस्य महतः खाद्यार्थानां चान्तराले सेन्द्रियवर्गं मन एकत्र श्रूयते, अन्यत्र मनश्च बुद्धिश्च; अतो विरोधः। न च मनश्शब्दवाच्योऽहङ्कार एव बुद्धिशब्दाभिधेयः; 'बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च', 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः' इति क्रमेण तद्व्यपदेशलिङ्गात्। ततश्चाव्यक्तमहद्विज्ञानाहङ्कारतन्मात्राणीति अचित्तत्त्वेष्वेव नव प्रकृतयः स्युरिति चेन्न; **अविशेषात्**—बुद्धिमहतोरविशेषात्। बुद्धिरेव महान्। ज्ञानक्रियाशक्तिभेदेन द्विधा व्यपदेशः। परत्वं च न कारणत्वेन; आकारान्तरेण परत्वस्यापि साधारणत्वात् परशब्दस्य। बुद्धिमनसोरविशेषो वा; भूतादित्वेनेन्द्रियादित्वेन चावस्थिताहङ्कारविषयत्वसंभवान्मनोबुद्धिशब्दयोः। यद्वा, इन्द्रियमेव मनः, **विज्ञानम्** - अहङ्कारः, स्थानप्रमाणात्। महान् - महानेव; यद्वा महानात्मेति प्राणशरीरो हिरण्यगर्भ उच्यते; 'प्रजापतिः संवत्सरो महान्' इति प्रसिद्धेः। अतस्तत्त्वसर्गक्रम उपपन्न इति॥

तदिदमनुपपन्नम्; 'इन्द्रियेभ्यः पराः' इत्यादिवाक्यस्य कारणक्रमपरत्वे, आनुमानिकमप्येके-

## आत्माधिकरणम्—२-३-३.

### नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २-३-१८ ॥

वियदादेः कृत्स्नस्य परस्माद्ब्रह्मण उत्पत्तिरुक्ता; इदानीं जीवस्याप्युत्पत्तिरस्ति नेति

---

षामित्यधिकरणविरोधात् । न च तत्र वैभववादः; अन्यत्रापि वैभववादः किं न स्यादिति पर्यनुयोगानतिवृत्तेः कारणवाक्येषु सर्वेषु सूत्रकारनिष्कर्षेऽनाश्वासप्रसङ्गात् ; 'बुद्धेरात्मा महान् परः' इत्यत्रौचित्यभङ्गप्रसङ्गात् ; तद्रहितनिर्वाहे संभवति तदयोगाच्च ॥ अर्थविरोधात् प्रकरणबाधो युक्त इति चेन्न ; औचित्यभङ्गेन महच्छब्दस्य त्वदुक्तार्थपरत्वादर्थविरोधादौचित्यभङ्गेन त्वदुक्तार्थपरत्वमिति चक्रकप्रसङ्गात् । मनश्शब्दस्य स्वरसनिर्वाहे संभवति अहङ्कारपरत्वञ्चायुक्तम् । मनस इन्द्रियत्वमाश्रित्य विज्ञानशब्दस्याहङ्कारपरत्वमत एव नोपपद्यते ; विज्ञानशब्दस्याहङ्कारे स्वारस्याभावात् , तत्स्थानस्थस्य बुद्धिशब्दस्यापि तत्तुल्यार्थत्वे क्लिष्टत्वात् । क्लिष्टार्थत्वे स्थानप्रमाणविरोधाच्च । किञ्च विज्ञानशब्दस्य वा मनःशब्दस्य वाऽहङ्कारपरत्वे, 'विज्ञानसारथिर्यस्तु', 'बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च' इति वाक्यविरोधश्च । न हि हयत्वेन रूपितेन्द्रियसंयमनस्याहङ्कारो हेतुः । महच्छब्दस्य हिरण्यगर्भपरत्वमप्ययुक्तम्—हिरण्यगर्भस्य बुद्धिसंज्ञमहत्तत्त्वोपादानत्वाभावात् । अव्यक्तमेव हि तदुपादानम् । कारणतया परत्वस्याविवक्षितत्वे प्रकरणस्वारस्यभङ्गः । एतदुक्तं भवति—प्राचीनाधिकरणनिष्कर्षविरोधात् , मनःप्राणशब्दयोरमुख्यत्वात् , चक्रकापत्तेः, मनोबुद्धिविज्ञानशब्दानामस्वारस्यात् , बुद्धिविज्ञानशब्दयोरर्थभेदे स्थानविरोधात् , अहङ्कारस्येन्द्रियविजयोपायत्वानुपपत्तेश्च तयोर्वाक्ययोः कार्यकारणक्रमपरत्वायोगात् , सुबालोपनिषत्प्रतिपन्नाप्ययक्रमस्य विरोधाभावेन संशयानुत्थानाच्च अस्य सूत्रद्वयस्यान्यैरुक्तप्रकारेणाधिकरणान्तरत्वमयुक्तमिति ।

**चराचरेति**—'स चायं पुरुषो जायमानः शरीरमभिसंपद्यमानः' इति, 'स उत्क्रमन् म्रियमाणः' इति देहसंयोगवियोगातिरेकेणात्मनो जन्ममरणश्रवणादुत्पत्तिविनाशौ स्त इति पूर्वपक्षं कृत्वा 'न जीवो म्रियते' इत्यादिश्रुतेः 'अभिसंपद्यमान' इत्यस्य जन्मविवरणरूपत्वसंभवात् जन्ममरणयोः शरीरगतयोरात्मन्युपचरितत्वाच्च नोत्पत्तिविनाशाविति सिद्धान्तितम् । तदयुक्तम्—पूर्वमनादित्वस्योक्तत्वात् , नित्यत्वश्रुत्यादिना जन्मविरहस्यानन्तरमेव वक्ष्यमाणत्वात् , सिद्धे देहात्मभेदे तद्धर्मव्यपदेशस्यात्मनि माणवकेऽग्निभावस्येव उपचरितत्वसिद्धेश्च ॥ इति तेजोधिकरणम् ॥

**नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः** ॥ अवान्तरसङ्गतिमाह **वियदादेरिति** । **उत्पत्तिरस्ति नेतीति** । वियदादिवदुत्पत्तिरस्ति नास्तीति संशय्यत इत्यर्थः । किं जीव उत्पद्यते, नेति ; 'तोयेन जीवान्' इत्यादिश्रुतिः किमुत्पत्तिं प्रतिपादयति, उत भोक्तृत्वानुगुणज्ञानसङ्कोचविकासमिति ; 'न जायते म्रियते' इत्यादिकं जीवोत्पत्तिवचनस्य ज्ञान[सङ्कोच]विकासपरतामवगमयति, नेति ; किमत्र नित्यत्ववचनमाकाशामृतत्ववचनवत् गौणम् , उत मुख्यमिति ; मुख्यत्वानङ्गीकारेऽकृताभ्यागमादिकं प्रसज्यते, नेति । यदा न प्रसज्यते, तदा नित्यत्ववचनस्य गौणतया, 'न जायते' इत्यादेश्च जीवोत्पत्तेर्ज्ञानविकासरूपतान-

संशय्यते। किं युक्तम्। अस्तीति। कुतः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः, प्राक्सृष्टेरेकत्वावधारणाच्च। वियदादेरिव जीवस्याप्युत्पत्तिवादिभ्यः श्रुतयश्च सन्ति, "यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्", "प्रजापतिः प्रजा असृजत", "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "यतो वा इमानि भूतानि जायन्ते" इति। एवं सचेतनस्य जगत उत्पत्तिवचनाज्जीवस्याप्युत्पत्तिः प्रतीयते। न च वाच्यम्—ब्रह्मणो नित्यत्वात् तत्त्वमस्यादिभिश्च जीवस्य ब्रह्मत्वावगमात् जीवस्य नित्यत्वमिति; "ऐतदात्म्यमिदं सर्वम्", "सर्वं खल्विदं ब्रह्म" इत्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात् तस्यापि नित्यत्वप्रसक्तेः। अतो जीवोऽपि वियदादिवदुत्पद्यत इति। एवं प्राप्तेऽभिधीयते—नात्मा श्रुतेरिति। नात्मोत्पद्यते; कुतः? श्रुतेः। "न जायते म्रियते वा विपश्चित्", "ज्ञाज्ञौ द्वावजौ" इत्यादिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते। आत्मनो नित्यत्वं च ताभ्यः—श्रुतिभ्य एवावगम्यते, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिभ्यः। अतश्च नात्मोत्पद्यते॥ कथं तर्हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते॥ इत्थमुपपद्यते—जीवस्यापि कार्यत्वात्, कार्यकारणयोरनन्यत्वाच्च॥ एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात्॥ नेत्युच्यते। कार्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः। तत् जीवस्याप्यस्त्येव। इयांस्तु विशेषः—वियदादेरचेतनस्य यादृशोऽन्यथाभावः, न तादृशो जीवस्य। ज्ञानसङ्कोचविकासलक्षणो जीवस्यान्यथाभावः; वियदादेस्तु स्वरूपान्यथाभावलक्षणः। सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते।

एतदुक्तं भवति—भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य, तस्य नित्यतां च प्रतिपाद्य, भोग्यगतमुत्पत्त्यादिकं भोक्तृगतं चापुरुषार्थाश्रयत्वं

---

वगमकत्वात् 'तोयेन जीवान्' इत्यादिश्रुतेश्च जीवोत्पत्तिप्रतिपादकत्वात् जीव उत्पद्यत इति भवति। यदा तु अकृताभ्यागमादि प्रसज्यते, तदा नित्यत्ववचनस्य मुख्यत्वात् 'न जायते' इत्यादिश्रुतेश्च जीवोत्पत्तेर्ज्ञान [सङ्कोच] विकासरूपत्वावगमकत्वात् 'तोयेन जीवान्' इत्यादिश्रुतिरपि तादृगुत्पत्तिपरेति जीवो वियदादिवन्नोत्पद्यत इति सिध्यति। श्रुत्यर्थापत्तिमाह-**एकविज्ञाने**नेति। श्रुतिमाह-**वियदादे**रिति।

राद्धान्तमाह-**एवं प्राप्त** इति। श्रुतिमाह-**न जायत** इति। श्रुत्यर्थापत्तिमाह-**आत्मनो नित्यत्वं चेति। ताभ्यः** श्रुतिभ्योऽवगम्यमानात् नित्यत्वाच्चेति सूत्रार्थः। चोदयति **कथ**मिति। **परि**हरति **इत्थ**मिति। पुनश्चोदयति-**एवं तर्ही**ति। परिहरति **नेत्युच्यत** इति। जीवस्य कार्यत्वं वियदादिवदुत्पत्त्यनङ्गीकारश्च व्याहताविति शङ्कायां चिदचितोरनुयायिकार्यलक्षणमाह-**कार्यत्वं ही**ति। तर्हि को विशेषः इत्यत्राह-**इयांस्त्व**ति।

वियदादेः स्वरूपान्यथाभावलक्षणः, जीवस्य ज्ञानसङ्कोचविकासलक्षण इति विभागे किं प्रमाणम्? जीवस्यापि स्वरूपान्यथाभावलक्षणं कार्यत्वं किं न स्यात्? ब्रह्मणोऽपि कार्यत्वाभ्युपगमात् स्वरूपान्यथाभावाभ्युपगमे निर्विकारत्वहानिः; धर्मान्यथाभावाभ्युपगमे ज्ञानसङ्कोचस्य कर्मनिमित्तत्वात् कर्मवश्यत्वप्रसङ्ग इत्यत्राह-**एतदुक्त**मिति। भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्यते; न तु स्वासाधारणमित्यर्थः।

नियन्तरि प्रतिषिध्य, तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसङ्कल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वं च प्रतिपाद्य, सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चात्मत्वं प्रतिपादितम्। अतः सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म। तत् कदाचित् स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति ; तत् कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम्; तच्च कार्यावस्थम्। तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति ; चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति। उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति। कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः। अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया "येनाश्रुतं श्रुतम्" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तः, "यथा सोम्यैकेन" इत्यादिना निदर्शितः। ईदृशज्ञानसङ्कोचविकासकरतत्तद्देहसंबन्धवियोगाभिप्रायाः जीवस्योत्पत्तिमरणवादिन्यः, "प्रजापतिः प्रजा असृजत" इत्याद्याः श्रुतयः। अचिदंशवत् स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च. 'न जायते म्रियते' इत्याद्याः, 'नित्यो नित्यानाम्' इत्याद्याश्च श्रुतयः। स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः, "स वा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म", "नित्यो नित्यानाम्" इत्याद्याः परविषयाः श्रुतयः। एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणञ्च नामरूपविभागाभावादुपपद्यते। "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इति हि नामरूपविभागभावाभावाभ्यां नानात्वैकत्वे वदति—इति।

ये त्वविद्योपाधिकं जीवत्वं वदन्ति, ये च पारमार्थिकोपाधिकृतम्, ये च सन्मात्रस्वरूपं ब्रह्म

---

**करणाधिपाधिपा**दिशब्दैः श्रुतयः स्मारिताः। घटकश्रुत्यर्थमाह-**सर्वावस्थयो**रिति। आकृत्यधिकरणन्यायं स्मारयति **अतः सर्वदे**ति। सर्वदा चिदचिद्वस्तुशरीरं चेत्, कार्यकारणभावभेदः कथमित्यत्राह **तत्कदाचि**दिति। नामरूपविभागानर्हसूक्ष्मदशापत्तिरूपं कारणत्वम्, तदर्हस्थूलदशापत्तिरूपं कार्यत्वञ्च तुल्यं चेत्, कथमत्र वक्ष्यमाणविधिनिषेधविषयभूतमवान्तरवैषम्यमुच्यत इत्यत्राह—**तत्रेति**। अचितः स्वरूपान्यथाभावरूपपरिणामित्वे हेतुमाह **भोग्यत्वाये**ति। चितो ज्ञानसङ्कोचविकासरूपकार्यत्वे हेतुमाह—**भोक्तृत्वाये**ति। परमात्मनस्तत्तदवस्थचिदचिन्नियमनरूपविकारास्पदत्वमाह—**उभये**त्यादिना। कार्यत्वं ब्रह्मणः कथमित्यत्राह—**कारणावस्थाया** इति। विशिष्टं कारणं चेत्, मृत्पिण्डदृष्टान्तः कथं घटत इत्यत्राह **अत एवे**ति। यथा मृत्पिण्डदृष्टान्ते पार्थिवत्वाचेतनत्वादिकं नापेक्षितम्—तथा चिदचिद्विशिष्टत्वं स्वरूपान्यथाभावलक्षणविकाराभावं च ब्रह्मणि न बाधते मृत्पिण्डलोहमण्यादिदृष्टान्तः। अपि त्वनेकविशेषणविशिष्टैकद्रव्यावस्थान्तरयोगमात्रे स दृष्टान्तः ; रूपादिमत्त्वान्मृत्पिण्डादेरित्यर्थः। उत्पत्त्यनुत्पत्त्यादिपराणां श्रुतीनां विषयविभागमाह-**ईदृशे**ति। **अनिष्टविकाराभावाभिप्राया** इति। **अनिष्ट**शब्देन 'सोऽकामयत बहु स्याम्' इत्याद्युक्तेष्टविकारा व्यावृत्ताः। सर्वदा चिदचिद्विशिष्टं ब्रह्म चेत्, एकत्वावधारणं कथमित्यत्राह **एव**मिति। श्रुत्या नामरूपविभागतदभावाभ्यां नानात्वैकत्ववचनादित्यर्थः।

**ये त्वि**ति। सूत्रोक्तत्वात् परैरपि तदभ्युपगमादिति हेतुद्वयमुक्तं भवति। **तर्हि परेषां पक्ष एव**

स्वयमेव भोक्तृभोग्यनियन्तृरूपेण त्रिधाऽवस्थितं वदन्ति। सर्वेऽप्येते अविद्याशक्तेरुपाधिशक्ते-र्भोक्तृभोग्यनियन्तृशक्तीनां च प्रलयकालेऽवस्थानेऽपि तदानीमेकत्वावधारणं नामरूपविभागा-भावादेवोपपादयन्ति। 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्'', ''न कर्माविभागादिति चेन्नानादित्वादुप-पद्यते चाप्युपलभ्यते च' इति सूत्राभ्यां जीवभेदस्य तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमाच्च। इयान् विशेषः—एकस्यानाद्यविद्यया ब्रह्म स्वयमेव मुह्यति। अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्म स्वयमेव बध्यते; उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्। अपरस्य ब्रह्मैव विचित्राकारेण परिणमते, कर्मफलानि चानिष्टानि भुङ्क्ते; नियन्त्रंशस्य भोक्तृत्वाभावेऽपि सर्वज्ञत्वात् स्वस्मादभिन्नं भोक्तारमनुसंदधातीति स्वयमेव भुङ्क्ते। अस्माकं तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं ब्रह्म कार्यकारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वाद्यपरिमितोदार-गुणसागरमवतिष्ठते। प्रकारभूतचिदचिद्वस्तुगता अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वं समञ्जसम्॥ १८॥ इति आत्माधिकरणम्॥

---

स्वीकार्य इत्यत्राह **इयानिति**। नियन्त्रंशस्य न भोक्तृत्वमित्यत्राह-**नियन्त्रंशस्येति**॥

**सर्वेऽपि परे तु**—अश्रुतेरिति पदं छिन्दन्ति। तदयुक्तम्; 'यथा सुदीप्तात्', 'तोयेन जीवान्' इत्यादिश्रुतिमूले पूर्वपक्षे प्राप्ते सति, अश्रुतेरिति हेतोरसिद्धत्वात्। क्वचिदश्रवणस्य पूर्वपक्षहेतुताया व्युदस्तत्वाच्च; श्रुतेरिति पदस्योत्तरत्रानुषङ्गदर्शनाच्च। उत्क्रान्तिगत्यागतीनामित्यत्र श्रुतेरिति ह्यनुषज्यते॥ श्रवणादित्यध्याहारेण योजनेति चेन्न; अनुषङ्गसंभवेऽध्याहारानुपपत्तेः। किञ्च, ब्रह्मण एवाविकृतस्य जीवात्मनाऽवस्थितत्वात् ब्रह्मणश्चानुत्पत्तिमत्त्वात् तदनन्यस्य जीवस्य चानुत्पत्तिरिति चानुपपन्नम्—'सर्वं खल्विदं ब्रह्म', 'ब्रह्मैवेदं सर्वम्' 'पुरुष एवेदं सर्वम्' इति, 'तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः' इति, 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्यादिभिः पृथिव्यवादीनामपि ब्रह्मानन्यत्वेन हेतोर्व्यभिचारात्॥ नन्वचित्सामानाधिकरण्यं बाधार्थमिति चेत्—जीवसामानाधिकरण्यमपि तथा किं न स्यात्॥ तथासति जीवस्वरूपनिवृत्त्या शास्त्रस्य प्रयोजनपर्यवसानं न स्यादिति चेन्न। सामानाधिकरण्यस्य वस्तुमात्रोपलक्षण-त्वेऽप्यहमर्थनिवृत्त्या तस्यापुरुषार्थविश्रान्तिर्दुष्परिहरा। अतः पृथिव्यादिव्यावर्तकं ब्रह्मानन्यत्वं जीवस्या-सिद्धम्॥ ब्रह्मैवाविकृतं जीवात्मनाऽवतिष्ठते; विकृतं पृथिव्याद्यात्मनाऽवतिष्ठत इति चेन्न; जीवस्य ज्ञातृत्वात्, 'तच्च ज्ञातृत्वं विक्रियात्मकम्' इति भवदभ्युपगमाच्च विकृतत्वाविकृतत्वरूपवैषम्याभावात्॥ स विकारो-ऽपरमार्थ इति चेत्, पृथिव्यादिविकारोऽप्यपरमार्थ इति पृथिव्यादेरप्यनुत्पत्तिर्जीवोत्पत्तिर्वा स्यात्॥ ननु पृथिव्यादिधर्मिण एव बाध्याः; जीवत्वमात्रमिह बाध्यम्; अतः स्वरूपनित्यत्वमिति चेन्न—पृथिव्यस्ती-त्यादिततत्पृथिव्यादिसमानाधिकरणत्वात् सन्मात्रस्य—पृथिवीत्वादिधर्ममात्रस्यैवापारमार्थ्यान्न पृथिवीस्व-रूपबाध इति वक्तुं शक्यत्वात्। अहमस्मि, घटोऽस्तीति जीवस्य घटादेश्च सदव्यतिरेको ह्यविशेषेण प्रतीयते। किञ्च—न तावत् परिशुद्धं जीवसंज्ञम्; अनभ्युपगमात्। तत्र किमन्तःकरणविशिष्टं चैतन्यं जीवः, उत तदुपलक्षितम्? प्रथमेऽन्तःकरणस्य सृष्टिसंहारविषयत्वेन तद्विशिष्टरूपस्याप्यादिमत्तया जीवस्योत्पत्तिप्रतिषेधोऽनुपपन्नः। द्वितीये, शाखाग्रसारसाभ्यां सह चन्द्रकेदारयोरिवोत्पत्तिप्रसङ्गाभावात्, ब्रह्मणो नित्यत्वस्यान्यत्र सिद्धत्वाच्चाधिकरणोत्थानं न स्यात्॥ श्रुतिवैविध्यपरिहारार्थमारम्भ इति चेत्—

कथं परिहारः ॥ उपाध्युत्पत्तिप्रलयावात्मन्युपचर्येते इतीति चेत्—उपाधिशब्दो यदि देहपरः, तदा देहोत्पत्तिप्रलययोरात्मन्युपचरितत्वं 'चराचरव्यपाश्रयः' इत्यत्रोक्तमिति कृतकरत्वं स्यात् । अन्तःकरणपरश्चेत्—अन्तःकरणस्याद्यन्तवत्त्वात् कर्तृत्वभोक्तृत्वयोरन्तःकरणधर्मत्वाभ्युपगमादन्तःकरणप्रलये ब्रह्मणोऽनुपहितत्वात् तत्र वासनासंबन्धायोगात् पुनरकृताभ्यागमादिप्रसङ्गो दुर्वारः। अनुपहितस्वरूपे सर्ववासनासंबन्धे भोगसङ्करश्च स्यात् । कर्मभोक्तुर्जीवस्यादिमत्त्वं सर्वथा दुष्परिहरं च स्यात् ; अनुपहितस्वरूपे कर्तृत्वभोक्तृत्वाभावात् उपाध्युपहितस्वरूपस्यादिमत्त्वाच्च ।

**औपाधिकभेदाभेद**वादेऽप्यन्तःकरणोपहितब्रह्मण एव कर्तृतया भोक्तृतया जीवरूपेण स्थितत्वादुपहिताकारस्यादिमत्त्वाच्च, कर्तुर्भोक्तुरादिमत्त्वमवर्जनीयम् । उपाधीनां गत्वरतया क्षणे क्षणे बन्धमोक्षणे प्रतिसंधानानियमकर्मसङ्करादयश्च स्युः ।

**अन्येषां पक्षे**ऽप्यश्रुतेरिति पदकल्पनं पूर्ववद्व्युदस्तम् । सर्गाधिकारेषु जीवस्य सृष्टिप्रलयाम्नानाभावपरम् **अश्रुतिपदं** व्याख्यातम् । तच्चायुक्तम् ; 'यस्मिन्निदं सञ्च वि चैति' इत्युपक्रम्य 'सर्वे निमेषा जज्ञिरे' इत्यतः पूर्वं 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' इति श्रुतेः । उत्पत्तिप्रलयनिषेधश्रुतीनां विषयविभागश्चानुपपन्नः । "हिमकरकसैन्धवादीनां जलत्वप्रत्यभिज्ञानायोग्यावस्थान्तरापत्तिः ; तरङ्गबुद्बुदादीनां जलत्वप्रत्यभिज्ञानयोग्यत्वेऽपि संस्थानान्तरापत्तिः ; विभक्तजलस्य विभाग एव—न तु भूयिष्ठो विकारः । तत्र करकादिस्थानीयाः महदादयः, ब्रह्मधर्मविज्ञानाद्यननुवृत्तेः । तरङ्गस्थानीयाः जीवाः, ज्ञानानन्दादीनामल्पानुवृत्तेः । विभक्तजलस्थानीया ईश्वरव्यूहाः ज्ञानाद्यनुवृत्तेः पूर्णत्वात् । प्रलयेऽपि पृथिव्यादीनां न विभागशक्तिस्तिष्ठति ; किन्तु परिणामशक्तिरेव । जीवानां तु विभागशक्तिरवतिष्ठते । ईदृशविशेषेण जीवस्य नित्यत्वाविनाशित्वाजत्ववादाः" इति ह्युक्तम् । तत्र ब्रूमः—किं विभागशब्देन नामरूपविभागं विवक्षित्वा नामरूपविभागाभिमानार्हता विभागशक्तिरित्युच्यते, उत जीवानां स्वरूपभेदप्रहाणेन पश्चाद्भेदप्राप्त्यर्हता विवक्षिता ?। आद्यः पक्षः साधिष्ठ[तम]ः । द्वितीये कटकमुकुटादीनामिव जीवानामादिमत्त्वं स्यात ॥ कटकमुकुटादीनां प्रध्वंसे विभागशक्तिर्नास्ति, जीवानां तु सा प्रलयेऽस्तीति चेन्न ; कटकादीनामपि विभागशक्तिमत्त्वेनावैषम्यात् । अत एव हि हेमपिण्डात्पुनर्विभागः कटकादीनां भवति । ननु पूर्वं कटकोपयुक्तांशः पश्चादपि कटक एवोपयुज्यते न तु मुकुट इति नियमानर्हत्वाद्विभागशक्त्यभावः । जीवानां तु प्रतिनियतकर्मभोगानुगुणनियमवत्त्वाद्विभागशक्तिरवतिष्ठत इति चेत् , समस्तभेदशून्यानां पुनर्भेदापत्तौ स एवायं पुण्यकृत् , नान्य इति नियमानुपपत्तेः स्वेतरसमस्तव्यावर्तकाकाराननुगतौ देवदत्ते यज्ञदत्तप्रत्यभिज्ञानवत् स एवायमिति प्रत्ययस्य भ्रान्तिरूपता स्यात् ॥ कर्मशक्तय एव भेद इति चेन्न ; सर्वासां कर्मशक्तीनां सन्मात्रवृत्तित्वे, अस्येयं कर्मशक्तिर्नान्यस्येति नियमानुपपत्तेः । अतः स्वाभाविकस्वरूपभेदे स्थित एवाविभागापत्तिर्वर्णनीया ; अन्यथा अकृताभ्यागमादिप्रसङ्गात् । अतः, 'विभागशक्तिरवतिष्ठते, न स्वरूपभेदः' इत्यनुपपन्नम् । अतः स्वरूपभेदे नित्ये सत्युत्पत्त्यनुत्पत्तिश्रुत्योर्विषयव्यवस्था कार्या ॥ इति आत्माधिकरणम् ॥

## ज्ञोऽत एव ॥ २-३-१९ ॥

वियदादिवत् जीवो नोत्पद्यते इत्युक्तम्; तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते। किं सुगतकपिलाभिमतचिन्मात्रमेवात्मनः स्वरूपम्, उत कणभुगभिमतपाषाणकल्पस्वरूपमचित्स्वभावमेवागन्तुकचैतन्यगुणकम्; अथ ज्ञातृत्वमेवास्य स्वरूपम् इति। किं युक्तम्?।

चिन्मात्रमिति। कुतः। तथा श्रुतेः। अन्तर्यामिब्राह्मणे हि, "य आत्मनि तिष्ठन्" इति माध्यन्दिनीयपर्यायस्य स्थाने, "यो विज्ञाने तिष्ठन्" इति काण्वा अधीयते। तथा, "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति कर्तुरात्मनो विज्ञानमेव स्वरूपं श्रूयते। स्मृतिषु च, "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते।

अपरस्तु—जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्, करणानां च वैयर्थ्यात्, सुषुप्तिमूर्च्छादिषु स्वतोऽप्यात्मनश्चैतन्यानुपलब्धेर्जाग्रतः सामग्र्यां सत्यां ज्ञानोत्पत्तिदर्शनादस्य न ज्ञानं स्वरूपम्; नापि ज्ञातृत्वम्। आगन्तुकमेव चैतन्यम्। सर्वगतत्वञ्चात्मनः अवश्याभ्युपेत्यम्, सर्वत्रकार्योपलब्धेः सर्वत्रात्मनः संनिधानाभ्युपगमात्; शरीरगमनेनैव कार्यसंभवे सति गतिकल्पनायां प्रमाणाभावाच्च। श्रुतिरपि सुषुप्तिवेलायां

---

**ज्ञोऽत एव**। अवान्तरसंगतिमाह-**वियदादिव**दिति। जीवस्वरूपस्य निरूपणीयत्वमस्त्येव। तथापि कार्यताप्रकारनिरूपणाभावात् न पादेन साक्षात्सङ्गतिः। अतो वक्ष्यमाणाधिकरणचतुष्टयस्य प्रसङ्गात् सङ्गतिरित्यर्थः। तत्रास्याधिकरणस्य मुखान्तरेणापि सङ्गतिर[प्य]स्ति—जीवस्य धर्मान्यथाभावलक्षणो विकारो न संभवति; स्वरूपातिरेकेण ज्ञानाख्यधर्माभावात् [दिति]। सेयं सङ्गतिरर्थसिद्धेत्यभिप्रेत्य न कण्ठोक्ता। **किमित्यादि**। किं जीवश्चैतन्यमात्रवपुः, उत जडस्वरूप एवागन्तुकचैतन्यः, उत स्वतो ज्ञातेति; किं ज्ञानमात्रवपुष्ट्वे ज्ञानस्वरूत्वतद्धर्मकत्वपरसर्वश्रुतिसामञ्जस्यम्, उतागन्तुकचैतन्यजडस्वरूपत्वे, उत स्वतो ज्ञातृत्वैकरूपत्वे इति; ज्ञातृत्वस्य स्वरूपत्वे सर्वत्रोपलब्धिः प्रसज्यते, नेति; तदर्थं किं जीवः सर्वगतः, उताणुरिति; अणुत्वे विप्रकृष्टार्थग्रहणाग्रहणे संभवतः, नेति; एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यते, नेति। यदा नोपपद्यते, तदा विप्रकृष्टार्थग्रहणाग्रहणासंभवेन सर्वगतत्वात् सर्वत्रोपलब्धिप्रसङ्गेन ज्ञातृत्वस्य स्वरूपत्वे सर्वश्रुतिसामञ्जस्याभावात् पक्षान्तरयोरन्यतरत् स्वीकार्यं स्यात्। यदा धर्मधर्मिभाव उपपद्यते, तदा विप्रकृष्टार्थग्रहणाग्रहणसंभवेनाणुत्वे सिद्धे सर्वत्रोपलम्भाप्रसङ्गात् सर्वश्रुतिसामञ्जस्येन ज्ञातृत्वस्वरूप आत्मेति सिध्यति। **चिन्मात्रमिति मात्र**चा ज्ञातृत्वादिव्यावृत्तिः। **चिन्मात्र**मिति भावप्रधाननिर्देशः; ज्ञानत्वमित्यर्थः। **ज्ञातृत्वमेवास्य स्वरूप**मिति। ज्ञातृत्वं[1] स्वस्य परस्य चावभासप्रतिसंबन्धित्वम्। भासमानं वस्तु यस्मै भाति, स हि ज्ञाता। तथात्वं ज्ञातृत्वम्; अहंत्वमित्यर्थः। **स्वरूपं** स्वाभाविकाकारः। 'ज्ञानं यथा सत्यम्' इत्यादि च पूर्वपक्षेऽनुसन्धेयम्। **अपरस्तु**। कणादमतानुसारीत्यर्थः। **सर्वत्र कार्योपलब्धेः**—बुद्धिसुखदुःखाद्युपलब्धेः। देशान्तरे भोग्यवस्तूत्पत्तिश्च विभुत्वहेतुः। तदुत्पत्तिरदृष्टसंबन्धादेव भवति। निराश्रयस्य धर्मादेस्तत्र संबन्धोऽनुपपन्न इति विभुत्वमभ्युपेत्यम्। **गतिकल्पनायां प्रमाणाभावाच्चेति**। गतिकल्पनपक्षे अणुत्वं गतिश्चोभयं कल्प्यम्, इतरपक्षे विभुत्वमेवं कल्प्यमिति कल्पनालाघवाद्विभुत्वमेवोपपन्नमिति विभुत्वसंभवादनन्यथासिद्धं गतेः कल्पकं नास्तीति भावः। श्रुतिमाह **श्रुतिरपी**ति।

---

1 कणादेनेवात्र सूत्रकारेणात्मनोऽहंत्वाकथनात् अहंत्वमात्मनि न तदिष्टमिति मत्यपनोदनायात्र तदपि सिद्धमित्याह-ज्ञातृत्वमित्यादिना।

ज्ञानाभावं दर्शयति, "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति ; नो एवेमानि भूतानि" इति । तथा मोक्षदशायां ज्ञानाभावं दर्शयति, "न प्रेत्य संज्ञाऽस्ति" इति । ज्ञानस्वरूपमित्यादि· प्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिक इति—

एवं प्राप्ते प्रचक्ष्महे—ज्ञोऽत एव । ज्ञ एव—अयमात्मा ज्ञातृत्वस्वरूप एव ; न ज्ञानमात्रम् ; नापि जडस्वरूपः। कुतः। अत एव—श्रुतेरेवे[1]त्यर्थः। "नात्मा श्रुतेः" इति प्रकृता श्रुतिः अतश्शब्देन परामृश्यते । [1]तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने, "अथ यो वेदेदं जिघ्राणीति स आत्मा", "मनसैवैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके", "सत्यकामः सत्यसङ्कल्पः", "नोपजनं स्मरन्निदं शरीरम्" । अन्यत्रापि, "न पश्यो मृत्युं पश्यति" । तथा वाजसनेयके, "कतम आत्मा" इति पृष्ट्वा, "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति । "तथा" विज्ञातारमरे केन विजानीयात्", "जानात्येवायं पुरुषः।", तथा, "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः", "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः" इति ॥ १९ ॥

यत्तूक्तम्—ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वदा सर्वत्रोपलब्धिः प्रसज्येतेति—तत्रोच्यते—

## उत्क्रान्तिगत्यागतीनाम् ॥ २-३-२० ॥

नायं सर्वगतः; अपि त्वणुरेवायमात्मा। कुतः। उत्क्रान्तिगत्यागतीनां श्रुतेः । उत्क्रान्तिस्तावच्छ्रूयते, "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इति । गतिरपि, "ये वै केचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति । आगतिरपि, "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति । विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन् ॥ २० ॥

## स्वात्मना चोत्तरयोः ॥ २-३-२१ ॥

चशब्दोऽवधारणे । यद्यपि शरीरवियोगरूपत्वेन उत्क्रान्तिः स्थिरस्यात्मनः कथञ्चिदुपपद्येत ; गत्यागती तु न कथञ्चिदुपपद्येते । अतस्ते स्वात्मनैव संपाद्ये ॥ २१ ॥

---

राद्धान्तमाह **एवं प्राप्ते** इति । **ज्ञ एवे**त्यादि । **अत** इति । श्रुतिव्यक्तिभेदेऽप्यतश्शब्दोऽर्थवशादपेक्षितं वाक्यविशेषमुपस्थापयति । **एत**च्छब्दः प्रकृतजातीयपरामर्शीत्यर्थः । "मनसैतान् कामान् पश्यन् रमते", "न पश्यो मृत्युं पश्यति" इत्यादयो मुक्तात्मविषयाः । "अन्योऽन्तर आत्मा विज्ञानमयः", "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्याद्यनुसन्धेयम् ॥

अनन्तरसूत्रशङ्कामाह **यत्तूक्त**मिति । **उत्क्रान्तिगत्यागतीनाम्** ॥ **ये वै केचे**ति । **उत्क्रान्ति**शब्दानन्तर**गति**शब्द उत्क्रान्त्यनन्तरभाविगतिपर[2] इति भावः । अस्मिन् सूत्रे श्रुत्यर्थापत्तिर्दर्शिता ॥

**स्वात्मना चोत्तरयोः** ॥ **कथञ्चि**च्छब्देन तत्राप्यस्वारस्यं सूचितम् । अणुत्वगत्योरुभयोरपि

---

1. श्रुतेरेवेति । अहमस्मि न वेत्येवं संशयाभावादिना आत्मनः स्वयंप्रकाशत्वरूपं ज्ञानत्वं युक्तितोऽपि सुवचम् । ज्ञस्वाभाव्ये तु श्रुतिरेव मानमित्याशयः । अनुत्पत्ति—नित्यश्रुतिष्वेव विपश्चिचेतनपदश्रवणादत्रैवमित्याशयः । अन्यादृशश्रुतीरपि विवक्षति तथेति । ताभ्य इति सौत्रस्यनित्यत्व रूपहेतूपसर्जनत्वात् न अत इत्यनेन ग्रहणौचित्यम् ।

2 अतः सुषुप्त्यादिकालिकहृदयान्तर्गत्यादिरूपपरोक्तार्थः त्यक्तः ; न तु प्रमेयदौःस्थ्यादिति ।

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २-३-२२ ॥**

"योऽयं विज्ञानमयः प्राणेषु" इति जीवं प्रस्तुत्य, "स वा एष महानज आत्मा" इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न ; इतराधिकारात्—जीवादितरस्य प्राज्ञस्य तत्राधिकारात् । यद्यप्युपक्रमे जीवः प्रस्तुतः, तथाऽपि, "यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति मध्ये परः प्रतिपाद्यते इति तत्संबन्धीदं महत्त्वम् ; न जीवस्य ॥ २२ ॥

**स्वशब्दोन्मानाभ्यां च ॥ २-३-२३ ॥**

साक्षादणुशब्द एव श्रूयते, "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" इति । उद्धृत्य मानम् उन्मानम् । अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते, "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः" इति, "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति च । अतोऽणुरेवायमात्मा ॥ २३ ॥

अथ स्यात्—आत्मनोऽणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इति ।

तत्र मतान्तरेण परिहारमाह—

**अविरोधश्चन्दनवत् ॥ २-३-२४॥**

यथा हरिचन्दनबिन्दुर्देहैकदेशवर्त्यपि सकलदेहव्यापिनमाह्लादं जनयति, तद्वदात्माऽपि देहैकदेशवर्ती सकलदेशवर्तिनीं वेदनामनुभवति ॥ २४ ॥

**अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमाद्धृदि हि ॥ २ ३-२५ ॥**

हरिचन्दनबिन्द्वादेर्देहदेशविशेषावस्थितिविशेषात् तथा भावः ; आत्मनस्तु तन्न विद्यत इति चेत्—न, आत्मनोऽपि देहदेशविशेषे स्थित्यभ्युपगमात् । हृदयदेशे ह्यात्मनः स्थितिः श्रूयते, "हृदि ह्ययमात्मा तत्रैकशतं नाडीनाम्" इति । तथा 'कतम आत्मा' इति प्रकृत्य, "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इति । आत्मनो देशविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शितः ; न तु चन्दनस्य देशविशेषापेक्षा ॥ २५ ॥

---

कल्प्यत्वात् परेण कल्पनागौरवमुक्तम् । तत्र गमनस्य श्रुतिसिद्धत्वेन कल्प्यत्वं नास्ति । अतोऽणुत्वमेव कल्प्यमिति न गौरवम् । तत्र विभुत्वकल्पनं श्रुतिविरुद्धम् ; अणुत्वकल्पनं त्वविरुद्धमिति भिदेत्यर्थः ॥

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्** ॥ **अधिकारः**-प्रस्तावः । **यस्यानुवित्तः** । **यस्य** जीवस्य **अनुवित्तः** । 'विद ज्ञाने'; उपास्य इत्यर्थः । यद्वा विदिर्लाभे । **प्रतिबुद्ध आत्मा**—प्राज्ञ आत्मा ॥

**स्वशब्दोन्मानाभ्यां च** ॥ **स्वशब्दः**—अणुशब्दः । न त्वणुत्वाक्षेपकशब्द इति भावः । अणुत्वं गतिश्चोभयं श्रौतम् । अतो न कल्पनागौरवम् । अन्यतरश्रौतत्वे च न कल्पनागौरवमित्युक्तम् । उत्क्रान्तिगत्यागतीनामित्यादिभिः श्रुत्यर्थापत्तिर्दर्शिता । स्वशब्दोन्मानाभ्यां चेति श्रुतिर्दर्शिता । 'बुद्धेरात्मा महान् परः' इत्यत्र, बहुश्रुति-श्रुत्यर्थापत्तिविरोधात् पूजावाचित्वाच्च **महच्छब्दः** प्राधान्यपरः ॥

अनन्तरसूत्रशङ्कामाह—**अथ स्यादिति** । **वेदना** दुःखानुभवः । सुखानुभवस्याप्युपलक्षणमिदम् ॥ **अविरोधश्चन्दनवत्** ॥ **वेदनामनुभव**तीति ओदनपाकं पचतीतिवत् । यद्वा दुःखमनुभवतीत्यर्थः ॥ **अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि हि** ॥ **तत्रैकशतं नाडीना**मिति । अनेन एकदेशस्थस्य सकलशरीरव्यापिकार्यकरत्वप्रकारो दर्शितः । **न त्विति** । हरिचन्दनस्य हृन्नासिकानयनश्रोत्रादिमर्मप्रदेशेषु स्थित्या कार्यकरत्वम् ; न तु हृन्मात्रे इत्यभिप्रायेण **न तु चन्दनस्येत्युक्तम्** ॥

एकदेशवर्तिनः सकलदेहव्यापिकार्यकरत्वप्रकारं स्वमतेनाह—

**गुणाद्वाऽऽलोकवत् ॥ २-३ २६ ॥**

वाशब्दो मतान्तरव्यावृत्त्यर्थः। आत्मा स्वगुणेन ज्ञानेन सकलं देहं व्याप्यावस्थितः, आलोकवत्। यथा मणिद्युमणिप्रभृतीनामेकदेशवर्तिनामालोकोऽनेकदेशव्यापी दृश्यते, तद्वत् हृदयस्थस्यात्मनो ज्ञानं सकलं देहं व्याप्य वर्तते। ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यते इति प्रथमसूत्रे स्थापितम् ॥ २६ ॥

ननूक्तं ज्ञानमात्रमेवात्मेति। तत् कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यते। तत्राऽऽह—

**व्यतिरेको गन्धवत् तथा च दर्शयति ॥ २७ ॥**

यथा पृथिव्या गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः, तथा जानामीति ज्ञातुर्गुणत्वेन प्रतीयमानस्य ज्ञानस्यात्मनो व्यतिरेकः सिद्धः। दर्शयति च श्रुतिः, "जानात्येवायं पुरुषः" इति ॥२७॥

**पृथगुपदेशात् ॥ २८ ॥**

स्वशब्देनैव विज्ञानं विज्ञातुः पृथगुपदिश्यते, "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति।

यत्तूक्तम्—'यो विज्ञाने तिष्ठन्', 'विज्ञानं यज्ञं तनुते', 'ज्ञानस्वरूपमत्यन्तनिर्मलम्' इत्यादिषु ज्ञानमेवात्मेति व्यपदिश्यत इति—तत्राऽऽह—

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥**

तुशब्दश्चोद्यं व्यावर्तयति। तद्गुणसारत्वात्—विज्ञानगुणसारत्वादात्मनो विज्ञानमिति व्यपदेशः। विज्ञानमेवास्य सारभूतो गुणः। यथा प्राज्ञस्यानन्दः सारभूतो गुण इति प्राज्ञ आनन्दशब्देन व्यपदिश्यते, "यदेष आकाश आनन्दो न स्यात्" "आनन्दो ब्रह्मेति व्यजानात्" इति। प्राज्ञस्य ह्यानन्दः सारभूतो गुणः, "स एको ब्रह्मण आनन्दः", "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति, यथा वा, "सत्यं ज्ञानमनन्तं ब्रह्म" इति विपश्चितः प्राज्ञस्य ज्ञानशब्देन व्यपदेशः। "सह ब्रह्मणा विपश्चिता", "यस्सर्वज्ञः" इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ॥२९॥

---

अनन्तरसूत्रावतारायाऽऽह [**एकदेशे**ति ?] **स्वमतेने**ति। यद्यप्येकस्मिन्नवयविनि[1] देशविशेषस्थित्या सर्वत्र कार्यकरत्वम्, तथापि सौभर्यादीनां बहुषु देहावयविष्वणोरात्मनो देशविशेषस्थित्या कार्यकरत्वं न सिद्ध्यतीत्यभिप्रायेण निर्वाहान्तरोक्तिरिति भावः। **गुणाद्वाऽऽलोकवत्** ॥ अयुतसिद्धविशेषणस्य कथं देशान्तरे वृत्तिरित्यत्राह—**ज्ञातु**रिति ॥

अनन्तरसूत्रमवतारयति **नन्वि**ति। **व्यतिरेको गन्धवत्तथा च दर्शयति**। जानामीति धर्मधर्मिणोः प्रकृतिप्रत्ययवाच्ययोर्भेदानुभवो दर्शितः। **तथा चे**ति सूत्रखण्डं व्याचष्टे **दर्शयति चे**ति ॥

**पृथगुपदेशात्** ॥ पूर्वसूत्रे सुरभि कुसुममितिवत् विशिष्टवाचिना शब्देन विशेष्याद्विशेषणतया व्यतिरेक उक्तः; अत्र तु विशेषणविशेष्ययोः पृथक् शब्देनाभिधानमिति भिदा।

अनन्तरसूत्रशङ्कामाह **यत्त्वि**ति। **तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्** ॥ **सारशब्देन** प्रधानत्वं विवक्षितम्। तच्च यावदात्मभावित्वम्। आनन्दज्ञानयोर्गुणत्वप्रदर्शनार्थम्; 'स एको ब्रह्मण आनन्दः', 'यः सर्वज्ञः', 'विपश्चिता' इत्यादिश्रुतिरुदाहृता।

---

1 आत्मनः शरीरे एकस्मिन् सति तत्र, सर्वत्र—सर्वावयवेषु

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥**

विज्ञानस्य यावदात्मभाविधर्मत्वात् तेन तद्व्यपदेशो न दोषः। तथा च खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मशब्देन गौरिति व्यपदिश्यमाना दृश्यन्ते, स्वरूपनिरूपणधर्मत्वादित्यर्थः। चकारात् ज्ञानवत् आत्मनोऽपि स्वप्रकाशत्वेन, ज्ञानमिति व्यपदेशे न दोष इति समुच्चिनोति ॥ ३० ॥

यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावान्न ज्ञानस्य स्वरूपानुबन्धिधर्मत्वमिति—तत्राह—

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥**

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः। अस्य—ज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्यादिष्वभिव्यक्तेः संभवात् स्वरूपानुबन्धिधर्मत्वोपपत्तिः; पुंस्त्वादिवत्। यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोऽप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्की भवति। सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि; "तत् सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्" इति शरीरस्वरूपव्यपदेशात्। सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तम्। तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते। एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः। अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम्। स चायमात्माऽणुपरिमाणः। "न प्रेत्य संज्ञाऽस्ति' इत्यपि न मुक्तस्य ज्ञानाभाव उच्यते; अपि तु "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति संसारदशायां यत् भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं, तत् मुक्तस्य न विद्यते; "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः", "नोपजनं स्मरन्निदं शरीरम्", "मनसैतान् कामान् पश्यन् रमते" इत्यादिश्रुत्यैकार्थ्यात् ॥ ३१ ॥

संप्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह—

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥**

---

गुणवाचिशब्देन गुण्यभिधानं लाक्षणिकमित्यत्राह **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥** न हि गोत्वादयो यावदात्मभाविन इत्यत्राह **स्वरूपनिरूपणे**ति। अणुत्वादयोऽपि हि यावदात्मभाविन इति तद्व्यावृत्त्यर्थं च **स्वरूपनिरूपणधर्मत्वादि**त्युक्तम्। **स्वरूपं—धर्मिस्वरूपम्**। **आत्मशब्दः** स्वरूपपर इत्यर्थः। चकारार्थमाह-**चकारा**दिति।

अनन्तरसूत्रशङ्कामाह - **यच्चोक्त**मिति। **पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ जागर्यादिष्विति**। **आदि**शब्देन स्वप्नदशा विवक्षिता। **पुंस्त्व**शब्देन धातुर्लक्षितः। **आदि**शब्देन योषितोऽप्युपलक्षणमिति गम्यते। बाल्ये स नास्तीति शङ्कायामाह—**सप्तधातुमयत्वं** **ही**ति। ज्ञानस्योपलब्धिर्विषयसंबन्धसापेक्षेत्युक्तं भवति। विद्यमानस्यानभिव्यक्तस्य कदाचिदभिव्यक्तिमात्रे दृष्टान्तोऽयम्। विषयसम्बन्धार्हत्वं प्रकाशार्हत्वं च तदानीमप्यस्तीति न स्वयंप्रकाशत्वहानिः, एवं स्वयंप्रकाशस्वरूपज्ञानोपलब्धेर्विषयसम्बन्धसापेक्षत्वेऽहमर्थस्यापि तथात्वं स्यादित्याशङ्क्याह **सुषुप्त्यादिष्वपी**ति। **तस्ये**ति। विषयसंबन्ध उपलब्धिश्च जागर्यादावित्यर्थः। अहंप्रत्ययगोचरत्वे जडत्वादिप्रसङ्गमाशङ्क्याह **एते चात्मन** इति। नित्योपलब्ध्याद्यप्रसङ्गार्थमाह **स चायमिति**। **न प्रेत्येति**। देहात्माभिमानभ्रमो नास्तीत्यर्थः ॥

**सम्प्रती**ति। ज्ञानात्मवादे विभुत्वपक्षे दूषणम्, जडात्मवादे विभुत्वे च दूषणमुभयं सूत्रविवक्षितम्; व्याख्यास्यते च। तत्र प्रथमे पक्षे दूषणं प्रतिजानीते **संप्रती**ति। **नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥** नित्योपलब्धिः प्रसज्यताम्; कथं नित्यानुपलब्धिप्रसङ्गः?

अन्यथा —सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सहैव प्रसज्येयाताम्। अन्यतरनियमो वा—उपलब्धिरेव वा नित्यं स्यात्, अनुपलब्धिरेव वा। एतदुक्तं भवति—लोके तावत् वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुः स्यात्; उपलब्धेरेव वा, अनुपलब्धेरेव वा। उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत। यद्युपलब्धेरेव, सर्वस्य सर्वदा सर्वत्रानुपलंभो न स्यात्। अथानुपलब्धेरेव, सर्वदा सर्वत्रोपलब्धिर्न स्यात्-इति। अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनस्तत्रैवोपलब्धिः, नान्यत्रेति व्यवस्थासिद्धिः।

करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वाददृष्टादेरप्यनियमादुक्तदोषः समानः॥ इति ज्ञाधिकरणम्॥

---

उभयप्रसङ्गो वा कथमित्यत्राह **एतदुक्त**मिति। विकल्पशिरस्त्रयाभिप्रायेण दूषणत्रयमुच्यत इत्यर्थः। **लोके तावद**िति। आत्मा कुत्रचिदुपलभ्यते, न गङ्गातीरादिषूपलभ्यते। एवं विद्यमानयोरुपलब्ध्यनुपलब्ध्योरुभयोरपि हेतुः स्यादित्येकं शिरः। **उपलब्धेरेव वा अनुपलब्धेरेव वे**ति। अत्रापि **हेतुःस्या**दित्यनुवर्तते। एवं शिरस्त्रयं विवक्षितम्। किमुपलब्धिरेव स्वरूपम्, उतानुपलब्धिरेव, उतोभयमित्यर्थः; **हेतु**शब्दप्रयोगो हेत्वन्तरनैरपेक्ष्यार्थः। उक्तदूषणस्य स्वपक्षास्पर्शित्वमाह-**अस्माक**मिति।

जडात्मपक्षे विभुत्वे दूषणमाह-**करणायत्ते**ति। **अदृष्टादेरप्यनियमा**दिति। तत्तत्कर्मानुष्ठानहेतुभूतशरीराणां सर्वात्मसाधारणत्वाददृष्टानियम इत्यर्थः। **उक्तदोषः समान** इति। करणादिकं किमुपलब्धेर्हेतुः, उतानुपलब्धेः, उतोभयोरिति विकल्प्य पूर्ववद्दूषणं व्यक्तमिति भावः॥

**परेषां** सूत्राक्षरास्वारस्यम्; द्रष्टृशब्दस्येव ज्ञशब्दस्य ज्ञप्तिवाचित्वाभावात्। 'धीरो मनीषी ज्ञः प्राज्ञः' इति **अभिधान**विदः। **अत एव**—अनुत्पन्नत्वेन अविकृतब्रह्मण एवोपाधिना जीवभावेनावस्थानात् तस्य च चैतन्यस्वरूपत्वादिति व्याख्यानमपि क्लिष्टम्; एतच्छब्देन साध्यतया प्रकृतानुत्पत्तिपरामर्शे तस्याः साक्षादेव ज्ञानस्वरूपत्वसाधकत्वाभावात् तदुपपादकब्रह्मानन्यत्वम्, तेन ब्रह्मप्रतिपादकवाक्यजातम्, तेन तस्य ज्ञानस्वरूपत्वं च लक्षयित्वा तेन परमसाध्यस्योपपादनीयत्वात्। साधकतया प्रकृतश्रुतिपरामर्शित्वं तु युक्तम्। प्रकृतत्वाविशेषेऽपि पूर्वसूत्रस्थपञ्चमीतुल्यार्थेन प्रत्ययेन साधकविषयस्वप्रकृत्यर्थसाम्यस्य च ज्ञाप्यमानतया योग्यतावशाच्छ्रुतिविशेषे प्रतिपन्ने तस्याव्यवधानेन ज्ञानस्वरूपताप्रतिपादने विलम्बत्रयाभावाच्च। ज्ञानमात्रस्वरूपत्वे साध्ये ज्ञातृत्ववादिनीनां धर्मधर्मिभेदनिर्देशपराणां धर्मनित्यत्ववादिनीनां 'जानात्येवायम्', 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इत्येवमादीनां श्रुतीनां बाधो दुस्तरः। तत्र नानुच्छित्तिरेव धर्मतया विवक्षिता; अविनाशीत्यनेन पुनरुक्तिप्रसङ्गात्। अत उच्छेदरहितज्ञानधर्मकत्वं विवक्षितम्।

**अपरैस्तु—अत एवे**ति पदं **ताभ्यः श्रुतिभ्य** इति व्याख्यातम्। तदप्यविरुद्धम्; श्रुतेरिति तु व्याख्यानं ततोऽप्युचितम्; उत्तरसूत्रस्थायाः षष्ठ्या अन्वयसामर्थ्येन श्रुतेरिति पदानुषङ्गस्य सूत्रकृता अभिप्रेतत्वावगमात्। न ह्युत्क्रान्तिगत्यागतीनां ताभ्य इत्यन्वयो घटते। श्रुतिभ्य इति अध्याहारे तु घटते। अध्याहारसाकाङ्क्षपदानुषङ्गादपि निरपेक्षपदानुषङ्गो हि युज्यते। अश्रुतेरिति पदस्यानुपपत्तिश्च पूर्वमेव दर्शिता।

**अन्ये तु**—यत एवं नात्यन्तिकनाशः प्रलये जीवस्य, किन्तु विभागशक्त्यवशेष एव—अत एव ज्ञत्वमपि सिद्धम्, तस्यामवस्थायां 'यत् द्वैतं न पश्यति, पश्यन् वै तन्न पश्यति' इति ज्ञत्वाविनाशित्ववचनमस्ति हीति व्याचक्षते। तदपि कक्ष्यान्तरसाकाङ्क्षहेतूपस्थापकत्वादपि तद्विलम्बानपेक्षहेतूपस्थापकत्वस्य न्याय्यतया प्रत्युक्तम्। प्रलये विभागशक्त्यवशेषावस्थानं हि न साक्षादेव ज्ञानस्वरूपत्वसाधकम्; किन्तु प्रलयविषयश्रुत्युपस्थापनद्वारेण। किञ्च ज्ञाननित्यत्वं चैवमुपपादयन्ति—सर्वाः संविदोऽङ्गारादर्चिष इव, नवनीतपिण्डात् घृतमिव, पुरुषाद्विभज्यन्ते; तेन संयुज्यन्ते च। अतो ज्ञाननित्यत्वे न कारकवैयर्थ्यमिति। तत्र किञ्चिद्विमर्शनीयम्—किं नवनीतपिण्डस्येवात्मनः स्वरूपैकदेश एव विभज्यमानो विषयेषु प्रसर्पति संकुचति च, उत तदपृथक्सिद्धं ज्ञानतया तत्सजातीयद्रव्यान्तरमिति। यदि प्रथमपक्षः परिगृह्यते, तत्र ब्रूमः—अणुत्वं तावत् भवदभिमतम्। तत्स्वरूपाद्विभक्तश्चन्द्रादिषु प्रसृतः किमात्मैकदेशः, उत कृत्स्नात्मा?। कृत्स्नात्मा चेत्, चन्द्रग्रहणवेलायां शरीरं निरात्मकं स्यात्। यद्येकदेशः प्रसृतः, स चेदखण्डितः प्रसृतो न पुनरेति; आत्माऽपि शरीरात् बहिराकृष्टः स्यादिति शरीरं निरात्मकं स्यात्। यदि खण्डितोऽपसर्पेत्, मृत्पिण्डविशीर्णधूलीपटलवन्न पुनरेयात्; तदानीमात्मैकदेशहानिः स्यात्। एवं त्रिचतुरपर्यायैरात्मोच्छित्तिः स्यात्। अनुच्छेदे वा ज्वालाया इव प्रतिक्षणोत्पत्तिरात्मनः स्यात्। यद्यखण्डित एव प्रसृत्य पुनः संकुचति, पटग्रहणदशायां घटग्रहणाय पूर्वप्रसृत एवांशः प्रसर्पति, उत प्रावप्रसृतांशे शरीरस्थे पूर्वं शरीरस्थांशः पश्चात्प्रसर्पति?। द्वितीये पक्षे धर्मधर्मिभावाव्यवस्थानाच्छरीरस्थस्य धर्मिणोऽहंप्रत्ययवेद्यस्यात्मत्वात् धर्मित्वात्, विषयसम्बन्धिज्ञानानामिच्छादीनामिव स्वस्मै भासमानत्वाभावाच्च प्रत्यक्त्वाप्रत्यक्त्वधर्मधर्मित्वादीनामंशभेदेनानियतत्वादात्मांशस्य कदाचिदनात्मत्वं प्रत्यगंशस्य कदाचित्पराक्त्वं धर्मिण एव कदाचित्स्वधर्मत्वं च स्यात्। ततश्च कटकमकुटादीनामिवाहमर्थस्य कर्तुर्भोक्तुरादिमत्त्वं स्यात्। अहमर्थस्यैव कर्तृत्वभोक्तृत्वयोगात्; अहंभावस्य चात्मन्यनियतप्रदेशवृत्तित्वाच्च। यदि प्रथमः पक्षो रोचते, तर्हि प्रसर्पणाप्रसर्पणरूपविरुद्धस्वभावभाक्त्वाद्धर्मधर्मिणोर्भिन्नद्रव्यत्वम्, अन्यधर्मज्ञानस्यान्यं प्रति धर्मत्वाभावादपृथक्सिद्धधर्मत्वम्, तस्य च सङ्कोचविकासभाक्त्वं चाभ्युपगन्तव्यम्। तथा सति धर्मान्यथाभावरूपावस्थापत्तिरुत्पत्त्यादिः, स्वरूपान्यथाभावाभावान्नित्यत्वमित्यचिद्वैषम्यमास्थेयम्।

उत्क्रान्ति—इत्यादिसूत्रगणमधिकरणान्तरं **परे** व्याचक्षते—तदयुक्तम्; ज्ञत्वचिन्तोपयोगित्वात् परिमाणचिन्तनस्य। उपयोगश्च फलिफलिभावे दर्शितः। तत्र **परे** अणुत्वं पूर्वपक्षीकृत्य विभुत्वमेव सिद्धान्तयन्ति। तत्र न तावदियं परब्रह्मविषया चिन्ता; तद्विभुत्वस्य बह्वधिकरणसिद्धत्वात्। अल्पपरिणामश्रुतीनां च, 'निचाय्यत्वादेवम्' इत्यनेन कृतनिर्वाहत्वाच्च शङ्कानुत्थानात्। जीवविषये अणुत्वस्य पूर्वपक्षीकरणमयुक्तम्; अणुत्वश्रुतीनां निरवकाशत्वप्रसङ्गात्। औपाधिकाकारविषयत्वं तासामिति चेत्— किमणुत्वं यावज्जीवभावमवतिष्ठते, उत न?। प्रथमे यावत्क्षीरभावभाविनो माधुर्यस्येव यावद्द्रव्यभाविनोऽणुत्वस्यौपाधिकत्वमयुक्तम्। द्वितीये जीवस्याऽऽमोक्षस्थायित्वं न सिध्येत्। ततश्च वेदान्तानामनारम्भः स्यात्। जीवभावनिवृत्तिर्हि **परेषां** मोक्षः। अवच्छेदकोपाध्यपगमे ब्रह्मतापन्नस्य पुनरुपाध्यन्तरेण जीवभावापत्तौ

घटागमापायितया घटच्छिद्रस्येवाऽऽदिमत्त्वं जीवस्य प्रसजेत् ॥ ननूपासनार्थमल्पपरिमाणत्वं पूर्वं निरूपितम् ; अत्र ब्रह्मणो जीवभावेनाणुत्वस्य स्वाभाविकत्वनिराकरणमधिकरणकृत्यमिति चेन्न; उपाध्यसंभवात्। न तावदविद्या, तस्या अणुत्वाभावेन तदवच्छिन्नस्याप्यणुत्वानुपपत्तेः। यद्यध्यवसायादिवृत्तिभेदेन बुद्ध्यादिशब्दवाच्यं मनः बुद्ध्याख्यं महत्तत्त्वं वोपाधिः, तर्हि "एतस्माज्जायते प्राणो मनः", "महानव्यक्ते लीयते" इत्यादिश्रुत्यवगतात् मनआदिसर्गात्पूर्वं जीवभावाभावात् जीवस्याऽऽदिमत्त्वं स्यात् ॥ ननु यथा त्वन्मते जीवात्मधर्मभूतस्य ज्ञानस्य विभोरपि कर्मणाऽत्यन्तसङ्कोचः प्रलयदशायामप्युपपद्यते, तथा कृत्स्नप्रलयदशायामन्तःकरणाद्यभावेऽपि कर्मकृतमणुत्वं जीवस्य संभवतीति चेत्— न; अवच्छेदकाभावचोद्यस्य सङ्कोचसद्भावप्रतिबन्द्या परिहारायोगात् । स्वतो विकासशक्तियुक्तस्य धर्मभूतस्य ज्ञानस्य विकासप्रतिबन्धकं कर्माभ्युपगम्यते ; न तु विकसितस्यैकदेशावच्छेदकमिष्यते । त्वन्मते तु सर्वगतस्यैव सतो ब्रह्मणः क्वचित्प्रदेशेऽणुत्वमवच्छेदकपरिमितद्रव्यसापेक्षं विकासप्रतिबन्धकेन कर्मणा न संपत्स्यते । अत आमोक्षस्थायिनः कस्यचिदुपाधेरसंभवाज्जीवाणुत्वस्यौपाधिकत्वमयुक्तम् । किञ्च 'बालाग्रशतभागस्य', 'आराग्रमात्र' इत्यादिष्वणुत्वश्रुतिषूपाधिर्न श्रूयते, यथा परमात्मनो विभुत्वश्रुतिषु । तस्य चाणुत्वमुपाधिपूर्वकमुच्यते, 'एष आत्माऽन्तर्हृदयेऽणीयान् व्रीहेः' इत्यादिषु । अत उपाध्यनुक्तेः परमात्मविभुत्ववज्जीवाणुत्वमपि नोपाधिकृतम् । किञ्च 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यणुपरिमाणस्य मुमुक्षुवेदितव्यत्वश्रवणाच्चाणुत्वं स्वाभाविकम् । न ह्यौपाधिकाकारो जीवस्य स्थूलत्वादिवच्छोकमोहादिवच्च मुमुक्षोरनुसन्धेयः । 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' इत्यत्रात्मशब्दस्य निष्कृष्टात्मविषयत्वात् तस्य निष्क्रमणार्हत्वावगमाच्चाणुत्वं स्वाभाविकम् । न ह्यात्मशब्द उपाधिसंसृष्टपरः ; लक्षणाप्रसङ्गात् । उपाधीनां जीवस्य च पृथक्पृथगुत्क्रमणश्रवणाच्चाणुत्वं निरुपाधिकम् । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति हि श्रूयते । मनश्च प्राणशब्दवाच्येष्वन्तर्भूतम् ; 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति श्रुतेः ॥ मनोव्यतिरिक्ता बुद्धिरणुत्वोपाधिरिति चेत्—बुद्धिर्वाऽन्यद्वा यत्किञ्चिदुपाधित्वेनोच्यताम् । तत् किं मनोवृत्तिरूपम्, उत तत्त्वान्तरम्? आद्ये, मनसः पृथगुत्क्रान्तिश्रवणात् जीवस्य तद्वृत्तितोऽपि पृथगुत्क्रान्तिः सिद्धा । तत्त्वान्तरत्वे च समष्टिरूपस्य तस्याणुत्वाभावान्नोपाधित्वम् । व्यष्टिरूपत्वे च, देहसङ्घाततदाश्रयतदाश्रितेष्वन्यतमेन भवितव्यम् । सङ्घातरूपत्वे तस्याणुत्वाभावादनुपाधित्वम् । देहाश्रयतया जीवोपकरणत्वे मुख्यप्राणान्तर्भावात् ततः पृथगुत्क्रान्तिसिद्धिः । देहस्थतया जीवोपकरणत्वे प्राणशब्दवाच्येष्वन्तर्भावात् ततः पृथगुत्क्रमणं सिद्धम् । किञ्च न केवलमुपाध्यनुक्तेरेवाणुत्वस्य स्वाभाविकत्वावगमः, किन्तु निरुपाधिकस्वरूपस्याणुत्ववैशिष्ट्यावगमाच्च तदवगमः ; 'एषोऽणुरात्मा' इत्यात्मा ह्यणुत्वेन विशिष्यते, न तु बद्धः । आत्मशब्दो ह्यात्ममात्रवाची, न तूपाधिसंसृष्टवाची ॥

ननु 'स चाऽऽनन्त्याय कल्पते' इति श्रुतिरणुत्वस्यौपाधिकत्वमवगमयतीति चेन्न ; स इत्यणुत्वविशिष्टं जीवं परामृश्य विधीयमानस्यानन्त्यस्य तदविरोधेन वर्णनीयत्वात् । वस्तुमात्रपरत्वे हि तच्छब्दस्य प्रकृतपरामर्शित्वं न स्यात् । न हि घटे प्रस्तुते मृन्मात्रं परामर्शमर्हति । विशेषणप्रहाणेऽपि स्वारस्यं न स्यात् ॥ यो बालः स युवेत्युक्ते यथा कालभेदादविरोधः, एवं यः पूर्वमणुः स पश्चादानन्त्याय

कल्पत इत्यर्थ इति चेन्न—उपक्रमावगतस्याणुत्वस्य चरमावगतेनान्यथासिद्धेनाऽऽनन्त्येन सङ्कोचायोगात्। बाल्ययौवनयोः क्रमभावस्य प्रत्यक्षसिद्धत्वादगत्या बालशब्दः सङ्कोचितः, इह तु गत्यन्तरसद्भावात् तदनुपपन्नम्। गत्यन्तरं चात्रैव वक्ष्यामः। स्वरूपेणानन्त्यस्य दुर्निरूपत्वाच्चाणुत्वश्रुतिसङ्कोचो निष्फलः, तथा हि—पूर्वमणुस्वरूपस्य जीवस्यानन्त्यं नाम—अनन्तेन ब्रह्मणैक्यापत्तिर्वा, स्वरूपशैथिल्येन मृत्पिण्डस्येव प्रसर्पणं वा, पटवत् वेष्टितस्य स्वरूपस्य प्रसारित्वं वा संभाव्यते? । प्रथमं तावदशाब्दत्वादनुपपन्नम्। न हि, 'देवत्वाय कल्पते' इत्युक्ते देवैरन्यैरैक्यमुक्तं स्यात्; अपि तु स्वस्य देवत्वजातियोग एव। 'अरोगत्वाय कल्पत' इत्युक्ते स्वेतरनिरामयपुरुषान्तरैक्यं न सिद्धयेत्, किन्तु स्वस्यारोग्यगुणयोग एव। एवमानन्त्यशब्दोऽपि प्रकृत्यर्थभूतविशेषणान्वयं धर्मिणो दर्शयति; न तु वस्त्वन्तरम्, तेन ऐक्यापत्तिम्, भेदनिवृत्तिं वा; प्रकृत्यंशस्य प्रत्ययांशस्य वा तद्वाचित्वाभावात्। "संयुक्तमेतत् क्षरमक्षरं च", "नित्यो नित्यानाम्" इति नित्यत्वाक्षरत्वश्रुतिविरोधात् स्वरूपशैथिल्येन प्रसर्पणमनुपपन्नम्। आत्मन्युपचयापचयविरहस्य प्रामाणिकत्वात् स्वरूपवृद्धिरप्यनुपपन्ना। वेष्टितस्य प्रसरणमपि नाशङ्कनीयम्—एकस्मिन् शरीरे कृत्स्नस्य ब्रह्मणो वेष्टितत्वेन शरीरान्तरस्य जीवशून्यत्वप्रसङ्गात्। ब्रह्मण एव ह्युपाधिना जीवभावो भवद्भिरभ्युपगम्यते। जीववहुत्वमिच्छतामप्यश्रुतवेष्टनकल्पने गौरवं प्रसज्येत॥

नन्वनन्यथासिद्धे कल्पके गौरवमपि न दोषः॥ सत्यम्। इह तु तदन्यथासिद्धेः कल्पनमयुक्तम्। अणुत्वोपाध्यवच्छिन्नस्यैव देहान्तरावस्थितजीवस्याङ्गुष्ठपरिमाणत्वं श्रूयते, "प्राणाधिपः सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः" इति। तथा, "अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्यात्" इति वृक्षशब्देन शरीरं प्रस्तुत्य, "स एष जीवेनात्मनानुप्रभूतः" इति जीवेनानुप्रविष्टत्वं चोक्त्वा, "अस्य यदेकां शाखां जीवो जहाति, अथ सा शुष्यति। द्वितीयां जहाति, अथ सा शुष्यति.... सर्वं जहाति सर्वः शुष्यति" इति पाणिपादादिषु जीवावस्थानं तत्प्रहाणेन तस्य शोषश्चोक्तः। न च वेष्टितस्वरूपविकासेनैवाङ्गुष्ठपरिमाणत्वं कृत्स्नशरीरावस्थानं चेति वाच्यम्—अणुत्वोपाधेरनपगमादेव। न हि देहान्तरवस्थितिदशायामणुत्वोपाध्यपगमो भवतामिष्टः। अतोऽङ्गुष्ठपरिमाणत्वं हृदयद्वारकमभ्युपेत्यम्। आपादमस्तकावस्थानंच धर्मभूतज्ञानेनेत्यभ्युपगन्तव्यम्। एवमणुत्वव्यतिरिक्तपरिमाणस्य सद्वारकत्वं धर्मभूतज्ञानेनान्यत्रावस्थानं च श्रुत्यन्तरबलेन क्लृप्तमिति क्लृप्तप्रकारेणाऽऽनन्त्यश्रुतिनिर्वाहे संभवति कल्पकान्यथासिद्धेर्वेष्टनकल्पनमयुक्तम्। सङ्कोचकान्यथासिद्धेरेव प्रथमावगताणुत्वसङ्कोचश्चानुपपन्नः। अतस्तदविरोधाय क्लृप्तप्रकारेणाऽऽनन्त्यं प्रभाभूतज्ञानद्वारा वर्णनीयमित्यानन्त्यश्रुत्याऽपि नाणुत्वस्यौपाधिकत्वसिद्धिः। यतोऽणुत्वं न पूर्वपक्षीकार्यम्। अत एव **व्यतिरेको गन्धवत्** इति सूत्रमपि न पूर्वपक्षविषयं गुणस्य ज्ञानस्य स्वाश्रयातिरिक्तप्रदेशवृत्तित्वसमर्थनपरम्; तस्य युक्तिशून्यत्वात्। तत्र दृष्टान्तस्य पुष्पगन्धस्य साध्यविकलत्वात्। न हि परागादि आश्रयं विना गन्धः प्रसरति।

**तद्गुणे**ति। अंतःकरणगुणा इच्छाद्वेषादयः; तत्सारोऽयम्। अतोऽणुत्वव्यपदेश उपाधिकृत इत्युक्तम्। तदयुक्तम्; अन्तःकरणस्याप्रकृतस्य तच्छब्देन परामर्शायोग्यत्वात्। **प्राज्ञव**दिति दृष्टान्तः साध-

नविकल्पः ; तस्यान्तःकरणावच्छेदकत्वाभावात् ॥ दहराद्युपासनेष्वणुत्वस्यौपाधिकत्वमात्रं साम्यमिति चेत्— न ; प्रयुक्तहेत्वतिरिक्तस्य हेतोर्दृष्टान्ते कल्पनस्य क्लिष्टत्वात् । अक्लिष्टत्वे संभवति तदयोगाच्च । दार्ष्टान्तिकस्यैव दृष्टान्तत्वं प्रसजेत् ; परमात्मनो जीवत्वेनाणुत्वे जीवस्यैव दृष्टान्तत्वात् ॥ जीवभावेनाणुत्वस्योपासनार्थतयाऽणुत्वं दृष्टान्त इति चेन्न ; अहिकुण्डलवदितिवत् अवस्थाविशेषवाचिशब्दाभावात् । अतो दृष्टान्तदार्ष्टान्तिकभावस्वारस्यसिद्धधर्मिभेदोऽवतिष्ठत एव । स चासत्पक्ष एव सिद्ध्यति ।

संसृष्टयोर्वियोगनियमात् जीवान्तःकरणयोर्वियोगे सति जीवस्यासत्त्वमसंसारित्वं वा स्यादिति शङ्कायाम्—यावत् आत्मनः संसारः, तावद्भावित्वादन्तःकरणस्य नोक्तदोष इत्यनन्तरसूत्रं व्याख्यातम् । तदप्ययुक्तम् ; आत्मशब्दस्य संसारविशिष्टवाचित्वाभावात् । न हि देवदत्तशब्द एव दण्डिनमुपस्थापयति । सुषुप्तिप्रलययोरप्रबोधेनान्तःकरणाभावान्न यावदात्मभावित्वमिति शङ्कापरिहारार्थत्वमनन्तरसूत्रस्याप्ययुक्तम् । 'महानव्यक्ते लीयते' इति बुद्धिलक्षणस्य महच्छब्दवाच्यान्तःकरणस्य लयश्रवणात् । शक्तिरूपेण तदानीमप्यवतिष्ठत इति चेत्—शक्तिशब्देन किमविद्यामात्रं विवक्षितम्, उतान्तःकरणोत्पादनार्हमचिद्द्रव्यम्, उतावस्थाविशेषापन्नमचित्तत्त्वम्? प्रथमे, अविद्याया अणुत्वाभावादणुपरिमितत्वं जीवस्य आमोक्षस्थायि न भवेत् । द्वितीये, घटस्येवान्तःकरणस्य न यावदात्मभावित्वसंभवः । न हि मृन्मात्रं घटोत्पादनार्हमिति घटोऽवस्थितो भवति । तृतीये, लयश्रुतिविरोधः । न हि मृन्मात्रदशायां घटाद्यवस्थासम्भवः ।

एतावद्दूषण**मपरेषाम**पि तुल्यम् ॥ प्रतिजीवमणवोऽनाद्यविद्या बह्व्यः सन्तीति तासां स्थूलतापत्तिः सृष्टिः, सूक्ष्मतापत्तिर्लय इति चेत्—न ; तस्या अणुत्वाप्रहाणे सर्षपादेरिव स्वपरिमाणावस्थायां न प्रलयः । द्वितीये, अणुत्वप्रहाणे जीवस्यामोक्षस्थायित्वाभावः ॥ ननु स्वपरिमाणाप्रहाणेऽपि इच्छाद्वेषादिकार्यजननानर्हत्वादेव प्रलीनत्वमिति चेत्—प्राणाकाशादिप्रलयस्यापि तथात्वप्रसङ्गात् । 'एतस्माज्जायते प्राणो मनः' इति प्राणादीनामविशेषेण ह्युत्पत्त्यादिकं श्रूयते ।

**नित्योपलब्धीति** । अन्तःकरणानभ्युपगमे आत्मेन्द्रियविषयसंनिधानान्नित्यमुपलब्धिः, न चेत्, अनुपलब्धिर्वा प्रसजेत् । आत्मनीन्द्रियेऽपि वा शक्तिप्रतिबन्धः कल्पनीयः । आत्मनो निर्विकारत्वात् सोऽनुपपन्नः । अकस्मादिन्द्रियेषु च सोऽनुपपन्नः—इति व्याख्यातम् । तदप्ययुक्तम् ; अन्तःकरणाभ्युपगमेऽपि नित्यानुपलम्भादिप्रसङ्गस्य, शक्तिप्रतिबन्धकल्पनानुपपत्तेश्च तुल्यत्वात् ॥ अन्तःकरणस्यावधानानवधानाभ्यां नित्योपलम्भाद्यप्रसङ्ग इति चेन्न ; लाघवन्यायेनात्मन एवावधानानवधानाभ्यां तदप्रसङ्ग इति कल्पनस्य युक्तत्वात् । आत्मनो निर्विकारत्वेऽपि इच्छाद्वेषादिवत् प्रतिबद्धशक्तिमत्त्वमपि युज्यते ॥ इच्छाद्वेषादिकमपरमार्थ इति चेत्—शक्तिप्रतिबन्धोऽपि तादृश एवात्मनि कल्प्यताम् । इन्द्रियेषु तत्कल्पनमपि नाकस्माद्भवति ; अदृष्टदेशकालादिसापेक्षत्वात् ॥ यदि 'अन्यत्रमना अभूवम्' इति श्रुतिवशादन्तःकरणाभ्युपगमः, तर्ह्यन्यथासिद्ध्युपहतदुर्बलतर्कं विहाय श्रुतिबलमेव सूत्रयितव्यम् । अतः सूत्रवैयर्थ्यमेव भवति ।

**कर्ता शास्त्रार्थवत्त्वात् ॥ २-३-३३ ॥**

अयमात्मा ज्ञाता, स चाणुपरिमाण इत्युक्तम् । इदानीं किं स एव कर्ता, उत स्वयमकर्तैव सन् अचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते । किमत्र युक्तम् । अकर्तैवात्मेति । कुतः । आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते । तथा हि कठवल्लीषु जीवस्य, "न जायते म्रियते" इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते, "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति । हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः । तथा च भगवता, 'स्वयमेव जीवस्याकर्तृत्वं स्वरूपम्, कर्तृत्वाभिमानस्तु व्यामोहः' इत्युच्यते—"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥", "नान्यं गुणेभ्यः

---

अन्येषां तु पक्षो न विरुद्धः । **व्यतिरेकोगन्धवदि**ति सूत्रस्य ज्ञातृत्वे प्रमाणोपस्थापकत्वमेव युक्तम् ; न तु गुणस्य स्वाश्रयानतिवृत्तित्वशङ्कापरिहारार्थत्वम् , गन्धदृष्टान्तेन तस्याः दुष्परिहरत्वात् , गन्धाश्रयद्रव्यसूक्ष्मावयवविशरणाद्धि दूरे गन्धोपलब्धिः । न च प्रविरलमेव द्रव्यं गुण इत्युच्यत इति च युक्तम् ; तूलस्य गुणत्वाप्रसिद्धेः । न च विशीर्णविरलद्रव्यं गुणः ; अयश्चूर्णस्यायोगुणत्वाप्रसिद्धेः ॥ स्वाभ्युपगतं गुणगुणिनोरभेदमाश्रित्य गुणत्वव्यवहार इति चेन्न ; बहुलद्रव्यस्याप्यभिन्नत्वाविशेषेण गुणव्यवहारप्रसङ्गात् । विरलत्वं नाम किं सान्तरत्वं? तदा ज्ञानस्य गुणत्वं न स्यात् ; प्रसृतज्ञानस्य जालस्येव सच्छिद्रत्वादर्शनात् । यदि सूक्ष्मत्वं विरलत्वम्—तर्ह्यात्मस्वरूपस्यापि गुणत्वं स्यात् । 'अङ्गारे सति अर्चिषां नाशे पुनरपि प्रभोत्थानं युक्तम् ; परिणामित्वात् । पुनर्ज्ञानप्रभोत्थानमयुक्तम्' इति शङ्कानिरासार्थं मणिप्रभादृष्टान्तविषयं **यावदात्मभावित्वादि**ति सूत्रमित्ययुक्तम् , "गुणाद्वाऽऽलोकवत्" इत्यत्रैव प्रभाप्रभावद्दृष्टान्तस्याभिहितत्वात् रत्नप्रभान्यायेन धर्मधर्मिभावे संभवति प्रभानुत्थानशङ्कानुपपत्तेः ॥ तत्र प्रदीपप्रभादृष्टान्त एवाभिप्रेतः; न तु मणिप्रभादृष्टान्त इति चेत्—आलोकशब्दस्य साधारणस्य सङ्कोचकाभावात् ; विज्ञानव्यपदेशामुख्यत्वदोषपरिहारस्यापेक्षितत्वेन तदकरणानुपपत्तेश्च ॥ ३२ ॥ इति ज्ञाधिकरणम् ॥

**कर्ताशास्त्रार्थवत्त्वात्** ॥ अवान्तरसङ्गतिमाह—**अयमात्मेति** । ज्ञातृत्वाद्धि कर्तृत्वम् । अतः कर्तृत्वोपयुक्तज्ञातृत्वनिरूपणानन्तरं कर्तृत्वनिरूपणादिह सङ्गतिरिति भावः । किमात्मैव कर्ता, उत प्रधानमिति ; किमात्मनः कर्तृत्व एव ज्योतिष्टोमादिशास्त्राणाम् अर्थवत्त्वम् , उत प्रधानस्य कर्तृत्वे? इति ; कर्तृत्वनिषेधः किमात्मनः कर्तृत्वे संभवति, नेति च । यदा प्रधानस्य कर्तृत्वे शास्त्राणामर्थवत्त्वम् , यदा चात्मनः कर्तृत्व कर्तृत्वनिषेधश्च न संभवति—तदा प्रधाने कर्तृ स्यात् । यदा आत्मन एव कर्तृत्वे शास्त्राणामर्थवत्त्वम् ; कर्तृत्वनिषेधश्च विषयवान् स्यात् , तदानीमात्मैव कर्ता स्यात् । **हन्ता चेन्मन्यते हन्तुमि**त्यत्र **हन्तुमि**ति पदम् उदन्तद्वितीयान्तम् ; सेतुम् , जन्तुमितिवत् । हन्तारमित्यर्थः; आत्मानमित्यध्याहर्तव्यमित्याह **हन्तारमिति** । अस्मिन् वाक्ये हननक्रियायामेव कर्तृत्वनिषेधः प्रतीयते ; नान्यक्रियायामित्यत्राह **तथा चेति** । उपबृंहणवाक्ये सर्वक्रियाकर्तृत्वनिषेधात्, 'हन्ता चेत्' इत्यत्रोक्तं हननमुपलक्षणार्थमित्यर्थः ।

कर्तारं यदा द्रष्टाऽनुपश्यति", "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति च । अतः पुरुषस्य भोक्तृत्वमेव, प्रकृतेरेव तु कर्तृत्वम्—इति

एवं प्राप्ते प्रचक्ष्महे—कर्ता शास्त्रार्थवत्त्वात्—इति । आत्मैव कर्ता, न गुणाः । कस्मात् । शास्त्रार्थवत्त्वात् । शास्त्राणि हि, "यजेत स्वर्गकामः", "मुमुक्षुर्ब्रह्मोपासीत" इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते । न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते । शासनाच्च शास्त्रम्, शासनं च प्रवर्तनम् । शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण । अचेतनं च प्रधानं न बोधयितुं शक्यम् । अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत् । तदुक्तम्, "शास्त्रफलं प्रयोक्तरि" इति । यदुक्तम्—"हन्ता चेन्मन्यते"इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति—तत् आत्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते । यच्च प्रकृतेःक्रियमाणानीत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति; तत् सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता, न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृत्वमित्युच्यते । तथा च तत्रैवोच्यते, "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति । तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते, "तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः" इति । "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्" इत्यधिष्ठानादिदैवपर्यन्तसापेक्षे सति आत्मनः कर्तृत्वे य आत्मानमेव केवलं कर्तारं मन्यते, न स पश्यतीत्यर्थः ॥ ३३ ॥

---

**एवं प्राप्त** इत्यादि । **शास्त्रार्थवत्त्वात्**—शास्त्राणामर्थवत्त्वायेत्यर्थः । प्रयोजनतया हेतुत्वम् । शास्त्रशब्दस्यावयवार्थेन आत्मन एव कर्तृत्वमुपपादयति **शासनाच्चे**ति । भोक्तुरेव कर्तृत्वाच्चेतनस्यैव भोक्तृत्वात् शास्त्रस्य बोधजननद्वारा प्रवर्तकत्वादचेतने बोधजननायोगाच्च चेतनः कर्तेत्यर्थः । **तदुक्त**मिति । कर्मविचारे इत्यर्थः । परोक्तश्रुतिवाक्यार्थमाह—**यदुक्त**मिति । आत्मनो हन्तव्यत्वाभावादस्य हन्तृत्वं नास्तीत्यर्थः । स्मृतिवचनस्यार्थमाह **यच्चे**ति । **प्रकृते**रित्यादिना चोद्यानुवादः । तस्याभिप्रेतार्थमाह **तत्सांसारिके**त्यादि । **गुणानामेव कर्तृते**ति तस्मिन् वचने प्रतीयमानार्थानुवादः । **प्राप्ताप्राप्तविवेकेन** । अन्वयव्यतिरेकनिरूपणेनेत्यर्थः । **गुणानामेव कर्तृते**ति वचनस्येदं तात्पर्यं—सांसारिकप्रवृत्तिष्वस्य कर्तृत्वमन्वयव्यतिरेकवशात् सत्त्वरजस्तमस्संसर्गकृतमिति । संसारदशायां[1] प्रवृत्तिः **सांसारिकप्रवृत्तिः**, गुणसङ्गकृतत्वं स्पष्टयति—**तथाचेति** । **तथे**ति । **केवलम्** । अधिष्ठानादिरहितमित्यर्थः । 'तत्रैवम्' इत्यादिवचनस्याप्यात्मनः कर्तृत्वनिषेधपरत्वभ्रमव्यावृत्त्यर्थम् , **एवं सति केवल**मिति पदार्थवैशद्यार्थमाह **अधिष्ठान**मिति । **अधिष्ठानं** शरीरम् । **चेष्टा**शब्देन पञ्चवृत्तिप्राणो लक्ष्यते । **सापेक्षे सती**त्यन्तेन **एवंसती**त्यस्य व्याख्यानम् । "शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः" इत्यस्य वचनस्यानन्तरं हि, तत्रैवंसतीत्यादीति वचनम् ॥

---

1 संसारदशायामिति । न तु संसारफलार्थं प्रवृत्तिमात्रमित्यर्थः ।

**उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥**

"स यथा महाराजः" इति प्रकृत्य "एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते ॥ ३४ ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥**

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता ॥ विज्ञानशब्देन नात्मनो व्यपदेशः, अपि त्वन्तःकरणस्य बुद्धेरिति चेत्,—एवंसति निर्देशविपर्ययः स्यात्—बुद्धेः करणत्वात् विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥ ३५ ॥

आत्मनोऽकर्तृत्वे दोष उच्यते—

**उपलब्धिवदनियमः ॥ ३६ ॥**

यथाऽऽत्मनो विभुत्वे, 'नित्योपलब्ध्यनुपलब्धिप्रसङ्ग' इत्यादिनोपलब्धेरनियम उक्तः; तद्वदात्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात् सर्वाणि कर्माणि सर्वेषां भोगाय स्युः; नैव वा कस्यचित्। आत्मनां विभुत्वाभ्युपगमात् संनिधानमपि सर्वेषामविशिष्टम्। अत एव चान्तःकरणादीनामपि नियमो नोपपद्यते, यदायत्ता व्यवस्था स्यात् ॥

**शक्तिविपर्ययात् ॥ ३७ ॥**

बुद्धेः कर्तृत्वे, कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्या एव स्यादिति आत्मनो भोक्तृत्वशक्तिः हीयेत। भोक्तृत्वं च बुद्धेरेव सम्पद्यत इत्यात्मसद्भावे प्रमाणाभावश्च स्यात्। "पुरुषोऽस्ति भोक्तृभावात्" इति हि तेषामभ्युपगमः ॥ ३७ ॥

**समाध्यभावाच्च ॥ ३८ ॥**

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात्। स च समाधिः प्रकृतेरन्योऽस्मीत्येवंरूपः। न च प्रकृतेरन्योऽस्मीति प्रकृतिः समाधातुमलम्। अतोऽप्यात्मैव कर्ता ॥ ३८ ॥

नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वं नोपरमेतेत्यत्राह—

**यथा च तक्षोभयथा ॥ ३९ ॥**

वागादिकरणसंपन्नोऽप्यात्मा यदेच्छति, तदा करोति; यदा तु नेच्छति, तदा न करोति। यथा तक्षा वास्यादिकरणसंनिधानेऽपीच्छानुगुण्येन करोति, न करोति च। बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्याः भोगवाञ्छादिनियमकारणाभावात् सर्वदा कर्तृत्वमेव स्यात् ॥ ३९ ॥ ॥ इति कर्त्रधिकरणम् ॥

---

**उपादानाद्विहारोपदेशाच्च** ॥ गृहीत्वेत्युपादानमुक्तम्। परिवर्तते इति विहार उक्तः। इन्द्रियप्रेरणे शरीरप्रेरणे च कर्तृत्वमुक्तमित्यर्थः ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** ॥ 'यज्ञं तनुते कर्माणि तनुते' इति लौकिकवैदिकक्रियाकर्तृत्वमुक्तम्। **विज्ञानेनेति**। तत्राप्युपचरितत्वे सति स एव दोष इति भावः ॥

**उपलब्धिवदनियमः** ॥ यो यदन्तःकरणो यत् कर्म चक्रे, तदन्तःकरणेनैव तेनानुभाव्यमित्यत्राह- **अतएव चेति**।

**शक्तिविपर्ययात्** ॥ ततः किमित्यत्राह **भोक्तृत्वं चेति**। कथं प्रमाणाभाव इत्यत्राह **पुरुषोऽस्तीति**।

**समाध्यभावाच्च** ॥ अचेतनत्वादपि प्रकृतेः समाधिर्नोपपद्यते; प्रकृतेरन्योऽस्मीत्येवंरूपत्वाच्च नोपपद्यत इत्यर्थः ॥

अनन्तरसूत्रशङ्कामाह—**नन्विति**। **यथा च तक्षोभयथा** ॥ उक्तदूषणं स्वपक्ष एव प्रसजतीत्याह-**बुद्धेस्त्विति** ॥

**परे चापरे च**—**समाध्यभावा**दित्यन्तं सूत्रजातमात्मनः कर्तृत्वसमर्थनपरमधिकरणं वर्णयित्वा, **यथा च तक्षोभयथे**ति सूत्रं कर्तृत्वस्यौपाधिकत्वप्रतिपादकमधिकरणान्तरं वर्णयन्ति । तत्रोच्यते—कर्ताशास्त्रेत्यत्र कर्तृत्वस्य स्वाभाविकतया पारमार्थ्यं किं प्रतिपिपादयिषितम्, उतौपाधिकत्वेनापारमार्थ्यम्; उत कर्तृत्वमात्रम्? प्रथमे अनन्तराधिकरणविरोधः । द्वितीये अनन्तरेण पुनरुक्तिः । तत्र ह्यौपाधिकत्वं समर्थनीयं मतम् । तृतीये, संशयाभावादनारम्भणीयता । देहस्य वा तदतिरिक्तस्य वा कस्यचिदात्मतयाऽभिमतस्य कर्तृत्वं हि सर्वजनसंमतम् । अहमिदं करोमीति हि सर्वेषां प्रतिपत्तिः ॥ ननु प्रकृतिरेव कर्त्रीति सांख्यपक्षनिरासार्थं आरम्भ इति चेन्न—प्रकृतिगतस्य वा अन्तःकरणगतस्य वा कर्तृत्वस्याऽऽत्मन्यध्यस्तत्वाभ्युपगमस्य युवयोरविशिष्टत्वात् ॥ ननु प्रकृतिरेव कर्त्रीति तत्पक्षः । अतस्तन्निरासेन बुद्ध्युपहित आत्मा कर्तेति समर्थनार्थमधिकरणमिति चेत्—किं बुद्ध्युपधानेन कर्तृत्वं परमात्मन उच्यते, उत जीवात्मनाम् । नाद्यः; अन्तःकरणसृष्टौ बुद्ध्युपधानेन विना कर्तृत्वस्याभ्युपगन्तव्यत्वात् । अन्यथा बुद्ध्युपधानात् कर्तृत्वम्, कर्तृत्वाद् बुद्ध्युपधानमित्यन्योन्याश्रयप्रसङ्गात् । प्रलयावस्थायामन्तःकरणान्तराभ्युपगमे एकत्वावधारणविरोधाच्च । नापि द्वितीयः; त्वन्मते बुद्ध्युपधानात् पूर्वं जीवपरमात्मविभागाभावेन जीवगतकर्तृत्वं बुद्ध्युपधाननिबन्धनमिति वक्तुमशक्यत्वात् ॥ जीवत्वं कर्तृत्वं च बुद्ध्युपहितस्य ब्रह्मण इति चेन्न; बुद्धेरनादित्वे महतो लयश्रुतिविरोधात् । आदिमत्त्वे, जीवानामादिमत्त्वप्रसङ्गात् । बुद्धिसृष्टावन्योन्याश्रयस्य पूर्वोक्तस्य दुस्तरत्वाच्च ! 'विज्ञानं यज्ञम्' इत्यादिवाक्यविषयस्य, 'व्यपदेशाच्च क्रियायाम्' इति सूत्रस्य विज्ञानशब्दवाच्यजीवस्य कर्तृत्वप्रतिपादकत्वात् तथा भवद्भिर्व्याख्यातत्वाच्च विज्ञानशब्दस्य बुद्धिमात्रविषयत्वनिर्व(ब?)न्धश्चानुपपन्नः । न हीदं सूत्रं पूर्वपक्षविषयं व्याख्यातम् । तथा सति, **यथा च तक्षे**ति सिद्धान्तसूत्रं स्यात् । ततश्च तस्य पृथगधिकरणत्वानुपपत्तिः । विज्ञानशब्दविषये वक्तव्यं सर्वमा**नन्दमयाधि**करणे उक्तम् । जीवानां ब्रह्मात्मकत्वोपदेशश्च न कर्तृत्वौपाधिकत्वसाधकः—अन्तःकरणसृष्टौ तदुपधानेन विना ब्रह्मणः कर्तृत्वस्यावश्याभ्युपेयत्वात् । आत्मा कर्ता चेत्, हितमेव नियतं कुर्यादिति शङ्कायाम्—इष्टानिष्टोपलब्धिवत् देशकालादृष्टादिवशादनियमेन हिताहितकारित्वोपपत्तिरित्येतदर्थपरम्, 'उपलब्धिवदनियमः' इति सूत्रं व्याख्यातम् । तदयुक्तम्; शङ्कानुत्थानेन परिहर्तव्याभावात् । हितबुद्ध्यैव हि सर्वं चेतनः करोति ॥ वस्तुतस्त्वहितमिति चेत्—तर्हि तन्न कर्तृत्वे चोद्यम्; किन्तु सार्वज्ञ्यदूषणम् अहिते हितबुद्धित्वम् । न चात्र संसरतो जीवस्य सार्वज्ञ्यं केनापि विवक्षितम् । अतोऽकर्तृत्वे दूषणान्तरपरत्वमेव सूत्रस्य युक्तम् । '**शक्तिविपर्यया**दिति—बुद्धेः कर्तृत्वे करणशक्तिर्हीयेत; कर्तृशक्तिश्च स्यात् । अतः करणान्तरं कल्प्यम्, करणव्यतिरिक्तकर्तृसद्भावात् नाम्नि विवाद इत्युक्तम् । तदप्ययुक्तम्—बुद्धेः कर्तृत्वेऽपि मनसः करणत्वसंभवात् जीवस्य कर्तृत्वासिद्धेः ॥ मन एव वृत्तिविशेषाद् बुद्धिशब्दवाच्यमिति चेन्न—बुद्धिशब्दवाच्यमहत्कार्याहङ्कारकार्यत्वान्मनसः । **पराशरा**दयो हि तथा स्मरन्ति । वृत्तिविशेषमात्रं चेद् बुद्धिः, तदा चित्तमनसोरिव प्रकृतिविकृतिभावोपदेशो न स्यात् । "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" इति भूम्यादीनामिव मनोबुद्ध्योरपि पृथक्त्वं

परायत्ताधिकरणम् । २-३-६

परात्तु तच्छ्रुतेः ॥ ४० ॥

इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येण? उत परमात्मायत्तमिति । किं प्राप्तम्?। स्वातन्त्र्येणेति । परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येत। यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भशक्तः, स एव नियोज्यो भवति । अतः स्वातन्त्र्येणास्य कर्तृत्वम्—इति प्राप्तेऽभिधीयते-परात्तु तच्छ्रुतेः इति । तुशब्दः पक्षं व्यावर्तयति । तत्—कर्तृत्वम् अस्य जीवस्य परात्—परमात्मन एव हेतोर्भवति। कुतः। श्रुतेः, "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा", "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति । स्मृतिरपि, "सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च", "ईश्वरःसर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति ॥ ४० ॥

---

प्रतिपाद्यते । समाध्यभावाच्चेति सूत्रमपि—'ओमित्यात्मानं ध्यायथ', 'आत्मा वा अरे द्रष्टव्यः' इति समाधिविधिरपि समाधौ कर्तृत्वमात्मनोऽवगमयतीति व्याख्यातम्। तत्तु, 'कर्ता शास्त्रार्थवत्त्वात्'इत्यस्मादविशिष्टार्थम् । अतः प्रकृतेरन्यत्वेन समाधिविधानमेव विवक्षितम् ॥ यथा च तक्षेति । तत्र कर्तृत्वस्यौपाधिकत्वं नाम किं संसारदशायां देहेन्द्रियादिसापेक्षत्वम् , उत मुक्तावननुगतत्वम्? प्रथमेऽधिकरणानुत्थानम् ; देहादिसापेक्षत्वस्य लोकसिद्धतया निरपेक्षत्वशङ्कानुदयात् । द्वितीये श्रुतिविरोधः । परं ज्योतिरुपसम्पन्नस्य " जक्षत् क्रीडन् रममाणः " इति जक्षणादिव्यापारदर्शनात् ; "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति", "स एकधा भवति त्रिधा भवति" इतीच्छामात्रेणाभिलषितनिष्पादकत्वश्रवणाच्च ॥ कर्तृत्वस्य दुःखरूपत्वात् तस्य स्वाभाविकत्वे च दुःखादनिर्मोक्ष इति चायुक्तम्; स्रक्चन्दनाद्युपयोगे कर्तृत्वस्य दुःखरूपत्वाभावात् ॥ ननु न दुःखरूपत्वं विवक्षितम्; किन्तु दुःखानुषङ्गव्याप्तत्वमिति चेत्— तर्ह्यकर्तृत्वमपि दुःखानुषक्तमिति दुःखादनिर्मोक्षःस्यात् तस्य । निष्पन्दत्वं हि दुःखहेतुर्दृश्यते, शास्त्रीयकर्मसु अकर्तृत्वं च नरकादिहेतुः श्रूयते । किंचात्मावभासस्य दुःखव्याप्तिर्दृष्टेति मुक्तावात्मानवभास दुःखानुभवयोरन्यतरप्रसङ्गः ॥ आगमविरोधात् व्याप्तिभङ्गश्चेत्—कर्तृत्वेऽपि दुःखव्याप्तिर्भज्यताम् । विज्ञानं यज्ञमिति वाक्यस्य बुद्धिविषयत्वं व्यपदेशाच्चेति सूत्रस्य पूर्वपक्षविषयत्वाभावादयुक्तमित्युक्तम् । ब्रह्मात्मकत्वोपदेशस्य चाकर्तृत्वसाधकत्वं व्युदस्तम् ॥

अन्ये तु यथाचेति सूत्रं पूर्वसूत्रैरेकाधिकरणमेवावर्णयन् । ते चास्य कर्तृत्वाकर्तृत्ववचनानां विषयव्यवस्थापनार्थत्वमाहुः । ततोऽपि कर्तृत्वानुपरतिप्रसङ्गपरिहारार्थत्वं युक्तम् ; तस्य परिहरणीयत्वात् । कर्तृत्वनिषेधवचनानां विषयविभागस्याऽऽद्यसूत्रेऽभिप्रेतत्वात् । अन्यथा 'शास्त्रफलं प्रयोक्तरि' इति सिद्धे कर्तृभावे कर्ता शास्त्रार्थवत्त्वादिति सूत्रवैयर्थ्यप्रसङ्गात् । तक्षदृष्टान्तेन 'प्रकृतेः क्रियमाणानि' इत्यादिवचनस्य दुष्परिहरतया तत्परिहारस्याभिप्रायिकत्वस्याभ्युपेत्यत्वात् । अनुपरतिप्रसङ्गपरिहारपरत्वेऽप्यस्मिन् सूत्रे विषयविभागस्यार्थसिद्धत्ववर्णनोपपत्तेश्च ॥ इति कर्त्रधिकरणम् ॥

परात्तु तच्छ्रुतेः ॥ जीवस्य कर्तृत्वं किं परमात्मायत्तम् , उत स्वायत्तमिति । किं परमात्मायत्तत्वे विधिनिषेधशास्त्रानर्थक्यं स्यात् , नेति। यदा स्यात् । तदा स्वायत्तम् , यदा न स्यात् , तदा परमात्मायत्तमिति सिद्ध्यति । तदिति व्याख्येयं पदम् , कर्तृत्वमिति व्याख्यानम् ।

**नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तम्; तत्राह—**

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥**

**सर्वासु** क्रियासु पुरुषेण कृतं प्रयत्नम्—उद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन **प्रवर्तयति;** परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यते इत्यर्थः[1]। कुत एतत्। विहितप्रतिषिद्धा**वैयर्थ्यादिभ्यः।** आदिशब्देनानुग्रहनिग्रहादयो गृह्यन्ते। यथा द्वयोः साधारणे धने परस्वत्वापादन**मन्यतरानुमतिमन्तरेण** नोपपद्यते, अथापीतरानुमतिः स्वेनैव कृतेति तत्फलं तस्यैव भवति। **पापकर्मसु** निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहतीति साङ्ख्यसमयनिरूपणे प्रतिपादितम्।

---

अनन्तरसूत्रशङ्कामाह **नन्विति। कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ उद्योगमपेक्ष्येति।** अनेन प्रथमप्रवृत्तिदशायां परस्योदासीनत्वं दर्शितम्। प्रवृत्तस्य प्रवर्तनं ह्यनुमतिः। **जीवः** स्वयमेवोद्युक्तश्चेत्, किमनुमतिदानेनेत्यत्राह—**परमात्मानुमितिमिति।** उत्तरप्रवृत्तिरेतदनुमतिदानेनैवोपपद्यत इत्यर्थः। **विहितप्रतिषिद्धशब्देन** विधिनिषेधावुच्येते। **आदिशब्दं** व्याचष्टे **आदिशब्देनेति। निग्रहानुग्रहौ** कोपप्रसादौ। भाष्यस्थादिशब्देन तत्तत्फलदानमभिप्रेतम्। परानुमतिसापेक्षत्वे विधिनिषेधविषयत्वानुपपत्तिरिति शङ्कायां परानुमतिदानेनैव प्रवृत्त्युपपत्तौ तत्रापि प्रथमप्रवृत्तस्यैव फलभाक्त्वे च दृष्टान्तमाह—**यथेति।** साधारणे द्रव्ये परानुमत्या स्वांशमादाय राज्ञे उपायने दत्ते **तत्प्रसादहेतुकः** फलान्वयः प्रथमप्रवृत्तस्यैव दृश्यते; न त्वनुमन्तुः—तथेदमित्यर्थः। अंशे पारतन्त्र्या**द्विधिनिषेधागोचरत्वमिति** शङ्का; अंशे स्वातन्त्र्याद्विधिनिषेधगोचरत्वोपपत्तिरिति परिहारः। अन्यसा**पेक्षत्वेऽपि,** रथाकर्षणादिषु विधिनिषेधगोचरत्वं दृष्टम्। **पापकर्मस्वित्यादि।** अन्यत्र दयायाः सवि**षयत्वादित्यर्थः।** एतदुक्तं भवति—यथा द्वयोः पुत्रयोः पित्रादिविभक्तदत्तवित्तक्षेत्रादिमत्त्वेन तत्सा**पेक्षत्वेऽपि** कस्यचिदपथप्रवृत्तिः, कस्यचित्सुपथप्रवृत्तिश्च तयोरेव फलाय भवति—तद्वदिहापि सर्वजीवानां **सामान्येन** चिच्छक्तिप्रवृत्तिशक्त्योः करणकलेबररूपपरिकरलाभस्य च परमात्माधीनत्वात् कर्तृत्वमात्रं **परायत्तम्;** विशेषकर्तृत्वं च परानुमतिसापेक्षत्वात् परायत्तम्; अंशे स्वातन्त्र्याज्जीवस्य विधिनिषेध**विषयत्वम्।** स्वातन्त्र्यं च स्वेच्छानुगुणप्रवृत्तिसामर्थ्ये सति अनिवार्यत्वम्। इतरसापेक्षत्वेऽपि विधिनिषेध**विषयत्वं** फलभाक्त्वं च रथाकर्षणादिषु दृष्टम्। इतरसापेक्षत्वे च प्रथमप्रवृत्तस्यैव फलान्वये च दृष्टान्तो **दर्शितः।** अनुमन्तुः परस्य नियन्तृत्वाद्धर्मिग्राहकबाधाच्च न फलान्वयः, किन्तु जीवस्यैव। लोकेऽप्यनुमन्तुः **फलान्वयो** नानुमन्तृत्वप्रयुक्तः; अपि तु शास्त्रवश्यत्वप्रयुक्तः। निवर्तनक्षमस्याप्यनुमन्तृत्वं न दोषः; प्रथम**प्रवृत्तिफलदानरूपत्वात्** तस्य। अल्पानुकूल्येन विपुलापराधसहत्वात् दयादिगुणानां सविषयत्वमिति।

---

1 **इत्यर्थ इति।** ननु कस्य वाक्यस्य परमात्मानुमतिमित्यादिरर्थः। परमात्मप्रवर्तनं **बिना** जीवस्य प्रयत्नः प्रथमं भवतीत्येव हि प्रकृतसूत्रार्थो वक्तव्य इति चेत्—प्रकृतसूत्रबलात् **परात्तु** इतिपूर्वसूत्रस्यायमर्थः पर्यवसित इति। ननु सर्वत्र सर्वजीवप्रवृत्तेः पूर्वकर्मफलरूपत्वात् **परमात्मनियमनं** प्रथमप्रवृत्तावप्यनुमतिरूपमेवेत्यर्थपरं भवत्विदं भाष्यम्। व्यतिरेकमुखेन **सर्वप्रवृत्तिसाधारण्यावगमनात्;** अन्यथा एतद्वाक्यवैयर्थ्याच्च। सांख्याधिकरणभाष्यमपि **न विरुद्धम्।** अधिकरणसारावलिस्वारस्यञ्च। न। सौत्रप्रयत्नपदस्वारस्यभंगात्। तथाहि शांकर **इव** पूर्वकृतधर्माधर्मरूपकर्मापेक्ष इत्येवार्थः स्यादिति। शेषमन्यत्र भाष्यार्थदर्पणादौ।

**नन्वेवम्**, "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कारयति तं यमधो निनीषति" इत्युन्निनीषयाऽधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतीत्येतन्नोपपद्यते ॥ **उच्यते** । एतन्न सर्वसाधारणम् । यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवसितः प्रवर्तते, तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु कर्मस्वेव रुचिं जनयति । यश्चातिमात्रप्रातिकूल्ये व्यवसितः प्रवर्तते, तं निगृह्णन् स्वप्राप्तिविरोधिष्वधोगति-साधनेषु कर्मसु रुचिं जनयति । यथोक्तं भगवता स्वयमेव, "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः" इत्यारभ्य, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति । तथा—"असत्[1]यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इत्यादि, "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" इत्यन्तमुक्त्वा, "तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इत्युक्तम् ॥ ४१ ॥ इति परायत्ताधिकरणम् ॥

---

अत्र चोदयति **नन्विति** । कथमनुमन्तृत्वम् ? अप्रवृत्तप्रवर्तनरूपं प्रयोजयितृत्वं ह्यस्य दृश्यते । अनुमन्तृत्वे सति कथमिदमुपपद्यत इत्यर्थः । विषयव्यवस्थया परिहरति-**उच्यत** इति । न्यायकृतं विषय-विभागं संवादकोपबृंहणवचनेन द्रढयति **यथोक्त**मिति । प्रथमप्रवृत्तस्यानुमन्तृत्ववत् अत्यन्तानुकूलप्रति-कूलयोः प्रयोजयितृत्वमपि फलदानकल्पम् । तत्र च हेतुः स्वातन्त्र्यम् । एवं प्रथममुपेक्षकत्वं पश्चादनु-मन्तृत्वं क्वचिद्विषये प्रयोजकत्वं च प्रतिपादितम् । एषां त्रयाणां दोषरूपत्वसाधनमाश्रयासिद्धि-धर्मिग्राहक-बाधाभ्यां पूर्वमेव निरस्तम् ॥

ननु चेतनस्य प्राथमिकेच्छाप्रयत्नयोरुत्पत्तौ परमात्मनः कारणत्वमस्ति वा, न वा । न चेत्—सर्वकारणत्वभङ्गप्रसङ्गः । किञ्च पुण्यपापप्रवृत्त्यनुगुणेच्छादीनामपि पूर्वकर्मफलरूपत्वात् तदिच्छादिषु कारणत्वाभावे परस्य सर्वकर्मफलप्रदत्वं च भग्नं स्यात् । अतः प्राथमिकेच्छाप्रयत्नयोरपि कारणत्वमीश्वरस्याभ्युपगन्तव्यम् । ततश्च तयोरीश्वरः स्वसंकल्पतः कारणं स्यात्, अयमिच्छेत्, अयं प्रयतेतेति । अमोघसङ्कल्पस्य तस्य सङ्कल्पपरतन्त्रतया जीवस्य स्वातन्त्र्याभावात् कर्मसु कर्तृत्वम्, तन्निबन्धनं भोक्तृत्वं च न स्यात् । परमात्मन औदासीन्यानुमन्तृत्वप्रयोजयितृत्वावस्थानां वैषम्यं च न स्यात् । प्रवृ-त्तस्य प्रवर्तको ह्यनुमन्ता; अप्रवृत्तस्य प्रवर्तकश्च प्रयोजयिता । परमात्मनः प्रवर्तकत्वं च न वायूदकादिवत् प्रेरणेन, अपित्विच्छाजननद्वारेण; प्रथमप्रवृत्तिष्विच्छाजनकत्वमस्ति चेत्—उपेक्षकत्वं न स्यात्; प्रयो-जयितृत्वावस्थाया वैषम्याभावात् ॥

उच्यते । नैते दोषाः प्रसज्येरन्; साधारणोपकारविशेषोपकारवैषम्येण सर्वासामनुपपत्तीनां परिहृतत्वात् । आदावेव करणकलेबरसर्गतत्प्रदानरूपोपकारश्चेतनानां सर्वकार्यसाधारणः पश्चादपि करणकलेबरव्याप्ति-तद्धारण-तत्सामर्थ्यापादनरूप उपकारः सर्वदा भवतीति तन्मुखेन प्राथमिकेच्छादावपि कारणत्वान्न परमात्मनः सर्वकारणत्वहानिः । तत एव न सर्वफलप्रदत्वहानिश्च । तत्तद्देहारम्भकादृष्टवशादेव गुणत्रयोद्भवाभिभवरूपविशेषो वासनाविशेषोन्मेषश्च जन्मकाल एव सिद्धौ । विषयविशेषसन्निधिश्च

---

1 असत्यं=सत्यशब्दवाच्यब्रह्मानुपादानकम् -अप्रतिष्ठं-ब्रह्मानाधारकम् ।

भोगादृष्टप्रवाहकारितः ; कर्मफलानुभवस्य तत्सापेक्षत्वात् । तथा हि—गुणविशेषस्य रुचिविशेषहेतुत्वम्, "आहाराः सात्त्विकप्रियाः", "आहारा राजसस्येष्टाः", इत्यादिभिरवगम्यते । मनुष्यपशुक्रिमिकीटादीनामोदनशष्पपूयादिषु रुचिविशेषद्वेषतदभावानां वासनाविशेषा(षतदभावा)धीनत्वमन्वयव्यतिरेकसिद्धम् । एवं गुणत्रयतारतम्य-वासनाविशेषोद्बोध-वस्तुस्वभावविशेषरूपासाधारणकारणसचिवैः साधारणकारणैः प्राथमिकेच्छानिष्पत्तिः, तत एव प्रयत्नश्चेति तयोर्विशेषोपकाराभावादीश्वरस्यौदासीन्यं युक्तम् ॥

ननु तत्तद्भोगादृष्टस्यापीश्वर एव फलप्रद इति विषयसंनिधानादेरपीश्वरकारितत्वात् कथं तस्य तत्रौदासीन्यम् ॥ अभिसन्धिविशेषाभावादिति ब्रूमः । ईश्वरः प्राचीनादृष्टफलभूतसुखदुःखप्रदानेच्छया विषयसंनिधानादिकं प्रथममापादयति ; न तु साधनान्तरानुष्ठापनेच्छया । अन्याभिप्रायेण संपादितस्य वस्तुनः पुरुषान्तराभिमतकार्यान्तरोपयोगे सत्यपि पूर्वं तन्निष्पादकपुरुषस्यौदासीन्यं हि दृश्यते । घटनिरीक्षणाय प्रदीपमारोपयन् हि पुरुषः पटार्थिपुरुषान्तरप्रवृत्तावुदासीन एव ; तत्र तस्य प्रवर्तकत्वनिवर्तकत्वयोरप्यभावात् । एवमीश्वरस्य प्रथमत औदासीन्यमुपपन्नम् । अत एव जीवस्य स्वातन्त्र्यमपि युक्तम् । इच्छाशक्तिमत्त्वे सति अनिवार्यत्वं हि स्वातन्त्र्यम् ॥

ननु पूर्ववासनातदधीनेच्छापरवशत्वात् वायूदकादिप्रेरितस्येव न जीवस्य स्वातन्त्र्यम् ॥ नैवम् ; इच्छोत्पत्तेः प्रवृत्तिसामर्थ्यविनाशकत्वाभावात् । ओदनेच्छायां सत्यामपि तस्य विषसंपृक्तत्वविज्ञाने सति तद्विषयेच्छानिवारणसामर्थ्यं हि चेतनस्य दृश्यते । काष्ठविचायको महानिधिलाभोपायज्ञाने सति काष्ठसंपादनेच्छां निवारयितुं प्रभवति । एवं प्रत्यवायस्य वाऽतिशयफलान्तरस्य वा ज्ञाने सति इच्छान्तरनिवारणसामर्थ्यदर्शनेन पुरुषस्य स्वातन्त्र्योपपत्तेः कर्तृत्वं युज्यते । इष्टतमेषु प्रवर्तकवासनावत् अनिष्टेषु निवर्तकवासनाऽपि हि तस्य विद्यते । अतः कृत्याकरणाकृत्यकरणेष्विच्छानिवारणक्षमोऽपि प्रत्यवायानादरेण स्वेच्छां न निवारयतीत्येष एवापराधो जीवस्य दण्ड्यत्वे हेतुः । शास्त्रीयप्रत्यवायादिज्ञानसामर्थ्याभावात् तिरश्चामशास्त्रवश्यत्वम् । एवं प्रथमेच्छाप्रयत्नयोरप्यभग्नस्वातन्त्र्यो जीवः । परमात्मा च तयोरुदासीनः ; तत्राभिसन्धिरहितत्वात् । द्वितीयेच्छाप्रयत्नादिषु परमात्मा अभिसन्धिमानेव हेत्वन्तरासंनिधापितमपि विषयं बुद्धौ संनिधापयति । तत्संनिधापनमेव विशेषोपकारः । स च प्रथमप्रवृत्तिफलदानरूपः । तदानीमपि परो जीवस्य स्वेच्छानिवारणादिसामर्थ्यं न नाशयति । अतस्तस्य स्वातन्त्र्यम् । ईदृशं विशेषोपकारं प्रथमत एव केषुचिदीश्वरः करोति; तत्र प्रयोजयितृत्वम्—इत्यवस्थात्रयवैषम्यम् ॥ नन्वेवं साधारणकारणैरेव वासनाविशेषादिसहकृतैरिच्छाद्युत्पत्तौ संभवन्त्यां किमर्थमीश्वरस्यानुमन्तृत्वादिकमभ्युपगम्यते ॥ उच्यते । यदि वयमनुमन्तृत्वादिकं कल्पयामः, तदानीमेवं चोदनीयम् । न तु कल्प्यते । किंतु, 'अन्तः प्रविष्टः शास्ता जनानाम्', 'अध्यक्षश्चानुमन्ता च', 'एष एव साधु कर्म कारयति' इत्यादिश्रुतिबलादभ्युपगम्यते । अतो न कश्चिद्दोषः । तत्र यदुक्तम्—नियमनश्रुतिसङ्कोचः प्रसजेत्, प्रथममुपेक्षकत्वादिति—न तत् अनिष्टप्रसञ्जनम् । नियन्तृत्वश्रुतेस्तावान् सङ्कोचो ह्यभिमतः ; यावता विधिनिषेध-

अंशाधिकरणम् । २-३-७.

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥**

जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम्। इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः, उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्, अथ ब्रह्मांश इति संशय्यते ।

---

शास्त्रानर्थक्यं परिह्रियेत । ततः परं सङ्कोच एव त्वनिष्टः । न च सोऽभ्युपगतः । किञ्च चिच्छक्ति प्रवृत्तिशक्तिं च दत्वा शक्तिमत्त्वे सति अनिवार्यत्वलक्षणं स्वातन्त्र्यं जीवस्याऽऽपाद्य प्रथमप्रवृत्तौ तूष्णींभावः ईश्वरस्य न स्वातन्त्र्यवैकल्यावहः ; किन्तु तदतिशयावह एव । यथाऽमात्यादीनां परिकरवत्त्वं स्वातन्त्र्यं च दत्वा स्वयमव्यापृतस्य राज्ञः—तद्वत् । न च स्वातन्त्र्यं पराधीनत्वञ्चेति व्याघातः, अमात्यस्वातन्त्र्ये तदभावात् । तदभावश्च राज्ञा तत्प्रवृत्तेरनिवारणात । **अत्रायं सङ्ग्रहः—**

"वैयर्थ्यं यावता न स्याद्विधानप्रतिषेधयोः । नियन्तृत्वश्रुतेस्तावान् सङ्कोचो न त्वतः परः ॥
बाह्यान्तःकरणव्याप्तितच्छक्त्याधानधारणैः । साधारणोपकारैः स्यादिच्छादेः कारणं परः ॥
भोगाद्दृष्टोपनीतार्थस्वभावात् वासनान्वितात् । इच्छादेर्मनसोत्पत्तौ युक्तोदासीनता विभोः ॥
अभिसन्ध्यन्तरप्राप्ते वस्तुन्यन्यत्र केनचित् । उपयुक्तेऽप्युदास्ते हि तस्य प्रापयिता पुमान् ॥
सामर्थ्ये सत्यवार्यत्वात् स्वतन्त्रो जीव उच्यते । स ह्योदने विषज्ञानात् स्वेच्छामपि नियच्छति॥
सन्निधापकवैधुर्येऽप्यर्थं बुद्धिस्थतां नयन् । प्रयोजकोऽनुमन्ता च भवतीशस्तदा तदा ॥
पूर्वप्रवृत्तेश्च फलमनुमत्यादिकं भवेत् । दयादीनां गुणानां च सुलभं विषयान्तरम् ॥
अमात्यस्य स्वतन्त्रत्वे राज्ञस्तन्नापहीयते । एवमेव परस्यापि जीवस्वातन्त्र्यदायिनः ।
न स्वातन्त्र्यं पराधीनस्वरूपात्प्रच्युतं भवेत् । स्वातन्त्र्यदायिना पुंसा तत्प्रवृत्त्यनिवारणात् ।

अतो जीवानां स्वातन्त्र्यं विधिनिषेधशास्त्रसाफल्यं परमात्मनः सर्वकारणत्वं सर्वफलप्रदत्वं निरङ्कुशस्वातन्त्र्यम् अवस्थात्रयवैषम्यं दयादिगुणानां विषयवत्त्वं वैषम्यनैर्घृण्यपरिहारश्चेति सर्वमुपपन्नम् ॥

जीवेन **स्वरूपैक्यमभ्युपगच्छतां सर्वेषां** सर्वज्ञतया स्वानन्यत्वेन जीवान् जानत ईश्वरस्य सर्वप्रवृत्तिष्वनुमन्तृत्वे हिताकरणाहितकरणदोषप्रसक्तिरनिवार्या । अत इदमधिकरणं विरुद्धम् ॥ ननु जगत ईश्वरशरीरत्वपक्षेऽपि हिताकरणादिदोषः प्रसजेत् ॥ न; शरीरगतदोषाणां शरीरिण्यप्रसङ्गेन जीवगतदुःखानां परमात्मन्यप्रसङ्गात ॥ इति परायत्ताधिकरणम् ॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके** ॥ अवान्तरसङ्गतिमाह **जीवस्येति** । स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भक्षमो जीवः कृतप्रयत्नापेक्षेण परेणानुमतिदानेन प्रवर्त्यत इत्युक्तम् । तर्हि राजभृत्यादिवत् अत्यन्तभेदो जीवपरयोः स्यात् । तस्मादभेदश्रुतयः, नरपतिरेव सर्वलोक इतिवदौपचारिक्य इति शङ्कया सङ्गतिः । **अथ ब्रह्मांश** इति । किं विशेष्यैकदेशरूपांशः, किं विशिष्टैकदेशरूपविशेषणांश इति विकल्पो गर्भितः । स तु वक्ष्यते । जीवः किं परमात्मनोऽत्यन्तभिन्नः, उताज्ञः परमात्मैव, उतौपाधिकभेदभिन्नः, उत स्वतो भिन्नाभिन्नः, उत परमात्मनो

श्रुतिविप्रतिपत्तेः संशयः॥ ननु "तदनन्यत्वमारम्भणशब्दादिभ्यः", "अधिकं तु भेदनिर्देशात्" इत्यत्रैवायमर्थो निर्णीतः॥ सत्यम्, स एव नानात्वैकत्वश्रुतिविप्रतिपत्त्याऽऽक्षिप्य जीवस्य ब्रह्मांशत्वोपपादनेन विशेषतो निर्णीयते। यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतम्, तावज्जीवस्य ब्रह्मणोऽनन्यत्वं ब्रह्मणस्तस्मादधिकत्वं च न प्रतितिष्ठति। किं तावत् प्राप्तम्।

अत्यन्तभिन्न इति। कुतः। "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिना भेदनिर्देशात्। ज्ञाज्ञयोरभेदश्रुतयस्तु, अग्निना सिञ्चेदितिवत् विरुद्धार्थप्रतिपादनादौपचारिक्यः। ब्रह्मणोंशो जीव इत्यपि न साधीयः। एकवस्त्वेकदेशवाची ह्यंशशब्दः। जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः। न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः; खण्डनानर्हत्वाद्ब्रह्मणः; प्रागुक्तदोषप्रसङ्गाच्च। तस्मादत्यन्तभिन्नस्य च तदंशत्वं दुरुपपादम्।

यद्वा. भ्रान्तं ब्रह्मैव जीवः। कुतः। 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिब्रह्मात्मभावोपदेशात्। नानात्ववादिन्यस्तु प्रत्यक्षादिसिद्धार्थानुवादित्वादनन्यथासिद्धाद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादय इवाविद्यान्तर्गताः ख्याप्यन्ते।

अथवा ब्रह्मैवानाद्युपाध्यवच्छिन्नं जीवः। कुतः। तत एव ब्रह्मात्मभावोपदेशात्। न चायमुपाधिर्भ्रान्तिपरिकल्पित इति वक्तुं शक्यम्; बन्धमोक्षादिव्यवस्थानुपपत्तेरिति।

एवं प्राप्तेऽभिधीयते ब्रह्मांश इति। कुतः। नानाव्यपदेशात्; अन्यथा च—एकत्वेन व्यपदेशात्। उभयथा हि व्यपदेशो दृश्यते। नानात्वव्यपदेशस्तावत् स्रष्टृत्वसृज्यत्व-नियन्तृत्व-नियाम्यत्व-सर्वज्ञत्वाज्ञत्व-स्वाधीनत्वपराधीनत्व-शुद्धत्वाशुद्धत्व-कल्याणगुणाकरत्वतद्विपरीतत्व-पतित्वशेषत्वादिभिर्दृश्यते। अन्यथा च—अभेदेन व्यपदेशोऽपि, 'तत्त्वमसि, अयमात्मा ब्रह्म'

---

विशेषणतयांऽश इति; तदर्थं कस्मिन् पक्षे भिन्नाभिन्नत्वादिविषयसर्वश्रुतिमुख्यत्वमुपपद्यते, कस्मिन्नेति। यदा पक्षान्तरेषु तदुपपत्तिः, तदा तेष्वन्यतमः परिग्राह्यः। यदा विशेषणतया अंशत्वे तदुपपत्तिः, तदा तदेव परिग्राह्यमिति। कः संशयहेतुरित्यत्राह— **श्रुती**ति। वादिविप्रतिपत्तेरपि श्रुतिविप्रतिपत्तिमूलत्वात् श्रुतिविप्रतिपत्तिरेवात्र हेतुतयोक्ता।

अधिकरणस्य पौनरुक्त्यं शङ्कते-- **नन्वि**ति। परिहरति **सत्य**मिति। पूर्वं हि शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वसिद्धवत्कारेण जगद्ब्रह्मणोः शरीरशरीरिभावेनोभयव्यपदेशमुख्यत्वमुपपादितम्। तत्र शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधानमयुक्तम्, आकृत्यधिकरणन्यायाविषयत्वादित्याक्षिप्य अंशत्वोपपादनमुखेन शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधानमुपपाद्य तत उभयव्यपदेशमुख्यत्वमिह निर्णीयत इत्यर्थः। किमुभयव्यपदेशमुख्यत्वमनन्यत्वविलक्षणत्वनिश्चयश्चांशत्वनिर्णयसापेक्षे इत्यत्राह **यावद्धी**ति। अपृथक्सिद्धप्रकारत्वनिर्णयेनोभयव्यपदेशमुख्यत्वम्; प्रभाप्रभावतोरिवापृथक्सिद्धांशांशित्वनिर्णयेन जगद्ब्रह्मणोरनन्यत्वसिद्धिः, विशेषणतया अंशत्वनिर्णयेन विलक्षणत्वसिद्धिरिति भावः। **किं तावदि**त्यादि। अंशवादिनमत्यन्तभेदवादी दूषयति **ब्रह्मणोंश** इति। विशेष्यैकदेशरूपांशपक्षे दूषणमिदम्। **यद्वे**ति। अद्वैते षड्विधतात्पर्यलिङ्गसम्भवात् द्वैतान्यथासिद्धेश्च ब्रह्मैव जीव इत्यर्थः। **अथवे**ति। प्रमाणप्रमेयव्यवस्थानुपपत्तिश्च गर्भिता।

राद्धान्तमाह **एवमि**ति। सौत्रोऽपिशब्दो भेदतात्पर्यं द्योतयति। **तत्रश्चे**ति। उत्कृष्टैः सामानाधिकरण्ये अभेदस्यौपचारिकत्वशङ्का स्यात्। इह तु दाशकितवादिनिकृष्टसामानाधि-

इत्यादिभिर्दर्श्यते। अपि दाशकितवादित्वमधीयत एके। "ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवाः" इत्याथर्वणिका ब्रह्मणो दाशकितवादित्वमप्यधीयते। ततश्च सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः। एवमुभयव्यपदेशमुख्यत्वसिद्धये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपगन्तव्यः। न च भेदव्यपदेशानां प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथासिद्धत्वम्। ब्रह्मसृज्यत्वतन्नियाम्यत्वतच्छरीरत्वतच्छेषत्वतदाधारत्वतत्पाल्यत्वतत्संहार्यत्वतदुपासकत्वतत्प्रसादलभ्यधर्मार्थकाममोक्षरूपपुरुषार्थभाक्त्वादयः तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्यक्षाद्यगोचरत्वेनानन्यथासिद्धः। अतो न जगत्सृष्ट्यादिवादिनीनां प्रमाणान्तरसिद्धभेदानुवादेन मिथ्यार्थोपदेशपरत्वम्। न चाखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणा आत्मनोऽतद्भावानुसन्धानं बहुभवनसङ्कल्पपूर्वकवियदादिसृष्टिं जीवभावेन तत्प्रवेशं विचित्रनामरूपव्याकरणं तत्कृतानन्तविषयानुभवनिमित्तसुखदुःखभागित्वम् अभोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्तर्यामित्वं जीवभूतस्य स्वस्य कारणब्रह्मात्मभावानुसन्धानं संसारमोक्षं तदुपदेशशास्त्रं च कुर्वाणेन भ्रमितव्यमित्युपदिश्यते; तथा सति उन्मत्तप्रलपितत्वापातात्॥

उपाध्यवच्छिन्नं ब्रह्म जीव इत्यपि न साधीयः; पूर्वनिर्दिष्टनियाम्यत्वादिव्यपदेशबाधादेव। न हि देवदत्तादेरेकस्यैव गृहाद्युपाधिभेदान्नियन्तृनियाम्यभावादिसिद्धिः। अत उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपेत्यम्॥४२॥

## मन्त्रवर्णात् २-३-४३

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति मन्त्रवर्णाच्च ब्रह्मणोंऽशो जीवः। अंशवाची हि पादशब्दः। 'विश्वा भूतानि' इति जीवानां बहुत्वात् बहुवचनं मन्त्रे। सूत्रेऽप्यंश इत्येकवचनं जात्यभिप्रायम्। नात्माश्रुतेरित्यत्राप्येकवचनं जात्यभिप्रायम्; "नित्यो नित्यानां चेतनश्चे-

---

करण्यमभेदस्य तात्त्विकत्वं द्योतयतीत्यर्थः। परोक्तान्यथासिद्धिमनूद्य दूषयति न चेति। प्रमाणान्तरासिद्धं भ्रममुपदिशतीति चेत्—तत्राह—न चाखण्डैकरसेति। ब्रह्मणा भ्रमितव्यमित्यन्वयार्थः। प्रमाणान्तरागोचरार्थोपदेशो हि परस्य बोधनार्थः। अतः प्रमाणान्तरागोचरं वदन् हि वेदः, त्वमेवं विद्धीति बोधयति। तस्मादपरमार्थभ्रममुपदिशता वेदेन ब्रह्मणा भ्रमितव्यमित्युक्तं भवति। न च तत् युक्तमित्यर्थः। कुत इत्यत्राह तथा सतीति। भ्रमनिवृत्त्या लोकोज्जीवनप्रवृत्तेन वेदेनाधिकभ्रमान्तरापादनं व्याहतमित्यर्थः। अभेदस्याप्यन्यथासिद्धिस्तुल्या; सोऽयं देवदत्त इत्यादिषु तस्य सिद्धत्वात्॥ न जीवब्रह्मणोरभेदः प्रत्यक्षसिद्ध इति चेत्—तर्हि जीवब्रह्मणोर्नियाम्यत्वनियन्तृत्वादिलक्षणभेदोऽपि प्रत्यक्षागोचर इत्यनन्यथासिद्धिः॥ तथाऽप्यभेदश्रुतिविरोधात् भेदश्रुतिर्बाध्यत इति चेत्— भेदश्रुतिविरोधादभेदश्रुतिर्बाध्येत॥ अपच्छेदनयात् भेदश्रुतिबाधश्चेन्न; अनियतविरोधपौर्वापर्यविषयोऽपच्छेदन्यायो नियतविरोधपौर्वापर्येषु न हि प्रवर्तते। विरोधाधिकरणन्यायात् पूर्वमेव प्रबलमिति पुरस्तादेवोक्तमिति भावः।

सत्योपाध्यवच्छिन्नब्रह्मजीवपक्षं दूषयति उपाध्यवच्छिन्नमित्यादिना।

**मन्त्रवर्णात्**॥ उभयव्यपदेशमुख्यत्वसिद्धिरूपश्रुत्यर्थापत्त्या अंशत्वं कल्पितं पूर्वसूत्रे; अंशत्वं कण्ठोक्तमिति अत्रोच्यते। अंशवाचीत्यादि। नित्यो नित्यानामित्यादिश्रुतिः, 'यदाऽऽग्नेयोऽष्टाकपालः' इतिवत् विशिष्टविधिपरा; "तद्गुणास्तु[1] विधीयेरन् अविभागाद्विधानार्थे न चेदन्येन शिष्टाः" इति न्यायात्॥ जीवानां परस्परभेदस्य लोकसिद्धत्वान्न तत् शास्त्रप्रतिपाद्यमिति चेत्—भेदस्य स्वाभाविकत्वमलौकिकम्।

---

1 प्रधानस्य कर्मणो गुणभूताः द्रव्यदेवतादयोऽपि मानान्तराप्रापिताश्चेत् विधेयप्रधानार्थाविभक्ततया तद्विशेषणतया विशिष्टविधिस्वीकारेण विधीयेरन् इति सूत्रार्थः।

तनानामेको बहूनां यो विदधाति कामान्" इत्यादिश्रुतिभ्य ईश्वराद्भेदस्यात्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात् । एवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपि भेदकाकारः आत्मयाथात्म्यवेदनक्षमैरवगम्यते । "असन्ततेश्चाव्यतिकरः" इति अनन्तरमेव च आत्मबहुत्वं वक्ष्यति ॥ ४३ ॥

अपि स्मर्यते ॥ २-३ ४४

"ममैवांशो जीवलोके जीवभूतः सनातनः" इति जीवस्य पुरुषोत्तमांशत्वं स्मर्यते । अतश्चायमंशः ॥ ४४ ॥ अंशत्वेऽपि जीवस्य ब्रह्मैकदेशत्वेन जीवगता दोषा ब्रह्मण एवेत्याशङ्क्याह—

प्रकाशादिवत्तु नैवं परः ॥ २-३-४५ ॥

तुशब्दश्चोद्यं व्यावर्तयति ; प्रकाशादिवत् जीवः परमात्मनोंशः । यथाऽग्न्यादित्यादेर्भास्वतो भारूपः प्रकाशः अंशो भवति, यथा गवाश्वशुक्लकृष्णादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादीनि विशेषणान्यंशाः ; यथा वा देहिनो देवमनुष्यादेर्देहोंशः, तद्वत् । एकवस्त्वेकदेशत्वं ह्यंशत्वम् । विशिष्टस्यैकस्य वस्तुनो विशेषणमंश एव । तथा च विवेचकाः विशिष्टे वस्तुनि विशेषणांशोऽयं विशेष्यांशोऽयमिति व्यपदिशन्ति । विशेषणविशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते ; एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यते । तदिदमुच्यते, नैवं पर इति । यथाभूतो जीवः, न तथाभूतः परः । यथैव हि प्रभायाः प्रभावान् अन्यथाभूतः, तथा प्रभास्थानीयात् स्वांशात् जीवादंशी परोऽप्यर्थान्तरभूत इत्यर्थः । एवं जीवपरयोर्विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्य-

---

तस्मान्नित्यानामेव बहुत्वं शास्त्रैकसमधिगम्यमिति जीवानां स्वाभाविकभेदः शास्त्रप्रतिपाद्य एवेति नित्यो-नित्यानामिति वाक्यसामर्थ्यं हेतुतयाऽऽह **ईश्वरादिति** । एवं भेदनित्यत्वे मुक्तौ देवादिभेदकाकाराभावात् कथं भेदो ज्ञायत इत्यत्राह **एवं नित्यानामिति** । **ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपीति** । अनेन जीवाद्वैतपरवाक्यानामाकारैक्यपरत्वं दर्शितम् । प्रत्यक्त्वेन पराक्त्वेन च भेदो गृह्यत इत्यर्थः । अयमर्थः सौत्र इत्याह **असन्ततेरिति** ।

**अपि स्मर्यते** ॥ तत्रैवानन्तरोक्तं पुरुषोत्तमशब्दनिर्वचनं तेन क्षराक्षरवैलक्षण्यम्, अंशशब्दार्थस्य तदनुरोधेन वक्तव्यत्वं चाभिप्रेत्य **पुरुषोत्तमांशत्वमित्युक्तम्** ।

अनन्तरसूत्रशङ्कामाह—**अंशत्वेपीति** । **प्रकाशादिवत्तु नैवं परः** ॥ आदिशब्दोपात्तमाह **गवाश्वेति** । द्रव्ययोरपृथक्सिद्धविशेषणविशेष्यभूतयोरंशांशित्वं वदता द्रव्ययोः शरीरात्मनोरप्यंशांशित्वमुक्तं भवतीत्यभिप्रायेणाह-**यथा वा देहिन** इति । प्रकाशादीनामंशत्वं कथमिति शङ्कायामंशस्वरूपं शिक्षयति **एकवस्त्विति** । तादृशांशत्वं विशेषणविशेष्ययोरपि । विशेषणस्यास्तीत्याह **विशिष्टस्यैकस्येति** । तदेव वृद्धव्यवहारेण द्रढयति-**तथा चेति** । ततः किं प्रस्तुतदोषस्पर्शशङ्काया इत्यत्राह **विशेषणविशेष्ययोरिति** । बहुलत्वसङ्कुचितत्वविरलत्वविस्तृतत्वादिस्वभाववैलक्षण्यं दृश्यत इत्यर्थः । दृष्टान्ते शिक्षितं वैलक्षण्यं दार्ष्टान्तिके दर्शयति-**एवमिति** । उक्तार्थपरत्वेन सूत्रखण्डमवतारयति **तदिदमिति** । वाचकत्वप्रकारमाह **यथाभूत इति** । तदेव विवृण्वन् सूत्रस्य वाक्यार्थमाह-**यथैवहीति** । तेनोभयव्यपदेशमुख्यत्वसिद्धिमाह **एवमिति** । प्रकाशादिष्वपि विशेष्यपर्यन्ताभिधानं दृश्यते—यथा [1]भानुःभानुमान्,

---

1 भानुमान्, ज्योतिष्मान् तेजस्वी इति वक्तव्ये तत्र तत्र भानुः, ज्योतिः, तेज इत्येतावदपि प्रयुज्यते विशिष्टविवक्षयेत्यर्थः । अतो नात्र धर्मिगतभानुत्वादिसामान्यधर्मविवक्षा, न वा ज्योतिष्मानिति पुंलिङ्गायोग इति ।

पर्यन्तत्वमाश्रित्य मुख्यत्वेनोपपद्यन्ते । 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादिषु, तच्छब्दब्रह्मशब्दवत् त्वमयमात्मेति शब्दा अपि ; जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायित्वात् इत्ययमर्थः प्रागेव प्रपञ्चितः ॥ ४५ ॥

## स्मरन्ति च ॥ २-३-४६ ॥

एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन चांशांशिभावं जगद्ब्रह्मणोः पराशरादयः स्मरन्ति—"एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज! । तस्य सृज्यस्य संभूतौ तत् सर्वं वै हरेस्तनुः" इत्यादिना । चकारात् श्रुतयोऽपि, "यस्यात्मा शरीरम्" इत्यादिनाऽऽत्मशरीरभावेनांशांशित्वं वदन्तीत्युच्यते ॥ ४६ ॥

एवं ब्रह्मणोंशत्वे ब्रह्मप्रवर्त्यत्वे ज्ञत्वे च सर्वेषां समाने केषाञ्चिद्वेदाध्ययनतदर्थानुष्ठानाद्यनुज्ञा, केषाञ्चित् तत्परिहारः, केषाञ्चिद्दर्शनस्पर्शनाद्यनुज्ञा, केषाञ्चित्तत्परिहारश्च, शास्त्रेषु कथमुपपद्यत इत्याशङ्क्याह—

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ २-३-४७ ॥

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे सत्यपि ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपशुच्यशुचिदेहसंबन्धनिबन्धनौ अनुज्ञापरिहारावुपपद्येते ; ज्योतिरादिवत्—यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि श्रोत्रियागारादग्निराह्रियते, श्मशानादेस्तु परिह्रियते, यथा चान्नादि श्रोत्रियादेरनुज्ञायते ; अभिशस्तादेस्तु परिह्रियते ॥ ४७ ॥

## असन्ततेश्चाव्यतिकरः ॥ २-३-४८ ॥

ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदात् अणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोग-

---

ज्योतिः—ज्योतिष्मान्, तेजः—तेजस्वी' इत्यादि । तदेव पक्षे दर्शयति **तत्त्वमसीति** । **तत्त्वमसी**त्यारभ्य **त्वमयमात्मेति** शब्दा अपीत्यन्तं प्रतिज्ञावाक्यम् । त्वम् [1]अयम् आत्मेति शब्दा अपि **तच्छब्दब्रह्मशब्दवत्** तच्छब्दब्रह्मशब्दतुल्यार्था इत्यर्थः । **जीवशरीरके**त्यादिना हेतुरुच्यते । **प्रागेव प्रपञ्चित** इति । अत्रैव वक्तव्यं सूत्राभिप्रेतं सर्वं पूर्वमुक्तमित्यर्थः ॥

**स्मरन्ति च** । 'अपि स्मर्यते' इति सूत्रे अंशत्वमात्रे स्मृतिवचनमुक्तम् । अस्मिन् सूत्रे विशिष्टैकदेशविशेषणरूपांशत्वेऽपि स्मृतिवचनमुच्यत इति भिदा । तदेतदभिप्रेत्याह **एव**मिति । चार्थमाह **चकारा**दिति । श्रुतिस्मृतिवचनयोर्द्वयोरपि वक्तव्यत्वे सति दृष्टान्तोपादानमुखेन विशदीकारातिशयात् स्मृतिवचनं सूत्रे कण्ठोक्तम् ॥

अनन्तरसूत्रशङ्कामाह **एव**मिति । **अंशत्व** इति एतदधिकरणार्थः, **ब्रह्मप्रवर्त्यत्व** इति पूर्वाधिकरणार्थः, **ज्ञत्व** इति तत्पूर्वाधिकरणार्थश्चोक्तः ॥ **अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्** ॥ आदिशब्दार्थमाह-**यथा चे**ति ॥

**असन्ततेश्चाव्यतिकरः** ॥ समन्तात् ततिः **सन्ततिः**—विभुत्वम् ; तदभावोऽ**सन्ततिः**—अणुत्वम् । **अन्योन्यभेदा**दिति चशब्दसमुच्चितो हेतुर्दर्शितः । **सूत्राभिप्राय**माह

---

1 आत्मशब्दविशेषणे अयंशब्देऽपि विशिष्टपरत्वमिष्टम् । शिष्टमस्मदीये आचार्यभाष्यतात्पर्ये (16 मं.) ।

व्यतिकरोऽपि न भवति । भ्रान्तब्रह्मजीववादे चोपहितब्रह्मजीववादे च जीवपरयोर्जीवानां च भोगव्यतिकरादयः सर्वे दोषाः सन्तीत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः ॥ ४८ ॥

ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदाद्भोगव्यवस्थादय उपपद्यन्ते ; अत आह—

**आभास(सा) एव च** ॥ २-३-४९ ॥

अखण्डैकरसप्रकाशमात्रस्वरूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव ; प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोपपादितम् । आभासा एवेति वा पाठः । तथा सति हेतव आभासाः । चकारात् 'पृथगात्मानं प्रेरितारं च मत्वा', 'ज्ञाज्ञौ द्वौ', 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यादिश्रुतिविरोधश्च । अविद्यापरिकल्पितोपाधिभेदे हि सर्वोपाधिभिरुपहित-स्वरूपस्यैकत्वाभ्युपगमाद्भोगव्यतिकरस्तदवस्थ एव ॥ ४९ ॥

पारमार्थिकोपाध्युपहितब्रह्मजीववादेऽप्युपाधिभेदहेतुभूतानाद्यदृष्टवशात् व्यवस्था भविष्यतीत्याशङ्क्याह—

**अदृष्टानियमात्** ॥ २-३-५० ॥

उपाधिपरम्पराहेतुभूतस्यादृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्थैव ; उपाधिभिरदृष्टैश्च स्वसम्बन्धेन ब्रह्मस्वरूपच्छेदासंभवात् ॥ ५० ॥

**अभिसन्ध्यादिष्वपि चैवम्** ॥ २-३-५१ ॥

अदृष्टहेतुभूताभिसन्ध्यादिष्वपि उक्तादेव हेतोरनियम एव ॥ ५१ ॥

---

**भ्रान्तब्रह्मेति** । **परपक्षे** भोगव्यवस्थानुपपत्तिरभिप्रेतेत्यर्थः । अविद्यादेराश्रयभेदाभावात् तदनुपपत्तिः । "नानाऽऽत्मानो व्यवस्थातः" इति [1]न्यायसूत्रम् । 'किं सुखादीनां स्वरूपभेदो व्यवस्था, उताश्रयभेदः? न प्रथमः; आश्रयभेदानापादकत्वात् । न द्वितीयः; हेतोः साध्याविशिष्टत्वात्' इति **कैश्चिदुच्यते** । तन्न; प्रतिसन्धानाभावरूपा व्यवस्थेत्यभिप्रेतत्वात् । तिरस्कारकाभावे सति प्रतिसन्धानमात्मैक्यव्यापकम्, तिरस्कारकाभावेऽप्यप्रतिसन्धानादात्मैक्यनिवृत्तिरित्यर्थः ॥

अनन्तरसूत्रशङ्कामाह ॥ **नन्विति** । **आभासएव च** ॥ उपाधिभेदाद्व्यवस्थेत्यत्राह **अविद्येति** । तिरोधानाद्येव नोपपद्यते, उपपन्नेऽपि व्यवस्था नोपपद्यत इत्यर्थः ॥

अनन्तरसूत्रशङ्कामाह-**पारमार्थिकेति** । इदमप्याशङ्क्याहेति अपिशब्दार्थः[2] । **अदृष्टानियमात्** । प्रदेशभेदोऽस्तीत्यत्राह **उपाधिभिरिति** । उपाध्याश्रयस्यैकत्वात् तस्य चाच्छेद्यत्वात् व्यवस्थानुपपत्तिरित्यर्थः ।

**अभिसन्ध्यादिष्वपि चैवम्** ॥ चशब्दोऽवधारणे । एवमेवेत्यर्थः । **अभिसन्धिः** सङ्कल्पः । आदिशब्दादुद्योगानुष्ठानादिकं विवक्षितम् । **उक्तादेवेति** अच्छेद्यत्वात् सर्वप्रदेशानां ब्रह्मस्वरूपभूत-प्रदेशत्वादेवेत्यर्थः ॥

---

1 न्यायस्तर्कः । तर्कसूत्रं वैशेषिकसूत्रम् ; न हि न्यायदर्शनगतमिदम् ।

2 वादेऽपीत्यत्रत्योऽपिः इतीत्येतदनन्तरं योज्य इति भावः । वादेऽप्याहेत्यन्वयेऽपि भाव एक एव ।

**प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ २-३-५२ ॥**

यद्यपि एकमेव ब्रह्मस्वरूपम्; तत् छेदानर्हं नानाविधोपाधिभिः सम्बध्यते—तथाऽप्युपाधिसंबन्धिब्रह्मप्रदेशभेदादुपपद्यत एव भोगव्यवस्थेति चेत्—तन्न, उपाधीनां तत्रतत्र गमनात् सर्वप्रदेशानां सर्वोपाध्यन्तर्भावात् व्यतिकरस्तदवस्थ एव। प्रदेशभेदेन संबन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात् तत्तत्प्रदेशसंबन्धि दुःखं ब्रह्मण एव स्यात्। पूर्वत्र, "नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वा ऽन्यथा", "उपलब्धिवदनियमः" इत्याभ्यां सूत्राभ्यां वेदबाह्यानां सर्वगतजीववादिनां दोष उक्तः; अत्र तु "आभास एव च" इत्यादिभिः सूत्रैर्वेदावलम्बिनामात्मैकत्ववादिनां दोष उच्यते ॥५२॥ इति अंशाधिकरणम् ॥ ७ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य तृतीयः पादः ॥

---

**प्रदेशभेदादिति चेन्नान्तर्भावात्** ॥ जीवानामन्योन्यभोगव्यतिकरमाह **उपाधीना**मिति। एतेषां भोगादयो ब्रह्मणि स्युरित्याह **प्रदेशभेदेने**ति। [एवं?]जीवेश्वरव्यतिकर उक्तो भवति। **असन्तते**श्चेत्यादिसूत्राणां साङ्ख्यादिव्युदासपरत्वं **परोक्तं** पौनरुक्त्येन दूषयति-**पूर्वत्रे**त्यादिना।

**परे** तु पूर्वाधिकरणे कारयितृत्वश्रुत्यादिभिर्जीवस्य परायत्तप्रवृत्तित्वे सिद्धे जीवेश्वरसंबन्धनिरूपणपरमधिकरणं वर्णयन्ति। तन्मते अंशांशिभावोऽनुपपन्नः; जीवेश्वरयोरुभयोरपि सन्मात्रब्रह्मण्यविद्याकल्पितत्वात् रज्जुकल्पितयोः सर्पभूदलनयोरिव मिथोंशांशिभावानुपपत्तेः। तयोर्निहीनोत्कृष्टोपाधिपरिकल्पितत्वेऽपि बृहदल्पघटयोरिवांशांशिभावो न घटते। अत एव, पादोऽस्येति श्रुतिः, 'ममैवांशः' इति स्मृतिश्च न सङ्गच्छते; तयोः सहस्रशीर्षत्वादिगुणकमहापुरुषविषयत्वात्। अस्य, ममेति पदयोर्निर्विशेषपरत्वे लक्षणा। निर्विशेषचिन्मात्रस्यापि न जीवं प्रत्यंशित्वं युक्तम्; स्थाणावध्यस्तं पुरुषं प्रति स्थाणोरंशित्वप्रसिद्ध्यभावात्। ग्रन्थविरोधश्च; जीवेश्वरसम्बन्धनिरूपणपरत्वाभ्युपगमात्। श्रुतिस्मृतिसूत्रस्वारस्यविरोधश्च ॥ अंश इवांश इति विवक्षितत्वादंशशब्दोऽप्यमुख्य इति चेत्—मुख्ये संभवत्यमुख्यत्वमेव दोषः। नानात्वैकत्वव्यपदेशाभ्यां समर्थनीयमंशत्वञ्च कस्य? न तावदुपाधेः; तस्यापारमार्थिकस्यैक्यायोगात्। न चोपाध्युपलक्षितब्रह्मणः; तस्याभिन्नतया नानात्वाभावात्। नाप्युपाधिविशिष्टस्य; तस्य स्वात्मानं प्रति अंशत्वानुपपत्तेः। नाप्यनुपहितस्वरूपं प्रति उपहितस्वरूपस्यांशत्वम्; वस्तुनि स्वतोंशभेदाभावेन उपहितानुपहितविभागानुपपत्तेः। कृत्स्नमुपहितमनुपहितं वा स्यात्। न चाधिष्ठानं प्रति अध्यस्तस्यांशत्वम्। अधिष्ठानमात्रस्यांशित्वं स्थाणोरिवानुपपन्नमिति ह्युक्तम्।

जीवेश्वरयोर्वस्तुतो भेदाभावेन जीवगतदुःखेनेश्वरस्य दुःखित्वमाशङ्क्य, **प्रकाशादिव**दिति सूत्रम् आलोकाकाशरविमण्डलेषु अङ्गुलिघटकरकतरङ्गादिगतैर्ह्रस्वत्वमहत्त्वगमनागमनकम्पादिभिरस्पृष्टत्ववत् जीवदुःखैरीश्वरस्यास्पर्श इति परिहारपरं व्याख्यातम्। तच्चायुक्तम्; ईश्वरस्य सर्वज्ञत्वाभ्युपगमात्, सर्वान् जीवानात्मनोऽनन्यत्वेन जानतस्तस्य जीवगतदुःखाकारेण दुःखिताया दुर्निवारत्वात्। स्वगतत्वेन दुःखसाक्षात्कर्तृत्वं हि दुःखित्वम् ॥ दुःखं मिथ्याभूतमिति चेत्—जीवस्यापि तन्मिथ्येति जीवतुल्यत्वं स्यात् ॥ ईश्वरो मिथ्यात्वेन जानातीति चेत्—श्रुतवेदान्तस्य मुमुक्षोर्बाधितानुवृत्ताविद्यस्य शिरस्तोदादिवत् ईश्वरस्य दुःखमवर्जनीयं स्यात्।

**अनुज्ञापरिहारौ** अहं ममेत्यविद्याकृताभिमानप्रयुक्तौ ; एकत्वदर्शिनोऽभिमानरहितस्य न शास्त्रनियोज्यत्वमिति चानुपपन्नम् ; 'विप्राकृतिविचेष्टितम्', 'सतां मार्गमदूषयन्' इत्यादिभिः आदिभरतपराशरवसिष्ठादीनां शास्त्रानुसारित्वदर्शनात् ; "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इति ब्रह्मविद एव यावच्छरीरावसानं शास्त्रवश्यत्वावगमाच्च ; अयुक्तावस्थायां क्षुदादिपरिहारार्थमोदनादौ व्याप्रियमाणस्य शास्त्रीयानुष्ठानावसरेऽभिमानविरहादनन्वयस्य वक्तुमशक्यत्वाच्च ।

**असन्ततेश्चाव्यतिकर** इति—उपाधीनां सर्वत्र संततत्वाभावान्न तत्तत्सुखादिव्यतिकर इत्युक्तम् । तच्चायुक्तम् ; सौभरिप्रभृतीनामिवात्मैकत्वे सुखादिव्यतिकरप्रसङ्गात् ॥ सौभरिशरीरेषु नान्तःकरणभेद इति चेन्न—अणोरन्तःकरणस्य युगपद्बहुशरीरसंसर्गानुपपत्तेः । ननु परिच्छिन्नत्वे सत्यनुपलभ्यमानत्वमणुत्वम् । तच्चैकदा एकशरीरस्येवानेकशरीरसंबन्धिन एकस्योपपन्नमिति चेत् , न—तथा सति जीवगतस्य आराग्रमात्रपरिमाणरूपस्याणुत्वस्यान्तःकरणोपाधिकत्वानुपपत्तेः ।

**'आभास'** इति—परमात्मन **आभासः** प्रतिबिम्बभूतो जीव इत्युक्तम् । तदप्यचाक्षुषाणां प्रतिबिम्बाभावात् , आरम्भणाधिकरणदर्शितैर्दूषणान्तरैश्चानुपपन्नम् ।

**अपरेषां** पक्षेऽपि, **प्रकाशादिवत्, असन्ततेश्च** इति सूत्रद्वयस्य जीवेश्वरव्यतिकरभोगव्यतिकरपरिहारपरत्वं न घटते—ईश्वरस्य सार्वज्ञ्याभ्युपगमात् । अन्तःकरणभेदेऽपि सौभरिशरीरेष्वात्मैक्ये भोगव्यतिकरदर्शनाच्च । **प्रदेशभेदादिति चेत्** इति—एकशरीरावच्छिन्नात्मप्रदेशेऽदृष्टसमवायात् सुखादिव्यवस्था चायुक्ता—एकशरीरे सर्वात्मनां विभूनामन्तर्भावादिति **परेषां** स्वोक्तदूषणं स्वस्यापि प्राप्नोति । उपाधीनां गत्वरतयैकैकोपाधिषु सर्वात्मप्रदेशान्तर्भावात् , अदृष्टस्याप्यनियतत्वेन सुखादिव्यवस्थानुपपत्तेः । ब्रह्मप्रदेशानामुपाधिना छिन्नत्वे तदभावे च समन्वयाधिकरणोक्ता दोषा अनुसन्धेयाः । इहैव हि ते सूत्रकारैर्विवक्षिताः ; भाष्यकारैस्तु प्रसङ्गात् तत्र दर्शिताः । अत इह तेषामनुपन्यासः ।

**असन्ततेश्चे**त्यादिसूत्राणि साङ्ख्यादिव्युदासपरत्वेन **परैरपरैश्च** व्याख्यातानि । तदयुक्तम् ; **नित्योपलब्धी**त्यादिना पुनरुक्तिप्रसङ्गादित्युक्तम् । **नित्योपलब्धि**इत्यादिसूत्रद्वयस्यान्यथार्थवर्णनानुपपत्तिः प्रागेव दर्शिता । अतस्तयोर्यथोक्तार्थपरत्वमवर्जनीयम् । तथा सति पुनरुक्तिपरिहाराय, असन्ततेश्चेत्यादिसूत्राणां कुदृष्टिव्युदासकत्वमास्थेयम् ।

**अन्येषामपीदमधिकरणं न घटते,** नानात्वैकत्वव्यपदेशसाध्यत्वादंशांशिभावस्य । किं सन्मात्रस्य ब्रह्मणोंशो जीवः, उत ईश्वरस्य । प्रथमे भेदव्यपदेशहेतुर्न सिध्यति ; सन्मात्रात् जीवस्य भेदव्यपदेशाभावात् । ईश्वरादेव हि भेदं व्यपदिशन्ति श्रुतयः । सन्मात्रादन्यत्वे जीवानामसत्त्वं च प्रसजेत् । श्रुतिस्मृतिस्वारस्यभङ्गश्च । 'सहस्रशीर्षा पुरुषः', 'उतामृतत्वस्येशानः', 'पादोऽस्य विश्वा भूतानि', 'ममैवांशो जीवलोके जीवभूतः सनातनः' इतीश्वरांशत्वं हि स्वरसतः प्रतीयते । द्वितीये कल्पे भवदभ्युपगमविरोधः, ब्रह्मणोंशित्वं भोक्तृभोग्यनियन्तृणामंशत्वमपि हि भवदभिमतम् ; न तु तेषां परस्परांशांशिभावः । नन्वीश्वरांशस्य बृहत्त्वादंशित्वव्यवहारोपपत्तिः । बृहति मृत्तिकांशे अंशित्वव्यवहारदर्शनादिति चेन्न—बृहति घटे क्षुद्रघटं प्रत्यंशित्वव्यवहारादर्शनात् , तत्सदृशि तच्छब्दस्य गौणतया बृहत्त्वसाधर्म्य-

णांशित्वस्यामुख्यत्वाच्च । गौणोऽप्यंशित्वव्यवहारो बृहत्युपादानद्रव्येऽवस्थान्तरानापन्न एव भवति ; न त्ववस्थान्तरप्राप्ते । बृहति मृत्पिण्डांशे घटत्वाद्यनापन्न एव ह्यंशित्वव्यवहारः ; न तु घटत्वेनोपयुक्तेऽपि । एवं बृहन्नप्यंशः सन्मात्ररूपश्चेत् , अंशित्वव्यवहारो घटते । स तु नियन्तृत्वरूपावस्थापन्न इति न तत्र गौणोऽप्यंशित्वव्यवहारो घटते । **प्रकाशादिवदिति**—सौरचान्द्रादिप्रकाशमणिमन्त्रौषधादीनां दाहकत्व-शक्तिसद्भावासद्भावादिस्वभावव्यवस्थावत् दुःखित्वादिव्यवस्थोपपत्तिर्जीवेश्वरयोरिति व्याख्यातम् । तथा सति स्वभावव्यवस्थामात्रे दृष्टान्त उपन्यस्तः स्यात् ; न त्वंशांशिनोः स्वभावव्यवस्थायां दृष्टान्त उक्तः स्यात् । ततो वरमंशांशिभावे स्थित एव स्वभावव्यवस्थायां दृष्टान्तोपन्यासः ; अंशांशिभावनिबन्धनशङ्कापरिहार-परत्वात् सूत्रस्य । समुदायैकदेशत्वमेवांशशब्दनिमित्तम् । अत एव हि दायविभागे गोमहिषभूहिरण्यादिषु, अयं ममांशः, अयमस्यांश इति व्यवहारः ॥

विशेष्यांश इति व्यवहारदर्शनादीश्वरस्याप्यंशत्वं त्वन्मते प्रसज्यत इति चेन्न ; विशिष्टापेक्षया विशेष्येऽप्यंशशब्दव्यवहारेऽपि विशेषणं प्रति प्रधानतया अंशित्वव्यवहारोपपत्तेः । अप्रधानं विशेषणं प्रति अंशत्वव्यवहारानुपपत्तेः । तथा व्यवहाराभावश्च प्राधान्यादेव । अत एव देवदत्तादेर्गोमहिषाद्य-पेक्षयांशित्वव्यवहारः । यदा समुदाये प्राधान्यविवक्षा, तदा तस्यांशत्वम् । यदा तदेकदेशान्तरे प्राधान्यविवक्षा, तदा तदेकदेशान्तरस्यांशित्वव्यवहारः । समुदायस्य प्राधान्यं पौष्कल्यलक्षणम् ; देवदत्तादेः शेषित्वलक्षणम् ; विशेष्यस्य त्वाधारत्वादिलक्षणम् । संयोगलक्षणसम्बन्धे सत्यपि प्राधान्याविवक्षया हि भूतलस्य गोमहिषहेमाद्यंशित्वव्यवहाराभावः ।

अतः सर्वजीवैरभिन्नत्वं स्वस्य जानत ईश्वरस्यांशभेदे सत्यपि दुःखित्वं भवेत् ; यथा सौभरेः ॥ सर्वान् जीवान् शरीरत्वेन जानत ईश्वरस्य त्वन्मतेऽपि दुःखित्वं स्यादिति चेन्न ; सपक्षाभावात् ॥ शरीरगतदुःखं शरीरिणो देवदत्तादेर्दृश्यत इति चेन्न ; दुःखस्य शरीरगतत्वाभावात् । किं व्रणादिकमेव दुःखम् , उत तज्ज्ञानम् । प्रथमे व्रणस्यात्मन्यभावान्न शरीरगतस्य शरीरिगतत्वम् । द्वितीये शरीरस्य व्रणज्ञानाभावात् दुःखस्यात्मगतत्वमित्युभयथापि दृष्टान्तस्य साध्यविकलता । अतो नेश्वरस्यास्मन्मते दुःखित्वादिप्रसङ्गः ॥

इति अंशाधिकरणम् ॥ ७ ॥

**इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा-भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥**

**श्रीमते वात्स्यवरदार्यमहादेशिकाय नमः।**

श्रीमते रामानुजाय नमः ।

## श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

### द्वितीयाध्याये चतुर्थः पादः

### प्राणोत्पत्त्यधिकरणम्—२-४-१

### तथा प्राणाः ॥ २-४-१ ॥

ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्यत्वेनोत्पत्तावुक्तायां जीवस्य कार्यत्वेऽपि स्वरूपान्यथाभावलक्षणोत्पत्तिरपोदिता ; तत्प्रसङ्गेन जीवस्वरूपं शोधितम् । संप्रति जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते । तत्र किमिन्द्रियाणां कार्यत्वं जीववत्, उत वियदादिवदिति चिन्त्यते । किं युक्तम्? जीववदेवेत्याह पूर्वपक्षी—तथा प्राणाः इति । प्राणाः—इन्द्रियाणि । यथा जीवो नोत्पद्यते, तथेन्द्रियाण्यपि नोत्पद्यन्ते । कुतः । श्रुतेः । यथा जीवस्यानुत्पत्तिः श्रुतेरवगम्यते, तथा प्राणानामप्यनुत्पत्तिः श्रुतेरेवावगम्यते । 'तथा प्राणा' इति प्रमाणमप्यतिदिश्यते ॥ का पुनरत्र श्रुतिः । "असद्वा इदमग्र आसीत् । तदाहुः, किं तदासीदिति। ऋषयो वाव ते अग्रे सदासीत् । तदाहुः, के ते ऋषय इति । प्राणा वाव ऋषयः" इति जगदुत्पत्तेः प्राक् इन्द्रियाणां सद्भावः श्रूयते । प्राणशब्दे बहुवचनादिन्द्रियाण्येवेति निश्चीयते । न चेयं श्रुतिः, "वायुश्चान्तरिक्षं चैतदमृतम्", "सैषाऽनस्तमिता देवता यद् वायुः" इतिवत् चिरकालावस्थायित्वेन परिणेतुं शक्या, "असद्वा इदमग्र आसीत्" इति कृत्स्नप्रपञ्चप्रलयवेलायामप्यवस्थितत्वश्रवणात् । उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इव नेतव्या इति ॥ १ ॥

---

तथ प्राणाः । पादसङ्गतिमाह—**ब्रह्मव्यतिरिक्तस्येति** । ज्ञातृत्वादिकं निरूपयदधिकरणं प्रसङ्गात्सङ्गतम् । तस्मात् तत्पूर्वाधिकरणेन पादसङ्गतिरित्यर्थः । जीवोत्पत्तिनिरूपणानन्तरं जीवोपकरणानामुत्पत्तिप्रकारो विशोध्यत इति सङ्गतिः ॥ नन्ववधारणप्रतिज्ञानादिभिः सिद्धान्तश्चेत्—वियदादिन्यायेन कृतत्वादनारम्भणीयता ॥ नैवम् ; "प्राणा वाव ऋषयः" इति श्रुतेरकृतनिर्वाहत्वात् । अत एव हि सिद्धान्तन्यायं प्रागुक्तमभिप्रेत्य तत्र पृथक्सूत्रमनिबध्नन् प्राणविषयश्रुतिनिर्वाहमेव सूत्रकारो न्यबध्नात । किमिन्द्रियाणि जीववन्नोत्पद्यन्ते उत वियदादिवत् उत्पद्यन्त इति ; किम् 'एतस्माज्जायते' इत्यादि वाक्यं तेषामुत्पत्तिं प्रतिपादयति, नेति; असद्वा इदमित्यादिवाक्यं सृष्टेः प्रागिन्द्रियसद्भावमवगमयति, नेति ; किं प्राणशब्द इन्द्रियपरः उत परमात्मपरः ; 'प्राणा वाव ऋषयः' इति ऋषिशब्दः प्राणशब्दस्य परमात्मपरतामवगमयति, नेति । यदा नावगमयति, तदा प्राणशब्दस्येन्द्रियपरत्वेन, असद्वा इदमित्यादिवाक्यस्य प्रागिन्द्रियसद्भावावगमकत्वात् एतस्मादिति वाक्यस्य तदुत्पत्तिप्रतिपादनासामर्थ्यादिन्द्रियाणि जीववन्नोत्पद्यन्त इति पूर्वः पक्षः । यदाऽवगमयति, तदा प्राणशब्दस्य परमात्मपरत्वेन, 'असद्वा इदम्' इत्यादिवाक्यस्य सृष्टेः प्रागिन्द्रियसद्भावानवगमकत्वात् एतस्मादिति वाक्यस्य तदुत्पत्तिप्रतिपादनसामर्थ्येन वियदादिवदिन्द्रियाण्युत्पद्यन्त इति सिद्धान्तः । श्रुत्यवगतत्वं कथं सूत्रितम् ; न हि श्रुतेरिति सूत्रे पठ्यते । तत् कथमेवमुच्यते इत्यत्राह **तथा प्राणा** इति **प्रमाणमपीति** । विवक्षितश्रुतेरस्पष्टत्वादाह **का पुन**रिति । 'अत एव प्राणः' इत्यादिषु प्राणशब्दः परमात्मवाचको दृष्ट इत्यत्राह **प्राणशब्दे बहुवचना**दिति ।

एवं प्राप्तेऽभिधीयते—वियदादिवदेव प्राणाश्चोत्पद्यन्ते। कुतः। "सदेव सोम्येदमग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिषु प्राक्सृष्टेरेकत्वावधारणात्, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति इन्द्रियाणामुत्पत्तिश्रवणाच्च प्रागवस्थानासंभवात्। न चात्मोत्पत्तिवादवत् इन्द्रियोत्पत्तिवादाः परिणेतुं शक्याः; आत्मवत् उत्पत्तिप्रतिषेधश्रुतीनां नित्यत्वश्रुतीनां चादर्शनात्। "असद्वा इदमग्र आसीत्" इत्यादिवाक्येऽपि प्राणशब्देन परमात्मैव निर्दिश्यते, "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति प्राणशब्दस्य परमात्मन्यपि प्रसिद्धेः। "प्राणा वाव ऋषयः" इति ऋषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते; न त्वचेतनेष्विन्द्रियेषु। ऋषयः प्राणा इति च बहुवचनश्रुतिः कथमुपपद्यत इति चेत्—तत्राह—

**गौण्यसंभवात् तत्प्राक्छ्रुतेश्च ॥ २-४-२ ॥**

बहुवचनश्रुतिर्गौणी; बह्वर्थासंभवात्; तस्यैव परमात्मनः सृष्टेः प्रागवस्थानश्रुतेरेव ॥ २ ॥

**तत्पूर्वकत्वाद्वाचः ॥ २-४-३ ॥**

इतश्च प्राणशब्दः परमात्मवचनः। वाचः—परमात्मव्यतिरिक्तविषयस्य नामधेयस्य वाग्विषयभूतवियदादिसृष्टिपूर्वकत्वात्। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति नामरूपभाजामभावात् तदानीं वागादीन्द्रियकार्याभावाच्च तानि न सन्तीत्यर्थः ॥ ३ ॥

॥ इति प्राणोत्पत्त्यधिकरणम् ॥

---

**एवं प्राप्त** इति। अनेककारणवाक्यगतैकत्वावधारणस्वारस्यात्, ऋषिशब्दस्य द्रष्टरि स्वारस्येन दर्शनकरणे स्वारस्याभावाच्च, 'एतस्माज्जायते' इति वाक्ये खादीनां मुख्यार्थेन जनिधातुना प्राणस्योत्पत्तिवचनस्वारस्यात् उत्पत्त्यादिनिषेधनित्यत्ववचनाभावात्, प्राणशब्दस्य परमात्मनि प्रयोगसद्भावाच्च परमात्मैवोच्यत इत्यर्थः। अनन्तरसूत्रस्य बहुवचनमात्रनिर्वाहपरत्वेनान्यत् सिद्धान्तयुक्तिजातमर्थसिद्धमिति सूत्रकाराभिप्राय इति तदभिप्रेतं सर्वं स्वयमेवोक्तवान् **वियदादी**त्यादिना॥ अनन्तरसूत्रशङ्कामाह—**ऋषय** इति। **गौण्यसम्भवात् तत्प्राक्छ्रुतेश्च**॥ बह्वर्थासंभवमुपपादयति **तस्यैवे**ति। **एव**कारेण सूत्रस्थश्चशब्दो व्याख्यातः॥

**तत्पूर्वकत्वाद्वाचः**॥ आत्मा ह्यदृष्टसंस्कारस्थितिकार्यदर्शनात् तदानीं कल्प्यते, एवमिन्द्रियकार्यं तदा दृश्यते चेत्—इन्द्रियाण्यपि कल्प्येरन्, न च तदित्याह **इतश्चे**त्यादि। उक्तार्थे श्रुतिवाक्यं दर्शयन् फलितमर्थमाह **तद्धेद**मिति। वाक्कार्यमुच्चारणम्; श्रोत्रकार्यं श्रवणम्; एवं तत्तत्कर्मज्ञानेन्द्रियविषयाभावात् तत्तदिन्द्रियकार्यं नोपपद्यत इति न तदानीं कार्यकल्प्यानीन्द्रियाणीत्यर्थः॥

**परैस्तु** पूर्वाधिकरणोक्तस्य सर्वगतब्रह्मात्मवाददोषस्य जीवं प्रति अनियमस्य तथाशब्देनातिदेशो देहानियमेन प्राणानियमस्यापि सिद्धत्वेन कृतकरत्वात् जीववदनुत्पत्त्यतिदेशे सिद्धान्तविरोधात् अस्य पूर्वपक्षसूत्रत्वे तद्व्यवच्छेदेन सिद्धान्तद्योतकसूत्रान्तराभावाच्च व्यवहितस्यापि वियदाधिकरणोक्तस्य संभवस्यातिदेश[इति], 'अस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः' इति प्रकृता(पूर्वा)धिकरणविषयवाक्यस्थलोकादिदृष्टान्तीकरणेन प्राणेषु **तथाशब्देन** तद्धर्मातिदेश इति च व्याख्यातम्। ततोऽप्यव्यवहितजीवानुत्पत्त्यतिदेशेन पूर्वपक्षसूत्रत्वं स्वारसिकम्। प्रासङ्गिकाधिकरणान्तरव्यवधिस्तु न दोषः। न च सिद्धान्तसूत्रान्तराभावादाद्यस्यैव सिद्धान्तसूत्रत्वमाश्रयणीयम्, बाधकपरिहारसूत्रस्य सिद्धान्तसाधकत्वात्। सिद्धान्त-

साधकयुक्तेरसूत्रितत्वं तु पूर्वोक्तादेव सूत्रप्रणयननैरपेक्ष्यात् । बाधकपरिहारस्य त्वनुक्तत्वात् तस्यैव सूत्रितत्वं युक्तमित्युक्तम् । तुशब्दार्थेन चशब्देन सिद्धान्तद्योतनमित्युक्तं दीपे । **गौण्यसंभवात् तत्प्राक्छ्रुतेश्चेत्येकसूत्रत्वं** चात एव युक्तम् । न चासौ चशब्दः समुच्चयार्थः; साधकसाधकत्वेन समुच्चयवाचिनैरपेक्ष्यात् । गौण्याः जन्मश्रुतेरसंभवादिति योजना च क्लिष्टा; 'गौण्यसंभवाच्छब्दाच्च' इति पूर्वपादावगतसूत्रशैलीविरुद्धा च । अक्लिष्टरीत्यविरुद्धनिर्वाहे संभवति तद्विपरीतनिर्वाहश्चायुक्तः । **तत्प्राक्छ्रुतेरिति**—खादिष्वनुषक्तस्य जन्मशब्दस्य ततः प्राक्छ्रुतेः, खादिषु च तस्य मुख्यतायाः स्थापितत्वात् प्राणोत्पत्तिर्मुख्येति व्याख्यातम् । तत् नेयार्थम्, ततोऽप्यनेयार्थव्याख्यानं वरम् । तच्छब्दस्य खादिष्वनुषक्तजन्मशब्दवाचित्वादपि परमात्मपरत्वं स्वारसिकं च । प्राणशब्दस्थबहुवचननिर्वाहश्चापेक्षितः ॥ जन्मशब्दानुषङ्गरूपयुक्तिरप्यपेक्षितेति चेत्—सत्यम् । सा त्वेकत्वावधारणप्रतिज्ञानादिवद् वियदधिकरणोक्ततया अभिप्रायतः सिद्धेति प्राणशब्दनिर्वाह एव कण्ठोक्त्या ज्ञाप्यः । क्वचिदुक्तस्याभिप्रायिकत्वं क्वचिदप्यनुक्तस्य कण्ठोक्तत्वमपि हि युक्तम्; न क्वचिदुक्तस्य पुनश्चोक्तत्वम्, क्वचिदप्यनुक्तस्याभिप्रायिकत्वं च । **'तत्पूर्वकत्वाद्वाचः'** इति 'अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वाक्' इति वाक्प्राणमनसां तेजोबन्नपूर्वकत्वाच्च प्राणस्य कार्यत्वमित्युक्तम्—तदयुक्तम्; आहङ्कारिकस्य मनसो वागिन्द्रियस्य च पृथिवीतेजःकार्यत्वायोगाद्वायुविशेषस्य प्राणस्याम्बुकार्यत्वाभावाच्च । अत आप्यायनमात्रमत्र विवक्षितम् । तावता च नोत्पत्तिः सिध्यति ।

**अन्ये** त्विन्द्रियसमष्ट्युत्पत्तेः पूर्वमेव सिद्धतां मत्वा व्यष्टीन्द्रियाणां जीवस्य स्वापप्रबोधयोरुत्क्रान्तिजन्मनोश्च विलयोत्पत्ती भवतः, उत न भवतः इति विचारयन्ति । तदयुक्तम्; समष्टीन्द्रियोत्पत्तिप्रलययोरप्यनिरूपितत्वात् ॥ 'अष्टौ प्रकृतयः षोडश विकाराः', 'इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते' इत्यादिभिस्तत्रतत्रोदाहृतश्रुतिभिस्तत्सिद्धिरिति चेत्—तर्हि 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति; प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति', 'अग्नौ देवाः श्रद्धां जुह्वति' इति पूर्वापरपादयोरुदाहृततत्तद्वाक्यैर्व्यष्टीन्द्रियाणामवस्थानसिद्धेर्विचारो निर्विषयः स्यात् । वाक्यान्तरेषूत्पत्तिप्रलयावगमात् संशय इति चेत्—तत् समष्टीन्द्रियाणामपि तुल्यम्; 'असद्वा' इत्यादिवाक्यानां श्रूयमाणत्वात् । पुनरुक्तिश्च भवेत् । 'वाङ्मनसि दर्शनात्' इत्यधिकरणे उत्क्रान्तौ प्राणानां लये श्रुतेऽपि तेषां सद्भावो निश्चितः । उक्तं हि भवद्भिरेव, 'इह लयो न साक्षाद्विवक्ष्यते; किन्तु वृत्तिविलोपाय मनसि संश्लेषमात्रम्' इति । उत्क्रान्तौ लयाभावात् जन्मन्युत्पत्तिश्च नास्ति । सुषुप्तिप्रबोधयोर्लयोत्पत्त्यभावश्च किम्पुनर्न्यायसिद्धः । अतः 'तथा प्राणाः' इत्यादिसूत्राणां समष्टिविषयत्वमेव युक्तम् । तथाशब्देन सुषुप्त्युत्क्रान्तिप्रबोधजन्मसु वियदादिवत् प्राणा उत्पद्यन्त इत्यपि व्यवहिताधिकरणन्यायातिदेशोऽस्वरसः । असद्वा इदमित्यादिश्रुतिश्च सदेवेत्यादिवाक्यवत् कृत्स्नप्रलयदशाविषयतया प्रतीयते । अतोऽवान्तरप्रलये वा जन्मनः पूर्वकाले वा इन्द्रियसद्भावविषयत्वाश्रयणेन तस्य वाक्यस्य तत्प्राक्छ्रुतेरित्यस्य विषयतयोदाहरणमयुक्तम्, '**तत्पूर्वकत्वादि**ति–भोक्तारं पुरस्कृत्य वाङ्मनसादिप्रवृत्तिः । अतः सुषुप्तौ वागादिव्यापारोपरमादस्तमयव्यपदेश इत्युक्तम् । तदप्ययुक्तम्; पुनरुक्तेर्दर्शितत्वात् ॥ इति प्राणोत्पत्त्यधिकरणम् ॥

सप्तगत्यधिकरणम्—२·४·२

**सप्तगतेर्विशेषितत्वाच्च ॥ २·४·४ ॥**

तानीन्द्रियाणि किं सप्तैव स्युः, अथवैकादशेति चिन्त्यते। श्रुतिविप्रतिपत्तेः संशयः। किं प्राप्तम्?। सप्तेति। कुतः। गतेर्विशेषितत्वाच्च। गतिस्तावत् जायमानेन म्रियमाणेन च जीवेन सह लोकेषु सञ्चरणरूपा सप्तानामेव श्रूयते, "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त" इति। वीप्सा पुरुषभेदाभिप्राया। विशेषिताश्च ते गतिमन्तः प्राणाः स्वरूपतः, "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इति। शरीरान्तस्सञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः। एवं जीवेन सह जन्ममरणयोः सप्तानामेव गतिश्रवणात्, योगदशायां ज्ञानानीति विशेषितत्वाच्च जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राण-बुद्धिमनांसि सप्तैवेति गम्यते। यानि त्वितराणि विषयाणां ग्राहकत्वेन, "अष्टौ ग्रहाः", "सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चौ" इत्यादिषु चतुर्दशपर्यन्तानि प्राणप्रतिपादकवाक्येषु वाक्पाणिपाद-पायूपस्थाहङ्कारचित्ताख्यानीन्द्रियाणि प्रतीयन्ते, तेषां जीवेन सह गतिश्रवणाभावात् जीव-स्याल्पाल्पोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेशः ॥ ४ ॥

इति प्राप्ते प्रचक्ष्महे—

**हस्तादयस्तु स्थितेऽतो नैवम् ॥ २·४·५ ॥**

न सप्तैवेन्द्रियाणि; अपि त्वेकादश; हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात् कार्यभेदाच्च। दृश्यते हि श्रोत्रादीनामिव हस्तादीनामपि कार्यभेद आदानादिः। अतस्तेऽपि सन्त्येव। अतो नैवम्=अतो हस्तादयो न सन्तीत्येवं न मन्तव्यमित्यर्थः। अध्यवसायाभिमानचिन्ता

---

**सप्तगतेर्विशेषितत्वाच्च** ॥ किमिन्द्रियाणि सप्तैव, किमेकादश; किं सप्तानां गतिश्रवण-मिन्द्रियाणां सप्तसङ्ख्यात्वमवगमयति, नेति; तदर्थं गतिश्रवणाभावेऽपि हस्तादीनामिन्द्रियत्वमुपपद्यते, नेति; 'दशेमे पुरुषे' इत्यादिश्रुतिः किमिन्द्रियाणामेकादशत्वे प्रमाणम्, नेति च। यदा न प्रमाणम्, यदा हस्तादीनामिन्द्रियत्वानुपपत्तिः, तदा गतिश्रुतेः सप्तसङ्ख्याव्यवस्थापकत्वात् सप्तेति स्यात्। यदा सा श्रुतिरेकादशत्वे प्रमाणम् यदा हस्तादीनामिन्द्रियत्वोपपत्तिः, तदा गतिश्रवणस्य सप्तसङ्ख्याव्यवस्थाप-कत्वाभावादेकादशेति सिध्यति। **श्रुतिप्रतिपत्तेरिति**। न वादिविप्रतिपत्तेरित्यर्थः। **वीप्सा पुरुष-भेदाभिप्रायेति**। 'सप्त प्राणाः प्रभवन्ति' इति पूर्वं सप्तानामुत्पत्तिश्रवणादिति भावः। **स्वरूपतो** विशेषिताः; न तु कार्यादिभिरित्यर्थः। **परमा गतिः**। मोक्षार्थगमनरूपत्वात् **परमा गतिर्योग** इत्यर्थः। **ज्ञानानीति विशेषितत्वाच्चेति**। ज्ञायतेऽनेनेति व्युत्पत्त्या **ज्ञानानि** इन्द्रियाणीत्यर्थः। अधिकसङ्ख्याश्रवणस्य निर्वाहमाह—**यानि त्विति**। **चतुर्दशपर्यन्तानि**। पूर्वैः सप्तभिस्सह चतुर्दशपर्यन्तानि वाक्पाणिपादपायूपस्थाहङ्कारचित्ताख्यानि यानि त्वितराणि प्रतीयन्त इत्यर्थः ॥

**हस्तादयस्तु स्थितेऽतो नैवम्** ॥ अधिकरणविशेष्ययोरध्याहारेण **स्थिते** इति पदं व्याचष्टे **शरीर** इति। **अतश्शब्दार्थमाह भोगोपकरणत्वादिति**। उपकरणान्तरापेक्षा नास्ति; चक्षुरादिभिरेव भोगसिद्धेरिति शङ्काव्यावृत्त्यर्थमाह-**कार्यभेदाच्चेति**। **अतो नैवमिति** व्याख्येयोपादानम्, अत्रात-श्शब्दः काकाक्षिन्यायेनान्वितः। तद्व्याचष्टे **अत** इति। चतुर्दशसङ्ख्यानिर्वाहमाह **अध्यवसायेति**। महदनु-

**वृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इत्येकादशेन्द्रियाणि । अतः, "दशेमे पुरुषे प्राणाः आत्मैकादशः"इति-आत्मशब्देन मनोऽभिधीयते-"इन्द्रियाणि दशैकंच पञ्च चेन्द्रियगोचराः", "तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश। एकादशं मनश्चात्र" इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसङ्ख्या व्यवस्थिता । अधिकसङ्ख्यावादा मनोवृत्तिभेदाभिप्रायाः; न्यूनव्यपदेशास्तु तत्र तत्र विवक्षित-गमनादिकार्यविशेषप्रयुक्ताः ॥ ५ ॥ इति सप्तगत्यधिकरणम् ॥**

---

गृहीतं मनोऽध्यवसायम्, अहङ्कारानुगृहीतं मनोऽभिमानम्, पूर्वसंस्कारविशेषानुगृहीतं मनः चिन्तां करोति तत् तत्तदानीं बुद्ध्यादिशब्दैर्व्यपदिश्यत इत्यर्थः । **हस्तादयस्तु** इत्येतावता साध्ये सिद्धे **अतो नैव**मिति सूत्रखण्डः किमर्थमिति शङ्कायां प्रमाणदार्ढ्यसूचनार्थमित्यभिप्रायेणाह **अत** इति । **अत इन्द्रियसङ्ख्या व्यवस्थिते**त्युत्तरत्रान्वयः । उदाहृतवाक्यस्थमात्मशब्दं व्याचष्टे **आत्मशब्देने**ति ॥

**परे तु—गतेः**—'सप्त प्राणाः प्रभवन्ति' इति श्रुतिवाक्यादवगतेः, 'सप्त वै शीर्षण्याः प्राणाः' इति **विशेषितत्वाच्चे**ति व्याचक्षते । तदयुक्तम्; व्यभिचारिणो हेतुत्वाभावात्, 'अष्टौ ग्रहाः', 'दशेमे पुरुषे' इत्यादिभिः सङ्ख्यान्तराण्यपि हि श्रुतेरवगम्यन्ते । 'सप्त वै शीर्षण्याः' इति विशेषितत्वमप्ययुक्तम्; सप्तत्वसाधकत्वाभावात् । द्वाववाञ्चाविति नव[त्व?] सङ्ख्या हि प्रतीयते । **हस्तादय** इति । हस्तादयश्च श्रूयन्ते । **अतः** सप्तत्वातिरेके स्थिते, **अतः** अधिकसङ्ख्याग्रहणे न्यूनसङ्ख्याया अन्तर्भावोपपत्तेश्च **नैवम्**—यथापूर्वपक्षं न मन्तव्यमित्युक्तम् । तत्र सप्तत्वातिरेक इति स्थितशब्दविशेष्यं नाध्याहर्तव्यम्; अनुवादे प्रयोजनाभावात् । अधिकश्रवणादेव हि सप्तत्वातिरेकोऽवगतो भवति । **जीवे** स्थित इत्यध्याहृते, युक्तिर्दर्शिता भवति; जीवं प्रति हस्तादीनां चक्षुरादिवदुपकरणत्वसाम्यावगतेः । एवं न्यूनव्यवच्छेदस्य हेतूक्तौ मनोवृत्तिभेदैरधिकप्रतीत्यन्यथासिद्धि**रत**शब्देन वक्तुं युज्यते । अधिकसङ्ख्याग्रहणे न्यूनसङ्ख्यान्त-र्भावपरत्व**मत**श्शब्दस्य न युज्यते; तथा सत्येकादशभ्योऽतिरिक्तस्यापि ग्राह्यत्वप्रसङ्गात् । **नैव**मिति भूयोवचनं चोक्तयुक्त्यनुग्राह्यश्रुत्यभिप्रायं भवितुमर्हति । अन्यथा, 'हस्तादय' इत्येतावता पर्याप्तत्वात्। न हि सर्वाधिकरणेषु, 'यथापूर्वपक्षं न मन्तव्यम्' इत्युच्यते ।

**अन्ये तु**—बुद्ध्या सह द्वादशेन्द्रियाणि; उत्क्रान्तौ 'सर्वे प्राणा अभिसमायन्ति' इति श्रव-णेन सर्वेषां प्राणानामुत्क्रान्तिः । अतस्तेषां नात्यन्तिकनाश इति पूर्वपक्षं कृत्वा=गतिश्रवणादिना सप्ता-नामेव गतिः; तेषामेव नात्यन्तिकनाशः; इतरेषां त्वात्यन्तिकनाशः, तत्र तत्र च भोगाय जन्मवेला-यां स्वकारणादुत्पत्तिः=इति सिद्धान्तयन्ति । तदयुक्तम् । 'सर्वे प्राणा अभिसमायन्ति, सर्वे प्राणा-अनूत्क्रामन्ति' इति सर्वप्राणानामुत्क्रान्तिश्रवणात् सर्वशब्दसङ्कोचाभावात्; सप्तानां गतिश्रवणस्य, छान्दोग्ये भूतत्रयसृष्टिश्रवणस्येवायोगव्यवच्छेदपरत्वेनाप्युपपत्तेश्च । सप्तानामिति श्रवणवैयर्थ्यपरिहाराय सप्तानामेवेत्यवधारणकल्पनादपि सर्वशब्दवैयर्थ्यपरिहाराय सप्तश्रवणस्य प्रदर्शनार्थत्वकल्पनैवोपपन्ना । अन्य-था ह्यश्रुतावधारणकल्पनम्, हस्तादीनां प्रलयकल्पनम्, उत्पत्तिकल्पनं चेति गौरवं स्यात्, "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रम्" इति । यदा प्रबुध्यते, प्राणा-देवाधि पुनर्जायन्ते" इति वाचः चक्षुरादीनां चाविशेषेणाप्यये संभवे च श्रूयमाणे, 'वाच आत्यन्तिकनाशः,

## प्राणाणुत्वाधिकरणम् २-४ ३.

### अणवश्च ॥ २ ४ ६ ॥

**"त एते सर्व एव समाः सर्वेऽनन्ताः" इत्यानन्त्यश्रवणाद्विभुत्वं प्राणानाम्—इति प्राप्ते अभिधीयते—"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्युत्क्रान्त्यादिश्रवणात् परिमितत्वे सिद्धे सति उत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणाः। आनन्त्यश्रुतिस्तु "अथ-यो हैतान् अनन्तानुपास्ते" इत्युपासनश्रवणात् उपास्यप्राणविशेषणभूतकार्यबाहुल्याभिप्राया ॥ ६ ॥**

---

चक्षुरादीनां वृत्तिविलोपः ; वाचः स्वरूपोत्पत्तिः, चक्षुरादीनां वृत्तिलाभः' इति अप्ययसंभवश्रवणस्य वैरूप्यकल्पनं च प्रसजेत् । सप्तानां श्रवणं तु ज्ञानसाधनत्वरूपप्राधान्यविवक्षयाऽप्युपपन्नम् ॥ "आदिसर्गे कर्मेन्द्रियसमष्ट्युत्पत्तिर्नास्ति, **मनुना** सप्तानामेव सृष्टिप्रतिपादनात्" इति चायुक्तम् ; **पराशरादिभिर्वा**गादीनामपि, "देवा वैकारिका दश । एकादशं मनश्चात्र", "देवा वैकारिकाः स्मृताः" इति प्रतिपादनात् । क्वचिदुक्तस्य क्वचिदनुक्तेरभावसाधकत्वाभावाच्च । श्रुतिविरोधश्च भवेत्—"अष्टौ प्रकृतयः षोडश विकाराः", "चतुर्विंशतिसङ्ख्यातं व्यक्तमव्यक्तमुच्यते" इति हि श्रूयते । हस्तादीनां तत्त्वानां समष्टिसृष्टिदशायामभावे कथं षोडशविकारसिद्धिश्चतुर्विंशतितत्त्वसिद्धिश्च । यदि प्रतिमरणमुत्पद्यमानैर्विनश्यद्भिश्च तत्त्वैः षोडशविकारादिसिद्धिः—तर्हि घटपटादिभिरधिकसंख्याव्यवहारः कुतो न स्यात् । किञ्च, 'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते' इत्यत्र इन्द्रियशब्दासङ्कोचात् सर्वेन्द्रियाणां तुल्यकालत्वमवगम्यते । अतः कालभेदकल्पनमप्रमाणकम् । द्वादश प्राणा इति चायुक्तम्; 'दशेमे पुरुषे प्राणा आत्मैकादशः', 'इन्द्रियाणि दशैकं च' इत्यादिश्रुतिस्मृतिभिः प्राणानामेकादशसङ्ख्याश्रवणात् ॥ इति सप्तगत्यधिकरणम् ॥

**अणवश्च ॥** किमिन्द्रियाणि सर्वगतानि, उताणुपरिमाणकानि ; आनन्त्यश्रवणमुपासनार्थम्, उत नेति ; उत्क्रान्तिश्रवणं किमणुत्वमवगमयति, नेति । अणुत्वावगमकत्वाभावे तदानन्त्यश्रवणस्य उपासनार्थत्वाभावात् सर्वगतानि । उत्क्रान्तिश्रवणस्याणुत्वगमकत्वे सति आनन्त्यश्रुतेरुपासनार्थत्वादणुरूपाणि । **प्राणमनूत्क्रामन्त**मिति । अणुत्वं नाम परिच्छिन्नत्वे सत्युपलब्ध्यर्हस्थूलताराहित्यमत्र विवक्षितम् ; न तु जीवात्मस्वरूपवदत्यन्ताल्पत्वम् । तत्र 'बालाग्रशतभागस्य' इत्यादिवाक्येनात्यन्ताल्पत्वस्योक्तत्वात् तथाऽभ्युपगमः ; अत्र तूक्तप्रकारम् । अणुत्वं परिच्छिन्नत्वे सत्यतिस्वच्छत्वम्[1] । उत्क्रान्त्यादिः परिच्छिन्नत्वहेतुः ; पार्श्वस्थैरनुपलभ्यमानत्वं स्वच्छत्वहेतुः । एवं विशिष्टमणुत्वमुपपादितं भवति । परिमाणावान्तरभेदे सत्यपि त्वगिन्द्रियस्य सूक्ष्मशरीरव्यापीदृशमणुत्वमस्त्येव । 'त एते सर्व एव समाः' इति समत्वश्रुतिः कार्यकरत्वविषया । आनन्त्यश्रुतिनिर्वाहमाह **आनन्त्येति** । कार्यबाहुल्यमानन्त्यम् । कार्यबाहुल्यविशेषणविशिष्टतयोपासनार्थमानन्त्यकथनमित्यर्थः ।

आनन्त्यश्रवणं दैवप्राणविषयमित्यन्ये । तदयुक्तम् ; देवशरीरेष्वप्यमीषामेव प्राणानामित उत्क्रा-

---

**1. अतिस्वच्छत्वमित्येतत्स्थाने स्पर्शवत्त्वमिति पाठो भावप्रकाशिकायाम् । अनुद्भूत स्पर्शवत्त्वमित्यर्थो वर्णितः । अस्पर्शवत्त्वमिति पाठो वा । आहङ्कारिकत्वेन स्पर्शप्रसक्त्यभावात् । आप्यायकांशे वा तदिष्टिः ।**

**श्रेष्ठश्च ॥ २ ४ ७ ॥**

प्राणसंवादे शरीरस्थितिहेतुत्वेन श्रेष्ठतया निर्णीतो मुख्यप्राणः, "आनीदवातं स्वधया तदेकम्" इति महाप्रलयसमये स्वकार्यभूतप्राणनसद्भावश्रवणात्, 'एतस्माज्जायते' इति जन्मश्रवणस्य जीवजन्मश्रवणवदुपपत्तेर्नोत्पद्यते इत्याशङ्क्य, प्राक्सृष्टेरेकत्वावधारणादिविरोधात्, 'एतस्माज्जायते प्राणः' इति पृथिव्यादितुल्योत्पत्तिश्रवणादुत्पत्तिनिषेधाभावाच्च जायत एव श्रेष्ठश्च प्राण इत्युच्यते। आनीदवातमिति तु न जैवं श्रेष्ठं प्राणमभिप्रेत्योच्यते, अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते; अवातमिति तत्रैव श्रवणात्। पूर्वेणैव तुल्यन्यायत्वेऽपि पृथग्योगकरणमुत्तरचिन्तार्थम् ॥ ७ ॥ इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

वायुक्रियाधिकरणम्। २-४-४

**न वायुक्रिये पृथगुपदेशात् ॥ २-४-८ ॥**

सोऽयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रम्, तस्य वा स्पन्दरूपा क्रिया, अथवा वायुरेव कश्चन विशेषमापन्नः—इति विशये, वायुरेवेति प्राप्तम्; "यः प्राणः स वायुः" इति व्यपदेशात्। यद्वा वायुमात्रे प्राणत्वप्रसिद्ध्यभावात् उच्छ्वासनिश्वासादिवायुक्रियायां प्राणशब्द-

---

न्तानां विद्यमानत्वात् तदतिरिक्तदैवप्राणविषयतयातदभिमतश्रुतेरर्थान्तरपरत्वस्य पूर्वमेवोपपादितत्वात् दैवप्राणासिद्धेः; 'अनन्तानुपास्ते' इति श्रुत्यनुरोधेन उपासनार्थतया निर्वाहस्योपपन्नत्वाच्च ॥

**श्रेष्ठश्च** ॥ प्राणस्य श्रेष्ठशब्दवाच्यत्वे हेतुं वदन् सूत्रं व्याचष्टे **प्राणे**ति। **प्राणसंवादो** नाम छान्दोग्यप्रकरणविशेषः। अस्य शरीरस्थितिहेतुत्वेन श्रैष्ठ्यम्। **उत्पत्तिनिषेधाभावा**दिति। अनेन जीवजन्मतुल्यत्वं व्यावर्तितम्। तस्य ह्युत्पत्तिर्निषिद्धा। **आनीदवात**मिति। आनीत्—'अन प्राणने' इति धातोर्लङ्(लुङ्)। जैवं जीवसम्बन्धि। सिद्धान्ते **स्वधये**त्यनेन 'स्वधा त्वं लोकपावनी(भाविनी)' इत्युपबृंहणाल्लक्ष्मीविशिष्टत्वमुच्यते। अधिकशङ्कापरिहाराभावान्नेदं सूत्रमधिकरणान्तरम्। श्रुतिवाक्यं हि पूर्वपक्षावलम्बनम्। तत् तत्पूर्वाधिकरणेऽस्मिन् सूत्रे च समानम्।

**श्रेष्ठश्चे**त्यधिकरणान्तरत्वं **परै**रुक्तमयुक्तम्—प्रतिज्ञादृष्टान्तावधारणादिभिः श्रुत्या चोत्पत्तौ प्रतिपन्नायामनुत्पत्त्यवगमोऽन्यथानिर्वाह्य इत्यस्मादधिकशङ्कापरिहाराभावात् ॥ **अन्ये** तु मुख्यप्राण उत्क्रान्तावत्यन्तं लीयते, देहान्तरेऽन्यो मुख्यप्राण उत्पद्यते इति पूर्वपक्षं कृत्वा—उत्क्रान्तिश्रवणादुत्पत्तिवादस्य वृत्त्युत्पत्तिविषयतया नात्यन्तनाश इति सिद्धान्तयन्ति। तदप्ययुक्तम्—तन्मतानुरोधेऽप्यधिकशङ्काया अभावात् ॥ "उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा। अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते" इत्युत्पत्तिश्रवणात् देहान्तरेऽन्यः प्राण उत्पत्स्यत इत्यधिकशङ्केति चेत्—उत्क्रान्तिश्रवणानुरोधेनोत्पत्तिश्रुतिर्वृत्तिलाभाभिप्रायेत्यस्य न्यायस्येन्द्रियेष्वेव सिद्धत्वात्। चतुर्थे लक्षणे, 'तन्मनः प्राण उत्तरात्' 'सोऽध्यक्षे तदुपगमादिभ्यः' इत्यत्र प्राणस्य जीवसंश्लेषमात्रस्य निरूपितत्वादिहात्यन्तनाशशङ्काप्रसङ्गाभावादेवोत्क्रान्तिविषयत्वमप्यधिकरणस्यायुक्तम् ॥ इति प्राणाणुत्वाधिकरणम् ॥

**न वायुक्रिये पृथगुपदेशात्** ॥ किं मुख्यप्राणो वायुमात्रम्, उत वायुक्रिया, उतावस्थाविशेषापन्नो वायुरिति; श्रुति-लोकप्रसिद्धि-पृथगुपदेश-तत्त्वसङ्ख्याप्रसिद्धीनां कस्मिन् पक्षे सामञ्जस्यमिति। वायुमात्रत्वपक्षे वायुक्रियात्वपक्षे वा सामञ्जस्यमस्ति चेत, तयोरन्यतरस्य सिद्धिः; अवस्थाविशेषापन्नवायुपक्षे

प्रसिद्धेश्च तत्क्रियैव—इति प्राप्ते—'न वायुमात्रम्, न च तत्क्रिया' इत्युच्यते। कुतः। पृथगुपदेशात्, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः" इति। तत एव पृथगुपदेशाद्वायुक्रियाऽपि न भवति प्राणः, न हि तेजःप्रभृतीनां क्रिया तैः सह पृथग्द्रव्यतयोपदिश्यते। 'यः प्राणः स वायुः' इति तु वायुरेवावस्थान्तरमापन्नः प्राणः; न तेजःप्रभृतिवत् तत्त्वान्तरमिति ज्ञापनार्थम्। उच्छ्वास-निश्वासादावपि, प्राणः स्पन्दत इति क्रियावति द्रव्य एव प्राणशब्दप्रसिद्धिः; न क्रियामात्रे ॥ ८ ॥

किमयं प्राणो वायोर्विकारस्सन् अग्निवद्भूतान्तरम्? नेत्याह—

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २-४-९ ॥

नायं भूतविशेषः; अपि तु चक्षुरादिवज्जीवोपकरणविशेषः। तच्चोपकरणत्वमुपकरणविशेष-भूतैरिन्द्रियैः सह शिष्ट्यादिभ्योऽवगम्यते। चक्षुरादिभिस्सहायं प्राणः शिष्यते प्राणसंवादादिषु। तत्सजातीयत्वे हि तैः सह शासनं युज्यते। प्राणशब्दपरिगृहीतेषु करणेष्वस्य विशिष्याभिधान-मादिशब्देन गृह्यते, "अथ ह य एवायं मुख्यः प्राणः", "योऽयं मध्यमः प्राणः" इत्यादिषु विशिष्याभिधानात् ॥ ९ ॥

चक्षुरादिवदस्यापि करणत्वे (स्योपकरणत्वे?) तद्वदस्यापि जीवं प्रत्युपकारविशेषरूपक्रियया भवितव्यम्; सा तु न दृश्यते। अतो नायं चक्षुरादिवद्भवितुमर्हतीति चेत्—तत्राह—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ २-४-१० ॥

अकरणत्वात्। करणं=क्रिया; अक्रियत्वात्। अस्य प्राणस्य जीवं प्रत्युपकारविशेषरूप-क्रियारहितत्वाच्च यो दोष उद्भाव्यते, स नास्ति; यत उपकारविशेषरूपां शरीरेन्द्रियधारणादिरूपां

---

सामञ्जस्यं चेत—स एव सिद्धान्तः। 'पृथगुपदेशात्' इति सूत्रखण्डे पृथगुपदेशं दर्शयति **एतस्मादिति**। खं वायुरिति पृथगुपदेशान्न वायुमात्रमित्यर्थः। **तत एवेति** क्रियात्वप्रतिक्षेपः। **तैः सह पृथग्द्रव्य-तयोपदिश्यत** इति। द्रव्योत्पत्तिप्रकरणत्वात् तेजःप्रभृतीनां क्रियाः पृथगुपदिश्यन्ते चेत्—द्रव्यतयोपदिश्येरन्। न च तद्युक्तम्। अतः क्रियाया अद्रव्यत्वेन पृथगुपदेशासंभवात् पृथगुपदिष्टः प्राणो न वायुक्रियेत्यर्थः ॥

उत्तरसूत्रमवतारयति **किमयमिति**। अवस्थाविशेषापन्नो वायुः प्राण इत्युक्तम्, अवस्थान्तरा-पत्तिश्चाग्न्यादेरिव वायुत्वप्रहाणेनैव स्यादिति हि शङ्का स्यात्। **चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥** [1]अनेन बहुश्रुतिषु शिष्ट्यादि विवक्षितम्। श्रुतिभेदेन सहशिष्टयो बह्व्यः, विशिष्याभिधानानि च बहूनीति सूत्रबहुवचनतात्पर्यमित्यभिप्रायेणोक्तं **प्राणसंवादादिष्विति**, **मध्यमः प्राण इत्यादि-ष्विति** च। अनन्तरसूत्रविवरिष्यमाणकरणतुल्योपकारसूचनार्थं वा बहुवचनम्। अग्र्यप्रायन्यायमभिप्रेत्याह **तत्सजातीयत्वे हीति**। **प्राणेति**। एष्वयं मुख्य इत्युक्ते मुख्यस्य सतस्तत्सजातीयत्वं हि प्रतीयते, यथा भूतत्वाप्रहाणेनैव शरीरत्वावस्था भवति, तथा वायुत्वाप्रहाणेऽप्यवस्थान्तरं जीवोपकरणत्वलक्षणं दर्शितम्, जीवोपकरणत्वावस्थाया वायुत्वाप्रहाणपूर्वकत्वं "यः प्राणः स वायुः" इति श्रुत्याऽवगम्यते ॥

अनन्तरसूत्रशङ्कामाह **चक्षुरादिवदिति**। **अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥**

---

1 भाष्ये विशिष्याभिधानमेकमेव आदिशब्दग्रहीष्यमाणम्। अतो भाष्याभिमतं सौत्र-बहुत्वनिर्वाहमाह अनेनेति।

क्रियां दर्शयति श्रुतिः, "यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते, स वः श्रेष्ठः' इत्युक्त्वा वागाद्युत्क्रमणेऽपि शरीरस्येन्द्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानात् । अतः प्राणापानव्यानोदानसमानाकारेण पञ्चधाऽवस्थितोऽयं प्राणः शरीरेन्द्रियधारणादिना जीवस्योपकरोतीति चक्षुरादिवत् करणत्वम् ॥ १० ॥

नन्वेवं नामभेदात् कार्यभेदाच्च प्राणापानादयः तत्त्वान्तराणि स्युः; तत्राह—

**पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ २-४-११ ॥**

यथा कामादिवृत्तिभेदे तत्कार्यभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम्; "कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति वचनात् । एवं "प्राणोऽपानो व्यान उदानस्समानः अन इत्येतत्सर्वं प्राण एव" इति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यते ॥ ११ इति वायुक्रियाधिकरणम् ॥४ ॥

---

**अकरणत्वादिति** पूर्वपक्षहेतुः । **शैथिल्याभिधानाच्छ्रुतिः क्रियां दर्शयतीत्यन्वयः** ॥

**नन्वेवमिति । पञ्चवृत्तिर्मनोवद्व्यपदिश्यते** ॥ दृष्टान्तदार्ष्टान्तिकद्वयमपि वेदसिद्धम् । **काम** इत्यादि । **कामः** इच्छा । **विचिकित्सा** सन्देहः । **श्रद्धा** त्वरा । **धीः**चिन्ता । कामादयो ज्ञानावस्थाविशेषाः । तत्तदवस्थज्ञानहेतुर्मन इति इदं तैः शब्दैरुच्यते । तत्तद्धेतुत्वं मनोवस्था ॥

**परे तु** 'न वायुक्रिये' इत्यत्र क्रियाशब्देन सर्वकरणसामान्यवृत्तिः प्राण इति पक्ष उच्यत इत्याहुः । तदयुक्तम्; करणव्यापारोपरतिकालेऽपि प्राणवृत्तेर्दर्शनेन शङ्कानुदयात्; वागादीनां प्राणं प्रति गुणभावश्रवणाच्च । प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गपरिहारपरं च **चक्षुरादिवदिति** सूत्रं वर्णयन्ति । ततोऽप्यग्निवद्भूतान्तरत्वशङ्कापरिहारपरत्वमुचितम्; स्वातन्त्र्ये व्युदस्तेऽपि तस्याः शङ्कायाः स्थितत्वात् । करणत्वेन तस्यां परिहृतायां स्वातन्त्र्यशङ्काया दूरोत्सारितत्वात् **आदिशब्दस्य** चाचेतनत्वादिग्राहकत्वादपि विशिष्याभिधानपरत्वमुचितम् । श्रुतिसिद्धहेतोः सहशिष्टतासाजात्येन झटिति धीस्थत्वात्; अचेतनत्वादिकस्य हेतोर्भूतान्तरशङ्कानिवारणासामर्थ्याच्च ॥ प्राणस्य चक्षुरादिवत्करणत्वे रूपादिवत्प्रतीतिविषयान्तरप्रसङ्गपरिहारपरम् **अकरणत्वादिति** सूत्रमाहुः— विषयान्तरप्रसङ्गदोषो नास्ति; चक्षुरादिवद्विषयपरिच्छेदेन करणत्वाभावात् । प्रमाणान्तरेष्वसंभावितं कार्यं हि श्रुतिर्दर्शयतीति । तदयुक्तम्; परिहर्तव्याशङ्कोदयाभावात् । परिच्छेद्यविषयान्तरप्रसङ्गो न शङ्क्यः; करणत्वेऽपि वागादीनां तदभावात् ॥ वागादीनां वक्तव्यदातव्यगन्तव्यादिवत् अवच्छेद्यविषयान्तरं शङ्क्यमिति चेन्न; तस्य निरसनीयत्वाभावात् । देहेन्द्रियादिकं हि धार्यत्वेन तदवच्छेद्यविषयः ॥ स तु वक्तव्य इति चेत्—तदानीमुपकारविशेषाकाङ्क्षायां सूत्रावतरणमुक्तं भवतीति सिद्धं नस्समीहितम् । अवच्छेद्यविषयाभावेनाकरणत्वादित्यध्याहारदोषश्च । **पञ्चवृत्तिरिति** सूत्रस्य कार्यविशेषसमर्पणमुखेनोपकारकत्वपरत्वादपि शङ्काविशेषपरिहारपरत्वं युक्तम्; तथा सत्युपकारविशेषस्यार्थसिद्धत्वात, 'तथा हि दर्शयति'इति पूर्वसूत्रांशेनोपकारवर्गस्य सगृहीतत्वात । एकस्य नानावृत्तित्वे मनो दृष्टान्तः ॥ पञ्चवृत्तित्वे दृष्टान्त इति तु निर्बन्धोऽनुपपन्नः—श्रोत्राद्यनुरोधमनपेक्ष्य भूतभविष्यदादिवृत्तिसंभावनया वृत्तिपञ्चकातिरेकात् । प्रमाणविपर्ययविकल्पनिद्रास्मृतयो । वृत्तय इति चायुक्तम; सङ्कल्पस्यातिरिक्तत्वात् । अत औचित्याच्छ्रौतेऽर्थे श्रौतदृष्टान्त

## श्रेष्ठाणुत्वाधिकरणम् २-४-५.

### अणुश्च ॥ २-४-१२ ॥

अणुश्चायम् पूर्ववदुत्क्रान्त्यादिश्रवणात् "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यादिषु। अधिका शङ्का तु "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण", "प्राणे सर्वं प्रतिष्ठितम्", सर्वं हीदं प्राणेनावृतम्" इत्यादिश्रवणात् महापरिमाण इति ॥ परिहारस्तु—उत्क्रान्त्यादिश्रवणात् परिच्छिन्नत्वे निश्चिते सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपपत्तिः—इति १२ ॥

इति - श्रेष्ठाणुत्वाधिकरणम् ५

## ज्योतिराद्यधिष्ठानाधिकरणम् २-४-६.

### ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ २-४-१३ ॥

---

एव सङ्ख्यानादरेण स्वीकर्तव्यः, सङ्ख्याविशेषनिर्बन्धस्य साध्यानुपयोगाच्च ।

अन्ये तु प्रथमजस्य महत्तत्त्वस्य राजसो भागः प्राणः, स वाय्वधिष्ठानक उच्छ्वासादिरूपेण तत्प्रेरक इति सिद्धान्तयन्ति । तदयुक्तम् ; महत्तत्त्वराजसांशस्य प्राणत्वे प्रमाणाभावात्, "यः प्राणः स वायुः" इति श्रुतिविरोधाच्च । अत्र यन्मुकुटं तत् सुवर्णमितिवत् वायुकार्यत्वं हि प्रतीयते । प्राणस्य वाय्वधिष्ठानकत्वं तत्रोच्यत इति चेन्न ; अशाब्दत्वात् । मुख्यार्थस्य भञ्जकप्रमाणाभावाच्च । सुषुप्तौ प्राणवायुस्पन्दहेतुत्वेन तत्कल्पनं ह्यन्यथासिद्धम्—परमात्मायत्तत्वश्रुतेः । क्वचिद्वाक्प्राणमनसां तेजोबन्नाप्यायितत्ववत् प्राणस्य महत्तत्त्वाप्यायितत्वमुच्यत इत्यन्यथासिद्धत्वात् तद्वचनं न श्रुतिस्वारस्यभञ्जकम् । अतो वायुविकारभावस्य स्थितत्वादेव भूतान्तरत्वप्रतिक्षेपकमुत्तरसूत्रम् ; न तु क्रियात्वप्रतिक्षेपपरम् ; 'न वायुक्रिये' इति आद्यसूत्रेणैव क्रियात्वस्यापि प्रतिक्षिप्तत्वात् ॥ चेतनवर्गे भूतवर्गे करणवर्गे चानन्तर्भावात् क्रियात्वशङ्केति चेन्न ; तेजःप्रभृतीनामिव चक्षुरादीनामपि क्रियायाः पृथगुत्पत्तिप्रतिपादनानुपपत्तेः । प्रतिक्षेपकयुक्त्यनादरेण शङ्कोदये वायुमात्रत्वशङ्काया अप्यवस्थानात् तद्विषयेणापि सूत्रान्तरेण भवितव्यम् । न च क्रियात्वप्रतिक्षेपकयुक्तेराद्यसूत्रेऽनभिधित्सितत्वम् ; 'न वायुक्रिये' इति प्रतिज्ञाया हेतोश्चानन्वितत्वप्रसङ्गात् । पञ्चवृत्तिरिति सूत्रमपि वृत्त्यन्तरायोगेन करणवृत्तित्वप्रतिक्षेपपरमित्यप्ययुक्तम् ; क्रियात्वस्य निरस्तत्वात् । अतः प्राणादीनां तत्त्वान्तरत्वशङ्कापरिहारपरत्वं युक्तम् ॥ इति वायुक्रियाधिकरणम् ॥

अणुश्च ॥ किमयं प्राणः सर्वगतः, उताणुः, किं "सम एभिस्त्रिभिर्लोकैः" इत्यानन्त्यव्यपदेशो विभुत्वं गमयति, नेति, उत्क्रान्तिश्रवणमानन्त्यस्य गौणतामवगमयति, नेति । यदा नावगमयति, तदा आनन्त्यव्यपदेशस्य विभुत्वगमकत्वात् सर्वगतः । यदा गौणत्वं गमयति, तदाऽऽनन्त्योक्तेर्गौणत्वादणुरिति । समएभिस्त्रिभिरित्यादिवाक्यानि नैकत्र क्रमपठितानि । श्रेष्ठश्चेति सूत्रे श्रुत्या पूर्वपक्षोत्थानेऽपि परिहारः पूर्वाधिकरणेन तुल्यः । एकत्वावधारणादिभिरुत्पत्तिमत्त्वे सिद्धे सृष्टेः प्रागवस्थानवादिवाक्यस्य ब्रह्मपरत्वोपपादनात् अणवश्चेत्यत्रानन्त्यश्रुतेरुपासनार्थतया निर्वाहः कृतः, न तथाऽस्य निर्वाह इतीदमधिकरणान्तरम् ॥ परैरानन्त्यश्रुतेः समष्टिविषयतया हिरण्यगर्भविषयतया वृत्तिविषयतया च निर्वाहः कृतः । हिरण्यगर्भस्य तच्छरीरपरिच्छिन्नप्राणसमष्टेश्च वृत्तेश्च शरीरावच्छिन्नत्वादेव विभुत्वायोगात् प्रभावोत्कर्षपरत्वेन निर्वाह उपपन्नः ॥

**ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात्** ॥ अवान्तरसङ्गतिं वदन् विषयं

सश्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिः, इयत्ता, परिमाणं चोक्तम्। तेषां प्राणानामग्न्यादिदेवताधिष्ठितत्वं च पूर्वमेव, "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इत्यनेन सूत्रेण प्रसङ्गादुपपादितम्। जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकसिद्धम्। "एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इत्यादिश्रुतिसिद्धश्च। तदिदं जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तम्, उत परमात्मायत्तमिति विशये, नैरपेक्ष्यात् स्वायत्तमिति प्राप्ते उच्यते—ज्योतिराद्यधिष्ठानमिति। प्राणवता—जीवेन सह ज्योतिरादीनाम्—अग्न्यादिदेवतानां प्राणविषयमधिष्ठानं तदामननात्—तस्य परमात्मन आमननाद्भवति। आमननम्—आभिमुख्येन मननम्। परमात्मनः सङ्कल्पादेव भवतीत्यर्थः। कुत एतत्? शब्दात्—इन्द्रियाणां साभिमानिदेवतानां जीवात्मनश्च स्वकार्येषु परमपुरुषमननायत्तत्वशास्त्रात्। यथाऽन्तर्यामिब्राह्मणादिषु, "योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः" "यो वायौ तिष्ठन्", "य आदित्ये तिष्ठन्", "य आत्मनि तिष्ठन्", "यश्चक्षुषि तिष्ठन्" इत्यादि। यथा च "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति। तथा "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि १३॥

तस्य च नित्यत्वात् ॥ २-४-१४ ॥

सर्वेषां परमात्माधिष्ठितत्वस्य नित्यत्वात्—स्वरूपानुबन्धित्वेन नियतत्वाच्च तत्सङ्कल्पादेवैषामधिष्ठातृत्वमवर्जनीयम्। "तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिना परमपुरुषस्य नियन्तृत्वेन सर्वचिदचिद्वस्त्वनुप्रवेशः स्वरूपानुबन्धी श्रूयते। स्मर्यते च, "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति १४॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ६॥

---

शोधयति सश्रेष्ठानामिति। इयत्ता—सङ्ख्या। परिमाणं सङ्ख्यातानां प्रत्येकं परिमितिः। जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तम्, उत परमात्मायत्तम्; तेषां तत्र नैरपेक्ष्यप्रतीतिः समीचीना, उत भ्रान्तिमूलेति। समीचीनत्वे स्वायत्तता, भ्रान्तिमूलत्वे परमात्माधीनता। **नैरपेक्ष्यात्** जीवस्याप्याराध्यत्वात् तस्याभिमतफलप्रदत्वादिति भावः॥ परात्तु तच्छ्रुतेरित्यधिकरणे जीवस्य परायत्तकर्तृत्वे सिद्धेऽप्यत्र **प्राणव**च्छब्देन जीवस्योपादानं दृष्टान्ततयेति मन्तव्यम्॥

**तस्य च नित्यत्वात्**॥ आदिशब्देन "स ईशोऽस्य जगतो नित्यमेव" इत्यादि विवक्षितम्। अग्न्यादीनां देवतानां स्वरूपे स्वतः सिद्धे इन्द्रियाद्यधिष्ठानमात्रमेव परायत्तमिति न कथ्यते, अपि तु तेषां सत्ताऽपि परमात्मायत्ता, किंपुनरिन्द्रियाद्यधिष्ठानस्य परायत्तत्वमित्यर्थः। **विष्टभ्याह**मिति। अविशेषेण **कृत्स्नं जगदवष्टभ्ये**ति वचनाज्जगत्त्वप्रयुक्तं भगवदायत्तत्वमिति सिद्धम्॥

**सर्वेऽपि परे** तु एतदधिकरणमेवं वर्णयन्ति। सर्वे प्राणा अग्न्यादिभिरनधिष्ठिताः कार्यकराः; स्वमहिम्नैव कार्यकरत्वोपपत्तेः। अन्यथाऽग्न्यादीनामेव भोक्तृत्वप्रसङ्गात्—इति पूर्वपक्षं कृत्वा श्रुतिवशात् तदधिष्ठिताः कार्यकरा इति सिद्धान्तयन्ति। **प्राणवता शब्दा**दिति सूत्रान्तरम्। **अग्न्यादीनां** भोक्तृत्वप्रसंगपरिहारपरं व्याचक्षते। वागादीनां प्राणवता संबन्धः, "अथ यो वेदेदं जिघ्राणि" इत्यादिशब्दादिति। तस्य जीवस्य शरीरे भोक्तृत्वेन नित्यत्वम्। (त्वात् ?) अग्न्यादीनां तु स्वापादावपक्रमणादिति चरमं सूत्रं वर्णयन्ति। तदयुक्तम्; अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामित्यत्राग्न्याद्य-

## इन्द्रियाधिकरणम् -२-४-७

### त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २-४-१५ ॥

किं सर्वे प्राणशब्दनिर्दिष्टा इन्द्रियाणि, उत श्रेष्ठप्राणव्यतिरिक्ता एवेति विशये, प्राणशब्दवाच्यत्वात् करणत्वाच्च सर्व एवेन्द्रियाणि इति प्राप्ते-उच्यते—श्रेष्ठव्यतिरिक्ता एव प्राणा इन्द्रियाणि। कुतः। श्रेष्ठादन्येष्वेव प्राणेषु तद्व्यपदेशात्। "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः" इत्यादिभिश्चक्षुरादिषु समनस्केष्वेवेन्द्रियशब्दो व्यपदिश्यते ॥ १५ ॥

### भेदश्रुतेर्वैलक्षण्याच्च ॥ २-४-१६ ॥

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्यादिष्विन्द्रियेभ्यः प्राणस्य पृथक्श्रवणात् प्राणव्यतिरिक्तानामेवेन्द्रियत्वमवगम्यते। मनसः पृथक्श्रवणेऽपि तस्यान्यत्रेन्द्रियान्तर्भाव उक्तः, "मनःषष्ठानीन्द्रियाणि" इत्यादौ। वैलक्षण्यं च चक्षुरादिभ्यः श्रेष्ठप्राणस्योपलभ्यते। सुषुप्तौ हि प्राणस्य वृत्तिरुपलभ्यते। चक्षुरादीनां तु वृत्तिर्नोपलभ्यते। कार्यं च चक्षुर्वागादीनां समनस्कानां ज्ञानकर्मसाधनत्वम्; प्राणस्य तु शरीरेन्द्रियधारणम्। प्राणाधीनधारणत्वात् (त्तु)इन्द्रियेषु प्राणशब्दव्यपदेशः। तथा च श्रुतिः, "त एतस्यैव सर्वे रूपमभवन् तस्मादेते एतेनाख्यायन्ते" इति। रूपमभवन्—शरीरमभवन् तदधीनप्रवृत्तयोऽभवन्नित्यर्थः ॥ १६ ॥ इति इन्द्रियाधिकरणम् ॥

---

धिष्ठानस्योक्तत्वात्, तस्य तत्रानपाकृतत्वाच्च। सालक्षण्यनिरूम एव हि तत्र निरस्तः। जीवस्य तदधिष्ठातृत्वं च 'उपादानाद्विहारोपदेशाच्च' इत्युक्तम् ॥ अग्न्यादीनां भोक्तृत्वप्रसङ्गः परिहर्तव्य इति चेन्न—वागादीनामग्न्यादिदेहस्थत्वाभावेन तैस्तासां भोक्तृत्वाप्रसङ्गात्। स्वदेहस्थेन्द्रियाणां हि भोगसाधनत्वम्। इह तत्परिहाराश्रवणाच्च ॥ तत्परिहारो विवक्षित इति चेन्न—इह तत्परिहारैकान्तत्वाभावात्सूत्राक्षराणाम्। इहाभिप्रेततया वर्णितस्य परिहारस्य अभिमानिव्यपदेशसूत्रेणैवाभिप्रेतत्वोपपत्तेः। परमात्माधीनत्वस्य श्रुतिसिद्धत्वस्य निरूपणीयत्वात् तद्विषयत्वमेव युक्तम्। तथा च सति 'प्राणवता शब्दात्' इत्यस्य पृथक्सूत्रत्वाभावोऽर्थवशादेव भवति ॥

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** ॥ किं सर्वे प्राणा इन्द्रियाणि, उत मुख्यप्राणव्यतिरिक्ता इति; किं श्रोत्रादिषु मुख्यप्राणे च प्राणशब्द एकनिमित्तेन वर्तते, उत निमित्तभेदेनेति। यद्येकनिमित्तेन, तदा सर्वे प्राणा इन्द्रियाणि; यदा निमित्तभेदेन, तदा मुख्यप्राणव्यतिरिक्ता इन्द्रियाणि ॥ **भेदश्रुतेर्वैलक्षण्याच्च** ॥ **मनः षष्ठानीन्द्रियाणीति**। अत्रादिशब्देन 'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इत्यादि विवक्षितम्—सुषुप्तौ वृत्त्युपलम्भवैलक्षण्यं शरीरेन्द्रियधारणरूपकार्यवैलक्षण्यं प्राणशब्दप्रवृत्तिनिमित्तवैलक्षण्यञ्चेत्यर्थः। चक्षुरादीनां प्राणशब्दबोध्यत्वं लाक्षणिकम्; मुख्यप्राणस्य तु मुख्यम्। भेदश्रुतेर्वैलक्षण्याच्चेत्येकं सूत्रमिति युक्तम्; वैलक्षण्यानुगृहीतश्रुतेरेव हेतुत्वात्। हेतुभेदे हि सूत्रभेदोपपत्तिः। मनस इव गोबलीवर्दन्यायेन भेदनिर्देशसंभवात्। तद्व्यावर्तकाकारान्तरेण वैलक्षण्ये सिद्धे हि भेदश्रुतिः स्थेयसी स्यात् ॥

**परे तु** श्रोत्रादीन्द्रियाणि किं मुख्यप्राणस्य वृत्तिभेदाः, उत तत्त्वान्तराणीति विचारयन्ति। 'एतस्यैव सर्वे रूपमभवन्' इति श्रुत्या पूर्वपक्षं वदन्ति। तत्रैव परस्परसंवादनिष्क्रमणादिप्रतिपादकपूर्वापरवाक्यैर्वृत्तिभेदशङ्काव्युदासात् तदपर्यालोचनेनोच्यमानः पूर्वपक्षो मन्दः।

## संज्ञामूर्तिकॢप्त्यधिकरणम् २-४-८

### संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २-४-१७ ॥

भूतेन्द्रियादीनां समष्टिसृष्टिः, जीवानां कर्तृत्वं च परस्माद्ब्रह्मण इत्युक्तं पुरस्तात्। जीवानां स्वेन्द्रियाधिष्ठानं च परायत्तमिति चानन्तरं स्थिरीकरणाय स्मारितम्। या त्वियं नामरूपव्याकरणात्मिका प्रपञ्चव्यष्टिसृष्टिः, सा किं समष्टिजीवरूपस्य हिरण्यगर्भस्यैव कर्म, उत तेजःप्रभृतिशरीरकस्य परस्यावादिसृष्टिवत् हिरण्यगर्भशरीरकस्य परस्य ब्रह्मणः इतीदानीं चिन्त्यते। किं

---

अन्ये तु—कतिपयेष्वपि नेन्द्रियत्वम्, एकप्रवृत्तिनिमित्ताभावादिति पूर्वपक्ष एव शिरोन्तरं कल्पयन्ति। तच्चातिमन्दम्; इन्द्रियशब्दस्य निर्विषयत्वप्रसङ्गात्। अतः केनापि निमित्तेन भवितव्यमिति कृत्वा तस्य सार्वत्रिकत्वासार्वत्रिकत्वाभ्यां पूर्वपक्षसिद्धान्तवर्णनं न्याय्यम्। पुरुषाधीनकरणत्वमिन्द्रियत्वम्, बुद्धिप्राणयोस्तदधीनत्वाभावात् कर्तर्यन्तर्भाव इति चाहुः। तदप्ययुक्तम्; उत्पत्तिस्थितिविनाशेषु चेत् पुरुषाधीनत्वाभावः, स वागादिष्वपि तुल्यः। प्रवृत्तौ चेत्, कतिपयप्रवृत्तिषु पुरुषाधीनत्वाभावो मनआदीनामप्यविशिष्टः; भयाद्युत्पादने पुरुषाधीनत्वाभावात्। अतो मनआदीनामपि कर्तृकोटिनिवेशप्रसङ्गः॥ पुरुषाधीनकतिपयवृत्तित्वं तेषामस्तीति चेत्—प्राणसंयमनादिप्रवृत्तिषु पुरुषाधीनत्वं बुद्धिप्राणयोश्चास्ति। अतो न कर्त्रन्तर्भावः। देहधारकत्वं प्राणत्वमित्यप्ययुक्तम्; चक्षुश्श्रोत्रादीनां देहधारकत्वाभावात्॥ चक्षुरादीनामपि कदाचिच्छ्रमदर्शनात् तदुपरतौ देहानुत्थानाच्च देहधारकत्वमिति चेन्न; स्वस्वविषयेषु व्यापारभूयस्त्वनिबन्धनस्य श्रमस्य देहधारणनिबन्धनत्वाभावात्। निद्रारोगपरिश्रमादिभिरात्मनो देहोत्थापनशक्तेस्तन्निमित्तप्राणप्रेरणशक्तेर्वा प्रतिबद्धत्वाद्देहानुत्थानम्; न तु वागादीनां देहधारणश्रान्तत्वात्॥ ३७॥ इति इन्द्रियाधिकरणम्॥

**संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात्** ॥ पेटिकासङ्गतिमाह-**भूतेन्द्रियादीनामिति**। **पुरस्तात्** तृतीये पादे। **अनन्तरम्** अस्मिन् पादे पूर्वस्मादपि पूर्वाधिकरणे। **स्थिरीकरणाय स्मारितम्**। देवानामपि परायत्तप्रवृत्तित्वनिर्णयेन जीवानां परायत्तं कर्तृत्वं स्थिरं भवति। तदर्थं तदेव दृष्टान्ततया स्मारितमित्यर्थः। तृतीयपादादारभ्य इतः पूर्वमेका पेटिका। तत्र भूतेन्द्रियसमष्टिसृष्टिनिरूपणम्, अथ व्यष्टिसृष्टिनिरूपणमिति पेटिकासङ्गतिः। व्यष्टेश्च जीवोपकरणरूपत्वात् तत्सृष्टिनिरूपणमिति पादसङ्गतिः। पूर्वाधिकरणे 'भेदश्रुतेर्वैलक्षण्याच्च' इति सूत्रस्य विषयवाक्ये 'खं वायुर्ज्योतिः' इत्यादौ समष्टिसृष्टेः परमात्मकर्तृकत्वमुक्तम्; अथ व्यष्टिसृष्टिर्जीवकर्तृकतया प्रतीयत इति शङ्कयाऽवान्तरसङ्गतिः। जीवोपकरणानामिन्द्रियप्राणानामुत्पत्त्यादिकं निरूपितम्; तैरिन्द्रियादिभिर्जीवस्य संयोगकरणं हि व्यष्टिसृष्टिरिति वा सङ्गतिरित्यभिप्रेतम्। पूर्वपादोक्तसमष्टिनिरूपणेन व्यष्टिसृष्टिनिरूपणस्य सङ्गतिः; अन्यान्यधिकरणानि तु प्रसक्तानुप्रसक्तिकया निरूपितानीति एतत् कण्ठोक्तम्।

ब्रह्मणः साक्षात्सर्वकारणत्वं श्रुतमुपपद्यते, उत नेति संशयः। तदर्थं व्यष्टिनामरूपव्याकरणं किं हिरण्यगर्भमात्रकर्तृकम्, उत तदवस्थब्रह्मकर्तृकमिति; तदर्थम् 'अनेन जीवेन' इति जीवसामान्यकर्तृकत्वश्रुतिः किं जीवसमष्ट्याश्रयकेवलहिरण्यगर्भकर्तृकत्वमवगमयति, उत जीवमात्रविशिष्टपरमात्मकर्तृक-

युक्तम्। समष्टिजीवस्येति । कुतः । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति जीवकर्तृकत्वश्रवणात् । न हि परा देवता स्वेन रूपेण, नामरूपे व्याकरवाणीत्यैक्षत; अपि तु स्वांशभूतेन जीवरूपेण; "अनेन जीवेनात्मना" इति वचनात् ॥ नन्वेवं चारेणानुप्रविश्य परबलं सङ्कलयानीतिवत् व्याकरवाणीत्युत्तमपुरुषः कर्तृस्थक्रियश्च प्रविशतिर्लाक्षणिकः स्यात् ॥ नैवम् । तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम्; इह तु जीवस्यापि स्वांशत्वेन स्वरूपत्वात् तेन रूपेण प्रवेशो व्याकरणं चात्मन एवेति न लाक्षणिकत्वप्रसङ्गः । न च सहयोगलक्षणेयं

---

त्वमिति ; तदर्थं केवलहिरण्यगर्भकर्तृकत्वे त्रिवृत्करणनामरूपव्याकरणयोः श्रूयमाणयोरेककर्तृकत्वं घटितम् , नेति ; तदर्थं त्रिवृत्करणे हिरण्यगर्भस्य कर्तृत्वं संभवति, नेति ; तदर्थं त्रिवृत्करणं हिरण्यगर्भोत्पत्तिस्थानभूताण्डसृष्टेरुत्तरकालीनं वा पूर्वकालीनं वेति । ; तदर्थं 'नामरूपे व्याकरोत् , त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमः अण्डान्तर्वर्तित्रिवृत्करणप्रदर्शनमन्त्रादीनां त्रिवृत्करणश्रुतिश्च त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालीनतामवगमयति नेति, किमेते त्रयो हेतवः प्रबला उत दुर्बला इति । तेषां प्राबल्ये त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालीनतावगमकतया तस्य हिरण्यगर्भकर्तृकत्वसंभवेन त्रिवृत्करणनामरूपव्याकरणयोः कर्त्रैक्यश्रुत्युपपत्तेः अनेनजीवेनेति निर्देशस्य हिरण्यगर्भमात्रकर्तृत्वज्ञापकतया व्यष्टिनामरूपव्याकरणं हिरण्यगर्भमात्रकर्तृकमिति परब्रह्मणः साक्षात्सर्वकारणत्वं न स्यात् । पाठक्रमादीनां दुर्बलत्वे त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालीनत्वासिद्धेः तत्र हिरण्यगर्भस्य कर्तृत्वासंभवेन त्रिवृत्करणनामरूपव्याकरणयोः कर्त्रैक्यायोगात् तदुपपत्त्यर्थम् अनेनजीवेनेति निर्देशस्य जीवसमष्टिशरीरकपरमात्मकर्तृकत्वावगमकतया व्यष्टिनामरूपव्याकरणं हिरण्यगर्भशरीरकपरमात्मकर्तृकमिति परब्रह्मणः साक्षात्सर्वकारणत्वमुपपन्नमिति सिद्ध्यति ॥ नन्वितरैरिव जीवमात्रकर्तृकत्वविषयो विचारः किं न कृतः ? हिरण्यगर्भमात्रकर्तृकत्वं पूर्वपक्षीकृत्य हिरण्यगर्भावस्थब्रह्मकर्तृकत्वं यदि सिद्धान्त्यते, तर्हि जीवशब्दस्य हिरण्यगर्भविषयत्वेन गवादिशब्दानां तत्तच्छरीरकजीवद्वारा परमात्मपर्यन्तत्वे नामरूपव्याकरणश्रुतिर्न प्रमाणं स्यात् । सर्वशरीरेषु चतुर्मुखस्यैव जीवतयाऽवस्थाने एकजीववादश्च स्यात् । बहूनां जीवानां हिरण्यगर्भाख्यजीवव्याप्यत्वं वा स्यात् ॥ नैवम् । अनेन जीवेनेति जीवशब्दस्य जीवसमष्टिविषयत्वात् जीवसमष्टेः कृत्स्ननामरूपव्याकर्तृत्वशङ्कानुपपत्तेः संशयान्यथानुपपत्त्या योग्यतावशाज्जीवविशेषनिष्ठो विचारः सूत्राभिप्रेत इति तथा विचारो दर्शितः । न च तावता सर्वशरीरेषु हिरण्यगर्भस्यैव जीवत्वं वा तत्तज्जीवव्याप्तृत्वं वा प्रसजेत् ; परमात्मनो जीवसमष्टिद्वारेणाचिदनुप्रवेशस्य प्रतिपाद्यत्वात् ॥ व्याकरवाणीति ब्रह्मण एव कर्तृत्वं प्रतीयत इत्यत्राह **न हि परा देवतेति** । **कर्तृस्थक्रियः** । व्याकरणकर्तृस्थक्रिय इति विवक्षया समानकर्तृक इत्यर्थः । लाक्षणिकत्वं परिहरति **नैवमि**त्यादिना । वस्तुतो जीवस्य परमात्मांशत्वात् तस्य कर्तृत्वं परमात्मन एव भवति । तस्मान्मुख्यकोटिरित्यर्थः क्लिष्टनिर्वाहत्वात्[1] ; यथा प्राभाकरैर्गवादिशब्दानां व्यक्तिर्मुख्यकोटिरिति मतम्, तद्वत् । तृतीयायाः सहयोगाद्यर्थान्तरपरत्वे परमात्मन्येव कर्तृत्वं स्यादित्याशङ्क्याह **न च सहयोगेति** । कर्तृकरणयोस्तृतीयेत्यादिभिः पदान्तरयोगमनपेक्ष्य विहिता विभक्तिः कारकविभक्तिः, पदान्तरसाहचर्ये

---

1 क्लिष्टनिर्वाहत्वात् - असंभवन्निर्वाहत्वाभावात् ।

तृतीया ; कारकविभक्तौ संभवन्त्यामुपपदविभक्तेरन्याय्यत्वात् । न च करणे तृतीया ; ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधकतमत्वाभावात् । न च—जीवस्य कर्तृत्वं प्रवेशमात्रे पर्यवस्यति, नामरूपव्याकरणं तु ब्रह्मण एव—इति शक्यं वक्तुम् ; क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतेः। जीवस्य स्वांशत्वेन स्वरूपत्वेऽपि परस्वरूपव्यावृत्त्यर्थः 'अनेन जीवेन' इति पराक्त्वेन परामर्शः । अतो हिरण्यगर्भकर्तृकेयं नामरूपव्याक्रिया । अत एव च स्मृतिषु चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याकरणं सङ्कीर्त्यते, "नाम रूपञ्च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः" इत्यादि ।

एवं प्राप्तेऽभिधीयते-संज्ञामूर्तिक्लृप्तिस्तु इति । तुशब्दः पक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिः—नामरूपव्याकरणम् । तत् त्रिवृत्कुर्वतः परस्यैव ब्रह्मणः ; तस्यैव नामरूपव्याकरणोपदेशात् । त्रिवृत्करणं कुर्वत एव हि नामरूपव्याकरणमुपदिश्यते, "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ; तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति समानकर्तृकत्वप्रतीतेः। त्रिवृत्करणं तु चतुर्मुखस्याण्डान्तर्वर्तिनो न संभवति; त्रिवृत्कृतैस्तेजोबन्नैर्ह्यण्डमुत्पाद्यते। चतुर्मुखस्य च अण्डे संभवः स्मर्यते, "तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामहः" इति । अतस्त्रिवृत्करणं परस्यैव ब्रह्मणः। तत्समानकर्तृकं नामरूपव्याकरणञ्च तस्यैवेति विज्ञायते ॥ कथं तर्हि अनेन जीवेनेति सङ्गच्छते ॥ 'आत्मना जीवेन' इति सामानाधिकरण्यात् जीवशरीरकं परं ब्रह्मैव जीवशब्देनाभिधीयते ॥ यथा 'तत् तेज ऐक्षत', 'तदपोऽसृजत' 'ता आप ऐक्षन्त', 'ता अन्नमसृजन्त' इति तेजःप्रभृतिशरीरकं परमेव ब्रह्माभिधीयते । अतो जीवसमष्टिभूतहिरण्यगर्भशरीरकस्य परस्यैव ब्रह्मणः कर्म नामरूपव्याकरणम् । एवं च, 'प्रविश्य नामरूपे व्याकरवाणि' इति प्रविशतिरुत्तमपुरुषश्चाञ्जस्ये मुख्यार्थावेव भवतः । प्रवेशव्याकरणयोः समानकर्तृकत्वमप्युपपद्यते । चतुर्मुखशरीरकस्य परस्यैव ब्रह्मणः कर्म देवादिविचित्रसृष्टिरिति चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यते । अतः 'सेयं देवता' इत्यादिवाक्यस्यायमर्थः—इमास्तेजोबन्नरूपास्तिस्रो देवताः अनेन जीवेन—जीवसमष्टिविशिष्टेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि; देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि । तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोबन्नानां विशिष्टसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणीति । अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम् ॥ १७ ॥

---

विहिता उपपदविभक्तिः । **अन्याय्यत्वादिति** । पदान्तरपरामर्शसापेक्षतया विलम्बितवृत्तित्वादन्याय्यत्वमभिप्रेतम् । ननु करणे विहिता तृतीया नोपपदविभक्तिरित्यत्राह **न च करण** इति । तर्हि द्वयोरपि कर्तृत्वात् समानकर्तृकत्वावगमाद्वस्तुतोऽनन्यत्वाच्च तदवस्थपरमात्मकर्तृकत्वं स्यादित्यत्राह **जीवस्येति** । हेत्वन्तरमाह **अत एव चेति** ।

राद्धान्तमाह-**एवं प्राप्त** इति । त्रिवृत्करणं चतुर्मुखकर्तृकं स्यादित्यत्राह-**त्रिवृत्करणं त्विति** । कुत इत्यत्राह **त्रिवृत्कृतैरिति** । अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्येत्यर्थः । ततः किमित्यत्राह **चतुर्मुखस्येति** । चतुर्मुखसृष्टिप्रकरणे नामरूपव्याकरणवचननिर्वाहमाह **चतुर्मुखेति** । त्रिवृत्करणं नाम किम् , तस्याण्डसृष्ट्यर्थत्वं कथम् , अनेन जीवेनेति वाक्यात् तेजोबन्नप्रतीतिः कथम् ? नामरूपव्याकरणं च किमित्यत्राह-**अतः सेयमिति** ।

अथ स्यात्—नामरूपव्याकरणस्य त्रिवृत्करणैकैककर्तृकत्वात् परमात्मकर्तृकत्वमिति न शक्यते वक्तुम्; त्रिवृत्करणस्यापि जीवकर्तृकत्वसंभवात्। अण्डसृष्ट्युत्तरकालं हि चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते, "यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति", "अन्नमशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो भागस्तत्पुरीषं भवति। यो मध्यमस्तन्मांसम्। योऽणिष्ठस्तन्मनः" इत्यादिना। तथा पूर्वस्मिन्नपि वाक्ये; "यदग्नेरोहितं रूपं तैजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य" इत्यादिना चतुर्मुखसृष्टाग्न्यादित्यचन्द्रविद्युत्सु त्रिवृत्करणं प्रदर्श्यते। नामरूपव्याकरणोत्तरकालं च त्रिवृत्करणं श्रूयते, "सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति॥ तत्राह—

**मांसादि भौमं यथाशब्दमितरयोश्च ॥ २-४-१८ ॥**

यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोऽयम्, "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति त्रिवृत्करणोपदेश इति तन्नोपपद्यते; "अन्नमशितं त्रेधा विधीयते" इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेनाऽऽप्यतैजसत्वप्रसङ्गात्, 'आपः पीताः' इत्यत्रापि मूत्रप्राणयोः स्थविष्ठाणीयसोः पार्थिवत्वतैजसत्वप्रसङ्गाच्च। न चैवमिष्यते। मांसादि[1] हि भौममिष्यते। पुरीषवन्मांसमनसी अपि भौमे—पार्थिवे इष्येते; 'अन्नमशितं त्रेधा' इति प्रक्रमात्। यथाशब्दमितरयोश्च। इतरयोरपि 'आपः पीताः,' 'तेजोऽशितम्' इति पर्याययोर्यथाशब्दं विकारा इष्यन्ते। 'आपः पीतास्त्रेधा विधीयन्ते' इत्यपामेव त्रेधा परिणामः शब्दात् प्रतीयते। तथा 'तेजोऽशितं त्रेधा विधीयते' इत्यपि तेजस एव त्रेधा परिणामः शब्दात् प्रतीयते। अतः पुरीषमांसमनांसि पृथिवीविकाराः, मूत्रलोहितप्राणाः अब्विकाराः, अस्थिमज्जावाचस्तेजोविकारा इति प्रतिपत्तव्यम्; 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' इति वाक्यशेषाविरोधाच्च।

---

अनन्तरसूत्रशङ्कामाह **अथ स्यादिति**। अण्डसृष्टेः पश्चात् चतुर्मुखसृष्टेषु पुरुषेषु त्रिवृत्करणोपदेशात्, तत्सृष्टाग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनात् नामरूपव्याकरणोत्तरकालं त्रिवृत्करणश्रवणाच्च त्रिवृत्करणस्याण्डसृष्ट्यर्थत्वं न संभवति। अतस्त्रिवृत्करणं चतुर्मुखकर्तृकमिति तदेककर्तृकं नामरूपव्याकरणं चतुर्मुखकर्तृकमित्यर्थः। **मांसादिभौमं यथाशब्दमितरयोश्च ॥ अन्नमशितमित्यादि। कारणानुविधायित्वेन** अत्रिवृत्कृतानामपि पृथिव्यप्तेजसां स्थूलत्वाणुत्वाणीयस्त्वात् त्रिवृत्कृतेष्वपि तत्तद्भूतांशानां स्वकारणानुगुणस्थूलत्वाणुत्वाणीयस्त्वं स्यात्। तस्मादन्नमशितमित्यादिवाक्ये त्रिवृत्करणं प्रदर्श्यते चेत्—स्थविष्ठं पुरीषं पार्थिवम्, अणु मांसमाप्यम्, अणीयो मनश्च तैजसं स्यात्। न तथोपपद्यते; मांसमनसोः पार्थिवत्वात्। पार्थिवत्वं च, अन्नमशितमिति प्रक्रमादवगतमित्यर्थः। एवमितरपर्यायद्वयेऽपि। **न चैवमिष्यत** इत्यन्तेन प्रथमद्वितीयपर्याययोरनिष्टं दर्शितम्। तृतीये तु न प्रसक्तम्। तत्रायं भावः—प्रतिपर्यायं चरमोपात्तेष्वनिष्टस्य प्रसञ्जनीयत्वात् तृतीयपर्याये चरमे प्रसञ्जनीयस्यानिष्टत्वाभावान्न तत् प्रसञ्जनीयमिति। तृतीयेऽप्यस्थिमज्जापार्थिवाप्यत्वानिष्टता पश्चाद्वक्ष्यते। **मांसादिहीति**[1]। मांसमनसोराप्यतैजसत्वे अनिष्टे। द्वितीये मूत्रं पार्थिवं लोहितमाप्यं प्राणस्तैजसः स्यात्। तत्र मूत्रप्राणयोः

---

1 मांसादेर्हि भौमत्वमिति भाष्ये, मांसादेर्हीति टीकायाञ्च पाठान्तरम्।

अतः 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्युक्तस्त्रिवृत्करणप्रकारः अन्नमशितमित्यादिना न प्रदर्श्यते। तथा सति मनःप्राणवाचां त्रयाणामप्यणीयस्त्वेन तैजसत्वात् 'अन्नमयं हि सोम्य मनः' इत्यादिर्विरुध्येत। प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानाम् अन्नमशितमित्यादिना एकैकस्य त्रेधा परिणाम उच्यते। अण्डसृष्टेः प्रागेव च तेजोबन्नानां त्रिवृत्करणेन भवितव्यम्; अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात्। अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम्; तदेव च त्रिवृत्करणम्। तथा च स्मर्यते, "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति। अत एव च, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्; तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमोऽर्थक्रमेण बाध्यते। अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येष्वग्न्यादित्यादिषु क्रियते॥ १८॥

स्यादेतत् 'अन्नमशितम्, आपः पीताः, तेजोऽशितम्' इति त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोबन्नात्मकत्वेन त्रिरूपस्य कथमन्नमापस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यते—इति; तत्राह—

**वैशेष्यात्तु तद्वादस्तद्वादः॥ १९॥**

---

पार्थिवत्वतैजसत्वे अनिष्टे। 'अन्नमशितम्, आपः पीताः' इति च प्रक्रमेण मांसमनसोः पार्थिवत्वात् मूत्रप्राणयोराप्यत्वात्; 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः' इति वाक्यशेषाच्च। तृतीयेऽप्यस्थ्नः पार्थिवत्वं मज्जाया आप्यत्वं वाचस्तैजसत्वं च स्यात्। तत्रास्थिमज्ज्ञोः पार्थिवत्वाप्यत्वे अनिष्टे। तेजोऽशितमिति प्रक्रमात्, तेजोमयी वागिति वाक्यशेषाच्च। तस्मान्न त्रिवृत्करणं प्रदर्श्यते। अपितु अन्नादीनां प्रत्येकं त्रेधा परिणाम उच्यत इत्यर्थः। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्; तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमात् नामरूपव्याकरणस्य पश्चात् त्रिवृत्करणं प्रतीयत इत्यत्राह **अत्रिवृत्कृताना**मिति। अन्योन्यसंयुक्तानां कार्यारम्भसामर्थ्यं चेत्, कथं त्रिवृत्करणापेक्षेत्यत्राह **तदेव चे**ति। अन्योन्यसंयुक्तत्वमेव त्रिवृत्कृतत्वमित्यर्थः। एतद्विशदयति **तथा च स्मर्यत** इति। पाठक्रमः कथमित्यत्राह **अत एव चे**ति। उत्पत्तौ साधनस्य पूर्वभावित्वे फलस्य पश्चाद्भावित्वे सत्यपि, सङ्कल्पे फलमेव पूर्वभावि; स्वर्गकामो यक्ष्ये इत्यादिषु तथा दर्शनात्। अस्मिन् प्रकरणेऽपि 'बहु स्यां प्रजायेय' इति साध्यस्य बहुभवनस्य पूर्वभावित्वं च दृष्टम्। उपबृंहणे च तत् विशदीकृतम्। तस्मात्, 'नामरूपे व्याकरवाणि, 'त्रिवृतं त्रिवृतमेकैकां करवाणि' इति सङ्कल्पवाक्ये त्रिवृत्करणफलस्य नामरूपव्याकारणस्य पूर्वप्रतिपत्तौ त्रिवृत्करणस्य पूर्वभावित्वं सिद्धम्। 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यादिष्वर्थक्रमेण पाठक्रमबाधदर्शनात्। सङ्कल्पवाक्यस्वाभाव्यात्, प्राकरणिकसङ्कल्पवाक्यान्तरे पश्चाद्भाविनः फलस्य पूर्वभावदर्शनात्, उपबृंहणवचनस्वारस्याच्च 'नामरूपे व्याकरोत्' त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमोऽर्थक्रमेण बाध्यत इत्यर्थः। तर्ह्यग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं किमर्थमित्यत्राह **अण्डान्तर्वर्तिष्वि**ति। **अग्न्यादित्यादिषु** इति द्विः श्रूयते। तथा पाठश्चेदयमर्थः— अग्न्यादित्यादिषु त्रिवृत्कृतभूतकार्येषु सत्सु— त्रिवृत्कृतभूतकार्यत्वादेव तेष्वग्न्यादिषु त्रिवृत्करणप्रदर्शनं क्रियत इति। यद्वा **अण्डान्तर्वर्तित्वेने**त्यन्तमेकं वाक्यम्। कथमस्य हेतुत्वमित्यत्राह **तस्ये**ति। क्रियते **त्रिवृत्करणप्रदर्शन**मिति शेषः।

अनन्तरसूत्रं शङ्कायामवतारयति—**स्यादेत**दिति। **वैशेष्यात्तु तद्वादस्तद्वादः॥** विशेषशब्दो

वैशेष्यं—विशेषभावः। त्रिवृत्करणेन त्रिरूपेऽप्यैकैकस्मिन् अन्नाद्याधिक्यात् तत्रतत्रान्नादिवादः। द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ १२ ॥ इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

---

विकारशब्दवत् धर्मिपरो धर्मपरश्च। अत्र तु धर्मिपरः। विशेषभावो **वैशेष्यम्** आधिक्यरूपम् ॥

**परे तु** जीवस्यानुप्रवेशकर्तृत्वम्; नामरूपव्याकरणकर्ता तु परमेश्वर इत्याहुः। तन्मते श्रुतिविरोधः; 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्' इति नामरूपव्याकरणसमभिव्याहृतानुप्रवेशस्य परमात्मकर्तृकत्वावगमात्। समानकर्तृकत्वं च न घटते ॥ जीवस्यापीश्वराद्वस्तुतोऽनन्यत्वेन युक्तं समानकर्तृकत्वमिति चेन्न; जीवेश्वरयोरुभयोर्ब्रह्मणि कल्पितत्वात् कुलालकुविन्दकर्तृकयोर्घटपटयोरिव तदनुपपत्तेः ॥ अधिष्ठानैक्यात् तदुपपत्तिरिति चेन्न—स्वाप्नकुलालकुविन्दयोस्सन्मात्रकल्पितत्वेऽपि तन्निमित्तघटपटयोरेककर्तृकत्वाभावात्। किं च कर्तृत्वमुपाधिगतं तद्विशिष्टगतं तदुपलक्षितवस्तुगतं वा?। आद्ये कर्त्रैक्यासिद्धिः, जीवेश्वरावच्छेदकानामुपाधीनां भिन्नत्वात्। द्वितीयेऽपि न कर्त्रैक्यम्, विशिष्टरूपभेदात्; यथा कुलालकुविन्दकर्तृकयोर्घटपटयोः। तृतीये तु सन्मात्रवस्तुनि स्वतः कर्तृत्वाभावादेवं न कर्त्रैक्यम् ॥ शरीरभेदेन कृतानां सौभरिव्यापाराणामिव एककर्तृकत्वोपपत्तिरिति चेन्न; तच्छरीरव्यापारमूलभूतप्रयत्नस्येव जीवेश्वरव्यापारभूतानुप्रवेशव्याकरणमूलप्रयत्नस्य तत्तच्छरीरैकात्मगतत्वानुपपत्तेः ॥ ननु छाययाऽऽदर्शमनुप्रविश्य तिलकं रचयामीतिवत् समानकर्तृकत्वोपपत्तिरिति चेन्न; सत्यानृतयोर्बिम्बप्रतिबिम्बयोरेककर्तृत्वाभावेन दृष्टान्तस्य साध्यविकलत्वात्; छाययाऽऽदर्शे भासमानतातिरेकेणानुप्रवेशाभावाच्च। न हि मूर्तद्रव्यप्रतिघातिनो दर्पणस्यानुप्रवेशयोग्यत्वम्। तृतीयसूत्रेणानुपपत्तिविशेषपरिहाराय त्रिवृद्वचनान्तरोपन्यासपरं द्वितीयसूत्रमित्यप्ययुक्तम्; मन्दप्रयोजनत्वात्। प्रयोजनवत्तरनिर्वाहस्य दर्शितत्वाच्च ॥ मनस आहङ्कारिकत्वनित्यत्वयोः साङ्ख्यवैशेषिकाभिमतयोर्व्युदासेनान्नमयत्वसमर्थनार्थं द्वितीयं सूत्रमिति चेन्न; आहङ्कारिकत्वस्य श्रुतिसिद्धत्वात्। सर्वेन्द्रियाणां भूतादिशब्दोपलक्षितेऽहङ्कारे प्रलयश्रवणात्; मनसो वाचश्च पृथिवीतेजःकार्यत्वे भूतप्रलयोत्तरकालमवस्थानानुपपत्तेः पाश्चात्यप्रलयश्रवणायोगाच्च। **अपरेषामपि** पक्षेऽनुप्रवेशस्य जीवकर्तृकत्वं वक्तुमयुक्तम्; नामरूपव्याकरणसमभिव्याहृतानुप्रवेशस्य परमात्मकर्तृकत्वश्रवणात् ॥ जीवस्येश्वरादभिन्नत्वात् तत्कर्तृकत्वेऽप्यनुप्रवेशस्य परमात्मकर्तृकत्वोपपत्तिरिति चेत्—तर्हि नामरूपव्याकरणस्यापि जीवकर्तृकतया परमात्मकर्तृकत्वं स्यात् ॥ समस्तनामरूपव्याकरणं जीवस्याशक्यमिति चेत्—सर्वानुप्रवेशश्चाशक्यः ॥ नन्वचिन्मात्रेऽनुप्रवेश उपपद्यते; 'तिस्रो देवता अनुप्रविश्य' इति हि श्रूयत इति चेन्न—समानप्रकरणे, 'विज्ञानं चाविज्ञानं च सत्यं चानृतं च' इति जीवेऽप्यनुप्रवेशश्रवणात् ॥ **अन्येषां** मतेऽपि समानकर्तृकत्वमनुपपन्नम्, जीवेश्वरयोर्ब्रह्मांशत्वावगमात्; तदंशभूतयोश्च तयोर्द्वयोर्जीवयोरिवैककर्तृकत्वानुपपत्तेः ॥ अंशिन एकत्वात् कर्त्रैक्यमिति चेन्न; राजचारयोरपि ब्रह्मांशत्वेनैककर्तृकत्वप्रसङ्गात् ॥ अस्त्विति चेत्—असमानकर्तृकव्यापाराभावात् 'समानकर्तृकयोः' इत्यनुशासनवैयर्थ्यं स्यात्। उपरितनसूत्रद्वयस्याधिकरणान्तरत्वमप्ययुक्तम्; सूत्राणामव्यवहितत्वे सति फलफलिभावेनान्वितार्थप्रतिपादकत्वात् ॥

**इति श्रुतप्रकाशिकायां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ श्रीमते सुदर्शनसूरये नमः।**

श्रीमते रामानुजाय नमः ।

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## तृतीयाध्याये प्रथमः पादः ।

### तदन्तरप्रतिपत्त्यधिकरणम्—३-१-१.

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३-१-१ ॥**

अतिक्रान्ताध्यायद्वयेन निखिलजगदेककारणं निरस्तनिखिलदोषगन्धम् अपरिमितोदारगुणसागरं सकलेतरविलक्षणं परं ब्रह्म मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्तीत्ययमर्थः स्मृतिन्यायविरोधपरिहार - परपक्षप्रतिक्षेप - वेदान्तवाक्यपरस्परविरोधपरिहाररूपकार्यस्वरूपसंशोधनैस्तद्दुर्धर्षणत्वहेतुभिः सह स्थापितः । अतोऽध्यायद्वयेन ब्रह्मस्वरूपं प्रतिपादितम् । उत्तरेणेदानीं तत्प्राप्त्युपायैः सह प्राप्तिप्रकारश्चिन्तयितुमिष्यते ।

तत्र तृतीयाध्याये उपायभूतोपासनविषया चिन्ता वर्तते। उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं, प्राप्यतृष्णा चेति—तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु सञ्चरतो जाग्रतः स्वपतः सुषुप्तस्य मूर्च्छतश्च दोषाः, परस्य च ब्रह्मणस्तद्रहितता, कल्याणगुणाकरत्वं च प्रथमद्वितीययोः पादयोः प्रतिपाद्यन्ते । तत्र देहाद्देहान्तरं गच्छन्नयं जीवो देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः संपरिष्वक्त एव गच्छति, उत नेति चिन्तायाम्— यत्र यत्र जीवो याति, तत्र तत्र भूत-

---

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्** ॥ उत्तरद्विकसङ्गत्यर्थं पूर्वद्विकार्थमाह **अतिक्रान्तेत्यादिना** । **इत्ययमर्थ** इत्यस्मात्पूर्वं प्रथमाध्यायार्थःसङ्क्षिप्तः । **निखिले**त्यादिविशेषणानां पूर्ववदर्थः । द्वितीयस्याध्यायस्य प्रथमद्वितीयपादार्थं सङ्क्षिपति-**स्मृतिन्याये**ति । तत्र **वेदान्ते**त्यादिना तृतीयतुरीयपादार्थः संक्षिप्तः । एवं किञ्चिद्विस्तरेण अध्यायद्वयार्थ उक्तः । प्रथमद्विकस्य सङ्ग्रहेणानुगतमर्थमाह **अत** इति । उत्तरद्विकार्थं संक्षिपति **उत्तरेणे**ति । **इदानीं**—विषये सिद्धे इत्यर्थः । प्रथमद्विके सिद्धवस्तुरूपविषयचिन्ता कृता। द्वितीये तु साध्यरूपविषयिचिन्ता क्रियत इत्यर्थः। तृतीयचतुर्थयोः साधनफलविषयतया क्रममभिप्रयन् तृतीयाध्यायार्थमाह **तत्रे**ति । प्रथमद्वितीयपादयोर्न ह्युपासनं चिन्त्यत इत्यत्राह **उपासनारम्भे**ति । **अभ्यर्हितम्**—अन्तरङ्गम्। अत्र 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्यस्यार्थोऽभिप्रेतः । लोकान्तरेषु सञ्चरतो दोषाश्चिन्त्यन्ते ; तत्र जागराद्यवस्थस्य दोषाः फलिताः ।

प्रथमाधिकरणस्य संशयमाह **तत्रे**ति । किं देहान्तरं गच्छन् जीवो भूतसूक्ष्मैः संपरिष्वक्तो रंहति, उतासंपरिष्वक्त इति ; 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति', 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसः' इति प्रश्नप्रतिवचने किं संपरिष्वक्तस्य रंहणं गमयतः, नेति ; किं श्रद्धादिशब्दैः यथाप्रसिद्धि स्वार्था उच्यन्ते, उत भूतसूक्ष्मपरिष्वक्तो जीव इति ; पितृयाणेन पथा[1] निवर्तने 'एष सोमो

---

१ एष सोमो राजेत्यस्य जीवपरत्वे सिद्धे किल तदैकार्थ्यात् तस्या आहुतेः सोमोराजेत्यत्र जीवग्रहणम् । तदेव न ; श्रुतौ चन्द्रमसमित्यन्तेन पितृयाणसमाप्तेः । एष सोम इत्यादेः निवर्तनवाक्यशेषत्वात् चन्द्रमण्डलपरत्वात् । अत एवैकवचनम्—इति शंकितुराशयं दर्शयितुं निवर्तन इत्यन्तमुक्तम् । अतः, कथमिदं निवर्तनवाक्यस्थमिति शंकाया नावकाशः ।

सूक्ष्माणां सुलभत्वादसंपरिष्वक्तो यातीति प्राप्तम्। पश्चादपि पूर्वपक्षबीजान्युपन्यस्य निरसिष्यति। तत्र सिद्धान्तमाह— तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः इति। संज्ञामूर्तिक्लृप्तिरिति मूर्तिशब्देन देहः प्रस्तुतः। स तच्छब्देन परामृश्यते। तदन्तरप्रतिपत्तौ—देहान्तरगमने भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहति—गच्छतीत्यर्थः। कुतः। प्रश्ननिरूपणाभ्याम्। पञ्चाग्निविद्यायामेवं प्रश्नप्रतिवचने आम्नायते। श्वेतकेतुं किलाऽऽरुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारं देवयानपितृयाणपथव्यावर्तने, अमुष्यलोकस्याप्राप्तारं च वेत्थेति पृष्ट्वा इदमपि पप्रच्छ, "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। तत इमं पश्चिमं प्रश्नं प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा, "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति" इत्यादिना—'देवाख्याः जीवस्य प्राणाः अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति; सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते; तं चामृतमयं देहं त एव प्राणाः पर्जन्येऽग्नित्वेन रूपिते प्रक्षिपन्ति; स च देहस्तत्र प्रक्षिप्तो वर्षं भवति; तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति; तच्च तत्र प्रक्षिप्तमन्नं भवति; तच्चान्नं त एव पुरुषेऽग्नित्वरूपिते प्रक्षिपन्ति; तच्च तत्र रेतो भवति; तच्च त एव योषायामग्नित्वरूपितायां प्रक्षिपन्ति; तच्च तत्र प्रक्षिप्तं गर्भो भवति' इत्युक्त्वाऽऽह, "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। एवं पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलप्या

---

राजा' इति सोमशब्दस्य सोमदेहजीवपरत्वं किं 'तस्या आहुतेः सोमो राजा संभवति' इति सोमशब्दस्य सोमदेहजीवपरतामवगमयति, नेति; 'तं देवा भक्षयन्ति' इति प्रतिपन्नं भक्षणम् 'एष सोमो राजा' इति, सोमशब्दस्य सोमदेहजीवपरत्वविरोधि, उताविरोधीति। यदा विरोधि—तदानीमेष सोमो राजेति सोमशब्दस्य जीवविषयत्वाभावेन, तस्या आहुतेः सोमो राजेति सोमशब्दस्य जीवविषयत्वाभावेन श्रद्धादिशब्दानामपि प्रसिद्धार्थपरतया प्रश्नप्रतिवचनयोः परिष्वङ्गावगमकत्वाभावात् असंपरिष्वक्तो रंहतीति पूर्वः पक्षः। यदा भक्षणं जीवपरत्वाविरोधि, तदा तत्पूर्ववाक्यस्थसोमशब्दस्य जीवपरतया श्रद्धाहुत्यनन्तरवाक्यस्थसोमशब्दस्यापि जीवपरत्वात् श्रद्धादिशब्दानामपि अबादिद्रव्यसंसृष्टजीवपरत्वेन प्रश्नप्रतिवचनयोर्जीवस्य भूतसूक्ष्मपरिष्वङ्गावगमकत्वात् संपरिष्वक्तो रंहतीति सिद्धान्तः।

**तत्र सिद्धान्त**मित्यादि। तच्छब्दं व्याचष्टे **संज्ञे**त्यादिना। **प्रश्नप्रतिवचनाभ्या**मिति। न हि प्रश्नानन्तरं भूतसूक्ष्मपरिष्वङ्गपरं प्रतिवचनं दृश्यत इति शङ्कायामर्थान्तरव्यवधानशङ्कानिवृत्त्यर्थमनेकप्रश्नतत्प्रतिवचनक्रमरूपतां प्रकरणस्य दर्शयति **पञ्चाग्नी**त्यादिना। **देवयानपितृयाणपथव्यावर्तने** इति। व्यावर्तकाकारावित्यर्थः। **संभवतीत्यादिने**ति। अस्य **उक्त्वाहे**त्युत्तरत्रान्वयः। **श्रद्धा**शब्देन भूतसूक्ष्मावस्थाविशेष उच्यते। **सोमराज**शब्दव्याख्यानम**मृतमयदेह**शब्दः। **प्राणाः**—मुख्यप्राणाः इन्द्रियाणि च। यद्वा प्राणशब्दो मुख्यप्राणमात्रपरः; गमनस्य प्राणाधीनत्वात्। प्राणाधीनः प्रक्षेपो होमत्वेनोपचरित इत्यभिप्रायेण **प्रक्षिपन्ती**त्युक्तम्। **इतित्वि**त्यादि श्रुतिवाक्यम्। तस्यार्थमाह **एव**मिति। **पुरुषवचस** इति बहुव्रीहिसमासेन संबन्धमात्रं प्रतीतम्। तत्र **पुरुष**शब्दः स्वरूपपरः; **वचश्शब्दो** वाचकपरः। अतः समासप्रतिपन्नः सम्बन्धो वाच्यवाचकभावाख्यविशेषरूप इति दर्शयितुं **पुरुषशब्दाभिलप्या** इत्युक्तम्। अनेन कथं रंहतो जीवस्य भूतसूक्ष्मपरिष्वङ्गावगम

भवन्तीत्यर्थः । एवमुक्ते पूर्वास्वप्याहुतिष्वनुवर्तमानानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति । अत एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैः सह तत्रतत्र यातीति गम्यते ॥ १ ॥

नन्वापः पुरुषवचस इत्युक्ते अपां पुरुषाकारपरिणामप्रतीतेः गच्छता जीवेन तासामेव परिष्वङ्गः प्रतीयते । अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इति ; तत्राह—

**त्र्यात्मकत्वात्तु भूयस्त्वात्** ॥ ३-१-२ ॥

तुशब्दश्चोद्यं व्यावर्तयति । देहारम्भि(म्भ)काणामपां केवलानां न देहारम्भसम्भवः । देहाद्यारम्भाय हि, 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्, इति त्रिवृत्करणम । केवलानामपां श्रवणं तु तासां भूयस्त्वात् । देहे च लोहितादिभूयस्त्वेनारम्भकेष्वपां भूयस्त्वं गम्यते ॥ २ ॥

**प्राणगतेश्च** ॥ ३-१-३ ॥

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । उत्क्रामति जीवे प्राणानां तदनुगतिः श्रूयते, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति । स्मर्यते च, "मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यदाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्" इति । न च निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥ ३ ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** ॥ ३-१-४ ॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणश्चक्षुरादित्यम्" इत्यादिना प्राणानां जीवमरणकालेऽग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न—

---

इत्यत्राह **एवमुक्ते** इति । प्रश्नप्रतिवचनवाक्ययोरुभयोरपि, 'पञ्चम्यामाहुतावापःपुरुषवचसः' इत्युक्ते होतव्यद्रव्याकाङ्क्षायां स्ववाक्यस्थतया संनिहिता आप एव होम्यत्वेन स्वरसतःप्रतीताः । वाक्यान्तरस्था श्रद्धा सोमराजरूपेण परिणामस्यायोग्या ; अतः साऽप्यपामेव ज्ञापिका । एवं प्रश्नपतिवचनवाक्यस्वारस्यात् प्रसिद्धश्रद्धाया अयोग्यत्वाच्च पञ्चस्वाहुतिष्वपां होम्यत्वेनानुवृत्तिरस्तीति तासामेव पुरुषवचस्त्वमित्यर्थः । ततः किमित्यत्राह **अत** इति । **अन्यैस्तु** पञ्चाग्निविद्यापितृयाणविषयप्रश्नप्रतिवचनाभ्यामिति व्याख्यातम् । पितृयाणविषयवाक्यं तु(वयस ?), 'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः' इत्यत्रोदाहरणीयत्वादाद्यं सूत्रं पञ्चाग्निविद्याप्रतिवचनविषयमेवेति भाष्यकाराभिप्रायः ॥ १ ॥

अनन्तरसूत्रशङ्कामाह **नन्वाप** इति । **त्र्यात्मकत्वात्तु भूयस्त्वात्** । प्रथमस्य पञ्चम्यन्तपदस्य सम्परिष्वक्तो रंहतीत्यन्वयो दर्शितः शङ्काग्रन्थस्थ**परिष्वङ्ग**शब्देन । द्वितीयपञ्चम्यन्तपदस्य प्रतिज्ञावाक्यं सामर्थ्यादध्याहृतम् । **केवलानामपां श्रवणं** त्विति । वैशेष्यादिति सूत्रे त्रिवृत्कृतेष्वप्येकैकस्याधिक्यात् तन्निबन्धनस्तद्व्यवहार इत्युक्तम् । अत्र तु तदाधिक्यमपामस्तीति दर्शयितुं सूत्रारम्भः ॥ २ ॥

**प्राणगतेश्च** ॥ अवान्तरसाध्यान्वयव्यावृत्त्यर्थमाह **इतश्च भूतसूक्ष्मे**ति । प्राणानामनुगतिः स्यात् ततः किमित्यत्राह **न चे**ति ॥ ३ ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** ॥ **यत्रे**त्यादिः श्रुतिः । **अनपियद्भिः**—ओषधिषु वनस्पतिषु च अप्ययरहितैः । तत्र हि केशादेरप्ययश्रुतिस्तत्तद्देवतापक्रमणपरा; तथेदमित्यर्थः ।

भाक्तत्वात् अग्न्यादिष्वप्ययश्रवणस्य । कथं भाक्तत्वम्। "ओषधीर्लोमानि वनस्पतीन् केशाः" इति अनपियद्भिर्लोमादिभिः सह श्रवणात् । अतश्चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवतापक्रमणपरा ॥ ४ ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३-१-५**

यदुक्तम्-अद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति—तन्नोपपद्यते; द्युलोकाग्निविषये प्रथमे होमेऽपां होम्यत्वाश्रवणात् । "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति श्रद्धैव हि होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा । अतो नाऽऽपस्तत्र होम्या इति चेत्—

न; यतः ताः—आप एव श्रद्धाशब्देन तत्राभिधीयन्ते । कुतः । प्रश्नप्रतिवचनोपपत्तेः । "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नस्य प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता । तत्र यदि श्रद्धाशब्देन आपो नोच्येरन्, ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्यसङ्गतं स्यात् । "इति तु पञ्चम्यामाहुतावापः पुरुषवचसः" इति प्रतिवचननिगमनं च श्रद्धाया अप्त्वमेव सूचयति । "वेत्थ यथा" इति हि प्रश्नगतः प्रकारः, "इति तु पञ्चम्याम्" इति इतिशब्देन परिहारे निगम्यते । श्रद्धासोमराजवर्षान्नरेतोगर्भरूपेणापां परिणाम[क्रम]मुक्त्वा हि, 'एवमापः पुरुषवचसः' इति निगम्यते । श्रद्धाशब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते, "अपः प्रणयति । श्रद्धा वा आपः" इति । "श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा संभवति" इति सोमाकारेण परिणामश्चापामेवोपपद्यते । अतो भूतान्तरसंसृष्टाभिरद्भिः संपरिष्वक्तो जीवो रंहतीत्युपपन्नम् ॥ ५ ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३-१-६ ॥**

यत्पुनः उक्तम्—अद्भिः संपरिष्वक्तो जीवो यातीत्ययमर्थ एतस्माद्वाक्यादवगम्यत इति—तन्नोपपद्यते; अस्मिन् वाक्ये जीवस्याश्रवणात् । अत्र हि श्रद्धादय एवाम्ब्ववस्थाविशेषा होम्यत्वेन श्रुताः; न तु जीवस्तत्परिष्वक्त इति चेत्—

तन्न, इष्टादिकारिणां प्रतीतेः । अस्मिन्नेव ह्युत्तरत्र, 'ब्रह्मज्ञानविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमराजानो(?)भवन्ति । पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्ती'त्युच्यते, "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति" इत्यारभ्य, "पितृलोकादाकाशमाकाशाचन्द्र-

---

**ओषधीर्लोमानि**—लोमाभिमानिदेवता ओषध्यभिमानिदेवतामप्येतीति, लोमाभिमानित्वं विहाय केवलमोषध्यभिमानिनी भवतीत्यर्थः । **अग्निं वागप्येतीति** । वागभिमानिनी वह्न्यभिमानिनीमप्येति—वागभिमानित्वरूपं विहाय केवलाग्निर्भवतीत्यर्थः ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः** ॥ कथमप्त्वं सूचयतीत्यत्राह **वेत्थेति** । प्रश्नगतप्रकारस्य प्रतिवचनान्ते निगमनात् मध्येऽपि तत्प्रकार एवोपपादितःस्यादित्यर्थः । **अपामेवोपपद्यते** । न तु मनोवृत्तिविशेषस्य; तस्य सोमाकारपरिणामं प्रति उपादानत्वायोगादित्यभिप्रायः ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः** ॥ **अस्मिन्नेव वाक्ये** । महावाक्य इत्यर्थः । **(?)सोमराजानः**- दिव्यदेहाः । कस्मिन् वाक्येऽयमर्थ इत्यत्राह **अथ य इम इति** । **पूर्तं**—खातादिकर्म । **इष्टापूर्ते दत्तं च इत्युपासते**—उक्तप्रकारेणानुतिष्ठन्ति । **भवतिः** प्राप्तिवाची; परस्मैपदित्वं तु छान्दसम् । यद्वा—सत्तार्थो **भवतिरे**वोपसर्गवशात्[1] प्राप्त्यर्थः । **यावत्संपात**मिति ।

---

[1] समित्युपसर्गवशादित्यर्थः । 'क्रमात् ते संभवन्त्यर्चिः', 'तां समभवत्', 'अभिसंभवन्ति—अभिप्राप्नुवन्ति' इति प्रयोगाः द्रष्टव्याः ।

न्नम्। एष सोमो राजा तत् देवानामन्नम्। तं देवा भक्षयन्ति। तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते", "यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति" इति। अत्रापि, "द्युलोकाग्नौ श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति" इति, तदेकार्थत्वात् श्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्तमिति गम्यते। देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दो विशेष्ये जीव एव पर्यवस्यति। अतः संपरिष्वक्तो जीवो यातीत्युपपद्यते॥६॥

ननु च "तं देवा भक्षयन्ति" इति देवैर्भक्ष्यमाणत्ववचनात् सोमो राजेति न जीव उच्यते, जीवस्यानदनीयत्वात्—तत्राह—

**भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ३-१-७ ॥**

वाशब्दश्चोद्यं व्यावर्तयति। इष्टादिकारिणोऽनात्मवित्त्वात् स देवानां भोगोपकरणत्वेनेहामुत्र च वर्तते। इहेष्टादिना तदाराधनं कुर्वन्नुपकरोति; आराधनप्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति। "यथा पशुः, एवं स देवानाम्" इति अनात्मविदो देवानामुपकरणत्वं दर्शयति श्रुतिः। स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिम् अनात्मविदां च देवभोग्यत्वं दर्शयति, "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति। अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्। अतस्तत् भाक्तम्। तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते, "न वै देवा अश्नन्ति न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति। तस्माद्भूतसूक्ष्मैः सम्परिष्वक्तो जीवो रंहतीति सिद्धम्॥ ७॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

---

**संपात**शब्देन कर्माभिधीयते, संपतत्यनेन स्वर्गमिति व्युत्पत्त्या। **तद्भूय एव भवति**—तद्योगी भवतीत्यर्थः। **अत्रापी**ति। उभयत्र सोमराजशब्देन प्रत्यभिज्ञानादैकार्थ्यम्। अस्फुटजीवसंबन्धस्य पूर्ववाक्यस्य स्फुटजीवसम्बन्धेनोत्तरवाक्येनैकार्थ्यादुक्त एवार्थ इत्यर्थः। **श्रद्धासोमा**दिशब्दैस्तत्तदवस्थदेहविशिष्टवचनं लाक्षणिकमित्यत्राह **देहस्ये**ति ॥

अनन्तरसूत्रशङ्कामाह- **ननु चे**ति। **भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति**। इह चामुत्र च भोगोपकरणत्वं विवृणोति **इहे**ति। अमुत्र तत्सेवकत्वात् तद्भोगोपकरणत्वम्। सेवमानस्य [तस्य] दर्शनमेव तेषां भोगः; "एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति न्यायात्। अधिकरणार्थमुपसंहरति **तस्मा**दिति॥

**परे** तु जीवस्याद्भिः सह गमनं वदन्त एव तासामपामग्निहोत्राहुतिरूपत्वं वदन्ति; आहुतीनां क्षीरादिद्रवद्रव्यभूयस्त्वात्, श्रद्धापूर्वकानुष्ठेयतया श्रद्धाशब्दवाच्यत्वोपपत्तेः। तथा वाजसनेयके षट्प्रश्नब्राह्मणे, "ते वा एते आहुती हुते उत्क्रामतः। तेऽन्तरिक्षमाविशतः। ते अन्तरिक्षमाहवनीयं कुर्वाते, वायुं समिधं मरीचि(ची)मेव शुक्रामाहुतिम्। ते अन्तरिक्षं तर्पयतः। ते तत उत्क्रामतः। ते दिवमाविशतः। ते दिवमाहवनीयं कुर्वाते। आदित्यं समिधं चन्द्रमसमेव शुक्रामाहुतिम्। ते दिवं तर्पयतः। ते तत आवर्तेते। ते इमामाविशतः। ते इमामाहवनीयं कुर्वाते" इत्यारभ्य। "ते पुरुषमाविशतः—ते स्त्रियमाविशतः[यतः]ततः पुत्रो जायते" इत्यादिनैकार्थ्याच्चेति। तदिदमपेशलम्—शब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावात्। न हि श्रद्धाशब्दाप्शब्दयोरन्यतरनिर्देशः। न च द्युपर्जन्यादिक्रमः; अन्तरिक्षद्युपृथिव्यादिक्रमप्रतीतेः। किञ्च देवताविग्रहतदागमनादीनां देवताधिकरणे निर्णीतत्वात् अग्निभिरूढानां देवताभिरुपभुक्तानां क्षीरादीनामुत्क्रान्तजीवपरिष्वञ्जकत्वमयुक्तम्

अत्र च 'अन्तरिक्षं तर्पयतो दिवं तर्पयतः' इत्याहुत्योरूर्ध्वलोकवर्तिनां तृप्तिहेतुत्वावगमाच्च अपूर्वरूपेण जीवपरिष्वञ्जकत्वं नोपपद्यते ॥ ननु आहुत्योरेकदेशो देवताभिर्भुज्यते; तदेकदेशो जीवान् परिष्वङ्क्ते—देवतोपकरणभूतजीवशरीररूपपरिणामद्वारा देवतातृप्तिहेतुतया 'तर्पयतः' इत्येतदुपपद्यत इति ॥ नैवम्; अश्रुतविभागकल्पनाप्रसङ्गात्; तथा कल्पितविभागस्य एकदेशस्य जीवद्दशायां प्रक्षिप्तस्य यावन्मरणमवस्थानकल्पनप्रसङ्गात्; तथा—स्वरूपेण देवतातृप्तिहेतुत्वे संभवति जीवशरीरद्वारकत्वस्य कल्पनानुपपत्तेश्च; पटैकदेशे पटशब्दस्येव, आहुत्येकदेशे आहुतिशब्दस्यामुख्यत्वाच्च।

अन्यैस्तु—चन्द्रत्वापत्तिदेवताभक्ष्यत्वयोः स्वरूपेणानुपपन्नत्वात् अद्भिः सह रंहतीति पूर्वपक्षं कृत्वा, प्राप्यस्य चन्द्रस्य सोमराजत्वप्रतिपादनात् अन्नत्वस्य भाक्तत्वाच्च पृथगूगच्छतीति—सिद्धान्तः कृतः। अन्तिमसूत्रव्यतिरिक्तानि सूत्राणि पूर्वपक्षपराणि व्याख्यातानि। आपश्चाहुतिरूपाः जीवस्य भूतसूक्ष्ममयदेहाप्यायिका अभिमताः॥ आसामपां षट्प्रश्नब्राह्मणोक्ताहुतिरूपत्वं तावत् शब्दतोऽर्थतश्च प्रत्यभिज्ञानाभावादयुक्तम्। षट्प्रश्नब्राह्मणेऽपि तर्पयत इति देवतातृप्तिहेतुत्वेन श्रुतानामाहुतीनां वर्षादिपुरुषवचस्त्वपर्यन्तावस्थाविशेषानुपपत्तेश्चायुक्तम्। आहुतिशब्दस्य तदेकदेशवाचित्वमश्रुतविभागकल्पनामुख्यत्वाभ्यामयुक्तम्। अतो देवतातृप्तिमुखेन शुभतरजन्महेतुत्वपर्यन्ताहुतिवैभवानुसन्धानं तत्र प्रतिपाद्यते; न तु देहारम्भिका आप इति युक्तमभ्युपगन्तुम्। भवतु वा विभाग आहुतीनाम्; देहारम्भिका आपश्चाहुत्येकदेशरूपाः सन्तु। तथाऽपि जीवस्य ताभिः सह रंहणनिषेधो न सिद्धान्तीकर्तव्यः; "पृथिवी वाव गौतमाग्निः" इत्यारभ्य, "तस्मिन्नेतस्मिन्नग्नौ देवाः वर्षं जुह्वति तस्या आहुतेरन्नं संभवति....तस्या आहुतेः रेतः संभवति" इति पृथिव्याद्यग्नित्रयविषयाणां तिसृणां वर्षान्नरेतोरूपाहुतीनामिह श्रुतत्वात् धूमाभ्रमेघवर्षव्रीह्यादिषु सानुशयजीवसंसर्गस्योपरितनब्रह्मधिकरणेषु भवन्मतेऽपि सिद्धत्वेनाऽऽहुतित्रयस्य जीवसंसृष्टत्वात्; श्रद्धासोमाह्वयाहुतिद्वयेऽपि जीवस्य वियुक्तत्वे तदनन्तरमप्सु तस्य संसर्गे च प्रमाणाभावात्; तदुभयकल्पने गौरवात्; कल्पकस्य च कस्यचिदभावात्; अग्र्यप्रायन्यायेन आद्याहुतिद्वयेऽपि जीवसंसर्गकल्पनस्यैव युक्तत्वाच्च। किञ्च, 'आपः पुरुषवचसः' इति पुरुषवचस्त्वमपां श्रूयते, "तस्या आहुतेर्गर्भः संभवति" इति पञ्चम्या आहुतेर्गर्भसंभवश्च श्रूयते। समानप्रकरणे, 'तस्या अहुत्यै पुरुषः संभवति' इति श्रूयते। पुरुषशब्दो न शरीरमात्रपरः; किन्तु शरीरिणि चेतने स्वरस इत्यविगीतम्। वर्षाद्याहुतित्रये चेतनसंसर्गो भवदभिहितश्च। 'आपः पुरुषवचसः' इत्युक्ते सति अप्शब्दश्च पुरुषशब्दसमानाधिकरणः प्रतीयते। अयं देवदत्तसंज्ञ इत्युक्ते इदंशब्ददेवदत्तशब्दयोः सामानाधिकरण्यं हि प्रतीयते—अयं देवदत्त इति। एवं च अप्शब्दपुरुषशब्दयोः सामानाधिकरण्यं च अप्छब्दस्य चेतनोपस्थापकत्वे सिध्येत्। भिन्नविशेष्यनिष्ठयोः पदयोर्गृहदेवदत्तशब्दयोरिव सामानाधिकरण्यानुपपत्तेः। न हि गृहा देवदत्तवचस इति वक्तुं न्याय्यम्। तस्मादप्शब्दवाच्यं वस्तु यत्रयत्र होतव्यं श्रुतम्, तत्रतत्र यया कयाचिद् वृत्त्या जीवस्योपस्थापितत्वमकामेनापि स्वीकरणीयम्, सामानाधिकरण्यप्रतीतिप्राबल्यात्। यदा तु अप्शब्द एव जीवशरीरभूतभूतसूक्ष्मपरः, तदा तस्य

देवमनुष्यादिशब्दवत् चेतनविषयत्वं स्वरसतरम् । अतो जीवदेहभूतानामपां जीवस्य च पृथग्गमनमयुक्तम् । एवं सहगमने सति प्राणोत्क्रमणविषयश्रुत्यन्तरानुग्रहश्च स्यात् । सोमराजशब्दप्रत्यभिज्ञानं च घटते ।

यदुक्तम् 'आकाशाच्चन्द्रमसमेष सोमो राजा' इति प्राप्यस्य सोमराजत्वमुच्यते; न तु प्राप्तुरिति— तदयुक्तम्; वाक्यवैयर्थ्यप्रसङ्गात् । प्रसिद्धेन चन्द्रमश्शब्देन पूर्वनिर्दिष्टस्य पुनस्तत्पर्यायाभ्यां सोमराजशब्दाभ्यां निर्देशे किं फलम् ? पूर्वनिर्दिष्टप्रत्यभिज्ञाने तु प्रयोजनवत्त्वं स्फुटम्; श्रद्धाहुतिसंभूतस्य सोमराजशब्दवाच्यत्वं चन्द्रप्राप्तिदशायामित्यस्यार्थस्य ज्ञाप्यत्वात् । किञ्च चन्द्रमसमभिसंभवन्तीत्यभिसंभवनक्रियाकर्तृतया प्रथमानिर्दिष्टः प्राप्ता जीवः **एष** इति सर्वनामपदेन परामर्शमर्हति । चन्द्रमसस्तु द्वितीयानिर्दिष्टस्य परामर्शो न स्वरसः ॥ ननु, ते धूममभिसंभवन्तीति बहुवचननिर्दिष्टानां प्राप्तॄणाम् **एष** इत्येकवचनेन परामर्शोऽनुपपन्नः; चन्द्रमसस्तूपपन्न इति चेन्न— कृत्स्नवाक्यवैयर्थ्यादपि विभक्तिमात्रस्य क्लिष्टार्थताश्रयणेन जात्यभिप्रायत्वमात्रकल्पनोपपत्तेः; प्रकरणे विभक्त्यर्थनिर्बन्धाभावदर्शनाच्च । 'तद्देवानामन्नं तं देवा भक्षयन्ति'इति बहुवचननिर्दिष्टोऽभिसंभविता पुनरेकवचनेन निर्दिश्यते । न चैतदपि वाक्यं चन्द्रविषयम्; 'ते चन्द्रं प्राप्यान्नं भवन्ति'इति वाजसनेयके प्राप्तुरन्नत्वाभिधानात् । तथा 'वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति' इत्येकवचनेन निर्दिश्य, 'ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इत्युक्त्वा, 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इत्येकवचनेन निर्दिश्यते । अतो विभक्त्यनादरेण वाक्यवैयर्थ्यपरिहारो न्याय्यः ॥

ननु पञ्चाग्निविद्यायामपि सोमराजशब्दश्चन्द्रविषय इति चेत्— न; तस्या आहुते सोमो राजा संभवतीत्युत्पत्तिश्रवणात् ॥ कलावृद्धिरेवोत्पत्तिरिति चेन्न; अस्वरसत्वात्; संभवशब्दस्याऽऽप्यायनवाचित्वाभावाच्च । किञ्च 'पर्जन्यो वाव गौतमाग्निः' इत्यारभ्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः सोमराजानं जुह्वति' इति सोमराजस्य पर्जन्ये हुतत्वश्रवणाच्चन्द्रस्य पर्जन्ये प्रविलयाभावाच्च द्वितीयाहुतिविषयसोमराजशब्दस्य चन्द्रविषयत्वमयुक्तम् ॥ नन्वेवंसति— पितृयाणवाक्यस्थसोमराजशब्दस्य प्रयोजनवत्तयेष्टादिकारिविषयत्वे तत्प्रत्यभिज्ञानादत्र सोमराजशब्दस्येष्टादिकारिविषयत्वम्, अत्रत्यसोमराजशब्दस्येष्टादिकारिविषयत्वे तत्प्रत्यभिज्ञापनेन प्रयोजनवत्तया पितृयाणवाक्यस्थसोमराजशब्दस्येष्टादिकारिविषयत्वमित्यन्योन्याश्रय इति चेन्न; पितृयाणवाक्यस्थसोमराजशब्दावैयर्थ्यस्य पूर्वसोमराजशब्दस्येष्टादिकारिविषयत्वनिर्धारणानपेक्षत्वात् । पूर्वसोमराजशब्दस्य चन्द्रव्यतिरिक्तविषयतामात्रज्ञानमेव ह्यपेक्षितम् । तस्य चन्द्रव्यतिरिक्तविषयत्वं च चन्द्रस्य संभव-होम्यत्वानुपपत्त्यैव सिद्धम् । चन्द्रव्यतिरिक्तश्चार्थो घटः पटो वा, दंशो मशको वा भवतु; तस्य सोमराजशब्दवाच्यत्वं चन्द्रप्राप्तिदशायामित्येतावज्ज्ञापनेन उत्तरवाक्यावैयर्थ्यं सिध्यति । एवं प्रयोजनवदुत्तरवाक्यस्थसोमराजशब्दस्य प्राप्तृविषयतया इष्टादिकारिविषयत्वे सिद्धे, तदैकार्थ्येन पूर्वश्रुतोऽपि द्वितीयाहुतिविषयः सोमराजशब्दः तत्पूर्वमेव चन्द्रव्यतिरिक्तविषयतयाऽवधारितः इष्टादिकारिरूपविशेषविषयो ज्ञायत इति नान्योन्याश्रयः । अथवा प्राप्तुश्चन्द्रसादृश्यज्ञापनं वाक्यफलम् । तच्चैतच्छब्दस्य सोमराजपदसामानाधिकरण्येन भवति; अग्निशब्दस्य सामानाधिकरण्येन माणवकस्याग्निसादृश्यज्ञापनवत् । तच्च सोमराजशब्दस्य चन्द्रव्यतिरिक्तविषयत्वे सिध्यति । न हि स्वस्य

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३-१-८ ॥

केवलेष्टापूर्तकारिणां धूमादिना पितृयाणेन पथा [1]गमनम्। कर्मफलावसाने पुनरावर्तनं च आम्नातम्, "यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" इति । तत्र प्रत्यवरोहन् जीवः किमनुशयवान् प्रत्यवरोहति, उत नेति संशय्यते । किं युक्तम्। कर्मणः कृत्स्नस्योपभुक्तत्वान्नानुशयवानिति प्राप्तम्। अनुशयो ह्युपभुक्तशिष्टं कर्म। तच्च कृत्स्नफलभोगे सति नावशिष्यते । यावत्सम्पातमुषित्वेति वचनात् कृत्स्नोपभोगश्च ज्ञायते। संपतन्त्यनेन स्वर्गं लोकमिति संपातः

स्वेन सादृश्यं ज्ञाप्यम् । अतः सोमराजशब्दस्य न प्राप्यविषयत्वम्। यत्तु—समानप्रकरणे 'ते चन्द्रं प्राप्यान्नं भवन्ति । तान्, तत्र देवाः यथा सोमं राजानमाप्यायस्वापक्षीयस्वेति, एवमेनांस्तत्र भक्षयन्ति' इति सोमाद्भेदव्यपदेश इष्टादिकारिणां प्रतीयते । अतस्तेषां न सोमराजशब्दाभिलप्यत्वमित्युक्तम्—तदप्यनेन परिहृतम्; छान्दोग्यस्थस्य सोमराजशब्दस्येष्टादिकारिविषयत्वनिर्वहणपरत्वाद्वाजसनेयकवाक्यस्य । न हि वृत्त्यन्तरे संभवति एकस्य शब्दस्य बहुष्वर्थेषु शक्तिभेदकल्पनं न्याय्यम् । अत इष्टादिकारिविषयसोमराजशब्दस्य तेषु कथं वृत्तिरित्यपेक्षायाम्, 'यथा सोमं राजानम्' इति दृष्टान्तीकरणेन 'चन्द्रसादृश्यात् सोमराजशब्दप्रयोगः, सादृश्यं चामृतमयरूपत्वदेववर्गोपयोगयोग्यत्वलक्षणम्' इति ज्ञायते। आप्यायस्वेति वाक्यस्यायमर्थः—यथाऽऽप्यायस्वापक्षीयस्वेति सोमं राजानं भक्षयन्ति, एवमेनांस्तत्र भक्षयन्तीति । तेनामृतमयदेहवत्त्वं देववर्गोपयोगार्हत्वं च दर्शितं भवति । अतो भक्षणस्य भाक्तत्ववचनमप्युपपद्यते । अतः पृथग्गच्छतीति राद्धान्तोऽनुपपन्नः ॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥** विषयसिद्ध्यर्थमवान्तरसङ्गत्यर्थं चाह **केवले**ति । यावत्संसारं प्रकृतिसंबन्धोऽवर्जनीय इत्युक्तम्; तद्धेतुकर्मसंबन्धोऽप्यवर्जनीय इत्युच्यत इति सङ्गतिरित्यर्थः । अमुष्माल्लोकान्निवर्तमानः किं सानुशयो निवर्तते, उत निरनुशय इति चिन्ता। 'यावत्संपातम्', 'प्राप्यान्तम्' इति च वाक्यं किं सानुशयस्य निवर्तनं निरुणद्धि, नेति; संपातकर्मशब्दौ किं कर्ममात्रपरौ, उत फलदानप्रवृत्तकर्मपरौ; किं 'तद्य इह रमणीयचरणाः' इत्यादिवाक्यं संपातादिशब्दस्य फलदानप्रवृत्तकर्मपरतामवगमयति, नेति; किमत्र चरणशब्दः आचारपरः, उत सुकृतदुष्कृतपर इति। यदा स आचारपरः, तदा तेन वाक्येन संपातादिशब्दस्य फलदानप्रवृत्तकर्मपरत्वानवगमात् 'यावत्संपात'मित्यादिवाक्यस्य सानुशयनिवर्तनविरोधितया निरनुशयो निवर्तेत इति स्यात् । यदा चरणशब्दः सुकृतदुष्कृतपरः, तदा 'तद्य इह रमणीयचरणाः' इत्यादिवाक्यैकार्थ्येन संपातादिशब्दस्य फलदानप्रवृत्तकर्मपरत्वावगमात् यावत्सम्पातमित्यादिवाक्यस्य सानुशयनिवर्तनाविरोधितया सानुशयो निवर्तेत इति सिध्यति ।

**कृतात्यये**—कृतस्य कर्मणोऽनुभवेन विनाशे इत्यर्थः । **अनुशय**शब्दं व्याचष्टे **अनुशयो ही**ति । **तच्चे**ति । तच्छब्दः कर्ममात्रपरः । यद्वा **नावशिष्यते**—अवशिष्टं कर्म न संभवतीत्यर्थः । **यावत्सम्पात**मित्यस्य यावत्पतनमुषित्वेत्यर्थश्चेत्, वाक्यवैयर्थ्यमित्यभिप्रायेणाह **संपतन्ती**ति ।

---

1 गमनमित्यत्र वाक्यच्छेदो भावप्रकाशिकेष्टः; उपात्तश्रुतिवाक्ये मार्गप्रस्तावेऽपि धूमादितया गमनमार्गतया च प्रस्तावाभावात् ।

कर्मोच्यते। श्रुत्यन्तरञ्च, "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इति॥ एवं प्राप्तेऽभिधीयते—अनुशयवान् प्रत्यवरोहतीति। कुतः। दृष्टस्मृतिभ्याम्। श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत्, "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा; अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" इति प्रत्यवरूढान् प्रति श्रूयते। अमुष्माल्लोकात्प्रत्यवरूढेषु रमणीयकर्माणो रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते; कपूयचरणाः—कुत्सितकर्माणः कुत्सितां श्वसूकरचण्डालादियोनिं प्रतिपद्यन्त इति प्रत्यवरूढानां पुण्यपापकर्मयोगं दर्शयति। स्मृतिरपि, "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते; विष्वञ्चो विपरीता नश्यन्ति" इति। तथा, "ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते। तत् चक्रवदुभयोर्लोकयोः सुख एव वर्तते" इति। यावत्सम्पातमिति फलदानप्रवृत्तकर्मविशेषविषयम्, 'यत्किञ्चेह करोत्ययम्' इतीदमपि तद्विषयमेव। अभुक्तफलानामकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः।

अतोऽमुं लोकं गताः सानुशया एव यथेतमनेवं च पुनर्निवर्तन्ते—आरोहप्रकारेण प्रकारान्तरेण

---

एवं प्राप्त इत्यादि। दृष्टशब्देन प्रत्यक्षश्रुतिर्विवक्षिता। अभ्याश इति पदं दिश[1](विशः) इतिवत् प्रथमाबहुवचनम्। अभ्याङ्पूर्वात् अशू व्याप्ताविति धातोरेवं रूपं भवति। य इहाभ्याशः—अभ्यागन्तारः, ते रमणीयचरणाः यत्—[2]साधुकर्मकारिणो यदि, ते रमणीयां योनिमापद्येरन्नित्यर्थः। एवमुत्तरत्र द्रष्टव्यम्। अभ्याश इति पदं प्रत्यवरूढवाचि। स्मृतिरपीति गौतमापस्तम्बवचनमुदाहृतम्। यावत्सम्पातमिति फलदानप्रवृत्तकर्मविशेषविषयमिति। अत्र किं स्वर्गकामनयाऽनुष्ठितस्यैव कर्मण एकदेशः फलदानाप्रवृत्तोऽप्यस्तीति सोऽनुशय इति फलदानप्रवृत्तशब्देन तद्व्यवच्छेदः, उत स्वर्गार्थकर्मव्यतिरिक्तमैहिकफलं कर्मान्तरमप्रवृत्तफलमनुशय इति तद्व्यवच्छेदो विवक्षितः॥ उच्यते—कर्मान्तरमनुशयः; न तु स्वर्गार्थकर्मण एकदेश इति। फलदानप्रवृत्तकर्मविशेषविषयमिति हि भाष्यम्; न तु कर्मांशविषयमिति। वक्ष्यति च, (3-1-24) इष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वादिति। स्वर्गार्थकर्मैकदेशस्य तत्राभुक्तत्वं च, 'स्वर्गकामो यजेत' इति श्रुतिस्वारस्यविरुद्धम्। यत्र तु स्वर्गनरकाद्युपभुक्तकर्मशेषेण योन्यन्तरप्राप्तिवचनसिद्धा, तत्रानेकशरीरारम्भफलकत्वमेकस्य कर्मण इति वचनबलादवगन्तव्यम्। तस्मादामुष्मिके कर्मजाते उपभुक्ते अवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः; तद्वन्तोऽवरोहन्तीति। श्रुत्यर्थापत्तिमाह अभुक्तेति। पुण्यकर्मणो मुमुक्ष्वपेक्षया पापस्थानीयस्य प्रायश्चित्तं ब्रह्मविद्या। यथेतम्—यथागतम्। इण् गताविति धातुः। यथेतमनेवमिति पदद्वयस्यार्थमाह आरोहणेति॥ ननु यथेतमिति व्याहतम्; आरोहावरोहयोः क्रमवैपरीत्यात्, प्रतिलोमक्रमे यथेतमिति विवक्षिते-

---

1 दिश इत्यत्र विश इति पाठः स्यात्। अभ्याट् इति ह्येकवचनम्।

2 ये रमणीयचरणाः ते तथासन्तः यस्मादभ्यागन्तारः, तस्मात् रमणीयामित्येवमर्थवर्णनेऽपि यत्पदवैयर्थ्यपरिहारो भवति। श्रुतौ पूर्ववाक्ये अभ्यागमनस्योक्तत्वात् यत्—यस्मादभ्यागन्तारः, तत्—तस्मात् इति वाक्यारम्भसम्भवात्।

च पुनर्निवर्तन्त इत्यर्थः। आरोहणं हि धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण; अवरोहणं तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेण। तत्राकाशावरोहणात् यथेतम्, वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम् ॥ ८ ॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३-१-९ ॥

'रमणीयचरणाः' 'कपूयचरणाः' इति न चरणशब्देन पुण्यपापरूपं कर्माभिधीयते; चरणशब्दस्य लोकवेदयोराचारे प्रसिद्धेः। लौकिकाः खलु चरणमाचारः शीलं वृत्तमिति पर्यायानभिमन्यन्ते। वेदे च, "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि . . . यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि" इति चरणकर्मणी भेदेन व्यपदिश्येते। अतश्चरणात् शीलाद् योनिविशेषप्राप्तिः, नानुशयादिति चेत्—तन्न; चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते; केवलादाचारात्सुखदुःखप्राप्त्यसंभवात्। सुखदुःखे हि पुण्यपापरूपकर्मफले ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३-१-१० ॥

एवं तर्ह्यफलत्वादाचारस्य स्मृतिविहितस्यानार्थक्यमिति चेत्—तन्न; तदपेक्षत्वात् पुण्यस्य कर्मणः। आचारवत एव पुण्यकर्मस्वधिकारः; "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु", "आचारहीनं न पुनन्ति वेदाः" इत्यादिवचनेभ्यः। अतश्चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्रायः ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ३-१-११ ॥

'पुण्यं कर्माचरति', 'पापं कर्माचरति' इति कर्मणि चरतेः प्रयोगात् पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन गोबलीवर्दन्यायेनोपपत्तेः, मुख्ये संभवति न लक्षणा न्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये इति बादरिराचार्यो मन्यते ॥ अत्र बादरिमतमेव स्वमतम्; आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकारा(रसं)पादनं फलमिति तु स्वीकृतम्। अतः सानुशया एव प्रत्यवरोहन्ति ॥ ११ ॥ इति कृतात्ययाधिकरणम् ॥२॥

---

ऽप्यनेवमिति व्याहतमित्यत्राह आरोहणं हीति ॥

**चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ वेदेचेति** । पृथङ्निर्देशो भिन्नार्थत्वकृत इत्यर्थः। अनवद्यानि कर्माणीति यागाद्युच्यते; 'यान्यस्माकं सुचरितानी'त्याचार उच्यत इति पूर्वपक्षिणोऽभिप्रायः ॥ **पुण्यपापरूपकर्मफले** इति । [1]आचाराङ्गकानुष्ठितपुण्यापुण्यफले इत्यर्थः ॥ **आनर्थक्यमिति चेन्न तदपेक्षत्वात्** ॥ एतत्सूत्रार्थं पूर्वसूत्रार्थेन सङ्गमयति **अत** इति ।

**सुकृतदुष्कृते एवेति तु बादरिः** ॥ आचारशब्दस्य साधारण्यं दर्शयति **कर्मणीति** । **कर्मणि** चरतेः **प्रयोगात्**—कर्मानुष्ठाने प्रयोगादित्यर्थः। पृथङ्निर्देशस्यान्यथासिद्धिमाह **पृथङ्निर्देशस्य चेति** । **अनवद्यानि कर्माणीति** प्रत्यक्षश्रुतिसिद्धं कर्मोक्तम्, **अस्माकं सुचरितानी**त्याचारानुमितश्रुतिसिद्धं कर्मोक्तमित्यर्थः। कार्ष्णाजिनिमताद्वैषम्यमाह **मुख्य** इति । कार्ष्णाजिनिमते स्वीकृतांशमाह **आचारानुमितेति** । अधिकरणार्थमुपसंहरति **अत** इति । ॥ इति कृतात्ययाधिकरणम् ॥

---

1 आचाराङ्गकेति पुण्यमात्रान्वयि ।

अनिष्टादिकार्यधिकरणम् ३-१-३

## अनिष्टादिकारिणामपि [च] श्रुतम् ॥ ३-१-१२ ॥

केवलेष्टापूर्तदत्तकारिणश्चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम्; इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति, नेति चिन्त्यते। ये विहितं न कुर्वन्ति, ये च निषिद्धं कुर्वन्ति, ते उभयेऽपि पापकर्माणोऽनिष्टादिकारिणः। किं युक्तम्। तेऽपि चन्द्रमसं गच्छन्तीति। कुतः। तेषामपि हि तद्गमनं श्रुतम्, "ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति" इति अविशेषेण सर्वेषामेव गतिश्रवणात् ॥ १२ ॥

एवं तर्हि सुकृतदुष्कृतकारिणोरुभयोरप्यविशिष्टैव गतिः स्यात्॥ नेत्याह—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३-१-१३ ॥

तुशब्दः शङ्कां व्यावर्तयति। इतरेषाम्-अनिष्टादिकारिणां चन्द्रारोहावरोहौ संयमने-यमशासने तत्प्रयुक्तयातना अनुभूयैव; नान्यथा। कुतः। तद्गतिदर्शनात्। इहस्थले हि पापकर्मणां यमवश्यतया

---

**अनिष्टादिकारिणामपि च श्रुतम्** ॥ अवान्तरसङ्गतिमाह **केवलेति**। प्रकृतिसंबन्धतद्धेतुकर्मसंबन्धयोरवर्जनीयत्वमुक्तम्; तत्र कर्मसम्बन्धेऽपि साधुकर्मसंबन्धनियमो नास्तीत्युच्यत इति सङ्गतिरिति भावः। किमनिष्टादिकारिणो यमयातनामनुभूय चन्द्रमसं गत्वा निवर्तन्ते, उत नेति; येवैकेचेति वाक्यं तेषां चन्द्रप्राप्तिमवगमयति, नेति; किमत्र सर्वशब्दः प्रेतमात्रविषयः, उत इष्टादिकारिप्रेतविषय इति; किं पितृयाणगमनमनिष्टादिकारिणामपि, उतेष्टादिकारिणामेवेति; किम् 'अथ य इमे ग्रामे' इत्युपक्रमः पितृयाणस्येष्टादिकारिविषयतामवगमयति, नेति; किमनिष्टादिकारिणां पञ्चमाहुतिमन्तरेण पुरुषत्वसंपत्तिरस्ति, नेति; किं तृतीयस्थानमुपन्यस्य ऊर्ध्वलोकासंपूरणवचनं तृतीयस्थानस्य पञ्चमाहुत्यनपेक्षतां पुरुषत्वनिष्पत्तेरवगमयति, नेति। यदा नावगमयति, तदा पुरुषत्वसम्पत्तेः पञ्चमाहुतिसापेक्षत्वेन, येइमेग्रामे इत्युपक्रमस्य पितृयाणस्येष्टादिकारिविषयत्वानवगमकतया पितृयाणस्य सर्वसाधारणत्वादनिष्टादिकारिणामपि प्राप्तत्वात् 'सर्वे गच्छन्ती'ति सर्वशब्दस्य प्रेतमात्रविषयतया, ये वै केचेत्यादिवाक्येन सर्वेषां चन्द्रप्राप्त्यवगमादनिष्टादिकारिणोऽपि यातनानुभवादनन्तरं चन्द्रमसं गत्वा निवर्तन्त इति। यदा परलोकासंपूरणवाक्यं तृतीयस्थानस्य पञ्चमाहुत्यनपेक्षतां देहनिष्पत्तेरवगमयति, तदा पुरुषत्वसंपत्तेः पञ्चमाहुत्यनपेक्षतया यइमेग्राम इत्युपक्रमस्यापि पितृयाणस्य इष्टादिकारिविषयत्वावगमकतया पितृयाणस्य सर्वसाधारणत्वाभावादनिष्टादिकारिणामप्राप्तत्वात् सर्वे गच्छन्तीति सर्वशब्दस्येष्टादिकारिप्रेतविषयतया येवैकेचेत्यादिवाक्येन सर्वेषां चन्द्रप्राप्त्यनवगमात् अनिष्टादिकारिणो न चन्द्रमसं गच्छन्तीति सिध्यति।

**इष्टादिशब्देन** इष्टापूर्ते उच्येते। अत्र देहारम्भस्य पञ्चमाहुत्यपेक्षारूपश्रुत्यर्थापत्तिश्चाभिप्रेता ॥

अनन्तरसूत्रमवतारयति **एवं तर्हीति**। **अविशिष्टैव गतिः स्यादिति**। पापस्य निष्फलत्वं स्यादित्यर्थः ॥ **संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्** ॥ **संयमन** इति निमित्ते सप्तमी;

तद्गमनम्, "अयं लोको नास्ति[न][1]पर इति मानी पुनःपुनर्वशमापद्यते मे", "वैवस्वतं सङ्गमनं जनानां यमं राजानम्" इत्यादिषु ॥ १३ ॥

**स्मरन्ति च ॥ ३-१-१४ ॥**

स्मरन्ति च सर्वेषां यमवश्यतां पराशरादयः, "सर्वे चैते वशं यान्ति यमस्य भगवन् किल" इत्यादिषु ॥ १४ ॥

**अपि सप्त ॥ ३-१-१५ ॥**

पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति ॥ १५ ॥

ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः ; अत आह—

**तत्रापि तद्व्यापारादविरोधः ॥ ३-१-१६ ॥**

तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः ॥ १६ ॥

अतोऽनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चाच्चन्द्रारोहावरोहौ स्तः इति प्राप्ते उच्यते—

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३-१-१७ ॥**

तुशब्दः पक्षव्यावृत्त्यर्थः । अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्तीत्येतन्नोपपद्यते । कुतः । विद्याकर्मणोरित्ति—विद्याकर्मणोः फलभोगार्थत्वात् देवयानपितृयाणयोः । एतदुक्तं भवति—अनिष्टादिकारिणां यथा विद्याविधुरत्वात् देवयानेन पथा गमनं न संभवति ; तद्वदेवेष्टापूर्तदत्तविधुरत्वात् पितृयाणेन चन्द्रगमनमपि न संभवतीति ॥ देवयानपितृयाणयोर्विद्याविषयत्वं पुण्यकर्मविषयत्वं

---

यमाज्ञयेत्यर्थः । **अयं लोको नास्ति [1][न]पर** इति । अत्रामुत्र च सुखं नास्तीत्यर्थः ॥

**तद्गतिदर्शना**दित्यत्रोदाहृते वाक्ये पापफलानुभवाश्रवणात् चोद्यं तदवस्थमिति शङ्कायामाह— **स्मरन्ति च** ॥ पूर्वसूत्रे प्रकृतेष्वारोहादिषु संवादकस्मृतिविषयांशं दर्शयति **यमवश्यता**मिति ॥

**अपि सप्त** ॥ नरकविषयवचनानां प्रसिद्ध्यतिशयादनुपादानम् ॥

अनन्तरसूत्रशङ्कामाह **नन्विति** । **सप्तसु लोकेषु** । स्थानेष्वित्यर्थः । यमसदनप्राप्तिवचनानि पुराणादिषु पठ्यन्ते ; तन्निबन्धनेयं शङ्का । **तत्रापि तद्व्यापारादविरोधः** ॥ **व्यापारः** प्रशासनरूप इति दर्शयति **यमाज्ञये**ति । यमसदननरकप्राप्त्योः क्रमादविरोध इत्यर्थः । पूर्वपक्षमुपसंहरति **अत** इति ॥

**विद्याकर्मणोरिति तु प्रकृतत्वात्** ॥ **फलभोगार्थत्वा**दिति । संबन्धसामान्यविषया षष्ठी । तादर्थ्यं च तत्फलभोगार्थत्वम् ; **इतिश्च** हेतावित्यर्थः ॥ विद्याप्रसङ्गः किमर्थः इत्यत्राह **एतदुक्त**मिति । दृष्टान्ततयेत्यर्थः । **विद्याविषयत्वं पुण्यकर्मविषयत्वं चे**ति । विषयशब्देन फलं विवक्षितम् । [2]विषिण्वन्

---

[1] श्रुतिवाक्ये एक एव नञ् सर्वसंमतः । परैः—अयमेव लोकोऽस्ति, न पर इति मानी इति एवशब्दाध्याहारेण व्याख्यातम्, चकाराध्याहारेण लोकद्वयेपि सुखाभाव इति टीकाव्याख्येति भावप्रकाशिकादर्शने—भाष्ये टीकायाञ्च एकनञ्घटिततयैव श्रुत्यनुवादः शुद्धकोशे इति ज्ञायते । एवञ्च इतिमानी इत्यस्य, इति—अस्माद्धेतोः वशमापद्यते मे । कः । मानी—सर्वत्र सुखसत्त्वाभिमानी इत्यर्थः । उपनिषद्भाष्ये नञ्द्वयपाठमादृत्य प्रपञ्चनम् ।

[2] विषिण्वन्निति भावप्रकाशिकापाठः । तत्रोपपादितश्च ।

च कथमवगम्यत इति चेत्—प्रकृतत्वात् तयोः। प्रकृता हि देवयाने विद्या, पितृयाणे च कर्म; "तद्य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते" इत्युक्त्वा, "तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहः" इत्यादिना देवयानवचनात्; "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते" इत्युक्त्वा, "ते धूममभिसंभवन्ति" इत्यादिना पितृयाणवचनाच्च । "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्येतदपि वचनम्, 'य इष्टादिकारिणस्ते सर्वे' इति परिणेयम् ॥ १७ ॥

ननु पापकर्मणां चन्द्रगमनाभावे पञ्चमाहुत्यसंभवात् शरीरारम्भ एव नोपपद्यते । "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति हि शरीरारम्भः श्रूयते। सा चाऽऽहुतिश्चन्द्रप्राप्तिपूर्विकेति दर्शितम्। अतः शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहौ अवश्यावभ्युपेत्यावित्यत आह—

**न तृतीये तथोपलब्धेः ॥ ३-१-१८ ॥**

न तृतीयस्य स्थानस्य शरीरारम्भाय पञ्चमाहुत्यपेक्षा । कुतः । तथोपलब्धेः—तृतीयस्थानशब्देन केवलपापकर्माण उच्यन्ते । तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते, "वेत्थ यथा असौ लोको न संपूर्यते" इत्यस्य प्रश्नस्य प्रतिवचने, "अथैतयोः पथोर्न कतरेण चन, तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेति। एतत् तृतीयं स्थानम्। तेनासौ लोको न संपूर्यते" इति। तृतीयस्थानस्य द्युलोकारोहावरोहाभावेन द्युलोकासंपूर्तिवचनादस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा। पञ्चम्यामाहुताविति च अपां पञ्चमाग्निसंबन्धस्य पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति ; नान्यन्निवारयति; अवधारणाश्रवणात् ॥ १८ ॥

**स्मर्यतेऽपि च लोके ॥ ३-१-१९ ॥**

पुण्यकर्मणामपि केषाञ्चित् पञ्चमाहुत्यनपेक्षया देहारम्भो लोके स्मर्यते द्रौपदीधृष्टद्युम्न-

---

(विशिंषन्) हि विषयः । परिणेयं निर्वाह्यम् ॥ १७ ॥

अनन्तरसूत्रमवतारयति **नन्विति । न तृतीये तथोपलब्धेः ॥ वेत्थेत्यादि । संपूर्यते**—प्राप्यत इत्यर्थः । **कतरेण चन**; केनचिदित्यर्थः । **जायस्व म्रियस्व इति**—ईश्वर(इतीश्वर?) शासनानुवर्तीनीत्यर्थः । जायन्ते म्रियन्ते इति वाऽर्थः; वेदस्वातन्त्र्यात् । [1]जज्ञे मम्र इति भूतार्थता वा 'पुरीमवस्कन्द लुनीहि नन्दनम्' इत्यादिवत् । कर्मफलानुभवाश्रयतया **स्थानशब्द**वाच्यत्वम् । **पञ्चम्यामिति** । अत्यन्तायोगव्यवच्छेद एव; नान्ययोगव्यवच्छेद इत्यर्थः । कुत इत्यत्राह **अवधारणाश्रवणा**दिति १८ ॥ **स्मर्यतेऽपि च लोके** ॥ अपिशब्दसूचितमाह **पुण्यकर्मणामिति** । पुण्यकर्मस्वप्ययं नियमो भज्यते, किंपुनः पापकर्मस्विति भावः । सूत्रार्थसमुच्चयपरः

---

1 ननु माभूत् वेदस्वातन्त्र्यम्; पुरीमवस्कन्देति भूते साधुतया प्रयोगदर्शनात् तथेह स्यादित्यत्र अस्तु काममित्याह जज्ञे इति ॥ ननु जज्ञिरे इति कथं न बहुवचनम्; ममारेति वक्तव्ये मम्र इति च कथम्। अनन्वितं चात्र भूतार्थकत्वम् ॥ उच्यते । शंकित्राशयानुवादेन भूतार्थता वेत्युच्यते । न नः कालनिर्बन्धः । भूतार्थत्वमबाधितार्थकत्वमित्यप्यभिमतम् । पुरीमवस्कन्देत्यत्रेव समन्वितार्थकत्वं वेत्यर्थः ॥ जज्ञे मम्रे इति भावेप्रयोगः धात्वर्थ (भावार्थ)मात्रविवक्षणात् लोडाद्यर्थाविवक्षणान्न दोष इति ज्ञापनार्थः । उपरि वाकाराभावात् पुरीमित्यादेः भूतार्थतावेत्यनेनैकवाक्यतामाहत्यैवं व्याख्यातम् । वाकाराध्याहारे तु भावप्रकाशिकागतिरेव । समुच्चयेऽन्यतरस्यामिति सूत्रादेव शब्दसाधुत्वमिति पुरीमित्याद्युदाहरणबलात् सुज्ञानमिति तदनुक्तिः।

श्रुतीनाम् ॥ १९ ॥

दर्शनाच्च ॥ ३-१-२० ॥

श्रुतावपि दृश्यते केषाञ्चित् पञ्चमाहुत्यनपेक्षया देहारम्भः, "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्" इति । एषु उद्भिज्जस्वेदजयोर्भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते ॥ २० ॥

ननु स्वेदजानामत्र न सङ्कीर्तनमस्ति, "त्रीण्येव बीजानि" इति वचनात्; तत्राह—

तृतीयशब्दावरोधः संशोकजस्य ॥ ३-१-२१ ॥

संशोकजस्य—स्वेदजस्यापि "आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः=संग्रहो विद्यते इत्यर्थः । अतः केवलपापकर्मणां चन्द्रप्राप्तिर्न संभवति ॥ २१ ॥

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

चशब्द इति स्फुटत्वादनुक्तिः । लोकशब्दः प्रसिद्ध्यतिशयद्योतनार्थः ॥

**दर्शनाच्च** ॥ बीजत्रैविध्यं तत्कार्यभूतत्रैविध्येन श्रुतिर्विवृणोति—**आण्डजमिति** । **जीवजं**—जरायुजम् । **उद्भिज्ज**शब्दार्थ एव वक्ष्यमाणसूत्रानुरोधेन विवृतः **उद्भिज्जस्वेदजयो**रिति ।

अनन्तरसूत्रमवतारयति **नन्विति**। **तृतीयशब्दावरोधः संशोकजस्य** ॥ उद्भिज्जस्य पञ्चमाहुतिनिरपेक्षत्वसंप्रतिपत्तेः, पृथिव्यूष्मजत्वायोनिजत्वपापोत्तरत्वसाम्याच्च तृतीयशब्देन संग्रहः; न तु प्रथमेन द्वितीयेन चेति भावः । अधिकरणार्थमुपसंहरति **अत** इति ॥

**परे तु—संयमने** त्वित्यादीनि सिद्धान्तसूत्राणि वर्णयन्ति, तुशब्दानुरोधात्; यमवश्यतास्मरणसप्तनरकस्मरणपरयोः सूत्रयोश्च साफल्यात् । ते हि चन्द्रप्राप्तिप्रतिषेधसमर्थे । पूर्वपक्षविषयत्वे तु तयोः सूत्रयोर्न किञ्चित्प्रयोजनम् । रौरवादिषु चित्रगुप्तादीनामधिष्ठातृत्वं स्मर्यमाणं यमाज्ञामूलमित्यधिष्ठातृद्वयाविरोधपरं 'तत्रापि तद्व्यापारादविरोधः' इति सूत्रं च व्याख्यातम् ॥ अत्रोच्यते । विद्याकर्मणोरिति सूत्रस्थतुशब्दस्य सिद्धान्तद्योतकत्वाभावे प्रयोजनाभावात् द्वितीयसूत्रस्थतुशब्दस्य शङ्काविशेषव्यावर्तकतयाऽपि सफलत्वात् सूत्रपञ्चकं पूर्वपक्षविषयं भवितुमर्हतीति ॥ विद्याकर्मणोरित्यत्र तुशब्दः शङ्कामात्रव्यवच्छेदक इति चेन्न—तदसंभवात् । विद्यया देवयाने, कर्मणा पितृयाणे च पथि अनधिकृतानां तृतीयस्थानसंबन्धप्रतिपादनाच्च अनिष्टादिकारिणां चन्द्रप्राप्त्यभावः इति हि सूत्रार्थो व्याख्यातः । न हि तत्र व्युदसनीया काचिच्छङ्का संभवति ॥ श्रुत्या सर्वेषां चन्द्रप्राप्तिशङ्का व्युदसनीयेति चेत्—तर्हि पूर्वपक्ष एवात्र तुशब्दव्युदसनीय इत्युक्तं स्यात् । द्वितीयसूत्रे तु व्युदसनीयशङ्कोपन्यस्ता । किञ्च **आरोहावरोह**शब्दास्वारस्यं स्फुटम्; नरकेषु यामीर्यातना अनुभूय अस्मिन् लोके जायमानानामुत्तत्स्थानप्राप्तेस्ततोऽवरोहणस्य चाभावात् ॥ पूर्वं यमालयमारोहति; ततो नरकप्राप्तिः; पुनर्जन्मावधिको व्यापारोऽवरोह इति चेन्न—**अनुभूये**ति ल्यबन्तनिर्देशेनारोहावरोहयोरपि पश्चाद्भावित्वावगमात् ॥ नरकानुभवानन्तरं यमालयमारुह्य ततोऽवरोहन्तीति चेन्न; अश्रुतत्वात्; कल्पकाभावाच्च; भवतां ग्रन्थेषु तथाऽनुक्तत्वाच्च । यमप्राप्तिवाक्ये पापफलानुभवाश्रवणेन पापवैयर्थ्यचोद्यस्य तदवस्थत्वशङ्कापरिहारार्थतया 'स्मरन्ति च' 'अपि

सप्त' इति सूत्रयोः साफल्यमित्युक्तम्। 'तत्रापि तद्व्यापारादविरोधः' इत्यत्र कस्याविरोध इत्याकांक्षायां नरकगमनाविरोध इति युक्तम्; पूर्वसूत्रोत्थापितत्वात् तद्विरोधस्य; चित्रगुप्ताद्यधिष्ठानस्याप्रकृतत्वाच्च।

**अन्ये तु—न तृतीय** इत्यतःपूर्वमेवाधिकरणसमाप्तिमिच्छन्त एवं वर्णयन्ति—अनिष्टादिकारिणोऽमुं लोकं धूमादिना मार्गेण गच्छन्ति, नेति विशये, तत्र पापफलभोगाभावात् कर्मणा विना भोगसंभवे शास्त्रवैयर्थ्याच्च न गच्छन्तीति पूर्वःपक्षः। "द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च" इति श्रुतेः आपितृलोकात् तेनैव मार्गेण गमनमिति सिद्धान्त इति। भोगाभावव्युदासपरं द्वितीयं सूत्रमाहुः। **'अपि सप्त'** इति सूत्रं च 'मत्तो भीता यान्ति जनाः' इत्यादिमृत्युगीतश्लोकसप्तकविषयम्। तेषु पुण्यकर्मफलस्यापि यमाधीनत्वाम्नानाविरोधः; पुण्यकर्मस्वपि पुरुषेषु यमव्यापाराभ्युपगमादिति **तत्रापी**त्यादिसूत्रस्यार्थ इत्याहुः। यद्वा—आरोगभ्राजादिसूर्यसप्तकविषयम् **'अपि सप्त'** इति सूत्रम्; 'कश्यपादुदिताः सूर्याः पापान् निघ्नन्ति सर्वदा' इति पापकृतां यातयितृत्वश्रवणात्। 'सप्त सूर्या दिवमनुप्रविष्टाः तानन्वेति पथिभिर्दक्षिणावान्' इति तेषां पुण्यकृत्प्राप्यत्वाविरोधश्च; पुण्यकृत्स्वपि तद्व्यापाराभ्युपगमादिति तदनन्तरसूत्रार्थ इति योजनान्तरं कृतं सूत्रद्वयस्य। 'अथैतयोः पथोः न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि' इति मार्गद्वयभ्रष्टानां तृतीयस्थानप्राप्तिवचनादनिष्टादिकृतां पितृयाणप्राप्तिर्नास्तीति शङ्कापरिहारपरं **विद्याकर्मणो**रिति सूत्रम्। **एतयोः पथो**रिति पथिन्शब्दो न मार्गद्वयपरः। तत्परत्वे हि मार्गसम्बन्धो निषिद्धो भवेत्। किंतु तत्प्राप्तिसाधनविद्याकर्मपरः; तयोः प्रकृतत्वात्; मार्गयोश्च प्रकृतत्वे सत्यपि ताभ्यां गमनस्यापुरुषतन्त्रस्य विधातुमशक्यतया तत्साधनस्यैव विधेयत्वात्। विद्याकर्मपरिभ्रंशापराधेन दुर्गतिप्रदर्शनपरा श्रुतिरिति नात्र मार्गद्वयसंबन्धनिषेधः। अतः पितृयाणेनानिष्टादिकारिणां यमप्राप्तिरिति वर्णितम्। **नतृतीय** इत्यादिकमधिकरणान्तरम्। तृतीयस्थानमृतानां चन्द्रविषयसर्वगमनश्रवणदेहारम्भकपञ्चमाहुत्यपेक्षाभ्यां पितृयाणप्राप्तिं पूर्वपक्षीकृत्य, 'जायस्व म्रियस्व' इति विशेषवचनानुपपत्त्यादिभिः पितृयाणगमनं नास्तीति सिद्धान्तितम्।

तत्र तावत् पूर्वाधिकरणस्य पूर्वपक्षराद्धान्तावनुपपन्नौ; राद्धान्तस्य प्रमाणविरोधात्। यथा विद्वदधिकारस्य देवयानस्याविद्वद्विषयत्वमयुक्तम्, तथा 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति पुण्यकृदधिकारतया प्रतिपादितस्य पितृयाणस्यापुण्यकृत्सेव्यत्वं ह्यनुपपन्नम्॥ 'ताभ्यामिदं विश्वमेजत् समेति' इति श्रुतिबलादुपपन्नमिति चेत्—तर्हि अत एव तृतीयस्थानमृतानामपि पितृयाणेन प्राप्तिः स्यात्; विश्वशब्दासङ्कोचात्॥ जायस्व म्रियस्वेत्यादिवाक्यवशात् सङ्कोच इति चेत्—तर्हि पुण्यकृदधिकारतया प्रतिपादितस्य पितृयाणस्य पुण्यकृत्सेव्यत्ववाक्यबलादपुण्यकृद्विषयोऽपि सङ्कोच आश्रीयताम्॥ यमसदनस्य पितृलोकैकदेशत्वात् पितृलोकप्राप्त्यन्यथानुपपत्त्या धूमादिप्राप्तिरपुण्यकृतां कल्प्येति चेत्--तर्हि तृतीयस्थानमृतानां शरीरग्रहणान्यथानुपपत्त्या चन्द्रपर्यन्तधूमादिमार्गप्राप्तिः कल्प्यताम्॥ तत्र वचनविरोधात् देहग्रहणस्य पञ्चमाहुतिनैरपेक्ष्यं चेत्—पुण्यकृदधिकारवचनविरोधादेव यमसदनप्राप्तेर्धूमादिमार्गनैरपेक्ष्यं कल्प्यताम्। गन्तव्यैक्येऽपि गन्तृभेदेन मार्गानियमश्च संभवति। यथा चन्द्रप्राप्ति-

## तत्स्वाभाव्यापत्त्यधिकरणम्. ३-१-४

### तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३-१-२२ ॥

इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्ताः सानुशयाश्चन्द्रमसोऽवरोहन्तीत्युक्तम्। अवरोहप्रकारश्च, "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति. अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" इति वचनात् यथेतमनेवं चेत्युक्तम् । तत्रास्याऽऽकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः, उत तत्सादृश्यापत्तिमात्रमिति विशये, श्रद्धावस्थस्य सोमभाववत् अविशेषादाकाशादिभावः इति प्राप्ते— तत्स्वाभाव्यापत्तिरेवेत्युच्यते। तत्स्वाभाव्यापत्तिः तत्सादृश्यापत्तिरित्यर्थः। कुत एतत्? उपपत्तेः —सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय तद्भावः; अत्र त्वाकाशादौ सुखदुःखोपभोगाभावात् तद्भावानुपपत्तेस्तदापत्तिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

विदुषां देवयानापेक्षा, अविदुषां तन्निरपेक्षा—एवं यमसदनप्राप्तिरपि पुण्यकृतां धूमादिसापेक्षा, अपुण्यकृतां तु तन्निरपेक्षेति युज्यते । अत एव पूर्वपक्षवर्णनं चातिमन्दम् । अत एव **संयमने** त्वित्यादिसूत्राणि न भोगाभावव्युदासपराणि ; किंतु पूर्वपक्षे पुण्यापुण्यकृतां गत्यविशेषशङ्काव्युदासपराणि भवितुमर्हन्ति । अत एव **अपिसप्ते**ति सूत्रस्य मृत्युगीतश्लोकसप्तकविषयत्वमयुक्तम् ; कर्मवश्यानां मर्त्यानां यमवश्यत्वे संशयाभावात् । पापिनां दुःखभोक्तृत्वे संशयाभावात् आरोगभ्राजादिसप्तसूर्यविषयत्वं चायुक्तम् । अतः पुण्यापुण्यकृतां स्थानतोऽपि फलवैषम्यपरत्वमेव युक्तम् । अथैतयोःपथोरिति वाक्ये च पथिन्शब्दस्य विद्याकर्मविषयत्वादपि देवयानपितृयाणविषयत्वं युक्तम्, मुख्यत्वात् । मार्गवाचिशब्दस्यानुष्ठानविशेषविषयत्वं हि गौणम् । मुख्ये संभवति च तदन्याय्यम् ॥ पुरुषतन्त्रत्वाद्विद्याकर्मणी एव विधेये इति चेत्, सत्यं तयोः पुरुषतन्त्रत्वम् । तद्विधानपरत्वं पथिन्शब्दस्य मुख्यत्वेऽप्युपपद्यते ; विद्याकर्मफलभूतमार्गभ्रष्टानां दुर्गतिसङ्कीर्तनस्य विद्याकर्मविधानौपयिकत्वात् । यतः 'विद्याकर्मणोरिति तु' इति सूत्रेणापुण्यकृतां धूमादिप्राप्तिर्विनिवारिता, अत एव तृतीयस्थानमृतानां चन्द्रप्राप्तिशङ्का दूरादपास्तेति नाधिकरणं पृथग्वर्णनीयम् । अत एव **नतृतीय** इत्यादिसूत्राणां पूर्वप्रकृतसाध्योपपादकतया ऐकाधिकरण्यमेव युक्तम् ॥ इति अनिष्टादिकार्यधिकरणम् ॥

**तत्स्वाभाव्यापत्तिरुपपत्तेः** ॥ मार्गविषयविचारे कृते तदेकदेशविचारविषयतया पेटिकाभेदेन संगत्यर्थमनुवदति-**इष्टादी**ति । अपो बिभर्तीत्य**भ्रम्**, 'मिह सेचने' इति धातोर्मेघ इति रूपम् । जलधारणावस्था वर्षोन्मुखावस्था च विवक्षिता । **आकाशादिभावः**—आकाशादिशरीरकत्वम् । **सादृश्यापत्तिः**— आकाशात् पृथङ्निर्देशानर्हतत्संसर्गः । किमाकाशादिभावो देवमनुष्यादिभाववत् आकाशादिशरीरत्वापत्तिः, उत तत्सादृश्यापत्तिमात्रमिति ; किमत्र सामानाधिकरण्यं मुख्यम्, उत गौणमिति ; मुख्यत्वापवादोऽस्ति, नेति । अपवादाभावे मुख्यत्वादाकाशादिहेतुत्वं स्यात्, अपवादसद्भावे सामानाधिकरण्यस्यामुख्यत्वादाकाशादिसादृश्यापत्तिमात्रमिति भवति । **अविशेषात्**—प्रकरणस्थत्वाविशेषात् । **तत्संसर्गकृतसादृश्यापत्त्यभिप्राय**मिति । तत्संसर्गहेतुक-भेदकस्थूलाकाराभावपरमित्यर्थः ।

नातिचिराधिकरणम्—३-१-५

**नातिचिरेण विशेषात्** ॥ ३-१-२३ ॥

आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति, उतानियमः इति विशये, नियमहेत्वभावादनियमः इति प्राप्ते—उच्यते नातिचिरेणेति । कुतः ? विशेषात्—उत्तरत्र व्रीह्यादिप्राप्तौ, "अतो वै खलु दुर्निष्प्रपतरम्" इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात् । पूर्वत्र ह्याकाशादिप्राप्तावचिरंनिष्क्रमणं गम्यते । दुर्निष्प्रपतरमिति छान्दसः तशब्दलोपः । दुर्निष्प्रपततरम्; दुःखनिष्क्रमणतरमित्यर्थः ॥ इति नातिचिराधिकरणम् ॥ ५ ॥ अथान्याधिष्ठिताधिकरणम्. ३-१-६

**अन्याधिष्ठिते पूर्ववदभिलापात्** ॥ ३-१-२४ ॥

अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते. "मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति । ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीनाश्लिष्यन्ति, उत ते भोक्तारो व्रीह्यादिशरीरा जायन्ते इति विशये—'जायन्ते' 'इति वचनात् देवो जायते मनुष्यो जायत इतिवद्व्रीह्यादिशरीरा एवेति प्राप्ते--उच्यते--अन्याधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव । कुतः । पूर्ववदभिलापात्--आकाशादिमेघपर्यन्तवत् केवलतद्भावाभिलापात् । यत्र हि भोक्तृत्वमभिप्रेतम्; तत्र तत्साधनभूतं कर्माभिलप्यते, "रमणीयचरणाः... कपूयचरणाः" इति । इह चाऽऽकाशादिवन्नाभिलप्यते कर्म । फलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वात्, अनारब्धस्य "रमणीयचरणाः. . .कपूयचरणाः" इति वक्ष्यमाणत्वात् मध्ये कर्मान्तराभावाच्च । अत आकाशादिभाववचनवद्व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ॥ २४ ॥

---

**परे तु** व्यपदेशस्य मुख्यत्वादाकाशादिस्वरूपापत्तिं पूर्वपक्षीकुर्वन्ति । तदयुक्तम्—नित्यत्वज्ञत्वादिभिराकाशादिवैलक्षण्यस्य स्थितत्वात् शङ्कानुपपत्तेः । **अन्ये तु** सर्वस्य वस्तुनो ब्रह्मानन्यतया सर्वविधपरिणामशक्तियोगादाकाशाद्यवस्थापत्तिरिति पूर्वपक्षयन्ति । तदप्युक्तन्यायादयुक्तम् ॥ पूर्वसिद्धार्थाक्षेपेणाधिकरणमुत्थितमिति चेत्—गत्यभावे हि तथा वक्तव्यम् । उक्तानाक्षेपेण संभवति पूर्वपक्षन्याये स एव निरसनीयः ॥ इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ २२ ॥

**नातिचिरेण विशेषात्** ॥ **आकाशप्राप्ती**त्यादिना सङ्गतिसूचनम् । आकाशादिषु कञ्चित्कालं तिष्ठति, उतानतिचिरेण निष्क्रामतीति ; व्रीह्यादिभावे दुर्निष्प्रपततरत्वाभिधानं किमन्यत्र नातिचिरनिष्क्रमणमवगमयति, नेति । अनवगमकत्वे नियमाभावः । अवगमकत्वे नातिचिरनियमः । नातिचिरशब्देनाकाशादौ किञ्चिद्विलम्बो व्रीह्यादावतिविलम्बश्च द्योतितौ ॥ इति नातिचिराधिकरणम् ॥ २३ ॥

**अन्याधिष्ठिते पूर्ववदभिलापात्** ॥ सङ्गतिं विषयं च दर्शयति **अवरोहन्त** इति । अवरोहतां जीवानां व्रीहियवादिभावः किं देवमनुष्यादिभाववत् तच्छरीरकत्वम्, उत व्रीहियवादिसंश्लेषमात्रमिति ; 'कपूयचरणाः' इत्यादिवत् कर्मनिर्देशाभावः किं संश्लेषमात्ररूपतामवगमयति, नेति । अनवगमकत्वे व्रीह्यादिशरीरकत्वम् ; अवगमकत्वे संश्लेषमात्रमिति । **केवल**शब्दाभिप्रेतमर्थमाह **यत्र ही**ति । इष्टादिकर्म श्रुतं हीत्यत्राह **फलप्रदान** इति । **समाप्तत्वात्** । यावत्सम्पातमुषित्वेति हि वचनम् । **मध्ये**—प्रकरणमध्ये **कर्मान्तराभावात्**—कर्मान्तरश्रवणाभावात् । यद्वा आकाशादिप्राप्तेर्मनुष्यजन्मनश्च मध्य इत्यर्थः ॥ ननु व्रीह्यादिप्राप्तेरहेतुकत्वमयुक्तम् । तत् कथं कर्माभावः ॥ सत्यम् । मनुष्यादिजन्मनिमित्तं कर्मैव तदुपयोगित्वात्

अन्याधिष्ठिताधिकरणम्. ३-१-६

**अशुद्धमिति चेन्न शब्दात्** ॥ ३-१-२५ ॥

नैतदस्ति—यत् अन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रम्, भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्म—इति। भोक्तृत्वहेतुसद्भावात्। स्वर्गोपभोग्यफलमिष्टादिकर्मैव अशुद्धं पापमिश्रम्, अग्नीषोमीयादिहिंसायुक्तत्वात्। हिंसा च, "न हिंस्यात् सर्वा भूतानि" इति निषिद्धत्वात् पापमेव।

न चात्र पदाहवनीयादिवदुत्सर्गापवादभावः संभवति; भिन्नविषयत्वात्। अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति; "न हिंस्यात्" इति तु हिंसायाः प्रत्यवायफलत्वम्। अथोच्येत—अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति, रागप्राप्तविषयत्वात् तस्येति—नैवम्; इहापि रागप्राप्तेरविशिष्टत्वात्। "स्वर्गकामो यजेत" इत्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशात् यागादेः स्वर्गादिसाधनत्वमवगम्य फलरागात एव यागादौ प्रवर्तते। अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते। लौकिक्यामपि हिंसायां केनचित् प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात् प्रवर्तत इति न कश्चन विशेषः। तथा नित्येष्वपि कर्मसु, "सर्ववर्णानां

---

व्रीह्यादिप्राप्तिहेतुः, न तु कर्मान्तरमित्यभिप्रायेण **कर्मान्तराभावा**दित्युक्तम्, न तु कर्माभावादिति। व्रीह्यादिशरीरकाश्च जीवाः तल्लवनदशायामेवापक्रामन्ति। लवनशोषणपेषणप्रोक्षणपचनाभ्यवहाराद्यवस्थास्वनुवर्तमानत्वं न तच्छरीराणां जीवानाम्, किन्तु तत्संश्लिष्टानामेवेति ॥

**अशुद्धमिति चेन्न शब्दात्** ॥ अशुद्धशब्दस्याशुद्धियुक्तवाचित्वात्, पापस्याशुद्धिरूपत्वाच्च **पापमिश्र**मित्युक्तम्, भाट्टोक्तं मृषावादिभिश्च तदनुरोधादुपन्यस्तम् उत्सर्गापवादन्यायमनूद्य दूषयति **न चात्रे**त्यादिना। **भिन्नविषयत्वा**दिति। 'आहवनीये जुहोति' इति वाक्येन होमत्वादाहवनीयस्य स्थानत्वं प्राप्तम्, एवमनेकहोमविषयवाक्यद्वयेऽन्यतराननुष्ठानगर्भोऽन्यतरपरिग्रहविरोधोऽस्त्येव। अतस्तयोरुत्सर्गापवादभावसंभवः। अत्र तु भिन्नविषयत्वाद्विरोधाभावेन नोत्सर्गापवादभाव इत्याह **अग्नीषोमीये**ति। क्रतूपकारकत्वविषयमेकं वाक्यम्, अन्यत्तु प्रत्यवायफलविषयम्; अतो न विरोधः। यथा—क्षीरं पित्तोपहतस्य रक्षकम्, प्रमेहोपहतस्य बाधकमिति वाक्ये न विरोधः, तद्वत्। यदि प्रत्यवायफलत्वतदभावपरं वाक्यद्वयम्, तदा विरोधः स्यात्। न तदस्ति। अतो नायमुत्सर्गापवादन्यायविषय इत्यर्थः॥ नन्वेवं सोमपानेऽप्युच्छिष्टदोषः स्यात्; सोमपानविध्युच्छिष्टनिषेधयोः क्रतूपकारकत्वप्रत्यवायकरत्वविषयतया विरोधाभावात्॥ नैवम्; 'न सोमेनोच्छिष्टा भवन्ति' इत्युच्छिष्टताया एव निषिद्धत्वात् उच्छिष्टदोषतदभावपरशास्त्रद्वयविरोधस्यावर्जनीयत्वे सति उत्सर्गापवादन्यायेन विशेषवचनप्राबल्यात् निर्दोषत्वसिद्धेः।

प्राभाकरोक्तं परिहारं **साङ्ख्यः** शङ्कते **अथोच्येते**त्यादिना। दूषयति **नैव**मिति। यागादौ प्रवृत्तिः फलरागादस्तु; कथं हिंसाया रागप्राप्तत्वमित्यत्राह **अग्नीषोमीयादिष्व**पीति। हिंसास्वित्यर्थः। तर्हि को विशेषो लौकिकवैदिकहिंसयोरित्यत्राह **लौकिक्याम**पीति। फलसाधनभावग्राहिप्रमाणवैषम्यमेव; रागप्राप्तिस्तु तुल्येत्यर्थः। फलरागात् ऋतेऽपि केषुचित्कर्मसु प्रवृत्तिर्दृश्यत इत्यत्राह **तथा नित्येष्व**पीति। **सर्ववर्णाना**मित्यादि **आपस्तम्बसूत्रम्**॥ **श्रीविष्णुपुराणे** च तत्तदाश्रमधर्मानुष्ठायिनां

स्वधर्मानुष्ठाने परम् अपरिमितं सुखम्" इत्यादिवचनात् फलसाधनत्वमवगम्य|रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम्। अत इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसांशस्य फलं व्रीह्यादिस्थावरभावेनानुभूयते। स्थावरभावं च पापफलं स्मरन्ति, "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति। अतो व्रीह्यादिभावेन भोगाय अनुशयिनो जायन्त इति चेत्; तन्न, कुतः? शब्दात्—अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात्। पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति, "हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति" इत्यादिकम्। अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा; प्रत्युत रक्षणमेव। तथा च मन्त्रवर्णः, "न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु" इति। चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः ॥२५॥ इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्—

### रेतस्सिग्योगोऽथ ॥ ३-१-२६ ॥

व्रीह्यादिभाववचनानन्तरम्, 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति' इति रेतस्सिग्भावोऽनुशयिनां श्रूयमाणो यथा तद्योगमात्रं प्रतिपादयति; तद्वत् व्रीह्यादिभावोऽपीत्यर्थः ॥२६॥

### योनेः शरीरम् ॥ ३-१-२७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः। तत्रैव सुखदुःखोपभोगसद्भावात्, ततः प्राक् आकाशादिप्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥ २७ इति अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः ॥

---

फलविशेषा उक्ताः। यद्वा—प्रत्यवायपरिहारफलत्वं स्यात्, तथाऽपि रागादेव प्रवृत्तिरिति भावः। **तेषामप्यशुद्धियुक्तत्वम्**—नित्यकर्मादीनामपि संवत्सरपश्वालम्भनादिभिरशुद्धियुक्तत्वमित्यर्थः। सिद्धान्तमाह **तन्नेति**। दुःखहेतुः संज्ञपनं हिंसा स्यादित्यत्राह **अतिशयितेति**। **तथा च मन्त्रवर्ण** इति। न केवलं स्वर्गलोकगमनेनाहिंसात्वकल्पनम्। किंतु अहिंसात्वं कण्ठोक्तं चेति भावः। अस्यार्थस्य लोकसिद्धत्वमाह **चिकित्सकश्चेति**। हिंसात्वे सति ह्युक्तदोषसंभवः। हिंसात्वाभावादेव दूरोत्सारितो दोषः। अयमेव समीचीनो दुष्प्रधर्षणः परिहारः। अतः श्येनाग्नीषोमीयवैषम्यं चेदमेव। अल्पदुःखदोऽप्यतिशयिताभ्युदयसाधको व्यापारो रक्षणम्; अनर्थोदर्को व्यापारो हिंसेत्यर्थः ॥ **अन्ये** तु यत्किञ्चिदपि कार्यं नियोगादेव कुर्वतां न प्रत्यवायः, यथा राजशासनात्प्रवृत्तानाम्। श्येनादिवाक्यं तु परहिंसायां स्वतः प्रवृत्तस्य तदुपायबोधनमात्रपरमिति वैषम्यमाहुः। तदयुक्तम्; प्रायश्चित्तकाम्यपश्वालम्भनानां प्रत्यवायकरत्वप्रसङ्गात्। 'अकुर्वन् विहितं कर्म निन्दितं च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्ती भवेन्नरः' इत्यादिशास्त्रात् विहिताकरणादिनिमित्तप्रत्यवायभीतो ह्यास्तिकः प्रायश्चित्तमाकाङ्क्षति; कामी च पुत्रपश्वन्नभूत्यादिसाधने प्रवर्तितुमिच्छति। ततश्च शास्त्रस्योपायबोधनमात्रपरत्वं स्यादिति श्येनसाम्यं दुष्परिहरम् ॥ **रेतःसिग्योगोऽथ**। **अनन्तरमित्यन्तेन अथशब्दो** व्याख्यातः। **तद्भूय एव भवति**। स इत्यध्याहारः। **भूयः** पश्चात **तद्भवति**—रेतःसिग् भवति; रेतःसिग्योगी भवतीत्यर्थः। तत्सद्भावस्यौपचारिकत्वप्रकरणमविच्छिन्नमिति भावः ॥ **योनेः शरीरम्** ॥ **योनिप्राप्तिः** योषिद्योनिप्राप्तिः। **तत्रैवेति**। संसारिजीवशरीरं चेत्, भोगार्थमेव। न चेद् भोगार्थम्, तर्हि न तत् संसारिशरीरमिति भावः ॥

इति श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयस्याध्यायस्य प्रथमः पादः ॥

श्रीमते रामानुजाय नमः ।

## श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

### तृतीयाध्याये द्वितीयः पादः ।

### संध्याधिकरणम् ३-२-१

### सन्ध्ये सृष्टिराह हि ॥ ३-२-१ ॥

एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्; इदानीमस्य स्वप्नावस्था परीक्ष्यते । स्वप्नमधिकृत्य श्रूयते, "न तत्र रथा न रथयोगा न पन्थानो भवन्ति । [1]अथ रथान् रथयोगान् पथः सृजते । न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति; अथानन्दान् मुदः प्रमुदः सृजते । न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति; अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता" इति । तत्र संशयः—किमियं रथादिसृष्टिर्जीवेनैव क्रियते, आहोस्विदीश्वरेणेति । किं युक्तम्, सन्ध्ये सृष्टिर्जीवेनेति । कुतः । सन्ध्यं स्वप्नस्थानमुच्यते, "सन्ध्यं तृतीयं स्वप्नस्थानम्" इति वचनात् । सा तु जीवेनैव क्रियते, 'सृजते; स हि कर्ता' इत्याह हि । स्वप्नदृग्जीव एव तत्र प्रतीयते ॥ १ ॥

### निर्मातारं चैके पुत्रादयश्च ॥ ३-२-२ ॥

किञ्च—एनं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते, "य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" इति । पुत्रादयश्च तत्र काम्यमानतया कामशब्देन निर्दिश्यन्ते, नेच्छामात्रम् । पूर्वत्र हि, "सर्वान् कामान् छन्दतः प्रार्थयस्व", "शतायुषः पुत्रपौत्रान् वृणीष्व"

---

**सन्ध्ये सृष्टिराह हि** ॥ एवमित्यादिना पादसङ्गतिरुच्यते । **जन्मादीति** । अत्र आदिशब्देन सुखदुःखानुभवो विवक्षितः । **दुःखित्वं ख्यापित**मिति । सुखानुभवेऽपि, 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः' इति वचनेन दुःखप्राचुर्यात् तत्रापि दुःखित्वमेवेति भावः ॥ वक्ष्यमाणविषयवाक्यस्थस्य तत्रपदस्य व्याख्यानायाऽऽह **स्वप्नमधिकृत्ये**ति । [2]स्वप्नं पश्यतीति हि प्रकृतम् । अनुकूलविषयजा प्रीतिरा**नन्दः** ; स्वकीयत्वबुद्धिजा प्रीति**र्मुत्** ; तद्विनियोगजा प्रीतिः **प्रमुत्** । **तत्रे**ति । किं स्वाप्नार्थसृष्टिर्जीवकर्तृका, उत परमात्मकर्तृका; स हि कर्तेति किं जीवः परामृश्यते, उत परमात्मेति(परः) ; प्रजापतिवाक्योदितसत्यसंकल्पत्वं जीवस्य स्रष्टृत्वमुपपादयति, नेति ; स्वाप्नार्थमात्रेषु जीवस्य सङ्कल्पाविर्भावकल्पनमुपपद्यते, नेति । यदोपपद्यते, तदा तस्यैव स्रष्टृत्वोपपत्तेः 'स हि' इति जीवपरामर्शात् जीवकर्तृकत्वं स्यात् । यदाऽऽविर्भावकल्पनमनुपपन्नम्, तदा स्रष्टृत्वानुपपत्तौ स इति जीवपरामर्शायोगात् परमात्मकर्तृत्वमिति भवति । **आह हि** इति सूत्रखण्डं व्याचष्टे **सृजत** इति । [2]स्वप्नं पश्यतीति प्रकृतो जीवः **स** इत्युच्यते इति भावः ॥

**निर्मातारं चैके पुत्रादयश्च** ॥ श्रुत्यन्तरे परमात्मकर्तृकत्वं श्रूयत इत्याशङ्कायामिदं सूत्रम् । अत्रोपात्तवाक्ये जीवलिङ्गं दर्शयति **पुत्रादयश्चे**ति । अपरिकरस्य जीवस्य कथं सृष्टिरित्यत्राह

---

1 अथेति विरोधिपक्षोपन्यासाभिप्रायम् । 2 नेदं श्रुतिवाक्यमिति भावप्रकाशिका । अतः 'स हि स्वप्नोभूत्वा' इत्यारभ्य, 'उभे स्थाने पश्यति...पाप्मन आनन्दांश्च पश्यति' इत्येवंश्रुतेरर्थानुवादोऽयम् ।

इति पुत्रादय एव कामाः प्रकृताः। अतो रथादीन् जीवः स्वप्ने सृजति ; जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम्। अत उपकरणाद्यभावेऽपि सृष्टिरुपपद्यते ॥ २ ॥ इति प्राप्तेऽभिधीयते—

**मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॥ ३-२-३ ॥**

तुशब्दः पक्षं व्यावर्तयति। स्वप्ने रथपुष्करिण्याद्यर्थजातं मायामात्रं परमपुरुषसृष्टमित्यर्थः। मायाशब्दो ह्याश्चर्यवाची, "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादिषु तथा दर्शनात्। अत्रापि, 'न तत्र रथा न रथयोगा न पन्थानः'—सकलेतरपुरुषानुभाव्यतया न भवन्तीत्यर्थः (वन्ति?)। 'अथ रथान् रथयोगान् पथः सृजते' स्वप्नद्दगनुभाव्यतया तत्कालमात्रावसानान् सृजते-इत्याश्चर्यरूपत्वमेवाह। एवंविधाश्चर्यरूपा सृष्टिः सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते, न जीवस्य; तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि संसारदशायां कात्स्न्र्येनानभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते। "कामं कामं पुरुषो निर्मिमाणः' इति च परमपुरुषमेव निर्मातारमाह। "य एषु सुप्तेषु जागर्ति", "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इत्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः,। 'अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता' इति च तया श्रुत्या ऐकार्थ्यात् परमपुरुषमेव कर्तारमाह ॥३॥

स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकम्, कुतस्तन्नाभिव्यज्यत इत्यत आह—

**पराभिध्यानात्तु तिरोहितम् ; ततो ह्यस्य बन्धविपर्ययौ ॥ ३-२-४ ॥**

तुशब्दः शङ्काव्यावृत्त्यर्थः। पराभिध्यानात्—परमपुरुषसङ्कल्पात् अस्य जीवस्य स्वाभाविकं रूपं तिरोहितम्। अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति;। ततः—तत्सङ्कल्पादेव ह्यस्य—जीवस्य बन्धमोक्षौ श्रुतौ, "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति", 'एष ह्येवानन्दयाति", "भीषाऽस्माद्वातः पवते" इत्यादिषु॥४॥

---

**जीवस्य चे**ति। एतत्सूत्रद्वयं पूर्वपक्षविषयम् ॥

**मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्** ॥ **मायामात्रम्** आश्चर्यरूपमेव; अनाश्चर्यरूपं न किंचिदपीत्यर्थः। **परमपुरुषसृष्ट**मिति तुशब्दसिद्धार्थ उक्तः। मिथ्याव्यावृत्त्यर्थं मायाशब्दं व्याचष्टे **मायाशब्दो ही**ति। **जनकस्ये**ति। देवस्याश्चर्यरूपा शक्तिर्मूर्तिमतीवेत्यर्थः। 'न भवन्ती' ति श्रुतौ मिथ्यात्वं प्रतीयत इत्यत्राह **अत्रापी**ति। स्वाप्नार्थानां पूर्वकालीनाभावो मिथ्यात्वं च लोकसिद्धमिति तदुभयपरत्वे 'न भवन्ती'ति वाक्यवैयर्थ्यम्, मिथ्यात्वपरत्वे सृजधात्वस्वारस्यं च स्यात्। प्रसिद्धरथाद्यनुभवस्य प्रतिषेधेऽपि वाक्यवैयर्थ्यं स्यात् ; स्वप्ने तेषामननुभूतत्वस्य लोकसिद्धत्वात्। स्वप्नदृष्टानां हि जाग्रद्दृष्टेभ्योऽन्यत्वं लोकसिद्धम्। अतस्तत्परिहाराय प्रसिद्धरथादिभावप्रतिषेधेन विजातीयविचित्रार्थसृष्टिपरत्वं वाक्यस्यावर्जनीयम्। तथा सति तद्वैजात्यम् अर्थवशात् सकलेतराननुभाव्यत्वतत्कालमात्रावस्थायित्वरूपमिति। **मायाशब्दो** व्याख्यातः ; तेन सह प्रतिज्ञाखण्डार्थमाह **एवंविधे**ति। हेतुखण्डं व्याचष्टे **तस्ये**ति। पूर्वपक्षयुक्तिं परिहरति **कामङ्काम**मिति। कामङ्काममिति णमुलन्तं पदम् ; सङ्कल्प्येत्यर्थः ॥

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** ॥ परस्य नैर्घृण्यादिप्रसङ्गपरिहारमाह **अनादिकर्मे**ति। **तत** इत्यादि। **तत** इति व्याख्येयं पदम्। बन्धस्य तत्सङ्कल्पायत्तत्वे तदन्तर्गतस्तिरोभावश्च तत्सङ्कल्पकृत इति सिद्धमित्यर्थः ॥

## देहयोगाद्वा सोऽपि ॥ ३-२-५ ॥

सोऽपि—तिरो[धान ?]भावोऽपि देहयोगद्वारेण वा भवति, सूक्ष्माचिच्छक्तियोगद्वारेण वा। सृष्टिकाले देहावस्थेनाचिद्वस्तुना संयोगाद्भवति; प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात्। अतोऽनभिव्यक्तस्वरूपत्वात् स्वप्ने जीवो न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति। "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्यादयो हि परमपुरुषस्यैव संभवन्ति। अतो जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावसानान् तदेकानुभाव्यान् अर्थान् उत्पादयति ॥ ५ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३-२-६ ॥

इतश्च स्वाप्ना अर्था न जीवसङ्कल्पपूर्वकाः; यतः स्वप्नोऽभ्युदयानभ्युदययोः सूचकः श्रुतेरवगम्यते, "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" इति; "अथ स्वप्नाः—पुरुषं कृष्णं कृष्णदन्तं पश्यति। स एनं हन्ति" इत्यादेश्च। स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते। सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते। तथा च अशुभस्यानिष्टत्वात् शुभस्य सूचकमेव सृष्ट्वा पश्येत्। अतः स्वप्ने सृष्टिरीश्वरेणैव कृता ॥ ६ ॥

इति सन्ध्याधिकरणम् ॥ १ ॥

---

कथं भगवत्सङ्कल्पस्य तिरोधायकत्वम्? प्रकृतेः कर्मणां च हि तिरोधायकत्वमित्यत्राह **देहयोगाद्वा सोपि** ॥ भगवत्सङ्कल्पस्य द्वारभूतं प्रकृत्यादिकमित्यर्थः। **वा**शब्दो न तुल्यविकल्पवाची; अपि तु व्यवस्थितविकल्पवाचीत्यभिप्रायेणाह **सृष्टिकाल** इति। **सूक्ष्माचिच्छक्तियोगे**ति। अत्र **शक्ति**शब्देन भगवदपृथक्सिद्धविशेषणत्वं विवक्षितम्। एवमवान्तरसाध्यसाधनयोः परमसाध्येनान्वयं दर्शयति **अतोऽनाभिव्यक्ते**त्यादिना। **मायामात्र**मिति सूत्रभाष्ये **परमपुरुषासाधारणस्वभाव्रप्रतीते**रिति संग्रहेणोक्तम्। अत्र **सर्वेषु सुप्तेषु जागरण**मित्यादिना **स्वभाव**शब्दार्थो विवृतः। ईश्वरेण क्रियते चेत्—किमर्थमस्थिररथादिसृष्टिरित्यत्राह **अत** इति। अल्पाल्पकर्मफलानुभवार्थमस्थिरतत्तद्वस्तुसृष्टिरित्यर्थः ॥

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः** ॥ जीवस्य स्वाप्नसृष्टिमात्रोपयोगिसत्यसङ्कल्पत्वाद्याविर्भावस्तदानीं स्यादिति शङ्काव्यावृत्त्यर्थमिदं सूत्रम्। **स्वप्नाध्यायविदः**—स्वप्नवाचिवेदवाक्यविदः। **अत** इत्यधिकरणार्थोपसंहारः ॥

**परे तु**—स्वाप्नार्थानामीश्वरसृष्टतया वियदादिवत् पारमार्थ्यं पूर्वपक्षीकृत्य देशकालनिमित्तैर्दुर्निरूपतया मिथ्यात्वं सिद्धान्तयन्ति—[1]एषां च जीवकर्तृकत्वमेव सृजत इत्युच्यते। तच्चौपचारिकं सुखदुःखदर्शननिमित्तसुकृतदुष्कृतकर्तृत्वनिबन्धनम्। (सुखदुःखदर्शननिमित्तसुकृतदुष्कृतकर्तृत्वनिबन्धन औपचारिकः स्वाप्नार्थकर्तृत्वव्यपदेशः।) 'बहिष्कुलायादमृतश्चरित्वा' इति स्वाप्नविषया श्रुतिश्च

---

1 शांकरे पूर्वपक्षे प्राज्ञकर्तृकत्वस्यैवोक्तत्वात्, भामत्यां जाग्रज्जगद्वत् प्राज्ञकर्तृकत्वमेवोक्त्वा, क्वचिज्जीवकर्तृकत्ववचनमपि प्राज्ञजीवाभेदाशयेनेति प्राज्ञकर्तृकत्वस्यैव स्थापनाच्च ईश्वरसृष्टं स्वाप्नमित्येव तत्पूर्वपक्षः। अतोऽत्र एषाञ्चेत्यादिना तत्सिद्धान्तस्यैव संग्रहः। सिद्धान्ते हि शांकरे सूचकश्चेति सूत्रे, 'निमित्तमात्रत्वात् सुप्तो रथादीन् सृजत इत्युच्यते... निमित्तत्वञ्च... सुकृतदुष्कृतयोः कर्तृत्वेन' इत्युक्तम्। नात्रानन्वितं किञ्चित्।

बहिरिव चरिंत्वेत्येवम्परा। तस्मिन् प्रकरणे ईश्वरप्रतिपादनं जीवस्य तदनन्यत्वोपदेशार्थम्। सुख-दुःखसूचकत्वकृतपारमार्थ्यशङ्काव्युदासपरं '**सूचकश्च हि**'इति सूत्रम्। तच्च द्वितीयम्। सूचनीयपार-मार्थ्येऽपि सूचकं स्त्रीदर्शनादिकं मिथ्येति सूत्राभिप्रायः। ईश्वरादनन्यत्वेन जीवस्य सत्यसङ्कल्पतया स्रष्टृत्वशङ्कां व्युदस्यति **पराभिध्यानात्त्विति**। जीवस्य ज्ञानैश्वर्यशक्त्यादि सर्वमविद्यातिरोहितम्। तिरो-धाननिवृत्तिः परमात्माभिध्यानात्। अस्य बन्धमोक्षौ हि परमात्माधीनौ। स च तिरोभावः सूक्ष्मस्थूल-देहयोगादिति योजयन्ति।

तत्र तावत् पादानुगतार्थतत्सङ्गती अनुपपन्ने। जीवत्वावस्थानिरूपणं चेत् पादकृत्यम्, 'फलमत' इत्यधिकरणासङ्गतिः। न चेश्वरो जीवावस्था; तस्य ब्रह्मणि कल्पितस्य जीवा-ध्यस्तत्वाभावात्॥ परमात्मनिरूपणं पादकृत्यं चेत—स्वाप्नार्थानां जीवकर्तृकतया मिथ्यात्वोक्तिरिह न सङ्गच्छते। पूर्वपक्षश्चानुपपन्नः; मिथ्यात्वस्य सिद्धान्तीकरणायोगात्। मिथ्यात्वं ह्यारम्भणाधिकरणे कृत्स्न-प्रपञ्चस्य समर्थितम्। यदा वियदादेरपि मिथ्यात्वसिद्धिः, तदा कैमुत्यसिद्धं स्वाप्नार्थमिथ्यात्वमित्य-धिकरणवैयर्थ्यम्। वियदादीनां व्यावहारिकं सत्यत्वमस्ति; स्वाप्नार्थानां तदपि नास्ति; व्यवहाराविसं-वादस्य प्रबोधसमये सर्वलोकसंप्रतिपन्नत्वात्; वैधर्म्याच्च न स्वप्नादिवदिति अन्यत्र तद्वैषम्यस्योक्तत्वाच्च॥ श्रुतिवाक्यकृतसत्यत्वशङ्काव्युदसनार्थं आरम्भ इति चेन्न; सूत्रश्रुतिवाक्यासामञ्जस्यात्।

तथा हि—मिथ्यात्वं[1] समर्थनीयं चेत्—सर्वलोकाश्रयत्वादिभिः स्वरसप्रतिपन्नमीश्वरस्रष्टृत्वं न बाधितव्यम्; ईश्वरस्रष्टृत्वस्य व्यावहारिकसत्यत्वनिवृत्त्यविरोधात्। उपासनविशेषप्रीतपरावरदेवता-प्रसादलब्धानां स्वप्नानां ब्रह्मदत्तोषादिदृष्टानामपि व्यावहारिकसत्यत्वनिवृत्तेस्त्वदिष्टत्वात्। व्यावहारिक-सत्यत्वाभावः साध्यश्चेत्—जीवकर्तृकत्वाश्रयणमपि विरुद्धम्; जीवकर्तृकघटादीनामिव व्यावहारिक-सत्यत्वप्रसङ्गात्। जीवस्रष्टृत्वस्यान्तिमसूत्रद्वयव्युदस्तत्वाच्च॥ जीवस्य मुख्यं स्रष्टृत्वं व्युदस्तम्; सुखाद्यव-भासमूलादृष्टकर्तृत्वादौपचारिकं कर्तृत्वमिति न विरोध इति चेत्—जीवादृष्टमूलानां देहेन्द्रियसर्गा-दीनामिव व्यावहारिकसत्यत्वप्रसङ्गात्॥ जीवादृष्टमूलत्वेऽपि देहसर्गादीनामीश्वराधीनत्वमस्तीति चेत्—तादृशमीश्वराधीनत्वं स्वाप्नार्थानामप्यस्ति; तदीशनस्यासङ्कुचितत्वात्। तादधीन्यस्य भवदनुम-तत्वाच्च। सर्वदेशसर्वकालवर्तिसर्वजन्तुदृष्टस्वाप्नप्रपञ्चानां जाग्रत्प्रपञ्चादपि महत्तरतया तेषामन्याधीनत्वे पारमैश्वर्यमीश्वरस्य न स्यात्। उभयविधप्रपञ्चस्यापि हि प्रतीतिसत्त्वमविशिष्टम्। बाधस्याशुतरत्व-विलम्बौ हि वैषम्यम्। एवं जीवानां साक्षात्स्वप्नार्थकर्तृत्वाभावस्य मिथ्यात्वानुपयुक्तस्य सूत्रितत्वादेव सूत्रकारेण मिथ्यात्वस्य सिषाधयिषितत्वाभावोऽवगम्यते। **सूचकश्चे**ति विरुद्धसूत्रप्रणयनाच्च विरुद्धत्वं वक्ष्यामः। अतो यस्मिन् साध्ये सूत्राण्युपयुक्तानि स्युः, न त्वनुपयुक्तविरुद्धानि—तदेव साध्यं भवितुमर्हति॥ ईश्वरस्रष्टृत्वं पूर्वपक्षयुक्तिश्चेत, 'पुत्रादयश्चे'ति सूत्रांशो निष्फलः; पुत्रादिस्रष्टृत्वस्य जीवेषु संभवत ईश्वरसाधकत्वायोगात्। **मायाशब्दस्य** मिथ्यात्ववाचित्वाभावाच्चाक्षराननुगुणत्वम्। **सूचकश्चे**ति सूत्रं विरुद्धम्; मिथ्यात्वविरोधित्वादर्थक्रियायाः॥ सूच्यस्यैव पारमार्थ्यं, न सूचकस्येत्यभिप्राय इति

---

1 **मिथ्यात्वं व्यावहारिक प्रातिभासिक साधारणधर्मः। अतो द्वितीयपक्षात् भेदः।**

चेन्न ; अशाब्दत्वात् ; उत्सूत्राभिप्रायकल्पने च श्रुतिविरुद्धकल्पनायोगात् । पराभिध्यानात् तिरोधाननिवृत्तिरिति योजनायामध्याहारव्युत्क्रमान्वयौ स्फुटतरौ । सोऽपीति तिरोभावपरामर्शश्चायुक्तः—तिरोभावशब्दस्याप्रकृतत्वात् , **तिरोहित**मिति निर्दिष्टे तिरोधानरूपधात्वर्थमात्रस्य तदिति परामर्शार्हस्य स[1] इति परामर्शायोग्यत्वाच्च । पुंलिङ्गपदेषु प्रयुक्तेषु कस्यचिदर्थ उचितः परामर्शनीयः ।

श्रुतिवाक्यं च निरूप्यम् । 'न भवन्तीति श्रुतिर्मुख्या; तदनुरोधेन सृजतिर्भाक्तः' इति हि भवतां निर्वाहः । सृजतेर्भाक्तत्वं स्थितम् । पूर्ववाक्यमपि विफलम् ; लोकप्रसिद्धत्वात् स्वाप्नमिथ्यात्वस्य । अप्राप्ते हि शास्त्रमर्थवत् ॥ अतो वैयर्थ्यभाक्तत्वाभ्यां वाक्यद्वयमपि दुःस्थम् ॥ मिथ्याभूतं स्वाप्नार्थजातमनूद्य भाक्तेन सृजतिना जीवादृष्टमूलत्वं प्रतिपाद्यत इति वाक्यैकत्वमिति चेन्न—उद्देश्यविशेषणभूतमिथ्यात्वानुरोधेन उपादेयवचनस्वारस्यभङ्गस्य न्यायविदामनभिमतत्वात् ; उभयमुख्यत्वसंभवेऽन्यतरामुख्यत्वाश्रयणानुपपत्तेश्च । न च, न भवन्तीति जागरितानुभूतार्थाभावपरः ; प्रबोधे दृश्यानां रथादीनां स्वप्नसमये विद्यमानत्वात् । न च स्वाप्नार्थानां प्राक्कालीनाभावपरः ; स्वप्नकल्पितानां पूर्वमभावस्य लोकसिद्धत्वात् । न च, न भवन्तीति स्वाप्नजाग्रद्दृष्टानामन्योन्याभावोक्तिः ; लोकप्रसिद्धत्वादेव । अतः स्वाप्नार्थानां प्रसिद्धरथादिभावप्रतिषेधेन तद्वैजात्यं प्रतिपाद्यते । तेन तदेकानुभाव्यत्वतत्तत्कालावसायित्वरूपवैलक्षण्यमुक्तं स्यात् । अतो वैलक्षण्यविशिष्टमीश्वरसृष्टत्वं प्रतिपिपादयिषितमिति वाक्यैकत्वमवैयर्थ्यमभाक्तत्वं न्यायाविरोधश्च भवति । 'बहिष्कुलायादमृतश्चरित्वा' इति च मुख्यं स्यात् ; तपोबलसृष्टैर्देहान्तरैस्सौभरेरिव ईश्वरसृष्टदेहान्तरेण ज्ञानाधिष्ठितेन बहिर्वृत्त्युपपत्तेः । तस्मिंश्च देहान्तरे चक्षुरादीनां विद्यमानत्वान्न दुर्निरूपनिमित्तत्वम् । तेषां चक्षुरादीनां स्वाप्नार्थमात्रग्रहणयोग्यत्वात् देशान्तरगतविशेषान्तरप्रश्ने प्रतिवचनाभावोपपत्तिः । देशकालविपर्यासश्च घटते ; स्वप्ने ईश्वरसृष्टैस्तदेकानुभाव्यैरादित्यगत्याद्युपाधिविशेषैरवच्छिन्नानां दिक्कालानां तत्तत्स्वप्नद्रष्टृपुरुषापेक्षया तथाभावोपपत्तेः । जागरितावस्थायामपि हि प्राच्यादयः प्रातरादयश्च देशकालविशेषा आपेक्षिका भवन्ति ॥

ननु यत्र प्रबोधसमये रथो दृश्यते, तत्रैव स्वप्ने कथं गजावस्थानं मिथ्यात्वेन विना घटत इति चेन्न ; स्वाप्नार्थानां जाग्रद्दृश्यपदार्थैः प्रतिघातानर्हत्वात् । अनिर्वाच्यस्य गजादेरपि तथात्वं वक्तव्यम् । तत् निर्वाच्यपक्षेऽपि समानम् । कथं मूर्तद्रव्यस्य मिथोऽप्रतिघातकत्वमिति चेत्—वयमप्यनिर्वचनीयवादिनं त्वामेव पृच्छामः, कथमिति ॥ अर्थाभावादुपपन्नमिति चेत्—अविषयख्यातिः स्यात् ; अपसिद्धान्तश्च । दोषवशादनिर्वचनीयमर्थान्तरं जातमिति हि भवतां प्रक्रिया । अतश्चोद्यपरिहारौ समानौ ॥ अनिर्वचनीयत्वादुपपन्नमिति चेत्-निर्वचनीयत्वान्ममाप्युपपत्तिः ॥ अनिर्वचनीयनिर्वचनीययोर्मिथः प्रतिघातकत्वाभावः शुक्तिरजतादिषु दृश्यत इति चेत्—निर्वचनीययोरपि मिथः प्रतिघातकत्वाभावो वाय्वाकाशादिषु दृष्टः ॥ सूक्ष्मत्वादप्रतिघात

---

1 न चास्मन्मते कथं तिरोभावोऽर्थ इति शंक्यम् ; अस्मन्मते भवतीत्यध्याहारध्रौव्यात् तिरोहितं भवतीत्यतः तिरोधानभावस्य तिरोभावस्यालंभाभावात् । तन्मते तिरोहितं पराभिध्यानादाविर्भवतीत्यर्थवर्णनात् तिरोभावो न मुख्यप्रकृत इति तदलाभ इति भावः । अत एव तिरोधिः स इत्यप्ययुक्तम् । अप्रधानार्थत्वात् अग्राह्यत्वात् । (भा. प्र.)

## तदभावाधिकरणम् ३-२-२

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३-२-७ ॥

**इदानीं सुषुप्तिस्थानं परीक्ष्यते । इदमाम्नायते, "यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति" इति । तथा, "अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद, हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते, ताभिः**

---

इति चेत्—स्वाप्नार्थानामपि सूक्ष्मत्वसंभवादप्रतिघातः ॥ मूर्तं चेत् मूर्तान्तरप्रतिघातार्हमिति चायुक्तम्—मूर्तत्वमसर्वगतत्वं चेत्—गुणादिषु व्यभिचारः । न हि रूपरसादिकं परस्परेण वा द्रव्येण वा प्रतिहन्यते ॥ असर्वगतद्रव्यत्वं मूर्तत्वं चेत्—गगने व्यभिचारः । न हि गगनं घटादिभिः प्रतिहन्यते । गगनं चासर्वगतं वेदान्तिनाम्; आद्यन्तवत्त्वात्; दशगुणावरणान्तरपरिच्छिन्नत्वाच्च ॥ स्पर्शवत्त्व मूर्तत्वमिति चेत्—तदानीमपि न प्रतिहन्तव्यत्वनियमः, गगनेन घटस्याप्रतिघातात् ॥ स्पर्शवद्द्रव्यं मिथः प्रतिघातीति चेन्न; वाय्वालोकयोर्व्यभिचारात् ॥ रूपिद्रव्यं मिथः प्रतिघातीति चेन्न; सलिलालोकयोर्व्यभिचारात् । आलोको ह्यगाधस्वच्छजलेनाप्रतिघातात् तदन्तर्गतान् पदार्थान् स्वयमन्तर्गतः प्रकाशयति । न ह्यालोकमनपेक्ष्य जलगतं वस्तु द्रष्टुं शक्यम्; तमसि तद्दर्शनाभावात् । न च आप्यावयवानां विरलत्वादालोक इव आलोकप्रवेशः; ऊर्ध्वाधरभावेन दक्षिणोत्तरादिभावेन च संयुक्तानां द्रव्या(वा?)णां जलावयवानां निम्नपातितया निरुध्यमानतया द्रवतया च सच्छिद्रत्वानुपपत्तेः । अतो रूपिद्रव्यस्य मिथः प्रतिघातनियमाभावात् स्वाप्नगजादीनां प्रतिघातानर्हत्वसंभवान्न दुर्निरूपत्वम् । अतः श्रुतिन्यायसूत्राक्षरसामञ्जस्यमसत्पक्ष एवोपपन्नम् ।

**अपरे**ऽपि ईश्वरसृष्टत्वात् सत्यत्वं पूर्वपक्षीकृत्य देशादिभिरनभिव्यक्ततया मिथ्यात्वमाहुः । तत्रापि सूत्रास्वारस्यं परेषामिव स्यात् । **मायामात्र**शब्दो निरालम्बनज्ञानवाचीत्यप्ययुक्तम्; श्रुतिस्थरथादिशब्दानां रथादिज्ञानवाचित्वाभावात् ॥ दुःखप्रतिभासात् स्वाप्नसृष्टिर्जीवस्येति चासङ्गतम्; जाग्रद्दृष्टपृथिव्याद्यर्थानां च दुःखहेतुत्वदर्शनेन जीवसृष्टत्वप्रसङ्गात् । ईश्वरसृष्टत्वे श्रुतिस्वारस्यं तु स्वाप्नार्थेष्वपि तुल्यम् ।

**अन्ये** तु सृजत इति स्वातन्त्र्येण जीवस्य कर्तृत्वावगमात्, स्वस्य स्वयमेव मायया मोहनायोगात्, जीवस्य सत्यसङ्कल्पत्वाच्च सत्या सृष्टिरिति पूर्वपक्षं कृत्वा, 'स्वातन्त्र्योपदेशस्य भ्रान्तिसिद्धानुवादरूपत्वात्, सङ्कल्पानाविर्भावात्, सूचकत्वादिभिः, पुरुषशब्दाच्च परो मायारूपेण सृजति । जीवः प्रेक्षकः । मायारूपेण सृष्टिश्च विषयशून्यप्रतिभासमात्रसृष्टिः' इति वदन्ति । तत्र **पराभिध्यानादित्या**दिसूत्रद्वययोजनायामस्वारस्यं पूर्ववदनुसन्धेयम् । श्रुतौ चानुपयोगविरोधाभावेऽपि मायाशब्दस्य मन्त्रौषधादिषु प्रयुक्तस्य निर्विषयज्ञानवाचित्वाभावात् श्रुतिवाक्यगतरथादिशब्दानां रथादिप्रतिभासवाचित्वाभावाच्च तन्मतमनुपपन्नम् । सूत्रक्रमश्च यथाभाष्यमेव समुचितः; मिथ्यात्वसमर्थनपरत्वेऽनुपपन्ने **अनभिव्यक्तस्वरूपत्व**शब्दस्यापि जीवस्य तिरोहितस्वरूपतापरत्वे स्थिते तिरोधानविषयसूत्रद्वयस्य तदासत्तेरुपपन्नत्वात्; हेत्वन्तराभिधायिनः सूचकश्चेति सूत्रस्य तद्व्यवधायकत्वादपि चरमभावित्वोपपत्तेश्च ॥ इति सन्ध्याधिकरणम् ॥

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ इदानी**मित्यादिना सङ्गतिरुक्ता भवति । **नाडीपुरी-**

प्रत्यवसृप्य पुरीतति शेते" इति। तथा, "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य! तदा संपन्नो भवति" इति। एवं नाड्यः पुरीतत् ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते; किमेषां विकल्पः समुच्चयो वेति विशये, निरपेक्षत्वप्रतीतेर्युगपदनेकस्थानवृत्त्यसंभवाच्च विकल्प इति प्राप्ते, उच्यते—तदभाव इति। तदभावः—स्वप्नाभावः—सुषुप्तिः नाडीषु पुरीतति आत्मनि च भवति। एषां स्थानानां समुच्चय इत्यर्थः। कुतः। तच्छ्रुतेः—त्रयाणां स्थानत्वश्रुतेः। न च कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो न्याय्यः। संभवति च प्रासादखट्वापर्यङ्कवत् नाड्यादीनां कार्यभेदः। तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ; ब्रह्म तु पर्यङ्कस्थानीयम्। अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् ॥७॥

अतः प्रबोधोऽस्मात् ॥ ३-२-८ ॥

यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्, अतः, अस्माद्ब्रह्मणः एषां जीवानां प्रबोधः श्रूयमाण उपपद्यते, "सत आगम्य न विदुः सत आगच्छामहे" इत्यादिषु ॥ इति तदभावाधिकरणम् ॥

---

तद्ब्रह्माणि किं जीवस्य सुषुप्तौ विकल्पेन स्थानानि, उत समुच्चयेन; किमेषां प्रासादखट्वापर्यङ्कवत् कार्यभेदोऽस्ति, नेति; 'सत आगच्छामहे' इति ब्रह्मणः प्रबोधश्रवणं ब्रह्मणः पर्यङ्कस्थानीयतामवगमयत् किं कार्यभेदमवगमयति, नेति। अनवगमकत्वे तुल्यकार्यतया, युगपदनेकस्थानवृत्त्ययोगाच्च विकल्पः स्यात्। कार्यभेदावगमकत्वे तु प्रासादखट्वापर्यङ्कानामिव कार्यभेदात् समुच्चयः स्यात्। ततश्च परमात्मनः सुषुप्तौ जीवविश्रमस्थानत्वरूपगुणनियमसिद्धिः। **युगपदनेकस्थानवृत्त्यसंभवा**दिति। अणुत्वादिति भावः। **तदभाव** इति। "यदा सुप्तः स्वप्नं न कथञ्चन पश्यति" इति श्रुत्यनुसारात् **तदभाव** इति व्यपदेशः। सूत्रस्थचशब्दात् पुरीतद्विवक्षितम्। पूर्वपक्षयुक्तिव्युदासार्थमाह **न चे**ति। **पाक्षिके**ति। विकल्पश्चाष्टदोषदुष्टः इति **शाबरभाष्यम्**। एकैकशिरसि चत्वारो दोषा इति शिरोद्वयेऽप्यष्टौ दोषाः। दोषाश्च बाधरूपाः। प्रथमं फलसाधनताप्रतिपत्तिबाधः, अनुष्ठानबाधः, अपूर्वोत्पत्तिबाधः, फलबाधश्चेत्येकैकशिरसि चत्वारो दोषाः। अत्र तु यथासंभवं बाधः, न चतुर्विधोऽपीत्येतदभिप्रेत्य **पाक्षिकबाधगर्भविकल्प** इति सामान्यनिर्देशः कृतः। कार्यभेदः कथमित्यत्राह **संभवति चे**ति। सुषुप्तौ नाड्या हृदयान्निष्क्रम्य पुरीतति शयनम्; प्रत्यवसृप्येति श्रुतेः ॥

**अतः प्रबोधोऽस्मात्** ॥ **अतः अस्मा**दिति पदद्वयं व्याख्येयम् ॥ नाड्यादीनामेकार्थत्वाद् व्रीहियवादीनामिव विकल्प इति पूर्वपक्षयुक्तिं **परे** वदन्ति। परम्परयैकप्रयोजनत्वे समुच्चयः स्यादिति निरपेक्षत्वप्रतीतिरेव विवक्षितेति तैरपि वक्तव्यम्। 'तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यति। अथास्मिन् प्राण एवैकधा भवति। ताभिः प्रत्यवसृप्य पुरीतति शेते' इति नाड्यादिसमुच्चयश्च श्रुत्या प्रदर्श्यत इति सिद्धान्तयुक्तिरुक्ता। तत्र नाडीनां प्रत्यवसर्पणमार्गत्वमात्रं प्रतिपन्नमिति तासां सुषुप्तिस्थानत्वे समुच्चयाप्रतीतेस्तदनादरः। 'नाडीपुरीततोर्जीवाधारत्वव्यपदेशस्तदुपाध्याधारतया; ब्रह्माधारत्वं नाम ब्रह्मात्मकत्वमेव' इति चायुक्तम्; सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रितत्वात्; वैयधिकरण्यश्रुतीनामस्वारस्याच्च।

ननु 'यत्रैष एतत्सुषुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति, 'पुरीतति शेते' इति च श्रुत्योः कथमविरोधः ॥ अत्र आकाशे—

कर्मानुस्मृतिशब्दविध्यधिकरणम्—३-२-३

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३-२-९ ॥**

किं सुषुप्त एव प्रबोधसमये उत्तिष्ठति, उतान्य इति संशये—अस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि संपन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियादिसंबन्धाभावादन्यः इति प्राप्ते—उच्यते, स एव त्विति। तुशब्दः पक्षं व्यावर्तयति। स एवोत्तिष्ठति। कुतः। कर्मानुस्मृतिशब्दविधिभ्यः। कर्म तावत् सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक् तेनैव भोक्तव्यम्। अनुस्मृतिरपि-य एवाहं सुप्तः, स एव प्र[ति]बुद्धोऽस्मीति। शब्दोऽपि सुषुप्तप्रबुद्धस्स(द्धं स) एवेति दर्शयति, "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति, तदाभवन्ति" इति। विधयश्च मोक्षार्थाः सुषुप्तस्य मुक्तत्वेऽनर्थकाः स्युः। न चासौ सर्वोपाधिविनिर्मुक्त आविर्भूतस्वरूपः; "तद्यत्रैतत्सुषुप्तः" इति सुषुप्तं प्रकृत्य, "नाह खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति; नो एवेमानि भूतानि। विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इति वचनात्। मुक्तस्य च, "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते .... स तत्र पर्येति जक्षत् क्रीडन् रममाणः", "स स्वराड् भवति। तस्य सर्वेषु लोकेषु कामचारो भवति", "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति सर्वज्ञत्वादि श्रूयते। अतः सुषुप्तः संसरन्नेवाऽऽयस्तसर्वकरणो ज्ञानभोगाद्यशक्तो विश्रमस्थानं परमात्मानमुपसम्पद्य आश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ ९ ॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

---

परमात्मनीति **परे**। तथाऽपि हृदय इति वचः पुरीतच्छयनेन विरुद्धम्। अतः आकाशशब्दवाच्यपुरीतदाख्यधर्म्यैक्यादविरोध इति वाच्यम्। 'हृदयवेष्टनमांसं पुरीतत्; तच्च हृदयाधारः; अतो न विरोधः' इत्यन्ये। तच्चायुक्तम्; हृदयान्नाडीभिः प्रत्यवसृप्य पुरीतति शयनस्य हृदि शयनस्य च विरोधात्। अन्ये तु स्वप्ने सान्तर्यामिकः परमात्मानमुपैतीति वदन्ति। तच्चायुक्तम्; अन्तर्यामिण ईश्वराद्व्यतिरिक्तस्य परमात्मनोऽप्रामाणिकत्वात्; 'प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुतिविरोधाच्च। अन्यत् सर्वं तुल्यम् ॥ ८.

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः** ॥ सङ्गतिः स्फुटा। किं सुषुप्तादन्यः प्रबोधे उत्तिष्ठति, उत स एवेति; किं सुषुप्तौ सकलोपाधिविनिर्मोकोऽस्ति, उत नेति; किं कर्मानुस्मृतिशब्दविधयः सकलोपाधिविनिर्मोकाभावमवगमयन्ति, नेति। न गमयन्ति चेत्, सकलोपाध्यभावात् ब्रह्मणि सम्पन्न इति अन्य उत्तिष्ठति। गमयन्ति चेत्, सर्वोपाधिविनिर्मुक्तब्रह्मसम्पत्त्यभावात् स एवोत्तिष्ठतीति स्यात्। **सकलोपाधिविनिर्मुक्तस्येति**। अत्र 'न कञ्चन पाप्मानं स्पृशति' इति श्रुतिरभिप्रेता। 'सता सोम्य तदा सम्पन्नो भवति' इति वाक्यमभिप्रेत्य **ब्रह्मणि सम्पन्नस्येत्युक्तम्**। **यद्यद्भवन्ति तदाभवन्तीति**। पूर्वं ये यथा भवन्ति ते [1]तथा भवन्तीत्यर्थः। **न चासाविति**। अत्र, 'विनाशमेवापीतो भवति' इति वाक्ये ज्ञानसङ्कोचो विवक्षितः। एतद्वचनात् सुषुप्तस्य सर्वोपाधिविनिर्मोक्षाभावः कथमित्यत्राह **मुक्तस्येति**। सुषुप्तौ सर्वप्रवृत्तिशून्यत्वज्ञानसङ्कोचावभिहितौ; मुक्तस्य तु तदुभयं विपरीतमित्यर्थः। 'न कंचन पाप्मानं स्पृशति' इति श्रुतेः कोऽर्थ इत्यत्राह **अत इति**। **ज्ञानभोगाद्यशक्त इति**। आदिशब्देनानुष्ठान-

---

1 तदाभावन्तीति श्रुतिपाठः, न तत्र तथाशब्दः। तत् आभवन्तीति छेदः। अतः यथातथाशब्दघटनेन फलितार्थकथनमिदमिति भावप्रकाशिका।

**मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३-२-१० ॥**

मुग्धमधिकृत्य चिन्त्यते। किमियं मूर्च्छा सुषुप्त्यादिष्वन्यतमावस्था, उतावस्थान्तरम् इति विशये—सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छाप्रसिद्ध्युपपत्तेरवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्थेति प्राप्ते—उच्यते मुग्धेऽर्द्धसम्पत्तिरिति। मुग्धे पुरुषे या तस्यावस्था—सा मरणायार्द्धसम्पत्तिः; कुतः—परिशेषात्। न तावत् स्वप्नजागरौ; ज्ञानाभावात्। निमित्तवैरूप्यादाकारवैरूप्याच्च न सुषुप्तिमरणे। निमित्तं हि मूर्च्छाया अभिघातादिः। पारिशेष्यात् मरणायार्द्धसंपत्तिर्मूर्च्छा। मरणं हि सर्वप्राणदेहसंबन्धोपरतिः; सूक्ष्मप्राणदेहसंबन्धावस्थितिमूर्च्छा ॥ १० ॥ इति मुग्धाधिकरणम् ॥ ४ ॥

---

मुक्तम्। 'न कञ्चन पाप्मानं स्पृशति' इत्यत्रानुष्ठानाशक्तिर्विवक्षिता। सुखदुःखानुभवादिकालुष्यराहित्यम्, विश्रान्त्यर्थं परमात्मनि संपत्तिः, कर्मानुष्ठानवैधुर्यं चाभिहितम्; न तु सर्वोपाधिविनिर्मोक्षपूर्वकब्रह्मप्राप्तिरित्यर्थः। सति संपत्तिर्नाम शरीरेन्द्रियाधिष्ठातृत्वादिव्यापारान्तरराहित्येन ब्रह्मणि स्थितिमात्रं विवक्षितम्; सदा सति संपन्नत्वादात्मस्वरूपस्य ॥

पूर्वेद्युः प्रक्रान्तस्य कर्मणोऽपरिसमाप्तस्य अपरेद्युरनुष्ठानात् स एवेति **कर्मशब्दं परे सर्वे** व्याचक्षते। तदयुक्तम्; अन्येनोपक्रान्तस्य रथनिर्माणदेवताप्रतिष्ठापनादेरन्यैः समापनदर्शनात्। मयेदं प्रक्रान्तमिति प्रत्यभिज्ञापूर्वकसमापनं विवक्षितं चेत्—अस्यानुस्मृतेः को भेदः ॥ अर्थान्तरप्रत्यभिज्ञाधारत्वं स्वविषयप्रत्यभिज्ञानं चेति वैषम्यमिति चेत्, न—अनुस्मृतिशब्देनैवोभयविधप्रतिसंधानस्य वक्तुं शक्यत्वात्। न च गोबलीवर्दन्यायेन सङ्कोचः; अर्थान्तरसम्भवेनान्यथासिद्धत्वात्। अनन्यथासिद्धं हि सङ्कोचकम् ॥ ननु कर्मविधयो विद्याविधयश्च विधिशब्देन वक्तुं शक्याः—अतस्तत्सङ्कोचे तवापि त्वदुक्तदोष इति चेन्न—कर्मशब्दस्य, तत्फलभोगतत्त्वज्ञानाभ्यां विना कर्मक्षये विनाशस्य निर्हेतुकत्वप्रसङ्गाभिप्रायत्वात्। तस्य च विधिशब्देनाभिधातुमशक्यत्वात्। एवं सति कर्मविधिवैयर्थ्यमप्यार्थो हेतुः स्यात्। अतो **विधिशब्दः** पारिशेष्याद्विद्याविधिविषय इति युक्तम् ॥

इदं निरूपणं मरणेऽपि तुल्यमित्यन्ये वदन्ति। तदयुक्तम्; शङ्काहेत्वभावात्। 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिवाक्यस्य ब्रह्मानुभवविषयत्वान्न तेन शङ्का; अनुस्मृतेः सिद्धान्तहेतुतया सूत्रितत्वात् भूमृतजातानां प्रत्यभिज्ञा(संधा)नाभावाच्च मरणविषयत्वानुपपत्तेः ॥ ९ ॥

**मुग्धेऽर्धसंपत्तिः परिशेषात् ॥** किं मूर्छा नाम जाग्रत्स्वप्नसुषुप्तीनामन्यतमावस्था, उतावस्थान्तरम्; किं लक्षणतो भेदोऽध्यवसातुं शक्यते, नेति। अशक्यत्वे तास्वन्यतमत्वम्, शक्यत्वे अवस्थान्तरत्वम्। **सुषुप्त्यादीना**मिति ॥ **आदि**शब्देन जागरस्वप्नमरणावस्था गृह्यन्ते। **प्रसिद्ध्युपपत्तेः**—मूर्छाशब्दप्रयोगोपपत्तेरित्यर्थः। उपपत्तिश्च ज्ञानलोपस्याविशेषात्। निमित्तवैरूप्यं विवृणोति **निमित्तं हीति**। **आदि**शब्देनात्यन्तानिष्टश्रवणादि अभिप्रेतम्। तर्हि मरणान्तर्गतेति शङ्कायामाकारवैरूप्यं विवृणोति **मरणं हीति**। निमित्तवैरूप्यात् सुषुप्तिव्यावृत्तिः; आकारवैरूप्यात् मरणव्यावृत्तिः। 'न सुषुप्तिमरणे' इत्युक्तेरासन्नतया सुषुप्तिमरणयोर्धीस्थत्वात् पारिशेष्यमुक्तवान्। पश्चात् मरणान्तर्भावशङ्कायामाकारवैरूप्यं विवृतम्।

## उभयलिङ्गाधिकरणम् ३-२-५

### न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३-२-११ ॥

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः। इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते। तत्र जागरस्वप्नसुषुप्ति-मुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषाः, ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि

---

सुषुप्तौ प्राणो भूयिष्ठमुपलभ्यते; मूर्छायामल्पः किञ्चिदुपलभ्यते; मृतौ न किञ्चिदपि। बाह्यवायुना भूयिष्ठमाप्यायितः सुषुप्तौ; मूर्च्छायां किञ्चिदाप्यायितः, अनाप्यायितस्य प्राणस्योपलम्भानर्हत्वात् ॥

अन्ये तु मूर्छितः किं मरणाय परमात्मानमभिसंपन्नः, उत स्वाप्ने तस्मिन् निलीनः, उत प्रकारान्तरगतः इति विचारमाचक्षते। जाग्रदादिष्वन्यतमेत्येकविचारान्तर्भावात्, पृथक्करणे फलाभावात् द्वेधा विचार उचितः। विचारस्य परमात्मपर्यन्तत्वं च विफलम्; पारिशेष्यहेतोः परमात्मपर्यन्तत्वे अतत्पर्यन्तत्वे चाविशेषात् ॥ १० ॥

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥** सङ्गतिमाह दोषेति। प्रथमपादप्रतिपाद्यं जीवस्य सदोषत्वम्। द्वितीयपादप्रतिपाद्यं (द्यं?) हि परमात्मनो निर्दोषत्वकल्याणगुणाकरत्वे। तत् कथं स्वप्नाद्यवस्थाऽस्मिन् पादे निरूप्यत इति चेत्—उच्यते। स्वप्नसुषुप्तिनिरूपणेन परमात्मनः स्वाप्न-विचित्रार्थस्रष्टृत्वं सुषुप्तिस्थानत्वं च आकारद्वयं प्रतिपादितं भवतीति परमात्मगुणसिद्धेरस्मिन् पादे तन्नि-रूपणम्। मूर्च्छादिनिरूपणं तु पूर्वपादे निरवकाशत्वात् सुषुप्तिनिरूपणसापेक्षत्वाच्चात्र कृतम्। **आर-भत** इति। सूत्रकार इति शेषः। मुग्ध्युत्क्रान्तिषु **स्थानेषु** अवस्थास्वित्यर्थः। सुषुप्त्यादिस्थानेषु स्थि-तस्य जीवशरीरकस्य परस्य जीवगता अपुरुषार्थाः किं प्रसज्यन्ते, नेति चिन्त्यते। देहादिसंबन्धस्या-पुरुषार्थहेतुत्वं किं तद्वस्तुस्वभावप्रयुक्तम्, उत कर्मविशेषकृतमिति; किं परमात्मविषयोभयलिङ्गत्व-श्रुतिरपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मनिबन्धनतामवगमयितुं प्रभवति, नेति; परस्योभय-लिङ्गत्वश्रुतिः किमन्यथासिद्धा, नेति; परस्योभयलिङ्गत्वं जीववदवस्थाभेदेन वा अतात्त्विकत्वेन वा निर्वोढुं शक्यम्, नेति। तत्रावस्थाभेदेन निर्वहणार्थं चिन्त्यते—परस्योभयलिङ्गत्वं किं तिरोधानार्हम्, नेति; नामरूपव्याकरणश्रुत्यवगतं ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं किं परस्य कर्मवश्यतामवगमयति, नेति। अतात्त्विकत्वेन निर्वाहार्थमित्थं त्रेधा चिन्त्यते—जलसूर्यादिदृष्टान्तः परस्य किमध्यास-मूलाविद्यादिदोषसम्बन्धमवगमयति, नेति; अथात आदेशो नेति नेतीति निषेधः किं प्रकृतसर्वाकार-विषयः, उत सङ्कुचित इति च; ज्ञानानन्दस्वरूपत्वव्यपदेशः किं परस्य सार्वज्ञ्यसत्यसङ्कल्पत्वादिगुणा-श्रयत्वं प्रतिक्षिपति, नेतीति (नेति?) च।

यदा ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं परस्य कर्मवश्यतामवगमयति, तदा परस्योभयलिङ्गत्वं तिरोधानार्हमवस्थाभेदेन निर्वाह्यं स्यात्। यदा जलसूर्यादिदृष्टान्तः परस्याविद्यादिदोषसंसर्गज्ञापकः, यदा च नेतिनेतीति निषेधः प्रकृतसर्वाकारविषयः, यदा च ज्ञानानन्दस्वरूपत्वव्यपदेशः सार्वज्ञ्यादि-प्रतिक्षेपकः—तदोभयलिङ्गत्वमतात्त्विकत्वेन निर्वोढुं शक्यं स्यात्। एवमुभयथानिर्वाहसंभवादुभयलिङ्गत्व-श्रुतिरन्यथासिद्धेत्यपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मकृतत्वं व्यवस्थापयितुं सा न प्रभवतीत्य-

तत्रतत्रावस्थितस्य सन्ति, नेति विचार्यते। किं युक्तम्। सन्तीति। कुतः। तत्तदवस्थशरीरेऽवस्थानात्॥ ननु 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्', 'स्थित्यदनाभ्यां च' इत्यादिषु परस्याकर्मवश्यत्वेन दोषाभाव उक्तः—तत् कथमकर्मवश्यस्य परस्य ब्रह्मणस्तत्तत्स्थानसंबन्धात् दोष उच्यते॥ इत्थमुच्यते—कर्माण्यपि देहसंबन्धमापादयन्ति अपुरुषार्थजननानि भवन्तीति 'देहयोगाद्वा' इत्यत्रोक्तम्। तच्च देहसंबन्धस्यापुरुषार्थत्वेन भवति। इतरथा कर्माण्येव दुःखं जनयिष्यन्ति; किं देहसंबन्धेन। अतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसंबन्धोऽपुरुषार्थ एव। अतः तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽप्यपुरुषार्थसंबन्धोऽवर्जनीयः। पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव। अतो यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरं च ब्रह्म, तथाऽपि "यः पृथिव्यां तिष्ठन्, य आत्मनि तिष्ठन्, यश्चक्षुषि तिष्ठन्, यो रेतसि तिष्ठन्" इत्यादिवचनात् तत्रतत्रावस्थितस्य तत्तत्सम्बन्धरूपापुरुषार्थाः सन्ति इति—

एवं प्राप्ते प्रचक्ष्महे "न स्थानतोऽपि परस्य" इति। न पृथिव्यात्मादिस्थानतोऽपि परस्य ब्रह्मणोऽपुरुषार्थगन्धः संभवति। कुतः? उभयलिङ्गं सर्वत्र हि—यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म उभयलिङ्गम्—उभयलक्षणमभिधीयते। निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः। "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः", "समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः। तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे", "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यादिश्रुतिस्मृतिभ्य उभयलक्षणं हि ब्रह्मावगतम्॥ ११

---

कर्मवश्यत्वेऽपि परस्य देहादिसंबन्धादपुरुषार्थान्वयः स्यात्। यदा तु ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं न परस्य कर्मवश्यत्वमवगमयति, तदा तस्योभयलिङ्गत्वं तिरोधानानर्हतया अवस्थाभेदेन निर्वोढुमशक्यं स्यात्। यदा जलसूर्यादिदृष्टान्तः परस्याविद्यादोषसंसर्गं न ज्ञापयति, यदा च नेति नेतीति निषेधः सङ्कुचितविषयः, यदा च ज्ञानानन्दस्वरूपत्वव्यपदेशो ज्ञातृत्वादिगुणाश्रयत्वं न प्रतिक्षिपति—तदा अतात्त्विकत्वेन निर्वोढुमशक्यं स्यात्। अत उभयलिङ्गत्वश्रुतेरुभयथाऽप्यन्यथासिद्धत्वाभावादपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मविशेषप्रयुक्तत्वं सा व्यवस्थापयितुं प्रभवतीत्यकर्मवश्यस्य परमात्मनो देहादिष्ववस्थितस्यापि नापुरुषार्थादिदोषान्वयप्रसङ्ग इति।

**तत्तदवस्थशरीर** इति। तच्छब्दो जागरादिपरः। जागरादिहेतुता शरीरस्यावस्था। पौनरुक्त्यं शङ्कते **नन्विति**। परिहरति **इत्थमिति**। कर्मणां दुःखावहत्वं देहद्वारकमस्तु; ततः किमित्यत्राह **तच्चेति**। द्वारभूतस्य साक्षादपुरुषार्थहेतुत्वं भवति; यथा राजकोपस्य वधादिहेतुत्वेऽपि तस्य खड्गप्रहारादिद्वारकत्वाद् द्वारभूतखड्गप्रहारस्य वधं प्रति साक्षाद्धेतुत्वम्—तथेहापीति। इममर्थमभिप्रेत्याह **अपुरुषार्थत्वेन भवतीति**। तदुपपादयति **इतरथेति**। तस्माद् द्वारभूतदेहसंबन्धोऽपुरुषार्थ इत्याह **अत** इति। कर्मवश्यत्वात् ऋते स्वेच्छया प्रवेशेऽप्यपुरुषार्थसम्बन्धो वस्तुस्वभावायत्तत्वादवर्जनीयः। यथाऽनन्याधीनस्य स्वयमेव असिना स्वच्छन्दतोऽपि शिरश्छेदोऽपुरुषार्थ एव, तद्वदित्याह **अतस्तदिति**। दृष्टान्तमाह **पूयेति**। अकर्मवश्यत्वेऽपि वस्तुस्वभावायत्तापुरुषार्थसंबन्धः स्यादेवेति पूर्वपक्षोत्थानमित्यर्थः।

राद्धान्तमाह **एवं प्राप्त** इति। **निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थ** इति। निर्दोषत्वश्रुतिवत् कल्याणगुणाकरत्वश्रुतिरपि दोषशङ्कानिरासोपयोगिनी; कल्याणगुणानां दोषप्रतिपक्षरूपत्वादिति भावः॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३-२-१२

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुषार्थयोगः, तथाऽन्तर्यामिणः परस्यापि स्वतोऽपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभेदादपुरुषार्थयोगोऽवर्जनीय इति चेत्—तन्न, प्रत्येकमतद्वचनात् । "यः पृथिव्यां तिष्ठन्", "य आत्मनि तिष्ठन्" इत्यादिषु प्रतिपर्यायम्, "स त आत्माऽन्तर्याम्यमृतः", इत्यन्तर्यामिणोऽमृतत्ववचनेन तत्र तत्र स्वेच्छया नियमनं कुर्वतस्तत्तत्संबन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जी[illegible] तु तत् स्वरूपं तिरोहितमिति, "पराभिध्यानात्तु तिरोहितम्" इत्यत्रोक्तम् ॥ ननु स्वेच्छया कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तापुरुषार्थसंबन्धोऽवर्जनीय इत्युक्तम् ॥ नैतद्युक्तम् । न ह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपम् । कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति । वस्तुस्वरूपप्रयुक्ते तु तादूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात् । न चैवं दृश्यते । तथा चोक्तम्, "नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च । कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः । तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते । तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्" इति । अतो जीवस्य कर्मवश्यत्वात् तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसंबन्ध एवापुरुषार्थः स्यात् । परस्य तु ब्रह्मणः स्वाधीनस्य स एव संबन्धः तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात् ॥ १२ ॥

---

**भेदादिति चेन्न प्रत्येकमतद्वचनात्** ॥ उभयलिङ्गत्वश्रुतिर्जीवस्याप्यस्ति । तत्रावस्थाभेदेन हि तन्निर्वाहः, तद्वत् परमात्मनोऽपीत्यर्थः । परिहरति **तन्नेति** । **प्रतिपर्याय**मिति । अमृतशब्दस्य सकृदुक्तिश्चेत्, नित्यत्वपरत्वं स्यात् । असकृदावृत्तत्वात् प्रतिपर्यायमुक्ततत्तद्वस्तुगतदोषविशेषसंबन्धराहित्यमेव अमृतशब्देनाभिप्रेतमित्यर्थः । जीवस्य उभयलिङ्गत्वश्रुतिसद्भावेऽपि कथं तस्यापुरुषार्थसंबन्ध इत्यत्राह **जीवस्येति** । तिरोधानादेः श्रुतिसिद्धत्वात् जीवविषयोभयलिङ्गत्वश्रुतिः सङ्कोचिता ; परमात्मनस्त्वन्याधीनतिरोधानादिश्रुत्यभावात् तद्विषयोभयलिङ्गत्वश्रुतिरसङ्कुचितवृत्तिरित्यर्थः । **नन्वि**त्यादिना चोदिते परिहरति **नैत**दिति । वस्तुस्वभावायत्तत्वे सति ह्यपुरुषार्थत्वप्रसङ्गः ; तदेव नास्तीत्याह **न हीति** । न केवलं क्षेत्रज्ञस्यैवापुरुषार्थसंबन्ध औपाधिकः, अचेतनस्याप्यपुरुषार्थत्वं न स्वभावप्रयुक्तमिति **अपि**शब्दस्य भावः । अग्न्यादिषु हेमन्तादि(न्तवसन्तादि?)कालापेक्षया सुखदुःखहेतुत्वं दृष्टम् । पुरुषभेदेन एकमेव वस्तु स्वकीयत्वपरकीयत्वबुद्ध्या सुखदुःखकरं दृष्टम् ; यथा धान्यादिषु; तद्वदित्यर्थः । वस्तुस्वभावायत्तत्वे दूषणमाह **वस्तुस्वरूपे**ति । **तादूप्ये** । सुखदुःखादिहेतुत्व इत्यर्थः । न ह्येकस्य विरुद्धस्वभावद्वयान्वय उपपन्न इति भावः । न केवलं सुखादिहेतुतायाः कर्मकृतत्वमुपपत्त्या कल्प्यम् ; कण्ठोक्तमपीत्याह **तथा चोक्त**मिति । पुरुषभेदेनैकस्य वस्तुनः सुखादिहेतुत्वमाह **नरकस्वर्गे**ति । नरकस्वर्गसंज्ञत्वं प्राप्ताप्राप्तविवेकेन पापपुण्यकृतमित्यर्थः । एकस्यैव वस्तुन एकपुरुषं प्रति कालभेदेन सुखादिहेतुत्वमाह **तदेव प्रीतय** इति । तस्मात् परतन्त्रस्य जीवस्य कर्मानुगुणभगवत्सङ्कल्पायत्तोऽपुरुषार्थसंबन्ध इत्याह **अत** इति । स्वतन्त्रस्य स्वयं स्वापुरुषार्थोपादानायोगादीश्वरस्येदं लीलोपकरणतया पुरुषार्थभूतमित्याह **परस्य त्विति** ॥ १२ ॥

## अपि चैवमेके ॥ ३-२-१३

अपि चैके शाखिन एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थं परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च स्वशब्देनाधीयते, "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति ॥ १३ ॥

अथ स्यात्—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वं चास्ति। ततश्च "ब्राह्मणो यजेत" इत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति। तत्राह—

## अरूपवदेव हि तत् प्रधानत्वात् ॥ ३-२-१४ ॥

देवादिशरीरानुप्रवेशे तेन रूपेण युक्तमप्यरूपवदेव तत्—ब्रह्म रूपरहिततुल्यमेव; जीववत् शरीरित्वनिबन्धनं कर्मवश्यत्वमस्य न विद्यत इत्यर्थः। कुतः। निर्वाहकत्वेन प्रधानत्वात्। "आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति। ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसंबन्धरहिततुल्यत्वमुच्यते। इत्थम्—यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसंबन्धः, तथा तदभावात् परस्यारूपवत्त्वम्। विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति,। तस्मादरूपतुल्यमेव परं ब्रह्म। ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥

---

**अपि चैवमेके** ॥ पूर्वसूत्रे अनिगदव्याख्याना श्रुतिरुदाहृता। अत्र स्पष्टार्थश्रुतिरुदाह्रियत इत्यभिप्रायेण **स्वशब्देने**त्युक्तम् 'द्वा सुपर्णा'इत्यत्र **पर्णशब्देन** अप्राकृतविग्रहो ज्ञानं वाऽभिधीयते ॥ १६॥

अनन्तरसूत्रमवतारयति **अथस्या**दिति। अपुरुषार्थसंबन्धः कर्माधीनोऽस्तु ; कर्मवश्यत्वं परमात्मनोऽपि संभवतीत्यर्थः ॥

**अरूपवदेव हि तत् प्रधानत्वात्** ॥ केनाकारेणारूपतुल्यत्वमित्यत्राह **जीववदिति**। वक्ष्यमाणश्रुत्यभिप्रायेणाह **निर्वाहकत्वेन प्रधानत्वादिति**। **ते यदन्तरे**त्यस्यार्थमाह **नामरूपेति**। कार्यविशेषबुभुत्सया चोदयति **नन्विति**। शरीरित्वेनानुप्रवेशो हि तन्नियमनादिकार्यार्थ एव। तत् कथं कार्यास्पर्श इत्यर्थः। यद्वा तत्तद्बुद्धिशब्दपर्यवसानं हि तत्तदनुप्रवेशकार्यम्। बुद्धिशब्दविषयत्वेन कर्मवश्यत्वं चावश्यम्भावि। तत् कथं कार्यास्पर्श इत्यर्थः। परिहरति **इत्थमिति**। सुखदुःखादिकार्यविशेषस्यास्पर्श उच्यते ; न तु नियमनादेरित्यर्थः। तर्हि, ब्राह्मणो यजेतेत्येवमादीनां कोऽर्थ इत्यत्राह **विधिनिषेधे**ति। यथा शुक्लशब्दस्य गुणिपर्यन्ताभिधानस्वारस्येऽपि घटस्य शुक्ल इति वाक्येऽर्थानुपपत्त्या शुक्लशब्दो धर्ममात्रपरः—तथा ब्राह्मणो यजेतेत्यादिष्वपि अर्थानुपपत्त्या जीवमात्रपर्यन्तत्वमाश्रीयत इत्यर्थः। तथा च, 'यस्य पृथिवी शरीरम्' इत्यादिषु दृष्टमिति भावः। यद्वा ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वेऽपि ब्राह्मणः शुक्ल इतिवत विशेषणभूतजीवमात्रे कर्मवश्यत्वान्वयात् ब्रह्मणः सद्वारकं कर्मवश्यत्वमिति। **अधिकुर्वन्ति**। **अधिकारः** तादर्थ्यबोधनम्। **तस्मादिति** सूत्रार्थमुपसंहरति। **परमप्रकृतार्थेनान्वयमाह—ततश्चेति**।

ननु च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते। अन्यत्तु सर्वज्ञत्वसत्यसङ्कल्पत्वजगत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकम्, 'नेति नेति' इत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यम्। तत् कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभयलिङ्गत्वं ब्रह्मण इति। अत आह—

**प्रकाशवच्चावैयर्थ्यात् ॥ ३-२-१५ ॥**

यथा च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यावैयर्थ्यात् प्रकाशस्वरूपत्वं ब्रह्मणोऽभ्युपगम्यते—तथा सत्यसङ्कल्पत्वसर्वज्ञत्वसर्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यावैयर्थ्यादुभयलिङ्गमेव ब्रह्म ॥ १५ ॥

**आह च तन्मात्रम् ॥ ३-२-१६ ॥**

किञ्च "सत्यं ज्ञानमनन्तम्" इत्यादि वाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति; नान्यत् सत्यसङ्कल्पत्वादिकं वाक्यान्तरावगतं निषेधति। "नेति नेति" इति च निषेधस्य विषयोऽनन्तरमेव वक्ष्यते ॥ १६ ॥

**दर्शयति चाथो अपि स्मर्यते ॥ ३-२-१७ ॥**

दर्शयति च वेदान्तवाक्यगणः कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च, "तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः। न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः", "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः", "स एको ब्रह्मण आनन्दः", "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति", "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिः। स्मर्यते च, "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्", "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्", "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते", "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः", "सर्वज्ञः सर्वकृत् सर्वशक्तिज्ञानबलर्द्धिमान्। अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान्

---

अनन्तरसूत्रं चोद्येनावतारयति **ननु चेति**। **सत्यं ज्ञान**मित्यार्थगुणनिषेधः; ज्ञानमात्रस्य सङ्कल्पाद्याश्रयत्वायोगात्। ज्ञातुरेव हि तदाश्रयत्वम्। श्रौतनिषेधमाह—**नेति नेती**ति। **प्रकाशवच्चावैयर्थ्यात्** ॥ ज्ञानस्य सर्वज्ञत्वाद्ययोगः किं व्याप्त्याऽभिधीयते? तर्हि ज्ञानं कस्यचिद्गुणभूतं दृष्टमिति ब्रह्मापि कस्यचिद् गुणभूतं स्यात् ॥ प्राधान्येन श्रुतिप्रतिपन्नत्वात् न गुणभूतमिति चेत्—तर्हि श्रुतिप्रतिपन्नत्वादेव सर्वज्ञत्वादयोऽपि स्वीक्रियन्ताम्। व्याप्तिविरोधोऽपि नास्ति गुणभूतज्ञानस्यैव ज्ञानाद्यनाश्रयत्वदर्शनात्। अतः सर्वमुपपन्नमिति भावः ॥ १५ ॥

**आह च तन्मात्रम्** ॥ **मात्र**शब्दविवक्षितमाह **नान्यदि**ति। इतरनिषेधव्यवच्छेदपरो **मात्र**शब्द इत्यर्थः ॥ १६ ॥ एवं सूत्रद्वयेन आर्थनिषेधः परिहृतः। अथ श्रौतनिषेधमपि परिहरन् आर्थनिषेधपरिहारोपयोगिप्रमाणमुपन्यस्यति **दर्शयति चाथो अपि स्मर्यते** ॥ **वेदान्तगण** इति पदेन **अथो**शब्दार्थ उक्तः। **अथो**शब्दः कार्त्स्न्यपर इत्यर्थः। 'निष्कलं निष्क्रियं....निरवद्यम्' इत्याद्यु-

वशी । क्रमतन्द्रीभयक्रोधकामादिभिरसंयुतः । निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः [1]क्रमः" इत्यादि । अतः सर्वत्रावस्थितस्यापि ब्रह्मण उभयलिङ्गत्वात् तत्तत्स्थानप्रयुक्ताः दोषाः न परं ब्रह्म स्पृशन्ति ॥१७

**अथ एव चोपमा सूर्यकादिवत् ॥ ३-२-१८ ॥**

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभाक्त्वम्, अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् परमात्मा तत्रतत्रावस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते, "आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्", "एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिषु॥१८

अत्र चोदयति—

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३-२-१९ ॥**

तुशब्दश्चोद्यं द्योतयति । अम्बुवदिति सप्तम्यन्ताद्वतिः । अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते, न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते ; न परमार्थतस्तत्रस्थाः; इह तु, "यः पृथिव्यां तिष्ठन्...योऽप्सु तिष्ठन्... य आत्मनि तिष्ठन्" इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अतः सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गस्तत्रतत्र स्थित्यभावादेव । अतो न तथात्वम्—दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥ परिहरति—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ ३-२-२० ॥**

पृथिव्यादिस्थानान्तर्भावात् स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगत-वृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते । कथमिदमवगम्यते? उभयसामञ्जस्या-देवम्—उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते । "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्", "जलाधारेष्विवांशुमान्" इति दोषवत्स्वनेकेषु वस्तुषु वस्तुतोऽवस्थितस्याकाशस्य, वस्तुतो ऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तन-मात्रे प्रतिपाद्ये समञ्जसं भवति । घटकरकादिषु यथा वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमान-मप्याकाशं वृद्धिह्रासादिदोषैर्न स्पृश्यते; यथा च जलाधारेषु विषमेषु दृश्यमानोऽंशुमांस्तद्गत-

---

पादानेन श्रौतनिषेधः परिहृतः, गुणविशेषविधाने सति सामान्यनिषेधस्य विहितव्यतिरिक्तविषयत्वात् ; गुणविशेषनिषेधे सति सामान्यनिषेधस्य तत्पर्यवसायित्वाच्च ॥ १७ ॥

**अत एव चोपमा सूर्यकादिवत्** ॥ तथाऽऽत्मैक इत्यत्र एकशब्दस्यैकस्वभाव इत्यर्थः ॥१८॥

अनन्तरसूत्रमवतारयति **अत्र चोदयतीति** । **अम्बुवदग्रहणात्तु न तथात्वम्** ॥ पृथिव्यादिषु परमार्थतः स्थित्यभ्युपगमे दार्ष्टान्तिकस्य परमात्मनो दृष्टान्ततुल्यत्वाभावात् तुल्यत्वसिद्ध्यर्थं पृथिव्यादिषु स्थितेरपरमार्थत्वमभ्युपेत्यमिति तात्पर्यम् ॥ १९ ॥

सिद्धान्तसूत्रमवतारयति **परिहरतीति** । **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च** ॥ सर्वत्र स्थितेरपरमार्थत्वे सति आकाशदृष्टान्तो न घटते ; पारमार्थ्ये तु जलसूर्यादिदृष्टान्तो न घटते । तस्मादुभयदृष्टान्तानुयाय्याकारो वृद्धिह्रासादिदोषाभावः स्वीकार्य इत्यर्थः । **एवमित्यन्तं** सूत्रांशं **समञ्जसं भवतीत्यन्तेन** भाष्येण योजयित्वा, स्मृतिवचनस्यार्थे योजयति **घटकरकादिष्वि-**

---

1 क्रमः उत्साहादिमान् 'वृत्तिसर्गतायनेषु क्रमः' इति पाणिनिसूत्रादिति श्रीविष्णुचित्तीये ।

वृद्धिह्रासादिभिर्न स्पृश्यते, तथाऽयं परमात्मा पृथिव्यादिषु नानाकारेष्वचेतनेषु चेतनेषु च स्थितस्तत्तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टः सर्वत्र वर्तमानोऽपि एक एवास्पृष्टदोषगन्धः कल्याणगुणाकर एव । एतदुक्तं भवति—यथा जलादिषु वस्तुतोऽनवस्थितस्यांशुमतो हेत्वभावाज्जलादिदोषानभिष्वङ्गः, तथा पृथिव्यादिष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावान्न दोषसंबन्ध इति । दर्शनाच्च। दृश्यते चैवं सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद् दृष्टान्तोपादानम्, सिंह इव माणवक इत्यादौ । अतः स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि न दोषसम्भवः ॥ २० ॥

अथ स्यात्—"द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तमेव च" इति प्रकृत्य समस्तं स्थूलसूक्ष्मरूपं प्रपञ्चं ब्रह्मणो रूपत्वेन परामृश्य, "तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः" इत्यादिना आकारविशेषं चाभिधाय; "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति सर्वं प्रकृतं ब्रह्मणः प्रकारम् इतिशब्देन परामृश्य तत् सर्वं प्रतिषिध्य, 'सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म; विशेषास्त्वेवंविधं स्वस्वरूपमजानता ब्रह्मणा कल्पिताः इति दर्शयति । अतः कथमुभयलिङ्गत्वं ब्रह्मण इति । अत्राह—

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३-२-२१ ॥**

नैतदुपपद्यते—यद्ब्रह्मणः प्रकृतविशेषवत्त्वं "नेति नेति" इति प्रतिषिध्यत—इति ; तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति । यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धाः, तथाऽपि तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव; इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं चाज्ञातम् । अतस्तेषामनुवादासंभवादपूर्वैवोपदिश्यन्ते । अतस्तन्निषेधो नोपपद्यते । यस्मादेवम्, तस्मात् प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधतीदं वाक्यम् । ये ब्रह्मणो विशेषाः प्रकृताः ; तद्विशिष्टतया ब्रह्मणः प्रतीयमाना इयत्ता, "नेति नेति" इति प्रतिषिध्यते । नेति नेति—नैवं नैवम्; उक्तप्रकारमात्र विशिष्टं न भवति ब्रह्म; उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता; साऽत्र इतिशब्देन परामृश्यत इत्यर्थः ।

---

त्यादिना । तर्हि जलसूर्यादिदृष्टान्तः किमर्थः, दोषाननुषङ्गे परमार्थापरमार्थयोरुभयत्राप्यनुयायी हेतुः क इत्यपेक्षायामाह **एतदुक्तं भवतीति** । देशविप्रकर्षः कालविप्रकर्षः स्वभावविप्रकर्षश्चेति त्रेधा विप्रकर्षः । अत्रैकैकविप्रकर्षोऽपि दोषास्पर्शस्य हेतुः । तत्र देशविप्रकर्षस्योदाहरणं जलसूर्यादि; स्वभावविप्रकर्षस्योदाहरणम् आकाशः । तत्र देशविप्रकर्षवत् स्वभावविप्रकर्षोऽपि दोषास्पर्शहेतुरिति दर्शयितुं दृष्टान्तद्वयोपादानमित्यर्थः । दृष्टान्तद्वयेऽपि देशकालस्वभावसंनिकर्षत्रयसमुदायाभावो दोषास्पर्शे अनुयायी हेतुः ; संनिकर्षत्रयसमुदायो दोषसस्पर्शहेतुः ॥ व्याख्येयसूत्रखण्डं व्याचष्टे **दृश्यते चेति** ॥ २० ॥

अनन्तरसूत्रशङ्कामाह **अथ स्यादिति** । **माहारजनमिति** । **महारजनं** कुसुम्भः । **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥** भेदस्य लोकसिद्धत्वेन अनूदितत्वान् तन्निषेधो न भ्रान्तजल्पितायत इत्यत्राह **न हि ब्रह्मण इति** । 'अतस्तन्निषेधो नोपपद्यत' इत्यन्तेन सूत्रस्थहिशब्दाभिप्रेतार्थ उक्तः । **प्रकृतेत्यादिसूत्रं** व्याचष्टे **ये ब्रह्मण इति** । **इतिशब्दो हि** प्रकृतप्रकारपरामर्शी; तत् कथमियत्तानिषेध इत्यत्राह **नेति नेति नैवं नैवमिति** । उक्तप्रकारमात्रविशिष्टतया ब्रह्मण इयत्ता

यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति, अतश्च प्रकृतविशेषणयोगित्वमात्रं (मात्रयोगित्वं ?) ब्रह्मणः प्रतिषेधति। ब्रवीति हि भूयो गुणजातम्, "न ह्येतस्मादिति नेत्यन्यत् परमस्ति। अथ नामधेयं सत्यस्य सत्यमिति। प्राणा वै सत्यं तेषामेष सत्यम्" इति।

अयमर्थः[1]—'इति न' इति यद्ब्रह्म प्रतिपादितम्, तस्मादेतस्मादन्यद्वस्तु परं न ह्यस्ति—ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः। तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम्। तस्य च निर्वचनम्, 'प्राणा वै सत्यं तेषामेष सत्यम्' इति। प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते। ते तावत् सत्यम्, वियदादिवत् स्वरूपान्यथाभावरूपपरिणामाभावात्। तेषामेव सत्यम्—तेभ्योऽप्येष परमपुरुषः सत्यम्। जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते; परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते। अतस्तेभ्योऽप्येष सत्यम्॥

अतश्चैवं वाक्यशेषोदितगुणजातयोगात् नेतिनेतीति ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते; अपि तु पूर्वप्रकृतेयत्तामात्रम्। अत उभयलिङ्गमेव परं ब्रह्म॥ २१॥

ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्सम्बन्धितया मूर्तामूर्तादिरूपानुवादेन तन्निषेधासंभवात् प्रकृतेयत्ताप्रतिषेध उक्तः; तदेव प्रमाणान्तरगोचरत्वं द्रढयति—

**तदव्यक्तमाह हि ॥ ३-२-२२ ॥**

तत्—ब्रह्म प्रमाणान्तरेण नैव व्यज्यते। आह हि शास्त्रम्, "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्", "न चक्षुषा गृह्यते नापि वाचा" इत्यादि॥ २२॥

हेत्वन्तरं चाह—

**अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३-२-२३ ॥**

अपि च संराधने—सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारः, नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्" "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रुतिः। स्मृतिरपि, "नाहं वेदैर्न तपसा न दानेन न चेज्यया। ... भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन!। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति।

---

कृता, सापि प्रकार एवेति सा **इति**शब्देन परामृश्यत इत्यर्थः। ये तु प्रकारनिषेधं सूत्रार्थमाहुः—तत्पक्षे त्वप्रत्ययो न घटते; एतावदित्येव वक्तव्यम्। सूत्रखण्डान्तरं व्याचष्टे **यतश्चेति**। **अनन्तर**शब्देन **तत**शब्दो व्याख्यातः। **भूय**शब्देन भूयिष्ठत्वमुच्यते। सार्थसङ्ग्रहं वाक्यमुपादत्ते **ब्रवीतिहीति**। तस्यार्थमाह **अयमर्थ** इति। **न ह्येतस्मा**दित्यत्र निषेधपरत्वं प्रतीयते, न गुणपरत्वम्; स्वरूपस्य सत्यत्वमात्रं चेति शङ्काव्यावृत्त्यर्थम् **अयमर्थ** इत्यारम्भः। **स्वरूपतो गुणतश्चोत्कृष्ट**मिति अनेन अचेतनजीवव्यावृत्तिः। उत्कर्षानुगुणं नामधेयमाह **तस्य चेति**। सूत्रार्थमुपसंहरति **अत** इति॥ २१॥

अनन्तरसूत्रमवतारयन् सङ्गतिमाह **ब्रह्मणः प्रमाणान्तरे**त्यादिना। **तदव्यक्तमाह हि** ॥ प्रधानपरत्वव्यावृत्त्यर्थम**व्यक्त**शब्दं व्याचष्टे **तदिति**॥ २२॥ **अपिसंराधने प्रत्यक्षानुमानाभ्याम्** ॥ भक्त्या साक्षात्कारोऽस्तु—ततः किं संराधनेन साक्षात्कारस्येत्यत्राह **भक्तिरूपेति**॥ २३॥

---

1 सत्यमित्यन्तश्रुतिवाक्यार्थः अयमर्थ इत्यारभ्य सत्यमित्यन्तैर्वाक्यैरुच्यते। मध्ये 'इत्यर्थः' इतीदमवान्तरवाक्यविवरणमात्रम्।

भक्तिरूपापन्नमेवोपासनं संराधनं—तस्य प्रीणनमिति पूर्वमेवोक्तम् । अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशत्, "द्वे वाव ब्रह्मणः" इत्यादिशास्त्रं ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम् ॥ २३ ॥

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३-२-२४ ॥**

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति, न मूर्तामूर्तादिविशिष्टत्वम्; यतः साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने, प्रकाशादिवत्-ज्ञानानन्दादिस्वरूपवत् मूर्तामूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्यं प्रतीयते, "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यादि । ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधनात्मके कर्मण्यभ्यासात् उपलभ्यते; तद्वच्च अभ्यस्तसंराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः॥२४

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति—

**अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३-२-२५ ॥**

अत उक्तैर्हेतुभिर्ब्रह्मणोऽनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम्। तथा हि सत्युभयलिङ्गं ब्रह्मोपपन्नं भवति ॥ २५ ॥ इति उभयलिङ्गाधिकरणम् ॥

अहिकुण्डलाधिकरणम् ३-२-६

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३-२-२६ ॥**

मूर्तामूर्तात्मकस्याचित्प्रपञ्चस्य ब्रह्मणो रूपत्वम्, "द्वे वाव ब्रह्मणो रूपे" इत्यादिश्यते ।

---

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥** मूर्तामूर्तादिप्रपञ्चविशिष्टप्रतीतिर्भ्रान्तिरिति शङ्कायां सूत्रस्योत्तरखण्डं व्याचष्टे **ब्रह्मस्वरूपभूतेति** । उपासनेन साक्षात्कृतत्वादेव हि प्रकाशानन्दादेः पारमार्थ्यम्; न तु भ्रान्तिसिद्धत्वम् । तद्वत् मूर्तामूर्तप्रपञ्चविशिष्टतादेरप्युपासनेन साक्षात्कृतत्वात् पारमार्थ्यमित्यर्थः ॥ २४ ॥

अनन्तरसूत्रमवतारयति **उक्तमिति** । **अतोऽनन्तेन तथा हि लिङ्गम् ॥** अस्मिन्नधिकरणे अवान्तरशङ्कातत्परिहारबाहुल्यात् साध्यप्रतिपत्तिव्याकुलता स्यादिति परमसाध्योपसंहारेण तन्निवृत्त्यर्थं सूत्रमभिप्रयन् व्याचष्टे **अत इति** । **तथा हि सतीति** । इयत्तानिषेधपरत्वे सति न केवलमुभयलिङ्गत्वाबाधः, अपि तूभयलिङ्गत्वमुपपादितं भवति हीत्यर्थः । **ये तूभयलिङ्गत्वं पूर्वपक्षीकुर्वन्ति**, तन्मते इदं सूत्रं न घटते—उभयलिङ्गत्वसमर्थनेनोपसंहारात ॥ [1]इति उभयलिङ्गाधिकरणम् ॥ २५ ॥

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥** अवान्तरसङ्गतिमाह **मूर्तामूर्तेति** । **अचित्प्रपञ्चस्येति** । [2]चिदचिदात्मकप्रपञ्चकथने अचित्प्रपञ्चोऽपि कथितः स्यादित्यर्थः; न त्वन्ययोगव्यवच्छेदः । सङ्गत्युपयोगित्वेनाचित्प्रपञ्चोपादानं कृतम् ।

---

1 उभयलिङ्गाधिकरणपरमतनिरासः अहिकुण्डलाधिकरणसमाप्तौ संहृत्य करिष्यते ।

2 ननु मूर्तामूर्तब्राह्मणे उपसंहारे सत्यस्येति जीवात्मनामपि कथनात् अचित्प्रपञ्चवाक्यं विशिष्य किमिति निर्दिश्य अधिकरणारम्भः क्रियत इत्यत्र, अचिन्मात्रस्य प्रकृताधिकरणविषयत्वादिति समाधिमाशय्याह **चिदचिदिति** ।

"अथात आदेशो नेति नेति" इति मूर्तामूर्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते । "न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति ब्रह्मणोऽन्यदुत्कृष्टं नास्तीति प्रतिपादितम् । तदुपपादनाय, "अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति, कदाचिदपि ज्ञानादिसङ्कोचाभावादुक्तम् । तथा 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'पतिं विश्वस्यात्मेश्वरम्', 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिश्रुतेश्चायमर्थोऽवगम्यते ।

तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्—किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन, उत प्रभाप्रभावतोरिवैकजातियोगेन, उत जीवस्येव विशेषणविशेष्यतया अंशांशिभावेनेति । इह स्थाप्यमानं विशेषणविशेष्यभावमङ्गीकृत्य, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्", "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र सूक्ष्मचिदचिद्वस्तुविशिष्टाद्ब्रह्मणः स्थूलचिदचिद्विशिष्टस्योत्पत्तिरनन्यत्वं चोक्तम् ।

किं युक्तम् । अहिकुण्डलवदिति । कुतः । उभयव्यपदेशात्, 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वम्' इति तादात्म्यव्यपदेशात् "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य" इत्यादिभेदव्यपदेशाच्च अहेः कुण्डलभावऋजुभाववत् तस्यैव ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनि ॥ २६ ॥

---

न हि रूपविधिः, किंतु निषेधार्थमनुवाद इत्यत्राह **अथात** इति । **तथा प्रधानक्षेत्रज्ञे**त्यादिना रूपत्वं विवृतं भवति ; ईश्वरत्वादिकथनान्नियाम्यत्वलक्षणविभूतित्वमेव रूपत्वमिति रूपत्वविशदीकारात् । **अहिकुण्डलन्यायेन** : एकद्रव्यावस्थाविशेषेणेत्यर्थः । **एकजातियोगस्य** खण्डादिदृष्टान्ते सत्यपि प्रभाप्रभावद्दृष्टान्तोपादानं गुणप्रधानभावाभिप्रायेण । 'अंशो नानाव्यपदेशात्' इत्यत्र जीवब्रह्मणोरंशांशिभाव उक्तः, अत्र तु अचिद्ब्रह्मणोरिति भिदेत्यभिप्रायेण **जीवस्येवे**त्युक्तम् । पौनरुक्त्यशङ्कानिरासार्थमाह **इह स्थाप्यमान**मिति । उभयव्यपदेशात् किमचिद्वस्तुनो ब्रह्मस्वरूपत्वमहिकुण्डलन्यायेन, उत प्रभातदाश्रययोरिवैकजातियोगेन; उत विशेषणविशेष्यभावरूपेणांशांशित्वेनेति ; 'महानज आत्मा' इत्यादिषु ब्रह्मण्यचिद्धर्मप्रतिषेधः कृत्स्नोपादानतादिप्रतिपादनं च विशेषणविशेष्यभावेन ब्रह्मरूपत्वं प्रपञ्चस्यावगमयति, नेति । न चेत्, पूर्वोक्तपक्षद्वयसिद्धिः । अवगमयति चेत्, तृतीयपक्षसिद्धिः । [1]अस्य पृथगधिकरणत्वे निदानं श्रोतव्यम् । **प्रकृतैतावत्त्व**मित्यादेः पूर्वाधिकरणानुप्रविष्टत्वे हेतुश्च श्रोतव्यः । [2]**ततो भूय** इति पदयोरर्थश्च श्रोतव्यः ॥

---

1 ननु शांकरादिसंमतरीत्या ऐकाधिकरण्यस्य खण्डयिष्यमाणत्वेऽपि भाष्योक्तमेव सूत्रार्थमादृत्य ऐकाधिकरण्यमिष्यताम् । यद्वा, प्रकृतैतावत्त्वसूत्रमारभ्य पृथगधिकरणं भवतु । विषयवाक्यस्यास्य तत्रैव प्रारम्भादित्यत्राह-अस्येति । समर्थोऽपि श्रुतप्रकाशनशीलत्वात् गुरुवैदुष्यप्रावण्यात् व्याख्यातविषयेऽपि पुनः श्रवणाकांक्षां स्थितां दर्शयतीव । पार्थक्यहेतुर्भाष्यार्थदर्पणे ।

2 तत इति पदेन प्रतिषेधानन्तर्यकथनात् उपर्युक्तमप्रतिषेध्यं भवति । भूय इति आधिक्यकथनात् यदपेक्षया आधिक्यम्, तदप्यस्तीति ज्ञायते । तत्र सत्यस्य सत्यमिति जीवनियन्तृत्वकथनात् प्राणपदेन जीवकथनाच्चाचिद्विशिष्टचिन्नियन्तृत्वलाभात् सर्वस्यापि सत्यत्वमवगम्यते । चक्षुषश्चक्षुरित्यस्येव वा सत्यस्य सत्यमित्यस्यार्थः । अतः रूपस्थापकत्वादस्य न-रूपनिषेधार्थतया पृथगधिकरणत्वम् । अत्र सूक्ष्मतया दर्शितत्वात् मतखण्डनावसरे एतद्विस्तरः ।

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३-२-२७ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयः, ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुः । अतो यथा तेजस्त्वेन प्रभातदाश्रययोरपि तादात्म्यम्, एवमचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्यर्थः ॥ २७ ॥

## पूर्ववद्वा ॥ ३-२-२८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । एकस्यैव द्रव्यस्यावस्थाविशेषयोगे[ऽपि] ब्रह्मस्वरूपस्यैवाचिद्द्रव्यस्वरूपत्वादुक्तदोषादनिर्मोक्षः । अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्म[त्व]जातियोगमात्रम्; एवं तर्ह्यश्वत्वगोत्ववत् ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः । पूर्ववदेव । 'अंशो नानाव्यपदेशात्', 'प्रकाशादिवत्तु नैवं परः' इति जीववत् पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम् । विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः; विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः; ब्रह्मणो निर्दोषत्वं च रक्षितम् । तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः प्रति अपृथक्सिद्धिलक्षणविशेषणतया यथा अंशत्वम्, तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रति अंशत्वम् ॥ २८ ॥

## प्रतिषेधाच्च ॥ ३-२-२९ ॥

"स वा एष महानज आत्माऽजरोऽमरः", "नास्य जरयैतज्जीर्यति" इत्यादिभिर्ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः । अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्मेति कारणात्कार्यस्यानन्यत्वं कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम्; ब्रह्मणो निर्दोषत्वं च रक्षितम् । ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् ॥ २९ ॥ इति अहिकुण्डलाधिकरणम् ॥

---

**प्रकाशाश्रयवद्वा तेजस्त्वात्** ॥ **पूर्ववद्वा** ॥ **पूर्ववदि**त्युक्ते प्रथमपक्षपरिग्रहशङ्का स्यादिति तद्व्यावृत्त्यर्थं **पक्षद्वयव्यावृत्त्यर्थ** इत्युक्तम् । **उक्तदोषात्** । अपरिणामित्वभेदश्रुतिबाधादित्यर्थः । **अथे**त्यादि । चिदचिदीश्वरेषु ब्रह्मणि च ब्रह्मत्वं नाम जातिः किमनुवर्तते, उत ब्रह्मैव जातिश्चिदचिदीश्वरेष्वनुवर्तेत इति विकल्पः । प्रथमे पक्षे ईश्वरवाचिपदैर्जगत्सामानाधिकरण्यं न स्यात् । जातिवाचिपदैर्हि सामानाधिकरण्यम्; न व्यक्तिवाचिभिः । न हि खण्डो गौरितिवत् खण्डो मुण्ड इति सामानाधिकरण्यम् । द्वितीये जगत्कारणत्वतदाधारत्वसर्वज्ञत्वादिगुणाश्रयत्वादि नोपपद्यत इत्यर्थः । **सकलश्रुतिस्मृतिव्यवहारविरोध** इति । अनेन शिरोद्वयेऽपि दूषणद्वयं विवक्षितम् । **ब्रह्मजातियोगमात्र**मिति पाठे ब्रह्मत्वं जातिरिति विकल्पशिरोऽभिप्रेतं स्यात् । [1]**ब्रह्मत्वजातियोगमात्र**मिति पाठे शिरोन्तरमभिप्रेतं स्यात् । **ब्रह्मापी**त्यत्र भावप्रधानो निर्देशः स्यात् । पाठो निरीक्ष्यः । **पूर्ववदेवे**त्यादि । अपृथक्सिद्धविशेषणतया अंशत्वं किं दृष्टमित्यत्राह **तदेव**मिति ॥ २८ ॥

**प्रतिषेधाच्च २९** ॥ स्वरूपपरिणामाभावे कथं कारणात्कार्यस्यानन्यत्वमित्यादय उपपद्यन्त इत्यत्राह **अतः सूक्ष्मेति** । **ज्ञाततेत्यादी**ति आदिशब्देन समानाधिकरणशब्दादिर्विवक्षितः ।

---

1 नन्वचिद्ब्रह्मणोरित्युक्त्या ब्रह्मत्वेति पाठ एव युक्त इत्यत्राह-ब्रह्मत्वेति । निरीक्ष्यः । शिरोद्वयतद्दोषप्रदर्शी शुद्धःपाठः स्यादिति ।

**परे तु—न स्थानतः** इत्यादिसूत्राणि व्याचक्षाणा एवमधिकरणं वर्णयन्ति—काश्चित् 'सर्वकर्मा सर्वकामः' इत्यादिश्रुतयः सविशेषलिङ्गाः, अस्थूलमित्यादयश्च निर्विशेषलिङ्गाः। तासु किमुभयलिङ्गं ब्रह्म प्रतिपत्तव्यम्, उतान्यतरलिङ्गम्। अन्यतरपरिग्रहे च किं सविशेषम्, उत निर्विशेषमिति विचारः। श्रुतिबलादुभयलिङ्गे प्राप्ते, विरोधात् स्वतस्तावत् तदुभयलिङ्गत्वमयुक्तम्। पृथिव्यादिस्थानरूपादुपाधितोऽपि नोभयरूपत्वम्; स्वतो निर्विशेषस्याग्निसंपर्कालोहित्यवत् सविशेषत्वोत्पत्तौ निर्विकारत्वश्रुतिकोपात्। साकारत्वं प्रतीतिमात्रसिद्धमिति नोभयलिङ्गत्वम्। अन्यतरलिङ्गपरिग्रहे निर्विशेषमेव प्रतिपत्तव्यम्। सर्वत्र अशब्दमस्पर्शमित्यादिषु निर्विशेषं हि ब्रह्मोपदिश्यते। **भेदादिति** चेदिति। ननु प्रतिविद्यं ब्रह्मणश्चतुष्पात्त्ववामनीत्वभामनीत्वत्रैलोक्यरूपवत्त्वाद्याकारभेदोपदेशादुभयलिङ्गत्वमविरुद्धमभ्युपगन्तव्यम्; अन्यथा सविशेषत्वश्रुतेर्निर्विषयत्वप्रसङ्गादिति चेत्—न; मधुविद्यायां 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषः, अयमेव स योऽयमात्मा' इति प्रत्युपाधिभेदमभेदवचनात्। **अपि च एवमेके** शाखिनो भेदनिन्दापूर्वकमभेदमामनन्ति, "नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति" इत्यादिष्विति। साकारनिराकारश्रुत्योः को विशेषः, येन निराकारमेव ब्रह्म अङ्गीकार्यम्; तत्राह **अरूपवदि**ति। रूपादिरहितमेव ब्रह्म, अस्थूलमित्यादिवाक्यानां निष्प्रपञ्चब्रह्मतत्त्वप्रधानत्वात्। सति विरोधे, तत्प्रधानानि अतत्प्रधानेभ्यो बलीयांसीति। तर्हि साकारश्रुतेः का गतिरित्यत्राह **प्रकाशवच्चे**ति। व्यापकोऽपि सूर्यादिप्रकाशोऽङ्गुल्याद्युपाधिसंबन्धादृजुवक्रादिभावमापद्यते; एवं ब्रह्माप्युपाधिना सविशेषमिव भवति। तदुपदेशस्तथोपासनार्थ इति साकारश्रुत्यवैयर्थ्यम्। तर्हि निष्प्रपञ्चं ब्रह्म कीदृशम्; तत्राह **आह चे**ति। 'स यथा सैन्धवघन' इत्यादिश्रुतिः चैतन्यमात्रं ब्रह्म निर्विशेषमाह। **दर्शयति चे**ति। 'अथात आदेशो नेति नेति', 'अन्यदेव तद्विदितात्', 'न सत् तन्नासदुच्यते' इत्यन्यव्यावृत्तिमुखेन बोधनं निर्विशेषत्वगमकम्। अन्यथा स्वगतविशेषप्रतिपादनोपपत्तावितरव्यावृत्त्यसामञ्जस्यं स्यात्। विशिष्टदृष्टान्तोपादानाच्च निर्विशेषत्वमुच्यते **अत एव चोपमे**ति। **अम्बुवत्** इति मूर्तत्वविप्रकृष्टदेशत्वाभावान्न सूर्यादितुल्यत्वमिति शङ्का। **वृद्धिह्रासभाक्त्व**मिति। सर्वसारूप्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेदः। अत उपाध्यन्तर्भावात् वृद्धिह्रासादीन् सूर्यादिवद् ब्रह्म भजते। अतो दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यमिति। **दर्शनाच्चे**ति पृथक् सूत्रम्। उपाधिष्वन्वयादन्तर्भावं दर्शयति, 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' इति श्रुतिः। अतो नोभयलिङ्गम्, न च सविशेषलिङ्गमिति।

**प्रकृतैतावात्त्व**मित्यादि **प्रतिषेधाच्चे**त्यन्तमेकमधिकरणान्तरं वर्णयन्ति। 'द्वे वाव ब्रह्मणः' इत्यादिश्रुतिर्विषयः। रूपद्वयं रूपवद् ब्रह्म च प्रकृतत्वाविशेषात् निषेधतीति; यद्वा ब्रह्मैव निषेधति; तस्यानुपलभ्यमानस्य निषेधे प्रमाणाविरोधादिति प्राप्ते—प्रकृतं रूपद्वयं निषिध्यते। अन्यथा, महता प्रबन्धेन प्रतिपादितस्य ब्रह्मणो निषेधायोगात्, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'। न चानेनैव न्यायेन रूपद्वयनिषेधानुपपत्तिः; प्रतिषेधार्थं लोकसिद्धस्यानूदितत्वात्। अतो ब्रह्म परिशिष्यते। ब्रवीति च

भूयः, [1]न ह्येतस्मादिति नेति; अन्यत् परमस्ति' इति अन्यस्य नास्तित्वम् । नेतिनेतीति वाक्यस्य ब्रह्मव्यतिरिक्तनास्तितापरत्वेन व्याख्यानरूपमिदं वाक्यम् । यद्वा निषेधरूपादादेशादन्यदादेशनं नास्तीत्यर्थः । तदा **भूयो ब्रवीतीति** सूत्रखण्डम्; अथ नामधेयम्' इति वाक्यविषयम् । अस्ति चेत् ब्रह्म, कस्मान्न गृह्यते; अत्राह—**तदव्यक्तमाह हीति** । 'न चक्षुषा गृह्यते' इत्यादिवाक्यविषयमिदम् । गृह्यते चेत्याह **अपि संराधन** इति । **संराधनं** भक्तिध्यानादि । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः', 'योगिनस्तं प्रपश्यन्ति' इत्यादिर्विषयः । संराध्यसंराधकभावेन जीवब्रह्मभेदप्रसङ्गव्युदासकं **प्रकाशादिवदिति** सूत्रम् । **कर्म**शब्दोऽङ्गुल्याद्युपाधिपरः । तेन सूर्यादिप्रकाशः सविशेष इव भाति; न तु वस्तुतस्तथाभूतः । ब्रह्मणोऽपि सूर्यप्र**काशाद्यवैशेष्यम्** । [2]तत् तुल्यत्वम्; जीवप्राज्ञयोरभेदस्याभ्यासेन प्रतिपादनात् । **अत** इति । अभेदस्य स्वाभाविकत्वात् भेदस्याविद्यकत्वाद**नन्तेन**—प्राज्ञेनैकतां गच्छति जीवः । **तथा हि**, ब्रह्मैव भवतीत्यादिलिङ्गम् । अस्मिन्नेव संराध्यसंराधकभावे मतान्तरं स्वमतविशुद्ध्यर्थमुपन्यस्यति—**उभयव्यपदेशादिति** । अवस्थाभेदादंशभेदाच्चाविरोधः सूत्रद्वयोक्तः । **पूर्ववद्वेति** । 'प्रकाशादिवच्चावैशेष्यम्' इति सूत्रार्थसाम्यमर्थः । बन्धपारमार्थ्ये ज्ञानानिवर्त्यतया मोक्षशास्त्रवैयर्थ्यात्, भेदस्तु लोकसिद्धोऽनूदित इति तात्पर्यम् । **प्रतिषेधाच्च** । 'अथात आदेशो नेति नेति' इत्यादिभिः प्रपञ्चप्रतिषेधाच्च निष्प्रपञ्चब्रह्ममात्रपरिशेषणात् यथोक्तः सिद्धान्त इति ।

अत्र ब्रूमः । सकलविशेषमिथ्यात्वमारम्भणाधिकरणसिद्धं भवताम् । यदि श्रुतिविप्रतिपत्तिशमनार्थमारम्भः, सोऽपि त्वदुदाहृतवाक्येषु संशयाभावादनुपपन्नः । न हि 'सर्वकर्मा सर्वकामः', 'अस्थूलमनणु' इत्यादिनिषेधानां विषयभेदेनाविरोधात् प्राबल्यदौर्बल्यसंशयः । यदि निर्गुणमित्यादिवाक्यैर्विरोधः, तर्हि सामान्यनिषेधस्य विहितेतरविषयत्वादपच्छेदन्यायाविषयत्वाच्च न ब्रह्मगुणमिथ्यात्वमिति प्रागेवोपपादितत्वात् सिद्धान्तोऽनुपपन्नः । 'सर्वरसः' 'अगन्धमरसम्' इत्यादिष्वप्येकस्यैकत्र विधिनिषेधविषयत्वायोगादेव विधेयतया निषेध्यतया च प्रतिपन्नानां गन्धरसादीनाम् अर्थान्तरत्वमङ्गीकार्यम् । न च निषेधार्थं गुणानुवादः; गन्धरसादीनां परमात्मधर्मत्वेन लोकप्रसिद्ध्यभावात् । न चोपासनार्थमारोपः सार्वज्ञ्यादीनाम्; स्वरूपपरवाक्यसिद्धत्वात् । उपासनप्रकरणानधीतानामप्युपासनार्थत्वे जीवब्रह्मैक्यस्याप्युपासनार्थत्वप्रसङ्गात् । प्रकरणाधीतानामपि, प्रकरणस्थतामात्रेणोपासनाशेषत्वे सति, ऐक्यस्यापि 'आत्मेत्येवोपासीत' इत्युपासनप्रकरणस्थस्य मिथ्यात्वप्रसङ्गाच्च । किञ्च मिथ्यात्वपक्षे श्रुतिविरोधश्च न शमितः स्यात्; किन्तु विरोधादन्यतराप्रामाण्यमेवोक्तं स्यात्; यथार्थविषयत्वाभावात् । किञ्च सूत्रशैलीविरुद्धश्च सिद्धान्तः, 'अदृश्यत्वादिगुणकः', 'सुखविशिष्टाभिधानादेव च' इति अदृश्यत्वादीनामपि गुणत्वं सुखादिवाचिशब्दानां तद्विशिष्टविषयत्वं च वदन् सूत्रकारः कथं निर्विशेषत्वं

---

1 नह्येतस्मात्—ब्रह्मणोऽन्यन्नास्ति हि । इतिनेति । अयमेव इति नेत्यस्यार्थः । अन्यत् परमस्ति —ब्रह्म त्वप्रतिषिद्धमस्ति इति प्रथमयोजना ।

2 तदिति पृथक्पदम् । एवञ्च नानुपपत्तिः ।

सिद्धान्तयेत् । किञ्च 'धर्मोक्तेः', 'सर्वधर्मोपपत्तेश्च' इति धर्मविशेषैः सार्वज्ञ्यादिभिः परमात्मत्वं प्रसाध्य कथं साधकधर्माणां मिथ्यात्वं वदेत् । न हि धूमाभावेऽग्निवत् साधकाभावे साध्यं सिध्येत् ।

किञ्च सूत्रयोजनाऽपि क्लिष्टतरा । लिङ्गशब्दस्तावत् ज्ञाप्यस्वरूपातिरिक्तज्ञापकपरः प्रसिद्धः । निर्विशेषत्वधर्मानभ्युपगमात् तस्य लिङ्गशब्दवाच्यान्तर्गतत्वमयुक्तम् । किञ्च उभयलिङ्गं नेत्येतावदुक्तम्, अन्यतरपरिग्रहे सविशेषं न भवतीति त्वशाब्दम् । 'सर्वत्र हि' इत्युक्ते निर्विशेषत्वप्रतिपादनादिति चाध्याहार्यम् । सविशेषत्वप्रतिपादनादिति चाध्याहारे को निवारकः ॥ प्रतिज्ञानुगुण्याभाव इति चेन्न; अन्यतरपरिग्रहे सविशेषमिति प्रतिज्ञाया अध्याहर्तुं शक्यत्वात् ॥ हेत्वानुगुण्याभावान्नेति चेन्न; अन्योन्याश्रयस्य स्फुटत्वात् । उपरितनसूत्रानुगुण्यं न भवत्पक्ष इति वक्ष्यामः ॥ अथ स्यात्—साकारत्वमेकं लिङ्गम्, साकारनिराकारत्वमप्येकमिति तदुभयमुभयशब्दवाच्यम् । अतो न द्वितीयप्रतिज्ञाध्याहारः; प्रतिज्ञानुगुणहेतुसिद्धौ च नान्योन्याश्रय इति ॥ तदयुक्तम्; सूत्रास्वारस्यात्, साकारनिराकारत्वयोः परस्परविरुद्धयोरेकत्वेन निर्देशस्तावत् क्लिष्टः । द्वयोरन्यतरविवक्षायां नियामकविशेषाश्रवणेऽपि स्वेच्छया कस्यचिद्विवक्षितत्वकथनमपि क्लिष्टम् । प्रत्युपाधिभेदमतद्वचनत्वं च तदुदाहृतश्रुतौ नास्ति; 'तेजोमयोऽमृतमयः पुरुषः' इति तेजस्वित्वनिर्विकारत्वानन्दरूपत्वादिबहुविशेषप्रतीतेः । आत्मशब्दश्च देहप्रतिसम्बन्धिनि व्यापिनि नियन्तरि धारके शेषिणि रूढ इति, सोऽपि निर्विशेषत्वविरोधी । यतो निर्विशेषत्वप्रतिपादनमयुक्तम्, अत एव 'अपि चैवमेके' इति सूत्रं च न भेदव्युदासकश्रुतिविषयम् । श्रुतिषु च न प्रामाणिकभेदव्युदास इत्युक्तम् । 'अरूपवत्' इत्यत्र वच्छब्दवैयर्थ्यम् । अतत्प्रधानेभ्यस्तत्प्रधानप्राबल्यनयोऽप्यत्र निर्विषयः, साकारश्रुतीनामतत्प्रधानत्वाभावात् । तासां च तत्प्रधानत्वमनुवादत्वोपासनार्थत्वव्युदासात् तात्पर्यलिङ्गावगमाच्च स्थितम् । उपासनशेषत्वव्युदासादेव 'प्रकाशवत्' इति सूत्रे भवदुक्तावैयर्थ्यमप्ययुक्तम् । प्रकाशस्यौपाधिकाकारयोगे दृष्टान्तत्वात् अवैयर्थ्यसमर्थने दृष्टान्ततयाऽन्वयो न घटते । प्रकाशतुल्यं ब्रह्म; अतः साकारश्रुतिरौपाधिकाकारोपासनार्था; तस्मादवैयर्थ्यमिति वाक्यभेदोऽध्याहारश्च । 'आह च' इति सूत्रं च न निर्विशेषसमर्पणक्षमम् । विषयवाक्ये ज्ञानघनत्वावधारणस्य रसघनत्वावधारणवत् प्रामाणिकविशेषान्तरप्रतिक्षेपासमर्थत्वात् । निर्विशेषत्वप्रतिपादनायोगादेव 'दर्शयति च' इति सूत्रं च न निर्विशेषार्थश्रुतिविषयम् । श्रुतौ चान्यव्यावृत्तिमुखेन प्रतिपादनं न निर्विशेषत्वं गमयेत्, व्यावृत्तिमात्रस्य शाब्दत्वात् । स्वगतविशेषप्रतिपादने संभवत्यपि नेतिनेतीत्यन्यव्यावृत्तिकथनं निर्विशेषाभिप्रायमिति चेत्—न; व्यावर्त्यभूतान्यगतविशेषविरहाभिप्रायतया तदुपपत्तौ प्रामाणिकविशेषबाधकत्वकल्पनायोगात् । अत एव सूर्यादिदृष्टान्तोपन्यासोऽपि निर्दोषतयोपपद्यमानो न प्रामाणिकविशेषबाधकः । अम्बुवदित्यादिसूत्रद्वयस्य दृष्टान्तदार्ष्टान्तिकयोः सर्वथासारूप्यशङ्कातद्व्युदासमात्रपरत्वमतिमन्दम्; तयोः सर्वथासारूप्यविरहस्य आस्त्रीबालं प्रसिद्धत्वात् । अवश्यनिरसनीयशङ्कान्तरतत्परिहारपरत्वस्य स्वारसिकत्वाच्च परोक्तार्थपरत्वमयुक्तम् । दर्शनाच्चेति पृथक् सूत्रं कृत्वा तस्य देहाद्युपाध्यन्तरानुप्रवेशदर्शनादिति व्याख्यानमप्यफलम्; व्यापकस्य परमात्मनः सर्वत्रावस्थाने 'गुहां प्रविष्टौ' इत्यादिषु बहुश उक्ते, विप्रतिपत्त्यभावात् ।

प्रकृतैतावत्त्वमित्यादेः पृथगधिकरणत्वमप्ययुक्तम्, तादर्थ्याव्यवधानाभ्यां तदनुपपत्तेः। हिशब्देन पूर्वप्रतिज्ञोपपादकत्वावगमात्। 'उभयलिङ्गं सर्वत्र हि', 'तथा हि लिङ्गम्' इति स्वतः सूत्राणामेकोपक्रमोपसंहारत्वप्रतीतेश्च। निषेध्योपस्थापकस्य **इति**शब्दस्य प्रकारवाचित्वात् प्रकारिणो ब्रह्मणो निषेध्यत्वशङ्का च नोदेति। ततश्च रूपद्वयं प्रतिषेध्यं चेत्—**त्व**प्रत्ययवैयर्थ्यम्। यस्तु ब्रह्मप्रतिषेधबाधकत्वेन 'प्रक्षालनाद्धि पङ्कस्य' इति न्याय उक्तः, स रूपद्वयप्रतिषेधमपि निरुणद्धि॥ रूपोक्तिर्लोकसिद्धानुवाद इति न दोष इत्यपि दुरुक्तम्; प्रपञ्चस्य ब्रह्मकार्यत्वतद्व्याप्यत्वतन्नियाम्यत्वतद्धार्यत्वादिमुखेन ब्रह्मरूपतायाः प्रमाणान्तरप्रसिध्द्यभावेनानुवाद्यत्वायोगात्। अतस्त्वदुक्तन्यायस्तवैव बाधकः। 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति' इति वाक्यं च न ब्रह्मव्यतिरिक्तं निषेधति, नापि प्रतिषेधरूपादेशादन्यदादेशनं प्रतिषेधति; **परान्य**शब्दयोरन्यतरस्य वैयर्थ्यात्। अप्रतिषेधरूपाणां बहूनामुपदेशदर्शनाच्च। अत उत्कृष्टान्तरनिषेधस्तस्यार्थः। वेद्यत्वमनभ्युपगच्छता अनन्तरसूत्रद्वयस्याग्राह्यत्वग्राह्मत्वपरस्याविरोधो दुर्वचः। यतो जीवब्रह्मणोर्व्याप्यव्यापकत्वादिलक्षणोऽन्योन्यभेदः शास्त्रैकगम्यो न प्रतिषेध्यः। अत एव च, प्रकाशादिवच्चेति सूत्रस्य च संराध्यसंराधकभावनिमित्तभेदव्युदासपरत्वमयुक्तम्। अक्षराननुगुणत्वाच्च। कर्मशब्दस्याङ्गुल्याद्युपाधिवाचित्वं क्लिष्टम्। कर्मण्यभ्यासादित्यन्वयस्वारस्यं च त्यक्तम्। अभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यत इति निरङ्कुशाध्याहारसाम्राज्यम्; वाक्यभेदश्च। तदुभयरहितनिर्वाहे संभवति तदुभयाश्रयणमयुक्तम्। यतः पूर्वसूत्राणां त्वदुक्तार्थपरत्वानुपपत्तिः, अत एव 'अतोऽनन्तेन' इति सूत्रं च न ब्रह्मणो जीवैक्यापत्तिविषयम्। लिङ्गशब्दस्य श्रुतिवाचित्वं चायुक्तम्, प्रत्यक्षानुमानाभ्यामिति श्रुतेः प्रत्यक्षशब्दनिर्दिष्टत्वात्; लिङ्गशब्दस्य चिह्नपर्यायत्वाच्च। उभयव्यपदेशादिति सूत्रद्वयस्य संराध्यसंराधकभावे मतान्तरोपन्यासपरत्वमप्ययुक्तम्। प्रकाशादिवदिति सूत्रस्य तत्प्रयुक्तजीवभेदव्युदासकत्वाभावात्। प्रकाशाश्रयवद्वेति सूत्रं न ब्रह्मैकदेशत्वपरम्, तेजस्त्वादिति जातियोगस्य हेतुतया प्रतिपादनात्। प्रकाशादिवदिति सूत्रस्य परोक्तार्थपरत्वाभावादेव पूर्ववद्वेति सूत्रं च न तदर्थातिदेशपरम्। ननु 'अंशो नाना' इति सूत्रस्य पादान्तरस्थतया विप्रकर्षान्न तत्परामर्श इति चेन्न; उभयव्यपदेशनिर्वहणार्थातिदेशसूत्रेण उभयनिर्वाहपरसूत्रार्थस्यैव प्रत्यभिज्ञापितत्वात्। 'अल्पश्रुतेरिति चेत् तदुक्तम्' इत्यनेन हि पादान्तरस्थमपि अर्भकौकस्त्वादिति सूत्रं प्रत्यभिज्ञाप्यते। एवं निर्विशेषप्रतिपादनानुपपत्तेरेव, प्रतिषेधाच्चेति सूत्रमपि न भेदनिषेधपरम्, किन्तु ब्रह्मण्यचिद्धर्मप्रतिषेधवाक्यविषयमिति युक्तम्।

**अपरे तु**—प्रतिषेधाच्चेत्यन्तं सूत्रगणमेकाधिकरणं कुर्वन्ति; निर्गुणविद्यासु किं कारणात्मना निराकारं कार्यप्रपञ्चरूपेण साकारं च ब्रह्मोपास्यम्, उत निराकारमेवेति विचार्य—नोभयलिङ्गमुपास्यम्, अस्थूलमिति प्रपञ्चाकारस्य निवर्तितत्वात्, सृष्टिवाक्यानां निराकारप्रतिपत्तावैदम्पर्यादिति सिद्धान्तयन्ति, 'सर्वाणि च भूतानि सर्वे एवात्मानः समर्पिताः' इति नाभिस्थानीये ब्रह्मणि जीवानामरस्थानीयताश्रवणेन भेदमाशङ्क्य परिहरति **भेदादिति चेदिति**। कारणात्मकं सल्लक्षणमेव ब्रह्मोपास्यं चेत्—न बोधलक्षणमुपास्यं स्यादित्याशङ्क्याह **प्रकाशवच्चावैयर्थ्यादिति**। **प्रकाशः** अवभासोऽस्तीति **प्रकाशवत्**। सत्यज्ञानादिवाक्यावैयर्थ्यात्। भेदस्यौपाधिकत्वे दृष्टान्तः **सूर्यकादिवदिति**। **प्रकाशा-**

**द्विवचावैशेष्य**मिति च तदुच्यत इति योजयन्ति । तदयुक्तम् ; पादसङ्गत्यभावात् । विद्याविशेषेषु उपास्याकारनिरूपणं हि तृतीयपादकृत्यम् । नोभयलिङ्गं निर्गुणविद्यासूपास्यमित्यध्याहारबाहुल्यं च । तत्रान्योन्याश्रयादीन्यनुपपत्त्यन्तराणि पूर्ववत् । भेदशब्दस्य साधारणत्वेऽपि स्वापाद्यवस्थानां प्रकृतत्वात्, अवस्थाभेदादिति व्याख्यानमुचितम् । सल्लक्षणमेवोपास्यमित्यसमर्थितत्वादेव, 'न बोधलक्षणम्' इति शङ्काऽनुचिता । **आनन्दादयः प्रधानस्ये**ति ज्ञानानन्दादीनां सर्वब्रह्मविद्यास्वनुवृत्तेर्वक्ष्यमाणत्वाच्च नात्र वक्तव्यता । प्राप्स्यदर्थवचन[1]मपि हि पुनरुक्तमिति नीतिविदः ।

**अन्ये तु**—'न स्थानतः' इत्यारभ्य 'प्रतिषेधाच्च'इत्येवमन्तमधिकरणचतुष्टयं वर्णयन्ति । कार्यावस्थाः निरूपिताः; कारणावस्था निरूप्यन्ते । **उभयलिङ्गं** नामरूपात्मकम् । रूपं खण्डत्वादि; नाम शब्दप्रवृत्तिहेतुर्गोत्वादि । अध्यात्ममधिदैवं चासंख्येषु स्थानेष्वन्तःकरणेषु बहिश्च स्थितस्येश्वरस्य स्थानतः स्वरूपपरिणामेन वा स्वरूपभेदोऽस्ति, नेति विचारः । 'य एषोऽन्तरादित्ये', 'य एषोऽन्तरक्षिणि' इति स्थानभेदात्, 'तावन्योन्यं प्रतिष्ठितौ' इति संबन्धामननात्, 'एतान्यष्टावायतनानि अष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरूह्य प्रत्यूह्यात्यक्रामत् तं त्वौपनिषदं पुरुषं पृच्छामि' इति संख्यामननात्, 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रवणात्, प्रलयकालेऽपि जीवानामिव सूक्ष्मभेदोपपत्तेः, 'भोक्ता भोग्यं प्रेरितारम्' इतिवत्, 'एकस्तथा सर्वभूतान्तरात्मा' इत्यादिष्वेकत्वव्यपदेशस्य जात्यभिप्रायत्वोपपत्तेश्चेश्वरस्य स्थानिनः स्वरूपभेदोऽस्तीति प्राप्ते—नेत्युच्यते । सर्वत्र हि ब्रह्मानुकृष्य प्रतिपाद्यते,"एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः,एतं महाव्रते छन्दोगाः, एतमस्यामेतं दिवि एतं वायावेतमाकाशे एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेषु । एतमेव ब्रह्मेत्याचक्षते" इति । ननु "ये चामुष्मात् पराञ्चो लोकाः, तेषां चेष्टे देवकामानां च', 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च', 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्', 'तस्योपनिषदहरित्यधिदैवतम्', 'तस्योपनिषदहमित्यध्यात्मम्' इति ऐश्वर्यनामरूपभेदात्स्वरूपभेद इति चेत्---न, [2]मधुविद्यावाक्ये **प्रत्येकं** प्रतिस्थान**मतद्वचनात्**---एकत्ववचनात् । **अपि चैवमेके** शाखिनस्तयोः स्थानद्वयवर्तिनोः परमभेदमधीयते, 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युम्' इत्यादिना । सतीष्वप्युभयीषु श्रुतिषु हिरण्यश्मश्रुत्वादिरहितमेव परस्वरूपम् । तद्धि **प्रधानं** नित्यम् ; इतरत्तु कार्यार्थमागन्तुकमिति । अतो न परमात्मनि स्वरूपभेद इति ।

सोऽयमारम्भः कृतकरत्वनिरस्तः; अन्तर्याम्यधिकरणेन सिद्धसाध्यत्वात् । तत्र हि—'य इमं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इति तत्रतत्रावस्थितस्यैकतया परमात्मत्वं दर्शितम् । न च वाच्यम्—अन्तर्यामिणः परमात्मत्वमात्रं तत्र सिद्धम् ; न तु पृथिव्यादिष्ववस्थितस्यैकत्वमिति ; एकतया विना परत्वासिद्धेः। एकैकस्थानावच्छिन्नमैश्वर्यं हि जीवेष्वपि सम्भवतीति तस्येश्वरत्वानि-

---

1 वचनमिति द्वितीया । अतो हिशब्दः । वचनं पुनरुक्तत्वेनाहुरिति क्रियाध्याहारोऽस्त्येव ।

2 मधुविद्यापदं बृहदारण्यकस्थ मधुब्राह्मण (4. 5.) परमिह ; न तु छान्दोग्य (3.1.) मधुविद्यापरम् ।

र्णय एव स्यात् ॥ तत्तत्स्थानावच्छिन्नैश्वर्यभेदसम्बन्धसंख्यादिहेतव इह परिहर्तव्या इति चेन्न; परिहारादर्शनात्। न हि तत्परिहार एषु सूत्रेषु कण्ठोक्तः ॥ साध्यौपयिकः कृत्स्नोऽप्यर्थ आभिप्रायिको व्याख्येय इति चेत्—तर्हि तत्परिहाराः सर्वे तत्रतत्र समन्वयलक्षणाधिकरणेष्वेवाभिप्रेततया व्याख्यातव्याः ; अन्यथा तेषां वाक्यानां परमात्मनि समन्वयासिद्धेः। यत्र स्वपक्षे साधकयुक्तिरेकत्वावगमरूपा प्रतीता, तस्याः स्थेम्ने तत्रैव तद्विरुद्धयुक्तिपरिहारो ह्यभिप्रेतो भवितुमर्हति; यथेक्षणेनागौणेन सतः प्रधानवैलक्षण्ये साधिते दृष्टान्तोक्तेः सम्भवार्थतयाऽप्युपपत्तेरनुमानाकारताप्रतिक्षेपोऽभिप्रेतः। आनन्दवल्ल्याम्, "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति पुरुषे आदित्ये चावस्थितस्यैकत्वावगमात् आदित्याख्यदेवताविशेषस्यैवानन्दमयत्वप्रत्याख्यानार्थमन्तरादित्यविचारम्भ इति तैरेव व्याख्यातत्वात्, स्थानभेदेऽपि स्थानिन एकत्वं पूर्वसिद्धम्। सूत्राक्षराननुगुणता च। सूत्रे नञ्शब्दस्य किं निषेध्यम्? किं नामरूपम्, उत स्वरूपभेदः? नामरूपं चेत्—अनिषेध्यम्, तत्र विहितत्वात्। स्वरूपभेदश्चेत्--अशाब्दत्वम्। जीवावस्थान्वयिनां दोषाणां निषेध्यतयाऽध्याहारस्तु प्रकृतानुसारादुचितः। **सर्वत्र** हीत्यत्र अनुकृष्य प्रतिपादनादित्यशाब्दम्। अस्माकं तु हेत्वंशः शाब्द एव। **अतद्वचनात्**—एकत्ववचनादिति चायुक्तम्। मधुविद्यावाक्ये, यश्चायमिति मुहुर्निर्देशस्य, यश्चायं देवदत्तः यश्चायं यज्ञदत्त इतिवद्भेदेऽप्युपपत्तेः। आत्मत्वव्यपदेशस्य प्रत्येकं युक्तत्वाच्च। ईश्वरैकत्वस्यासमर्थनीयत्वादेव सूत्रान्तरयोरप्यर्थोऽनुपपन्नः।

**प्रकाशवच्चे**त्यादिकमधिकरणान्तरम्, तत्र 'आदित्यवर्णं', 'रुक्माभं', 'भारूपः' इत्यादीनां बोधलक्षणपरत्वं पूर्वपक्षीकृत्य; दीप्तिमत्ताप्रतिपादनं सिद्धान्तयन्ति। न तेजसि बोधत्वम्; न बोधे तिमिरापहत्वम्; अतः सादृश्याभावाद्वैयर्थ्यम्; तदभावश्चा**वैयर्थ्यम्**। **तन्मात्रं** तेजोमात्रम्। 'भारूप' इत्युक्तम्। तेजोरूपस्य परस्य भोक्तृहृदयेऽवस्थानाभिप्राया जलसूर्याद्यु**पमा**। दर्पणस्थानीयस्य कस्यचिदाभावाद**म्बुवदग्रहणम्**। नात्र मुख्यप्रतिबिम्बभावः। जलस्थानीयमन्तःकरणम्। तत्र—यथा भोक्तृणां वृद्धिह्रासभाक्त्वम् अन्तःकरणविसर्पणे हि भोक्तारो विसर्पन्ति आलोमभ्य आनखाग्रेभ्यः। तस्मिन् [1]प्रतिह्रसमाने प्रतिह्रसन्ते, यावदणुभावः—एवं परोऽप्यात्माऽन्तःकरणेषु वृद्धिह्रासभाक्त्वं भजते: **एवं दृष्टान्तदार्ष्टान्तिकसामञ्जस्यम्। दर्शनात्**। जीववदनुप्रवेशदर्शनम्, पुरुष आविशदिति।

इदमप्यन्तरादित्यज्योतिरधिकरणादिष्वीश्वरस्य दीप्तिमत्त्वस्य सिद्धतया कृतकरत्वादयुक्तम्। ईश्वरस्य स्वरूपविसर्पणे निर्विकारत्वश्रुतिवैयर्थ्यं च।

**प्रकृतैतावत्त्व**मित्यत्र चतुर्धा संशय्य रूपद्वयातिरिक्तं ब्रह्मेति सिद्धान्तयन्ति। तत्र ब्रह्मप्रतिषेधशङ्का अनुपपन्नेत्युक्ता; **इति**शब्दस्य प्रकारवाचितया ब्रह्मोपस्थापकत्वाभावात्। रूपद्वयस्य ब्रह्मणा तादात्म्यं निषेधतीति च न शङ्कनीयम्; 'ब्रह्मणो रूपे' इति व्यतिरेकनिर्देशे तादात्म्यप्रसङ्गाभावात्। प्रसक्तस्य हि प्रतिषेधशङ्कानिरासपरत्वं युक्तम्। तादर्थ्यनैरन्तर्यादिभिरधिकरणान्तरत्वमप्ययुक्तमित्युक्तम्। **एतावत्त्वं** च रूपद्वयमात्रत्वम्। तन्निषेधेन प्रपञ्चातिरिक्तं कारणरूप[त्व]मस्तीति प्रतिपाद्यत इति चायुक्तम्।

1 परोक्तानुवादरूपत्वात् नात्र परस्मैपदस्थितिचिन्ता।

## पराधिकरणम् ३-२-७.

**'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३-२-३० ॥**

**इदानीमस्मात् परस्मात् जगन्निमित्तोपादानरूपपरमकारणात् परब्रह्मणः परमपि किञ्चित् तत्त्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते, अस्योपास्यस्य निर्दोषत्वानवधिकातिशया-**

---

ब्रवीति च भूयोऽपीत्युपपादनात्, 'अथ नामधेयम्' इति वाक्यं ह्यभिप्रेतमुक्तम्, प्रपञ्चानतिवर्तित्वेऽपि हि सत्यस्य सत्यमित्युपपद्यते । अत उक्तगुणविभूति[मात्र ?]विशिष्टतामात्रनिषेध इति युक्तम् । यतो ब्रह्मनिषेधो न शङ्क्यः, अत एव तदव्यक्तमित्यादीनि सूत्राणि न सर्वगतस्यातीन्द्रियत्वादिभिरनुपलम्भनिमित्ताभावव्युदासपराणि ।

यथा प्रकाशः प्रकाशान्तरेण, जलं शुद्धजलेन च संसृष्टमेकीभवति, एवं संराधयितुः संराध्येन अविभागश्रवणाच्च प्रपञ्चातिरिक्तब्रह्मसद्भावः । झटिति ब्रह्मसाक्षात्काराभावश्च न दोषः— अभ्याससाध्यत्वात् तस्येति योजनायाम्— **प्रकाशश्चे**ति प्रकाशशब्दस्य स्वसूत्रस्थ**प्रकाश**शब्दसरूपार्थत्वं स्वरससिद्धं बाध्येत । यस्मादणोरप्यस्य जीवस्य संराध्येना**विशेष्यम्**, अतोऽस्य 'ब्रह्मणा सह सोऽश्नुते' इति सर्वकामावाप्तिराम्नायते । अणोरप्यस्यानन्त्याय स्वरूपविसर्पणे **लिङ्गम्** वालाग्रेत्यादिश्रुतिरिति योजना च अध्याहारबाहुल्यबहिष्कृतेति स्फुटम् ।

प्रपञ्चातिरिक्तस्य परमात्मनो भोक्तृभोग्यवर्गयोश्च कार्यकारणभावप्रकारः **उभयव्यपदेशा**दित्यधिकरणे चिन्त्यते । असौ द्रव्यतदवस्थारूपेणोपादानोपादेयात्मक इत्य**हिकुण्डलव**दित्युक्तं भेदाभेदयोर्मुख्यत्वाय । अनेनेश्वरस्य परिणामः पूर्वपक्षितः । शक्तिमच्छक्तिविक्षेपरूपेणोपादानोपादेयात्मकः कार्यकारणभाव ईश्वरस्य निर्विकारत्वायेत्युक्तं, **प्रकाशाश्रये**ति । सूर्यकान्तचन्द्रकान्ततप्तायःपिण्डादीनां हि कारणानां रश्मिदहनसलिलादिनिष्पादने प्रवेशे वा न स्वरूपविकारः । तर्हि कथमभेदव्यपदेश इत्यत्राह **तेजस्त्वा**दिति । भानुमरीच्योस्तेजस्त्वेनेव सत्त्वद्रव्यत्वादिना परमात्मनो जगतश्चैकत्वमिति । अहिकुण्डलपक्षस्याप्रतिक्षेप्यत्वायाह—**पूर्ववद्वे**ति । अहिकुण्डलन्यायेन अत्यन्ताभेदो ब्रह्मापेक्षया जगतोऽभ्युपगतः । ईश्वरस्य तु निर्विकारत्वात् तस्य जगतश्च मणिप्रभयोरिव शक्तिविक्षेपरूपेणैव कार्यकारणभाव इति सिद्धान्तमाहुः । तदिदमसम्बद्धम्; ब्रह्मण ईश्वरातिरिक्तत्वे प्रमाणाभावात्; सकलप्रमाणन्यायविरोधाच्च । बह्वध्याहारापेक्षत्वाच्च मध्यमसूत्रस्य सूत्रकाराविवक्षितोऽयमर्थ इत्यवगम्यते ॥

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** ॥ अवान्तरसङ्गतिमाह **इदानी**मिति । **अस्मा**दिति **अत**श्शब्दस्य व्याख्यानम् । प्रकृतश्च 'न स्थानतोऽपि परस्य' इति सूत्रे परशब्दनिर्दिष्ट इति ज्ञापयितुं **परस्मा**दित्युक्तम् । परमकारणत्वप्रयुक्तोत्कर्षवाची परब्रह्मण इत्यत्र **पर**शब्दः । यद्वा— **परस्मा**दिति पदेन प्राप्यतया परत्वं विवक्षितम् । **परब्रह्मण** इत्यत्र स्वकार्यापेक्षया परत्वमुच्यते । **परमकारणा**दिति कारणान्तरराहित्यम् । **अस्योपास्यस्ये**ति । उभयलिङ्गत्वस्थेम्ने इत्यर्थः । अन्यथा प्राप्यत्वतदुपयोगिभोग्यगुणजातवैकल्ये सति न ह्युभयलिङ्गत्वपौष्कल्यसिद्धिरिति भावः । पूर्वाधिकरणे उभयलिङ्गकत्वस्थेम्ने निर्दोषत्वविषयनिरूपणं कृतम्; अत्र तु कल्याणगुणास्पदत्वविषयनिरूपणमित्युक्तं

सङ्ख्येयकल्याणगुणाकरत्वस्थेम्ने । तत्रेयमाशङ्का—यदिदं परं ब्रह्मोभयलिङ्गम्, एतस्मान्निखिलजगत्कारणात् परमपि किञ्चित् तत्त्वमस्ति । कथम्। "अथ य आत्मा स सेतुर्विधृतिः" इति अस्य परस्य सेतुत्वव्यपदेशात् । सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेः इतोऽन्यदनेन प्राप्तव्यमस्तीति गम्यते । तथा, "एतं सेतुं तीर्त्वा अन्धस्सन् अनन्धो भवति" इति तरितव्यता चास्याभिधीयते । अतश्चान्यत् प्राप्यमस्ति । उन्मानव्यपदेशाच्च । उन्मितं—परिमितम् इदं परं ब्रह्म; 'चतुष्पाद्ब्रह्म षोडशकलम्[1]' इति उन्मानव्यपदेशात् । स चायमुन्मानव्यपदेशस्तेन सेतुना प्राप्यस्यानुन्मितस्यास्तितां द्योतयति । तथा संबन्धव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते, "अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्", "अमृतस्यैष सेतुः" इति । अतश्च परात्परमस्ति । भेदेन च परात्परं व्यपदिश्यते, "परात्परं पुरुषमुपैति", "परात्परं यन्महतो महान्तम्" इति च । तथा "तेनेदं पूर्णं पुरुषेण सर्वम्", "ततो यदुत्तरतरं तद्रूपमनामयम्" इति । अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति गम्यते इति ।' एवं प्राप्तेऽभिधीयते—

## सामान्यात्तु ॥ ३-२-३१ ॥

तुशब्दः पक्षं व्यावर्तयति । यत् तावदुक्तम्—सेतुव्यपदेशात् परात्परमस्तीति—तन्नोपपद्यते । न ह्ययमत्र किञ्चित् प्राप्यं प्रति सेतुरुच्यते, "एषां लोकानामसंभेदाय" इति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः । सिनोति बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते । "एतं सेतुं तीर्त्वा" इति तरतिश्च प्राप्तिवचनः, यथा वेदान्तं तरतीति ॥ ३२ ॥

## बुद्ध्यर्थः पादवत् ॥ ३-२-३२ ॥

योऽयं 'चतुष्पाद्ब्रह्म षोडशकलम्', 'पादोऽस्य विश्वा भूतानि' इत्युन्मानव्यपदेशः, स बुद्ध्यर्थः; 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिभिर्जगत्कारणस्य ब्रह्मणोऽपरिच्छिन्नत्वावगमात् स्वत उन्मितत्वासंभवात् ।

---

भवति । [2]उभयलिङ्गाद् ब्रह्मणः परं किमस्ति, नेति; अस्य परत्वे सेतून्मानादिव्यपदेशा उपपन्नाः, न वेति; अनुपपन्नत्वे परान्तरमस्ति । उपपन्नत्वे परान्तरं नास्तीति सिध्यति । **तत्रेय**मित्यादि । असङ्करकरत्वाभिप्रायः सेतुव्यपदेशः स्यादिति शङ्कायामाह **तथा एतं सेतुमिति** । **संबन्धव्यपदेश** इत्यादि । पूर्वं केवलसेतुशब्दः; अत्र प्रतिसम्बन्धिनिर्देशसहितसेतुशब्दनिर्देशः । **भेदेन चेति परात्**—जगत्कारणात । श्रुतावपि पञ्चम्यन्तः परशब्दः कारणविषय इति पूर्वपक्षिणो हृदयम् ॥

राद्धान्तसूत्रमुपादत्ते—**सामान्यात्तु** । अवयवार्थेनाप्यसङ्करकरत्वं दर्शयति **सिनोति बध्नातीति** । 'एतं सेतुं तीर्त्वा' इत्यस्य कोऽर्थ इत्यत्राह **एतं सेतुमिति** ।

**बुद्ध्यर्थः पादवत्** । अपरिच्छेदवाक्यं न जगत्कारणविषयम्; किन्तु तदतिरिक्ततत्त्वविषयमित्यत्राह

---

1 षोडशकलमिति न श्रुतिवाक्यम् । (4-4-छा) सत्यकामलब्धविद्यायां चतुर्षु पादेषु प्रत्येकं कला चतुष्टयकथनात् तत्समाहारसिद्धमिदं चतुष्कलत्वम् ।

2 उभयलिङ्गात्—उभयलिङ्गत्वेनाभिमतात् ।

जगत्कारणत्वं हि तस्यैव श्रूयते, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः", "सोऽकामयत बहु स्यां प्रजायेयेति" इति । अतो यथा, "वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पादः" इत्यादिना ब्रह्मणो (मनसो ?) वागादिपादव्यपदेश उपासनार्थः, एवमयमपि ॥ ३३ ॥

स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानसंभवः । तत्राह—

**स्थानविशेषात् प्रकाशादिवत् ॥ ३-२-३३ ॥**

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात् तत्सम्बन्धितयोन्मितत्वानुसन्धानं संभवति, यथा प्रकाशाकाशादेर्विततस्य वातायनघटादिस्थानभेदैः परिच्छिद्यानुसन्धानसंभव इत्यर्थः ॥ ३३ ॥

**उपपत्तेश्च ॥ ३-२-३४ ॥**

यदुक्तम् "अमृतस्यैष सेतुः" इति प्राप्यप्रापकसंबन्धव्यपदेशात् प्रापकात्परं प्राप्यमस्तीति—तन्न; प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यनन्योपायत्वश्रवणात् ॥ ३४ ॥

**तथाऽन्यप्रतिषेधात् ॥ ३-२-३५ ॥**

यत्पुनरुक्तम्, 'ततो यदुत्तरतरम्', 'परात्परं पुरुषम्', 'अक्षरात्परतः परः' इत्यादिभेदव्यपदेशात् परात्परमस्तीति—तन्नोपपद्यते; तत्रैव ततोऽन्यस्य प्रतिषेधात्, "यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति । यस्मादपरं परं नास्ति किञ्चित्; न केनापि प्रकारेण परमस्तीत्यर्थः । तथाऽन्यत्रापि, न ह्येतस्मादिति नेत्यन्यत्परमस्तीति । इति नेति

---

**जगत्कारणत्वं हीति** । **पादवदिति** सूत्रखण्डं व्याचष्टे **अतो यथेति** । न [1]हि निखिलजगत्कारणस्येश्वरस्य वाक्प्राणचक्षुरादिकतिपयवस्तुपरिच्छिन्नत्वं संभवति । अतस्तस्योपासनार्थत्वं संप्रतिपन्नमिति भावः ॥ ३२ ॥

अनन्तरसूत्रशङ्कामाह **स्वयमनुन्मितस्येति** । **स्थानविशेषात् प्रकाशादिवत्** ॥ दृष्टान्तभूतवागादिविषयमिदं सूत्रम् ॥ ३३ ॥

**उपपत्तेश्च** ॥ **अनन्योपायत्वश्रवणात्**—प्राप्यस्यैवोपायत्वश्रवणादित्यर्थः । 'विवृणुते तनूं स्वाम्' इत्यनेन प्रापकत्वं प्राप्यत्वं च गम्यते ॥ ३४ ॥

**तथान्यप्रतिषेधात्** ॥ दूष्यांशं व्यञ्जयन् व्याचष्टे **यत्पुनरित्यादिना** । **तत्रैव**--श्वेताश्वतरोपनिषदि । उपात्तवाक्यस्यान्वयमाह **यस्मादपरमिति** । तस्यार्थमाह **न केनापीति** । 'यस्मात्' इतिपञ्चम्यन्तपदेन **अपर**शब्दस्यान्वये सति समाधिकनिषेधः कृतः स्यात्[2] । **परशब्दस्यान्वये** सति समनिषेधो न कृतः स्यात् ;

---

1 नहीत्यादिवाक्यदर्शने भाष्ये 'ब्रह्मण' इति पाठ इष्ट इति ज्ञायते । श्रुतौ तु अधिदैवतमाकाशे अग्न्यादिभिः, अध्यात्मं मनसि वागादिभिश्च चतुष्पात्त्वमुक्तम् (छा-3-18) । अथापि तत्र तथाविधे मनसि ब्रह्मदृष्टिविधानात् नामादौ मनःपादत्ववत् ब्रह्मपादत्वमप्यारोप्य यथा तत्रोपनिषद्येव चतुष्पाद् ब्रह्म, वागेव ब्रह्मणश्चतुर्थः पाद इति प्रयोगः, तद्वत्र भाष्येऽपीति ध्येयम् । ब्रह्मणि वस्तुतश्चतुष्पात्त्वमिच्छन् पूर्वपक्षी इदं कस्मात् ब्रह्मणो वास्तवमेव न मन्येतेति शंकाशमनार्थं तु इदं टीकावाक्यम् । इदं मनसोऽप्युपलक्षणम् ।

2 यस्मादपरं यद्भिन्नं परं सर्वोत्कृष्टं नेत्यर्थः प्रथमः भाष्योक्तः । अपरम् अन्यत् यस्मात् परम् उत्कृष्टं नेति द्वितीयोऽत्र वार्यते ।

निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्परं न ह्यस्तीत्यर्थः । तथा "न तस्येशे कश्चन तस्य नाम महद्यशः" इति । तद्धि जगदुपादानकारणतयाऽनन्तरमुक्तम्, "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि...स आपः प्रदुघे उभे इमे" इत्यादिना । "अद्भ्यः सम्भूतो हिरण्यगर्भः इत्यष्टौ" इति च जगत्कारणं पुरुषमेनं प्रत्यभिज्ञापयति ॥

'ततो यदुत्तरतरम्' इति किमुच्यत इति चेत्—पूर्वत्र, "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति, परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम्, नान्योऽमृतत्वस्य पन्थाः इत्युपदिश्य तदुपपादनाय, "यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासम्भवं च प्रतिपाद्य, "ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" इति पूर्वोक्तमर्थं हेतुतो निगमयति । यदुत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यतः, ततः य एतत् पुरुषतत्त्वं विदुः, त एवामृता भवन्ति; अथेतरे दुःखमेवापियन्तीति । अन्यथा उपक्रमविरोधोऽनन्तरोक्तिविरोधश्च । "परात्परं पुरुषमुपैति दिव्यम्" इति, पूर्वत्र 'अक्षरात्परतः परः' इत्यक्षराद्व्याकृतात् यः परः समष्टिपुरुषः तस्मात्परो योऽदृश्यत्वादिगुणकः सर्वज्ञः परमपुरुषः स एवेहापि 'परात्परः' इति समष्टिपुरुषात् परत्वेनोच्यते ॥ ३५ ॥

---

तच्चानिष्टम् । तथा सति परमपुरुषवेदनस्यैकस्यैवापवर्गोपायत्वं पूर्वोक्तं न सिध्यति । समाभ्यधिकनिषेधपरश्रुत्यन्तरविरोधश्च । अपरशब्दवैयर्थ्यं च स्यात् ॥ परत्वेन विवक्षितरुद्रव्यतिरिक्तविषयोऽयमपरशब्द इति चेत् - न; कार्त्स्न्येन परत्वनिषेधे स्वतः प्राप्ते तस्यानन्यथासिद्धसङ्कोचकाभावात्[1] । 'ततो यदुत्तरतरम्' इत्यादिवाक्यं हेत्वर्थत्वेनान्यथासिद्धमिति भावः । 'न तस्येशे' इति वाक्यं जगत्कारणातिरिक्तविषयं स्यादित्यत्राह तद्धीति । 'हिरण्यगर्भः समवर्तताग्रे' 'प्रजापतिः प्रजा असृजत', 'धाता यथापूर्वमकल्पयत्' इत्यादिभिर्हिरण्यगर्भस्य कारणत्वप्रतिपादनात् सद्ब्रह्मात्मादिशब्दैरपि स एव कारणतयोच्यते । 'शम्भुराकाशमध्ये' इत्यादिभिरपि स एवोच्यते ; 'शम्भुः स्वयंभूर्द्रुहिणः' इति नैघण्टुकोक्तेरिति शङ्कायामाह अद्भ्यः सम्भूत इति । अत्रैव 'विद्युतः पुरुषादधि' इति पुरुषशब्दात् विद्युद्वर्णत्वात् अतिदिष्टेषु 'अद्भ्यः सम्भूतः' इत्यादिवाक्येषु लक्ष्मीपतित्वश्रवणात्, 'यमन्तः समुद्रे कवयो वयन्ति' इति समुद्रशायित्वश्रवणात् 'तदक्षरे परमे व्योमन्' इति परमव्योमसंबन्धाच्चावगतपरमपुरुषभावजगत्कारणप्रतिपादकप्रकरणैकप्रकरणम्, 'हिरण्यगर्भः समवर्त्तताग्रे' इत्यादिवाक्यमपि परमपुरुषस्यैव जगत्कारणत्वमाहेत्यर्थः । अन्यथा ब्रह्मशिवयोः सृज्यत्वसंहार्यत्वश्रुतिविरोधश्च । ततो यदुत्तरतरमिति किमुच्यत इति। यस्मात्परमित्यादिवाक्यस्य सङ्कोचकत्वेन परोक्तमिदं वाक्यमन्यथासिद्धमितीममर्थं हृदि निधाय तस्यान्यथासिद्धिः कथमित्याह किमुच्यत इति । 'तस्मात्सर्वगतः शिवः' इत्यस्य पूर्वपठितं 'पूर्णं पुरुषेण' इति वाक्यम् ; [2]ततः पश्चात् 'महान् प्रभुर्वै पुरुषः' इति वाक्यम् । तदुभयानुरोधेन, सर्वाननशिरोग्रीवत्वगुहाशयत्वभगवच्छब्दाद्यनुरोधेन च वर्णनीयम् । सर्वाननशिरोग्रीवत्वादिकं हि, सहस्रशीर्ष

---

1 अपरमित्यत्र परशब्देन सर्वस्यापि परस्य ग्रहणे तादृशपरभिन्ने ब्रह्मतोऽपि परत्वाभावः सिद्ध एवेति न वक्तव्यः । अपरशब्दे परशब्देन रुद्ररूपविशेषस्य रुद्रत्वेन ग्रहणं तु न शक्यम् । अतः अपरशब्दस्य भिन्नमित्यर्थ एवाक्लिष्टः प्रसिद्धश्चेति ध्येयम् । 2 ततः—शिव इतिवाक्यात् ।

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३-२-३६ ॥**

अनेन ब्रह्मणा सर्वगतत्वं—सर्वस्य जगतो व्याप्तत्वम् आयामशब्दादिभ्यः—सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानम्, अस्मात्परं नास्तीत्यवगमयति। आयामशब्दस्तावत्, 'तेनेदं पूर्णं पुरुषेण सर्वम्', 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः', नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'। आदिशब्दात्, 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वम्' इत्यादयो गृह्यन्ते। अत इदं परं ब्रह्मैव सर्वस्मात्परम् ॥ ३६ ॥

---

देवमित्यादिषु पुरुषोत्तमासाधारणत्वेनावगतमित्यर्थः। **ततः**—तस्माद्धेतोरित्यर्थः। **अरूपमनामयं** कर्मकृतदेह-तत्कृतदुःखविरोधि; तापत्रयप्रतिभटमित्यर्थः। **उपक्रमविरोधः**—'नान्यः पन्थाः' इति वाक्यविरोधः। 'य एनं विदुः' इति वाक्यस्य परमपुरुषेतरवेदनपरत्वं हि 'नान्यः पन्थाः' इत्यनेन विरुद्धम्। **अनन्तरोक्तिविरोधश्च**। यस्मात् परं नापरमित्यादिवाक्यविरोधश्चेत्यर्थः। **परात् पर**मित्यादि। परात्परमित्यादिवाक्येऽपि समष्टिपुरुषात्परत्वेन परमपुरुष उच्यत इति प्रतिज्ञा; पूर्ववाक्ये समष्टिपुरुषविलक्षणतया प्रतिपाद्यत्वेन निश्चितस्य अदृश्यत्वादिगुणकस्य **परात्पर**शब्देनात्र प्रत्यभिज्ञानादित्यर्थः ॥ ३५ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** ॥ पूर्वसूत्रैरधिकवस्तुवादे दूषणमुक्तम्; इह स्वपक्षे प्रमाणमुच्यते। नियन्तृत्वेन व्याप्तिज्ञापनार्थं नित्यं विभुमिति श्रुतिरुपात्ता। **विभुम्**—प्रभुम्। इयं श्रुतिः परमपुरुषविषया; 'परात्परं पुरुषमुपैति दिव्यम्', 'दिव्यो ह्यमूर्तः पुरुषः' इति पुरुषविषयप्रकरणस्थत्वात्। सूत्रस्थमादिशब्दं व्याचष्टे **आदिशब्दा**दिति। **इत्यादयो गृह्यन्त** इति। **आदिशब्देन** व्यतिरिक्ततत्त्वनिषेधपरवाक्यानि धारकत्वनियन्तृत्वादिपूर्वकव्याप्तिपरवाक्यानि समानाधिकरणवाक्यानि च विवक्षितानि। सर्वविद्योपास्यविशेषनिर्णयपरनारायणानुवाके नियन्तृतया व्याप्तिः अन्तर्बहिश्चेत्यादिना, धारकत्वं तद्विश्वमुपजीवतीति, शेषित्वं पतिं विश्वस्येति चोक्तम्। नियमनार्थव्यापनधारणशेषित्वैः कृत्स्नप्रपञ्चशरीरकत्वं ब्रह्मणः सिद्धम्। एवमीश्वरस्य कृत्स्नप्रपञ्चशरीरकत्वसिद्ध्या तदधिकतत्त्वं नास्तीत्यधिकतत्त्वाभावे प्रमाणमुक्तं स्यात्; तत्वान्तरसद्भावे सति कृत्स्नशरीरकत्वायोगात्। किञ्च, 'विश्वतः परमं नित्यम्', 'अन्तर्बहिश्च तत्सर्वं व्याप्य', 'विश्वमेवेदं पुरुषः' इति त्रिविधपरिच्छेदराहित्यमुक्तम्। तथा च सहस्रशीर्षत्वादिविशिष्टपुरुषप्रतिपादकतयैतत्समानार्थे च **पुरुषनारायणे**--, 'यद् भूतं यच्च भव्यम्', 'स भूमिं विश्वतो वृत्वा', 'पुरुष एवेदं सर्वम्' इति त्रिविधपरिच्छेदराहित्यमुक्तम्। अतश्चाधिकवस्तुनिषेधसिद्धिः। अधिकवस्तुसद्भावे सति परिच्छेदाभावायोगात्। अत ईदृशानि वाक्यान्यनुसंधेयानीति भावः ॥

**परे (रैः) तु**—सम्बन्धव्यपदेशो नाम, 'सता सोम्य तदा संपन्नो भवति', 'प्राज्ञेनात्मना संपरिष्वक्तः' इति दर्शितः। भेदव्यपदेशश्च, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते', 'य एषोऽन्तरक्षिणि पुरुषः' **इति** दर्शितः। स्थानविशेषादित्यादिसूत्राणि सम्बन्धभेदव्यपदेशपरिहारपराणि व्याख्यातानि। उपाधिभेदापेक्षया भेदव्यपदेशः, न स्वरूपतः। भेदोपशम एव सम्बन्धे ईदृशः सम्बन्ध उपपद्यते। 'स्वमपीतः' इति स्वरूपसंबन्धश्रवणात्। 'सर्वं तं परादात्' इत्यादिरन्य**प्रतिषेधः**। **अनेन** सेत्वादिव्यपदेशनिराकरणेन **सर्वगतत्वं** सिद्धं भवति। अन्यथा वस्त्वन्तराद्व्यावृत्तत्वेनात्मनः परिच्छेदः स्यात्। **सर्वगतत्वं** चास्य **आयामशब्दादिभि**र्ज्ञायते—इति व्याचक्षते।

## फलाधिकरणम् ३-२-८
### फलमत उपपत्तेः ३-२-३७.

उक्तमुपासिसिषोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वम्, प्राप्यस्य च परमपुरुषस्य

---

तत्र न तावत् जगत्कारणाद्ब्रह्मणो विलक्षणवस्तुमात्रमिह निषेध्यम्; किन्तूत्कृष्टं तत्त्वान्तरम्; प्रामाणिकस्य प्रधानजीवेश्वरवैलक्षण्यस्यानिषेध्यत्वात्, कार्यकारणभेदनिषेधस्य चारम्भणाधिकरणे कृतत्वात्। सेतून्मानव्यपदेशादीनां कार्यकारणभेदसाधकत्वाभावाच्च। न हि[1] कारणमेव स्वकार्यप्राप्त्यै सेतुरिति नियमः। सर्वगतत्वस्य सिद्धान्तहेतुतयोक्तत्वाच्च नान्यमात्रं प्रतिक्षेप्यम्; तस्य भेदसाधकत्वात्। व्याप्तिर्हि व्याप्यव्यापकभेदमवगमयति। अत उत्कृष्टतत्त्वनिषेधार्थत्वे अधिकरणस्य सिद्धे सुषुप्तिवाक्यप्रतिपन्नः सम्बन्धो न पूर्वपक्षबीजं भवति; कारणाद्ब्रह्मणः सुषुप्तस्योत्कर्षाभावात्। अत एवाऽऽदित्यादिस्थानकृतभेदश्च न पूर्वपक्षयुक्तिः। अत एव **स्थानविशेषा**दिति सूत्रं न सम्बन्धभेदव्यपदेशपरम् 'कतम आत्मेति। योऽयं विज्ञानमयः' इत्यादिप्रकरणे सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् परमेश्वरो विवक्षित इति समर्थितत्वात् तन्निरासश्चानुपपन्नः। **तथान्यप्रतिषेधा**दिति सूत्रं च यस्मात्परमित्यादिवाक्यविषयम्; न तु 'सर्वं तं परादात्' इत्यादिवाक्यविषयम्, उत्कृष्टान्यनिषेधस्यैवाधिकरणकृत्यत्वात्। '**अनेन**—सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधाश्रयणेन च, सर्वगतत्वं सिध्यति; तच्च आयामशब्दादिभिः सिध्यति' इति योजनायां वाक्यभेदः; तच्छब्दाध्याहारश्च। सर्वगतत्वं च भेदसाधकत्वात् भवतां विरुद्धम्। न च भेदे सति वस्तुतः परिच्छेदः स्यात्; तस्य भेदरूपत्वाभावात्।

**अन्ये तु**—संबन्धभेदव्यपदेशौ वयमिव वर्णयन्त एव, **स्थानविशेषा**दिति सूत्रमपि तयोः परिहारपरमाहुः—विकारवर्तिनो ब्रह्मणो बहिर्विकारमवस्थितं ब्रह्म प्रति सेतुत्वम्, 'ततो यदुत्तरतरम्' इति च परमाकाशवर्तिन ईश्वरस्य विकारस्थादीश्वरात् भेदव्यपदेश इति न स्वरूपभेद इति। **उपपद्यते** चैवम्; अन्यथेश्वरद्वयप्रसङ्गात्। 'तस्मात्सर्वगतः शिवः' इत्युक्तं **सर्वगतत्वम् अनेन** सेत्वादिव्यपदेशनिर्वाहेणेनोपपादितं भवति! तच्च 'ज्यायान् पृथिव्याः' इत्यादिभिः **आयामशब्दादिभिः** सिद्धमिति।

तदपि न साधीयः। अनवच्छिन्नब्रह्मानुभवस्य ब्रह्मोपासनलभ्यत्वशास्त्रान्न देशभेदापेक्षं सेतुत्वं वाच्यम्। 'सर्वं ह पश्यः पश्यति', 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इति हि श्रूयते। विकारावस्थितादीश्वरात् परमाकाशस्थस्योत्तरत्वमिति निर्वाहोऽप्ययुक्तः; 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। ततो यदुत्तरतरम्' इति परमाकाशस्थात् पुरुषादुत्तरत्वप्रतीतेः। **अनेन**—सेतुत्वादिव्यपदेशान्यपरत्वकथनेन 'तस्मात् सर्वगतः शिवः' इत्युत्तरवाक्यस्थसर्वगतत्वमुपपादितं भवतीत्यप्ययुक्तम्; पूर्वपक्षदृष्ट्या पूर्ववाक्योक्तात् कारणपुरुषात् परत्वेऽप्युत्तरवाक्यप्रतिपाद्यस्य सर्वगतत्वे विरोधाभावात्। अतो वाक्यान्तरसिद्धायाः कारणवस्तुनो व्याप्तेरसङ्कोच एव तत उत्कृष्टस्याभावे हेतुत्वेन विवक्षितः॥ इति पराधिकरणम्॥

**फलमत उपपत्तेः**॥ सिद्धान्तोपक्रममिदमधिकरणम्। अवान्तरसङ्गत्यर्थमनुवदति **उक्त**मिति। **सर्वस्मात् परत्वं प्राप्यत्वम्**। तत् कल्याणगुणाकरत्वान्तर्भूतमपि पृथगधिकरणनिरूपितत्वात् पृथगुक्तम्।

---

1 सेतुतत्प्राप्ययोर्नियमेन कारणकार्यरूपत्वे हि तद्भेदः कार्यकारणभेदकः स्यात्।

निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मात्परत्वं च । अतःपरमुपासनं विवक्षन्, उपासीनानां परस्मादेवास्मात्पुरुषात् तत्प्राप्तिरूपमपवर्गाख्यं फलमिति संप्रति ब्रूते । तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिकमपि फलम् अत एव परस्मात्पुरुषाद्भवतीति सामान्येन 'फलमतः' इत्युच्यते । कुत एतत् । उपपत्तेः । स एव हि सर्वज्ञः सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन च आराधितः ऐहिकामुष्मिकभोगजातं स्वस्वरूपावाप्तिरूपमपवर्गं च दातुमीष्टे । न ह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥

श्रुतत्वाच्च ॥ ३-२-३८ ॥

"स वा एष महानज आत्माऽन्नादो वसुदानः", "एष ह्येवानन्दयाति" इति भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥

सम्प्रति पूर्वपक्षमाह—

**धर्मं जैमिनिरत एव ॥ ३-२-३९ ॥**

अत एव—उपपत्तेः शास्त्राच्च यागदानहोमोपासनरूपधर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते । लोके हि कृष्यादिकं मर्दनादिकं च कर्म साक्षाद्वा परम्परया वा स्वयमेव फलसाधनं दृष्टम् ; एवं वेदेऽपि यागदानहोमादीनां साक्षात्फलसाधनत्वाभावेऽपि परम्परया अपूर्वद्वारेण फलसाधनत्वमुपपद्यते । तथा 'यजेत स्वर्गकामः' इत्यादिशास्त्रमपि सिषाधयिषितस्वर्गस्य कर्तव्यतया यागादि

---

सूत्रे मुक्तिरिति न निर्दिष्टम्; अपि तु फलमिति साधारणनिर्देशः कृतः । अतस्तस्य प्रयोजनमाह **तुल्यन्यायतये**ति । त्रिवर्गप्रदकर्माराध्यत्वफलप्रदत्वयोरपि मुमुक्षोरनुसन्धेयत्वात् तदप्यत्र निरूपितम् । अत उपासनोपयोग्यर्थविचारानन्तरं तदुपयोग्यर्थान्तरं निरूप्यत इति सङ्गतिरित्यर्थः । फलत्वमुक्तम् ; फलप्रदत्वं निरूप्यत इति च सङ्गतिः । तच्च कल्याणगुण इति पादान्तर्भावः । **पूर्वमीमांसायाम् अपूर्वाधिकरणे** द्वारमात्रं निरूपितम् ; अत्र तु द्वारविशेषो निरूप्यत इति भिदा । किं सापूर्वात् कर्मोपासनात् स्वर्गापवर्गफलोत्पत्तिः, उत कर्मोपासनाराधितात् वाय्वादिदेवतारूपात् केवलाच्च ब्रह्मण इति; किं 'स एवैनं भूतिं गमयति', 'यमेवैष वृणुते तेन लभ्यः' इत्यादिवाक्यशेषो वाय्वादिरूपस्य केवलस्य च ब्रह्मणः फलप्रदत्वमवगमयति, नेति; किं वाक्यशेषो यथाप्रतीतार्थपरः, उत अतत्पर इति । अतत्परत्वे, तत्तद्देवतारूपस्य केवलस्य च ब्रह्मणः फलप्रदत्वाभावात् सापूर्वात् कर्मोपासनात् फलसिद्धिः स्यात् । अनन्यपरत्वे तु देवतारूपस्य केवलस्य चेश्वरस्य फलप्रदत्वावगमकत्वात् कर्मोपासनाराधितात् तत्तद्देवतारूपात् केवलाच्च ब्रह्मणः फलसिद्धिः । **सर्वज्ञत्वम्** अर्थिनामपेक्षिततद्विरोधितन्निरासादिज्ञानोपयोगि । **सर्वशक्तित्वम्**—भोग्यभोगोपकरणादिनिष्पादनप्रतिबन्धनिरसनोपयोगि । द्वयमपि लुब्धस्याकिञ्चित्करमिति **महोदारत्वो**क्तिः । ईश्वरस्य योग्यत्वमुक्तम्; कर्मणस्त्वयोग्यत्वमाह **नही**ति ॥

**श्रुतत्वाच्च** ॥ केवलकर्मणो योग्यत्वाभावादीश्वरस्यैव योग्यत्वात् तस्यैव फलप्रदत्वं कल्प्यमित्युक्तम् । तत् कण्ठोक्तं चेति अस्य सूत्रस्यार्थः । **अन्नादः**—अन्नदः ॥ ३८ ॥

अनन्तरसूत्रं पूर्वपक्षपरमित्याह **संप्रती**ति । **धर्मं जैमिनिरत एव** ॥ उपपत्तिं दर्शयति—**लोके ही**ति । शास्त्रं दर्शयति **तथायजेते**ति [**एवं** [1]**वेदेऽपी**ति] । 'स्वर्गकामो यजेत' इत्यत्र फलसाधनत्वं

---

1 एतत्पाठे भाष्ये एवंवेदेऽपीत्यत्र वाक्यच्छेदः स्यात् । तदा तद्विवरणमुपरि सर्वम् ।

अभिदधत् अन्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्वमवगमयति ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

तुशब्दः पक्षव्यावृत्त्यर्थः। पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान् बादरायणो मन्यते। कुतः। हेतुव्यपदेशात्। यज देवपूजायामिति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात्। "वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादिषु कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता। एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतापूर्वादिपरिकल्पनं च प्रामाणिका न सहन्ते। लिङादयोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति; नान्यदलौकिकमिति प्रागेवोक्तम्। तदेवं "वायुर्वै क्षेपिष्ठा देवता" इत्यादिशब्दात् वाय्वादीनां फलप्रदत्वमवगम्यते। वाय्वाद्यात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते—"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इति। अन्तर्यामिब्राह्मणे च, "यो वायौ तिष्ठन् यस्य वायुः शरीरम्, योऽग्नौ तिष्ठन्, य आदित्ये तिष्ठन्" इत्यादि श्रूयते। स्मर्यते च, "यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्" इति। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति,। प्रभुरिति फलप्रदायीत्यर्थः। "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि। यान्ति मद्याजिनोऽपि माम्" इति च।

---

श्रुतमेव। तत्र सद्वारकत्वं कल्प्यमिति न विरोधः ॥ ३९ ॥

सिद्धान्तसूत्रमुपादत्ते—**पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॥

**यज देवे**त्यादि। तथा व्यपदेशं दर्शयति **वायव्य**मिति। मन्त्रार्थवादयोरनुष्ठेयार्थप्रकाशनस्तुत्योरन्य[1]तरपरत्वान्न स्वार्थे प्रामाण्यमित्यत्राह **विध्यपेक्षित एवे**ति। मन्त्रार्थवादयोः प्रतीयमानार्थे तात्पर्याभावेऽपि रात्रिसत्रप्रतिष्ठा-अपगोरणशतयातनासाध्यसाधनभाव शर्कराञ्जनद्रव्य[2]पशुविशेषादिरर्थवादाद्युक्तोऽप्यर्थो विध्यपेक्षिततया भवद्भिरेव स्वीकृत इति भावः। देवतानामपि फलदत्वमस्तु; ततः किमपूर्वस्य फलप्रदत्वानभ्युपगम इत्यत्राह **एव**मिति। श्रुतहानमश्रुतकल्पनं चानुपपन्नमित्यर्थः। अश्रुतकल्पनं हि कल्प्यापूर्ववादे; वाच्यापूर्ववादे तन्नास्तीत्यत्राह **लिङादयोऽपीति**। पूर्वस्मिन् पक्षे अपूर्वमेव कल्प्यम्, अन्यत्र त्वपूर्वम्, तस्य लिङ्वाच्यत्वं च कल्प्यमित्यर्थः। **प्रागेव**। प्रथमाधिकरण एवेत्यर्थः। ततः किमित्यत्राह **तदेव**मिति। ततः किं परमपुरुषस्य फलप्रदत्व इत्यत्राह **वाय्वाद्यात्मना चे**ति।

---

*1 अन्यतरेति तालपाठः। अन्यत्र अन्येति। 2 अञ्जनद्रव्यविशेषो घृतम्; पशुविशेषः छागः।*

लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् सम्पाद्य तैः राजानं भृत्यद्वारेण साक्षाद्वा अर्चयन्ति । अर्चितश्च राजा तत्तदर्च(दाराध)नानुगुणं फलं प्रयच्छन् दृश्यते । वेदान्तास्तु अतिपतितसकलेतरप्रमाणसम्भावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य तदाराधनरूपाणि च यागदानहोमात्मकानि, स्तुतिनमस्कारकीर्तनार्चनध्यानानि च तदाराधनानि, आराधितात् परस्मात् पुरुषाद्भोगापवर्गरूपं फलं च वदन्तीति सर्वं समञ्जसम् ॥ ४० ॥ इति फलाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य द्वितीयः पादः ॥

श्रीरस्तु

---

अयमर्थः संभवतीति दर्शयति **लोके** चेति । विग्रहाद्यभावं ये त्वनुमानादिभिः साधयन्ति, तन्मते तदुक्तानुमानं कालात्ययापदिष्टमित्यभिप्रायेणाह **वेदान्तास्त्वति** । स्तुतिनमस्कारादीनामुपबृंहणसिद्धत्वात् तेषां ध्यानेन सह कीर्तनम् । **सर्वं समञ्जसम्** । विध्यर्थवादमन्त्राणां सामञ्जस्यमित्यर्थः ॥४०॥

इति फलाधिकरणम् ।

इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा—भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयाध्याये द्वितीयः पादः ।

श्रीमते रामानुजाय नमः ।

# श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

## तृतीयास्याध्यायस्य तृतीयः पादः

### सर्ववेदान्तप्रत्ययाधिकरणम् ३-३-१.

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३-३-१ ॥**

उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायित्वपर्यन्तम् । इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते । प्रथमं तावदेकस्या वैश्वानरविद्यादिकायाः अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वम्, उत विद्याभेद इति चिन्त्यते । अविशेषपुनश्श्रवणस्य प्रकरणान्तरस्य च भेदकत्वात् शाखान्तरे चोभयोरवर्जनीयत्वात् विद्याभेद इति प्राप्तम् । अत एव, "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्" इति शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उपपद्यते । विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तेर्नियमो नोपपद्यते—

---

**३ - ३**

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ पादसङ्गत्यर्थमनुवदति **उक्त**मिति । अन्यत्रोक्त[1]स्यान्यत्रोपयोगार्थं स्वीकार **उपसंहारः**; तत्रतत्रोक्तस्य तत्रतत्रैवोपयोगो **विकल्पः**; तयोर्निर्णयायेत्यर्थः । विद्यानामभेदे उपसंहारः; भेदे विकल्पः । प्रथमाधिकरणकृत्यमाह **प्रथमं ताव**दिति । **अनेकशाखासु श्रूयमाणायाः**—एकसंज्ञकत्वेनैकफलत्वेन श्रूयमाणाया इत्यर्थः । पूर्वमीमांसायां शाखान्तराधिकरणे, "....शाखान्तरे कर्मभेदः...." इति सूत्रेण पूर्वपक्षमुक्त्वा, "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति सिद्धान्तितम् । अत्र तु—शाखान्तराधिकरणोक्तन्यायो वेदान्तवाक्येषु किं प्रवर्तते, उत नेति संशय्य प्रवर्तत इति निर्णीयते । नानाशाखाम्नाताया वैश्वानरविद्यादिकायाः किं प्रतिशाखं भेदः, उतैकत्वमिति; किं शाखान्तरे प्रत्यभिज्ञानमैक्यमवगमयति, नेति; किं शिरोव्रतवतामाथर्वणिकानां विद्योपदेशनियमो वेदान्तविहितविद्यासु शाखान्तराधिकरणन्यायावतारं निरुणद्धि, नेति; किं शिरोव्रतं विद्याङ्गम्, उताध्ययनाङ्गमिति । विद्याङ्गत्वे शाखान्तरनयावतारप्रतिबन्धकत्वात् प्रत्यभिज्ञानस्यैक्यानवगमकतया विद्याभेदः । अध्ययनाङ्गत्वे शिरोव्रतस्य विद्यासु शाखान्तरनयाप्रतिबन्धकतया प्रत्यभिज्ञानस्यैक्यावगमकत्वात् विद्यैकत्वमिति । तत्र पूर्वपक्षयुक्तिमाह **अविशेषे**ति । 'अग्निहोत्रं जुहोति, दध्ना जुहोति' इत्यादिषु जुहोतिपदस्य पुनःश्रवणेऽपि दध्नेति विशेषः श्रूयते । तद्व्यावृत्त्यर्थ**मविशेषपुनःश्रवणस्ये**त्युक्तम् । 'इडो यजति, बर्हिर्यजति, तनूनपातं यजति' इत्यादिषु हि यजतिशब्दादेः पुनःश्रवणं भेदकं दृश्यते एकस्यामपि शाखायाम्[2] । अनयोर्भेदहेतुत्वमस्तु; ततः किमित्यत्राह **शाखान्तरे चे**ति । शाखान्तरत्वादेव शाखान्तराधिकरणे या सिद्धान्तयुक्तिः सैवात्रापि स्यादिति [3]तयैवालमिति शङ्कायामधिकां पूर्वपक्षयुक्तिमाह **अत एवे**ति । **अत एव**—विद्याभेदादेवेत्यर्थः । कथमन्यथा नियमानुपपत्तिरित्यत्राह **विद्यैक्य** इति । ब्रह्मविद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तिरनिष्टा । विद्यैक्ये तदङ्गस्य शिरोव्रतस्यान्येषामपि प्राप्तेर्न नियमोपपत्तिः । तस्मान्न विद्यैक्यमित्यर्थः ।

---

1 अयं तालपाठः । 2 शाखायामित्यत्र वाक्यच्छेदो(भावप्रकाशिकादर्शितो) ग्राह्यः ।

3 तयैवालमित्यस्य, अलंश्रमेणेत्यत्रेव तत्साध्यं नास्तीति नार्थः । किंतु अलं-पर्याप्तिः । तद्युक्तिसाध्या पर्याप्तिरित्यर्थः । एवमसकृदिह प्रयोगः ।

एवं प्राप्ते उच्यते सर्ववेदान्तप्रत्ययमेकमुपासनमिति। कुतः। चोदनाद्यविशेषात्। चोदना तावत् उपासीत, विद्यादित्येवंजातीयको धात्वर्थविशेषविधिः। आदिशब्देन; "एकं वा संयोगरूप-चोदनाख्याऽविशेषात्" इति कर्मकाण्डशाखान्तराधिकरणसूत्रोक्ताः संयोग-रूप-आख्या गृह्यन्ते। एषां चोदनादीनामविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते। तथा हि—छान्दोग्यवाजसनेयकयोः "वैश्वानरमुपास्ते" इति चोदना तावदेकरूपा। वेद्यैकनिरूपणीयस्वरूपस्य विदिपर्यायस्योपासेर्वेद्यभूतवैश्वानरैक्यात् रूपमप्यविशिष्टम्। आख्या च वैश्वानरविद्येत्यविशिष्टा। फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः। अत एभिः प्रत्यभिज्ञानात् शाखान्तरेऽपि विद्यैक्यम्॥ १॥

यत्तूक्तम् अविशेषपुनश्श्रवणात् प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमिति, तदनुभाष्य परिहरति—

**भेदान्नेति चेदेकस्यामपि ॥ ३-३-२ ॥**

अविशेषपुनश्श्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विद्यैक्यमिति चेत्—एकस्यामपि विद्यायां प्रतिपत्तृभेदात्[1] पुनः श्रुतिः प्रकरणान्तरं चोपपद्यते। यत्र ह्येकस्मिन् प्रतिपत्तरि पुनःश्रुतिः प्रकरणान्तरं च विद्यते, तत्रान्यथानुपपत्त्या विधेयभेदात् विद्याभेदः। प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनःश्रुत्याद्युपपत्तेस्तत्र न विधेयान्तरसंभवः॥ २॥

यच्चोक्तम् शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शनात् विद्याभेदः प्रतीयत इति—अत्राह—

**स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः॥ ३-३-३॥**

नैतदस्ति—शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयतीति; शिरोव्रतस्य विद्याङ्गत्वा-

---

राद्धान्तमारभते **एवं प्राप्त** इति। सूत्रे प्रतिज्ञाखण्डं सपूरकपदमुपादत्ते सर्वेति। **सर्ववेदान्तप्रत्ययं** सर्वेषु वेदान्तेषु प्रतीयमानमित्यर्थः। कर्मकाण्डसूत्रस्मारणपरत्वात् तत्रस्थम् **एक**मिति पदमध्याहृतम्। ऐक्यहेतुषु संयोगनिर्देशस्य प्राथम्येऽपि चोदनायाः प्राधान्यात् **चोदनाद्यविशेषा**दित्युक्तम्। कर्मव्यावृत्तोपासनवाचिधात्वभिप्रायेण **धात्वर्थविशेषे**त्युक्तम्। एकस्यां शाखायाम्, विद्यादिति, शाखान्तरे, उपासीतेति विधिपदे सति तत्राप्यैक्यसिद्धिरित्यभिप्रायेण **विदिपर्यायस्योपासे**रित्युक्तम्। द्रव्यदेवते कर्मणो रूपम्; विद्यायास्तु उपास्यैकनिरूपणीयत्वात् तदेव रूपम्॥ १॥

अनन्तरसूत्रमवतारयति यत्तूक्तमिति। **भेदान्नेति चेदेकस्यामपि**॥ शाखान्तराधिकरणसिद्धान्तसाधकहेतुः संक्षिप्तः प्रथमसूत्रे; पूर्वपक्षशङ्कापरिहारः संक्षिप्तो द्वितीये। **विधेयभेदान्न विद्यैक्यमिति**। विधेयं सामान्यम्, विधेयविशेष उपासनम्। **प्रतिपत्तृभेदादि**ति। प्रकरणभेदाभ्युपगमे प्रतिपत्तृभेदात् परिहारः। प्रकरणभेदो नास्तीति च परिहार्यम्। प्रतिपत्तृभेदादुपपत्तिं व्यतिरेकपूर्वकमुपपादयति **यत्र हीति**। **अन्यथानुपपत्त्येति**। [1]प्रतिपत्तृभेदाभावे अविशेषपुनश्श्रवणप्रकरणभेदयोर्वैयर्थ्यरूपानुपपत्तिः॥२॥

अनन्तरसूत्रं शङ्कामुखेनावतारयति **यच्चोक्तमिति**। **स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः**॥ शिरोव्रतस्य विद्याङ्गत्वे सति हि विद्यैक्यात् सर्वशाखिनां शिरोव्रतप्राप्तिः।

---

1 प्रतिपत्तृभेदः तत्तच्छाखाध्येतृपुरुषभेदः।

भावात् । स्वाध्यायस्य तथात्वे हि तन्नियमः—स्वाध्यायस्य तथात्वसिद्ध्यर्थं—तज्जन्यसंस्कार-भाक्त्वसिद्ध्यर्थं हि शिरोव्रतोपदेशनियमः, ; न विद्यायाः । कुत एतत् । "नैतदचीर्णव्रतोऽधीते" इति तस्याध्ययनसंयोगात् । समाचारेऽधिकाराच्च—समाचाराख्ये ग्रन्थे, "इदमपि वेदव्रतेन व्याख्यातम्" इत्यतिदेशात् । "तेषामेवैतां ब्रह्मविद्यां वदेत"—वेदविद्यामित्यर्थः । सववच्च तन्नियमः—यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसंबन्धिनः तत्रैव भवन्ति, ; न त्रेताग्निषु ॥ ३ ॥

## दर्शयति च ॥ ३-३-४ ॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम् । तथा हि छान्दोग्ये, "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्युक्त्वा, "किं तदत्र विद्यते यदन्वेष्टव्यम्" इति प्रश्नपूर्वकमपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम् । तैत्तिरीयके तु छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य, "तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते । तत् उभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥ ४ ॥

तदेवं शाखान्तराधिकरणसिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनमाह—

## उपसंहारोऽर्थाभेदात् विधिशेषवत् समाने च ॥ ३-३-५. ॥

एवं सर्ववेदान्तेषु समाने सत्युपासने, वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तरे उपसंहारः कर्तव्यः । कुतः ? विधिशेषवत् अर्थाभेदात् । यथैकस्मिन् वेदान्ते श्रुतो वैश्वानरदहरादिविधिशेषो गुणः तद्विद्यासंबन्धात् तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते, तथा वेदान्तान्तरोदितोऽपि तद्विद्यासंबन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्य इत्यर्थः । चशब्दोऽवधारणे ॥ ५ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥

---

विद्याङ्गत्वमेव नास्ति, अध्ययनाङ्गत्वादित्यर्थः । **इदमपि वेदव्रतेन व्याख्यातमिति** । **वेदव्रतेन**—शिरोव्रतेनेदमपि व्याख्यातमित्यर्थः । शिरोव्रते पुष्कलोपदेशं कृत्वा व्रतान्तरं प्रस्तुत्य तत्र शिरोव्रतोक्तक्रममतिदिशत् वाक्यं शिरोव्रतं **वेदव्रत**शब्देन निर्दिदेश ॥ शिरोव्रतमध्ययनाङ्गं चेत् , 'तेषामेवैतां ब्रह्मविद्यां वदेत' इत्यस्य कोऽर्थ इत्यत्राह—**तेषामिति** । अध्ययनाङ्गं शिरोव्रतं तेषामेवेति कथं नियम इत्यत्राह **सववच्चेति** । कस्यचित् कर्मविशेषस्य शाखाविशेषवतामसाधारणत्वं युक्तमित्यर्थः । **सप्तसूर्याः**—आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभासः इत्युक्तसप्तसूर्यदेवताकं कर्म । शतौदनाख्यं च कर्म । सप्तसूर्योपक्रमाः शतौदनपर्यन्ताः होमा आथर्वणिकानामेकस्मिन्नग्नावेव क्रियन्ते, न त्रेताग्निषु ; तद्वन्नियम इत्यर्थः ॥ ३ ॥

**दर्शयति च** ॥ तैत्तिरीयकेऽपेक्षिताकथनात् छान्दोग्योक्तार्थोपजीवनं सिद्धम् । तच्च विद्यानां सर्ववेदान्तप्रत्ययन्यायविषयत्वं द्योतयतीत्यर्थः ॥ ४ ॥

अनन्तरसूत्रसङ्गतिमाह **तदेवमिति** । **उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च** ॥ **समाने सत्युपासने** । एकसंज्ञके एकफले चोपासने समाने इत्यर्थः । **गुण**शब्देनाङ्गमुच्यते । स्वशाखोक्तगुणस्तद्विद्योपकारकत्वादेव ह्यङ्गीक्रियते ; तथा शाखान्तरोक्तोऽपि गुणस्तद्विद्योपकारकत्वादङ्गीकार्य इत्यर्थः ॥ ....

**परे** तु—आख्याभेदं रूपभेदं [1]भूमिभोजनादिवत् शिरोव्रतादिधर्मभेदं [2]पुनःश्रुतिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनानि शाखान्तरसङ्ख्याप्रक्रियाश्च पूर्वपक्षहेतुतया वर्णयन्ति । तैत्तिरीयकं वाजसनेयकं शाट्यायनकमित्याख्याभेदाश्च प्रदर्शिताः । **भेदान्नेति चेदिति**, गुणभेदान्नेति चेदिति व्याचक्षते । वाजिनः पञ्चाग्निविद्यायां षष्ठमप्यग्निमामनन्ति । प्राणसंवादे च वाक्चक्षुःश्रोत्रमनोभ्यः छान्दोग्यसिद्धेभ्यः चतुर्भ्यः प्राणेभ्योऽधिकं पञ्चमं 'रेतो ह वै प्रजापतिः' इत्यादिना आमनन्ति । अतो गुणभेदः । साम्पादिकाग्न्यभिप्राया पञ्चसङ्ख्या ; षष्ठस्तु छन्दोगैरप्युपसंहार्यः । प्राणसंवादे चाधिकस्योपसंहारो न विरुद्ध इति परिहरन्ति । **दर्शयति चेति** सूत्रमपि—'सर्वे वेदा यत्पदमामनन्ति' इति वेद्यब्रह्मैकत्वोपदेशात्, 'महद्भयं वज्रमुद्यतम्' इति काठकोक्तभयहेतुत्वस्य 'अथ तस्य भयं भवति' इति तैत्तिरीयके भेदनिन्दयैव परामर्शात्, वाजसनेयकोक्तस्य वैश्वानरस्य, 'यस्त्वेतमेवं प्रादेशमात्रम्' इति छान्दोग्ये सिद्धवदुपादानाच्च वेदः अग्रचप्रायन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिं दर्शयतीति व्याचक्षते । **विधिशेषवदिति** विधिशेषशब्दश्चाग्निहोत्रादिधर्मपरत्वेन व्याख्यातः ।

तत्र तावत् कार्त्स्न्येनायं पादो **ब्रह्मज्ञानपक्षे** न सङ्गच्छते ; प्रत्युत तद्विरुद्ध एव ; शास्त्रस्य निर्विशेषवस्तुनि तात्पर्याभ्युपगमात् ; गुणोपसंहारस्य च तद्विरुद्धत्वात् ॥ गुणानामतात्त्विकत्वान्नासङ्गतिरिति चेत्—अत एव ह्यसङ्गतिः । न हि तत्त्वप्रधानशास्त्रस्यातात्त्विकगुणप्रतिपादनपरत्वं युक्तम् ॥ क्रममुक्त्युपायत्वादुचितमिति चेत्—क्रममुक्तिर्नाम किं सगुणप्राप्तिपूर्विका निर्गुणब्रह्मप्राप्तिः ? तदयुक्तम् ; प्रमाणाभावात् । गुणविशिष्टदहरोपासनेन पर[3](रं)ज्योतिःप्राप्तिः, तत् प्राप्तस्य निरङ्कुशैश्वर्यं च श्रुतम् । न हि पर(रं)ज्योतिःप्राप्तेरन्यो मोक्षोऽस्ति ॥ सगुणोपासनेन निर्गुणविद्योत्पत्त्या मुक्तिः क्रममुक्तिरिति चेत्—न ; सगुणोपासनस्य विपरीतवासनाजनकत्वेन निर्गुणविद्योत्पादनप्रत्यनीकत्वात् ॥ अदृष्टद्वारा निर्गुणविद्योत्पादकत्वमिति चेन्न ; सगुणोपासनस्यैव परब्रह्मप्राप्तिं प्रति अव्यवहितोपायत्वप्रतिपादकप्रमाणविरोधात् । आनन्दादीनां सर्वत्रानुवृत्तेर्निर्गुणविद्याया अभावाच्च । अतः पादोऽयं तत्पक्षानुपयुक्तः, विरुद्धश्च ।

आद्ये तु—शाखान्तरीयगुणोपसंहारफलसमर्पकप्रयोजनसूत्रवशात् चिन्तायाः सर्वविद्यासाधारणतावगतेः पूर्वपक्षस्य शाखान्तरीयसर्वविद्यासाधारणतया तद्धेतुनाऽपि साधारणेन भवितुं युक्तम् । अतोऽविशेषपुनःश्रुतिः प्रकरणान्तरं चेत्युभयमपि भाष्ये निर्दिष्टम् ; न त्वाख्यारूपभेदादयः ; तेषां विद्याविशेषासाधारणत्वात् साधारणपूर्वपक्षानुपयोगात् । अत एव **भेदादिति चेदिति** सूत्रेऽपि ताभ्यामेव भेदः शङ्कितः ; न तु गुणभेदात् ; गुणभेदाद्यधीनभेदचिन्ताया उपरितनाधिकरणकार्यत्वात् । भाष्ये द्वितीयसूत्रस्थपूर्वपक्षहेतोराद्यसूत्रे उपन्यासः प्रतिपत्तिसौकर्यार्थः । पूर्वपक्षयुक्तिप्रतिपत्त्यनन्तरं सिद्धान्तयुक्तिप्रतिपत्तिर्हि सुकरा । किञ्च तैत्तिरीयकं वाजसनेयकमित्यादिराख्याभेदः **परैर्दर्शितः** ; न तु भाष्ये ;

---

1 कारीरीवाक्यमधीयानाः भूमौ भोजनमाचरन्तीति शाबरभाष्योक्तं ग्राह्यम् । 2 सर्वमिदं पूर्वमीमांसाशाखान्तराधिकरणसूत्रादिगदितम् । 3 परंज्योतिःप्राप्तीति पठित्वा परमिति विभक्तिप्रतिरूपकमव्ययमित्यादि उक्तं भावप्रकाशिकायाम् ।

अन्यथात्वाधिकरणम्—३ ३-२

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३-३-६ ॥

एवं चोदनाद्यविशेषात् विद्यैकत्वम्, एकत्वे च गुणोपसंहारः कर्तव्य इत्युक्तम् । अतः परं

वैश्वानरविद्या दहरविद्येतिवत् तैत्तिरीयकविद्या वाजसनेयकविद्येति तत्तदृषिप्रवचननिमित्तनामधेयानां विद्यानामत्वेन प्रसिद्ध्यभावात् । प्रसिद्ध्यभ्युपगमेऽपि प्रवचननिमित्तनामधेयानां विद्याभेदाभेदयोर-प्रयोजकत्वाच्च । तित्तिरिताण्डिप्रवचननिमित्ते संज्ञाभेदेऽपि हि दहरोपासनमभिन्नम्; तैत्तिरीयकमिति नाम्न एकत्वेऽपि पुरुषविद्यादहरविद्ययोर्भेदश्च दृश्यते । वेदान्तानां ब्रह्मविद्याप्रधानत्वात् पादाद्ये साधारणेऽधिकरणे वैश्वानरादिविद्योदाहृता ; न तु प्राणविद्यादिः । **दर्शयति** चेत्यत्र सर्ववेदान्तप्रत्ययत्वे वेद्यब्रह्मैकत्वोपदेशो हेतुत्वेन वक्तुमयुक्तः ; दहरवैश्वानरादिज्ञानानामप्यभिन्नत्वप्रसङ्गात । काठकतैत्तिरीय-कयोर्भयहेतुत्वस्य गुणस्योपन्यासश्च न विद्यैक्यसाधकः ; काठके ईश्वरस्य नियन्तृत्वप्रतिपादनात्, 'अथ तस्य भयं भवति' इत्युपासनविच्छेदस्य भयहेतुत्वप्रतिपादनाच्च वाक्ययोर्भिन्नार्थत्वात् । 'भीषाऽस्मात्' इत्याद्युक्ते भयहेतुत्वे विवक्षितेऽपि तैत्तिरीयकठवल्लीवाक्ययोर्मिथःसाकाङ्क्षत्वविरहेणोपजीव्योपजीवकभावा-भावेन तत्कृतैक्यज्ञापनस्य विफलत्वाच्च । वैश्वानरविद्यायां च यस्त्वेतमिति न वाजसयेयकोक्तानुवादः ; स्वशाखावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वसंभवात् तस्य वाक्यस्य । अतः क्वचिदपुष्कलो-पदेशः शाखान्तरसाकङ्क्षतया तदेकवाक्यत्वे लिङ्गमिति सूत्रार्थो युक्तः । विधिशेषशब्दस्य स्वशाखासमर्पित-वेद्यगुणपरत्वं युक्तम् । उपकारकत्वमात्रादपि तद्विद्योपकारकत्वे दृष्टान्तस्यौचित्यातिरेकात् ।

**अन्ये** तु—प्रयोजनसूत्रं [1]पृथगधिकरणमाहुः—श्रुतिषु कस्यचिदङ्गस्यानुक्तेरज्ञानमूलत्वायोगात् उपदेशे सति कार्यस्यावश्यम्भावेन कार्याभावायोगाच्च परिशेषात् क्वचिदनुक्तेः स्वरूपाभावनिबन्धनत्वात्, अनन्तानां धर्माणामुपसंहारायोग्यत्वाच्च सत्यपि विद्यैकत्वे नान्यत्र श्रुता धर्माः अन्यत्रोपसंहार्या इति पूर्वपक्षं कृत्वा—तच्छाखाम्नाताङ्गवदङ्गान्तरमप्यर्थाभेदादुपसंहार्यम् ; क्वचिदवचनमस्य शाखान्तरीयाङ्गोप-संहारस्य वैकल्पिकत्वसूचनार्थम् ; प्रतिकल्पं समानेऽपि कर्मणि प्रयोगभेददर्शनात् । **तलवकारादपि ताण्डिके**ऽधिकमशिशिषादिषु दीक्षादिसम्पादनं पुरुषविद्यायां कृतम् ; तदत्रोदाहरणमिति वर्णयन्ति । कर्मैकत्वे स्थिते सति अङ्गानामुपसंहर्तव्यत्वं शाखान्तराधिकरण एव सिद्धमिति तत्स्मरणमात्रस्य कृतत्वात् पूर्वपक्षोत्थान-हेत्वाधिक्याभावाच्च पृथगधिकरणत्वमयुक्तम् । आनन्त्यादिकमपि हि तत्रापि वक्तुं शक्यते ॥ तत्र सिद्धमप्यत्रोपजीव्यत्वात् सौकर्याय चिन्तनीयमिति चेन्न ; श्रुतिलिङ्गादिस्वरूपस्यापि चिन्तनीयत्वप्रसङ्गात् । न च शाखान्तरोक्तानां सर्वेषां विकल्पः; किन्तु तुल्योपकाराणामेव, तलवकारताण्डिकस्थपुरुषविद्यामात्रमिह नोदाहार्यम् ; सर्वविद्यासाधारणत्वाभावात् । प्रदर्शनार्थमुदाहृतमिति चेत्—उदाह्रियताम्, संशयाभावात्तु पृथग्विचारो न युक्त इति ॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥

**अन्यथात्वं शब्दादिति चेन्नाविशेषात्** ॥ अवान्तरसङ्गतिमाह—**एव**मिति । सामान्येनोपा-सनशास्त्रेषु सर्वशाखाप्रत्ययन्यायस्यावतीर्णत्वमुक्तम् । तत्र भेदाभेदहेतुसद्भावासद्भावौ विद्याविशेषेषु निरूप्येते इति सङ्गतिः । वैश्वानरविद्यादिकायाश्चोदनाद्यविशेषाद्विद्यैक्यमुक्तम् ; अत्रापि तथा स्यादिति

[1] शांकरे पृथगधिकरणत्वं सविवादमिति तदुपेक्षा । विशेषविचाराभावाच्च । भा० प्र०

काश्चन विद्या अधिकृत्य—प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति, नेति निरूप्य निर्णीयते।

अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च। वाजिनां तावत्, "द्वया ह प्राजापत्या देवाश्चासुराश्च" इत्यारभ्य, "ते ह देवा ऊचुः हन्तासुरान् यज्ञे उद्गीथेनात्ययाम" इति उद्गीथेनासुरविध्वंसनं प्रतिज्ञाय उद्गीथे वागादिमनःपर्यन्तदृष्ट्यावसुरैरभिभवमुक्त्वा, "अथ हेममासन्यं प्राणमूचुः" इत्यादिनोद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, "भवत्यात्मना ; पराऽस्य द्विषन् भ्रातृव्यो भवति, य एवं वेद" इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता। एवं छन्दोगानामपि, "देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य, "तद्ध देवा उद्गीथमाजह्रुरनेनैनान् अभिहनिष्यामः" इति उद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय, "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्यादिनोद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, "यथाऽश्मानमाखणम् ऋत्वा विध्वंसते, य एवंविदि पापं कामयते" इति शत्रुपराभवायोद्गीथे प्राणदृष्टिर्विहिता। वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणात् वेदनविषयो विधिः कल्प्यते। उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितम्।

तत्र संशय्यते-किमत्र विद्यैक्यम्, उत नेति। किं युक्तम्?। विद्यैक्यमिति। कुतः?। उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्वश्रवणात् चोदनाद्यविशेषात्। फलसंयोगस्तावत् शत्रुपरिभवरूपो न विशिष्यते। रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादविशिष्टम्। चोदना च विदिधात्वर्थगता अविशिष्टा ; आख्या चोद्गीथविद्येत्यविशिष्टा।

---

शंकया अवान्तरसङ्गतिः। **अस्तीत्यादि**। **द्वयाः**— द्विविधाः। उद्गीथेनात्ययाम—उद्गीथेन जयामेत्यर्थः। **आसन्यम् (आसन्न्यम्** [1]आसन्नम्) मुख्यमित्यर्थः, **भवत्यात्मनेति**। अस्य द्विषन् भ्रातृव्यः अरातिः [2]**पराभवतीत्यर्थः**। **संयेतिरे**—युद्धं चक्रुः। **यथाश्मानमित्यादि**। आखन्यत इत्याखणं मृत्पिण्डः। यथा मृत्पिण्डोऽश्मानं प्राप्य विध्वंसते इत्यर्थः। नात्र वेदनविधिः श्रूयत इत्यत्राह **वेदनविषयेति**। फलसाधनत्वश्रवणे सति हि विधिकल्पनम्। फलसाधनत्वमेव नास्ति ; उद्गीथविद्यायाः क्रतुसाद्गुण्यमेव फलमिति अर्थवादोक्तशत्रुपराभवादौ तात्पर्याभावादित्यत्राह---**उद्गीथविद्याया इति**। अर्थवादो हि स्तावकत्वेन रुचिजनकः ; असता गुणेन रुचिर्न जायत इति तत्रापि तात्पर्यमस्त्येवेति "तदुपर्यपि बादरायणः" इत्यत्र प्रतिपादितमित्यर्थः। एवं विषयशुद्धिः कृता। अथ संशयमाह-**तत्रेति**। किम् उभयत्र विद्यैक्यम्, उत विद्याभेदः ; किमुभयत्र विद्या प्रत्यभिज्ञायते, नेति ; किमुभयत्रोद्गीथस्यैवोपास्यत्वम्, उत क्वचिदुद्गीथावयवः प्रणवः क्वचित् उद्गाता चोपास्यः ; 'ओमित्येतदक्षरमुद्गीथमुपासीत,' 'तेभ्य एष प्राण उदायत्' इति वाक्यद्वयं किमुभयत्र विहितस्योपासनस्योद्गीथविषयतामुद्गातृविषयतां चावगमयति, नेति। यदा नावगमयति, तदोभयत्रोद्गीथस्यैवोपास्यत्वेन विद्याप्रत्यभिज्ञानात् विद्यैकत्वं स्यात्। यदा तु वाक्यद्वयमुद्गीथावयवस्य प्रणवस्योद्गातुश्चोपास्यतामवगमयति, तदा रूपभेदेन छान्दोग्ये

---

1 आसन्नपदात् स्वार्थे ष्यञिति एतत्पाठविवरणं भावप्रकाशिकायाम्। ...............
.....2 परा इत्यत्र भवतीत्यस्यानुषङ्गः। उपासकः आत्मना भवति—स्वयं सत्तां लभते। तस्यारातिश्च पराभवं लभत इत्यर्थः।

अत्र राद्धान्तिच्छायया परिचोद्य परिहरति, अन्यथात्वं शब्दादिति चेन्नाविशेषात् इति। यदुक्तं विद्यैक्यमिति, तन्नोपपद्यते ; रूपभेदात् । रूपान्यथात्वं हि शब्दादेव प्रतीयते। वाजसनेयके हि, "अथ हेममासन्यं प्राणमूचुस्त्वं नः उद्गायेति ; तथेति तेभ्य एष प्राण उदगायत्" इति उद्गानस्य कर्तरि प्राणदृष्टिरेवंशब्दादवगम्यते । छान्दोग्ये, "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति उद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्याऽसुरपराभव- मुक्त्वा, "य एवंविदि पापं कामयते" इति एवंशब्दात् कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अतः एकत्र कर्तरि प्राणदृष्टिशब्दात् अन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम्। रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इति चेत्—तन्न ; अविशेषेण हि उभयत्रोद्गीथसाधनकपरपरिभव उपक्रमे प्रतीयते। वाजसनेयके, "ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इति उपक्रमे श्रूयते । छान्दोग्येऽपि, "तद्ध देवा उद्गीथमाजह्रुरनेनैना- नभिहनिष्यामः" इति। अत उपक्रमाविरोधाय, 'तेभ्य एष प्राण उदगायत्' इत्यध्यस्तप्राणभाव उद्गीथः उद्गानकर्मभूत एव पाकादिष्वोदनादिवत् सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते । अन्यथोपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात्। अतो विद्यैक्यम् ॥ ६॥

इति प्राप्ते प्रचक्ष्महे—

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ३-३-७ ॥

नवेति पक्षं व्यावर्तयति । न चैतदस्ति, यत् विद्यैक्यमिति । कुतः। प्रकरणभेदात्। "ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रकृतमुद्गीथावयवभूतं प्रणवं प्रस्तुत्य, 'एतस्यैवाक्षरस्यो- पव्याख्यानं भवति'....देवासुरा ह वै यत्र संयेतिरे' इत्यारभ्य, 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इत्युद्गीथावयवभूतप्रणवविषयमुपासनं य छन्दोगा अधीयते ; वाजिनस्तु—तादृशप्राचीनप्रकरणाभावात् 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इति कृत्स्नमुद्गीथं प्रस्तुत्य, 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाय' इत्यादि कृत्स्नोद्गीथविषयमधीयते ।

---

वाजसनेयके च एकविद्याप्रत्यभिज्ञानाभावात् विद्याभेदः स्यादिति । सूत्रमवतारयति अत्रेति । त्वं न उद्गायेति तेभ्य एष प्राण उदगायत् इति । उद्गातरि प्राणदृष्टिं कृतवन्त इत्यर्थः । 'एवं वेद', 'एवंविदि' इत्यत्र एवंशब्दाभ्यां कर्तरि प्राणदृष्टिः कर्मणि प्राणदृष्टिश्च कथ्यत इत्यर्थः । केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति। चोदनाद्यविशेषसमुच्चय एवैक्ये प्रमाणम् । शब्दान्तरा- दिष्वन्यतमं भेदकमित्यर्थः । पूर्वपक्षी सिद्धान्तिच्छायया कृतं चोद्यं परिहरति तन्नेति । उपक्रमाविरोधाय उपसंहारगतः कर्तृवाचिशब्द औपचारिकः स्यादित्यर्थः ॥ ६ ॥

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ उद्गीथशब्दस्य कृत्स्नोद्गीथपरत्वम् 'ओमित्येतदक्षरम्' इत्यनेन व्यावर्तितम्। पञ्चभागस्य हि साम्नो द्वितीयभाग उद्गीथः । प्रस्तावोद्गीथ- प्रतिहारोपद्रवनिधनाख्याः पञ्च भागाः। तेषु द्वितीयस्योद्गीथस्यावयवभूतः प्रणवः । तस्योद्गीथशब्दे- नाभिधानं स्वरविशेषसिद्ध्यर्थम् । तादृशप्राचीनप्रकरणाभावादिति । उद्गीथावयवभूतप्रणवस्यैवोद्गीथ- शब्देनाभिधानं न प्रकृतं वाजसनेयके ; 'ओमित्येतदक्षरमुद्गीथमुपासीत' इतीदृशवाक्याश्रवणात् । उद्गीथशब्दस्य स्वतोऽसङ्कुचितवृत्तित्वात् कृत्स्नोद्गीथपरत्वम् । उद्गीथसंबन्धित्वेऽध्यस्तप्राणभावत्वे च

अतः प्रकरणभेदेन[1] विधेयभेदः, विधेयभेदे च रूपभेद इते न विद्यैक्यम्। किञ्च, अथ ह एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इति पूर्वप्रकृतः उद्गीथावयवभूतः प्रणव एवाध्यस्त-प्राणभावः छन्दोगानामुपास्यः, वाजिनां तु कृत्स्नस्योद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति। 'अथ हेममासन्यं प्राणमूचुः त्वं न उद्गायेति। तथेति तेभ्य एष प्राण उदगायत्' इति उद्गातरि प्राणाध्यासं निर्दिश्य, 'य एवं वेद' इत्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते। अतश्च रूपभेदः। न चोद्गातर्युपास्ये विहिते, 'उद्गीथेनात्ययाम' इत्याख्यायिकोपक्रमविरोधः शङ्कनीयः; उद्गातुरुपासने उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात् तस्यापि परपरिभवाख्यं फलं प्रति हेतुत्वात्। अतो रूपभेदात् विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम्। परोवरीयस्त्वादिवत्--यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम्॥ ७॥

संज्ञातश्चेत्तदुक्तम्, अस्ति तु तदपि ॥ ३-३-८ ॥

उद्गीथविद्येति संज्ञैक्यात् तत्—विद्यैक्यमुक्तं चेत्, तत्—संज्ञैक्यं विधेयभेदेऽप्यस्त्येव; यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे, कुण्डपायिनामयनाग्निहोत्रे च; यथा चोद्गीथविद्येति छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु॥ ८॥

---

समानेऽप्युद्गीथावयवकर्तृत्वेनोद्गीथविषयत्वभेदाद्विद्याभेदः। **अतः प्रकरणभेदेने**ति। प्रकरणं विधेयार्थ-प्रतिपादकप्रदेशविशेषः[1]। तद्भेदेन विधेयभेदः। **विधेयभेदे च रूपभेद इती**ति। विधेयभेदे रूपभेदः फलित इत्यर्थः। नेत्येतावता पूर्वपक्षव्यावृत्तिसिद्धावपि वाशब्दप्रयोगाभिप्रेतमर्थमाह **किञ्चे**ति। यत्तु पूर्वपक्षिणाऽऽशङ्क्य परिहृतम्, सोऽपि सिद्धान्तहेतुरेवेत्यर्थः। अध्यस्तप्राणभावस्योद्गातुरुपास्यत्वे उपक्रमविरोध इत्यत्राह **नचे**ति। न ह्युपक्रमाधिकरणे उपक्रमानवगतमुपसंहारावगतं त्याज्यमित्युक्तम्; अपि तूपक्रमावगतस्य न भङ्गः कार्य इति। अत्र तु उपक्रमावगतं तदधिकं च स्वीक्रियते। 'उद्गीथे-नात्ययाम' इत्यस्योद्गातृगीयमानोद्गीथे तात्पर्यमिति भावः। **परोवरीयस्त्वादिव**दिति सौत्रं पदम्। उपास्यैकत्वे दृष्टिविशेषणैकत्वे च सत्यपि दृष्टिविशेषणभूतपरमात्मनो हिरण्मयत्वपरोवरीयस्त्वादिधर्म-मात्रभेदात् तत्र विद्याभेदः कृतः; किंपुनः उपास्यभेदे सतीत्यर्थः। [2]परोरजा इतिवत् परोवरीयान्। वरीयसां परः। तस्य भावः परोवरीयस्त्वम्। एवं कर्मकर्तृवैषम्यमुक्तम्॥ ७॥

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि**॥ कुण्डपायिनामयनाग्निहोत्रं मासमात्र[3][होम]समाप्तिकम्। 'ज्योतिष्टोमेन यजेत', 'वाजपेयेन यजेत' इतिवत् विद्यानामधेयानां स्ववाक्यस्थत्वाभावेऽप्यविच्छिन्नसं-प्रदायक्रम एव विद्यानां तत्तन्नामत्वे प्रमाणम्॥ ८॥

---

1 प्रकरणं-प्रक्रमः उपक्रम इति भावप्रकाशिका। तत्र भेदो वैलक्षण्यम्। तेन।

2 यथा रजसः पर इति विग्रहे परशब्दस्य पूर्वनिपातादि, तद्वदत्र वरीयोभ्यः पर इति विग्रहे इति दर्शयति परोरजा इतिवदिति। तावता परोरजसि रजःसंबन्धराहित्यवत् अत्राप्यसंबन्धो नेति ज्ञापनाय षष्ठीमादृत्य विवृणोति वरीयसामिति। वरीयोभ्यः परो वरिष्ठः परोवरीयान्। शेषं भावप्रकाशिकायाम्। पारस्करादित्वं निर्धारणसमासस्याप्यत्र गमकमिति वा

3 होमशब्दः संपातायात इति भावप्रकाशिका।

**व्याप्तेश्च समञ्जसम् ॥ ३-३-९ ॥**

छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य, 'तद्ध देवा उद्गीथमाजह्रुः' इत्युद्गीथशब्दस्य प्रणवविषयत्वमेव समञ्जसम् । अवयवे च समुदायशब्दः 'पटो दग्धः' इत्यादिषु दृश्यते । अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्दनिर्दिष्ट इति स एव प्राणदृष्ट्योपास्यः छान्दोग्ये प्रतिपत्तव्यः । वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथशब्द इति कृत्स्नोद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥ ९ ॥ इति अन्यथात्वाधिकरणम् ॥

---

प्रणवमात्रस्योद्गीथशब्दाभिधानं पूर्वमेव [1]पर्यवसितम् ; अत्र तूद्गीथशब्दस्य कृत्स्नोद्गीथविषयत्वात् विद्यैक्यमिति शङ्कायामाह—**व्याप्तेश्च समञ्जसम् ॥ उत्तरास्वपीति ।** "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यारभ्य, "ते नु विदित्वोर्ध्वा ऋचस्साम्नो यजुषः स्वरमेव प्राविशन् । यदा वा ऋचमाप्नोति, ओमित्येवातिस्वरति" इति, तथा "असौ वा आदित्य उद्गीथः । एष प्रणवः । ओमिति ह्येष स्वरन् एति" इति, तथा, "अथाध्यात्मम् य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत । ओमिति ह्येष स्वरन् एति" इत्यादिषूद्गीथशब्दस्य प्रणवविषयत्वं स्फुटम् । अवयवमात्रे समुदायवाचिशब्दप्रयोगः कथमित्यत्राह **अवयवे चेति । पटो दग्ध** इति । इदमुदाहरणं **व्याकरणोक्तम्** । पटैकदेशे दग्धेऽपि हि पटो दग्ध इति प्रयोगः । हेतुं सङ्क्षिपन्निगमयति **अत** इति ॥

**परैस्तु**—पूर्वपक्षे विद्यैक्यं वदद्भिरेव, छान्दोग्येऽप्युद्गीथशब्देन कर्तृत्वं लक्ष्यमिति रूपभेदः परिहृतः ; सिद्धान्ते च कर्तृपरत्वं लक्षणया निरस्तम् । भाष्ये तु वाजिभिरुक्तं कर्तृत्वं सौकर्याभिप्रायेणौपचारिकमिति पूर्वपक्षे रूपैक्यमभिहितम् । तत्तु साधिष्ठम् ; फलनिर्देशवदुपक्रमगतानेकोद्गीथशब्दस्य स्वारस्यापरित्यागात । **परस्य** ह्युद्गीथशब्दद्वयमस्वरसम् । तच्चोपक्रमस्थम् । उद्गीथस्य फलसाधनत्वनिर्देशास्वारस्यं च । अतो भाष्योक्तः पूर्वपक्षः उभयत्र उद्गीथसाधनः प्रबलः । प्रबलस्य पूर्वपक्षस्य निरासश्च सिद्धान्तदृढिम्ने स्यात् ; न तु मन्दस्य । तस्मिन्निरस्तेऽपि हि तत्रोक्तदोषराहित्यात् प्रबलः पूर्वः पक्ष उदेतीति ।

**व्याप्तेश्च समञ्जस**मिति सूत्रमधिकरणान्तरमाहुः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति वाक्यं विषयः । अध्यासापवादैकत्वविशेषणपक्षेष्वन्यतमनिर्धारणकारणाभावादनिर्धारणमिति पूर्वः पक्षः ; त्रयाणामाद्यपक्षाणां सावद्यत्वात् विशेषणपक्षस्य तदभावाच्च स एवोपादेय इति सिद्धान्तः । अध्यासेन्यतरबुद्ध्या नान्यतरबुद्धिनिवृत्तिः । तदानीम् ओङ्कारम् उद्गीथाध्यासविशिष्टमुपासीतेति वाक्यस्यार्थः । अपवादे त्वन्यतरबुद्ध्याऽन्यतरधीर्निवर्तत इति भिदा ; यथा सर्पं रज्जुं जानीयादित्युक्ते सर्पधीनिवृत्तिः । ब्राह्मणो भूमिदेव इतिवत् अनतिरिक्तार्थत्वमेकत्वम् । विशेषणत्वं नाम सामान्यरूपेण प्रतिपन्नस्यार्थस्य विशेष(षे?)णावच्छिन्नतया समर्पणम् ; यथा उत्पलस्य नीलमिति विशेषणम् । ओङ्कारश्च सर्ववेदव्यापी । तस्य उद्गीथशब्देन विशेषणं नाम उद्गीथावयभूतस्य तस्य तथात्वेन लक्षणया समर्पणम् । तत्राध्यासपक्षोऽनुपपन्नः ; लक्षणाप्रसङ्गात् । उद्गीथशब्दो हि ओङ्कारे लाक्षणिकः ; उद्गीथाध्यासविशिष्टताया उद्गीथशब्दार्थत्वाभावात् । एवम् ओङ्कारशब्दश्च उद्गीथे लाक्षणिकः ।

---

1 पूर्वमेव-पूर्वखण्डमात्रे ।

फलं च कल्प्यम्। "आपयिता ह वै कामनाम्" इति फलं च आप्त्यादि दृष्टिफलमिति न तदत्र फलम्। अपवादेऽपि फलाभावस्तुल्यः। न च मिथ्याज्ञाननिवृत्तिः फलम्; आत्मनि भ्रमनिवृत्तिवत् पुरुषार्थरूपत्वाभावात्। अशक्यश्चापवादः; ओङ्कारोद्गीथबुद्धयोरन्यतरस्या अनिवृत्तेः। अनिवृत्तिश्च पूर्वमेतयोरन्योन्याध्यासाभावात्। रज्जुसर्पभ्रान्तिमतः पुरुषस्य हि सर्पं रज्जुं जानीयादित्युक्ते सर्पधीनिवृत्तिः। एकत्वपक्षोऽपि न युक्तः, एकेन शब्देन विवक्षितार्थसिद्धौ शब्दान्तरवैयर्थ्यात्। सन्देहाद्यभावाच्च पिकः कोकिल इतिवन्न सप्रयोजनता। किञ्च उद्गीथशब्दः कृत्स्नद्वितीयभक्तिविषयत्वात् ओङ्कारातिरिक्तवृत्तिः; ओङ्कारशब्दोऽपि उद्गीथावयवव्यतिरिक्तप्रणवेऽपि वर्तमानत्वात् उद्गीथातिरिक्तवृत्तिरिति नैकत्वपक्षोऽपि न्याय्यः। अतः पारिशेष्यात् सार्वत्रिकमोङ्कारम् उद्गीथशब्दोऽवयवलक्षणया विशिनष्टीति युक्तम्। न चाध्यासविशेषणपक्षयोर्लक्षणा तुल्येति मन्तव्या; अर्थान्तरे अर्थान्तरबुद्धिसमर्पणं विप्रकृष्टम्, अवयविवाचकशब्देन अवयवसमर्पणं सन्निकृष्टमिति, यथा पटादिशब्दानां पटाद्येकदेशसमर्पणमिति वैषम्यात्। अतो व्याप्तेः—प्रणवस्य सार्वत्रिकत्वाद्धेतोः तद्विशेषणत्वं समञ्जसमिति भक्त्यवयवो यः प्रणवः तमुपासीतेति विशेषणत्वं युक्तमिति।

एतत् सर्वम् अपरेषां योजनायामपि प्रायेण तुल्यम्।

अत्र ब्रूमः। 'व्याप्तेश्च' इति चशब्दस्वारस्यात् पूर्वाधिकरणशेषत्वं प्रतीयते,। तच्चापेक्षितम्; तदा कृत्स्नोद्गीथतदेकदेशविषयत्वलक्षणरूपभेदस्य अनेन सूत्रेण स्थापनासिद्धेः। किञ्च प्रणवस्योद्गीथशब्दविशेष्यतायां हेतुः ओङ्कारशब्दस्योद्गीथावयवव्यतिरिक्तवृत्तित्वं व्याप्तिशब्दविवक्षितमितीदमपि न साधीयः; उत्पलातिरिक्तवृत्तित्वेऽपि नीलशब्दस्य विशेष्यसमर्पकत्वाप्रसिद्धेः। उत्पलविशेषणत्वं हि प्रसिद्धम्। ततश्चोत्पलस्य नीलविशेष्यत्ववत् उद्गीथस्य प्रणवविशेष्यत्वमप्यविरुद्धं स्यात्। अतः उत्तरविद्यास्वनुगम एवोद्गीथशब्दस्य प्रणवविषयत्वे समञ्जसो हेतुः। अतः सूत्रस्य यथोक्तार्थपरत्वं पूर्वाधिकरणशेषत्वं च युक्तम्।

**अन्येषामैकाधिकरण्यमेवाभिमतम्**; योजनामात्रे वैषम्यम्। अन्यथात्वं विद्याभेद इति व्याख्यातम्। तदयुक्तम्; अन्यत्वमित्यनुक्तेः। **शब्दभेदा**दिति पाठभेदं कृत्वा, 'त्वं न उद्गायस,' उद्गीथमुपासाञ्चक्रिरे' इति प्रथमाद्वितीयाविभक्तिभेदादिति व्याख्यातम्। **नाविशेषा**दिति विभक्तिभेदेऽप्यर्थाविशेषादित्युक्तम्। तच्चायुक्तम्; रूपभेदाद्विद्याभेदस्य शङ्कासूत्रविवक्षितत्वे संभवति विभक्तिभेदादिति शङ्काया अभावात् तद्विषयव्याख्यानस्य मन्दत्वात्। अर्थैकत्वेऽपि, तमुपासीत स उपास्य इति विभक्तिभेदसंभवस्य स्फुटत्वात्। 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' इति विभक्तिभेदकृतशङ्कायाः पूर्वमेव परिहृतत्वाच्च। अतो रूपभेदप्रतिपादकवाक्यादिति व्याख्यानमुचितम्। '**प्रकरणभेदात्**—प्रकारभेदात्' इति चातीवास्वरसम्; प्रकरणशब्दरूढिभङ्गात्। भेदशब्दाध्याहाराच्च[1] ॥ इति अन्यथात्वाधिकरणम् ॥

---

1 प्रकरणभेदशब्दघटकस्य भेदशब्दस्य प्रकारपरत्वे च पुनर्भेदशब्दाध्याहारप्रसंगादित्यर्थः।

## सर्वाभेदाधिकरणम् । ३-३-३

### सर्वाभेदादन्यत्रेमे ॥ ३-३-१० ॥

छान्दोग्यवाजसनेयकयोः प्राणविद्याऽऽम्नायते, "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इत्यादि । तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य, वाक्चक्षुःश्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसंपत्त्वायतनत्वाख्यान् गुणान् प्रतिपाद्य, वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्तत्कार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य, वागादिसम्बन्धितया श्रुतान् वसिष्ठत्वादीन् गुणांश्च प्राणसम्बन्धितया प्रतिपादयति । एवं छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते । कौषीतकिनां तु प्राणविद्यायां तथैव ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः; न पुनर्वसिष्ठत्वादयो वागादिसंबन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः । तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति । किं युक्तम्?। भिद्यते इति । कुतः?। रूपभेदात् । यद्यप्युभयत्र प्राण एव ज्यैष्ठ्यश्रैष्ठ्यगुणक उपास्यः, तथाऽप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते, इतरत्र तु तद्विधुर इत्युपास्यरूपभेदात् विद्याभेदः—

इति प्राप्ते ब्रूमः—सर्वाभेदादन्यत्रेमे । नात्र विद्याभेदः, अन्यत्र—कौषीतकिनां प्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणा उपास्याः सन्ति । कुतः?। सर्वाभेदात्—प्रतिज्ञातप्राणज्यैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात् । तथा हि—छन्दोगवाजसनेयिनां प्राणविद्यायाम्, [एता ह वै देवताः] "अहंश्रेयसि व्यूदिरे", "अहंश्रेयसे विवदमानाः" इति चोपक्रम्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यक्षमायिकलं प्रतिपाद्य, प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं चाभिधाय, सर्वेषां प्राणाधीनस्थितित्व—तदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्य(श्रैष्ठ्य?)मुपपादितम् । एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम्, "अथ हैनं वागुवाच यदहं वसिष्ठ(ष्ठो)ऽस्मि त्वं तद्वसिष्ठोऽसि'

---

**सर्वाभेदादन्यत्रेमे** ॥ पूर्वाधिकरणे दृष्टिविशेषणतया प्राणः प्रस्तुतः; तद्विषयस्वतन्त्रोपासनं निरूप्यत इति सङ्गतिः । **छान्दोग्येत्यादिना** विषयः शोध्यते । "प्रशस्यस्य श्रः" इति प्रशस्यशब्दस्य श्रादेशात् श्रैष्ठ्यं प्रशस्यत्वम् । "ज्य च" इति प्रशस्यशब्दस्य ज्यादेशः, "वृद्धस्य च" इति सूत्रेण वृद्धशब्दस्य ज्यादेशः । तस्मादत्र ज्यैष्ठ्यं—प्रवृद्धत्वम् । **वसिष्ठप्रतिष्ठासम्पदायतनशब्दैर्वाक्चक्षुः-श्रोत्रमनसां** यथाक्रमं तत्तत्कार्यजननसामर्थ्यानि विवक्षितानि । किं कौषीतकिप्राणविद्या छान्दोग्यवाजसनेयकोक्तप्राणविद्यातो भिद्यते, न वेति; किमुभयत्र वेद्यैक्यम्, उत नेति; किमुभयत्र वसिष्ठत्वादिगुणकमुपासनम्, उत कौषीतकिनां तद्विधुरमिति; 'यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि' इत्यनुवादाभावेऽपि वागादीनां प्राणाधीनत्वाभिधानं वसिष्ठत्वादिप्राप्तिं प्राणस्य गमयति, नेति । न चेत्—कौषीतकिप्राणविद्यायां वसिष्ठत्वाद्यप्राप्तेरुपासनस्यातद्विषयत्वात तद्विषयातद्विषययोर्विद्ययोर्भेदः । गमयति चेत्—कौषीतकिनामपि वसिष्ठत्वादिप्राप्तेरुपासनस्य तद्विषयत्वेन रूपभेदाभावादैक्यमिति । **इतरत्र तु तद्विधुर** इति । स्वप्रकरणस्थगुणेन नैराकाङ्क्ष्यादिति भावः । **व्यूदिर** इति छान्दोग्यपाठः । **विवदमाना** इति वाजिनां पाठः । **व्यूदिरे**—विवादं चक्रुः । **यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि** इति । अहं यत्कार्यकरणसमर्थाऽस्मि, तस्य त्वदधीनत्वात् तवैव तत्कार्यसामर्थ्यमित्यर्थः ॥

इत्यादिभिरनूद्यते । कौषीतकिनां प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः । "अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठः" इत्यादिना वागादिगता गुणाः वागादयश्च देहश्च प्राणाधीना इति प्राणस्य ज्यैष्ठ्यमुपपादितम् । वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न कृतम् । नैतावता रूपभेदः; वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात् । तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वम्, यत् वागादिवसिष्ठत्वादिहेतुत्वम् । अतोऽत्रापि वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः ॥ १० । इति सर्वाभेदाधिकरणम् ।

---

**परे** तु वागादिगता गुणा वसिष्ठत्वादयः । इमे वसिष्ठत्वादयो गुणा अन्यत्रापि भवन्ति, सर्वशाखासु प्राणविज्ञानस्याभेदात् । अभेदश्च प्राणसंवादादिसारूप्यादिति व्याचक्षते । न च श्रुतहानिरश्रुतकल्पना वा । स्वदेशे प्रसिद्धा देवदत्तगुणा देशान्तरेऽपि ह्यभियोगविशेषात् प्रसिद्धा भवन्तीति च परिहृतम् । तत्र विज्ञानस्याभेदः शाब्दश्चेत्—तदुपपादकसारूप्यकण्ठोक्तिर्न स्यात् । अभेदशब्देन सारूप्यविवक्षायां सर्वप्रकारसारूप्यं विवक्षितं चेत्— विज्ञानसारूप्यं ज्ञेयसारूप्यनिबन्धनम्, तत्सारूप्यं च न वसिष्ठत्वाद्यनन्वये सिद्ध्यतीति हेत्वसिद्धिः स्यात् । अतस्तत्परिहारार्थ**मुपपादनप्रकारस्य सर्वस्याभेदा**दिति व्याख्यानं निराकाङ्क्षत्वान्निःसंशयत्वाच्चात्यन्तमुचितम् । देवदत्तगुणप्रसिद्धिदृष्टान्तश्चातिप्रसङ्गादनादृतः ।

सर्वत्र प्राणविज्ञानस्य ज्यैष्ठ्यश्रैष्ठ्यगुणयुक्तस्य प्रत्यभिज्ञानादि**त्यपरे** । ततोऽप्युपपादनसारूप्यादित्युचितम्; तत्र (?) वसिष्ठत्वादिप्राप्तावसाधारणहेतुत्वात् । 'न चैकं प्रति शिष्यते' इति न्यायादश्रुतत्वमकिञ्चित्करमिति चोक्तम् । तत् सर्वसाधारणत्वात् पादाद्यधिकरणाभिप्रेतमिति अत्रानुक्तिः ।

**अन्ये** तु फलभेदाद्विद्याभेद इति पूर्वपक्षं वर्णयन्ति—एकत्र हि, 'ज्येष्ठश्च ह वै श्रेष्ठश्च भवति' इति श्रुतम् । अन्यत्र तु, "तथैवैनं विद्वान् सर्वेषां भूतानां प्राणमेव प्रत्यात्मानममृतमभिसंभूय सहैतैः सर्वैरस्माल्लोकादुत्क्रामति । स वायुप्रतिष्ठ आकाशात्मा स्वरेति । स तद्भवति यत्रैतद्देवाः । तत्प्राप्य तदमृतो भवति यदमृता देवाः" इति श्रुतम् । उभयत्र प्राणदेवतासु सायुज्यस्यैव प्रधानफलत्वात् ज्यैष्ठ्यश्रैष्ठ्यगुणसंबन्धफलस्य प्रधानफलेऽन्तर्गतत्वात् विद्यैक्यम् । अतो गुणा वसिष्ठत्वादय उपसंहार्या इति सिद्धान्तयन्ति; फलभेदाद्विद्याभेदवर्णनमेव युक्तम्; न तु वसिष्ठत्वादिगुणाननन्वयात् । गुणोपसंहारानुपसंहारौ हि विद्याभेदाभेदफलभूतौ; न तु भेदाभेदोपपादकाविति ॥ अत ब्रूमः—अत्र 'स्वरेति स तद्भवति' इति स्वर्गाधिपतित्वमुक्तम्; स राष्ट्रमभवदितिवत्, स्वर्गाधिपत्यं श्रैष्ठ्यान्तर्गतम् । अमृतत्वं चिरकालस्थितिरूपतया ज्यैष्ठ्यान्तर्गतम्; वृद्धतमत्वं हि ज्यैष्ठ्यम् । इदं च, 'आदरादलोपः, 'उपस्थितेऽतस्तद्वचनात्' इत्यत्र वक्ष्यमाणन्यायसिद्धम् । तत्र हि जक्षणादीनां सत्यसंकल्पत्वरूपफलान्तर्भावो वक्ष्यत इति तेन न्यायेन फलान्तर्भावसंभवेन फलभेदाप्रतीतेर्भाष्ये तदुपन्यासाभावः । 'उपस्थितेऽतः' इति सूत्रस्य योजनान्तरं तु तत्रैव निरसिष्यते । अतः कृतकरत्वस्यावर्जनीयत्वादिह फलभेदावर्णनं तत्परिहारानुक्तिश्च ॥

## आनन्दाद्यधिकरणम् ॥ ३-३-४ ॥

प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते। यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिः, तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते, ते ब्रह्मविद्यासु सर्वास्वनुसन्धेया इत्ययमर्थः प्रतिपाद्यते—

### आनन्दादयः प्रधानस्य ॥ ३ ३ ११ ॥

अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति, नेति विचार्यते। अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात् प्रकरणश्रुतानामेवोपसंहार इत्येवं प्राप्ते ब्रूमः—आनन्दादयः प्रधानस्य। अभेदादिति वर्तते। प्रधानस्य गुणिनो ब्रह्मणः सर्वेषूपासनेष्वभेदात् गुण्यपृथग्भावाद्गुणानाम्, सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः ॥ ११ ॥

एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत् प्रियशिरस्त्वादयोऽपि, "तस्य प्रियमेव शिरः" इत्यादौ ब्रह्मगुणत्वेन श्रुताः सर्वत्र प्रसज्येरन् ॥ नेत्याह—

### प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३-३-१२ ॥

ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनामप्राप्तिः तेषामब्रह्मगुणत्वात्; ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात् प्रियशिरस्त्वादीनाम्। अन्यथा शिरःपक्षपुच्छाद्य-

---

मध्ये सङ्गतिविशेषेण प्रस्तुतमधिकरणान्तरं व्याचिख्यासुः प्राणविद्याङ्गविषयनिरूपणस्य पश्चात् करिष्यमाणत्वमाह **प्राणविद्याङ्गे**ति। अनन्तराधिकरणसङ्गतिमाह—**यथा प्राणस्ये**ति। **अनुक्तानामपी**ति। त्वं तद्वसिष्ठ इति वा, प्राणो वसिष्ठ इति वेद्दशवचनव्यक्त्याऽनुक्तानामित्यर्थः।

**आनन्दादयः प्रधानस्य ॥ स्वरूपगुणानां** स्वरूपप्रतीत्यनुबन्धिगुणानामित्यर्थः। किमानन्दादयो गुणाः सर्वासु विद्यासु उपसंहार्याः, उत यत्र श्रूयन्ते तत्रैवेति; किमानन्दादीनामैश्वर्यादिवत् गुण्यपृथक्स्थितिमात्रम्, उत ब्रह्मस्वरूपवत् प्रतीत्यनुबन्धित्वमिति। फलफलिभावः स्फुटः। **अप्रकरणे**ति। स्वप्रकरणे [1]समानप्रकरणे चानधीतानामुपसंहारेऽतिप्रसङ्गादिति भावः। **अभेदादिति वर्तत** इति। 'सर्वाभेदादन्यत्रेमे' इति सूत्रस्थाभेदशब्दोऽत्रानुवर्तत इत्यर्थः। सर्वाभेदादिति समस्तस्याप्यभेदशब्दस्यानुवर्तनमुपपद्यते, बुद्ध्या तावतः अंशस्य निष्कृष्य परामर्शात्, यथा 'अथ शब्दानुशासनम्, केषां शब्दानाम्' इत्यत्रानुशासनशब्दस्येति भावः। सौत्रं प्रधानशब्दं व्याचष्टे **गुणिन** इति। **अभेदात्**—ऐक्यात्। अभेदादित्यनेन फलितमाह **गुण्यपृथगि**ति। गुणानामिति साधारणशब्दनिर्देश उत्तरसूत्रशङ्कोत्थानार्थः। **आनन्दादयः,**—आनन्दत्वादयः; 'द्वेयकयोः' इतिवत् भावप्रधानो निर्देशः ॥ ११ ॥

अनन्तरसूत्रस्य शङ्कामाह—**एवं तर्ही**ति। **प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ अब्रह्मगुणत्वात्**—ब्रह्मगुणत्वाभावात् तदेवोपपादयति **ब्रह्मण** इति। भेदपदं व्याचष्टे **अन्यथे**ति।

---

1 तस्यैतस्य तदेव रूपं यदमुष्य रूपमित्यक्षिविद्यायामादित्यविद्यगुणातिदेशवत् सत्यातिदेशे गुणग्रहणं समानप्रकरणगुणग्रहणम्। तस्याप्यभावे उपसंहारो युक्त इत्याशयः भा० प्र०।

वयवभेदे सति, ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयाताम्। तथा च सति, "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि विरुध्यते ॥ १२ ॥

नन्वेवमेव, ब्रह्मसम्बन्धिनामेवैश्वर्यगाम्भीर्यौदार्यकारुण्यादीनां गुणानामनन्तानां गुण्यपृथक्स्थितत्वमात्रेण तत्राश्रुतानामप्युपसंहारे, सर्वे सर्वत्र प्रसज्येरन्; आनन्त्यादुपसंहाराशक्तिश्च। तत्राह—

**इतरे त्वर्थसामान्यात् ॥ ३-३-१३ ॥**

तुशब्दश्चोद्यं व्यावर्तयति। इतरे त्वानन्दादयः अर्थसामान्यात् सर्वत्रानुवर्तन्ते। ये त्वर्थसमानाः—अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिनः, तेऽर्थस्वरूपवत् सर्वत्रानुवर्तन्ते।

---

ततः किमित्यत्राह **तथा चेति**। **आदिशब्दात्** 'अस्थूलमनण्वह्रस्वम्' इत्यादिवाक्यानि गृह्यन्ते।

नन्वस्यां योजनायां विग्रहविशेषनित्यत्वाद्यभ्युपगमो विरुध्यते। शिरःपक्षाद्यवयवभेदे सति उपचयापचयप्रसङ्गोक्तेः। अतो व्याख्यात्रन्तरकृतं योजनान्तरमेव वरम् ॥ नैवम्। योजनान्तरानुपपत्तेर्वक्ष्यमाणत्वात्। अस्यां योजनायां कस्यचिदपि विरोधस्याभावाच्च। तथा हि—नात्र कालभेदेन वृद्धिह्रासपरावुपचयापचयशब्दौ; किं त्वापेक्षिकप्रचितत्वाप्रचितत्वतारतम्यपराविति सर्वव्याख्यातृसंमतमिदम्। अतः कालभेदानपेक्षौ प्रकोष्ठाङ्गुल्योरिव पीनत्वकृशत्वरूपौ उपचयापचयौ सूत्रेण प्रसञ्जनीयतया विवक्षितौ। प्रकोष्ठाङ्गुल्यादयो ह्यवयवाः पीनाः कृशाश्चोपलभ्यन्ते। न च तेषां स्थूलत्वकृशत्वे कालभेदायत्ते। कालभेदाधीनवृद्धिह्रासविवक्षायां हि नित्यत्वविरोधः। किञ्च न तावत् अन्तवत्त्वं साक्षादेव सूत्रे[ण] प्रसञ्जनीयतया विवक्षितम्; उपचयापचयशब्दयोस्तद्वाचित्वाभावात्; शिरःपक्षादिमत्त्वस्यान्तवत्त्वे प्रयोजकत्वाभावाच्च। ईश्वरसंजिहीर्षाविषयत्वादिकं हि तत्र प्रयोजकम्। नाप्यवयवप्रवेशनिर्गमौ प्रसञ्जनीयौ; नित्यविग्रहेऽपि तयोरिष्टत्वात्। परमव्योमनिलये हि भगवद्विग्रहे तदंशभूतव्यूहविभवादिविग्रहप्रवेशनिर्गमौ हि (?) प्रामाणिकौ ॥ एवमपि परिमाणतारतम्यप्रसङ्गो विग्रहस्य दुर्वार इति चेन्न; विकल्पासहत्वात्। किं कालभेदायत्तं परिमाणतारतम्यं विवक्षितम्; उत स्वेच्छायत्तम्?। न प्रथमः; हिरण्यगर्भसनकसनन्दनादिदेहेष्वाप्रलयादेकरूपेषु व्यभिचारात्। द्वितीयेऽपि, किमिच्छया परिमाणतारतम्यार्हत्वं प्रसञ्जनीयम्? तर्हीष्ट[ः]प्रसङ्गः स्यात्। तदंशभूतेषु विग्रहेषु बाल्ययौवनवामनत्वमहीयस्त्वादिदर्शनात्। यदि देशविशेषावच्छिन्नस्येश्वरविग्रहविशेषस्य तत्तारतम्यम्; तत् व्याप्त्यभावादनुपपन्नम्। अतः स्थूलत्वकृशत्वरूपं प्रदेशभेदेन युगपद्भाविपरिमाणतारतम्यमस्थूलत्वादिश्रुतिविरुद्धं स्वरूपे प्रसञ्जनीयतया विवक्षितमिति न कश्चिद्विरोध इति ॥ १२ ॥

अनन्तरसूत्रस्य शङ्कामाह—**नन्विति**। **एवमेवेत्येवकारः एवमेव प्रसज्येरन्नित्युत्तरत्रान्वयात्** प्रसङ्गस्यावर्जनीयत्वपरः। **ब्रह्मसंबन्धिनामेवेति**। अत्र **एवकारो** ब्रह्मसंबन्धदार्ढ्यार्थः। ततश्चैश्वर्यादीनां वास्तवत्वसिद्धिर्विवक्षिता भवति। **इतरे त्वर्थसामान्यात्** ॥ **अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिन** इति। **अर्थस्वरूपशब्देन** धर्मिस्वरूपमुच्यते। "अर्थस्वरूपवद्भाति समाधिः सोऽभिधीयते" इति **हि शौनकवचनम्**। अर्थप्रतीतिकाले प्रतीयमानत्वनियमः **सामान्यशब्दाभिहितं**

ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वानि। 'यतो वा इमानि' इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्म' इत्यानन्दादिभिर्हि स्वरूपतो निरूप्यते। अत उपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोऽनुवर्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नाः, तेषां गुण्यपृथक्स्थितत्वेऽपि प्रतीत्यनुबन्धित्वाभावात्, ये यत्र श्रुतास्ते तत्रोपसंहार्या इति निरवद्यम् ॥ १३ ॥

यद्युपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्वरूपणमात्रार्थाः, न तु ब्रह्मगुणाः—तर्ह्यतथारूपस्य ब्रह्मणस्तथात्वेन रूपणं किमर्थं क्रियते? अतथाभूतस्य हि तथात्वरूपणे केनचित्प्रयोजनेन भवितव्यम्, "यथा "आत्मानं रथिनं विद्धि" इत्यादिनोपासकस्य तदुपकरणानां च रथिरथादित्वरूपणम् उपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम् । न चेह तथाविधं किञ्चित् प्रयोजनं दृश्यते इति बलाद्ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यम् । तत्राह—

आध्यानाय प्रयोजनाभावात् ॥ ३-३-१४ ॥

प्रयोजनान्तराभावादाध्यानायायं रूपणोपदेशः क्रियते । आध्यानम्= अनुचिन्तनम्, उपासनमुच्यते। "ब्रह्मविदाप्नोति परम्" इत्यत्रोपदिष्टाध्यानरूपवेदनसिद्ध्यै ह्यानन्दमयब्रह्मप्रतिपत्त्यर्थमानन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वोपदिश्यते। यथा अन्नमयः पुरुषोऽयं देहः शिरःपक्षादिभिः, 'तस्येदमेव शिरः' इत्यादिना बुद्धावारोप्यते, यथा च प्राणमयमनोमयविज्ञानमयाः, 'तस्य प्राण एव शिरः' इत्यादिना प्राणाद्यवयवैर्बुद्धावारोप्यन्ते—एवमेभ्योऽर्थान्तर भूतस्तदन्तरात्माऽऽनन्दमयोऽपि प्रियमोदादिभिरेकदेशैः शिरः-

---

साम्यमित्यर्थः । तेषामानन्त्यादसंभवाशङ्कां परिहरन् शक्योपसंहारतां दर्शयति **ते चेति**। तेषामर्थप्रतीत्यनुबन्धित्वं श्रुत्या दर्शयति-**यतो वा** इति। **जगत्कारणतयोपलक्षित**मिति। केषुचिदुपासनेषु जगत्कारणत्वमनुसन्धेयम्, 'तज्जलानिति शान्त उपासीत' इत्यादिवाक्यविहितेषु । केषुचिन्न । एवं च सति—यत्रानुसन्धेयम्, तत्र ज्ञाप्यान्तर्गतत्वात् जगत्कारणत्वं विशेषणम्; यत्र तु नानुसन्धेयम्, तत्रोपलक्षणम्; ज्ञाप्यानन्तर्गतत्वात्। अत एव हि जन्मादिसूत्रभाष्ये उपलक्षणत्वं विशेषणत्वमपि कारणत्वस्याङ्गीकृतम् । प्रकृतिपुरुषकालविशिष्टस्य लक्षणं जगत्कारणत्वम् । तत्र विशेष्यांशस्य लक्षणमानन्दादयः । तत्र विशिष्टानुसन्धाने कारणत्वमनुसन्धेयम्; न तु विशेष्यानुसन्धान इत्यभिप्रायेण **उपलक्षित**मित्युक्तम्। अमलत्वश्रुतिः, 'निष्कलं निष्क्रियम्', 'अपहतपाप्मा' इत्यादिर्द्रष्टव्या। **स्वरूपतः** असाधारणाकारेण ॥ १३ ॥ .... .... .... ....

अनन्तरसूत्रशङ्कामाह-**यदीति** । अतथाभूतस्य तथात्वरूपणे प्रयोजनं दृष्टम् । अत्र तु प्रयोजनाभावात् प्रियशिरस्त्वादिकं न रूपणमात्रम्; अपि तु गुण एवेत्यर्थः । **आध्यानाय प्रयोजनाभावात्** ॥ **आध्यानमनुचिन्तन**मिति । "स्याच्चिन्ता स्मृतिराध्यानम्" इति हि नैघण्टुकाः । उपासनोपयोगिशास्त्रजन्यज्ञानसिद्ध्यर्थमित्यर्थः । परोक्षार्थस्य बुद्धावारोपणं शिरःपक्षादिरूपणादेव हि भवति । **प्रियमोदादिभिरेकदेशै**रिति । अतिशयितसुखानामपि ब्रह्मसुखैकदेशत्वेन ब्रह्मणोऽपरिच्छिन्नसु-

प्रभृतित्वेन रूपितैराध्यानाय बुद्धावारोप्यते । एवमानन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादीनाम्, न सर्वदा आनन्दमयप्रतीतावनुवर्तन्ते ॥ १४ ॥

आत्मशब्दाच्च ॥ ३-३-१५ ॥

'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यात्मशब्देन निर्देशात् आत्मनश्च शिरःपक्षपुच्छासंभवात् प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ॥ १५ ॥

ननु, 'अन्योऽन्तर आत्मा प्राणमयः', 'अन्योऽन्तर आत्मा मनोमयः' इत्यात्मशब्दस्यानात्मस्वपि पूर्वं प्रयुक्तत्वात्, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यात्मशब्दस्यात्मविषयत्वं कथं निश्चीयते ? तत्राह—

आत्मगृहीतिरितरवदुत्तरात् ॥ ३-३-१६ ॥

'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यत्राऽऽत्मशब्देन परमात्मन एव ग्रहणम्; इतरवत्—यथा इतरत्र, 'आत्मा वा इदमेक एवाग्र आसीत्। स ईक्षत लोकान्नु सृजै' इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणम्; तद्वत् । कुत एतत् ? उत्तरात्—'सोऽकामयत बहु स्यां प्रजायेय' इति आनन्दमयविषयादुत्तराद्वाक्यात् ॥ ३-३-१७ ॥

अन्वयादिति चेत्—स्यादवधारणात् ॥ ३-३-१७ ॥

पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनात् नोत्तरान्निश्चेतुं शक्यत इति चेत्—स्यादवधारणात्, स्यादेव निश्चयः। कुतः । अवधारणात् । पूर्वत्रापि, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति परमात्मन एव बुद्ध्याऽवधारितत्वात्। अन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा, तदनन्तरं च प्राणमयादन्तरे मनोमये, ततो विज्ञानमये । तत आनन्दमये, प्रक्रान्ता परमात्मबुद्धिस्तदन्तराभावात्, तदुत्तराच्च "सोऽकामयत" इति वाक्यात् प्रतिष्ठितेति उपक्रमेऽप्यपरमात्मनि परमात्मबुद्ध्याऽऽत्मशब्दान्वय इति निरवद्यम् ॥ इति आनन्दाद्यधिकरणम् ॥

---

खल्वमुक्तं भवतीति भावः । **न सर्वदेति** । शास्त्रेण प्रतिपत्तौ बुद्ध्यारोहणाय प्रियशिरस्त्वादि प्रतिपत्तव्यम्, एवमपरिच्छिन्नानन्दे प्रतिपन्ने सति उपास्तौ प्रियशिरस्त्वादिकं नानुसन्धेयमित्यर्थः ॥ १४ ॥

**आत्मशब्दाच्च** ॥ आत्मनो निरवयवत्वप्रसिद्धिमुपजीव्य प्रवृत्तमिदं सूत्रमित्यभिप्रायेणाह **आत्मनश्चेति** ॥ १५ ॥

अनन्तरसूत्रस्य शङ्कामाह **नन्विति** । **आत्मगृहीतिरितरवदुत्तरात्** ॥ **इतरवदिति** । 'आत्मा वा इदम्' इत्यादिष्वपि **उत्तरात्** 'स ईक्षत' इत्यादिवाक्यात् परमात्मन एव ग्रहणमित्यर्थः ॥ १६ ॥

**अन्वयादिति चेत् स्यादवधारणात्** ॥ **पूर्वत्रेत्यादि** । उपक्रमाधिकरणन्यायेन पूर्वानुगुणमुत्तरं नेयम् । तस्मादुत्तरवाक्यात् पूर्वस्यात्मविषयत्वं न निश्चेयमित्यर्थः । **स्यादित्यादि** । परमात्मन एव **बुद्ध्याऽवधारितत्वात्**-विषयीकृतत्वात् । एवमुपक्रमोपक्रमे परमात्मन एवाऽऽत्मबुद्धिशब्दविषयत्वान्नोत्तरवाक्यस्योपक्रमबाध इत्यर्थः । तर्हि मध्ये त्वपरमात्मनि परमात्मवाचिशब्दः कथमित्यत्राह **अन्नमयादिति** । प्राणमयादिष्वप्यात्मशब्दोऽपरमात्मबुद्ध्या उपचारतो न प्रयुक्तः, अपि तु परमात्मबुद्ध्यैव प्रयुक्तः । 'अन्तःप्रविष्टः शास्ता जनानाम्' इति तत्तदन्तःप्रवेशेन नियन्तृत्वं ह्यात्मत्वम् । तत्र प्राणमयेऽन्नमयादन्तरत्वमात्रेण परमात्मबुद्धिर्जाता; तस्याप्यन्तरदर्शनेन तत्रापि परमात्मबुद्धिर्जाता, **पूर्वत्र तु निवृत्ता**;

उत्तरोत्तरे तत्तदन्तरे चात्मशब्दः प्रयुक्तः। यस्यान्यदन्तरं नास्ति, ईक्षणादिकं च श्रुतम्, तस्मिन् परमात्मबुद्धिरात्मशब्दश्च प्रतिष्ठितौ। एवं पूर्वत्रापि परमात्मबुद्धिविषय एवाऽऽत्मशब्दप्रयोगादयमप्यात्मशब्दः परमात्मविषय एवेति नात्रोपक्रमबाध इत्यर्थः।

परे तु—आनन्दरूपत्वविज्ञानघनत्वसर्वगतत्वसत्यत्वसर्वात्मत्वधर्माणां सर्वविद्याननुगतत्वं पूर्वपक्षीकृत्य, **सर्वाभेदात्** सर्वत्र ब्रह्मण एकत्वात् तेषां सार्वत्रिकत्वमाहुः। तत्र भाष्ये तु सर्वात्मकत्वसर्वगतत्वयोः पृथगनुक्तिरानन्त्यान्तर्भावात्। **सर्वाभेदा**दित्यत्राभेदशब्दमात्रानुवृत्तिर्युक्ता, "अथ शब्दानुशासनम् केषां शब्दानाम्" इतिवत्। सर्वस्याभेदात्, सर्वत्राभेदादिति समासवैरूप्यप्रसङ्गात् सर्वशब्दाननुवृत्तिः॥ पूर्वाधिकरणेऽपि सप्तमीसमास इति चेन्न; तदनुपपत्तेरुक्तत्वात्। **प्रियशिरस्त्वे**ति। प्रियं मोदः प्रमोद इति परस्परापेक्षया भोक्त्रन्तरापेक्षया चोपचयापचयौ स्तः। अतः सजातीयस्वगतभेदरहिते ब्रह्मणि न प्रियशिरस्त्वादयः। ते तु कोशधर्माः। तथाऽपि ब्रह्मगुणत्वाभ्युपगमेन न्यायः प्रदर्शितः, संयद्वामत्वादीनामसार्वत्रिकत्वायेत्याहुः। तत्र कोशधर्मत्वं प्रागेव निरस्तम्। ब्रह्मणो निर्भेदत्वं[1] च प्रमाणविरुद्धमिति बहुश उक्तम्। ब्रह्मगुणानां भोक्त्रन्तरगतमोदाद्यपेक्षया नापचयः, न तेषां वृद्धिरूपश्चोपचयोऽस्ति; किन्तु सर्वेभ्योऽतिशयः। स चैकरूपः। न च परस्परापेक्षया प्रकर्षापकर्षौ; सर्वेषां स्वरूपतो विषयतश्च निरतिशयत्वात्। अतः—उपचयापचयप्रसङ्गान्न निषेधः, किन्तु शिरआदिभेदे सति स्थूलत्वकृशत्वान्वयप्रसङ्गादेवाब्रह्मगुणत्वं प्रियशिरस्त्वादीनामिति युक्तम्। अन्यथा शिरःशब्दवैयर्थ्यं च स्यात्। प्रियमोदाद्यप्राप्तिरिति तदा वक्तव्यम्। **इतरे त्वि**ति। अर्थस्य ब्रह्मण एकत्वादित्यतोपि, तुल्यत्वादिति तु स्वरसम्। आनन्दज्ञानादिशब्दा आनन्दत्वादिसामान्यमुखेन प्रवृत्ताः स्वार्थं परित्यज्याखण्डं वस्तु लक्षयन्ति। अत आनन्दादयः सर्वेपि पदार्था उपसंहर्तव्या इत्यप्ययुक्तम्; शब्दप्रमाणके वस्तुनि यथाशब्दं गुणाभ्युपगमस्य युक्तत्वात्। गुणाविवक्षायामेकेतरशब्दवैयर्थ्यात्। अतद्व्यावृत्तिमुखेन प्रतिपत्तेर्मुख्यार्थापवादाभावेनायुक्तत्वाच्च। शङ्किताश्चापवादाः प्रागेव परिहृताः।

**आध्यानाय** इत्यधिकरणान्तरं वर्णितम्। 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिर्विषयः। इन्द्रियादिभ्योऽर्थादीनां प्रत्येकं परत्वं प्रतिपाद्यम्। तथा प्रतिपन्नत्वाद्वाक्यैकत्वासंभवाद्वाक्यभेदो न दोषः इति पूर्वपक्षं कृत्वा, वाक्यैकत्वसंभवात् पुरुषस्य सर्वसारपरत्वं प्रतिपाद्यम्; प्रत्येकं परत्वप्रतिपादने प्रयोजनाभावात्; 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः' इत्यादिसार्तफलानामिहाश्रुतत्वात्; वाक्यैक्ये संभवति तत्कल्पनेन वाक्यभेदायोगात्; परप्रतिषेधकाष्ठाशब्दादिभिः पुरुषप्रतिपत्त्यर्थत्वतात्पर्यावगमात्। **आत्मशब्दाच्च**—'गूढोत्मा न प्रकाशते' इति दुरवगमतयोक्तस्यात्मनः प्रतिपत्त्यर्थत्वाच्चेति वर्णयन्ति। **आध्यान**शब्दश्च ध्यानपूर्वकसम्यग्दर्शनपर इति॥

तदयुक्तम्; कृतकरत्वात्। अवान्तरवाक्यभेदो दुरपह्नवः। महावाक्यैकत्वेन परमपुरुषपरत्वं चाधिकरणद्वयेन समन्वयाध्याये चिन्तितम्। न च बहूनां ततस्ततः परत्वप्रतिपादनस्य महावाक्यभेद-

---

1 निर्भेदत्वं—निर्विशेषत्वम्।

कत्वमिह परिहर्तव्यम्; बहूनां प्राणमयादीनां तत्तदन्तरत्वप्रतिपादनवत् मनुष्यगन्धर्वानन्दादीनां पूर्वपूर्वानन्दाधिकत्वप्रतिपादनवच्च महावाक्यैकत्वाविरोधस्य स्फुटतरत्वात् ।

**आत्मगृहीति**रित्यादि चाधिकरणान्तरं वर्णितम् । 'आत्मा वा इदमेक एव' इत्यादिर्विषयः । 'स इमाँल्लोकानसृजत' इति लोकसृष्टिश्रवणात् तस्याश्च प्रजापतिकर्तृकत्वप्रसिद्धेः, परमात्मविवक्षायां महाभूतादिसृष्टेर्वक्तव्यत्वादिह तदश्रवणात्, 'आत्मैवेदमग्र आसीत् पुरुषविधः' इत्यादिष्वात्मशब्दस्य सशरीरे हिरण्यगर्भेऽपि प्रयोगदर्शनात् 'ताभ्यो गामानयत्', 'ताभ्योऽश्वमानयन्' इत्यादिव्यापाराच्च परमात्मव्यतिरिक्तः कश्चिदिति पूर्वपक्षीकृत्य, 'आत्मन आकाशः' इत्यादिवदिहापि परमात्मगृहीतिः; आत्मत्वादेर्मुख्यत्वाच्च । **उत्तरात्** 'स ईक्षते'ति श्रवणात् ॥ लोकसृष्टिप्रतिपादकवाक्यान्वयदर्शनान्न पर इति चेत्—न; स्यादेव परः—**एकत्वावधारणात्** । लोकसृष्टिस्तु महाभूतसृष्ट्यनन्तरभाविनीति व्याचक्षते ॥

वर्णकान्तरं च कृतम्—वाजसनेयके, 'योऽयं विज्ञानमयः' इत्यादि, छान्दोग्ये 'सदेव' इत्यादि च विषयः । आम्नानवैषम्यादतुल्यार्थत्वम् । क्वचिदात्मशब्देनोपक्रमः, अन्यत्र सच्छब्देनेति पूर्वपक्षमुक्त्वा, सद्विद्यायामप्यात्म**गृहीतिः**, यथा वाजसनेयिनाम्, **उत्तरात्** तादात्म्योपदेशात् ॥ उपक्रमेणा**न्वयात्** तत्र च आत्मशब्दाश्रवणान्नेति चेत्, स्यादेवात्म**गृहीतिः**, एकविज्ञानेन सर्वविज्ञा**नावधारणात्** । अन्यथा सद्विज्ञानेनाऽऽत्मा न ज्ञातः स्यात् ! सामान्यस्य विशेषाकाङ्क्षस्य विशेषनिष्ठतया तुल्यार्थत्वं युक्तमिति ।

उभयथाऽप्यधिकरणं पादासङ्गतम्; विद्याभेदाभेदविचारात्मकत्वाभावात् । आद्ये वर्णके समन्वयाध्याय एवायं विचारः प्राप्तः; कारणविषयत्वात् । कृतकरत्वं च । यदा सतोऽपि ईक्षणादिना परमात्मत्वम् ईक्षणस्य चागौणत्वमात्मशब्देन साधितम्, तदा आत्मविषये ईक्षणादियुक्ते वाक्ये कः संशयः ? अत एव द्वितीयवर्णकमप्यनपेक्षितम्; ईक्षत्यधिकरणे सच्छब्दस्य प्रधानविलक्षणब्रह्मपरत्वं हि निरूपितम् । यदा अर्थान्तररूढानामाकाशादिशब्दानामपि कारणवाक्यस्थानां परमात्मविषयत्वं स्थापितम्, तदा साधारणस्य सच्छब्दस्य परमात्मविषयत्वे कः संशयः ? उदाहरणमप्ययुक्तम्; 'योऽयं विज्ञानमयः' इति वाक्यस्य जीवविषयत्वात्; प्रकरणस्थजीववाचिशब्दानां क्वचित् परमात्मसामानाधिकरण्यस्य कृतनिर्वाहत्वाच्च ।

पूर्वमेव वर्णकमपरैरादृतम् । अधिकरणभेदे सूत्रयोजनाभेदे च यद्दूषणजालमुक्तम्, तत् सर्वमपरेषां पक्षेऽपि समानम् ॥

**अन्ये** तु—आनन्दविज्ञानैश्वर्यतेजःशक्त्यादयो ब्रह्मद्वारेण संनिधानोपपत्तेः सर्वत्रोपसंहार्याः । सत्यकामत्वादीनां तेषु गुणेषु यथायोगमन्तर्भावः—इत्याहुः । भाष्ये त्वैश्वर्यशक्त्यादीनां पृथगनुक्तिरानन्त्येऽन्तर्भावात् । ते हि वस्त्वपरिच्छेदौपयिकाः । गुणतोऽप्यानन्त्यमनन्तशब्देन विवक्षितमिति भाष्यविदां स्फुटम् । **प्रियशिरस्त्वे**ति । प्रियमोदप्रमोदादीनामुपचयापचयात्मकत्वादंशभेदे सति ते संभवन्ति, न ब्रह्ममात्रे; तस्य निरस्तसमस्तविकल्पत्वात् । आनन्दज्ञानादयोऽपि उपचयापचयरूपतया न सार्वत्रिका इति शङ्कायामाह—**इतरे त्वि**ति । ऐश्वर्यादयो**ऽर्थसामान्यात्** शक्तिरूपत्वान्नोपचयापचयात्मकाः । अतः

सार्वत्रिकाः। एतदुक्तं भवति—आदित्यादिस्थानभेदादधिष्ठेयभेदात् विषयभेदाच्च ऐश्वर्यज्ञानानन्दादीनामुपचयापचयात्मकतया तदवच्छिन्नतया ब्रह्मणः अंशभेदः स्यात्। यैरुपचयापचयात्मकैर्गुणैर्गुणिभेदः, न ते सार्वत्रिकाः। ये ब्रह्ममात्रसम्बन्धिनः शक्तिमात्ररूपा गुणाः, ते सर्वत्रोपसंहार्या इति।

तदयुक्तम्—**अर्थसामान्य**शब्दस्य शक्तिवाचित्वाभावात्; ब्रह्मगुणानां सर्वदा सर्वत्र स्वरूपतो विषयतश्चानवच्छिन्नत्वात्; ज्ञानैश्वर्यादिशब्दानां शक्तिवाचित्वाभावात्; लयेऽपि तदवस्थप्रकृत्यादीनां ब्रह्मनियाम्यत्वधार्यत्वादेः, यस्य मृत्युः शरीरमित्यादिशरीरशरीरिभावश्रुतिसिद्धत्वाच्च। अत उपचयापचयरूपत्वाभावात् गुणानामधिष्ठेयादिभेदेऽपि नांशभेदः। तथा भवद्भिरेव, 'न स्थानतः' इत्यत्र, 'तस्मान्नाध्यात्मादिस्थानभेदेन भेदः' इति वदद्भिरुपपादितं च। किञ्च—ईश्वरस्यैव ह्यधिष्ठेयभेदाद्भेदः। तस्य तत्कृतांशभेदाभावेऽभिहिते स एव ब्रह्मेति स्यात्; ब्रह्मणि निर्भेदत्वाभ्युपगमात्, तस्य चेश्वरे दृष्टत्वात्। ततश्च गुणिभेदकगुणप्राप्त्यनुपपत्तेः शक्तिमात्ररूपगुणानुवृत्तिरित्यनुपपन्नम्।

**आध्यानाये**ति च अधिकरणान्तरमाहुः—कठवल्ल्याम्, 'यच्छेद्वाङ्मनसी' इत्याद्युक्तेन्द्रियसंयमनम्, शिरःपक्षपुच्छादिकल्पनं च विषयः। ध्यानविध्यसंनिधानात् तत्त्वप्रतिपत्त्यर्थमिति पूर्वः पक्षः। "तमेकनेमिम्" इत्यादौ चक्रत्वपरिकल्पनस्य तत्त्वानां ब्रह्मावयवत्वज्ञापनवत् प्रयोजनान्तराभावात्, 'ज्ञान आत्मनि', 'अन्योऽन्तर आत्मा' इत्यात्मव्यपदेशस्य ध्यानार्थतया सङ्गतत्वात्, 'ब्रह्मविदाप्नोति परम्', 'दृश्यते त्वग्र्यया' इति ध्यानविधेः संनिहितत्वादसंनिधानेऽप्युत्कृष्टान्वयोपपत्तेर्ध्यानार्थमिति सिद्धान्तितम्। तत् तावत् कठवल्ल्यामयुक्तम्—इन्द्रियसंयमनरूपप्रयोजनस्य विद्यमानत्वात्॥ तर्हि प्रतिसर्गक्रमस्य प्रतीयमानस्याविवक्षाप्रसङ्ग इति चेत्—न; प्रतिसर्गक्रमप्रतीत्यनुपपत्तेः। सा च प्रागेव दर्शिता। तैत्तिरीयके च, 'येऽन्नं ब्रह्मोपासते', 'ये प्राणं ब्रह्मोपासते' इत्युपासेरर्वाचीनफलानां च श्रुतत्वेन संशय एव नास्ति॥ शिरःपक्षाद्यवयवोपासनस्य ब्रह्मोपासनाङ्गत्वमुपपाद्यमिति चेत्—न; तस्याशक्योपपादनत्वात्। तत्त्व तत्त्वप्रतिपत्तिरूपदृष्टफले संभवत्यदृष्टकल्पनानुपपत्तेः॥ प्रतिपर्यायं श्रुतानामुपासनानां ब्रह्मध्यानानङ्गत्वे वाक्यभेद इति चेत्—ततः किम्? अवान्तरवाक्यभेदो भवताऽपि दुरपह्नवः। आनन्दमयव्यतिरिक्तोपासनानां क्षुद्रफलत्वेन आनन्दमयोपासन एव श्रद्धाजननार्थतया महावाक्यैकत्वं तत्रोपपद्यते। अतो न ब्रह्मध्यानाङ्गत्वमिति तत्समर्थनार्थमधिकरणभेदकल्पनमनुपपन्नम्।

**आत्मगृहीति**रित्यादिकं च अधिकरणान्तरं वर्णयन्ति, ऐतरेयके, 'आत्मा वा इदम्', वाजसनेयके, 'नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्' इति च विषयः। एकत्र, 'उक्थमुक्थमिति प्रजा वदन्ति' इत्यारभ्य 'प्रजापते रेतो देवः प्राण उक्थमित्येव विद्यात्' इति महाव्रतसम्बन्ध्युक्थविषयोपासिसंबद्धः प्राणशरीरोऽन्तर्यामी प्रतीयते। वाजसनेयके तु; 'उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुः' इत्यश्वमेधोपासिसंबन्धितया पुरुषः प्रतीयते। अत उभयत्रार्थप्रत्यभिज्ञानाभावादर्थभेद इति पूर्वपक्षं कृत्वा—मृत्युशब्देन **आत्मगृहीतिः इतरवत्** 'आत्मा वा' इतिवत्; **उत्तरात्** 'तन्मनोऽकुरुत आत्मन्वी स्याम्' इति वाक्यात्; 'स इमान् लोकानसृजत' इतिवत् 'सा पृथिव्यभवत्' इति लोकसृष्टि-

## कार्याख्यानादपूर्वम् ॥ ३-३-१८ ॥

पूर्वप्रस्तुतप्राणविद्याशेषभूतम् इदानीं चिन्त्यते । छान्दोग्यवाजसनेयकयोर्ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यमुक्त्वा, प्राणस्य वासस्त्वेन आपोऽभिधीयन्ते । छान्दोग्ये तावत्, "स होवाच किं

---

प्रतीतिवाक्याच्च ॥ वाजसनेयकेऽश्वमेधान्वयात्, 'अशनाया हि मृत्युः' इत्यशनायामृत्युशब्दान्वयाच्चार्थभेद इति चेत्—न; 'आत्मा वा इदम्' 'नैवेह किञ्चन' इत्युभयत्रावधारणात् अर्थैकत्वप्रतीतेः । **अशनायामृत्युशब्दौ** जगत्सञ्जिहीर्षायुक्तपरमात्मपरौ । उपासनप्रकरणमुभयत्र परिसमाप्तम् । असमाप्तावप्युपास्यात्मैकत्वं सिध्यति । इह सिद्ध आत्मा पूर्वत्राप्युपास्यतया संबद्धः—इत्याहुः ।

वर्णकातरं च कृतम्—'आत्मा वा इदम्' इत्यैतरेयकवाक्यम्, 'आत्मैवेदमग्र आसीत् पुरुषविधः' इत्यादिबृहदारण्यकवाक्यं च विषयः । एकत्राशरीर आत्मा प्रतिपन्नः, अन्यत्र तु पुरुषविधः सशरीरः, 'सोऽबिभेत्' इति भयारत्याद्युपेतश्चेति वाक्ययोरर्थभेद इति पूर्वपक्षं कृत्वा—[उभयं परमात्मैकपरम् ?] एकत्र 'स ईक्षत लोकान्नु सृजै' इत्यादिना, अन्यत्र 'स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत' इत्यादिना चोत्तरवाक्येनोभयत्र देवतासृष्ट्यामननात् ॥ शरीरभयाद्यन्वयादर्थभेद इति चेत्—न, 'आत्मैवेदम्' इत्यवधारणेन परत्वावगमात् । अशरीरस्यापि परस्य हिरण्यगर्भरूपेण शरीरग्रहणं भयान्वयश्च घटते । ईश्वरव्यूहानामेव ब्रह्मादीनां सृज्यत्वम्; 'यो वै वेदांश्च प्रहिणोति' इति विद्याधिगमादिप्रवृत्तिश्च लीलारूपा; संसारधर्मं शरीरप्रवृत्तिमीश्वरो निरोद्धुं क्षमः, नान्यः इति भिदेति वर्णयन्ति ।

अत्र ब्रूमः—किमत्रोपासनयोरेकत्वं सिषाधयिषितम्, उत कारणवाक्ययोरेकार्थत्वम् ?, प्रथमस्तु भवद्भिरेव निरस्तः, 'न हि वयमुपासनयोरेकत्वं ब्रूमः' इति वदद्भिः । उपपादितं च तत् विद्ययोरश्वमेधमहाव्रतोक्थविषयत्वात् । द्वितीये त्वध्यायासङ्गतिः; कारणविचारस्य समन्वयाध्यायकृत्यत्वात् । कृतकरत्वं च; एकत्वावधारणसङ्कल्पपूर्वकप्रपञ्चसर्गादिभिः परमात्मपरत्वनिर्णयस्य पूर्वमेव कृतत्वात्, अधिकशङ्काया अभावाच्च ॥ अशनायामृत्युशब्दाभ्यां संशय इति चेत् [न ?] 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इति वाक्यतुल्यत्वादस्य वाक्यस्य; 'अत्ता चराचरग्रहणात्' इत्यनेन अत्तुः परमात्मनो मृत्युशब्दवाच्यत्वोपपत्तेश्च । आकाशप्राणादिशब्दात् मृत्युशब्दस्य को विशेषः । कृतकरत्वादेव द्वितीयं वर्णकमपि निरस्तम् । तत्र च देवतासृष्टि-एकत्ववधारणादिना हि सिद्धान्तः, । संसारिचेतनाचिद्धर्मान्वयस्तु प्रकृतिपुरुषरूपेणावस्थितब्रह्मणः संभवतीति 'अवस्थितेरिति काशकृत्स्नः' इत्यादिषूपपादितम् । भवद्भिश्च 'सर्वधर्मोपपत्तेश्च' इत्यत्र सर्वमिदं दर्शितमिति कृतकरत्वमवर्जनीयम् । हिरण्यगर्भस्य विद्याधिगमादयो लीला' इति तु न युक्तम्; लीलात्वकल्पकाभावात् । 'तस्मिन् जज्ञे स्वयं ब्रह्मा' इति तु वचनं परमात्मनः सर्वशरीरकत्वान्मुख्यम् । हिरण्यगर्भस्य क्षेत्रज्ञत्वं चानपोदितसृज्यत्वश्रुत्यादिभिः सिद्धम्, **मोक्षधर्म**प्रभृतिषु चोपबृंहणेषु स्फुटतरमिति नात्र प्रपञ्च्यते । अतः 'आनन्दादयः' इत्यारभ्य सप्तानां सूत्राणामधिकरणत्रैधकल्पनमयुक्तम् ॥ १७ ॥ इति आनन्दाद्यधिकरणम् ।

**कार्याख्यानादपूर्वम्** ॥ एकान्तरितपूर्वाधिकरणेनास्य संगतिः । **लम्भुको ह वासो भवति**—

मे वासो भविष्यतीति। आप इति होचुः। तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति। लम्भुको ह वासो भवत्यनग्नो भवति" इति। वाजसनेयके, किं मे वासः इति। प्राणेन पृष्टा वागादय ऊचुः, "आपो वासः" इति। "तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति। एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते। तस्मादेवंविदशिष्यन् आचामेत्, अशित्वा चाचामेत्। एतमेव तदनमनग्नं कुरुते" इति।

तत्र संशयः किमत्राचमनं विधीयते, उतापां प्राणवासस्त्वानुसन्धानमिति। "अशिष्यन्नाचामेदशित्वा चाचामेत्" इति आचमने विधिप्रत्ययश्रवणात्, "एतमेव तदनमनग्नं कुरुते" इति वेदने विधिप्रत्ययाभावात् अनग्नतासंकीर्तनस्य स्तुत्यर्थतयाऽन्वयोपपत्तेश्च, भोजनाङ्गस्याचमनस्य स्मृत्याचारप्राप्तत्वेन विधिप्रत्ययबलात् प्राणविद्याङ्गमाचमनान्तरं विधीयते इति प्राप्ते ब्रूमः— आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेवेह अपूर्वम्—अप्राप्तं विधीयते; कार्याख्यानात्— अप्राप्ताख्यानात्; अप्राप्ताख्याने शब्दस्यार्थवत्त्वादित्यर्थः। एतदुक्तं भवति—'किं मे वासः', 'आपो वासः', 'अद्भिः परिदधति', 'एतमेव तदनमनग्नं कुरुते' इत्युपक्रमोपसंहारयोर्वाक्यस्यापां प्राणवासोदृष्टिपरत्वप्रतीतेराचमनस्य स्मृत्याचारप्राप्तत्वादाचमनमनूद्याचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं विधीयते— इति। अत एव छान्दोग्ये, "तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चो परिष्टाच्चाद्भिः परिदधति" इत्यद्भिः परिधानमेवोक्तम्; नाचमनम्॥ १८॥ इति कार्याख्यानाधिकरणम्॥

---

वासो लब्धवान् भवति। **अनम्**—प्राणम्। अत्र किं प्राणविद्याङ्गमाचमनमन्यद्विधीयते, उताचमनीयानामपां प्राणवासस्त्वानुसन्धानम्; किं वेदने विधिप्रत्ययाश्रवणेऽपि, 'किं मे वासः', 'आपो वासः' इत्याद्युपक्रमादिपर्यालोचनया वासोदृष्टिपरत्वं प्रतीयते, नेति। न चेत्—आचमनान्तरविधिः स्यात्। प्रतीयते चेत्—आचमनीयास्वप्सु वासोदृष्टिविधिः स्यात्। **स्तुत्यर्थतयाऽन्वयोपपत्तेश्चेति**। नानुसन्धानार्थतयेत्यर्थः। राद्धान्तमाह **इति प्राप्ते** इति। अपूर्वपदव्याख्यानम**प्राप्त**पदम्।[1] **इह...विधीयते** इति **इह**शब्दः प्रकरणपरः। दृष्टिविध्यन्तरोपेतत्वं विवक्षितम्। 'यदिदं किञ्च आ श्वभ्यः आ कीटपतङ्गेभ्यः, तत् तेऽन्नम्' इति तत्तत्प्राण्यदनीये वस्तुनि प्राणाप्यायकभूते प्राणान्नत्वदृष्टिर्विधित्सितेति तत्साहचर्यादपि वासस्त्वदृष्टिविधिर्युक्त इति भावः। 'प्राणवासस्त्वानुसन्धानमप्राप्तं विधीयते, अप्राप्ताख्यानात् इत्युक्ते हेतोः साध्याविशिष्टतैव स्यादिति तन्निवृत्त्यर्थमाह **अप्राप्ताख्याने शब्दस्ये**ति। न हि ज्ञातज्ञापने प्रयोजनम्। प्राणवासस्त्वानुसन्धानस्याप्राप्तत्वेऽपि आचमने विधिप्रत्ययश्रवणाद् द्वितीयाचमनस्याप्राप्तत्वात् तदेव विधीयत इत्यत्राह **एतदुक्त**मिति। **एवंविदाचामे**दिति[2] स्नात्वा भुञ्जीतेतिवत् प्रतिपन्नस्यैवाप्राप्तत्वात्, अप्रतिपन्नाप्राप्तार्थान्तरकल्पनायोगात्, उपक्रमोपसंहारतात्पर्यलिङ्गोपेतत्वात् शाखाद्वयानुयायित्वाच्च प्राणवासस्त्वानुसन्धानमेव विधेयम्; स्मृत्याचाराभ्यां प्राप्तत्वात् तात्पर्यलिङ्गाभावात् अप्राप्तार्थान्तरसम्भवात् एकशाखामात्रप्रतिपन्नत्वाच्च नाचमनं विधेयमित्यर्थः॥

**परै**स्त्वाचमनं वासस्त्वानुसन्धानमुभयं किं विधेयम्, उताचमनम्, उत वासोदृष्टिरिति त्रेधा विचारः कृतः। भाष्ये तूभयविधानपक्षे (क्षो?) वाक्यभेदस्य स्फुटत्वादनादृतः। अप्सु वासःकार्यपरिधा-

---

1 वासस्त्वानुसंधानमेव अपूर्वमप्राप्तमिह विधीयत इति भाष्यपाठो वा। 2 इतीति-इत्यत्रेत्यर्थः।

## समानाधिकरणम् ३-३-६

## समान एवं चाभेदात् ॥ ३-३-१९ ॥

वाजसनेयके अग्निरहस्ये शाण्डिल्यविद्या आम्नाता, "सत्यं ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयं पुरुषः" इत्यारभ्य, "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं... सत्यसंकल्पम्" इति । तथा तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्याऽऽम्नायते, "मनोमयोऽयं पुरुषो भाः सत्यः । तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा । स एष सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति, यदिदं किञ्च" इति । तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति । संयोगचोदनाख्यानामविशेषेऽपि वशित्वाद्युपास्यगुणभेदेन रूपभेदात् विद्याभेद इति प्राप्ते उच्यते-- समान एवमिति । यथाऽग्निरहस्ये, "मनोमय—प्राणशरीर—भारूप—सत्यसङ्कल्पत्वगुणगणः

---

नाख्यानात् अपां वासस्त्वकल्पनं विधेयमिति [च] योजयन्ति । परिधानाख्यानस्य हेतुत्वायोगात तदनादरः । अप्राप्तत्वमेव हि हेतुः । आचमनीयास्वप्सु वासोदर्शनं विधेयम् ; अहरहःकर्तव्यस्य चाचमनस्य संकीर्तनादित्यपरेषां योजना । एवं सति वासोदर्शनस्य विधेयत्वे हेतुः कण्ठोक्तो न स्यात् ; किन्तु आचमनीयासु अप्सु कर्तव्यताया हेतुरुक्तः स्यात् । अतस्तदनादरः ॥

अन्ये तु—आचमनान्तरं प्राणविद्याङ्गं विधेयम्, 'आचामेत्' इति विधिप्रत्ययश्रवणात्, अनग्नतासंकीर्तनं स्तुत्यर्थमिति सिद्धान्तयन्ति । अथवा, 'आपो वासः' इति वासोदृष्टिर्विहिता, कास्वप्सु वासोदृष्टिरित्यपेक्षायाम्, 'आचामेत्' इत्याचमनान्तरविधिः । अर्थादाचमनीयास्वप्सु वासोदृष्टिर्नियम्यते । 'अनग्नं कुरुते' इत्यर्थवादश्च विहितवासोदृष्टिमनुवदति इति च सिद्धान्तयन्ति । तदयुक्तम् ; 'किं मे वासः', 'आप इति होचुः,' 'अद्भिः परिदधति', 'आपो वासः,' 'अनग्नं कुरुते' इति उभयत्रोपक्रमोपसंहारपर्यालोचनया वासोदृष्टिविधाने तात्पर्यावगमात् । छान्दोग्यैकार्थ्याच्च । न हि तत्र, आचामेदिति विधिः ॥ तत्रानुक्तमप्याचमनं विवक्षितम्, अनुक्तस्यान्यतो प्राप्तत्वादिति चेद् — अन्यत्राप्यनुक्तत्वात ॥ ननूक्तमाचामेदितीति चेन्न; 'तस्मादेवंविदशिष्यन्नाचामेत्' इति वाक्ये, 'प्राङ्मुखो भुञ्जीत' इति प्राङ्मुखत्ववत् वेदनस्य विधेयत्वप्रतीतेः । यदि ह्याचमनं विधेयम्, तदा एवंविदित्यनर्थकं स्यात् ; 'अनग्नं कुरुते' इत्यर्थवादश्रवणादेव तदर्थज्ञानस्य सिद्धत्वात । न हि विध्यन्तरेष्वार्थवादिकार्थ-ज्ञानमेवंविदित्युच्यते । यतोऽस्य वाक्यस्याचमनान्तरविधिपरत्वमयुक्तम्, अत एव वासोदृष्ट्यनुवादेन आचमनान्तरविधिरिति पक्षोऽप्यनुपपन्नः ॥ १८ ॥ इति कार्याख्यानाधिकरणम् ।

**समान एवं चाभेदात्** ॥ पूर्वाधिकरणं प्राणविद्याशेषत्वेन प्रसक्तम् । तत्पूर्वाधिकरणे स्वरूपप्रतीत्यन्तर्भूतानां गुणानामुपसंहार्यत्वमुक्तम् ; एवं सत्यसङ्कल्पत्वान्तर्भूतवशित्वादिगुणानामुपसंहार्यत्व-मुच्यते इति सङ्गतिः । किमत्र विद्या भिद्यते, नेति ; किमुभयत्र रूपभेदोऽस्ति, नेति ; किमाग्निरहस्ये वशित्वादिप्राप्तिरस्ति, नेति ; किं मनोमयभारूपसत्यसङ्कल्पत्वाम्नानमेव गुणिप्रत्यभिज्ञया वशित्वादिप्राप्तिं गमयति, नेति । न गमयति चेत्—वशित्वाद्यप्राप्त्या रूपभेदात् विद्याभेदः । गमयति चेत्—वशित्वादिप्राप्त्या रूपाभेदाद्विद्यैक्यम् । बृहदारण्यके यत् वशित्वादिकमधिकमुक्तम्, यच्च वाजसनेयके सत्यसङ्कल्पत्वमधिकमुक्तम्, तदुभयमपि तुल्यार्थमिति न रूपभेदः ; सत्यसङ्कल्पत्वकार्यत्वाद्वशित्वादेः

श्रुतः, एवं बृहदारण्यकेऽपि मनोमयत्वादिके समाने सति अधिकस्य वशित्वादेश्च सत्यसङ्कल्पत्वगुणाभेदात् न रूपभेदः। अतो विद्यैक्यम् ॥ १६ ॥ इति समानाधिकरणम् ।

### संबन्धाधिकरणम ३-३-७

### सम्बन्धादेवमन्यत्रापि ॥ ३-३-२० ॥

बृहदारण्यके श्रूयते, "सत्यं ब्रह्म" इत्युपक्रम्य । तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषः, यश्चायं दक्षिणेऽक्षन्" इत्युपक्रम्य आदित्यमण्डलेऽक्षणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा "तस्योपनिषदहरिति" अधिदैवतम्, "तस्योपनिषदहमिति" अध्यात्मम् इति द्वे उपनिषदौ रहस्यनामनी उपासनशेषतयाऽऽम्नायेते ; ते किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते उतोभयत्रोभे अनियमेनेति संशये, सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोः संबन्धादुपास्यैक्येन रूपाभेदात्

---

अधिपतिशब्दोक्तं शेषित्वं न सत्यसङ्कल्पत्वान्तर्भूतमिति चेन्न ; शेषित्वस्य नियमनासङ्कोचहेतुत्वात् । अन्यदीये स्वतन्त्रे च वस्तुनि नियमनस्य हि कदाचिद्विहतिशङ्का भवति । अतस्तदभावादसङ्कुचितमैश्वर्यं सत्यसङ्कल्पत्वान्तर्गतम् ॥

**परे** त्वेकस्यां शाखायां पुनरुक्तेः प्रतिपत्तृभेदेन परिहर्तुमशक्यत्वात्, पञ्चकृत्वोऽभ्यासात् प्रयाजभेदवत् विद्याभेदं पूर्वपक्षीकृत्य मनोमयत्वादिगुणकोपस्याभेदादग्निरहस्ये विद्यां विधाय स एव बृहदारण्यके वशित्वादिगुणविधानाय पठ्यत इति गुणविधानाय पुनःश्रुत्युपपत्तेः, प्राग्विहितमनोमयत्वादिगुणोपन्यासस्य विहितविद्याप्रत्यभिज्ञानार्थत्वोपपत्तेर्विद्यैक्यं सिद्धान्तयन्ति । **अपरेषामपि** इदं तुल्यम् । **अन्येऽप्य**भ्यासन्यायेन विद्याभेदं पूर्वपक्षीकृत्य पुनःपाठस्य सत्यसङ्कल्पत्वरूपैश्वर्यस्य सातिशयत्वसंभवात् निरतिशयत्वस्य प्रतिपादनार्थमैश्वर्यविशेषरूपवशित्वाद्यनेकगुणविधानायानुवादरूपत्वोपपत्तेर्विद्यैक्यमाहुः । तत्र, "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः" इति न्यायेनानेकगुणविधानानुपपत्तिमाशङ्क्य सत्यसङ्कल्पत्वरूपैश्वर्यस्य निरङ्कुशत्वसिद्ध्यर्थं स एवैश्वर्यगुणो नानाविधो विहित इति परिहरन्ति ।

तत्र सर्वेषां पूर्वपक्षोत्थानासंभवः ; बृहदारण्यके 'सर्वस्य वशी' इत्यादेः श्रूयमाणत्वादापातप्रतीतिदशायामेव विशेषावगमादविशेषपुनःश्रवणनिमित्तविद्याभेदशङ्कानुपपत्तेः[1] । अतो रूपभेदात् पूर्वपक्ष उचितः । येषाम्—अग्निरहस्ये अनुक्ता गुणा बृहदारण्यके विधीयन्ते इति पक्षः, तेषां 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति न्यायेन प्राप्तायां विद्यायामनेकगुणविधाने वाक्यभेदः प्रसजेत् । ऐश्वर्यगुण एको विधीयते इत्यन्ये परिहरन्ति । गुणान्तरत्वे सिद्धे हि तथा निर्वाह उपपद्यते । गुणविशेषान्तर्भावसंभवात्तु भाष्ये तदनादरः ॥ १९ ॥ इति समानाधिकरणम् ॥

**संबन्धादेवमन्यत्रापि** ॥ यथा मनोमयत्वादिगुणकस्यैवोपास्यत्वेन विद्यैक्यम्, एवमक्ष्यादित्यसबन्धिनो व्याहृतिशरीरकस्यैवोपास्यत्वेन विद्यैक्यमिति शङ्कया सङ्गतिः । **दक्षिणेऽक्षन्**—दक्षिणेऽक्षणि । **उपनिषदा**विति व्याख्येयपदम् ; **रहस्यनामनी** इति व्याख्यानम् । किमेते नामनी यथाश्रुतस्थानव्यवस्थिते

---

1 अविशेषपुनःश्रवणरूपाभ्यासात् भेदस्थापने प्रयोजनमपि न लक्ष्यते । प्रयाजादौ हि तेषां समुच्चित्यानुष्ठानं फलम् । इह तु विद्ययोर्मोक्षार्थतया विकल्प एवाविशिष्टफलत्वादिति च ध्येयम् ।

संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति प्राप्तम् । तदिदमुच्यते—संबन्धादेवमन्यत्रापि—इति । यथा मनोमयत्वादिगुणविशिष्टस्यैकत्वादुपास्यैक्येन रूपाभेदाद्विद्यैक्याद् गुणोपसंहारः, एवम् अन्यत्राक्ष्यादित्यसंबन्धिनो ब्रह्मणः सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभयत्रोपसंहारः ॥ २० ॥

एवं प्राप्ते प्रचक्ष्महे—

**न वा विशेषात् ॥ ३-३-२१ ॥**

न वैतदस्ति—यत् विद्यैक्यादुपसंहार इति । कुतः । विशेषात्—उपास्यरूपविशेषात् । ब्रह्मण एकत्वेऽप्येकत्रादित्यमण्डलस्थतयोपास्यत्वम्, इतरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसंबन्धित्वभेदेन रूपभेदाद्विद्याभेदः । नैवं शाण्डिल्यविद्याया उपास्यस्थानं भिद्यते; उभयत्र हृदयाधारत्वेनोपास्यत्वात् । अतो व्यवस्थिते इति ॥ २१ ॥

**दर्शयति च ॥ ३-३-२२ ॥**

दर्शयति चाक्ष्याधारादित्याधारयोर्गुणानुपसंहारम्, "तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इत्यादिना रूपाद्यतिदेशेन । स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥ इति सम्बन्धाधिकरणम् ।

संभृत्यधिकरणम् ३-३-८

**सम्भृतिद्युव्याप्त्यपि चातः ॥ ३-३-२३ ॥**

तैत्तिरीयके, राणायनीयानां खिलेषु च, "ब्रह्म ज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति ब्रह्मणि ज्येष्ठानां वीर्याणां सम्भृतिः द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातम् । तेषामुपासनविशेषमनारभ्याधीतानां गुणानां सर्वासु विद्यासूपसंहारे प्राप्ते उच्यते—सम्भृतिद्युव्याप्त्यपि—इति । सम्भृतिद्युव्याप्तीति समाहारद्वन्द्वा-

---

उत उभयत्राव्यवस्थयोपसंहार्ये इति; किमत्र विद्यैक्यम्, उत नेति; किं व्याहृतिशरीरत्वेनो(रस्यो)पास्यत्वमुभयत्र विद्यैक्यं सङ्गमयति, नेति; किमुपास्यगुणैक्यमात्रमभेदहेतुः, उत स्थानैक्यमपीति; स्थानं किमुपास्यान्तर्गतम्, उत नेति । न चेत्—उपास्यगुणाभेदमात्रमभेदहेतुरिति व्याहृतिशरीरत्वस्य विद्यैक्यगमकत्वात्, तदभेदेन नाम्नोर्विकल्पेनोपसंहारः । स्थानस्योपास्यान्तर्भावे, स्थानैक्यमप्यभेदहेतुरिति व्याहृतिशरीरत्वमात्रेण विद्यैक्यानवगमेन विद्याभेदात् नाम्नोर्व्यवस्थितत्वमिति । पूर्वपक्षस्यानुरसूत्रत्वमाह **तदिदमिति** । सूत्रस्य वाक्यार्थमाह–**यथेति** । ॥

**न वा विशेषात् ॥ अतो व्यवस्थिते** इति । नाम्नी इत्यर्थः ॥

**दर्शयति च ॥** विद्यैक्येन स्वतःप्राप्तौ(स)रूपादीनां नातिदेशापेक्षा । तस्मादतिदेशो विद्याभेदनिबन्धनः । तस्माद् गुणानुपसंहार इत्यर्थः ॥ २२ ॥

**संभृतिद्युव्याप्त्यपि चातः ॥** पूर्वाधिकरणे नाम्नोः स्थानभेदात् व्यवस्था कृता; तथाऽनारभ्याधीतसंभृत्यादिकस्यापि स्थानभेदात् व्यवस्थेति सङ्गतिः । **उपासनविशेषमनारभ्य** । अप्रस्तुत्येत्यर्थः । किं सम्भृत्यादिगुणानां सर्वासु उपसंहारः, उत कासुचित् । किमनारभ्याधीतानां कासुचिद्विनियोगः, उत सर्वासु; किं सामर्थ्यं कासुचिदेव विनियुङ्क्ते, नेति । न चेत्—क्वचिद्विनियोगाभावात् सर्वासूपसंहारः । सामर्थ्यं क्वचिद्विनियोजकं चेत्—विनियोगलाभात् कासुचिदेवोपसंहारः । संभृतिद्युव्याप्ती इति वक्तव्यमित्याशङ्क्याह—**समाहारेति** । हृदयस्थस्य द्युव्याप्त्यादिकमनुपपन्नं चेत्—कथं दहर-

देकवद्भावः । सम्भृत्यादिकमनारभ्याधीतमपि अत एव—स्थानभेदाद्व्यवस्थाप्यम्; न सर्वत्रोपसंहर्तव्यम् । कथमनारभ्याधीतानां स्थानविशेषनियतत्वम् ॥ स्वसामर्थ्यादिति ब्रूमः । द्युव्याप्तिस्तावत् हृदयाद्यल्पस्थानगोचरासु विद्यासु नोपसंहर्तुं शक्या ; सम्भृत्यादयोऽपि तत्सहचारिणः तत्तुल्यदेशा इत्यल्पस्थानविषयासु विद्यास्वनुपसंहार्याः । शाण्डिल्यदहरादिविद्यास्वल्पस्थानविषयासु, "ज्यायान् पृथिव्याः", "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्याद्यस्तत्र-तत्राशक्योपसंहाराः मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः ॥ २३ ॥

इति संभृत्यधिकरणम् ।

पुरुषविद्याधिकरणम् ३-३ ९

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३-३-२४ ॥

तैत्तिरीयके पुरुषविद्याऽऽम्नायते, "तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः" इत्यादिका । छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते, "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि" इत्यादिका । तत्र संशयः— किमत्र विद्या भिद्यते,

---

विद्यादिष्वर्भकौकसोऽपि ज्यायस्त्वाद्युक्तिरित्यत्राह **शाण्डिल्येति** । **माहात्म्यप्रतिपादनपराः** । [1]स्वतोऽनन्तत्वरूपमाहात्म्यप्रतिपादनपरा इत्यर्थः । न तु एतद्विद्याया उपास्याकारपरा इत्यर्थः ॥ अल्पस्थानविषयदहरविद्यादिषु द्युव्याप्त्यादेरनुपसंहारश्चेत्—कथं सर्वविद्यानुयायिष्वानन्दादिष्वन्तर्भूतस्याऽऽनन्त्यस्यानुसन्धेयत्वम् ॥ इत्थम् । औपाधिकाल्पत्ववतो ब्रह्मणस्तस्मिन्नेव स्थाने औपाधिकमहत्त्वं विरुद्धमिति तदनुपसंहार उक्तः । आनन्दाद्यन्तर्भूतमानन्त्यं स्वाभाविकमिति न विरोधः । औपाधिकाल्पत्वानुसन्धानं स्वाभाविकमहत्त्वानुसन्धानं चाविरुद्धम् । स्वतोऽपरिच्छिन्नं ब्रह्म अस्मदनुग्रहायौपाधिकाल्पत्ववत् स्थितमिति ह्यनुसंधातुं शक्यम्; अल्पत्वमहत्त्वयोरौपाधिकयोर्युगपदेकत्रान्वयो विरुद्ध इत्यर्थः ।

उभयत्रसमानमनोमयत्वादिगुणवत सम्भृत्यादीनामुपास्यप्रत्यभिज्ञापनाक्षमत्वात् आधिदैविक्यः सम्भृत्यादयो नाध्यात्मं भवन्तीति **परैरुच्यते** । तद्गुणविशिष्टताभेदादप्रत्यभिज्ञापनं चेत्—क्वचिदपि गुणोपसंहारो न स्यात् । अतो विरुद्धगुणविशिष्टब्रह्मविषयविद्यासु नोपसंहार इत्येव युक्तम् ॥ २३ ॥

**पुरुषविद्यायामपि चेतरेषामनाम्नानात्** ॥ द्युव्याप्तिसंनिधिसमाम्नातस्य सम्भृत्यादेः तत्समानस्थानानुप्रवेशादेकविद्यान्वय उक्तः; एवं ब्रह्मविद्यासंनिधिसमाम्नातपुरुषविद्यायास्तच्छेषत्वमिति सङ्गतिः । किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति; किमुभयत्र रूपसंयोगादेर्भेदः, उत नेति; किमुभयत्र 'प्र ह षोडशं वर्षशतं जीवति' इत्यायुःप्राप्तिरेव फलम्, उत तैत्तिरीयकविद्यायां ब्रह्मप्राप्तिः फलम्; किं तैत्तिरीयकपुरुषविद्या प्रकृतब्रह्मविद्याङ्गम्, उत नेति; किं 'तस्यैवं विदुषः' इति निर्देशो

---

[1] पृथिव्यधिकज्यायस्त्वादिरूपविशेषाकाराणामेतद्विद्योपास्यत्वविवक्षया न तदुक्तिः ; किं तु आनन्त्यस्योपपादनाय । आनन्त्यस्याप्युपास्यत्वासंभवस्तु उपरि परिह्रियते इति नात्र पूर्वापरग्रन्थविरोधः । तत्कथनञ्चाणीयस्त्वस्यौपाधिकत्वव्यक्तये । न तु उपास्यत्वोपदेशाय ।

उत नेति। पुरुषविद्येति नामैक्यात् पुरुषावयवेषु यज्ञावयवत्वकल्पनसाम्येन रूपैक्यात्, तैत्तिरीयके फलसंयोगाश्रवणात् "प्र ह षोडशं वर्षशतं जीवति" इति छान्दोग्ये श्रुतस्यैव पुरुषविद्या-फलत्वात् फलसंयोगस्याप्यविशेषात् विद्यैक्यम्—इति प्राप्ते—उच्यते—उभयत्राऽऽम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव। कुतः। इतरेषामनाम्नानात्। एकस्यां शाखायामाम्नातानां गुणानामन्यत्रानाम्नानात्। तथा हि— "यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि" इत्या-दयस्तैत्तिरीयके आम्नाताः छान्दोग्ये सवनत्वेन नाम्नायन्ते। त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते। छान्दोग्ये श्रुतानामशिशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम्। यजमानपत्न्यादिपरिकल्पनं चान्यथा। अतो रूपमुभयत्र भिद्यते। तथा फलसंयोगोऽपि भिद्यते। तैत्तिरीयके हि पूर्वानुवाके, "ब्रह्मणे त्वा महसे ओमित्यात्मानं युञ्जीत" इति ब्रह्मविद्यामभिधाय तत्फलत्वेन, "ब्रह्मणो महिमानमाप्नोति" इत्युक्त्वा, "तस्यैवं विदुषः" इत्यादिनाऽऽम्नाता पुरुषविद्या अस्यैव ब्रह्म विदुषो यज्ञत्वकल्पनमिति गम्यते। अतो ब्रह्मविद्याङ्गत्वात् ब्रह्मप्राप्तिरेवात्र फलम्। "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायात् तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते। छान्दोग्ये त्वायुःप्राप्तिफला पुरुषविद्येत्युक्तम्। अतो रूपसंयोगयोर्भेदात् विद्याभेद इत्येकत्राम्नातानां गुणानामितरत्रानुपसंहारः॥ २४॥ इति पुरुषविद्याधिकरणम्।

---

ब्रह्मविद्याङ्गत्वं गमयति, नेति। न चेत्—ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्राप्तिफलकत्वाभावात् आयुः—प्राप्तिरेव फलमिति फलाभेदाद् रूपाभेदाच्च विद्यैक्यं स्यात्। यदा तस्यैवमिति निर्देशो ब्रह्मवि-द्याङ्गत्वं गमयति, तदा तैत्तिरीयकपुरुषविद्यायाः ब्रह्मविद्याङ्गत्वेन ब्रह्मप्राप्तिफलकतया फलभेदात् रूपभेदाच्च विद्याभेदः। **फलसंयोगाश्रवणा**दिति। विरोधिफलश्रवणे सति संयोगभेदः स्यात्। विरोधिफलाश्रवणे आख्यारूपयोरभेदेन प्रत्यभिज्ञानादनुक्तमपि फलमन्यत्र (तः?) स्वीकार्यमित्यर्थः॥ कथं फलाश्रवणम्, पुरुषविद्याया उपरिष्टात्, 'ब्रह्मणो महिमानमाप्नोति' इति हि फलं श्रूयते॥ तन्न; केवलपुरुषविद्याया ब्रह्मविद्यात्वाभावात् ब्रह्मप्राप्तिरूपं फलमयोग्यत्वात् पुरुषविद्यासम्बन्धमनवाप्य पूर्वानुवाकोक्तब्रह्मविद्ययाऽन्वितं भवतीत्यभिप्रायेण फलसंयोगाश्रवणादित्युक्तम्। यथा 'द्वादशाहीनस्य' इति वाक्यं साह्न[1](सत्र)प्रकरणेऽधीतमपि तत्र संबन्धुमयोग्यत्वात् तत उत्कृष्य अहीनप्रकरणे संबध्यते, तद्वत्। 'प्र ह षोडशं वर्षशतं जीवति' इत्यत्र प्रजीवतीत्यन्वयः। **अत** इत्यादि। ब्रह्मविद्याङ्गत्वं कथमित्यत्राह **फलवत्संनिधावि**ति। अफलत्वं च पूर्वमुक्तम्॥ पूर्वानुवाकेऽपि 'ब्रह्मणो महिमानमाप्नोति' इति ब्रह्मप्राप्तिः श्रूयते। उत्तरानुवाकेऽपि, 'ब्रह्मणो महिमानमाप्नोति' इति श्रूयते। तत्र पुरुषविद्याया अफलत्वे ब्रह्मणोमहिमानमाप्नोतीति वाक्यद्वयं पुनरुक्तमिति चेन्न—पूर्वानुवाके श्रूयमाणा ब्रह्मप्राप्तिः स्वर्गकामपदवत् अधिकारिविशेषणम्, ब्रह्मप्राप्तिकाम एवं कुर्यादित्यर्थः। उत्तरानुवाके तदङ्गभूतं पुरुषावयवेषु यज्ञपरिकल्पनं विधाय एवं साङ्गमभिहितायाः ब्रह्मविद्यायाः फलं ब्रह्मप्राप्तिरिति 'ब्रह्मणो महिमानमाप्नोति' इति [2]निगमयतीति॥ २४॥

---

1 साह्नशब्देन ज्योतिष्टोम उच्यते। तत्रैव पठितमिदं वाक्यमिति अयमेव पाठो भावप्रकाशि-कासंमतः। शेषं तत्रैव द्रष्टव्यम्। 2 निगमयतीति। अवान्तरफलवर्णनपूर्वकमिति शेषः।

## वेधाद्यधिकरणम् ३-३-१०

### वेधाद्यर्थभेदात् ॥ ३-३-२५ ॥

आथर्वणिका उपनिषदारम्भे, "शुक्रं प्रविध्य हृदयं प्रविध्य" इत्यादीन् मन्त्रान् अधीयते । सामगाश्च रहस्यब्राह्मणारम्भे, "देव सवितः प्रसुव यज्ञं प्रसुव" इत्याद्यामनन्ति ; काठकास्तैत्तिरीयकाश्च, "शं नो मित्रः शं वरुणः" इत्यादिकम् ; शाट्यायनिनश्च, "श्वेतोऽश्वो हरिनीलोऽसि" इत्यादिकम् ; ऐतरेयिणस्तु महाव्रतब्राह्मणमधीयते, "इन्द्रो ह वै वृत्रं हत्वा महानभवत्" इत्यादि ; कौषीतकिनोऽपि महाव्रतब्राह्मणमेव, "प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रतम्" इति । वाजसनेयिनस्तु प्रवर्ग्यब्राह्मणम्, "देवा ह वै सत्रं निषेदुः" इत्यादि । तत्र संशयः— किमुपनिषदारम्भेष्वधीताः 'शुक्रं प्रविध्य', 'शं नो मित्रः' इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गम्, उत नेति । किं युक्तम्?। विद्याङ्गमिति । कुतः?। सन्निधिसमाम्नानात् विद्याङ्गत्वप्रतीतेः । यद्यपि 'शुक्रं प्रविध्य' इत्यादीनां मन्त्राणां प्रवर्ग्यादेश्च कर्मणः श्रुतिलिङ्गवाक्यैर्बलवद्भिर्यथायथं कर्मसु विनियोगोऽवगम्यते—तथाऽपि 'शं नो मित्रः', 'सह नाववतु' इत्यादेर्मन्त्रस्य अन्यत्र विनियोगाभावात् विद्याधिकाराच्च विद्याङ्गत्वमवर्जनीयमिति सर्वासु विद्यासु इमे मन्त्रा उपसंहर्तव्याः—

एवं प्राप्ते प्रचक्ष्महे—वेधाद्यर्थभेदात् । 'शुक्रं प्रविध्य हृदयं प्रविध्य', 'ऋतं वदिष्यामि सत्यं वदिष्यामि' 'ऋतमवादिषं सत्यमवादिषम्', 'तेजस्वि नावधीतमस्तु मा विद्विषावहै' इत्यादिभिर्लिङ्गैरभिचाराध्ययनादिष्वेषां विनियोगावगमान्न विद्याङ्गत्वम् । एतदुक्तं भवति—यथा 'हृदयं प्रविध्य' इत्यादिमन्त्रसामर्थ्यात् 'शुक्रं प्रविध्य' इत्यादीनामभिचारादिशेषत्वमवगम्यते, एवमेव

---

**वेधाद्यर्थभेदात्** ॥ ब्रह्मविद्यासंनिधिसमाम्नातायाः पुरुषविद्यायास्तदङ्गत्वमुक्तम्, एवं संनिधिसमाम्नातानां शंनोमित्रादिमन्त्राणां ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कया सङ्गतिः । **प्रवर्ग्यादीनि चेति** । **आदिशब्देन** महाव्रतादिकं गृह्यते । प्रवर्ग्यादेः संशयविषयत्वाभावेऽप्यापातप्रतीत्यनुगुणः संशय उक्तः । किं 'शुक्रं प्रविध्य' इत्यादिमन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गानि, नेति ; किमेषां यथायथं श्रुतिलिङ्गवाक्यैः कर्मसु विनियोगः, उत ब्रह्मविद्यायां प्रकरणाद्विनियोगः ; किमेषां प्रकरणपाठोऽङ्गत्वाय, उत दिवाकीर्त्यारण्येनुवाक्यतायै । यदा अङ्गत्वाय, तदा प्रकरणाद्विनियोग इति विद्याङ्गत्वम् । यदा दिवाकीर्त्यारण्येनुवाक्यतायै, तदा यथायथं श्रुत्यादिभिः कर्मसु विनियोगान्न विद्याङ्गत्वम् । **विद्याधिकारात्**—विद्याप्रस्तावात् ।

**एवं प्राप्त** इति । **वेधादी**ति । आदिशब्देन ऋतवदनादिकं गृह्यते, ब्रह्मविद्याङ्गत्वाभावः 'शुक्रं प्रविध्य' इत्यादीनां स्पष्टः । तत् कथं सूत्रे वेधस्य कण्ठोक्तिरित्यत्राह **एतदुक्तं भवती**ति । दृष्टान्ततयेत्यर्थः । **मन्त्रसामर्थ्यात्**—[1]मन्त्रावगतवस्तुसामर्थ्याल्लिङ्गादित्यर्थः । तर्हि तेषां कथमुपनिषद्भिः

---

[1] यथाश्रुतार्थस्यैव समञ्जसत्वात् अयं क्लिष्टार्थो नापेक्षितः । अतो भावप्रकाशिकायामस्यैव क्लिष्टार्थो वर्णितः ।

'ऋतं वदिष्यामि', 'तेजस्वि नावधीतमस्तु' इत्यादिमन्त्रसामर्थ्यादेव स्वाध्यायशेषत्वं 'शन्नोमित्रः' इत्यादिमन्त्राणामवगम्यते । अतो न तेषां विद्याङ्गत्वमिति । 'शुक्रं प्रविध्य' इत्यादीनां प्रवर्ग्यादिब्राह्मणानां चेह पाठो दिवाकीर्त्यत्वारण्येनुवाक्यत्वकृतः ॥ २५ ॥ इति वेधाद्यधिकरणम् ॥

हान्यधिकरणम् ३-३-११

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥ ३-३-२६ ॥**

छन्दोगा आमनन्ति, "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति । आथर्वणिकाश्च, "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति । शाट्यायनिनस्तु, "तस्य पुत्रा दायमुपयन्ति ; सुहृदः साधुकृत्याम् द्विषन्तः पापकृत्याम्" इत्यादि । कौषीतकिनस्तु, "तत् सुकृतदुष्कृते धूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्" इति । एवं क्वचित् पुण्यपापयोर्हानिः, क्वचित् प्रियाप्रियेषु तत्प्राप्तिः, क्वचिदुभयं च श्रुतम् । तदुभयमेकैकविद्यायां श्रुतमपि सर्वविद्याङ्गमास्थेयम्, सर्वब्रह्मविद्यानिष्ठस्यापि ब्रह्म प्राप्नुवतः पुण्यपापप्रहाणस्यावश्यम्भावित्वात् । प्रहीणविषयत्वाच्चोपायनस्य । तच्चिन्तनं च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति । तत्रेदं विचार्यते—

हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनं च विकल्प्ये(ल्पे)रन्, उपसंह्रियेरन् वा । किं युक्तम् । विकल्प्येर(ल्पे)न्निति । कुतः । पृथगाम्नानसामर्थ्यात् । समुच्चये हि सर्वत्रोभयानुसन्धानं

---

सह पाठ इत्यत्राह शुक्रमिति । **अरण्येनुवाक्यत्वम्** । [1]अलुक् ॥ नन्वरण्येऽनुवाक्यत्वं रहस्यत्वात् ; तच्च विद्यासम्बन्धादिति विद्याङ्गत्वमिति चेत्—न ; तस्यान्यथासिद्धत्वात् । अनुपनीतस्त्र्याद्यश्रवणार्थम् अदृष्टार्थं वा तत् स्यात्, यथा 'एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति' इति ॥

ननु न प्रकरणाद्विद्याङ्गत्वम् ; प्रकरणवत्याः सर्वारण्यकव्यापिन्याः कस्याश्चिद्विद्यायाः अभावात् । सन्निधिमात्रमकिञ्चित्करम् । अन्यथा दर्शपूर्णमासादीनामप्यन्यशेषत्वप्रसङ्गादिति पूर्वपक्षे परिचोद्य, आरण्यकाम्नायपरिग्रहो न विना कारणेन भवति । कारणमरण्येनुवाक्यत्वमिति चेत्—तदपि विद्यासंबन्धनिबन्धनात् रहस्यत्वादित्यन्ये परिहरन्ति । तदप्यरण्येनुवाक्यत्वस्य पूर्वोक्तान्यथासिद्ध्यैव प्रतिक्षिप्तं भवति ॥ २५ ॥

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम्** ॥ संनिधिसमाम्नातानां 'शुक्रं प्रविध्य' इत्यादीनामतदङ्गत्वमुक्तम् ; तथा संनिधिसमाम्नातहानोपायनचिन्ता अनन्तरं प्राप्तेति सङ्गतिः । **सर्वविद्याङ्गमास्थेय**मिति । अङ्गशब्देनापेक्षितमुच्यते । **प्रहीणविषयत्वाच्चोपायनस्ये**ति । **प्रहीणविषय**शब्देन प्रहीणसम्बन्ध उच्यते । **उपायनम्**—अन्यत्र प्रवेशः । सुकृतमु**पयन्ती**ति श्रुत्यनुसारादुपायनमित्युक्तम् । प्रहीणसंबन्धित्वादुपायनस्य; प्रहीणस्य कर्मणः क्वचित्प्रवेशो ह्यवश्यम्भावीत्यर्थः । **तच्चिन्तनं च विधीयमान**मिति । तत्क्रतुन्यायात्, 'एतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा' इति इतिकरणश्रवणात्, **अभिसम्भवामी**त्यनुसन्धानस्य श्रुत्या च विधीयमानत्वं सिद्धम् । **सर्वविद्याङ्गम्** । हानोपायनचिन्तनस्य तत्सिद्ध्यर्थत्वात् तच्चिन्तनं सर्वविद्याङ्गमित्यर्थः । एवं विषयः शोधितः ; संशयमाह **तत्रे**ति । **विकल्पेरन्**—विकल्पेन तिष्ठेयुरित्यर्थः । **विकल्प्येर**न्निति च पाठोऽस्ति । हानेरुपायनस्योभयस्य च चिन्तनानि विहितानि किं विकल्पेरन्, उत समुच्चीयेरन् ; किमुपायनं

---

1 ननु अरण्ये इति सप्तम्यन्तस्य कथं दिवेत्यादिसमासमध्ये निवेश इत्यत्राह-अलुगिति ।

स्यात् । तच्च कौषीतकिवाक्येनैव सिद्धमिति अन्यत्राम्नानमनर्थकमेव स्यात् । अतोऽनेकत्राम्नानस्य विकल्प एव प्रयोजनम् । न चाध्येतृभेदेन परिहर्तुं शक्यमनेकत्राम्नानम् । अविशेषपुनःश्रवणं ह्यध्येतृभेदपरिहार्यम् ; अत्र तु हानिरेव द्वयोः शाखयोः, उपायनमेव चैकस्याम् न च विद्याभेदेन व्यवस्थापयितुं शक्यम्, सर्वशेषभूतमिदमनुसन्धानमित्युक्तत्वात् ।

अत्रेदमुच्यते—हानौ तूपायनशब्दशेषत्वात् इति । तुशब्दः पक्षं व्यावर्तयति ; हानाविति प्रदर्शनार्थम् । केवलायां हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यम्भावी । कुतः ? उपायनवाक्यस्य हानिवाक्यशेषत्वात् । उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितम् । विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनवाक्यस्य । प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते—कुशाच्छन्दःस्तुत्युपगानवत्—इति । कालापिनः, "कुशा वानस्पत्याः" इत्यामनन्ति, शाट्यायनिनां तु, 'औदुम्बर्यः कुशाः' इति वाक्यं सामान्येन वानस्पत्यत्वेनावगताः कुशाः "औदुम्बर्यः" इति विशिंषत् तद्वाक्यशेषतामापद्यते । तथा "देवासुराणां छन्दोभिः" इत्यादिना अविशेषेण देवासुराणां छन्दसां प्रसङ्गे, "देवच्छन्दांसि पूर्वम्" इति वचनं क्रमविशेषं प्रतिपादयत् तद्वाक्यशेषतां गच्छति । तथा, "हिरण्येन षोडशिनः स्तोत्रमुपाकरोति" इत्यविशेषेण प्राप्ते "समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति" इति

---

हानिशेषतया विद्याङ्गम्, उत स्वतन्त्रतयेति ; किमुपायनवाक्यं शाखान्तराधीतमपि हानिवाक्यशेषम्, उत स्वतन्त्रम् ; किं कौषीतकिनामुभयाम्नानमुपायनवाक्यस्य हानिवाक्यशेषताविरोधि, नेति । विरोधित्वे उपासनवाक्यस्य स्वातन्त्र्यादुपायनं स्वातन्त्र्येण विद्याङ्गमिति तच्चिन्तनानां विकल्पः । उभयाम्नानं शेषत्वाविरोधि चेत्, उपायनवाक्यस्य हानिवाक्यशेषत्वेनोपायनस्य हानिशेषतया विद्याङ्गत्वमिति चिन्तनानां समुच्चयः ।

**अत्रेद**मित्यादि । **हानाविति प्रदर्शनार्थम्** । उपायनस्यापि प्रदर्शनार्थमित्यर्थः । उपायनशब्दशेषत्वादित्युक्ते उपायनशब्दस्य अन्यच्छेषभूतमिति प्रतिभातीति तद्व्यावृत्त्यर्थं व्याचष्टे **उपायनशब्दस्य हानिवाक्यशेषत्वा**दिति । हानिवाक्यस्योपायनशब्दः शेषः इत्यर्थः । विपरीतं किं न स्यादित्यत्राह **उपायनवाक्यस्ये**ति । तदुपपादयति-**विदुषे**ति । प्रधानस्य तदुपयोगित्वेन प्राप्तं हि शेषभूतम् । अत्र ब्रह्म विदुषोऽपेक्षितत्वेन प्रधानं सुकृतदुष्कृतप्रहाणम् । तदेव हि तस्य प्रयोजनम् । प्रहाणोपयोगी ह्यन्यत्र प्रवेशः । तस्मात् हानिवाक्यं प्रति उपायनवाक्यं शेषभूतमित्यर्थः । हानिप्रवेशवाक्ययोः प्रधानशेषभावे दृष्टान्तो मा भूदिति तद्व्यावृत्त्यर्थमाह-**प्रदेशान्तरे**ति । **कालापिनः** एके शाखिनः । शाखान्तराम्नातं वाक्यं वनस्पतिसामान्यवाचि ; तस्य विशेषाकाङ्क्षायां तत्समर्थकत्वेन शेषभूतमित्यर्थः । **तथे**ति । देवदेवत्यान्यसुरदेवत्यानि च छन्दांसि । तत्रानिर्धारितक्रमविशेषस्य क्रमविशेषनिर्धारणमुखेन शेषभूतमित्यर्थः ॥ **देवासुराणा**मिति । देवासुरशब्दक्रमादेव च्छन्दःक्रमो ज्ञायत इति न वाक्यन्तरापेक्षेति चेत्—न; क्रमाविवक्षायामप्यल्पाच्तरत्वाद्देवशब्दस्य पूर्वनिपातसंभवेन वाक्यान्तरापेक्षणात् । **स्तोत्रम्**—गानविशेषविशिष्टोच्चारणम् । **शस्त्रम्**—एकस्वरोच्चारणम् । **उपाकरणं** प्रस्तावः । अत एवोपाकर्मणि

विशेषविषयं वाक्यं तद्वाक्यशेषतां भजते ; तथा "ऋत्विज उपगायन्ति" इत्यविशेषप्राप्तस्य "नाध्वर्युरुपगायेत् " इति वाक्यमनध्वर्युविषयतामवगमयत् तद्वाक्यशेषत्वमृच्छति ; एवं सामान्येनावगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिः तयोरर्थयोर्विकल्पः समाश्रयितव्यः। स च संभवन्त्यां गतौ न युज्यते ; तदुक्तं पूर्वस्मिन् काण्डे, "अपि तु वाक्यशेषत्वादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्" इति । तदेवं केवलहानोपायनवाक्ययोरेकवाक्यत्वात् केवलस्य हानस्य केवलस्य चोपायनस्याभावात् विकल्पो नोपपद्यते । कौषीतकिनामुभयाम्नानमविशेषपुनश्श्रवणत्वेन प्रतिपत्तृभेदादविरुद्धम् ॥ २६ ॥

इति हान्यधिकरणम् ।

---

चोपाकरणशब्दप्रयोगः; अध्ययनारम्भत्वात्। उपाकरोति—प्रस्तौतीत्यर्थः [[1]समयाविषिते समया उदिते (ईषदुदिते) इत्यर्थः ।] अनिर्धारितकालविशेषस्य वाक्यस्य कालविशेषं प्रतिपादयत् वाक्यं शेषभूतमित्यर्थः । **तथेति**। सामान्यप्राप्तमुपगानमृत्विग्विशेषे व्यवस्थापयद्वाक्यं सामान्येनोपगानवाचिवाक्यस्य शेषभूतमित्यर्थः ।, **अविशेषप्राप्तस्य** । उपगानस्येत्यध्याहारः । इमान्युदाहरणानि कर्मविचारोक्तानि । अमीषां वाक्यानां शाखान्तराम्नातवाक्यं प्रति शेषत्वानभ्युपगमे किं स्यादित्यत्राह **एवं सामान्येनेति**। **स चेति**। पाक्षिकबाधगर्भं विकल्पं विना समुच्चयेन गतौ सम्भवन्त्यामित्यर्थः । **तदुक्तमिति** सूत्रखण्डः । तं पूरयति **पूर्वस्मिन् काण्डे** इति । **एकवाक्यत्वादिति**। अन्योन्यशेषशेषिभावेनान्वयादेकवाक्यत्वम् । **केवलस्य हानस्य केवलस्य चोपायनस्य अभावात्**—अप्रामाणिकत्वात् । **विकल्पो नोपपद्यते** । सर्वोपनिषत्सु उभयमुक्तं भवतीति विकल्पो नोपपद्यत इत्यर्थः । **कौषीतकिनामिति**। अन्यतरोक्तावप्यन्यतरस्य प्राप्तत्वात् सर्वत्र हानमुपायनं चोक्तं भवतीत्यविशेषपुनश्श्रवणमेव । अतस्तत् प्रतिपत्तृभेदादिति वक्तुं युक्तमित्यर्थः ।

**परे** तु हानोपायनचिन्ताविकल्पसमुच्चयविषयं विचारमनिच्छन्तो वस्तुविषयं विचारमाचक्षते । उभयाम्नानेन सन्देहः। उपायनाम्नाने हानिरार्थिकी । केवलहान्याम्नाने विशयः, किं सुहृद्दुर्हृद्भिरुपायनं हान्या संनिपतेत् , उत नेति। अश्रुतत्वादन्यकर्तृके हाने अन्यकर्तृकोपायनस्यावश्यम्भावाभावात् विद्यान्तरशेषतया श्रुतस्यान्यत्र प्रतीत्ययोगाच्च नोपायनं संनिपततीति पूर्वपक्षं कृत्वा—उपायनस्य कौषीतकिवाक्ये हानशेषतया समधिगतत्वात् संनिपतति। अनुष्ठेयोपसंहारस्यैव विद्यैकत्वापेक्षा, न तु स्तुत्यर्थतया कीर्तितस्य। तस्य तूपसंहारो विद्यान्तरेऽपि युज्यते। अर्थवादान्तरस्य अर्थवादान्तरापेक्षा दृष्टा, "एकविंशो वा इतोऽसावादित्यः" इत्यर्थवादः, 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोकाः' इत्यर्थवादसाकाङ्क्षः ; 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्ययमपि 'इन्द्रियं वै त्रिष्टुप्' इत्यादिसापेक्षो दृष्टः । अतो विद्यास्तुतिप्रकर्षायोपायनं संनिपतति । शाखान्तरे श्रुतस्यान्यत्रापेक्षायां दृष्टान्ताः कुशादयः। गुणोपसंहारचिन्तायां स्तुत्युपसंहारचिन्ता

---

1 अयं पाठः क्वाचित्क इति भा० प्र०। समयाविषितशब्दस्य अर्धोदिते अर्धास्तमिते च यथायथं प्रयोगेऽपि एतत्स्तोत्रोपाकरणमर्धास्तमय एवेति च । समया—अस्मद्देशसमीपे देशान्तरे उदिते । तेनास्माकमस्तमिते इत्युक्तं भवति; एकत्रास्तमयस्यान्यत्रोदयरूपत्वात्। अस्तगिरेर्ध्वनेदिष्ठदेशं गते इति वाऽर्थः । ईषदुदिते इति पाठेऽपि ईषत्प्रकाशमाने अर्धास्तमिते इत्यर्थ एव ।

प्रासङ्गिकीति । विचारान्तरं च कुर्वते—विधूननं नाम किं हानम्, उतार्थान्तरम् (मिति?)। अमूर्तद्रव्येषु कम्पनायोगात् चलनवद्वस्तुगतं कार्यान्तरप्रतिबन्धनं लक्षणयोच्यत इति पूर्वपक्षं कृत्वा, 'लक्षणायामपि संनिहितोपायनपदानुसारेण प्रहाणलक्षणोचिता। शाखान्तरस्थस्य शाखान्तरेऽपि संनिधौ दृष्टान्ताः कुशादयः। उपायनशेषत्वादिति वक्तव्ये शब्दशेषत्वादिति निर्देशोऽन्यगतसुकृतदुष्कृतयोरन्यत्र प्रवेशासंभवेन स्तुतिपरत्वाभिप्रायः' इति चाहुः ॥

**अपरेषामपि** तुल्यम्। अन्ये तु स्तुत्यर्थत्वमनादृत्य हानोपायनयोर्योगान्ते चिन्त्यत्वमिच्छन्तः चिन्ताविकल्पसमुच्चयनिर्धारणाय—केवलहानौ नोपायनोपसंहारः; प्राप्तस्यावचने कारणान्तराभावादिति पूर्वपक्षं कृत्वा, अनारभ्याधीतसर्वविद्यासाधारणकौषीतकिवाक्यैकदेशप्रतिपन्नोपायनस्य सर्वहानवाक्यानां शेषत्वात् केवलहानश्रवणेऽप्युपसंहर्तव्यमित्याहुः।

अत्र ब्रूमः—अत्र साक्षात्सङ्गत्यभावः **परैरे**वाभ्युपेतः। तस्यां संभवन्त्यां प्रासङ्गिकविचारपरत्वमयुक्तम्। ननूपरितनाधिकरणद्वयं तवापि प्रासङ्गिकमिति चेत्—सत्यम्। सोऽस्माकं युज्यते, न तु भवतः; अधिकरणविशेषपश्चाद्भावनियामकाभावात्। प्रासङ्गिकेन हि विचारेण प्रसञ्जकानन्तरभाविना भाव्यम्। गुणोपसंहारः प्रसञ्जकश्चेत्—स्तुत्युपसंहारचिन्तया [1]द्वितीयादनन्तरं वा पादान्ते वा भवितव्यम्; न तु मध्ये; विशेषहेत्वभावात्। अस्माकं तु हान्यादिविचारे साक्षात् सङ्गते सति हान्यादेः समयविशेषादिचिन्तायास्तदनन्तरभावित्वं हि युज्यते। अतः सङ्गत्यन्यथानुपपत्त्या हान्यादिचिन्ताविषयो विचारो भवितुमर्हति ॥ केवलहानावुपायनं संनिपतेन्न वेति विचारो न घटते-सकलकर्मप्रहाणस्य सर्वब्रह्मविद्याफलत्वस्यार्थसामर्थ्यसिद्धत्वात्; ब्रह्मवेदनाव्यभिचारिसर्वकर्मप्रहाणप्रत्यभिज्ञापनेन विहितत्वादुपायनस्य, क्रत्वव्यभिचारिजुहूप्रत्यभिज्ञापनेन विहितपर्णताया इव सर्वासु विद्यासु संनिपातोपपत्तेर्न्यायान्तरनिरपेक्षत्वात्। विद्यान्तरगोचरार्थवादस्यार्थवादान्तरेण संनिपातोपपत्तिरपि दुर्वचा; एकविंशत्वार्थवादादिवत् साकाङ्क्षत्वाभावात्, एकविंशत्वस्याऽऽपेक्षिकत्वात् तत्रापेक्षणीयप्रतिपत्तिराकांक्षिता; नैवं विधूननश्रुतेरुपायनमपेक्षितम्। न हि, "पटु पटहध्वनिभिर्विधूतनिद्रः" इत्युक्ते निद्राया अन्यैरुपायनमपेक्षितम् ॥ तथाऽपि [2]रक्तपटन्यायेनोत्थापिताकाङ्क्षं संनिपततीति चेत्—न; अतिप्रसङ्गात्। पुनश्च किंप्रभावा विद्येत्यप्याकाङ्क्षामुत्थाप्य, 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद', 'नास्याब्रह्मवित् कुले भवति' इत्यादयोऽर्थवादाः कस्मान्नाकृष्येरन् ॥ पुरुषान्तरगतसुकृतदुष्कृतयोः पुरुषान्तरसंक्रमणानुपपत्त्या स्तुतिमात्रमिति चेत्—न; क्रियोचीर्णयोः कर्तृविषययोरीश्वरनिग्रहानुग्रहयोः पुरुषान्तरे फलदानानुगुण्यलक्षणसंक्रमणोपपत्तेः ॥ ननूपायनस्य सर्वविद्याशेषत्वे तच्चिन्तनस्य सार्वत्रिकत्वं स्वयमेव सिध्यतीति अनारम्भणीयता स्यादिति चेत्—न; पृथगाम्नानसामर्थ्यस्य पूर्वपक्षहेतोः स्थितत्वादारम्भोपपत्तेः ॥ २६ ॥ इति हान्यधिकरणम् ॥

---

1 द्वितीयात्—त्वन्मते द्वितीयाधिकरणत्वेनाभ्युपगतात् उपसंहारोऽर्थाभेदादिति सूत्रात्

2 रक्तः पटो भवतीत्यत्र रक्तपदप्रयोगान्यथानुपपत्त्या आकांक्षाकल्पनवत्।

## सांपरायाधिकरणम् ३-३-१२

### साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ ३-३-२७ ॥

सुकृतदुष्कृतयोर्हानमुपायनं च सर्वासु विद्यासु चिन्तनीयमित्युक्तम्; तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च; उत देहवियोगकाल एवेति विशये—

उभयत्रेति युक्तम्; उभयथा श्रुतत्वात् । एवं हि कौषीतकिनः समामनन्ति, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" इत्युपक्रम्य, "स आगच्छति विरजां नदीम् । तां मनसाऽत्येति । तत्सुकृतदुष्कृते धूनुते" इति । अत्र वाक्ये अध्वनि सुकृतदुष्कृतहानिः प्रतीयते । ताण्डिनस्तु, "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति । अत्र तु देहवियोगकाल इति प्रतीयते । शाट्यायनकेऽपि, "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति पुत्रेषु दायसंक्रान्तिसमकालं सुकृतदुष्कृतसंक्रमणं श्रूयमाणं देहवियोगकाल इति गम्यते । अतः सुकृतदुष्कृतयोरेकदेशो देहवियोगकाले हीयते; शेषस्त्वध्वनि— इति प्राप्ते—

उच्यते— साम्पराये इति । साम्पराये— देहादपक्रमणकाले एव विदुषः सुकृतदुष्कृते निरवशेषं हीयेते । कुतः । तर्तव्याभावात्—विदुषो देहवियोगात्पश्चात् सुकृतदुष्कृताभ्यां तरितव्यभोगाभावात् । विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण हि सुकृतदुष्कृताभ्यां भोक्तव्ये सुखदुःखे न विद्येते । तथा ह्यन्ये देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरिक्तसुखदुःखोपभोगाभाव-मधीयते, "अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः", "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति ॥ २७ ॥

---

**साम्पराये तर्तव्याभावात् तथा ह्यन्ये** ॥ सङ्गत्यर्थमनुवदति **सुकृतेति** । **ताण्डिनः**—[1]छन्दोगाः । किं विदुषः सुकृतदुष्कृतहानं देहवियोगकाले अध्वनि च, उत देहवियोगकाल एव; किमुभयत्र हानिश्रवणम्, उत देहवियोगकाल एव; किं 'सुकृतदुष्कृते धूनुते' इति वाक्यावयवस्य 'स एतं देवयानम्' इत्यस्मात्प्रागन्वयः, उत यथापाठमन्वयः; किमशरीरस्य सुखदुःखाननुभवश्रवणानुरोधेन प्रागन्वयवर्णनं न्याय्यम्, उत देवयानगत्यै सूक्ष्मदेहस्थित्यर्थं यथापाठमन्वयवर्णनं न्याय्यम्; किं सूक्ष्मदेहस्थितिः कर्मणा विनोपपद्यते, नेति । न चेत्—सूक्ष्मदेहस्थितये यथापाठमन्वयस्य न्याय्यत्वात् तथैवान्वय इति उभयत्र हानिश्रवणात् देहवियोगकालेऽध्वनि च हानं स्यात् । सूक्ष्मदेहस्थितिः कर्मणा विनोपपद्यते चेत्—प्रागन्वयवर्णनस्य न्याय्यत्वेन तथैवान्वय इत्युभयत्र श्रवणाभावात् देहवियोगकाले एव सुकृतदुष्कृतहानं स्यात् ॥ **अत्रेतरे सर्वे च** कौषीतकिवाक्यमेवोदाहृत्य साम्परायेऽध्वनि वेति संशयमाहुः । तदयुक्तम्; वाक्यद्वयोत्थत्वात् संशयस्य । न हि कौषीतकिवाक्यमात्रेण संशयो जायते । दायसंक्रान्तिसमकालत्वमपि देहवियोगकाल एव प्रहाणस्यार्थापत्तिः । उभयश्रुत्यवैयर्थ्यं पूर्वपक्षहेतुः ।

**इति प्राप्त** इत्यादि । **तर्तव्याभावादिति** । अत्र **तरतिः** प्राप्तिवचनः । **अशरीरं वा व सन्तमिति** । शरीरवियोगानन्तरमेवेति भावः ॥ २७ ॥

---

1 छन्दोगाः— छान्दोग्यनामकोपनिषच्छाखाध्यायिनः ।

**छन्दत उभयाविरोधात् ॥ ३-३-२८ ॥**

एवमर्थस्वाभाव्यात् सुकृतदुष्कृतहानिकालेऽवधृते सति, उभयाविरोधेन— श्रुतेरर्थस्वभावस्य चाविरोधेन, छन्दतः— यथेष्टं पदानामन्वयो वर्णनीयः । कौषीतकिवाक्ये, "तत्सुकृतदुष्कृते धूनुते" इति चरमश्रुतो वाक्यावयवः, "एतं देवयानं पन्थानमापद्य" इति प्रथमश्रुतान्नयचात्प्राक् अनुगमयितव्य इत्यर्थः ॥ २८ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३-३-२९ ॥**

सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः, शेषस्य च पश्चादिति उभयथा कर्मक्षये सत्येव गतेरर्थवत्त्वम्— देवयानगतिश्रुतेरर्थवत्त्वमित्यर्थः । अन्यथा हि विरोधः । देहवियोगकाले एव सर्वकर्मक्षये सूक्ष्मशरीरस्यापि विनाशः स्यात् । तथा सति केवलस्यात्मनो गमनं नोपपद्यते । अत उत्क्रान्तिसमये विदुषो निश्शेषकर्मक्षयो नोपपन्नः ॥ २९ ॥

अत्रोत्तरम्—

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३-३-३० ॥**

उपपन्न एव उत्क्रान्तिकाले सर्वकर्मक्षयः । कथम् । तल्लक्षणार्थोपलब्धेः— क्षीणकर्मणोऽप्याविर्भूतस्वरूपस्य देहसंबन्धलक्षणार्थोपलब्धेः । "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", "स तत्र पर्येति जक्षत् क्रीडन् रममाणः", "स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति", "स एकधा भवति त्रिधा भवति" इत्यादिषु देहसंबन्धाख्योऽर्थो ह्युपलभ्यते । अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते ॥ कथं सूक्ष्मशरीरमप्यारम्भक-

---

**छन्दत उभयाविरोधात्** ॥ **अर्थस्वाभाव्या**दिति श्रुतिवाक्ये सत्यपि **तर्तव्याभावा**दिति सूत्रोक्तत्वादर्थस्वाभाव्यमेवात्र हेतुरुक्तः । **श्रुतेरर्थस्वभावस्य चाविरोधेने**ति । **श्रुतेः**—देहवियोग[काल] एव प्रहाणपरश्रुतेः । **पदाना**मिति । महावाक्यापेक्षया पदस्थानीयानां वाक्यावयवानामित्यर्थः । **छन्दत** इति । **यथेष्ट**मित्युक्ते कुत्र केषामित्यन्वयस्यास्फुटत्वादनुपपन्नान्वयो मा भूदिति तदर्थमाह **कौषीतकी**ति । यथा 'अग्निहोत्रं जुहोति', 'यवागूं पचति' इति वाक्ययोरर्थक्रमेण पाठक्रमो बाध्यते—तद्वदिहापि, 'तत्सुकृतदुष्कृते धूनुते', 'स एतं देवयानं पन्थानमापद्य' इति अर्थ[तः]क्रम इत्यर्थः ॥ २८ ॥

अनन्तरसूत्रमवतारयति **अत्रे**ति । **गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः** ॥ केवलस्यात्मनो गमनं नोपपद्यत इति कथम् ; अणुत्वात् गमनं युज्यते इति चेत्—न ; करणकलेबररहितस्य प्रवृत्त्यशक्तत्वात् ; सत्यसङ्कल्पत्वादेरनाविर्भूतत्वाच्च । उपपन्नः इत्युत्तरसूत्रारम्भत्वात् तत्सङ्घटनार्थ**मनुपपन्न** इति पूर्वसूत्रव्याख्यानं समापितम् ॥ २९ ॥

उत्तरसूत्रमवतारयति **अत्रोत्तर**मिति । **उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्** ॥ **लक्षण**शब्दः स्वरूपवाची । अकर्महेतुकदेहसंबन्धरूपप्रमेयोपलब्धेरित्यर्थः ॥ तदुपलब्धेरिति वक्तव्ये किमर्थं **तल्लक्षणार्थोपलब्धे**रिति शब्दभूयस्त्वमिति चेत्—उच्यते । न ह्याविर्भूतस्वरूपस्य कर्मकृतप्राकृतदेहसम्बन्धोऽस्ति । तस्माच्छरीरत्वाकारेण सजातीयदेहसम्बन्धमात्रमेव ; न त्वयमेव कर्मकृतः प्राकृतदेह इत्यभिप्रायेण **तल्लक्षणार्थोपलब्धे**रित्युक्तम् । **लोकव**दिति सौत्रमंशमवतारयितुमाह—**कथ**मिति ।

कर्मविनाशोऽवतिष्ठत इति चेत्— विद्यामाहात्म्यादिति ब्रूमः । विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकाऽपि, प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि, स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति । लोकवत्—यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तटाकादिके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तटाकादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादि कुर्वन्ति ; तद्वत् ॥ ३० ॥

अथ स्यात्—ज्ञानिनां साक्षात्कृतपरतत्त्वानां देहपातसमये कर्मणो निरवशेषक्षयात् देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते, सुखदुःखानुभवो न विद्यते इति यदुक्तम्— तन्नोपपद्यते ; वसिष्ठावा(पा)न्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानां देहपातादूर्ध्वं देहान्तरसंगमः पुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवश्च दृश्यते—इति । अत उत्तरं पठति—

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३-३-३१ ॥**

नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतयोर्विनाश उक्तः ; अपि तु येषां ज्ञानिनां देहपातानन्तरमर्चिरादिका गतिः प्राप्ता, तेषां देहपातसमये सुकृतदुष्कृतहानिरुक्ता । वसिष्ठादीनां त्वाधिकारिकाणां न देहपातानन्तरमर्चिरादिगतिप्राप्तिः ; प्रारब्धस्याधिकारस्यासमाप्तत्वात् । तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते । प्रारब्धस्य हि कर्मणो भोगादेव क्षयः । अत आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते । अतस्तेषां न देहपातादनन्तरमर्चिरादिगतिप्राप्तिः ॥ ३१ ॥ इति साम्परायाधिकरणम् ।

---

विद्यामाहात्म्यमुपपादयति **विद्याहीति** । पापं यथा स्वफलभूतदुःखभोगाय निरयप्राप्तिहेतुं वपुर्दिशति, यथा पुण्यं स्वफलभूतसुखभोगाय स्वर्गप्राप्तिहेतुं वपुर्दिशति, तथा ब्रह्मविद्याऽपि स्वफलब्रह्मप्राप्तिहेतुं शरीरं स्थापयतीत्यर्थः । **लोकवदिति** सूत्रखण्डं व्याचष्टे– **यथेति** । अन्यहेतुकतयोत्पन्नस्य हेत्वभावेऽपि कार्यान्तरार्थं स्थितौ दृष्टान्त उक्तः ॥ ३० ॥

अनन्तरसूत्रशङ्कामाह **अथ स्यादिति** । **यावदधिकारमवस्थितिराधिकारिकाणाम्** ॥ वसिष्ठादीनामर्चिरादिगत्यनासत्तिमुपपादयति **प्रारब्धस्येति** । **अधिकारः** ··· पदम् ॥ ततः किमित्यत्राह **तेषामिति** । देहपातानन्तरप्राप्तार्चिरादिगतीनामेव विदुषां देहपातसमकाले सुकृतदुष्कृतक्षयः, न त्वन्येषाम् । वसिष्ठादीनाम् असमाप्ताधिकाराणां तद्धेतोरनुभवैकविनाश्यस्य कर्मणो विद्यमानतया नार्चिरादिगतिरासन्ना । अतो न देहपातसमकाले कर्मक्षय इति न दोष इत्यर्थः ।

अत्र तु द्वितीयसूत्रस्य **परैर्वर्णकान्तरं** च कृतम्—कर्मक्षयहेतोर्यमनियमादिविद्याभ्यसनस्य देहपातात् पश्चात् अशक्यतया तद्धेतुकर्मक्षयस्यानुपपत्तेः देहपातात्पूर्वमेव **छन्दतः**—इच्छातोऽनुष्ठानं तत्पूर्वकं सुकृतदुष्कृतहानं च स्यात् । एवं च सति निमित्तनैमित्तिकयोरविरोध इति ॥ अध्याहारबाहुल्यात् कौषीतकिनां पाठस्य परिहारस्य वक्तव्यत्वाच्च तदनादरः । देवयानमध्येऽनुष्ठानानुपपत्तेः प्रहाणानुपपत्तिरिति वा, साधकावस्थायामेव छन्दतोऽनुष्ठानं तत्पूर्वकं च सुकृतदुष्कृतहानमिति वा अध्याहारः कार्यः । अस्माकं तु, अन्वयः कार्य इत्येतावदध्याहार्यम् ।

**गतेरर्थवत्त्व**मित्यधिकरणान्तरं कृतम्। देवयानः पन्थाः क्रमविशेषेण सर्वत्र संनिपतेत्; उत विभागेन क्वचित् संनिपतेत् क्वचिन्नेति विचार्य—हानिसंनिधौ श्रुतत्वात् उपायनानुवृत्तिवत् देवयानानुवृत्तिरिति पूर्वपक्षं कृत्वा—**गतेर्**देवयानस्य पथो**ऽर्थवत्त्वम् उभयथा**—क्वचित्संनिपतेत् क्वचिन्नेति विभागेन भवति; निरञ्जनस्य ब्रह्मभूयंगतस्य देशान्तरगमनविरोधात्, पर्यङ्कविद्यादिसगुणोपासनेष्वेव गतिकारणभूतपर्यङ्कारोहणाद्युपलब्धेश्च। **लोकवत्**। यथा ग्रामान्तरप्राप्तेर्मार्गापेक्षत्वेऽपि नारोग्यप्राप्तौ मार्गापेक्षा, तद्वदिति वर्णितम्॥

तदयुक्तम्; निर्गुणविद्याया एवाप्रामाणिकत्वादक्षरास्वारस्याच्च। **अर्थवत्त्वमुभयथे**त्युक्ते त्वर्थवत्त्वस्यैव प्रकारद्वययोगित्वं स्यात्। देवयानस्य क्वचिदसंनिपातो नाम तत्र प्रयोजनशून्यत्वम्। कथमर्थवत्त्वस्य प्रकारोऽर्थशून्यत्वम्। ब्रह्मणोऽनन्तत्वेऽप्युपासकस्य निरञ्जनत्वाविर्भावः कालविशेषमिव देशविशेषमपेक्षत इति न विरोधः॥

**अपरे** त्वाहुः—परकीययोः कथं परत्र सङ्क्रान्तिरित्याशङ्कायां **छन्दतः**—परत्र शुभाशुभसङ्कल्पतः तदीयसुकृतदुष्कृतापत्तिः। 'शप्यमानस्य यत् पापं शपमानं तु गच्छति' इत्यादिशास्त्रप्रामाण्यात् न युक्तयः क्रमन्ते। कौषीतकिशाट्यायनश्रुत्यो**रविरोधात्**। एवं पुण्यमपि निवर्तते चेत्, किमर्था गतिरित्यपेक्षायां **गतेरर्थवत्त्व**मित्यादि। गतेरर्थवत्त्वम् **उभयथा** पुण्यपापनिवृत्तिरूपप्रकारद्वयेन भवति। **अन्यथा** पुण्यानुवृत्तावनावृत्तिश्रुति**विरोधः**। गतिश्च देशविशेषप्राप्तये युज्यते—तदाह **उपपन्नः** इति। उपपन्नो गत्युपदेशः; पर्यङ्कविद्यायां **लोक** इव कार्यब्रह्मणा संवादाद्युपलब्धेरिति॥

तत्र ब्रूमः। परत्र शुभाशुभसङ्कल्पत इत्युक्तेऽपि, परकीययोः कथमन्यत्र प्रवेश इति संशयोऽवतिष्ठते। तत्र शास्त्रप्रामाण्यादिति वक्तव्यम्। अतः कौषीतकिशाट्यायनश्रुत्योरविरोधादित्येतावताऽलम्; **छन्दत** इत्यस्य वैयर्थ्यम्। अनन्तरसूत्रस्य च, 'पुण्यं निवर्तते चेत्, किमर्था गतिः' इति शङ्कापरिहारपरत्वमयुक्तम्; देशविशेषप्राप्तिरूपप्रयोजनस्याशाब्दत्वात्। कण्ठोक्तोभयहानस्यानावृत्तिश्रुत्यविरोधस्य च गतिप्रयोजनत्वाभावात्। सुकृतदुष्कृतप्रहाणं देहवियोगसमय एव भवद्भिर्निश्चितमिति तस्य पश्चाद्भाविगतिप्रयोजनत्वं ह्ययुक्तम्। अनावृत्तिश्रुत्यविरोधस्य च गन्तृपुरुषसमवेतत्वाभावेन गतिफलत्वासंभवः। गतिप्रतिपादकाभ्युपगमफलं हि तद्गन्तृगतम्॥ कार्यब्रह्मप्राप्तितत्संवादादि प्रयोजनमनन्तरसूत्रोक्तमस्तीति चेत्—तर्हि तेनैवालम्।

**अन्ये तु—साम्पराये** इति सूत्रं पूर्वपक्षविषयं कृत्वा द्वितीयस्य सिद्धान्तविषयत्वमिच्छन्तः श्रुतिद्वयविरोधपरिहारपरं द्वितीयसूत्रमेवं व्याचक्षते—**छन्दतः** सङ्कल्पतः चिन्तनात्—उपासनार्थम् अध्वनि सुकृतदुष्कृतहानम्; कौषीतकिवाक्यस्यानारभ्याधीतत्वात् सर्वविद्याशेषत्वेनानुचिन्तनार्थम्। इतरद्वाक्यं तत्त्वप्रतिपत्त्यर्थम्। एवमुभयोः श्रुत्योरविरोध इति। यद्वा—यैः कर्महानमध्वनि चिन्तितम्, तेषां तदध्वनि स्यात्; यैर्देहवियोगे तच्चिन्तितम्, तेषां देहवियोगे स्यादिति छन्दत उभयत्राविरोध इत्याहुः।

## अनियमाधिकरणम् ३-३-१३

### अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३-३-३२ ॥

तत्र प्रथमः पक्षोऽनुपपन्नः—मुमुक्षूणां तत्त्वस्यैव चिन्तनीयत्वेन चिन्तनार्थं तत्त्वप्रतिपत्त्यर्थं चेति विभागानुपपत्तेः। चिन्तितप्रकारेण फलसिद्धिश्चेत्, तत्त्वमेव स्यात्। न चेत्, चिन्तनवैयर्थ्यम्। छन्दश्शब्दस्य चिन्तावाचित्वं च क्लिष्टम्। छन्दतश्चेति चशब्दाभावात् तत्त्वप्रतिपत्त्यर्थताया अशाब्दत्वं च। द्वितीयोऽप्यनुपपन्नः; तुल्यबलत्वाभावादुपासकभेदेन विकल्पाश्रयणानुपपत्तेः। साम्परायपक्षो हि वाक्यद्वयावगतः; इतरस्त्वेकेन। 'पापं विधूय...धूत्वा शरीर'मिति श्रौतक्रमस्तर्तव्यभोगाभावानुगृहीतः तदननुगृहीतात् कौषीतकिनां पाठक्रमात् प्रबलश्च।

**गतेरर्थवत्त्व**मित्यधिकरणान्तरमाहुः—अर्चिरादिगतिः किं तत्त्वप्रतिपत्त्यर्थमाम्नायते? उत तत्त्वप्रतिपत्त्यर्थमुपासनार्थं चेति संशयः। गतिमुपासीतेति विध्यभावात् पूर्वपक्षः। एकस्या एवार्चिरादि-गतेर्न्यूनाधिकपर्वभावेन श्रुतत्वात् न्यूनाधिकभावविरोधस्योपासनार्थतया परिहर्तव्यत्वात्, ध्यानस्य ध्यानवतां तथा तथा प्राप्त्यर्थत्वाच्च उभयार्थमिति सिद्धान्तयन्ति। तत्तद्विद्यासु प्रतिपादितपर्वमात्रचिन्ता; गतिश्रवण-रहितासु विद्यासूपसंहृतसर्वपर्वा गतिश्चिन्त्या; यथातत्त्वमुपासनस्य निसर्गप्राप्तत्वादित्याहुः। 'एवंवित् पादेनैवाध्यारोहति' इति वचनाच्च तत्त्ववेदनमुपासनं च गत्याम्नानफलमवगतम्। वेदनशब्दो ह्यविशेषात् तत्त्वज्ञानमुपासनं च वदतीति। **उपपन्न** इति। गतिश्रुतेरुभयथाऽर्थ उपपन्नः, तत्प्रमाणतया मूर्धन्यनाड्या निष्क्रमणेन ब्रह्मप्राप्त्युप**लब्धेः**। तथा निष्क्रमणस्यान्तकाले पुरुषेण कर्तुमशक्यत्वात् स्मृत्यविभ्रंशेन तत्सौ-कर्यायानुदिनं स्मरणं कार्यम्। लोके परिशीलितेनाध्वना गच्छन् हि संतमसेऽपि न प्रमाद्यतीति वर्णयन्ति॥

तदयुक्तम्; मार्गपर्वविरोधस्य उपासनार्थत्वेन विनाऽपि सुपरिहरत्वस्य गतिपादे वक्ष्यमाणत्वात्। मार्गपर्वणां न्यूनाधिकभावविरोधस्तु सर्वशाखाप्रत्ययन्यायेन सुपरिहरः। परिहरिष्यते च। क्वचित् कस्य-चिदनाम्नानस्याज्ञाननैरर्थक्यनिबन्धनत्वाभावात्; अन्यत्राम्नातस्यासद्भावायोगात; वस्तुनि विकल्पायोगाच्च॥ तथा तथोपासनार्थमिति चेन्न; उपासनार्थत्वेन विनाऽप्यनाम्नानोपपत्तेः। न हि कर्मकाण्डे क्वचित्कस्यचिद-नाम्नानमुपासनार्थम्, नाप्यज्ञानादिनिबन्धनम्। किंनिबन्धनमिति चाचोदनीयम्; अनादिवेदपाठस्या-पर्यनुयोज्यत्वात्। मन्त्रब्राह्मणभागाः क्वचिदसङ्कीर्णा आम्नाताः, क्वचिच्च सङ्कीर्णाः। कोऽत्र पर्यनुयोगः। अनाम्नानस्य न्यूनतयोपासनार्थत्वे सर्वशाखाप्रत्ययन्यायश्च भज्यते; क्वचिदप्यनुक्तोपसंहारस्यानपेक्षितत्वाच्च। 'एवंवित् पर्यङ्कं पादेनैवाध्यारोहति' इति श्रुतिश्च यथावस्थितमार्गविषयतयोपपन्ना; तस्याः श्रुतेः[1] न्यूनाधिक-पर्वविशिष्टताविषयत्वे नियमकाभावात्। न च फले तुल्येऽपि न्यूनाधिकानुसन्धानं युक्तम्। न हि मार्गपर्वसु कस्यचिदप्राप्तिरुपपद्यते। न हि प्रथमद्वितीयानतिक्रमेण दशमसोपानप्राप्तिरुपपद्यते। **उपपन्न** इत्यादिसूत्रार्थोऽप्यनुपपन्नः; मार्गचिन्तनस्य दृष्टोपायत्वानुपपत्तेः। न हि चिरानुध्यातो राजमार्ग उत्क्रान्तेन प्राप्तुं शक्यते। अतो यथाभाष्यमेवार्थ उपपन्नः। इति साम्परायाधिकरणम्॥

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्** ॥ अर्चिरादिगतेः प्रस्तुतत्वात्

---

1 अयं तालपाठः। अन्यत्र, तस्याश्रुतत्वेनेति।

उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिः श्रूयते, किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानामिति संशये— इतरेष्वनाम्नानात्, "ये चेमे अरण्ये श्रद्धा तप इत्युपासते", "श्रद्धां सत्यमुपासते" इति इतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्ते— अभिधीयते अनियम इति । सर्वेषां— सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तयैव गमने हि सति शब्दानुमानाभ्यां— श्रुतिस्मृतिभ्यामविरोधः । अन्यथा विरोध एवेत्यर्थः । श्रुतिस्तावत् छान्दोग्यवाजसनेयकयोः पञ्चाग्निविद्यायामर्चिरादिमार्गेण सर्वब्रह्मोपासननिष्ठानां गमनमाह, "य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति" इति वाजसनेयके, "तद् य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इति छान्दोग्ये । "य इत्थं विदुः" इति पञ्चाग्निविद्यानिष्ठान्, "ये

तन्नियमानियमचिन्तेत्यवान्तरसङ्गतिः । किमर्चिरादिगतिस्तत्संनिधिसमाम्नातोपासननिष्ठानामेव ; उत सर्वविद्यानिष्ठानाम् ; किं छन्दोग्यवाजसनेयकयोः 'तद्य इत्थं विदुः', 'य एवमेतद्विदुः' इति वाक्ययोः पञ्चाग्निविद्यानिष्ठानामेवार्चिरादिगतिश्रवणम्, उत सर्वब्रह्मविद्यानिष्ठानाम् ; 'ये चेमे अरण्ये श्रद्धा तप इत्युपासते', 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति किं पञ्चाग्निविद्यानिष्ठानुद्दिश्य गतिर्विधीयते, किमितरानप्युपासकान् ; किं श्रद्धासत्यतपश्शब्दैरुपास्यब्रह्मोपस्थापनमुखेन उपासनान्तरप्रतिपत्तिरस्ति, नेति ; किम् उपकोसलविद्यायाम्, 'आचार्यस्तु ते गतिं वक्ता' इति [1]गत्यनुवादः उपासनान्तरप्रतिपत्तिमुपोद्बलयति, नेति । यदा नोपोद्बलयति, तदा ब्रह्मोपस्थापनमुखेन उपासनान्तराप्रतिपत्तेः इतरोपासकानामनुद्दिष्टत्वात् पञ्चाग्निविद्यानिष्ठानेवोद्दिश्य गतिविधानात् छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामर्चिरादिगतिश्रवणाभावात् न सर्वब्रह्मविद्यानिष्ठानामिति स्यात् । यदोपोद्बलयति, तदा ब्रह्मोपस्थापनमुखेनोपासनान्तरप्रतिपत्तेः इतरानप्युद्दिश्य विहितत्वेन छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामप्यर्चिरादिगतिश्रवणात् सर्वब्रह्मनिष्ठानामप्यर्चिरादिगतिः स्यादिति । सिद्धान्त्यभिमतवाक्यस्य निर्वाहमाह **ये चेमे** इति । **प्रमाणाभावादि**ति, सत्यतपःशब्दयोर्ब्रह्मवाचकत्वे कारणाभावोऽभिप्रेतः ।

**इति प्राप्त** इति । **गमने हि सती**ति । **हिसति**शब्दः सूत्रयोजनाशेषः । **अविरोध** इति । श्रुतिस्मृतिभ्यामस्यार्थस्याविरोध इत्यर्थः । उदाहृतवाक्यैः सर्वब्रह्मविद्यानिष्ठानामर्चिरादिगतिमत्त्वप्रतिपादनं दर्शयति छान्दोग्ये[2], **य इत्थं विदुरि**ति । सत्यशब्दस्य ब्रह्मवाचकत्वं दर्शयन् तन्मुखेन तपःशब्दस्यापि तद्वाचित्वं दर्शयति **सत्यं ज्ञान**मिति । तपश्शब्दस्यापि, "परमं यो महत् तपः" इत्यादिषु द्रष्टव्यम् । **परैस्तु** विद्यामन्तरेण केवलश्रद्धातपोभ्यामर्चिरादिगतिलाभासंभवस्य, "विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः" इत्यादिश्रुतिसिद्धत्वात् श्रद्धातपःपरायणानां विद्यानिष्ठत्वमार्थमित्युक्तम् । तदविरुद्धम् । आर्थत्वादपि शाब्दत्वं संभवत् युक्ततमम् । 'स एनान् ब्रह्म

1 इति गत्यनुवादः—इत्युक्तगत्यनुवादकवाक्यं तेर्चिषमभिसंभवन्तीतीदं गत्यनुवादत्वादेव सर्वत्र गतिप्रतिपत्तिमुपोद्बलयतीत्यर्थः । यद्वा अग्निभिः पञ्चाग्निविद्याभिन्नस्थलेऽपि गतिं सिद्धवत्कृत्यैवं कथनमित्यर्थः । 2 छान्दोग्य इति पदमवतारिकान्तर्गतम् ; न तु प्रतीकगतम् ; भाष्ये छान्दोग्य इत्यत्र वाक्यस्य छिन्नतया उपर्यनन्वयात् ।

चेमे" इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्य अर्चिरादिका गतिरुपदिश्यते, "सत्यं ज्ञानमनन्तं ब्रह्म", "सत्यं त्वेव विजिज्ञासितव्यम्" इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः तपःशब्दस्यापि तेनैकार्थ्यात् सत्यतपश्शब्दाभ्यां ब्रह्मैवाभिधीयते । श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम्, "सत्यं त्वेव विजिज्ञासितव्यम्" इत्युपक्रम्य, "श्रद्धा त्वेव विजिज्ञासितव्या" इति । स्मृतिरपि, "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह । एवंजातीयकाः श्रुतिस्मृतयो बह्वयः सन्ति । एवं सर्वविद्यासाधारणीयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥ ३२ ॥

इति अनियमाधिकरणम् ॥

---

गमयति' इति ब्रह्मप्राप्तिफलत्वात्, फलस्य च यथोपासनभावित्वात्, तत्रोपास्यतया प्रतीतं सत्यतपश्शब्दवाच्यं ब्रह्मैवेति च सिद्धम् । श्रद्धापूर्वकं ब्रह्मोपासनस्य श्रुत्यन्तरसिद्धतां दर्शयति **श्रद्धापूर्वक**मिति । स्मृतिवचने, 'ब्रह्म ब्रह्मविदो जनाः' इत्यत्र तात्पर्यम् ; न विद्याविशेष उक्तः । **एवंजातीयका** इति । 'तयोर्ध्वमायन्नमृतत्वमेति', 'सूर्यद्वारेण ते विरजाः प्रयान्ति', 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्याऽऽदित्यमभिजयन्ते' इत्यादयः श्रुतयः, "स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु । द्रष्टव्यस्त्वनुमन्तव्यः श्रोतव्यश्च द्विजातिभिः । य एवमेनं जानन्ति ये चारण्यकमाश्रिताः । उपासते तपः सत्यं श्रद्धया परा युताः । क्रमात् ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम् । अयनं देवलोकं च सवितारं सवैद्युतम् । तत्र तत्पुरुषो दिव्योऽमानवो ब्राह्मलौकिकान् । करोति पुनरावृत्तिस्तेषामिह न विद्यते" इत्यादिस्मृतयश्च विवक्षिताः । सर्वविद्यास्वर्चिरादिगतिः प्राप्ता चेत्—छान्दोग्ये प्रदेशद्वयेऽर्चिरादिगतेर्द्विरुक्तिः कथमित्यत्राह- **एवं सर्वे**ति । पूर्वपक्षे, 'तद्य इत्थं विदुः' इत्यादि[1]वाक्यस्य सङ्कोचोऽनुवादत्वं च । सिद्धान्ते तु न तत्सङ्कोचः । अन्येषामनुवादत्वमात्रमेव । इदमधिकरणम् अर्चिरादिगतिचिन्तनस्य तत्सिद्धयर्थत्वात् अर्चिरादिगतेः सर्वविद्यासु चिन्तनीयतया कृतम् । तत् व्यक्तीभविष्यति ।

**इतरे सर्वेऽपि—यावदधिकार**मिति सूत्रमतः परस्तात् पठित्वा अधिकरणान्तरमाहुः । तत्र **परे तु**—विदुषस्तद्देहपातानन्तरं देहान्तरमुत्पद्यते, न वेति संशय्य, ब्रह्मविदामपि वसिष्ठादीनामितिहासपुराणेषु देहान्तरोत्पत्त्यवगमाद्विद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति पूर्वपक्षं कृत्वा—वर्तमानब्रह्मविदां प्रारब्धभोगक्षय इवाधिकारिकपुरुषाणामपि प्रारब्धाधिकारहेतुकर्मक्षये मोक्ष इति न पाक्षिकहेतुत्वाहेतुत्वे इति सिद्धान्तयन्ति ; तदयुक्तम्—प्रत्यक्षया श्रुत्या विद्याया अपवर्गहेतुत्वे श्रुते तद्विरुद्धेतिहासपुराणवचसामप्रमाणतया विद्याया अपवर्गसाधनत्वे संशयानुत्थानात् । किञ्च, यावदधिकारमवस्थितिरित्युक्ते कथमहेतुत्वपरिहारः । यावदधिकारमवस्थानेन वर्तमानदेहानन्तरमप्यवर्गाभावस्य सिद्धत्वादहेतुत्वमेव समर्थितं भवति ॥ नन्वधिकारस्य प्रारब्धकर्मकृतत्वात् तदवसाने मोक्षहेतुत्वमेव विद्याया मोक्षहेतुत्वमिति

---

1 इत्यादिवाक्यस्य—इत्यारभ्यप्रवृत्तस्य ये चेमे इति द्वितीयवाक्यस्य । तेन तत्तत्प्रकरणश्रुतार्चिरादिगतिकविद्यानिष्टमात्रग्रहणात् संकोचः । तत्रतत्रैव गतेर्विहितत्वाच्चात्रानुवादत्वमित्यर्थः ।

## अक्षरध्यधिकरणम् ३-३-१४

### अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ।। ३-३-३३ ।।

बृहदारण्यके श्रूयते, "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यम् न तदश्नाति किञ्चन... एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति । तथा आथर्वणे, "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्" इति । तत्र संशयः— किमिमे अक्षरशब्दनिर्दिष्टब्रह्मसंबन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मविद्यास्वनुसन्धेयाः, उत यत्र श्रूयन्ते तत्रैवेति । किं युक्तम् । यत्र श्रुतास्तत्रैवेति । कुतः ।

---

चेत्—न ; प्रारब्धकर्मणोऽपि स्वाप्नार्थवन्मिथ्यात्वेन निवर्तकज्ञाने सति स्थित्यनुपपत्तेः ।। प्रवृत्तफलस्य कर्माशयस्य मुक्तेषोर्वेगक्षयादिव फलक्षयान्निवृत्तिरिति चेत्—न, स्वाप्नशरवेगस्येव मिथ्यात्वेन बोधादनन्तरं भोगानुपपत्तेः । न हीषुमोक्षणक्षण एव पुरुषे प्रबुद्धे शरश्च वेगश्चाबाधितौ तिष्ठतः । यदि वसिष्ठादीनां न निवर्तकज्ञानमुदितम्, तर्ह्यहेतुत्वशङ्काया अभावात् सुतरामनारम्भणीयता । **अपरे तु** वसिष्ठादीनां देहान्तरोत्पत्तिदर्शनेन विद्याया अर्चिरादिना अपवर्गहेतुत्वव्यभिचारशङ्कानिवारकं सूत्रं व्याचक्षते, तन्मतेऽपि श्रुतिविरोधे स्मृत्यप्रामाण्येन संशयाभावात् अधिकरणानारम्भस्तुल्यः । **अन्ये** तु अर्चिरादिमार्गस्य ऋजुत्वात् आदित्यादीनां परिभ्रमणशीलत्वेन अत्र नियमेनानवस्थानादार्जवेन न सदा देवाश्चिन्त्याः; किन्तु यदा यत्र यस्तिष्ठति, स तत्र तदा चिन्त्य इति विचार्य भ्रमतामपि सूर्यादीनां शरीरान्तरेण मार्गानुगुणस्थित्युपपत्तेर्मार्गानुगुण्येन सदा ते देवाश्चिन्तनीया इति सिद्धान्तयन्ति । तदयुक्तम् ; कृतकरत्वात् । देवताधिकरणे अनेकप्रतिपत्तेर्दर्शनादिति युगपदनेकत्र प्रवृत्तिविरोधो हि शरीरभेदेन परिहृतः । यतो विचारान्तराण्ययुक्तानि, अत एवास्य सूत्रस्य विदुषो देहात्यये सकलकर्मक्षयस्य व्यभिचारशङ्काव्युदासपरत्वमेव युक्तम् । यतस्तदेव युक्तम् । अत एव साम्परायाधिकरणशेषत्वमेव घटत इति **अनियम**सूत्रात् प्रागेव पाठः समीचीनः ।। ननु अनियमसूत्रात् परत्वमुपपद्यते ; विदुषोऽर्चिरादिना अपवर्गप्राप्त्यदर्शनपरिहारपरत्वेऽपि सङ्गत्युपपत्तेः ।। नैवम् ; अर्चिरादिगतेर्देहानन्तरभावित्वचिन्तनपरत्वाभावादनियमसूत्रस्य । सर्वविद्यानिष्ठसाधारणत्वं हि तेन सूत्रेण निरूपितम् । अतो विद्याफलविशेषस्य देहपातानन्तरभावित्वचिन्तनपरस्य **यावदधिकार**मिति सूत्रस्य साम्परायाधिकरणशेषतया पूर्वमेव पठनं युक्तम् ।। ३२ ।। इति अनियमाधिकरणम् ।।

**अक्षरधियां त्ववरोधः सामान्यद्भावाभ्यामौपसदवत्तदुक्तम्** ।। अर्चिरादिगतेः सर्वविद्यासाधारण्यमुक्तम् । तथा अस्थूलत्वादेरपि सर्वसाधारण्यं निरूप्यत इति सङ्गतिः । पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः, अत्रापि तथेति वा सङ्गतिः । **प्रपञ्चप्रत्यनीकतास्वरूपा** इति । प्रपञ्चप्रत्यनीकं ब्रह्म तस्य प्रपञ्चप्रत्यनीकस्वरूपस्वभावेन[1] निरूपकाः अस्थूलत्वादिधर्मा इत्यर्थः । किं गार्गीब्राह्मणे श्रुतमस्थूलत्वादिकं तत्रैवोपसंहार्यम्, उत सर्वासु विद्यासु ; अस्थूलत्वादीनां किं ब्रह्मासाधारणतया तत्स्वरूपनिरूपकत्वम्,

---

[1] ब्रह्म ईदृशस्वभाववत्तया निरूप्यन्ते अस्थूलत्वादिभिरित्यर्थः ।

विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात्; प्रतिषेधरूपाणामेषामानन्दादिवत् स्वरूपावगमोपायत्वाभावाच्च। आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते, निरालम्बनप्रतिषेधायोगात्॥

एवं प्राप्ते प्रचक्ष्महे, अक्षरधियां त्ववरोधः— इति। अक्षरब्रह्मसंबन्धिनीनामस्थूलत्वादिधियां सर्वब्रह्मविद्यासु अवरोधः—सङ्ग्रहणमित्यर्थः। कुतः। सामान्यतद्भावाभ्याम्। सर्वेषूपासनेषूपास्यस्याक्षरस्य ब्रह्मणः समानत्वात् अस्थूलत्वादीनां तत्स्वरूपप्रतीतौ भावाच्च। एतदुक्तं भवति— असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणत्। न च केवलमानन्दादि ब्रह्मणोऽसाधारणमाकारमुपस्थापयति, प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात्। हेयप्रत्यनीको ह्यानन्दादिर्ब्रह्मणोऽसाधारणं रूपम्। प्रत्यगात्मनस्तु स्वतो हेयविरहिणोऽपि हेयसंबन्धयोग्यताऽस्ति। हेयप्रत्यनीकत्वं च चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम्। अतः असाधारणाकारेण ब्रह्मानुसन्दधता अस्थूलत्वादिविशेषितज्ञानानन्दाद्याकारं ब्रह्मानुसन्धेयमिति अस्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यन्तर्भावात् सर्वासु ब्रह्मविद्यासु तथैव ब्रह्मानुसन्धेयमिति।

गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाह औपसदवदिति। यथा जामदग्न्यचतूरात्रपुरोडाश्यु-

---

उत केवलज्ञानानन्दादीनामिति; किमस्थूलत्वादिकं विना शङ्कितकृत्स्नदोषव्यावृत्तिप्रतीतिरस्ति, नेति। अस्ति चेत्, केवलज्ञानादीनामेव निरूपकत्वेनास्थूलत्वादेरनुपसंहार्यत्वम्। न चेत्——स्वरूपनिरूपकत्वात् सर्वासूपसंहार्यत्वम्। **प्रमाणाभावात्** हेत्वभावात्। वस्तुसामर्थ्यं प्रमाणमाशङ्क्य प्रतिषेधति **स्वरूपेति**। स्वरूपावगमोपायत्वाभावं विवृणोति **आनन्दादिभिरिति**। ''लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते'' इत्यभिप्रायः।

**अस्थूलत्वादिधियामवरोध** इति। सर्वब्रह्मविद्यास्वस्थूलत्वादिकमनुसन्धेयमित्यर्थः। **सामान्यतद्भावाभ्या**मिति समुच्चित्यैको हेतुः। सर्वविद्यासु ब्रह्मानुगतं चेत, कथमस्थूलत्वादिगुणानां तत्स्वरूपप्रतीत्यनुबन्धित्वमित्यत्राह **एतदुक्त**मिति। अत्र विवक्षिता प्रतीतिर्न येन केनचिदाकारेण प्रतीतिः, अपितु व्यावृत्ताकारेण प्रतीतिर्विवक्षिता; तादृशप्रतीत्यन्तर्भावोऽस्थूलत्वादीनामस्त्येवेत्याह **असाधारणे**ति। **आकारमुपस्थापयति**—स्वरूपमुपस्थापयतीत्यर्थः। हेयसम्बन्धाभावः प्रत्यगात्मनोऽप्यस्ति। तत् कथं हेयप्रत्यनीकानन्दादि ब्रह्मणोऽसाधारणं रूपमित्यत्राह **प्रत्यगात्मनस्त्वि**ति। ब्रह्मणो हेयप्रत्यनीकत्वमसाधारणमस्तु; तत्रास्थूलत्वादिकं कथमसाधारणमित्यत्राह **हेयप्रत्यनीकत्वं चे**ति। **विपरीतरूपं**—विरोधिरूपम्। तत्तद्धेयशङ्काव्यावर्तकमित्यर्थः। **अस्थूलत्वादिविशेषितेति**। अस्थूलत्वाद्युपेतत्वमुक्तम्। स्थूलत्वादिविरोधिशब्दाभिलप्य आकारोऽस्थूलत्वादिः; भावान्तरस्यैव अभावशब्दार्थत्वात्। अत एव ह्यस्थूलत्वं सुसूक्ष्मशब्देनोक्तं श्रुत्यन्तरे। अस्थूलत्वादिधर्मैर्यथायोग्यं तत्तद्व्यावृत्तिरवगन्तव्या। अचक्षुष्ट्वाप्राणत्वादिभिरिन्द्रियाधीनज्ञानप्राणायत्तचेष्टितजीवव्यावृत्तिः। अनणुत्वसूक्ष्मत्वादिभिर्मुक्तस्यापि व्यवच्छेदः। आनन्त्येन सर्वव्यवच्छेदेऽपि शङ्कितस्थूलत्वादिव्यवच्छेदस्तु तद्विरोध्यस्थूलत्वादिभिरेव सिद्ध्येदित्यवश्यानुसन्धेयत्वम्। एतदधिकरणार्थमुपजीव्य पूर्वमानन्दादिष्वमलत्वं च सह पठितम्। **औपसदवदिति** वक्ष्यमाणदृष्टान्तः कर्मविषयः। दार्ष्टान्तिकं तूपासनम्। तस्मात् दृष्टान्तोपजीव्यमंशमाह **गुणानां प्रधानानुवर्तित्वे**

पसद्गुणभूतः सामवेदपठितः, अग्ने वेर्होत्रं वेः" ('अग्निर्वै होत्रं वेतु') इत्यादिको मन्त्रः प्रधानानुवर्तितया याजुर्वेदिकेनोपांशुत्वेन प्रयुज्यते। तदुक्तं प्रथमे काण्डे, "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" इति ॥ ३३ ॥

नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वाद् गुणानां च प्रधानानुर्तित्वात् "सर्वकर्मा सर्वगन्धः सर्वरसः" इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याप्यव्यवस्था स्यात् तत्राह—

**इयदामननात् ॥ ३-३-३४ ॥**

आमननम्— आभिमुख्येन मननम्— अनुचिन्तनम्। आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तम्; यदस्थूलत्वादिविशेषितमानन्दादिकम्। येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न संभवति; तदेव सर्वत्रानुवर्तनीयम्। तच्चेयदेवेत्यर्थः। इतरे तु सर्वकर्मेत्यादयः प्रधानानुवर्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः ॥ ३४ ॥

इति अक्षरध्यधिकरणम् ॥ १४ ॥

---

इति। जामदग्न्यचतूरात्रं=जमदग्निना मुहुरनुष्ठितं चतूरात्रं नाम कर्म। तत्र पुरोडाशद्रव्यकोपसदङ्गभूतः सामवेदपठितो मन्त्रः। 'उच्चैः साम्ना' इति वचनात् सामवेदपठितत्वेन तस्य मन्त्रस्योच्चैर्गाने प्राप्तेऽपि, 'उपांशु यजुषा' इत्युपांशुपठित[1]व्ययजुर्वेदोक्तोपसत्कर्मशेषत्वेन तदनुवर्तित्वादुपांशुप्रयोगः प्राप्त इत्यर्थः। **गुणमुख्यव्यतिक्रम** इति। **व्यतिक्रमो** विरोधः। यथा प्रकरणान्तराधीतानामपि [स्वरादिगुणानां ?] प्रधानानुवर्तित्वं दृश्यते, तथा प्रकरणान्तराधीतानामप्यस्थूलत्वादिर्माणां प्रधानभूतधर्म्यनुवृत्तिरुपपन्नेत्यर्थः। अयं दृष्टान्तः आनन्दादेरपि तुल्य इत्यभिप्रेतः ॥ ३३ ॥

अनन्तरसूत्रशङ्कामाह **नन्वेवमि**ति। अस्थूलत्वाद्यनेकगुणानां बहुशाखोक्तानां सर्वविद्यानुगतत्वे तेषां बाहुल्यात् प्रधानानुवर्तितया प्राप्तानां सर्वकर्मत्वादीनां चानन्त्यादुपसंहाराशक्तिः स्यादिति चाभिप्रायः। **इयदामननात्** ॥ सूत्रस्याक्षरार्थमाह। **आमननमित्या**दिना। तात्पर्यमाह **येने**ति। ब्रह्मणो व्यावृत्ताकारानुसन्धानाय प्राप्तं गुणजातमियदेवेत्यर्थः।

अत्र **परे तु—सामान्यतद्भावाभ्याम्**—प्रतिषेधमुखेन प्रतिपादनप्रकारस्य समानत्वात् अक्षरस्य ब्रह्माभिन्नतया प्रत्यभिज्ञानाच्चेति योजयन्ति, ततोऽपि वरमुक्तार्थपरत्वम्; निदर्शनानुगुण्यात्। अङ्गानां प्रधानानुवर्तित्वे **हि** निदर्शनोपन्यासः। भावाभावरूपधर्मविषयत्वात् 'आनन्दादयः' इत्यनेन न पौनरुक्त्यमित्याहुः। तदयुक्तम्; सत्यादिवाक्यानामताद्व्यावृत्तिपरत्वाभ्युपगमात् तत्रापि स्वरूपातिरिक्तव्यावृत्तिरूपधर्मानभ्युपगमात्। सकलेतरव्यावृत्तस्वरूपस्य सत्यादिवाक्यप्रतिपन्नस्य व्यवच्छेद्यविशेषव्यावृत्तिप्रतिपत्तौ प्रयोजनाभावाच्च। न हि पांसुराशेर्विविक्तस्य रत्नस्य पुनः पुनः प्रत्येकपांसुव्यतिरेचने किञ्चित्प्रयोजनम् ॥ 'ऋतं पिबन्तौ', 'द्वा सुपर्णा' इति वाक्ययोर्विद्याभेदाभेदविषयम् **इयदामननादि**ति सूत्रमधिकरणान्तरमाहुः। उभयोर्भोक्तृत्वमेकत्र, एकस्य भोक्तृत्वमन्यस्य चाभोक्तृत्वमन्यत्रेति विद्याभेदमुक्त्वा—छत्रिन्यायेनाविरोधात् जीवोपादानस्य तादात्म्यप्रतिपादनार्थत्वाच्च रूपाभेदा-

---

1 **उपांशुपठितव्येति—उपांशुस्वरवन्मन्त्रपाठवत्त्वेनावगतेत्यर्थः। कर्मविशेषणम्। तथैव मीमांसकलेखनशैली। पठितव्येत्यस्य शेषेत्यनेन सह कर्मधारयो वा।**

द्विधैक्यमित्युक्तम्। तदयुक्तम्—छत्रिन्यायादिभिरर्थैकत्वस्य **गुहां प्रविष्टावात्मानौ**वित्यत्र सिद्धत्वात्; सूत्राक्षराणां तदसाधारणत्वाभावाच्च। **इयच्छब्दो**ऽपि देशकालस्वरूपसङ्ख्येयत्तासाधारणः। किञ्च—यदा पङ्क्तिश्रुत्यनुसारेण सत्त्वद्वितीयप्रत्यगात्मपरत्वं द्वासुपर्णेति वाक्यस्याभिमतम्, तदा द्वयोरपि जीवसद्वितीयपरमात्मपरत्वं व्याहतम्। जीवसद्वितीयपरमात्मपरत्वेऽपि पौनरुक्त्यमुक्तम्॥ ननु न पौनरुक्त्यम्; तत्प्रपञ्चनार्थो ह्ययमारम्भ इति चेत्—न; अधिकरणान्तरनिरूप्यार्थानामिहाप्रपञ्चनात्, अस्य तेभ्यो वैषम्याभावाच्च। किञ्च इयदिति सौत्रं पदं च न[1] द्वित्वसङ्ख्याव्यवच्छेदमेकान्ततोऽवगमयति। ततश्च 'विश्वमेवेदं पुरुषः' 'महान् प्रभुर्वै पुरुषः' इत्यादिषु जगदाकारव्यवच्छेदेन विधैक्यपरं सूत्रं किं न स्यात्। यदि संख्याव्यवच्छेदकत्वमेवाभिमतम्, तर्हि, 'त्रिविधं ब्रह्ममेतत्' 'चतुष्पात् ब्रह्म' इत्यादिसङ्ख्यान्तरावच्छिन्नब्रह्मपरवाक्यविषयं किं न स्यात्। सर्वत्र भेदाभेदहेतवश्च उत्प्रेक्षितुं शक्याः। अतो यथा कथंचिन्निर्वहणात् अपेक्षितार्थपरत्वं साधिष्ठम्।

सूत्राक्षरानैकान्त्यपुनरुक्तिभ्यामेव**परेषां** पक्षेऽप्यधिकरणभेदो व्युदस्तः।

**अन्ये तु**—'संभूतिं च विनाशं च यस्तद्वेदोभयं सह। विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते' इति सप्रपञ्चब्रह्मोपासनं प्रपञ्चविनाशावस्थसन्मात्रब्रह्मोपासनं चेति द्विविधयोरपि ब्रह्मोपासनयोः समुच्चयमाहुः। तत्र प्राणाद्युपासनं च संभूतिरेव; जगदेकदेशसम्बन्धित्वात्। अस्थूलमित्यादिभिर्विहितं विनाशोपासनं प्राणादिसंभूतिभिरपि किं समुच्चीयते, नेति चिन्तायाम्, अविशेषेण 'संभूतिं च विनाशं च' इति श्रुतत्वाद्विनाशधर्मिणो ब्रह्मणः प्राणादिसंभूतिष्वभावेऽपि तत्र धर्मिणो ब्रह्मणः समाकृष्योपासनसंभवात्, सर्वाभिः संभूतिभिरपि विनाशः समुच्चीयत इति पूर्वपक्षं कृत्वा—गुणिनो गुणानुरोधित्वाभावात् गुणानुरोधेन गुणिनो ब्रह्मणः समाकर्षायोगात् गुणानामेव गुण्यनुरोधित्वात् ब्रह्मणोऽसद्भावेपि विनाशस्याप्ययोगात् ब्रह्मसंभूतिभिरेव विनाशः समुच्चीयते—इति वर्णयन्ति। तदयुक्तम्—सप्रपञ्चनिष्प्रपञ्चब्रह्मोपासनसमुच्चयस्य प्रमाणविरुद्धत्वात्। अक्षरविद्याशाण्डिल्यविद्यादीनां श्रुतिस्वारस्यादन्योन्यनिरपेक्षोपायत्वं हि प्रतीयते॥ समुच्चयश्रुतिबलात् तासामन्यसापेक्षत्वं कल्प्यत इति चेत—न, कल्पकस्यार्थान्तरविषयत्वेनान्यथासिद्धत्वात्। अर्थान्तरस्य स्वारसिकतया विद्यान्तरस्वारस्यानुगुणतया चाप्रकम्प्यत्वात्। **सम्भूतिशब्दः** संभवत्यनेनेति व्युत्पत्त्या मार्गपरः, 'एतमितः प्रेत्याभिसंभवितास्मि', 'ब्रह्मलोकमभिसंभवामि' इति च प्रयोगात्। अभिसम्भवितास्मीति उत्तमपुरुषेण, 'इति यस्य स्यादद्धा न विचिकित्सा' इत्यनेन च मार्गचिन्तायाः कार्यत्वस्य सूचितत्वाच्च। **विनाश**शब्दश्च सुकृतदुष्कृतविनाशविषयः। अतो मार्गस्य कर्मविनाशस्य च चिन्तनं विद्याङ्गत्वेन समुच्चित्य विधीयते। न च संभूतिविनाशशब्दयोः सप्रपञ्चनिष्प्रपञ्चब्रह्मणि स्वारस्यम्; नाप्यनन्यथासिद्धप्रयोगः। यतः समुच्चयो न प्रामाणिकः, अत एव संशयाभावादनारम्भणीयता। **इयदामननादि**त्यत्र च सूत्राक्षराणामनैकान्त्यं पूर्ववत्। 'पिबन्तौ', 'द्वा सुपर्णा' इति वाक्याद्वगतयोर्भोगानशनयोर्मिथोविरोधान्न संभूतिषु समुच्चय इति विचार्य—भोगस्य

1 संख्याव्यवच्छेदनियम एव न; नतरां द्वित्वरूपविशेषव्यवच्छेदनियम इत्यर्थः। इयच्छब्दो हि सामान्यतः परिमाणार्थवतुबन्तः। इदंशब्दश्च पूर्वसूत्रप्रकृतार्थस्वरसः।

अन्तरत्वाधिकरणम् ३-३-१५

**अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३-३-३५ ॥**

बृहदारण्यके उषस्तप्रश्न एवमाम्नायते, "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, तन्मे व्याचक्ष्व" इति । तस्य प्रतिवचनम्, "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा" इत्यादि । अतुष्टेन तेन पुनः पृष्ट आह, "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीयाः एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तम्" इति । तथा तदनन्तरं कहोलप्रश्ने चैवमाम्नायते, "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व" इति । प्रतिवचनं च, "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति, एतं वै तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च" इत्यादि, "अतोऽन्यदार्तम्" इत्यन्तम् । तत्र संशय्यते—किमनयोर्विद्याभेदोऽस्ति, नेति । किं युक्तम् । भेद इति । कुतः । रूपभेदात् । प्रतिवचनभेदाद्रूपं भिद्यते । प्रश्नस्यैकरूप्येऽपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते । पूर्वत्र प्राणनादीनां कर्ता सर्वान्तरात्मत्वेनोच्यते ; परत्राशनायापिपासादिरहितः । अतः पूर्वत्र प्राणिता देहेन्द्रियबुद्धिमनःप्राणव्यतिरिक्तः प्रत्यगात्मोच्यते ; परत्र तु तदतिरिक्तोऽशनायापिपासादिरहितः परमात्मा । अतो रूपं भिद्यते । भूतग्रामवतश्च प्रत्यगात्मनः तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन सर्वान्तरत्वमप्युप

---

हविर्विषयतया, अनशनस्य कर्मफलविषयतया वा अन्तर्यामिपरमात्मविषयतया वा विरोधाभावात् संभूतिषु समुच्चय इति सिद्धान्तवर्णनं च संभूतिविनाशसमुच्चयाप्रामाणिकत्वादेवानुपपन्नम् । भोगानशनयोर्विरोधस्तु छत्रिन्यायेन वा प्रयोज्यप्रयोजकभावेन वा ऋतपानस्य विरोधाभावात् पूर्वमेव परिहृतः । अन्यथा तस्यापरिहृतत्वे **गुहांप्रविष्टा**वित्याद्यधिकरणसिद्धान्तदौःस्थ्यप्रसङ्गात् । अतोऽधिकरणभेदोऽनुपपन्न इति ॥

इति अक्षरध्यधिकरणम् ॥

**अन्तरा भूतग्रमावत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्** ॥ हेयप्रत्यनीकत्वं ब्रह्मणोऽसाधारणं चेत्—अशनायाद्यतीतत्वविशिष्टं ब्रह्म स्यात्, प्राणितृत्वादिविशिष्टस्तु जीवः स्यादिति शङ्कया सङ्गतिः । **उपस्तप्रश्न**शब्देन तत्प्रकरणं विवक्षितम् । किमुषस्तकहोलप्रश्नप्रतिवचनश्रुत्योर्विद्याभेदः ; उत विद्यैक्यम् ; किं पूर्वत्र जीव उपास्योऽन्यत्र परः, उतोभयत्र पर एवेति ; किमत्र सर्वान्तरत्वप्राणितृत्वे देहादिजाग्रदाद्यवस्थापेक्षे ; उतानवच्छिन्ने ; 'न दृष्टेर्द्रष्टारम्' इति दृष्टिव्यतिरिक्तत्वनिषेधः, उत श्रवणादिकर्तुर्जीवस्य मन्तव्यत्वनिषेध इति । यदा दृष्टिरूपताव्यतिरेकनिषेधः, तदात्वस्य जीवे संभवात् सर्वान्तरत्वप्राणितृत्वयोरप्यापेक्षिकत्वेन पूर्वत्र जीव उपास्य इति विद्या भिद्यते । यदा श्रवणादिकर्तुरुपास्यत्वनिषेधः, तदा सर्वान्तरत्वप्राणितृत्वयोरप्यनवच्छिन्नतया, पूर्वत्रापि पर एवोपास्य इति विद्यैक्यमिति । रूपभेदादिति कथमुच्यते ; प्रश्नो ह्येकरूप इत्यत्राह **प्रतिवचनभेदा**दिति । प्रतिवचनप्रकारेण हि प्रश्नार्थो ज्ञायत इति भावः । ततः किमित्यत्राह– **अत** इति । **सर्वान्तरत्वं** कथमित्यत्राह **भूतग्रामवतश्चे**ति । आत्मशब्दस्य परमात्मवाचित्वव्यावृत्त्यर्थं **स्वात्मन** इत्युक्तम् । स्वमेवात्मा[1] **स्वात्मा** । सर्वान्तरत्वमप्यापेक्षिकमस्य संभवतीति दर्शयितुं **भूतग्रामव**च्छब्दः प्रयुक्तः ।

---

1 **स्वो ज्ञातावात्मनि स्वमित्यमरः ।**

पन्नम्। यद्यपि प्रत्यगात्मनः सर्वान्तरत्वं भूतग्राममात्रापेक्षत्वेनापेक्षिकम्, तथाऽपि तदेव ग्राह्यम्, अन्यथा मुख्यान्तरात्मपरिग्रहलोभात्परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते। प्रतिवचनं हि पूर्वत्र प्रत्यगात्मविषयम्, परमात्मनः प्राणितृत्वापानितृत्वाद्यसंभवात्। परं च परमात्मविषयम्, अशनायापिपासाद्यतीतत्वात्। तदिदमाशङ्कते— अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेत्— इति। अन्तरा सर्वान्तरात्मत्वेन प्रथमप्रतिवचनं भूतग्रामवत्स्वात्मनः— भूतग्रामवान् तदन्तरः स्वात्मा—प्रत्यगात्मा सर्वान्तर इत्युच्यते इत्यर्थः,। अन्यथा, "यः प्राणेन प्राणिति", "योऽशनायापिपासाद्यतीतः" इति प्रतिवचनभेदानुपपत्तिः इति चेत्—

अत्रोत्तरं नेति। न विद्याभेद इत्यर्थः। उभयत्र परविषयत्वात्प्रश्नप्रतिवचनयोः। तथा हि--- "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इति प्रश्नस्तावत् परमात्मविषय एव। ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शनात् तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं "यत्साक्षाद्ब्रह्म" इति विशेषणं क्रियते। अपरोक्षत्वमपि सर्वदेशसर्वकालसम्बन्धित्वम्, "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते। सर्वान्तरत्वमपि, "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः", इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरः" इति सर्वान्तर्यामिणः परमात्मन एव संभवति।

प्रतिवचनमपि तथैव परमात्मविषयम्। "यः प्राणेन प्राणिति" इति निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव, प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात्। एवमजानतोषस्तेन प्राणने कर्तृत्वमात्रमुक्तं मन्वानेन प्रत्यगात्मनोऽपि साधारणत्वं प्रतिवचनस्य मत्वा अतुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं परमात्मानमाह, "न दृष्टेर्द्रष्टारं पश्येः" इत्यादिना। इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः, तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वात्। "को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इति सर्वप्राणिप्राणनहेतुत्वं हि परमात्मन एव अन्यत्र श्रुतम्।

---

**यद्यपी**त्यादि। आपेक्षिकं संभवतु नाम, तथाऽप्यस्वरसमिति भावः। परिहरति **तथाऽपी**ति, अनेकपदविरोधेनैकपदस्वारस्यमनुपपन्नमित्यर्थः। शङ्काया अनुत्सूत्रत्वमाह—**तदिद**मिति। सूत्रखण्डं व्याचष्टे **अन्तरे**त्यादिना। सर्वान्तरत्वेन प्रतिवचनं भूतग्रामवत्स्वात्मसम्बन्धीत्यर्थः।

**भूतग्रामवत्स्वात्मन** इति पूर्वपक्षमुक्त्वा **ने**त्युक्ते, परस्येत्यर्थादुक्तं भवतीत्यभिप्रयन् आर्थं हेतुमाह **उभयत्रे**ति। कथमित्यपेक्षायां तं विवृणोति **तथा ही**ति। साक्षाद्ब्रह्मशब्दवाच्यत्वमेको हेतुः। हेत्वन्तरमाह **अपरोक्षत्वमपी**ति। देशकालसन्निकर्षो ह्यपरोक्ष्ये विद्यते। तस्माद्ब्रह्मणोऽपरोक्षत्वं नाम सर्वदेशसर्वकालसंनिहितत्वमित्यर्थः। **निरुपाधिकं प्राणनस्य कर्तृत्व**मिति प्राणयितृत्वं विवक्षितम्। **निरुपाधिक**शब्देन जीवव्यावृत्तिः। स हि कर्मानुगुणदेहेन्द्रियादीनामधिष्ठातृत्वेन कदाचित् प्राणयिता। निरुपाधिकप्राणयितृत्वं परमात्मन एवेत्युपपादयति **प्रत्यगात्मन** इति॥ पुनःप्रश्नस्यार्थान्तरविषयत्वशङ्कां परिहरति **एव**मिति। **इन्द्रियाधीनाना**मिति। **दृष्टेर्द्रष्टार**मिति व्यपदेशः, ओदनं पाकं पचतीतिवदिति भावः। परमात्मनः सर्वदा सर्वप्राणिप्राणयितृत्वे श्रुतिमाह **को ह्येवान्या**दिति।

अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये । एवमुत्तरे अपि; अशनायाद्यती तत्वस्य परमात्मा साधारणत्वात् । उभयत्र "अतोऽन्यदार्तम्" इत्युपसंहारश्चैकरूपः । प्रश्नप्रतिवचनावृत्तिस्तु कृत्स्नप्राणिप्राणनहेतोः परस्य ब्रह्मणोऽशनायाद्यतीतत्वप्रतिपादनाय ।

तत्र दृष्टान्तमाह--उपदेशवदिति । यथा सद्विद्यायाम्, "उत तमादेशमप्राक्ष्यः" इति प्रक्रान्ते सदुपदेशे, "भगवांस्त्वेव मे तद्ब्रवीत्विति", "भूय एव मा भगवान् विज्ञापयतु" इति प्रश्नस्य, "एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यम्" इति प्रतिवचनस्य च भूयो भूय आवृत्तिः ततो ब्रह्मणः तत्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते ; तद्वत् । अत एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः कृत्स्नप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपैक्याद्विद्यैक्यम् ॥ ३५ ॥

अथ स्यात्—यद्यप्युभे प्रश्नप्रतिवचने परब्रह्मविषये; तथाऽपि विद्याभेदोऽवर्जनीयः, एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यम्, इतरत्राशनायाद्यतीतत्वेनेत्युपास्यगुणभेदेन रूपभेदात्, [1]प्रष्टृभेदाच्च । पूर्वत्र ह्युषस्तः प्रष्टा, उतरत्र तु कहोलः—इति; तत्राह—

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३-३ ३६ ॥

नात्र विद्याभेदः; प्रश्नप्रतिवचनाभ्यामेकरूपार्थविषयाभ्यामेकेन च विधिपदेनैकवाक्यत्वप्रतीतेः । प्रश्नद्वयं तावत् सर्वान्तरात्मत्वविशिष्टब्रह्मविषयम् । द्वितीये प्रश्ने, "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इत्येवकारश्च[2] पूर्वत्रोषस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्यावधारयति । प्रतिवचनं चोभयत्र "स त आत्मा सर्वान्तरः" इति सर्वान्तरात्मत्वविशिष्टब्रह्मविषयमेकरूपमेव । विधिप्रत्ययश्चोत्तरत्रैव दृश्यते, "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति । एवं सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे द्वयोरवधृते सति एकस्मिन्नेव सर्वान्तरात्मत्वविशिष्टे ब्रह्मण्युपास्ये उषस्तकहोलयोरितरेतरबुद्धिव्यतिहारः कर्तव्यः । उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः; सा कहोलेनापि प्रष्ट्रा कार्या । या च कहोलस्य तस्यैव ब्रह्मणोऽशनायाद्यतीतत्वविषया बुद्धिः, सोषस्तेनापि कार्या । एवं व्यतिहारे कृते उभाभ्यां सर्वान्तरस्य ब्रह्मणो जीवव्यावृत्तिरवगता भवति । एनं सर्वान्तरात्मानं

---

**उत्तरे अपि** । कहोलप्रश्नप्रतिवचने इत्यर्थः ॥ ३५ ॥

**प्रष्टृभेदाच्चे**ति । अत्र प्रष्टृद्वयसद्भावाद्विद्याभेदः संभवतीत्यर्थः ।

**व्यतिहारो विशिंषन्ति हीतरवत्** ॥ प्रश्नप्रतिवचनैकरूप्यं विधिपदैक्यं च विवृणोति **प्रश्नद्वय**मित्यादिना । **विधिप्रत्ययश्चे**ति । अविशेषपुनश्श्रवणं हि भेदहेतुः । अत्र तदभावात् विद्यैक्यमिति भावः । **तिष्ठासेत्**—निष्ठां लभेत ; उपासीतेत्यर्थः । **द्वयोरवधृत** इति । **द्वयोः**—उषस्तप्रश्नप्रतिवचनकहोलप्रश्नप्रतिवचनरूपवाक्ययोः । **कर्तव्य** इति । व्यतिहारस्य कर्तव्यत्वं श्रुत्यभिप्रेतमिति सूत्रकाराभिप्राय इत्यर्थः । व्यतिहारं विवृणोति **उषस्तस्ये**ति । व्यतिहारस्य प्रयोजनमाह **एव**मिति । व्यावृत्तिबुद्धिजननार्थं प्रतिवचनमिति वदन् **विशिंषन्तीति** सौत्रं पदं व्याचष्टे **एनं सर्वान्तरात्मान**मिति ।

---

1 प्रष्टृद्वयेति । एकं प्रत्युपदिष्टस्य गुणस्य अन्येनोपसंहाराप्रसक्तेरिति भावः ।

2 एवकारबलेन प्रथमप्रष्टृसाहित्यस्य द्वितीयेऽवगमात् सर्वप्रतिवचनश्रोतृत्वं द्वयोरपीति संभवति वैश्वानरविद्यायामिव व्यतिहार इति भावः ।

प्रत्यगात्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन विशिंषन्ति हि [1]याज्ञवल्क्यस्य प्रतिवचनानि । अतो ब्रह्मणः सर्वान्तरात्मत्वमेवोपास्यगुणः । प्राणनहेतुत्वादयस्तु तस्योपपादकाः, नोपास्याः ॥ ननूपास्यगुणः सर्वान्तरात्मत्वमेव चेत्, प्राणनहेतुत्वाशनायाद्यतीतत्वस्य च प्रष्ट्रोर्व्यतिहृत्यानुसन्धानं किमर्थम् ॥ तदुच्यते — सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मणि उषस्तेनावधृ(ग)ते सति, कहोलेन जीवस्य सर्वात्मना असंभावितेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसन्धेय इति कृत्वा पुनः प्रश्नः कृतः । याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय प्रत्यगात्मनोऽसंम्भावितमशनायादिप्रत्यनीकत्वमुक्तवान् । अतश्चोपास्यस्य व्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्यः । इतरवत्—यथेतरत्र सद्विद्यायां भूयोभूयः प्रश्नैः प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते ; न पुनः पूर्वप्रतिपन्नात् गुणात् गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते—तद्वत् ॥ ३६ ॥

तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यमवगम्यत इति चेत्—तत्राह—

**सैव हि सत्यादयः ॥ ३७ ॥**

सैव हि—सच्छब्दाभिहिता परमकारणभूता परा देवतैव, "सेयं देवतैक्षत", 'तेजः परस्यां देवतायाम्' इति प्रकृता, "यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति" इत्यादिषु पर्यायेषु सर्वेषूपपाद्यते । यतः "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति प्रथमपर्यायोदिताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते ॥

---

**अत** इत्यादि । सर्वान्तरात्मत्वस्य गुणस्य एकस्योपास्यत्वात् रूपभेदः परिहृतः । विद्यैक्येऽपि वैश्वानरविद्यायामौपमन्यवादिवत् प्रष्टृभेदः संभवतीति स्पष्टत्वान्न कण्ठोक्तम् ।

व्यावृत्तबुद्धिजननाय परस्परं बुद्धिव्यतिहार उक्तः । तत्र सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वयोरन्यतरेणैव व्यावृत्तबुद्धिः स्यादित्यन्यतरेण किमित्यभिप्रायेण चोदयति **नन्विति** । परिहरति **तदुच्यत** इति । कहोलस्य पुनः प्रश्नः संभवति, सर्वप्राणिप्राणनहेतुत्वज्ञानेन व्यावृत्तबुद्ध्यनुदयात् । यथोषस्तस्य सर्वप्राणिप्राणनहेतुत्ववैशद्याय पुनः प्रश्नः, तद्वत् । अन्यतरेण व्यावृत्तबुद्धौ द्वयोर्जातायां परस्परबुद्धिव्यतिहारो द्वयोरपि व्यावर्तकधर्मभूयस्त्वहेतुकव्यावृत्तबुद्ध्यतिशयजननार्थमित्यभिप्रायेणाह **सर्वप्राणीति** । **अतः**-कहोलप्रश्नस्य व्यावृत्तिवैशद्यार्थत्वदर्शनात् । **व्यावृत्तिप्रतीतिसिद्ध्यर्थं**-व्यावर्तकधर्मभूयस्तया व्यावृत्तिबुद्ध्यतिशयार्थमित्यर्थः । एवं धर्मभेदेन च रूपभेदाशङ्काकृतो विद्याभेदो निरस्तः ॥ ३६ ॥

अथ दृष्टान्ते विद्यैक्यं स्थापयिष्यन् सूत्रमवतारयितुं शङ्कामाह **तत्रापीति** । **सैव हि सत्यादयः** ॥ **सैव हीति** । सेति निर्देशः, 'सेयं देवतैक्षत' इति सद्विद्यावाक्यानुरोधादिति भावः । **उपपाद्यते** । प्रश्नप्रतिवचनमुखेन प्रतिपाद्यत इत्यर्थः । तत्रापि कारणभूतायाः परस्या देवताया एवोपास्यत्वमुपपादयति **यत** इति । परमकारणत्व[2]विशिष्टदेवतैवोपास्या, कारणत्वोपयोगिगुणानां सत्यत्वात्मत्वजीवविशेषान्तर्यामित्वादिगुणानां प्रतिपर्यायमावृत्तत्वेन तत्र तात्पर्यादित्यर्थः ।

---

1 विशिंषन्तीति । अशनाद्यतीतत्वादेरुपास्यगुणत्वे कहोलप्रश्नाभावे तदवतरप्रसक्त्यभावात् न्यूनोपदेश अपतेत् । सर्वान्तरं व्याचक्ष्वेति व्याख्यानस्यैव प्रश्नाच्च विवरणत्वावगम इति भावः । यः, यः इति भावप्रकाशिकोक्तरीत्योपलक्षणत्वावगमाच्च ।

2 अनेन, कारणत्वप्रक्रमानुगुणं सद्विद्यायां कारणत्वमप्युपास्यगुणो भवतीति ज्ञायते ।

केचित्तु—"व्यतिहारो विशिंषन्ति हीतरवत्" "सैव हि सत्यादयः" इति सूत्रद्वयमधिकरणद्वयं वर्णयन्ति। तत्र पूर्वेण, "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते", "तद्योऽहं सोऽसौ, योऽसौ सोऽहम्" इति वाक्ये जीवपरयोर्व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यते—इत्याहुः। तत्, "सर्वं खल्विदं ब्रह्म"। "ऐतदात्म्यमिदं सर्वम्", "तत्त्वमसि" इत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयम्। तत्तु वक्ष्यते, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। न च सर्वात्मत्वानुसंधानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वानुसन्धानम्, जीवे च परब्रह्मत्वानुसन्धानं तथ्यं संभवति॥ उत्तरेण च सूत्रेण, "स यो हैतन्महत् यक्षं प्रथमजं वेद सत्यं ब्रह्म" इत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य, "तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन् मन्डले पुरुषो यश्चायं दक्षिणेऽक्षन्" इत्यादिवाक्यप्रतिपादितोपासनस्य चैक्यं प्रतिपाद्यत इति। तदप्ययुक्तम्; उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव, "न वा विशेषात्" इत्यनेन प्रतिपादितत्वात्। न च द्वयोरनयोर्व्याहृत्यादिशरीरकत्वेन रूपवतोः, "हन्ति पाप्मानं जहाति च य एवं वेद" इति पृथक्संयोगचोदनावतोर्द्वयोरुपासनयोः, "स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति, जयतीमांल्लोकान्" इति संयोगरूपादिमत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदः संभवति। न च 'हन्ति पाप्मानं जहाति' इति गुणफलाधिकारत्वम्, प्रमाणाभावात्॥ पूर्वेणैकविद्यात्वं प्रमाणमिति चेत्—न, इतरेतराश्रयत्वात्—एकविद्यात्वे निश्चिते सति पूर्वफलस्यैव प्रधानफलत्वेनोत्तरयोः फलयोर्गुणफलत्वम्, तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात् पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमिति। एवमादिभिर्यथोक्तप्रकारमेव सूत्रद्वयम्॥ ३७॥

---

परोक्तप्रकारमनूद्य दूषयति—**केचित्त्विति**। तस्य कथमर्थं वर्णयन्तीत्यत्राह **तत्रेति**। सोऽपि वक्तव्य एवेत्यत्राह **तत्तु वक्ष्यत** इति। ननु, 'सर्वत्र प्रसिद्धोपदेशात्' इति जगत्तादात्म्यपरवाक्यविषयम्। आत्मेतीत्यादिकं तु जीवतादात्म्यपरम्। नात्र सर्वात्मभाव उच्यते; अपि तु जीवब्रह्मणोरन्योन्यभावारोपणमिति चेत्—तत्राह **न चेति**। **तथ्यं न संभवतीति**। गरुडादिध्यानवदसदारोपणं चेत्—न तत् अपवर्गोपायः। तत्त्वज्ञानं ह्यपवर्गोपाय इति भावः। 'त्वं वा अहमस्मि' इत्यादेरयमर्थः—**त्वं वा अहमस्मि**—त्वंशब्दबुद्धिविषयः परमात्मैवाहंशब्दबुद्धिविषयः। **अहं वै त्वमसि**—अहंशब्दबुद्धिविषय एव त्वंशब्दबुद्धिविषयः। **अस्मि अस्तीति** निर्देशौ अहंत्वंशब्दप्रयुक्तौ, अहंत्वंशब्दौ प्रवृत्तिनिमित्तभेदात् ब्रह्मपर्यन्तौ। **तद्योऽहमित्यादेरप्ययमर्थः**। अनन्तरसूत्रस्य परोक्तार्थमनुवदति **उत्तरेण चेति**। दूषयति **तदपीति**। ततः किमित्यत्राह **न चेति**। **जहाति च**। शरीरमित्यध्याहारः। प्रथमं **द्वयोरिति** पदं वाक्यपरम्; द्वितीयं तु उपासनपरम्। द्वयोरपि वाक्ययोर्मध्ये उत्तरवाक्यप्रतिपाद्योपासनयोर्विद्याभेदस्य; साधितत्वात् परस्परभिन्नविद्याद्वयेन पूर्ववाक्योक्तस्योपासनस्यैक्यं न संभवति। एकविद्यात्वे साकाङ्क्षतयाऽन्वयः स्यात्; पृथक्पृथक्संयोगादीनामुक्तत्वेन निराकाङ्क्षत्वाच्च नैकविद्यात्वमित्यर्थः। **न चेति**। **गुणफलम्**—अङ्गफलम्। **प्रमाणाभावात्**—हेत्वभावात्। **उत्तरयोः फलयोः**—पापहननशरीरप्रहाणयोः। **संयोगभेदाभावात्**—प्रधानफलसंयोगभेदाभावात्। [1]**इत्येवमादिभिरिति आदिशब्देन** स्वोक्तार्थोपपत्तयोऽभिप्रेताः॥

---

1 भाष्ये इतिशब्दस्य पूर्वान्वयौचित्यात् अत्र इतिशब्दो न स्यात्।

एवं **व्यतिहार** इत्यादिसूत्रद्वयस्य योजनान्तरं निरस्तम्। आद्यसूत्रस्य योजनान्तरं **परैः** कृतम्। ते हि **अन्तराभूतग्रामवत्स्वात्मनः** इति सूत्रं भङ्क्त्वा सिद्धान्तविषयं वर्णयन्ति। अत्र [1]द्विराम्नानाविशेषादविशेषपुनश्श्रवणन्यायेन विद्यानानात्वं पूर्वपक्षीकृत्य—स्वात्मनो विद्यैक्यं स्यात्। न हि द्वौ सर्वान्तरौ संभवतः। तदा ह्येकस्य सर्वान्तरत्वमापेक्षिकं स्यात्, यथा भूतग्रामे पृथिव्यादौ अन्नादीनामापेक्षिकमन्तरत्वमिति। वैशद्यार्थं शङ्काविशेषनिरासार्थं च द्विराम्नानसंभवः—इति सिद्धान्तयन्ति। अत्र व्यवहितान्वयोऽध्याहारबाहुल्यं च। अस्मन्मते हि प्रतिवचनशब्दमात्रमध्याहार्यम्। **अन्यथा भेदानुपपत्तिरिति चे**दित्यपि न घटते। **अन्यथा**शब्दो हि प्रकृतादन्यथात्वं ब्रूते। सिद्धान्तस्य प्रकृतत्वे सति अन्यथाशब्दः पूर्वपक्षविषयो भवितुमर्हति। ततश्चानभ्युपगम्यमाने विद्याभेदे द्विराम्नानानुपपत्तिरिति व्याख्यानमस्वरसम्। विद्यैक्यानभ्युपगम इति हि स्वरसार्थः। तदा चाम्नानभेदानुपपत्तेरिति हेतुर्न घटते। तस्मात् **इतिचे**दित्यन्तस्य पूर्वपक्षविषयत्वं तत एवाखण्डितत्वं च युक्तम्। **भूतग्रामव**दिति पदस्य 'एको देवः' इति श्रुत्यन्तरोक्तसर्वभूतान्तरात्मत्वनिदर्शनपरत्वेन योजनान्तरमप्यनुपपन्नम्; सिद्धान्तसूत्रत्वानुपपत्तेरेव। **व्यतिहार** इत्यादिसूत्रयोरधिकरणान्तरद्वयविषयत्वनिरासः कण्ठोक्तः।

**अपरे** तु उभयत्र प्रतिपाद्यभेदसमर्थनपरमधिकरणमिच्छन्तो जीवप्रतिपादनस्य ब्रह्मोपासनार्थतया तत्र पर्यवसानात् विद्यैक्यं फलमिति वदन्ति। तदयुक्तम्—पूर्वत्राप्युक्तहेतुभिः परमात्मपरत्वसिद्धेर्जीवस्य प्रतिपाद्यत्वायोगात्। '**स्वात्मनोऽन्तरा** नान्यः संभवति। तदा भूतग्रामवदापेक्षिकत्वं स्यात्। अत उपदेश्यभेदानुपपत्तिरिति चेन्न; उपदेशभेदवदुपदेश्यभेदेन भवितव्यम्, उपदेशद्वयानर्थक्यात्' इति योजना चातिक्लिष्टा; अश्रुतनञोऽध्याहारात्।

**अन्ये** तु संभूत्युपासनेषूभयेषां प्राणितृत्वादीनामशनायाद्यतीतत्वादीनां च समुच्चयार्थं ब्रह्मैकत्वविषयत्वेन विद्यैक्यसमर्थनपरत्वमाहुः। तत्र समुच्चयसिद्ध्यर्थत्वमयुक्तम्; सम्भूतिविनाशसमुच्चयस्याप्रामाणिकत्वात्। व्यतिहार इत्यादिसूत्रद्वयस्य तत्कृतयोजना च भाष्येणैव निरस्ता। 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति सामानाधिकरण्यं च घटशरावशब्दयोरिव अंशद्वयवाचित्वादयुक्तम्। अत एव—ब्रह्मणो जीवत्वेऽहङ्कारहृद्देशदिक्कालादीनां ब्रह्मणि प्रतिपत्तिः, जीवस्य ब्रह्मत्वे तु जीवस्य ज्ञानानन्दैश्वर्यादीनां प्रतिपत्तिः प्रयोजनम्—इति चायुक्तम्; घटशरावयोरिव परस्परासाधारणगुणानामन्यत्रानुपपत्तेः; साधारणगुणानां च द्रव्यत्वादीनामिव यत्तद्युष्मदस्मत्पदसामानाधिकरण्यप्रतिपाद्यत्वाभावाच्च ॥ ३७ ॥ इति अन्तरत्वाधिकरणम्।

---

1 अत्रेत्येतदनन्तरं वेद्यभेदवत् वेद्यैक्येऽपीत्यध्याहारः। तेन भेदपक्षमैक्यपक्षञ्चावलम्ब्य पूर्वपक्षसिद्धिः। तत्र शांकरव्याख्यातृभिरनुक्तत्वेऽप्यस्मच्छिक्षकर्षस्तु प्रथमसूत्रेण वेद्यभेदनिबन्धनस्य पूर्वपक्षस्य निरासः द्वितीयसूत्रेण वेद्यैक्यनिबन्धनस्येति शांकराशय इति। अत्राऽऽदौ भेदपक्षेण पूर्वपक्षो निरस्यते स्वात्मन इत्यादिना। वेद्यैक्येऽप्यभ्यासाद्भेद इत्यस्य वैशद्यार्थमित्यादिना परिहारः। इदञ्चावधेयम्। अभ्यासात् प्रयाजानां भेदे सर्वप्रयाजानुष्ठानसाहित्यादि फलमस्ति। अत्र भेदसाध्यं किम्। विकल्पो ह्यविशिष्टफलत्वात्। तद्वा तादृग्वेति न कश्चिद् विशेष इति।

कामाद्यधिकरणम् ३-३-१६

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३-३-३८ ॥

छान्दोग्ये श्रूयते, "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यादि ; वाजसनेयके च, "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इत्यादि । तत्र संशयः—किमनयोर्विद्याभेदः, उत नेति । किं युक्तम्? भेद इति । कुतः । रूपभेदात् । अपहतपाप्मत्वादिगुणाष्टकविशिष्ट आकाशश्छान्दोग्ये उपास्यः प्रतीयते ; वाजसनेयके त्वाकाशे शयानो वशित्वादिगुणविशिष्ट उपास्यः प्रतीयते । अतो रूपभेदाद्विद्याभेदः ।

इति प्राप्ते प्रचक्ष्महे, न भेद इति । कुतः । रूपाभेदात् । इतरत्र तत्र च कामाद्येव हि रूपम् । वाजसनेयके छान्दोग्ये च सत्यकामादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः । कुत एतदवगम्यते । आयतनादिभ्यः । हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावत् उभयत्र सैव विद्येति प्रत्यभिज्ञायते । वशित्वादयश्च वाजसनेयके श्रुताः छान्दोग्ये श्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसंकल्पत्वस्य विशेषा इति सत्यसङ्कल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति । अतो रूपं न भिद्यते । संयोगोऽपि, "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", "अभयं वै ब्रह्म भवति" इति ब्रह्मप्राप्तिरूपो न भिद्यते । आकाशशब्दः छान्दोग्ये परमात्मविषय इति, "दहर उत्तरेभ्यः" इत्यत्र निर्णीतम् । वाजसनेयके त्वाकाशे शयानस्य वशित्वादिश्रवणात् तस्य शयानस्य परमात्मत्वे सति तदाधाराभिधायिन आकाशशब्दस्य, "तस्यान्ते सुषिरं सूक्ष्मम्" इति हृदयान्तर्गतस्य सुषिरशब्दवाच्यस्याकाशस्याभिधायकत्वमवगम्यते । अतो विद्यैक्यम् ॥ ३८ ॥

---

**कामादीतरत्र तत्र चायतनादिभ्यः ॥** प्राणितृत्वादीनामशनायाद्यतीतत्वादीनां च धर्मिभेदाभावाद्विद्यैक्यं समर्थितम् । अत्र तु गुणाष्टकस्य वशित्वादिगुणस्य च धर्मिभेदशङ्कया सङ्गतिः । किमत्र विद्याभेदः? उताभेद इति ; छान्दोग्ये अपहतपाप्मत्वादिविशिष्टविषयमुपासनम्, वाजसनेयके वशित्वादिविशिष्टविषयम् —उतोभयत्रापहतपाप्मत्वादिविशिष्टविषयमिति ; किं वाजसनेयके सत्यसङ्कल्पत्वसहचारादपहतपाप्मत्वादीनां प्रतिपत्तिरस्ति, नेति; यदा नास्ति प्रतिपत्तिः, तदा रूपभेदाद्विद्याभेदः । यदा त्वस्ति प्रतिपत्तिः, तदा रूपाभेदाद्विद्यैक्यम् । अस्मिन्नधिकरणे व्योमातीतनिरासः फलितो भविष्यति । आकाशान्तर्वर्तिनो गुणत्वेन आकाशस्य परमात्मत्वं दहराधिकरणे दर्शितम् । आकाशान्तर्वर्तिनः स्वतन्त्रवस्तुत्वे सति आकाशस्य प्रसिद्धाकाशत्वमत्रोच्यत इति भिदा । **वशित्वादीति** । **आदिशब्देन**, 'स वा एष महानजः' इत्युक्तदहरत्वविरोधिमहत्त्वं च विवक्षितम् । **गुणाष्टकविशिष्टः, वशित्वादिगुणविशिष्ट** इति धर्मभेद उक्तः । **आकाशः, आकाशे शयान** इति धर्मिभेद उक्तः । एवं धर्मतो धर्मितश्च रूपभेदाद्विद्याभेद इत्यर्थः ।

**इति प्राप्त** इति । **इतरत्रेति** पदव्याख्यानार्थं धर्ममात्रस्योपास्यत्वव्यावृत्त्यर्थं चाह **वाजसनेयक** इति । **आकाशशब्द** इत्यादि । आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात् तदेव सर्वत्र स्वतः प्राप्तम् । तत्र परमात्मासाधारणगुणश्रवणं प्रसिद्धिप्राचुर्यस्यापवादकम् । तत् छान्दोग्येऽस्तीति तत्राकाशशब्दस्य परमात्मपरत्वमुक्तम् ; वाजसनेयके तु तदभावात् प्रसिद्धिप्राचुर्यमेवानुविधीयत इत्यर्थः ॥ ३८ ॥

अथ स्यात्—यदुक्तं वाजसनेयके वशित्वादिभिः सह सत्यकामत्वादिसद्भावोऽवगम्यते इति—तन्नोपपद्यते ; वशित्वादीनामेव तत्र परमार्थतः सद्भावाभावात् । तदभावश्च, "मनसैवानुद्रष्टव्यम् नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", "एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्" इति प्रकृतेन वाक्येन, "स एष नेति नेत्यात्मा" इत्युत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेषत्वप्रतीतेरवगम्यते । अतो वशित्वादयोऽपि स्थूलत्वाणुत्ववन्निषेध्या इति प्रतीयन्ते । अत एव छान्दोग्येऽपि सत्यकामत्वादयो न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते । अतोऽपारमार्थिकत्वादेवंजातीयकानां गुणानां मोक्षार्थेषूपासनेषु लोप इति—तत्राह—

## आदरादलोपः ॥ ३९ ॥

ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां गुणानामेषां सत्यकामत्वादीनाम्, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्...एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सर्वस्य वशी सर्वस्येशानः', 'एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानाम संभेदाय" इत्यादिभिरनयोः श्रुत्योरन्यासु च मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशादेषामलोपः, अपितूपसंहार एव कार्यः । छान्दोग्ये तावत्, "तद्य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनमभि(नं वि,धाय, "अथ य इह आत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेष्वकामचारो भवति" इति अवेदननिन्दा क्रियमाणा गुणविशिष्टवेदनस्यादरं दर्शयति । तथा वाजसनेयके, "सर्वस्य वशी सर्वस्येशानः...एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" इति भूयो भूय ऐश्वर्योपदेशात् गुणेष्वादरः प्रतीयते । एवमन्यत्रापि । न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रं प्रतारकवत् अपारमार्थिकान्

---

अनन्तरसूत्रशङ्कामाह—**अथ स्यादिति** । छान्दोग्ये दहरविद्या सगुणविषया ; फलविशेषार्थगुणप्रतिपादनपरत्वात् । इयं तु निर्गुणविद्या । अतो न विद्यैक्यमित्यर्थः । **आदरादलोपः** ॥ आदरं दर्शयति **छान्दोग्य** इत्यादिना । **प्रमाणान्तराप्राप्ता**नामित्यनेन निषेधार्थमनुवादत्वं निरस्तम्, अपूर्वत्वरूपतात्पर्यलिङ्गं चोक्तम् । यथा **अपूर्वता** ताद्रूप्यतो विपर्य(य)तश्चापरिच्छित्तिरूपा, तथा **फल**मपि स्वीकारास्वीकारयोरनुकूलप्रतिकूलरूपम् । तदुभयमपि **कामचाराकामचाराभ्या**मुक्तम् । **भूयोभूय** इत्यभ्यासो दर्शितः । **अवेदननिन्दा क्रियमाणा** । गुणविशिष्टवेदनमुक्त्वा तद्विषयावेदननिन्दा क्रियमाणेत्यर्थः । एवं सत्यकामत्वादीनामपूर्वत्वम्, वेदने फलश्रवणम् ; वेदनफलकथन-अवेदननिन्दार्थमावृत्तिः 'एष सर्वेश्वरः' इत्याद्यावृत्तिश्च, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' 'तस्मिन् कामाः समाहिताः' इत्युपक्रमोपसंहारौ, अर्थवादः ; अपूर्वत्वेन विहितस्य निषेधायोगरूपोपपत्तिरित्यादिभिरादरो दृश्यत इत्यर्थः । वाजनेयकेऽप्येवमादिकमादरलिङ्गं द्रष्टव्यमित्यभिप्रायेणाह **तथेति** । **न च मातापितृसहस्रेभ्य** इति । गुणानां प्रमाणान्तराप्रतिपन्नत्वान्निषेधार्थमनुवाद इति वक्तुमशक्यमित्युक्तम् । गुणकथनं विप्रलिप्सया चेत्—गुणनिषेधोऽति तथा स्यात् । हितोपदेशप्रवृत्तशास्त्रस्य विप्रलम्भकत्वमयुक्तं चेत्—तत् गुणेष्वपि तुल्यम् । फलविशेषार्थमविद्यमानगुणारोपणमिति चेत्, गुणनिषेधोऽपि फलाय स्यादिति गुणान्वयो वास्तवः स्यात् । निर्गुणवेदनस्यापवर्गोपायरूपत्वान्नारोपणमिति चेत्—सगुणवेदनस्याप्य-

निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नान् आदरेणोपदिश्य, संसारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्यमाणान् मुमुक्षून् भूयोऽपि भ्रमयितुमलम् । "नेह नानाऽस्ति किञ्चन", "एकधैवानुद्रष्टव्यम्" इति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधाऽनुदर्शनं विधाय ब्रह्मात्मकत्वेन पूर्वसिद्धनानात्वदर्शनं निषेधतीत्ययमर्थः प्रागेव प्रपञ्चितः । 'स एष नेति नेत्यात्मा' इत्यत्र च इतिशब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चाकारं परामृश्य, न तथाविधं ब्रह्मेति सर्वात्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते, तदेव चानन्तरमुपपादयति, "अग्राह्यः, न हि गृह्यते ; अशीर्यः, न हि शीर्यते ; असङ्गः, न हि सज्यते । अव्यथितः, न व्यथते, न रिष्यति" इति । प्रमाणान्तरग्राह्यविसजातीयत्वात् प्रमाणान्तरेण न गृह्यते । विशरणीयविसजातीयत्वात् न विशीर्यते । एवमुत्तरत्रानुसन्धेयम् । छान्दोग्येऽपि "नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते । एतत् सत्यं ब्रह्म पुरम् । अस्मिन् कामाः समाहिताः" इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन् सत्यकामत्वादयो विधीयन्ते ॥ ३९ ॥

ननु एवमपि "तद्य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति । स यदि पितृलोककामो भवति" इत्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफलसंबन्धश्रवणात् मुमुक्षोर्ब्रह्मप्रेप्सोर्न सगुणं ब्रह्म उपास्यम् । परविद्याफलं च "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इतीदमेव । अतः सत्यकामत्वादयो ब्रह्म प्रेप्सोर्नोपसंहार्या इति । अत उत्तरं पठति—

**उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥**

---

पवर्गापायरूपत्वान्नासदारोपणमिति । सगुणवेदनस्यापवर्गोपायत्वकथनं विप्रलिप्सामूलमिति चेत्, नैर्गुण्यकथनमपि तथा स्यात् । हितोपदेशप्रवृत्तस्य शास्त्रस्य विप्रलम्भकत्वमयुक्तमिति चेत्—तत् गुणप्रतिपादनेऽपि तुल्यम्—इत्यभिप्रायेण **अपारमार्थिकानित्यादि**विशेषणमुक्तम् । 'नेह नानाऽस्ति' इत्यादेः कोऽर्थ इत्यपेक्षायाम्, प्रतिबन्दीत्वेन[1] पूर्वग्रन्थाभिप्रेतस्य गुणनिषेधस्य पराभिमतनिर्विशेषपरत्वव्युदसनार्थं सामान्यनिषेधस्य विहितविशेषव्यतिरिक्तविषयत्वात् 'नेह नानाऽस्ति' इत्यादेरब्रह्मात्मकनानात्वनिषेधपरत्वमाह **नेहेत्यादिना** । **एकधैवानुद्रष्टव्यम्** । केषांचित् कदाचित् स्वनिष्ठत्वमन्यपरतन्त्रत्वं वा न मन्तव्यम् ; अपि तु परमात्मपरतन्त्रतयैकरूप्यमेव द्रष्टव्यमित्यर्थः । **स एष नेति नेती**त्यत्यस्य वाक्यस्य प्रकरणानुगुण्यात् प्रपञ्चसाजात्यनिषेधपरत्वमुक्तम् । 'अथात आदेशो नेति नेति' इत्यस्य वाक्यस्येयत्तानिषेधपरत्वमपि तत्प्रकरणानुगुण्यादुक्तम् । इहोक्तार्थस्य प्रकरणानुगुण्यं दर्शयन् **अग्राह्य** इत्यादिकं व्याचष्टे **प्रमाणान्तरे**ति । **छान्दोग्येऽपी**ति । अस्य जरया न ब्रह्म जीर्यतीत्यर्थः ।

अनन्तरसूत्रशङ्कामाह **नन्विति** । सर्वलोककामचारादिकं सांसारिकफलम् । 'स्वेन रूपेणाभिनिष्पद्यते' इति साक्षान्मुक्तिफलं स्यात् ; तद्विलक्षणत्वस्य श्रवणादित्यर्थः । **उपस्थितेऽतस्तद्वचनात्** ॥

---

1 प्रतिबन्दीत्वेन पूर्वग्रन्थाभिप्रेतस्येति । भाष्यग्रन्थाभिप्रेततया परोक्तार्थान्वारोहेण यत्र गुणनिषेधवाक्ये प्रतिबन्द्य इह टीकायां दर्शिताः । तादृशस्येत्यर्थः ।

उपस्थितिः—उपस्थानम्, ब्रह्मोपसम्पत्तिः। उपस्थिते ब्रह्मोपसम्पन्ने सर्वविधविनिर्मुक्ते स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मनि अत एव उपसम्पत्तेरेव हेतोः सर्वेषु लोकेषु कामचार उच्यते, "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", 'स उत्तमः पुरुषः' "स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" "स स्वराड् भवति" "तस्य सर्वेषु लोकेषु कामचारो भवति" इति। तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते। अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वात् मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः॥ इति कामाद्यधिकरणम्॥

---

**अत एवोपसम्पत्तेरेव हेतोरि**ति उपसम्पत्त्यनन्तरं सर्वलोककामचारकथनाद्धेतुत्वमभिप्रेतमित्यर्थः। ब्रह्मानुभवतो जीवस्य सर्वलोककामचाराद्यपेक्षा कथं स्यादित्यत्राह **तदेतच्चतुर्थ** इति। निगमयति **अत** इति।

**परे** तु—छान्दोग्यस्थसत्यकामत्वादिगुणजातं वाजसनेयके, 'स वा एष महान्' इत्यत्र संबध्यते। तत्र श्रुतं वशित्वादिकं छान्दोग्ये संबध्यते; आयतनत्वसेतुत्वादिसामान्यात्। छान्दोग्ये सगुणविद्या विवक्षिता। वाजसनेयके निर्गुणविद्या, 'असङ्गो ह्ययं पुरुषः', 'नेति नेति' इत्यादिश्रवणात्। अतः छान्दोग्ये वशित्वादिसंबन्धः [1]उपासनार्थः; अन्यत्र सत्यकामत्वादिसंबन्धः स्तुतिपौष्कल्यार्थः; उभयविधाकाङ्क्षासंभवात्, ब्रह्मणस्तद्गुणसंबन्धयोग्यत्वात् आयतनत्वादिसाम्यबाहुल्याच्चेति।

तदयुक्तम्; निषेधस्य विहितगुणविषयत्वाभावेन सगुणनिर्गुणविभागाभावात्। नेतिनेतीत्यत्रापि, 'अशीर्यो न हि शीर्यते; असङ्गो न हि सज्यते; अव्यथितो न व्यथते, न रिष्यति' इत्यादिनिषेधानां 'विशोको विजरो विमृत्युः,' इत्यादीनां च तुल्यार्थत्वाच्च। आयतनत्वादिसाम्येन स्तुत्याकाङ्क्षया सम्बन्धश्चानुपपन्नः। तथा सति शाण्डिल्यविद्याम्नातानां भारूपत्वसर्वकर्मत्वादीनामपि संबन्धप्रसङ्गात्। तत्रापि हि, 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः', 'अवाक्यनादरः' इति हृदयायतनत्वं महत्त्वं निषेधवत्त्वं च समानम्॥ अस्तु संबन्ध इति चेत्—परस्परभिन्नसर्वविद्योपात्तगुणानां सर्वत्र स्तुत्यर्थतया सम्बन्धप्रसङ्गः। कारणत्वसत्यज्ञानात्मकत्वविभुत्वनित्यत्वपतित्वादिषु केनचिद्रूपेण साम्यस्य सर्वासु विद्यासु सद्भावात्; आकाङ्क्षायाश्च निवारकाभावात्। न ह्येतावता गुणेन स्तुतिरलमिति व्यवस्थापकमस्ति॥ स्वप्रकरणस्थगुणेन नैराकाङ्क्ष्यं चेत्—वाजसनेयकेऽपि तुल्यम्॥

**अपरे** तु—विद्यैक्यं सिद्धान्तयन्तः उपक्रमभेदमपि विद्याभेदयुक्तिमाहुः। परमात्मलिङ्गवत्प्रकरणेषूपास्यविशेषणतया वा, व्यावर्त्यतया वा मोक्षप्रदत्वलक्षणैश्वर्यौपाधिक(यौपयिक?)तया वा जीवप्रतिपादनस्य सङ्गतेर्मुहुः सूत्रितत्वात् भाष्ये तदनुपन्यासः।

**अन्ये** तु—दहरविद्येति संज्ञातदभावौ च भेदहेतुमाहुः। विरोधिसंज्ञान्तराभावात् अव्यपदेशमात्रं न विद्याभेदायालमित्यनादरः। आख्याभेदो हि विद्याभेदसाधकः।

**त्रयोऽप्येते आदरा**दित्याद्यनन्तरसूत्रद्वयमधिकरणान्तरं प्राणाग्निहोत्रविषयं वर्णयन्ति। "तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्। स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा" इत्यारभ्य, "य एतदेवं विद्वानग्निहोत्रं जुहोति" इति प्रथमोपनतभक्तद्रव्यकं प्राणाग्निहोत्रं भोजनलोपेऽपि न लुप्यते।

---

1 वशित्वादीनां तत्तद्रूपेणोपसनासंभवाद्यपि सत्यकामत्वादेरुपास्यतया तद्विवरणतया संबन्धादुपासनार्थत्वमेव; न स्तुत्यर्थत्वमिति भावः।

किंतु अबादिना प्रतिनिधिनापि निर्वर्त्यते। अतिथिभोजनेन भक्तक्षये प्राणाग्निहोत्रलोपमाशङ्क्य तत्परिहाराय हि प्राथम्यविधिः । जाबालश्रुतौ, "पूर्वोऽतिथिभ्योऽश्नीयात् । यथा वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयात्, एवं तत्" इत्यतिथिभोजनप्राथम्यनिन्दनेनादरदर्शनाच्च। न हि प्राथम्यलोपासहा श्रुतिः प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेत। न च भुजिप्रयुक्तभक्तसंयोगात् भोजनलोपे लोपः । [1]तच्च (तत्र ?) कौण्डपायिनामयनाग्निहोत्र इवाग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रगतपयःप्रभृत्यतिदेशार्थत्वात् पयःप्रभृतिषु प्राप्तेषु द्रव्यनियमार्थत्वात् तद्‌यद्भक्तमिति वाक्यस्य । अतो भोजनाभावात् गुणभूतद्रव्यलोपेऽपि नाग्निहोत्रलोपः ; आदरादिति पूर्वपक्षं कृत्वा—भोजन उपस्थिते होमस्य तदर्थभक्तसाध्यताप्रतीतेः वाजिनस्यामिक्षादध्यानयनप्रयोजकत्वाभाववत् परार्थद्रव्यसाध्यानां कर्मप्रयोजकत्वाभावात्, कौण्डपायिनामयनाग्निहोत्र इव प्राणाग्निहोत्रेऽग्न्युद्धरणादिधर्मायोगात्, अग्निहोत्रशब्दस्य विध्युद्देशगतत्वाभावात्, 'आस्यमाहवनीयम्' इति साम्पादिकत्वदर्शनाच्च अग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रधर्मातिदेशार्थत्वाभावेन तद्यद्भक्तमिति वाक्यस्य द्रव्यविशेषविधानार्थत्वाभावादादरवचनस्यापि भोजनपक्षे प्राथम्यरूपाङ्गविधानार्थतया होमलोपपरिहारार्थत्वाभावाच्च भोजनलोपे लोप इति सिद्धान्तयन्ति। अन्ये तु—द्रव्यदेवतासम्बन्धेनापूर्वकर्मत्वावगमात् परार्थद्रव्यनियममात्रविधिः; प्राथम्यविधानं चातिथिभोजनेन भक्तव्यये प्राणाग्निहोत्रलोपपरिहारार्थमिति पूर्वपक्षमाहुः । अन्यत् तुल्यम् ।

तदिदमनुपपन्नम् ; प्राणाहुतिमात्रविषयत्वे विचारस्य विद्यातदुपयोगिविषयत्वाभावेन पादसङ्गत्यभावात् ; प्राणाहुतिष्वग्निहोत्रदृष्टिविषयत्वेऽनन्तराधिकरणन्यायेन उद्गीथाद्युपासनानामिवानियमस्य सिद्धतया कृतकरत्वाच्च। आमिक्षायागे नियतमपि वाजिनं दध्यानयनादेरप्रयोजकमिति अनियतस्याग्निहोत्रदृष्टिचिन्तनस्य प्रयोजकत्वं हि दूरोत्सारितम् । पूर्वपक्षहेत्वभावाच्चानारम्भणीयता । न चादरवचनं हेतुः ; तस्य साधकत्वाप्रतीतेः । पूर्वपक्षहेतवोऽपि हि यावद्दौर्बल्यनिश्चयं साध्यसाधकतया प्रतीयन्ते । किमतिथिभोजनप्राथम्यनिन्दनं हेतुः उत प्राणाग्निहोत्रप्राथम्यम् । न प्रथमः, निन्दनस्य निन्दितविपरीतार्थविधेयतावगमकत्वात् । अपगोरणनिन्दा हि तन्निवृत्तेर्विधेयतां गमयति। अतोऽतिथिभोजनप्राथम्यनिन्दनं स्वामिभोजनप्राथम्यं गमयेत्; न तु भक्तालाभेऽपि निष्पाद्यताम् । न द्वितीयः, प्राथम्यविधानस्यानुष्ठानदशायामप्राथम्यमात्रनिवर्तकत्वात् । परार्थद्रव्यसाध्यस्याप्रयोजकत्वं च वाजिनसप्तम[2]पदपांसुग्रहणादिषु पूर्वकाण्डसिद्धम्, "पदकर्माप्रयोजकं नयनस्य परार्थत्वात्"। इति अतोऽनारम्भणीयता ॥ ४० ॥

इति कामाद्यधिकरणम् ।

---

1 तच्चेति पदं न स्यादिति भावप्रकाशिका । पूर्वान्वयी वा तस्येति पाठः स्यात् ।

2 सोमक्रयार्थं नीयमानाया एकहायन्याः सप्तमपदन्यासपांसुमध्वर्युरञ्जलिना गृह्णीयात् । तेन हविर्धानशकटाक्षमुपाञ्जयादित्युक्तम्, तत्र वाजिनं प्रसिद्धम् ॥ पांसुग्रहणादिकं गवानयनाप्रयोजकमिति पदकर्मेति सूत्रोक्तम् । इतिशब्दः प्रकारवचनः । तेन वाजिनतुषोपवापादिविषयतत्पूर्वोत्तराधिकरणग्रहणम् ।

## तन्निर्धारणानियमाधिकरणम् ३-३ १७

### तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३ ३·४१ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादीनि कर्माङ्गाश्रयाण्युपासनानि कर्माङ्गभूतोद्गीथादिमुखेन जुह्वादिमुखेन पर्णतादिवत् कर्माङ्गत्वेन निरूढानुष्ठानानीत्युद्गीथाद्युपासनसंबन्धिनः, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वर्तमाननिर्देशस्य पर्णतादिसंबन्ध्यपापश्लोकश्रवणवत् पृथक्फलत्वकल्पनायोगात् क्रतुषु नियमेनोपसंहार्याणीति ।

---

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्** ॥ सत्यकामत्वादीनामुपसंहार्यत्वमुक्तम् ; एवमुद्गीथाद्युपासनानामपि नियमेनोपसंहार्यत्वमिति प्रसङ्गात् सङ्गतिः । उद्गीथोपासनादीनि किं सर्वक्रतुषु प्रोक्षणावघातादिवन्नियमेनोपादेयानि, उत गोदोहनादिवदनियमेनोपसंहार्याणीति विचारः । किमेतानि क्रत्वर्थानि, उत गोदोहनादिवत् पुरुषार्थभूतानि ; 'यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनं किं पुरुषार्थतामवगमयति, नेति ; वीर्यवत्तरत्वश्रुतिः किमपापश्लोकश्रवणवदर्थवादः, उत फलविधिरिति । अर्थवादश्चेत्—'यश्चैतदेवम्' इत्यादिवाक्यस्य पुरुषार्थतावगमकत्वाभावेन क्रत्वर्थत्वान्नियमेनोपादेयता । फलविधिश्चेत्—अनियमवाक्यस्य पुरुषार्थत्वगमकतया गोदोहनतुल्यत्वादुपादानानियमः । उपासनस्य **निर्धारण**शब्दवाच्यत्वे हेतुरयम्, [यत् ?] छान्दोग्ये, 'कतमर्क् कतमत् साम कतम उद्गीथः' इति विमृश्य, 'वागेवर्क् प्राणस्साम ओमित्युद्गीथः' इति निर्द्धारणम् । **ओमित्येत**दित्यादि । क्रतुप्रकरणाधीते, 'जुह्वा जुहोति'इति वाक्ये जुहूः होमसाधनत्वेन विहिता । प्रकरणान्तराधीतमपि 'यस्य पर्णमयी जुहूर्भवति' इति वाक्यं जुहूमनूद्य तस्याः पर्णमयत्वं विदधाति । तत्र जुहूद्वारा पर्णमयत्वमङ्गम् । तद्वत् प्रकरणान्तरविहितमप्युपासनमुद्गीथद्वारा क्रत्वङ्गमित्यर्थः । उद्गीथादिविषयस्योपासनस्य प्रकरणान्तराधीतस्यापि क्रत्वङ्गत्वं हि निरूप्यते । तत्र प्रकरणान्तराधीतं क्रत्वङ्गद्वारा तदङ्गभूतं किंचिद्दृष्टान्तीकर्तव्यमित्यभिप्रायेण, प्रोक्षणादिषु सत्स्वपि पर्णता दृष्टान्तिता ॥ फलसाधनमेव ह्यनुष्ठेयम् ; उपासनस्य च पृथक्फलसाधनत्वे सति अङ्गत्वमनुपपन्नमित्यत्राह **कर्माङ्गत्वेन निरूढानुष्ठानानी**ति । अफलस्याप्यङ्गत्वेनानुष्ठानं निरुह्यत इत्यर्थः । पृथक्फलसाधनत्वं श्रुतमिति शङ्कायाम्, 'न स पापं श्लोकं श्रृणोति' इति पर्णत्वार्थवादवत् इदमप्यर्थवाद इत्याह **उद्गीथाद्युपासनसंबन्धिन** इत्यादिना । **वर्तमाननिर्देशस्ये**ति । वर्तमानवत् निर्देशो यस्येति बहुव्रीहिः । वीर्यवत्तरत्वस्येत्यध्याहार्यम् । 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यत्र हि विधिप्रत्ययोऽस्तीति तद्व्यावृत्तिः । [1]पशुकामस्य प्रणयनसाधनत्वं हि गोदोहनस्य विधेयम् ; नान्यस्य । अतः फलेऽपि विधिकटाक्षोऽस्ति । स तु नात्र विद्यत इत्यर्थः । फलस्य वाक्यान्तरस्थत्वाद्विप्रकर्षोऽप्यभिप्रेतः ।

---

1 पशूद्देशेन गोदोहनगतकरणत्वस्य गोदोहनस्यैव वा विधिरिति मीमांसकवाक्यार्थः पार्ष्णिको भवत्यस्मन्मते । प्राथमिकस्तु षष्ठ्यन्तस्य धात्वन्वयात् पशुकामाधिकारिकप्रणयनस्य गोदोहनकरणकत्वमेवेति भावेनैवमुक्तम् । एवञ्च नान्यस्येत्यस्यापशुकामाधिकारिकप्रणयनसाधनत्वं नेत्येवार्थः । विधिरिहाज्ञातज्ञापनम् ।

एवं प्राप्ते प्रचक्ष्महे—तन्निर्धारणानियमः...इति। निर्धारणं निश्चयेन मनसोऽवस्थापनम्, ध्यानमित्यर्थः। तन्निर्धारणानियमः—कर्मसूद्गीथाद्युपासनानामनियमः; कुतः? तद्दृष्टेः, उपलभ्यते ह्युपासनानुष्ठानानियमः, "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इत्यविदुषोऽप्यनुष्ठानवचनात्। न चाङ्गत्वे सत्युपासनस्यानुष्ठानानियम उपपद्यते। एवमुपासनस्यानङ्गत्वे निश्चिते सत्युपासनविधेः फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वं कर्मफलात्पृथग्भूतमेव फलमित्यवगम्यते। किमिदं वीर्यवत्तरत्वम्? कर्मफलस्यैवाप्रतिबन्धः। प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन तावन्तं कालम्। तदभावोऽप्रतिबन्धः। स ह्यप्रतिबन्धः कर्मफलात् स्वर्गादिलक्षणात् पृथग्भूतमेव फलम्। तदिदमुच्यते—पृथग्घ्यप्रतिबन्धः फलमिति। अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वात् गोदोहनादिवत् कर्मसु उद्गीथाद्युपासनानामनियमेनोपसंहारः॥ ४१॥

इति तन्निर्धारणानियमाधिकरणम्॥ प्रदानाधिकरणम् ३-३-१८

## प्रदानवदेव तदुक्तम्॥ ३-३-४२॥

दहरविद्यायाम्—"तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति दहराकाशस्य परमात्मन उपासनमुक्त्वा "एतांश्च सत्यान् कामान्" इति गुणानामपि पृथगुपासनं विहितम्। तत्र संशयः—गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्यात्मनश्चिन्तनमावर्तनीयम्, उत नेति। दहराकाशस्यैवापहतपाप्मत्वादीनां गुणित्वात् तस्य च सकृदेवानुसंधातुं शक्यत्वात्, गुणार्थे तच्चिन्तनं नावर्तनीयम् इति प्राप्ते उच्यते—

प्रदानवदेवेति। प्रदानवदावर्तनीयमेवेत्यर्थः। यद्यपि दहराकाश एक एवापहतपाप्मत्वादिगुणानां गुणी; स च प्रथमं चिन्तितः; तथाऽपि स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वात्

---

**एवं प्राप्त** इति। अर्थवादोक्तमपि फलं विध्यपेक्षितं स्वीकार्यमित्यभ्युपगमयितुं **रात्रिसत्रन्यायेने**त्युक्तम्। **गोदोहनादिवदि**ति। 'नियमेनोपादेयं ह्यङ्गम्। पशुकामनाऽस्ति चेत्, गोदोहनोपसंहारः; न त्वन्यदा। अतोऽङ्गत्वाभावात् गोदोहनस्य न क्रत्वर्थत्वम्, अपि तु पुरुषार्थत्वमेव' इति निर्णीतं **कर्मकाण्डे**।

**अन्ये तु**—'यदेव विद्यया करोति' इति कर्मणि विद्याया नियमितत्वात् क्रत्वर्थमिति पूर्वपक्षयुक्तिमाहुः। तदयुक्तम्; तरपा फलातिशयप्रतीतेः। विद्यावतः कर्मणो वीर्यवत्तरत्वाद्विद्याहीनस्य कर्मणो वीर्यवत्त्वं ह्यनुज्ञायते। अतो वीर्यवत्तरत्वफलसत्तामुपगम्य तच्छ्रवणस्यार्थवादत्वं पूर्वपक्षिणा वाच्यम्। अर्थवादत्वं च हेत्वन्तरेणाङ्गत्वे सिद्धे वक्तव्यम्। अतोऽव्यभिचरितक्रतुसबन्धिपदार्थसंबन्ध एव पूर्वपक्षहेतुः॥४१

**प्रदानवदेव तदुक्तम्**॥ पूर्वाधिकरणं प्रसङ्गान्निरूपितम्। अथ तत्पूर्वदहरविद्याविषयनिरूपणं क्रियत इति सङ्गतिः। दहरविद्यायां तत्तद्गुणचिन्तने तत्तद्गुणविशिष्टतया दहरचिन्तनमावर्तनीयम्, नेति; किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनमपि कृतम्, नेति। कृतं चेत्–अनावर्तनीयम्। न चेत्—आवर्तनीयम्। **दहरेत्यादि**। केवलगुणिचिन्तनं नाम–आनन्दत्वादिविशिष्टस्वरूपचिन्तनम्; गुणाष्टकचिन्तनं **गुणचिन्तनम्। तस्य च सकृदेवानुसंधातुं शक्यत्वादि**ति। **सकृदेव** तन्त्रेणेत्यर्थः। स्वरूपचिन्तनार्थं गुणचिन्तनार्थञ्च तन्त्रेणानुसन्धातुं शक्यत्वादित्यर्थः।

**गुणविशिष्टाकारस्य भिन्नत्वात्। गुणविशिष्टाकारः**—गुण-संबन्धिरूपसमुदायः. इत्यर्थः(?)। तस्य स्वरूपमात्राद् भिन्नत्वात्। न हि स्वरूपमात्रे गुणानां गुणिनश्च समुदायो भवतीत्यर्थः।

'अपहतपाप्मा विजरः' इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात् पूर्वं स्वरूपेणानुसंहितस्यापहतपाप्मत्वादिविशिष्टतयाऽनुसंधानार्थमावृत्तिः कर्तव्या । "यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्", "इन्द्रायाधिराजाय" इन्द्राय स्वराज्ञे" इतीन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि तत्तद्गुणसंबन्ध्याकारस्य भिन्नत्वात् प्रदानावृत्तिः क्रियते । तदुक्तं साङ्कर्षणे, "नाना वा देवतापृथक्त्वात्" इति ॥ ४२ ॥ इति प्रदानाधिकरणम् ।

## लिङ्गभूयस्त्वाधिकरणम् ३-३-१९

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ३-३-४३ ॥

तैत्तिरीयके दहरविद्यानन्तरमधीयते, "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं प्रभुम्" इत्यारभ्य, "सोऽक्षरः परमः स्वराट्" इत्यन्तम् । तत्र संशयः— किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्धारणमनेन क्रियते, उत सर्ववेदान्तोदितपर-

---

**अपहतपाप्मा विजर इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वादिति** । 'अपहतपाप्मा विजरः' इत्यादिशब्दानां गुणिपर्यन्ताभिधायित्वात् 'एतांश्च सत्यान् कामान्' इत्यत्रापि गुणिपर्यन्तानामेव गुणानामुपासनं विहितमित्यर्थः ।

**परे चापरे च**— छान्दोग्ये वाजसनेयके च अध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः, अधिदैवमग्न्यादीनां वायुः इति, तदेतदुदाहृत्य वायुप्राणयोस्तत्त्वैक्यात् अपृथक्चिन्तनमिति विमृश्य पृथक्चिन्तनं सिद्धान्तयन्ति । **अन्ये** तु वाजसनेयके, "तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्" इत्येतदुदाहृत्य पूर्ववत् पूर्वपक्षसिद्धान्तौ वदन्ति । तदयुक्तम्—'संबन्धादेवमन्यत्रापि' इत्यत्र स्थानभेदे विद्याभेदस्य समर्थितत्वात् । [1]तस्य विद्याभेदहेतुत्वं वेद्यान्तर्भावात् । वेद्यबहिर्भावे वित्तिभेदापादकत्वानुपपत्तेः । अतोऽमावास्यायां दधिपयसोः प्रदानवत् तन्त्रेणेति पूर्वपक्षशङ्काऽनुपपन्ना । **तत्र** हीन्द्र एवोद्देश्य इति नोद्देश्यभेदः । अत्र तूपास्यरूपभेदात् तन्त्रेण चिन्तनं न शङ्कनीयम् ॥ स्थानद्वयविशिष्टमेकमिति चिन्ता युज्यत इति चेत्-न, विद्याद्वयोत्तीर्णत्वेन[2] द्वयोस्तन्त्रानुष्ठानासिद्धेः । तस्माद्विद्यैकत्वे स्थिते पृथगपृथक्चिन्तनविचारो यथोपपद्यते, तथा विषयः प्रदर्शनीयः । अतो दहरविद्यायामेवैषा चिन्ता युक्ता ॥ ४२ ॥

**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि** ॥ पूर्वप्रकृतविद्यैकवाक्यत्वेन सङ्गतिः । **किं पूर्वप्रकृतेति** । **परविद्येति** दृष्टिविधिव्यावृत्तिः । किं सर्वासु परविद्यासु नारायण एवोपास्यः, उत दहरविद्यामात्रे ;

---

[1] विद्याभेदो नास्मदिष्ट इत्यत्राह तस्येति । तस्य-स्थानस्य वेद्यकोटिनिविष्टत्वात् विद्याभेदकत्वम् ।

[2] विद्याद्वयोत्तीर्णत्वेन—स्थानद्वयविशिष्टतया तद्वस्तूपासनं ह्येकम् । तस्य विद्याद्वयत्वाभावेनेत्यर्थः । उभयत्वावच्छिन्नस्थानप्रकारताकवस्तुविशेष्यकविद्या विषयताभेदात् विद्याद्वयरूपा न भवति । समूहालम्बनविधया तदुभयविषयकत्वपूर्वपक्षे च— भवत्सिद्धान्ते तद्दूषणकारणं नास्ति विद्यैक्यस्येष्टत्वात्—इत्यप्यत्रार्थात् सिद्धम् । अस्मन्मते तु नानात्वात् विद्यासमुच्चयो निष्प्रमाणः ; समुच्चयसाधकस्याभावात् ।

विद्योपास्यविशेषनिर्धारणमिति । किं युक्तम् । दहरविद्योपास्यविशेषनिर्धारणमिति । कुतः । प्रकरणात् । पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता, "दह्रं विपाप्मं परवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति । अस्मिंश्चानुवाके, "पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्" इत्यादिना हृदयपुण्डरीकाभिधानमस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणार्थत्वमुपोद्बलयतीति ।

एवं प्राप्ते प्रचक्ष्महे—लिङ्गभूयस्त्वादिति । अस्य निखिलपरविद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते । तथा हि परविद्यासु अक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं विधीयते । भूयसीषु विद्यासु श्रुतान् अनूद्य नारायणत्वविधानभूयस्त्वं नारायण एव सर्वविद्यासूपास्यमस्थूलत्वादिविशेषितानन्दादिगुणकं परं ब्रह्मेति विशेषनिर्णये भूयो—बहुतरं लिङ्गं भवति । अत्र लिङ्गशब्दश्चिह्नपर्यायः, चिन्हभूतं वाक्यं बहुतरमस्तीत्यर्थः । तद्धि प्रकरणाद्बलीयः । तदप्युक्तम्—प्रथमे काण्डे, "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पर(पार)दौर्बल्यमर्थविप्रकर्षात्" इति । यत्तूक्तम्—"पद्मकोशप्रतीकाशम्" इत्यादिवचनं दहरशेषत्वमस्योपोद्बलयतीति—तन्न ; बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः । न च, "सहस्रशीर्षम्" इत्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासिना सम्बन्धः शङ्कनीयः, "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणोऽभिहितत्वात् तदुपास्ये द्वितीयानुपपत्तेः । "विश्वमेवेदं पुरुषः" "तत्त्वं नारायणः परः" इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या । "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः", "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।

---

किं नारायणानुवाके सर्वविद्यानामुपास्यविशेषो निर्धार्यते उत दहरविद्याया एव ; किमत्र दहरोद्देशेन नारायणत्वं विधीयते, उत सर्वविद्योपास्योद्देशेनेति ; किं हृदयायतनत्वश्रवणमनुरोद्धव्यम्, उत लिङ्गभूयस्त्वम् । हृदयातनत्वश्रवणानुरोधे दहरोद्देशेन नारायणत्वविधानात् नारायणानुवाकस्य दहरविद्यामात्रोपास्यविषयत्वात् तस्यामेव नारायण उपास्यः स्यात् । लिङ्गभूयस्त्वानुरोधे सर्वोपास्योद्देशेन नारायणत्वविधानान्नारायणानुवाकस्य सर्वविद्योपास्यविशेषनिर्धारकतया सर्वासु परविद्यासु नारायण एवोपास्य इति । 'आत्मा गुहायां निहितोऽस्य जन्तोः' इति पूर्वानुवाके आत्मशब्दः श्रुतः । अत्रापि 'आत्मा नारायणः परः' इत्यात्मशब्दश्रवणात् दहरविद्यामात्रान्वयीत्यर्थसिद्धम् ।

**एवं प्राप्त** इति । **चिह्नपर्याय** इति । न तु श्रुतिलिङ्गादिषु लिङ्गमित्यर्थः । **पद्मकोशे**त्यादि । यथा 'ऐतदात्म्यमिदम्' इति सामान्येनोक्तं ब्रह्मात्मकत्वं तत्त्वमसीति जीवविशेषे निगमितम्—तथा नारायण एव सर्वविद्योपास्यः, तस्मादस्मिन्नपि विद्याविशेषे स एवोपास्य इति विशेषे तत्प्रदर्शनमित्यर्थः । **न च सहस्रशीर्षमित्यादी**ति । 'येनावृतं खं च दिवं महीं च' इतिवद्द्रष्टव्यमिति भावः । विश्वमेवेदमित्यादिना प्रथमार्थत्वमेव संनिकृष्टवाक्यैरुपपादितम् । द्वितीयाविभक्त्यन्तवाक्यानुगुणं प्रथमान्तानि वाक्यानि किं न नेयानीति शङ्कायामुपरितनवाक्यैश्च प्रथमार्थत्वमुपपादयति-**अन्तर्बहिश्चे**ति । उपासीतेति विधिपदाध्याहारश्च स्यादित्यर्थसिद्धम् । विद्यात्, उपासीतेत्यादिविधायकपदरहितानां भगव-

**स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति निर्देशैः सर्वस्मात्परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ ४३ ॥**

**इति लिङ्गभूयस्त्वाधिकरणम् ॥**

---

त्परत्वपराणामनेकवाक्यानां पर्यालोचनया सर्वविद्यासु उपास्यविशेषनिर्धारणपरत्वमस्यानुवाकस्य प्रतीयते । पूर्वानुवाकोक्तदहरविद्याशेषत्वे पूर्वापरवाक्यानामर्थस्वभावविरोधः, विधिपदाध्याहारः, प्रथमान्तपदानामस्वारस्यं च । सर्वविद्योपास्यविशेषनिर्धारणपरत्वे 'येनावृतं खं च दिवं महीं च' इत्यादिवद्द्वितीयान्तपदमात्रास्वारस्यम् ; न तु विधिपदाध्याहारः ; नापि पूर्वापरवाक्यावगतार्थस्वभावविरोधः ॥ ननु प्रथमार्थत्वे सति पूर्वानुवाकस्थेन उपासितव्यमिति पदेनान्वयो घटते ॥ नैवम् ; स्वारसिकेन सर्वस्मात्परत्वप्रतिपादनेन वाक्यस्य निराकाङ्क्षत्वे सत्यपि पूर्वानुवाकस्थपदाकर्षणेनान्वयकल्पनायोगात् । **सर्वस्मात्परो नारायण एवे**ति । अस्यायमभिप्रायः—केचित् 'नारायणपरं ब्रह्म' इति वाक्ये नारायणात्परमिति अन्तर्गतसमासं वदन्ति । तदयुक्तम्, प्रातिपदिकेन विभक्त्यर्थलक्षणा हि **समासः** । मुख्यार्थे संभवति लक्षणानुपपत्तेः । समासेऽपि निषादस्थपतिन्यायेन नारायण एव परमिति प्रथमाविभक्तिस्वीकारोपपत्तेः ; **महोपनिषदि**, 'नारायणः परं ब्रह्म' इति व्यासेन समासार्थावगमात् । अन्यथा पूर्वापरवाक्यविरोधात्, 'तत्त्वं नारायणः परः' इति विरोधात्, श्रुत्यन्तरविरोधात् । 'सुपां सुलुक्' इत्यादिसूत्रेण विभक्तिलोपेनासमासेऽपि नारायणशब्दस्य प्रथमान्तत्वसाधुत्वाच्चेति । **आत्मश**ब्दश्च 'आत्मा वा अरे द्रष्टव्यः', 'आत्मा वा इदमेक एव', 'आत्मनस्तु कामाय', 'आत्मानमेव लोकम्', 'तमेवैकं ध्यायथात्मानम्' इत्यात्मशब्दस्य बहूपनिषत्सु उद्घोषात् तेष्वपि नारायणस्यैवोपास्यत्वसाधकः ।

**इतरे त्रयोऽपि** लिङ्गभूयस्त्वादिति सूत्रमुत्तराधिकरणशेषं सिद्धान्तोपक्रमं व्याचक्षते । 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इत्यादीनि भूयांसि लिङ्गानि; लिङ्गं च प्रकरणात् बलीय इति । 'पूर्वविकल्पः' इत्यादि पूर्वपक्षसूत्रद्वयम् ॥ तदयुक्तम् ; लिङ्गे उपन्यस्ते दुर्बलप्रकरणेन पूर्वपक्षोत्थानायोगात् ॥ ननु सत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं तल्लिङ्गं न प्रकरणं बाधितुमुत्सहत इति चेत्—तर्हि श्रुत्या**दिबलीयस्त्वा**दिति सिद्धान्तदशायां **आदि**शब्दोपात्तत्वं दुर्बलस्यानुपपन्नम् ॥ ननु तत्र प्राबल्यहेतुर्विवक्षित इति चेन्न—अशाब्दत्वात् ॥ अभिप्रेत इति चेत्—कथमभिप्रायः ॥ श्रुतविध्युद्देशानामन्यार्थदर्शनानां तदेकवाक्यत्वादर्थान्तराप्रापकत्वम् । अत्र तु विस्पष्टविध्यन्तरानुपलब्धेर्नार्थवादत्वम् । किन्तु 'वचनानि त्वपूर्वत्वात्' इत्यादिना विधिः कल्पनीय इति चेत्—तर्हि 'लिङ्गभूयस्त्वात्' इति सूत्रवैयर्थ्यम् ; अत्रोक्तस्य सिद्धान्तहेतोस्तत्प्राबल्यस्य च सूत्रान्तरसिद्धत्वात् । पृथगधिकरणत्वे तु सप्रयोजनत्वम् । **दर्शनाच्चे**त्येतत पूर्वोक्तलिङ्गदर्शनादिति **परे चापरे चा**हुः । तदयुक्तम् ; लिङ्गभूयस्त्वादित्यनेन श्रुत्यादीत्या**दि**शब्देन च पुनरुक्तेः । **दृष्टश्च तदुक्तमि**त्यस्य क्रियाप्रकरणादुत्कर्षेण स्वातन्त्र्याङ्गीकारो मनश्चिदादीनां न्याय्यः ; राजसूयप्रकरणादवेष्टेरुत्कर्षो दृष्ट इति । तदुक्तं **भेदलक्षणे** 'अवेष्टौ यज्ञसंयोगात्' इति इति **त्रयो**ऽप्याहुः । ततोऽपि विधिकल्पनपरत्वमुचितम् । स्वातन्त्र्यस्यापि विधिकल्पनामूलकत्वात् । न ह्यविहितस्य कस्यचित् स्वातन्त्र्यं शक्यमुपगन्तुम् ।

## पूर्वविकल्पाधिकरणम् ३-३-२०

### पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ३-३-४४ ॥

वाजसनेयकेऽग्निरहस्ये मनश्चिदादयोऽग्नयः श्रूयन्ते, "मनश्चितः...वाक्चितः...प्राणचितः... चक्षुश्चितः...श्रोत्रचितः...कर्मचितः...अग्निचितः" इति। तत्र [1]संशयः- किमेते मनश्चिदादयः साम्पादिकत्वेन विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः, आहोस्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवेति विशये क्रियारूपत्वं तावदाह—पूर्वविकल्पः—इत्यादिना। . चित्याग्नित्वेन सम्पादितानामेषां मनश्चिदादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वदेशे क्रतुविध्यभावात् पूर्वत्र "असद्वा इदमग्र आसीत्" इत्यादिनेष्टकचितस्याग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र

---

अन्ये तु प्रज्ञान्तरशब्दमेवमाहुः, 'योऽश्वमेधेन यजते य उ चैनमेवं वेद' इत्यश्वमेधाद्युपासनमश्वमेधादिभ्यः पृथगिति। ततोऽपि शाण्डिल्यविद्यादिपरत्वं युक्तम्, प्रतीतिशैघ्र्यात्। [2]मानसग्रहसामान्येन (मानसग्रहस्तुत्यादिसामान्येन) क्रियाशेषत्वम्; न; पुरुषार्थत्वोपलब्धेरित्येतदर्थपरं **न सामान्यादिति** सूत्रं **परे चापरे** चाहुः। विद्यामयस्य क्रियानुप्रवेशसंभवमात्रे दृष्टान्तत्वान्मानसग्रहस्य, तत्र परिहरणीयाभावादतिदेशहेतोः परिहरणीयत्वाच्च तदयुक्तम्। **न हि लोकापत्तिः** इत्यस्यैवमर्थमहुः, 'असौ वाव लोकोऽग्निः' इत्यत्र न ह्यग्नेर्लोकस्वरूपतापत्तिरिति। ततोऽपि पूर्वदृष्टान्तस्योपपादकत्वं युक्तम् **हिशब्दस्वारस्यात्**। **परेणेत्यत्र ताद्विध्यं** विद्याविधित्वमिति व्याख्यातम्। तस्याप्रकृत(तस्या अप्रकृत ?)त्वेन **तच्छब्दोपस्थाप्यत्वायोगात्** तदयुक्तम् ॥४३॥इति लिङ्गभूयस्त्वाधिकरणम् ॥

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्** ॥ प्रकरणात् बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम्; इह तु प्रकरणस्य बाधकाभावान्मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः। सौत्रनिर्देशानुरोधेन **क्रियारूपाः विद्यारूपाः** इति निर्दिष्टम्। तद्विवरणम्—**क्रियामयक्रत्वनुप्रवेशेन, विद्यामयक्रत्वनुप्रवेशेनेति** च। मनश्चिदादीनां स्वरूपस्य विद्यारूपत्वे हि न विप्रतिपत्तिः। अङ्गद्वारा विद्यारूपत्वे तु विप्रतिपत्तिः। अतः सूत्रे **क्रियाशब्दो** लाक्षणिकः। क्रियामयक्रत्वङ्गतया **क्रियाः**, तत्सम्बन्धिन्य इत्यर्थः। किं मनश्चिदादयः क्रियामयक्रत्वन्वयिनः ? उत विद्यामयक्रत्वन्वयिनः। किमिष्टकचिताग्निद्वारा संनिहितक्रियामयक्रतावेषां विनियोगोऽस्ति, नेति; किं श्रुतिलिङ्गवाक्यैर्विद्यामयक्रतौ विनियोगोऽवगम्यते, उत नेति; किमनुबन्धादिभिरतिदिष्टफलान्वयाच्च विद्याविधिः कल्प्यः, उत नेति। अकल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगायोगात् प्रकरणविनियोगेन क्रियामयक्रत्वन्वयिनः स्युः। विधेः कल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगात् प्रकरणस्य दुर्बलत्वाच्च विद्यामयक्रत्वन्वयिनः स्युः। होमस्थानत्वादग्निशब्देन निर्देशः। न हि होमस्थानमात्रस्य क्रत्वनुप्रवेश इति तद्व्यावृत्त्यर्थं **चित्याग्नित्वेनेत्युक्तम्। सम्पादितानाम्** तथात्वेनानुसंहितानामित्यर्थः। इष्टकचिताग्निः प्रकृतः स्यात्; ततः किं क्रियामयक्रत्वनुप्रवेशस्येत्यत्राह **तस्य**

---

1 उपरि विशये इति पदसत्त्वात् संशय इति पदमिदं न स्यात्। अथवा उपरि, इति विशये इति वाक्यारम्भः। 2 अयं भावप्रकाशिकादर्शितः पाठ एव शांकरानुगुणः।

क्रतुसन्निधानात् तत्प्रकरणगृहीता मनश्चिदादयः तेनेष्टकचितेनाग्निना विकल्प्यमानाः क्रियारूपा एव स्युः। विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते; यथा द्वादशाहे अविवाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्, तथेहापि ॥ ४४ ॥

## अतिदेशाच्च ॥ ३-३-४५ ॥

इतश्चेष्टकचितेनाग्निना मनश्चिदादीनां विकल्पः क्रियारूपत्वं चावगम्यते। "तेषामेकैक एव तावान् यावानसौ पूर्वः" इति पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चिदादिष्वतिदिश्यते। तेन तुल्यकार्यत्वाद्विकल्पः॥ ततश्चेष्टकचितवत् तत्क्रतुनिर्वर्तनेन तदङ्गभूता मनश्चिदादयः क्रियामक्रत्वनुप्रवेशेन क्रियारूपा एवेति ॥ ४५ ॥

एवं प्राप्ते प्रचक्ष्महे—

## विद्यैव तु निर्धारणात् दर्शनाच्च ॥ ३-३-४६ ॥

तुशब्दः पक्षं व्यावर्तयति। यदुक्तं मनश्चिदादयः [क्रियामयक्रत्वनुप्रवेशेन] क्रियारूपा एवेति—नैतदस्ति। विद्यारूपा एवैते। विद्यारूपक्रत्वन्वयिन इत्यर्थः। कुतः। निर्धारणात् दर्शनाच्च। निर्धारणं तावत् "ते हैते विद्याचित एव। विद्यया हैवैत एवंविदश्चिता भवन्ति" इति। वाङ्मनश्चक्षुरादिव्यापाराणाम् इष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि, "विद्याचित एव", "विद्यया हैवैते" इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थमिति निश्चीयते। दृश्यते चाल्लैवैषां शेषी विद्यारूपः क्रतुः, "ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन्। यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव

---

चेति। क्रतुसंनिधानं बुद्धिस्थत्वम्। इष्टकचिताग्न्यङ्गकत्वेन मनश्चिदादिनिरपेक्षत्वात् नैषां क्रियामयक्रत्वनुप्रवेश इत्यत्राह **विकल्प्यमाना** इति। विद्यारूपाणां क्रियामयक्रत्वनुप्रवेशः कथमित्यत्राह **विद्यारूपाणामपी**ति। **ग्रहः** [1]पात्रविशेषः। तस्य विद्यारूपत्वमुपपादयति **यथे**ति। [2]**विवाक्ये**—विगतवाक्ये। यद्वा **अविवाक्ये**—विविधवाक्यरहिते। [2]मनोनिष्पाद्योपयोगित्वेन ग्रहस्य मानसत्वम्; न हि स्वरूपेण विद्यते ॥ ४४ ॥

**अतिदेशाच्च** ॥ **वीर्यं** कार्यकरत्वसामर्थ्यम्। कमुपकारं कुर्वन्तो मनश्चिदादयोऽङ्गानीत्यत्राह **ततश्चे**ति। **एवं प्राप्त** इति। **विद्यैव तु निर्धारणाद्दर्शनाच्च** ॥ **विद्यारूपक्रत्वन्वयिन** इति। सूत्रे विद्याशब्दो लाक्षणिक इत्यर्थः। विद्याचित एवेत्येतत् श्रुतिरेवोपपादयति **विद्यया हैवैत** इति। **दर्शनाच्चे**ति सूत्रखण्डं व्याचष्टे **दृश्यतेचे**त्यादिना। **मनसैष्वि**ति। **एषु**—मनश्चिदादिषु। **यत् किञ्च** यज्ञे कर्म क्रियते—प्रधानभूतं कर्म क्रियते। **यत् किञ्च यज्ञीयं कर्म**—अङ्गभूतं कर्मेत्यर्थः।

---

1 सोमरसाधारपात्रं ग्रहश्चमसश्चेति द्विविधं प्रसिद्धम्। तादृशग्रहत्वकल्पना मानसग्रहस्थले पृथिव्याः। 2 अविवाक्यमित्येव दशमस्याह्नो नाम। तदापि विविधवाक्यराहित्यरूपार्थस्यैव वक्तव्यत्वात् इह भाष्ये द्वादशाहेविवाक्ये इत्यत्र यौगिकतया विवाक्य इत्यपि छेदः अर्थस्पष्टत्वाय स्यादित्याशयः।

2 मनो...भक्षणत्वेन विद्यारूपस्येतिभाष्यस्वारस्यं दर्शयति- मन इति।

तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत" इति । इष्टकचितेष्वग्निषु यत्क्रियामयं यज्ञीयं कर्म क्रियते तत् मनोनिर्वर्त्येषु मनश्चिदाद्यग्निषु मनोमयमेवाक्रियतेति वचनात् क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥४६॥

नन्वत्र विधिपदाश्रवणात् फलसंबन्धाप्रतीतेश्चेष्टकचिताग्न्युपस्थापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्येत । नेत्याह—

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३-३-४७ ॥**

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते । श्रुतिस्तावत् "ते हैते विद्याचित एव" इति । तां विवृणोति, "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति । विद्यया—विद्यामयेन क्रतुना संबद्धा मनश्चिदादयश्चिता भवन्तीत्यर्थः । "तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इति लिङ्गम् । वाक्यं च "एवंविदे चिन्वन्ति" इति । समभिव्याहारो वाक्यम् । एवंविदे—विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि चिन्वन्तीत्यर्थः । सर्वभूतकर्तृकं सर्वकालव्यापि चयनं मनसा सम्पादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशासम्भवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ॥ ४७ ॥

यच्चेदमुक्तं—विधिप्रत्ययाश्रवणात् फलसंबन्धाप्रतीतेश्च क्रियामयात् क्रतोरन्योऽत्र विद्यामयः क्रतुर्न संभवति—इति, तत्राह—

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ३-३-४८ ॥**

इष्टकचिताग्न्यन्विनः क्रियामयात्क्रतोर्विद्यामयोऽयं क्रतुः पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः, "मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन्" इत्यादिना प्रतिपादिताः । आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुतिलिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । प्रज्ञान्तरपृथक्त्ववत्—यथा प्रज्ञान्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते ; एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते । दृष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः । तदुक्तम्, "वचनानि त्वपूर्वत्वात्" इति । फलं च, "तेषामेकैक एव

---

अनन्तरसूत्रशङ्कामाह **नन्विति** । विधिपदाश्रवणेऽपि फलसंबन्धे सति विधिः कल्प्यते ; सोऽपि नास्तीत्याह **फलसंबन्धाप्रतीतेश्चेति** ।

**श्रुत्यादिबलीयस्त्वाच्च न बाधः** ॥ **विद्ययेति** प्रयोजनतया हेतुः । विद्यामयक्रतुसंबन्धेन तन्निर्वर्तनार्थमित्यर्थः । वाक्यत्वमुपपादयति **समभिव्याहार** इति । यथोक्तविद्यामयक्रतुमत्पुरुषस्य कृते हि एतानग्नीन् सर्वभूतानि चिन्वन्ति इत्यर्थः । लिङ्गत्वमुपपादयति **सर्वभूतेति** । सर्वभूतकर्तृकत्वेन सर्वकालव्यापित्वेन च मनसाऽनुसंहितस्य चयनस्य परिमितकालकर्तृकक्रियामयेष्टकचिततुल्यकार्यतया क्रत्वनुप्रवेशासंभवो विद्यामयक्रत्वनुप्रवेशे लिङ्गमित्यर्थः । विद्यामयः क्रतुः सर्वकालवर्तित्वेन सर्वभूतकर्तृकत्वेन चानुसन्धीयते । अतस्तादृशं चयनं तादृशक्रत्वन्वयीति भावः ॥ ४७ ॥

अनन्तरसूत्रमवतारयितुं पूर्वमुक्तं पूर्वपक्षहेतुमनुवदति **यच्चेदमिति** । **अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्** ॥ **दृष्टश्चानुवादसरूपेष्विति** । फलसंबन्धश्रवणाद्विधिकल्पनं श्रुतहानप्रसङ्गभयाद्धि क्रियते । तदत्रापि तुल्यम् । सानुबन्धैः श्रुत्यादिभिर्विद्यामयक्रतोरवगतत्वात् श्रुतहान-

तावान् यावानसौ पूर्वः" इत्यतिदेशात् स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत् फलम्, तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥

यत्पुनरतिदेशेन तुल्यकार्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तम्, तत्राह—

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ३-३-४९ ॥**

नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यम्, येन क्रियामयक्रत्वनुप्रवेश एषां स्यात्। यस्मात्कस्माच्चित् सामान्यमात्रादतिदेशोपलब्धेः। उपलभ्यते हि, "स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः" इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः। न हि तत्र मण्डलपुरुषस्य मृत्युवत् तल्लोकापत्तिः—तद्देशप्राप्तिरपि भवति। एवमिहापि मनश्चिदादीनामिष्टकचिताग्निवद्भावातिदेशमात्रेणेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम्। अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलम्, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥ ४९ ॥

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ३-३-५० ॥**

परेण च ब्राह्मणेन अस्यापि मनश्चिदाद्यभिधायिनः शब्दस्य ताद्विध्यम्—तद्विधत्वम्, विद्यामयप्रतिपादित्वमवगम्यते। परेण हि ब्राह्मणेन, "अयं वाव लोक एषोऽग्निः चितः। तस्याप एव परिश्रितः" इत्यादिना, "स यो हैतदेवं वेद लोकम्पृणामेवम्भूतमेतत्सर्वमभिसम्पद्यते" इति पृथक्फला विद्यैव विधीयते। तथा वैश्वानरविद्यादौ च विद्यैव विधीयते। अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति ॥ एवं तर्हि विद्यामया मनश्चिदादयो बृहदारण्यकेऽनुबद्धव्याः किमर्थमिहानुबध्यन्ते ; तत्रोच्यते—भूयस्त्वात्त्वनुबन्धः—इति। मनश्चिदादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात् तत्सन्निधाविहानुबन्धः कृतः ॥ ५० ॥

इति पूर्वविकल्पाधिकरणम् ॥

---

प्रसङ्गपरिहारार्थं विधिः कल्प्यत इति भावः। किञ्च, अधिकं[1] फलश्रवणमप्यस्तीत्याह—**फलं चेति**। **इष्टकचितस्याग्नेर्यत्फलमिति**। फलकामनया कृतं चेत्, तत्फलावाप्तिः ; अन्यथा चेत्, मुक्तिः फलमिति भावः ॥ ४८ ॥ अनन्तरसूत्रशङ्कामाह **यत्पुनरिति**।

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ अवान्तरव्यापारस्य**। क्रियामयक्रत्वनुप्रवेशस्येत्यर्थः। **तल्लोकापत्तिरिति** व्याख्येयं पदम्। **तच्छब्दः** पूरकतयाऽध्याहृतः। तद्व्याचष्टे **तद्देशप्राप्तिरिति**। **अग्निवद्भावातिदेशमात्रेण**। **अग्निवद्भावः**—अग्नितुल्यत्वम्। **इष्टकचिताग्निदेशरूपेति**। **देशः** आश्रयः। **अङ्गस्याश्रयोऽङ्गी** ; इष्टकचिताग्न्यङ्गिरूपेत्यर्थः। ४९ ॥

एवं प्रकरणादपि प्रबलैः श्रुत्यादिभिर्विद्यामयक्रत्वङ्गत्वमुक्तम्, अथ प्रकरणेनाप्ययमर्थ उपपाद्यते **परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः** ॥ **अयं लोकः—भूः**। **आपः—**समुद्राः **परिश्रिताः—**परिस्तरणानि। **एतत् लोकम्पृणाम्—**'पॄ पालनपूरणयोः'। पूरयन्तीं(न्तं)भुवम्[1]। **एतदेवं वेद**। लिङ्गव्यत्ययः। एतमग्निं वेदेत्यर्थः ॥ ५० ॥

---

[1] फलश्रवणमपि पार्थक्येऽधिकं साधकमिति भावः।

[1] पूरयन्तीमित्यत्र इष्टकामिति शेषः। लोकम्पृणाशब्दः छिद्रम्पृणाशब्दवत् इष्टकापरः। सा चयनप्रदेशपूरिका। तस्मात्, भुवं पूरयन्तीमित्यन्वयः। अत्र भूततृतीयाग्निलोकम्पृणेष्टकादृष्टिर्विधीयते। पूरयन्तमिति पाठेऽग्निविशेषणम्। तेन अग्नौ दृष्ट्युपयोगिलोकम्पृणासादृश्यप्रदर्शनम्।

## शरीरेभावाधिकरणम् ३-३-२१

### एक आत्मनः शरीरे भावात् ॥ ३-३-५१ ॥

सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम्, "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इति । वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानम्, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्तेहामुत्र सञ्चारक्षमोऽनुसन्धेयः, उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः । किं युक्तम् ? । ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते । कुतः ? । अस्योपासकस्यात्मनः शरीरे भावात् । आत्मनः शरीरे वर्तमानस्य तादृशमेव रूपम् । तावतैवानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च । न हि कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपम्, तादृशं रूपं साधनानुष्ठानदशायामनुसंधातव्यम्, तावतैव साधनानुष्ठानतत्फलयोः सिद्धेरतिरिक्तानुसन्धाने प्रयोजनाभावात् । तदविशेषादिहापि तथैव । ननु चात्र, "यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति विशेषवचनादपहतपाप्मत्वाद्याकार एवानुसन्धातव्य इत्यवगम्यते ॥ नैवम् ; "तं यथा यथोपासते" इत्युपास्यविषयत्वात् तस्य ॥ ५१ ॥

एवं प्राप्ते प्रचक्ष्महे—

### व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ३-३-५२ ॥

न त्वेतदस्ति, यत् ज्ञातृत्वाद्याकार एवानुसन्धेय इति; अस्यात्मनः संसारदशायाः मोक्ष-

---

**एक आत्मनः शरीरे भावात्** ॥ पूर्वाधिकरणं प्रासङ्गिकम् । अतस्तत्पूर्वाधिकरणेन सङ्गतिः । तत्र सर्वविद्यासु भगवत एवोपास्यत्वमुक्तम् ; तथा प्रत्यगात्माऽप्यनुसन्धेय इति सङ्गतिः **सर्वास्वित्यादिना** सूचिता । **त्रयाणा**मित्यादिसूत्रे त्रयाणामिति पदमुपायोपेयोपेतृपरं व्याख्यातं **भाष्ये** ; **दीपसारयो**रुपास्योपासकोपासनपरं व्याख्यातम् ; [1]एतदभिप्रायेणाह **सर्वास्विति** । सिद्धान्ते प्रत्यगात्मन उपास्यकोटिनिक्षेपस्य वक्ष्यमाणत्वात् तदुपयोगित्वेनाह - **वक्ष्यति चेति** । सूत्रद्वयोक्तार्थोपजीवनेनेदमधिकरणं प्रवर्तत इत्यर्थः । परमात्मशरीरत्वेनानुसन्धेयः प्रत्यगात्मा किं ज्ञातृत्वकर्तृत्वभोक्तृत्वमात्राकारोऽनुसन्धेयः, उतापहतपाप्मत्वाद्याकारः ; किं यथाक्रतुरिति यथोपासनप्राप्तिवचनं परविषयम्, उत प्रत्यगात्मविषयमपि भवतीति ; 'तं यथा यथोपासते' इति तच्छब्दः किं परमात्ममात्रपरः, उत जीवशरीरकपमात्मपर इति । परमात्ममात्रपरत्वे यथोपासनप्राप्तिवचनस्य परविषयत्वात् ज्ञातृत्वादिमात्राकारेण प्रत्यगात्माऽनुसंधेयः । जीवशरीरकपरमात्मपरत्वे, यथाक्रतुरिति श्रुतेर्विशेषणभूतजीवांशविषयत्वस्यापि संभवात् अपहतपाप्मत्वाद्याकारोऽनुसन्धेयः स्यात् । शरीरस्थस्य रूपं तादृशमस्तु ; ततः किं तथाऽनुसन्धानस्येत्यत्राह **तावतैवेति** । फलसिद्ध्युपपत्तिं दर्शयति –**नहीति** । तावता फलसिद्ध्यनुपपत्तिमुखेन चोदयति **ननु चेति** । विषयव्यवस्थया परिहरति **नैवमिति** ॥

**एवं प्राप्त** इति । **व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्** ॥ **व्यतिरेक** इत्युक्ते धर्ममात्र-

---

1 एवं शब्दभेदेऽप्यर्थैक्यमेव । अतः अविशेषाशयेनेत्यर्थः ।

दशायां यो व्यतिरेकः, सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः। अस्य मोक्षदशायां यादृशं रूपम्, तादृग्रूप[1] एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः । कुतः । तद्भावभावित्वात् तद्रूपापत्तेः । "यथाक्रतुरस्मिंल्लोके पुरुषो भवति", "तथेतः प्रेत्य भवति तं तथा यथोपासते तथै[दे]व भवति" इति यथोपासनमेव[2] हि प्राप्तिः श्रूयते। न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात् । अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य तथारूपमेव प्राप्यमित्युक्तं भवति । अत एव, "एवंक्रतुर्हामुं लोकं प्रेत्याभिसंभवति" इत्युच्यते। तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः । उपलब्धिवत्—ब्रह्मोपलब्धिवत् । यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया, तथाऽऽत्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयेत्यर्थः । कर्मसु आत्मस्वरूपानुसंधानं न कर्माङ्गम् । "यजेत स्वर्गकामः" इति कर्मानुष्ठानमेव हि फलाय चोद्यते । देहातिरिक्तज्ञातृत्वाद्याकारात्माद्यगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम् ॥ ५२ ॥ इति शरीरेभावाधिकरणम् ॥

---

स्यानुसन्धेयत्वशङ्कानिवृत्त्यर्थमाह **अस्य मोक्षदशायामिति** । **तद्भावभावित्वात् तद्रूपापत्तेरिति** । अपहतपाप्मत्वादिरूपापत्तेः तथाऽनुसन्धानसद्भावभावित्वादित्यर्थः । **न चेत्यादि** । यथोपासनफलश्रुतिर्न विशेष्यमात्रविषया अपि तु विशिष्टविषयेत्यर्थः । फलितमर्थमाह **अत इति** । तस्मात् ब्रह्मगुणानामिव शुद्धस्वरूपस्यापि ब्रह्मविशेषणत्वात् तदनुसन्धेयमित्यर्थः । 'तं यथा यथोपासते' इत्यत्र तच्छब्दो विशिष्टविषय इति भावः । **अत एवेति** । प्राप्याकारस्यानुसन्धेयत्वादेव हि प्राप्यचिन्तनमुच्यत इत्यर्थः ।

परे चापरे च देहात्मभेदसमर्थनपरमधिकरणं व्याचक्षते । तदयुक्तम्; पादसङ्गत्यभावात् । उपासनेषु गुणोपसंहारानुपसंहारचिन्तनं हि पादकृत्यम् । प्रासङ्गिकचिन्तनमपि शास्त्रारम्भे करणीयम्; देहस्यैवात्मत्वे शास्त्रस्यानारम्भणीयत्वात् । ये पुनः साधनचतुष्टयं पूर्ववृत्तं वदन्ति, तेषाम् **अथातो ब्रह्मजिज्ञासे**त्यस्मात्पूर्वमेव निवेशनीयम् । देहोत्तीर्णनित्यात्मविवेकस्य नित्यानित्यवस्तुविवेकान्तर्गतत्वात्; इहामुत्रफलभोगविरागमुमुक्षुत्वयोस्तन्मूलत्वाच्च ॥ ऐकशास्त्र्यं वदतामपि धर्मजिज्ञासायाः पूर्वमेव देहात्मविवेकः प्रसजेदिति चेत्—न; माणवकहितैषिभिः पित्रादिभिरध्ययने कारिते सति आपातप्रतीत्यवगतविलक्षणस्वर्गादिफलरागात् नित्यानित्यसंदेहेऽपि तदुपपत्त्यनुपपत्तिनिरूपणाय स्वयमेव शास्त्रप्रवृत्त्युपपत्तेर्देहव्यतिरेकनिश्चयानपेक्षत्वात् । प्रवृत्तस्य च देहातिरेकनिश्चयो भवत्येव । 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इत्यत्र लोकान्तरप्राप्तुरात्मनो देहातिरेकस्यापि निरूपितत्वात् । 'शारीरके वक्ष्यामः' इति **वृत्तिकारोक्तिस्तु** न देहातिरेकमात्राभिप्राया; किन्तु जडत्वज्ञानात्मकत्वस्थूलत्वविभुत्वाणुत्वाद्याकारविषया मन्तव्या ।

**अन्ये तु**—ब्रह्माहमस्मीत्युपासने स्थूलत्वाद्याकारोऽहं ब्रह्मेत्येवमनुसन्धेयम्, मानसप्रतिपत्तेः दृष्टसजातीयाकाराविकल्पितविषयत्वनियमात् स्वर्णमात्रमित्युक्तेऽपि कुण्डलत्रिकोणचतुरश्राद्याकारेण

---

1 तादृग्रूप एवेत्येवकारेण मोक्षदशाननुवर्तिरूपव्यवच्छेदः ।

2 यथोपासनमेव—न तु उपासितरूपं विहाय ।

### अङ्गावबद्धाधिकरणम् ३-३-२२

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३-३-५३ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत", "लोकेषु पञ्चविधं सामोपासीत", "उक्थमुक्थमिति वै प्रजा वदन्ति । तदिदमेवोक्थमियमेव पृथिवी", "अयं वा व लोक एषोऽग्निश्चितः" इत्येवमाद्याः

---

विना स्वर्णप्रतीत्यनुपपत्तेः नीरूपं ब्रह्मेत्युक्तेऽपि दीपादिवन्नीलपीताद्यवच्छेदेन विना प्रतीत्यनुपपत्तेश्च, स्थूलत्वाद्याकारेण विना आत्मप्रतिपत्तेर्विधातुमशक्यत्वादिति पूर्वपक्षं कृत्वा—देहातिरेकः प्रतिपत्तव्यः, "तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकाम्" इत्यादिशास्त्रप्रवृत्तेः शरीरव्यतिरेकभावभावित्वात् । न च निराकारप्रतीत्यनुपपत्तिः । सन्तम् असन्तं वा कञ्चन नीलपीताद्याकारमवर्जनीयं मनः स्वयमेव ग्रहीष्यति । न च मिथ्याप्रतिपत्तिर्दोषः ; अन्यथा तत्प्रतीत्यनुपपत्तेः । 'अङ्गुष्ठमात्रो रवितुल्यरूपः' इत्यादिराकारश्च शास्त्रोपदिष्टः । परस्य च माहारजनाद्याकारोपदेशात् जीवस्यापि तुल्यस्वभावत्वात् तादात्म्यध्यानसौकर्याय तथाऽनुसन्धेयः सम्भूत्युपासनेषु । विनाशोपासनेष्वस्तित्वमुभयोराकारः, "अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः" इति श्रवणात् । अतो देहातिरिक्त आत्मा, ब्रह्माहमस्मीति प्रतिपत्तव्य इति सिद्धान्तयन्ति ।

तदयुक्तम्; स्थूलत्वादिविरहेणापि सुखादिविशिष्टात्मावभासदर्शनादशक्यविधानत्वाप्रसक्तेः ॥ ननु सुखदुःखादयोऽप्यौपाधिकाः, निरुपाधिकस्वरूपं दुरनुसंधानमिति चेत्—सत्यम्; तत् कदेति निरूपणीयम्। शुभाश्रयध्यानेन मनःपरिशोधनात् पूर्वं हि तत् । तदा च अहं ब्रह्मेत्युपासनमविहितम्, अशक्यत्वादेव । यदा तु शुभाश्रयसंशीलनपरिशोधितमुपदेशसहकृतं च मनः, तदा निरुपाधिकस्वरूपानुसन्धानक्षममिति नाशक्यविधिः । अत एव सिद्धान्ते मिथ्याभूतस्य यस्य कस्यचिदाकारस्यावलम्बनेऽपि न दोष इति कल्पनमप्ययुक्तम्; नीलपीताद्याकारेणात्मानुसन्धानं परिशुद्धात्मसाक्षात्कारस्य न दृष्टोपकारकम्, विरुद्धत्वात् । अदृष्टोपकारकत्वं तु निष्प्रमाणकम् । रवितुल्यरूपतोक्तिः प्रकाशस्वरूपताभिप्राया; "यथा प्रकाशयत्येकः" इति व्याख्यातत्वात् । यदि यत्किञ्चिन्नीलपीताद्याकारावलम्बनेन चिन्त्यमिति सिद्धान्तः, तर्हि पूर्वपक्षसिद्धान्तयोरवैषम्यमेव स्यात् ॥ महारजनाद्याकारेण तादात्म्यानुसन्धानमप्ययुक्तम्; तस्येश्वराकारत्वात् । घटशरावयोरिव, तुल्यरूपयोर्देवदत्तयज्ञदत्तयोरिव च जीवेश्वरयोस्तादात्म्यानुपपत्तेः ॥ 'सम्भूत्युपासने [एवम् ?]; विनाशोपासने चास्तित्वमुभययोराकारः' इत्यपि दुरुक्तम्, जीवब्रह्मतादात्म्यज्ञानस्य जडजीव(जीवघट)तादात्म्यानुसन्धानस्य च वैषम्याभावत् । असाधारणाकारानुसन्धाने हि वैषम्यसिद्धिः । सत्ता च सर्वसाधारणी । सदस्मीत्यनुसन्धाने च शास्त्रवैयर्थ्यम्; न ह्यसदस्मीति कश्चिदात्मानं जानाति । असाधारणाकारानुसंधाने च भेद एवानुसंहितः स्यात्, न तु तादात्म्यम् ॥ असाधारणाकारप्रतिपन्नयोर्जीवपरयोः साधारणाकारानुसन्धानमेव तादात्म्यप्रतिपत्तिरिति चेत्—तर्हि खण्डो मुण्डो गौरितिवदेकजातीयत्वमेवानुसंहितं स्यात् । ततश्च तादात्म्यविधानवैयर्थ्यम् । न हि साधारणाकारविधुरं किञ्चित् द्रव्यमस्ति । 'अस्तीत्योवोपलब्धव्यः' इति श्रुतिस्तु जन्मादिभावविकारराहित्यविषया ; न तु सन्मात्रं ब्रह्मेत्येवंपरा । अतो यथाभाष्यमेवाधिकरणं युक्तम् ॥ ५२ ॥ इति शरीरेभावाधिकरणम् ॥

क्रत्वङ्गाश्रया उपासना भवन्ति। ताः किं यासु शाखासु श्रूयन्ते, तास्वेव नियताः, उत सर्वासु शाखासु उद्गीथादिषु संबध्यन्ते? इति विचारः। सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्र तत्र व्यवतिष्ठेरन्निति युक्ता शङ्का। किं युक्तम्। व्यवतिष्ठेरन्निति। कुतः। "उद्गीथमुपासीत" इति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथस्य सन्निधानात् तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति—एवमाद्याः तास्वेव शाखासु व्यवतिष्ठेरन्निति।

एवं प्राप्ते प्रचक्ष्महे—अङ्गावबद्धास्त्विति। तुशब्दः पक्षं व्यावर्तयति। न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्; अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः। हिशब्दो हेतौ। यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धाः, तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन्। यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते—तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद्व्यवस्थायां प्रमाणमस्ति। सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः। अतः सर्वासु शाखास्वेकस्य क्रतोः संनिधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि संनिहिता इति नैकस्य संनिधिविशेषोऽस्तीति न व्यवस्था ॥ ५३ ॥

---

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** ॥ यत्र यत्र ब्रह्मण उपास्यत्वम्, तत्र तत्र शुद्धजीवस्योपास्यत्वमुक्तम्। एवं यत्रयत्र शाखासूद्गीथाद्यनुप्रवेशः, तत्र तत्र सर्वत्र उद्गीथाद्युपासनानुप्रवेशोऽस्ति, न वेति शङ्कया सङ्गतिः। उद्गीथाद्युपासनानि किं प्रतिशाखं व्यवतिष्ठेरन्, उत नेति; 'उद्गीथमुपासीत' इत्युद्गीथशब्दः किमुद्गीथमात्रे वर्तते, उत स्वरादिभेदभिन्नोद्गीथे; किं स्वरादिविशेषविशिष्टोद्गीथव्यक्तेः संनिधिः, उत सर्वोद्गीथव्यक्तीनां संनिधिरिति। व्यक्तिविशेषस्य संनिधिश्चेत्, तस्यैवोद्गीथशब्दवाच्यत्वात् तत्तच्छाखाविशेषेषूपासनव्यवस्था। सर्वव्यक्तिसंनिधिश्चेत्—उद्गीथशब्दस्य उद्गीथमात्रवाचित्वात् तद्विषयोपासनानि न व्यवतिष्ठन्त इति। अधिकरणारम्भाक्षेपशङ्कां परिहरति—**सर्ववेदान्तेति**। यथा कर्म चोपासनं च सर्वशाखास्वेकम्, तथोद्गीथस्याप्येकत्वात् सर्वत्रोद्गीथानुसारेण प्राप्नुवन्त्युपासनानीत्यधिकरणारम्भाक्षेपः। उद्गीथादीनां स्वरभेदेन व्यक्तिभेदात् तत्तत्स्वरविशेषविशिष्टव्यक्तिविषया उपासनाः, उत सर्वोद्गीथव्यक्तिविषयाः इति संशयः स्यादित्याक्षेपसमाधिरित्यर्थः। **तस्मिन्नेव विशेष** इति। लोके गामानयेत्यादिषु सामान्यशब्दानां संनिहितविशेषपर्यन्तत्वदर्शनादिति भावः।

**एवं प्राप्त** इति। **यस्मात् श्रुत्यैवोद्गीथाद्यङ्गमात्र**विषयाः प्रतीयन्ते, **तस्मा**दित्यर्थः। पूर्वपक्षयुक्तिमनूद्य दूषयति **यद्यपीति**। **न क्वचिद् व्यवस्थायां प्रमाणमस्तीति**। गामानयेत्यादिषु सर्वव्यक्तीनामानयनायोग्यत्वं व्यक्तिविशेषे शब्दस्य व्यवस्थापकम्, न त्वसंनिधिः; सामान्येन व्यक्तीनां धीस्थत्वात्। धीस्थत्वं हि सन्निधिः। अत्र तु तादृशायोग्यत्वादिव्यवस्थापकाभावात् शब्दस्य स्वतःप्राप्तं सर्वव्यक्तिविषयत्वं तिष्ठतीति भावः। **संनिहिताः**—बुद्धिस्थाः। अनेन संनिधेर्व्यवस्थापकत्वमपास्तम्; निरङ्कुशया शब्दशक्त्या सर्वव्यक्तीनां बुद्धिस्थत्वात्। अथार्थस्वभावादपि सर्वोद्गीथव्यक्तिसंनिधिमाह **सर्वशाखाप्रत्ययेति**। अङ्गिनः संनिधानादङ्गान्यपि संनिहितानि भवन्तीत्यर्थः ॥ ५३ ॥

**मन्त्रादिवद्वाऽविरोधः ॥ ३-३-५४ ॥**

वाशब्दश्चार्थे। आदिशब्देन जातिगुणसङ्ख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते। यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते, तद्वदिहाप्यविरोधः ॥ ५४ ॥ इति अङ्गावबद्धाधिकरणम्।

भूमज्यायस्त्वाधिकरणम् ३-३-२३

**भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३-३-५५ ॥**

"प्राचीनशाल औपमन्यवः" इत्यारभ्य वैश्वानरविद्या आम्नाता। तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः। तत्र च द्यौर्मूर्द्धा, आदित्यश्चक्षुर्वायुः प्राणः आकाशः सन्देहः=मध्यकाय इत्यर्थः--आपो वस्तिः, पृथिवी पादावित्यवयवविशेषाः। तत्र संशयः--किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यम्, उत व्यस्तस्य समस्तस्य च, अथ समस्तस्यैवेति। किं युक्तम्। व्यस्तस्येति। कुतः। उपक्रमे व्यस्तोपासनोपदेशात्। तथा ह्युपदिश्यते। औपमन्यवादयः किलोद्दालकषष्ठाः कैकयमश्वपतिमुपसद्य, "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पप्रच्छुः। स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीन् उक्तवद्भ्यो मूर्द्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं चोक्तवान्, "अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते ; मूर्द्धा त्वेष आत्मनः" इति। "एष वै सुतेजा आत्मा वैश्वानरः" इत्यादिना तेषुतेषूपासनेषूपास्यस्य वैश्वानरत्वं

---

मन्त्रादिवद्वाऽविरोधः ॥ वेदान्तरोत्पन्नानाम् 'अग्नेर्वै होत्रं वेतु' ([1]अग्ने वेर्होत्रं वेः ?) इत्यादिमन्त्राणां वेदान्तरेऽपि परिग्रहो दृष्टः। बह्वृचपठितस्य, 'यो जात एव प्रथमो मनस्वान्' इति सूक्तस्य, 'अध्वर्यवे सजनीयं शस्यम्' इति विनियोगो दृष्टः। 'अजोऽग्नीषोमीयः' इत्युपदिष्टा जातिः तदुपदेशरहिते शाखाभेदे, 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्याश्रीयते। एवं गुणादीनां विनियोगो द्रष्टव्यः। प्रकरणाम्नानमात्रेणान्यत्र प्रवेशाभावे मन्त्रादीनामपि शाखान्तरे प्रवेशो न स्यादित्यतिप्रसङ्गरूपस्तर्कोऽभिप्रेतः। अविरोधः—शाखाविशेषस्थस्यान्यत्र प्रवेशे विरोधाभावः॥ मन्त्रादीनां श्रुत्यादिभिर्विनियोगादविरोधश्चेत्, इहाप्युद्गीथपदश्रुत्या विनियोगादविरोधः इत्यभिप्रायः। एवं सर्वशाखासु उद्गीथानुवृत्त्या सर्वशाखिनामुपासनेष्वधिकारः फलम् ॥ ५४ ॥ इति अङ्गावबद्धाधिकरणम् ॥

**भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति** ॥ पूर्वाधिकरणे उद्गीथादिकं प्रस्तुतम्। तत्र सामावयवभूतोद्गीथादेः समस्तस्य व्यस्तस्य चोपासनं श्रुतिसिद्धम्। एवं वैश्वानरविद्यायां किं समस्तस्योपासनं कार्यम्, उत व्यस्तस्य, उतोभयस्येति शङ्कया सङ्गतिः। स्वर्लोकादिषु किं किमवयवभूतमित्यत्राह **तत्र चेति**। किं वैश्वानरविद्यायां व्यस्तोपासनविधिः, उत व्यस्तस्य समस्तस्य च, उत समस्तस्यैव; किं प्रत्यवयवं फलश्रवणात्, 'यस्त्वेतमेवम्' इत्युपासनसमुदायानुवादः--उत व्यस्ते समस्ते च फलश्रवणादुभयत्र विधिः कल्प्यः-उत प्रत्येकफलश्रवणमर्थवादः। आद्ये व्यस्तोपासनविधिः। द्वितीये उभयविधिः। तृतीये समस्तस्यैव विधिः। **अत्त्यन्नम्**....। अन्नमत्ति, प्रियं पश्यति, अस्य कुले ब्रह्मवर्चसं भवतीत्यन्वयः। वैश्वानरोपासनं

---

1 इदम् अक्षरध्यधिकरणोक्तम्।

चाह। अतो व्यस्तस्यैवोपासनं कर्तव्यम् । परत्र "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति, द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहार इत्यवगन्तव्यम् ॥ अपर आह--एवमेव समस्तस्याप्युपासनं कार्यमिति ; पृथक्फलनिर्देशात्, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति । न चैतावता वाक्यभेदः । यथा—भूमविद्योपक्रमे नामाद्युपासनं तत्फलं चाभिधाय, "एष तु वा अतिवदति यः सत्येनातिवदति" इत्यादिना भूमविद्यामुपदिश्य, "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति तत्फलं च व्यपदिशति ; तत्र—भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्फलं चाङ्गीक्रियते--तथेहापीति ।

एवं प्राप्तेऽभिधीयते--भूम्नः ज्यायस्त्वमिति । भूम्नः--विपुलस्य--समस्तस्यैव ज्यायस्त्वं--प्रामाणिकत्वमित्यर्थः । एकवाक्यतावगतेः । तथा हि, "प्राचीनशाल औपमन्यवः" इत्युपक्रम्य "उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इति वैश्वानरात्मबुभुत्सया औपमन्यवादयः पञ्च महर्षयः तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानाः तेन च सहाश्वपतिं कैकयं वैश्वानरात्मवेदिनमुपसङ्गम्य, "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पृष्ट्वा तत्सकाशात् परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्मगतान्नभूतब्रह्मानुभवमवगतवन्तः इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते । एवमेकवाक्यत्वेऽवगते सति अवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च समस्तोपासने [ नतत्फले ? ] कदेशानुवादमात्रमिति निश्चीयते।

क्रतुवत्-यथा "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहितस्यैव क्रतोरेकदेशाः, "यदष्टाकपालो भवति" इत्यादिभिरनूद्यन्ते । तथा समस्तोपासनमेव न्याय्यम्, न व्यस्तो-

---

द्युपक्रान्तम्; तत् कथं मूर्द्धमात्रोपासनोपदेश इत्यत्राह वैश्वानरत्वं चाहेति । [1]एतमेवमात्मानं वैश्वानरमुपास्ते इत्यादिष्वित्यर्थः । व्यस्तोपासनं विवक्षितं चेत् , कथं समस्तस्योपसंहारः इत्यत्राह परत्रेति । वैश्वानर उक्तस्य । वैश्वानरविषयत्वेनोक्तस्येत्यर्थः । अपर आहेति । पृथक्फलनिर्देशात्—व्यस्तोपासनफलात् पृथक् फलनिर्देशात् । वाक्यभेदः महावाक्यभेदः । अनेकार्थप्रतिपादने सत्यपि वाक्यैकत्वे दृष्टान्तमाह यथा भूमेति । समस्तोपासनं प्रधानप्रतिपाद्यम् , व्यस्तोपासनं प्रासङ्गिकमिति न विरोध इति भावः । एवं प्राप्त इति । भूमशब्दो धर्मिपरः । वैश्वानरात्मजिज्ञासून् प्रति द्युपृथिव्याद्यवयवविशिष्टविषयोपासनतत्फलोपदेशादेकवाक्यत्वमवगतम् । अनुवादमात्रमिति । समुदायोपासनतत्फले विवक्षिते ; तदन्तर्गततदेकदेशोपासनतदेकदेशफलकथनमनुवाद इत्यर्थः । समस्तोपासनफले सर्वदेशसर्वकालवर्तिसमस्तभोग्यजातं ह्यन्तर्गतमिति दर्शयितुं फलैकदेशानुवादः कृतः; न तु तथाऽनुष्ठेयमिति ज्ञापयितुम् ;

---

1 श्रुतौ एषवैसुतेजा इति वाक्यं पूर्वम्, एतमेवमात्मानमिति वाक्यं पश्चात । अतः प्रथमत्वात् वैश्वानरत्वविधायकत्वप्रतीतेश्च भाष्ये एषवै इत्येव दर्शितम् । टीकायां तु पाश्चात्यमपि पूर्वभाष्योदाहृतमितीदमपि भवति प्रमाणमित्याशयेन एतद्ग्रहणम् । भावप्रकाशिकायामेतद्वाक्यप्रक्षेपाप्रक्षेपविचारोऽपि द्रष्टव्यः । भाष्ये आदिपदेन ईदृशवाक्यग्रहणमपि टीका अभिप्रेतीति स्थितगतिः । भाष्ये 'आत्मन इति' इत्यत्र वाक्यच्छेदः ; एषवै इति वाक्यान्तरमित्येव टीकयाऽप्येष्टव्यम् ।

पासनम्; तथा हि दर्शयतीयं श्रुतिः व्यस्तोपासनेऽनर्थं ब्रुवती "मूर्द्धा ते व्यपतिष्यत् यन्मां नागमिष्यः" इति, "अन्धोऽभविष्यो यन्मां नागमिष्यः" इत्यादिका । अत इदमप्यपास्तम्, यत् नामाद्युपासनसाम्यमुक्तम् । तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः; नामाद्युपासनेभ्यो भूमोपासनस्यातिशयितफलत्वं श्रुतम, "एष तु वा अतिवदति यः सत्येनातिवदति" इति । तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्; अन्यथाऽतिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः । अतः समस्तोपासनमेव न्याय्यम् ॥ ५५ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥

शब्दादिभेदाधिकरणम् ३-३-२४

**नाना शब्दादिभेदात् ॥ ३-३-५६ ॥**

इह ब्रह्मविद्याः सर्वा ब्रह्मप्राप्तिरूपमोक्षैकफलाः; सद्विद्याभूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्यावैश्वानरविद्यानन्दमयविद्याऽक्षरविद्यादिकाः एकशाखागताः शाखान्तरगताश्चोदाहरणम् । अन्याः प्राणाद्येकविषयफलाश्च । किमत्र विद्यैक्यमुत विद्याभेदः इति संशय्यते । अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्यादिकायाः सर्ववेदान्त-

---

इतरथा वाक्यभेदात् । व्यस्तोपासने प्रत्यवायकथनाच्च यथोक्त एवार्थः । **अत इदमपीत्यादि** । अनर्थाश्रवणमेकं वैषम्यमित्यर्थः । वैषम्यान्तरमाह **नामाद्युपासनेभ्य** इति । नामाद्युपासनानां भूमविद्योपयोगित्वमस्ति, आधिक्यस्य प्रतियोगित्वेनापेक्षितत्वात् ॥ अतिशयितफलश्रवणमस्तु; ततः किमित्यत्राह **तत एवे**ति । विवक्षितत्वमुपपादयति **अन्यथे**ति । एवमर्थान्तराणां प्रधानार्थोपयोगित्वान्न वाक्यभेदो भूमविद्यायाम् । अत्र तूपासनानामन्योन्योपयोगित्वाभावाद्वाक्यभेदस्तिष्ठत्येवेत्यर्थः । **अत** इत्यधिकरणार्थोपसंहारः ॥ **ज्यायस्त्व**शब्दश्रवणात् व्यस्तोपासनपक्षोऽपि सूत्रकाराभिमत इति चेन्न; वाक्यभेदादिप्रसङ्गात् । **ज्यायस्त्व**शब्दस्तु प्रामाणिकत्वाभिप्रायेणाप्युपपन्नः ।

**क्रतुवदि**ति—दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गस्य प्रधानस्यैकस्य विवक्षितत्ववदिति **परे** व्याचक्षते । ततोऽपि भाष्योक्तदृष्टान्त एवोचितः; सादृश्यप्रकर्षात् । क्रतोरङ्गोपचयात् फलोपचयवदित्यन्ये । ते व्यस्तोपासनस्य सूत्रानुमतिमपि मन्यन्ते । तदयुक्तम्; ज्यायस्त्वशब्दस्यान्यथासिद्धेः पूर्वोक्तत्वात् । एकैकोपासननिन्दाया इतरप्रशंसार्थत्वाभिप्रायकल्पने गौरवात् । तस्य च गतिशून्यत्वाभावेऽनुपपत्तेः ॥ ५५ ॥

**नानाशब्दादिभेदात्** ॥ पूर्वं विद्याविशेषविषयचिन्ता कृता; इदानीं सर्वविद्याविषयचिन्ता क्रियत इति सङ्गतिः । **अक्षरविद्यादिका** इति आदिशब्देन न्यासो विवक्षितः; सूत्रेऽपि; शब्दादिभेदसद्भावात् । **उदाहरणं** विषय इत्यर्थः । किं सर्वासां परविद्यानामैक्यम्, उत भेदः; किं सर्वासां ब्रह्मकर्मकत्वमुक्तिफलकत्वाविशेषादैक्यं न्याय्यम्, किं विद्यानां तत्तद्गुणविशेषविशिष्टतया श्रुतानां तावता निराकाङ्क्षत्वात् भेदो न्याय्यः । प्रथमे विद्यैक्यम्, द्वितीये विद्याभेदः । पौनरुक्त्यशङ्कां परिहरति **अत्रैवासामित्यादिना** । अविशेषपुनश्श्रवणस्य प्रकरणभेदस्य च विद्याभेदहेतुत्वे सिद्धे सति हि विद्याविशेषाणां भेदाभेदविचारावतारः, तस्मादत्रोक्तमर्थमुपजीव्य पूर्वं वेदान्तप्रत्ययन्यायोऽवतारितः,

प्रत्ययन्यायः। किं युक्तम्?। विद्यैक्यमिति। कुतः?। वेद्यस्य ब्रह्मण एकत्वात्। वेद्यं हि विद्याया रूपम्। अतो रूपैक्यात् विद्यैक्यमिति। एवं प्राप्तेऽभिधीयते—नाना—इति। नानाभूताः विद्याः। कुतः। शब्दादिभेदात्। आदिशब्देनाभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते। शब्दान्तरादिभिरत्र विधेयभेदहेतवोऽनुबन्धभेदा दृश्यन्ते। यद्यपि वेदोपासीतेत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च ब्रह्मैकविषयाः—तथाऽपि तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः, प्रत्ययावृत्तिरूपाः विद्याः भिन्दन्ति। ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याभिधायीनीति निश्चीयते। अस्मिन्नर्थे, "शब्दान्तरे कर्मभेदः" इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैः सिद्धेऽपि, पुनरिह प्रतिपादनं वेदान्तवाक्यानि अविधेयज्ञानपराणीति कुदृष्टिनिरसनाय। अतो विद्याभेद इति स्थितम् ॥ ५६ ॥ इति शब्दादिभेदाधिकरणम् ॥

---

तदपेक्षितः परस्परभेदोऽत्र निरूप्यत इत्यर्थः। अविशेषपुनःश्रवणस्य प्रकरणभेदस्य च भेदहेतुत्वे कर्मकाण्डसिद्धेऽपीह तदुपपादनमविधेयभूतवाक्यार्थज्ञानमात्रोपायत्वनिरासार्थमितीदं स्वयमेव वक्ष्यति। **किं युक्त**मिति। रूपैक्यं फलैक्यं च पूर्वपक्षहेतुः।

**एवं प्राप्त** इति। **विधेयम्**--साङ्गं प्रधानं कर्म। **अनुबन्धाः**--तदेकदेशधात्वर्थादयः। शब्दादयोऽनुबन्धभेदहेतुत्वेन प्रधानविधेयभेदहेतव इत्यर्थः। **यद्यपी**त्यादि। विषयैक्येऽपि धात्वर्थभेदाद्रूपभेदो मा भूदिति **प्रत्ययावृत्त्यभिधायिन** इत्युक्तम्। यजतिददातिजुहोत्यादयो भिन्नार्थतयैव लोके व्युत्पन्नाः। अतः शास्त्रेऽपि ते स्वार्थभूतानुबन्धभेदज्ञापकाः। उपासनध्यानादिशब्दा एकार्थतयैव व्युत्पन्नाः। वेदनोपासनादिशब्दाश्च सामान्यविशेषभावेनैकार्थविषयाः। तत् कथमनुबन्धभेदज्ञापकत्वमित्यर्थः। **तथाऽपी**ति। 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इत्यभिप्रायः॥ नन्वेवंसति रूपभेदात् को विशेषः॥ उच्यते। यागदानहोमेषु द्रव्यप्रहाणे समानेऽपि देवतोद्देशपरस्वत्वापादन-देशविशेषविशिष्ट[1]प्रहाणगोचरतया यजत्यादिशब्दानां भिन्नार्थत्ववत् तत्तद्रूपविशेषविशिष्टप्रत्ययावृत्त्यवबोधित्वमुपासनादिशब्दानां तत्तत्प्रकरणावगतानाम्। तत्रैकैकविद्याश्रवणवेलायां तेषामुपासनादिशब्दानां विलक्षणप्रत्ययावृत्तिबोधकत्वावगमो व्युत्पत्तिस्थानीयः, पश्चात् तासां विद्यानां भेदाभेदबुभुत्सायां विलक्षणार्थतया बुद्धिस्था उपासनादिशब्दाः शब्दान्तरस्थानीया इति तथोक्तिरुपचारात्[2]। एवं रूपभेदश्चोक्तो भवति। **ब्रह्मे**ति प्रकरणभेद उक्तः। अत्रैतदर्थप्रतिपादनस्य प्रयोजनमाह **अस्मिन्नि**ति। **अविधेयज्ञानपराणी**ति। अत्र निर्विशेषविषयज्ञानपरत्वमपि निरसनीयमनुसंधेयम्। बह्वधिकरणेषु बहुभिः सूत्रैर्विस्तरेणोक्तार्थस्य सङ्क्षेपेण स्मारणं कुदृष्टिनिरसनं च प्रयोजनम्॥

---

1 प्रथमं प्रहाणं त्यागः। द्वितीयं प्रक्षेपः। 2 उपचारादिति। मुख्यं शब्दान्तरं प्रपञ्चौ। यागदानादिस्थले धातुमात्रमपि शब्दान्तरं भवति। इह तु कतिपयाकारविशिष्टब्रह्मोपासनविधायितत्तदुत्पत्तिवाक्यमेव शब्दान्तरम्, यथा इन्द्राय दधि त्यजेत्, इन्द्राय पयस्त्यजेदितिवाक्यसत्त्वे इति भावः। अन्विताभिधानवादे धातुः उपासिरपि शब्दान्तरमिति न्यायपरिशुद्धिः।

विकल्पाधिकरणम् ३-३-२५

**विकल्पोऽविशिष्टफलत्वात् ॥ ३-३-५७ ॥**

ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम् ; इदानीमासां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि संभवति, उत प्रयोजनाभावाद्विकल्प एवेति विशये (विशयः ।?) किं युक्तम् । समुच्चयोऽपि सम्भवतीति । कुतः? । एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात् । दृश्यते ह्येकस्यैव स्वर्गादेः साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः ; एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि संभवतीति एवं प्राप्ते प्रचक्ष्महे—विकल्प एव ; न समुच्चयः सम्भवतीति । कुतः । अविशिष्टफलत्वात्—सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते, "ब्रह्मविदाप्नोति परम्", "स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य", "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यादिभ्यः । ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमानमनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभवः एकया विद्ययाऽवाप्यते चेत्, किमन्ययेति न समुच्चयसंभवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र देशाद्यपेक्षया भूयस्त्वसम्भवात् तदर्थिनः समुच्चयः संभवति ; इह तु तद्विपरीतस्वरूपे ब्रह्मणि तन्न संभवति । सर्वाश्च विद्याः ब्रह्मानुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात् सर्वासां विकल्प एव ॥ ५७ ॥

---

अन्ये तु—'आत्मानं विद्यात्' इति वेदनस्य द्रव्यनिष्ठत्वात् वैशद्येन विनाऽतिशयान्तरासम्भवेन प्रोक्षणावघातादीनामिवावान्तरकार्यभेदाभावेन कर्मभेदाभावात्, आत्मनश्चैकत्वाद्विधैकत्वमित्युक्त्वा आत्मनः कार्यान्तरासंभवेन [1]सक्तुवत् आत्मना विद्यादिति विपरिणामस्य न्याय्यत्वात्, भावार्थप्राधान्ये सति साध्यानामपूर्वाणां भेदेन भिन्नानुबन्धानां श्रवणादिप्रत्ययानां भेदोपपत्तेर्विद्याभेदः—इति वदन्ति ; उपासीत, श्रोतव्यः, मन्तव्यः इति शब्दभेदादिति सूत्रं च योजयन्ति । तदयुक्तम् ; रागप्राप्ततयाऽनूदितयोः श्रवणमननयोर्विधेयेन ध्यानेनैक्यशङ्कानुदयात् । अत एव सिद्धान्ते साध्यापूर्वभेदाङ्गीकारेण भेदसमर्थनं चायुक्तम् । तेषां विधेयत्वेऽपि नैक्यशङ्का ; श्रवणादिस्वरूपभेदस्य लोकसिद्धत्वात् ; अज्ञातप्रतीति-श्रुतार्थप्रतिष्ठापन-वैशद्यरूपकार्यभेदस्य प्रसिद्धत्वाच्च ॥ ५६ ॥

**विकल्पोऽविशिष्टफलत्वात्** ॥ अस्मिन्नधिकरणे[2]न्यासविद्याऽभिप्रेता । सङ्गतिमाह **ब्रह्मप्राप्ती**ति । भेदे सिद्धे हि समुच्चयविकल्पनिरूपणं युक्तमिति भावः । किं सर्वासां समुच्चयः, उत विकल्पः ; किं ब्रह्मप्राप्तिरेकरूपा, उत स्वर्गप्राप्तिवत् विलक्षणेति । वैलक्षण्ये तदपेक्षया समुच्चयः । ऐकरूप्ये विकल्पः । राद्धान्ते—**परमं साम्यमुपैती**ति । अनवधिकातिशयानन्दं ब्रह्म स्वसदृशानन्दं ददाति । ततोऽधिकानन्दस्याभावान्न भूयस्तदपेक्षासंभव इति भावः । ब्रह्मानन्दस्य (ब्रह्मानुभवस्य) फलत्वं दर्शयति **ब्रह्म ही**ति । काश्चिद्विद्याः विरोधिनिरसनोपक्षीणाः, काश्चिद्ब्रह्मप्राप्तिफलाः ; अतः समुच्चयसंभव इत्यत्राह **सर्वाश्च विद्या** इति ॥

---

1 यथा सक्तून् जुहोतीत्यत्र सक्तुभिर्जुहोतीति तृतीयाविपरिणामः ।

2 अत्र न्यासविद्याया अभिप्रेतत्वं प्रामाणिकमिति तदर्थमेव नानाशब्दादीत्यत्रापि शब्दभेदस्यापि सूत्रे निर्देशादिति भावः ।

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवत् यथेष्टं विकल्पेरन्, समुच्चीयेरन् वा ; तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात्। तदाह—

**काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॥ ३ ३·५८ ॥**

अपरिमितफलत्वाभावादित्यर्थः ॥ ५८ ॥ इति विकल्पाधिकरणम् ॥

**यथाश्रयभावाधिकरणम् ३-३-२६**

**अङ्गेषु यथाश्रयभावः ॥ ३-३-५९ ॥**

उद्गीथादिक्रत्वङ्गेष्वाश्रिताः, "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिका विद्याः किमु-

---

अनेन सूत्रेण सङ्गतमुत्तरसूत्रार्थं सङ्क्षेपेणाह **ब्रह्मप्राप्तिव्यतिरिक्तफलास्त्विति**। **काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्** ॥ अत्र व्याख्येयं चरमपदं व्याचष्टे। **अपरिमितेति**। समुच्चीयेरन् न वेत्युक्तेऽपि समुच्चयविकल्पयोः किं नियामकमित्यपेक्षायामिच्छा नियामिका स्यादिति **यथाकाम**मिति पदस्यार्थः ॥

विद्यानामेकरूपं फलं समाधौ साक्षात्करणमिति **परे**। तदयुक्तम् ; समाधौ साक्षात्कारस्य विद्याशरीरान्तर्भावात्, तस्य च, फलभावेऽपि तत्तद्गुणविशिष्टविषयतया भिन्नरूपत्वाच्च विकल्पानुपपत्तेः। साक्षात्कारस्यैकरूपत्वेऽपि बन्धनिवृत्त्यनन्तरभाविब्रह्मानुभववैषम्यशङ्कानिरासेन विना समुच्चयनिरासायोगाच्च बन्धनिवृत्तिपूर्वकब्रह्मानुभवफलैकरूप्यं वक्तव्यम्।

**अन्ये तु** सम्भूत्युपासनविषयं विचारमाहुः। तदयुक्तम्—सम्भूतिविनाशविभागविभक्तोपासन-समुच्चयस्याप्रामाणिकत्वोपपादनात्। ते च, 'ये चेमे अरण्ये' इत्यत्र देवयानपथस्य फलत्वेनोपादानादेकाधि-कारपरिगृहीतत्वादाग्नेयादीनामिव समुच्चय इति पूर्वपक्षं कृत्वा—आग्नेयादीनामिव प्रकरणैक्याधिकारवा-क्यैक्याभावादिभिः प्रतिप्रकरणं निराकाङ्क्षाणां विद्यानां मिथः सम्बन्धानुपपत्तेः, 'ये चेमे' इत्यादिवाक्यस्य गतिविधिपरत्वेन ब्रह्मप्राप्तेरनूद्यमानतया अधिकारवाक्यत्वाभावात्, एकस्मिन् दोषे विहितप्रायश्चित्तानामिव विकल्प इत्याहुः। तदयुक्तम्, 'अथ ये इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति पितृयाणपथस्य फलत्वेनोपादानेऽपि प्रत्येकं फलसाधनत्वेन विहितानामिष्टा-पूर्तदत्तादीनामिव विद्यादीनामपि समुच्चित्यैकफलसाधनत्वशङ्कानुत्थानात्। अधिकारवाक्यभेदादिभिः प्रत्येकमेकरूपफलसाधनत्वे सिद्धान्तदृष्ट्या दर्शितेऽपि फलातिशयसम्भावनया ज्योतिष्टोमदर्शपूर्णमास-विश्वजिदादीनामिव समुच्चयशङ्काया दुर्निवारत्वाच्च। अतः सैवाविशिष्टफलत्वेन निराकार्या। समुच्चित्य साधनत्वे पूर्वपक्षिते प्रत्येकं निरपेक्षसाधनत्वं सिद्धान्तिनः साध्यं स्यात्। तत्र च **अविशिष्टफलत्वादिति** हेतुर्न घटते—साध्याविशिष्टत्वात्। अविशिष्टं फलं प्रति निरपेक्षसाधनत्वं हि साध्यम् ॥ तद्धेतवोऽभिप्रेता इति चेत्—अनपेक्षितकण्ठोक्तिः अपेक्षितस्यावचनं सूत्रास्वारस्यं च स्यात्। अतो यथाभाष्यमेवार्थः।

**इतरे सर्वे** 'काम्यास्तु' इत्यादिसूत्रमधिकरणान्तरमाहुः। तदयुक्तम् ; अविशिष्टफलत्वाभावस्य स्फुटत्वात्। सूत्रप्रयोजनं तु विद्यात्वसामान्यप्रसक्तविकल्पनिवारणम्। काम्यासु विद्यासु सूत्रस्वारस्येन सामान्यतो निरूपितास्वपि मुमुक्षोश्च भवति प्रयोजनं विद्याङ्गक्रतुसमृद्ध्यर्थानामुद्गीथाद्युपासनानां क्रतुफलप्रति-बन्धककर्मलाघवभूयस्त्वाद्यानुगुण्येन विकल्पसमुच्चयाद्याश्रयणम् ॥ ५८ ॥ इति विकल्पाधिकरणम् ॥

द्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः, उत गोदोहनादिवत् पुरुषार्थतया यथाकाममिति विशये—नियमेनोपादेया इति युक्तम् । ननु च आसां पुरुषार्थत्वेनानियमः प्रतिपादितः, "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्" इत्यत्र ॥ सत्यम् । तदेव द्रढयितुं कैश्चिल्लिङ्ग-दर्शनैर्युक्त्या चाक्षिप्यते । तत्र हि, "तेनोभौ कुरुतः" इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम् । उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते । न ह्यत्र, "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवत् उपासनाविधिवाक्ये फलसंबन्धः श्रूयते । 'उद्गीथ-मुपासीत' इत्युद्गीथादिसंबन्धितयैवोपासनं प्रतीयते । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इति वर्तमानापदेशरूपवाक्यान्तराद्धि फलसंबन्धो ज्ञायते । स्ववाक्येनै-वाव्यभिचरितक्रतुसंबन्ध्युद्गीथादिसंबन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसंबन्ध-निर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत् । अतो यथोद्गीथादयः उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते, तथा तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ॥ ५९ ॥

**शिष्टेश्च ॥ ३-३ ६० ॥**

शिष्टिः—शासनम् ; विधानमित्यर्थः । "उद्गीथमुपासीत" इत्युद्गीथाङ्गतयोपासनविधा-

---

**अङ्गेषु यथाश्रयभावः ॥ यथाकाम**मिति पदेन सङ्गतिरभिप्रेता । यथाकामं विकल्पः समुच्चयो वा स्यादिति ह्युक्तम् ; तथा उद्गीथादिविद्या यथाकाममुपादेया न वेति शङ्कया (संशयात्) सङ्गतिः । किमुद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि, उतानियमेन ; किं क्रत्वङ्गोद्गीथादिमुखेन पर्णत्वादिवत् क्रत्वर्थानि, उत फलश्रवणात् पुरुषार्थभूतानि ; किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात्, उत क्रतुफलात्पृथक्फलसम्बन्धश्रवणात् ? । स्ववाक्ये फलश्रुत्या पुरुषार्थत्वं चेत्—तदभावेन पर्णतादिवत् क्रत्वर्थतया नियमेनोपादेयता । पृथक्फलसम्बन्धश्रवणमात्राच्चेत्, उद्गीथाद्युपासनानामपि पृथक्फलतया पुरुषार्थत्वान्न नियमेनोपादेयता । पौनरुक्त्येन चोदयति **नन्विति** । परिहरति **सत्यंतदेवेति** । सङ्गतिविशेषादधिकरणान्तरं मध्ये प्राप्तम् । अतो न तत्र कृतमित्यर्थः । तत्रोक्तांशमाह—**तत्र हीति** । अत्र तद्विपरीतहेतुबहुत्वमाह-**उपासनेति** । **न ह्यत्रेति** । गोदोहनस्य स्ववाक्ये श्रूयमाणं पृथक्फलसाधनत्वमङ्गत्वविरोधि ; अत्र तु वाक्यान्तरस्थत्वेन फलसंबन्धस्य विलम्बितप्रतीतित्वादर्थवादमात्रमिति न तदङ्गत्वविरोधीत्यर्थः । विरोध्यभाव उक्तः ; अनुकूलहेतुमाह **उद्गीथमिति** । उद्गीथगता द्वितीयाश्रुतिरुपासनस्य तच्छेषत्वे प्रमाणम्, व्रीह्यादिगता प्रोक्षणादेरिवेत्यर्थः । फलसंबन्धस्य वाक्यान्तरस्थत्वं दर्शयति **यदेवेति** । **वर्तमानापदेशः**—वर्तमानव्यपदेशः । स्ववाक्यस्थे फलसंबन्धे तत्रापि विधिकटाक्षः स्यात् ; वाक्यान्तरस्थत्वे सोऽपि नास्तीति भावः । फलितमर्थमाह **स्ववाक्येनैवेति** । **निर्ज्ञातः** निश्चितः । **प्रयोगविधिः**—अनुष्ठापकत्वदशापन्नविधिः ; न तु ज्ञापकावस्थः । यथा स्ववाक्यानवगतफलसंबन्धस्य प्रकरणान्तरस्थस्याप्यव्यभिचरितक्रतुसंबन्धिजुहूसंबन्धेन ज्ञातक्रत्वङ्गभावस्य पर्णत्वस्यापापश्लोकश्रवणफलमर्थवादमात्रं स्यात् ; अतः पर्णत्वं नियमेनोपादेयम्—तथेदमित्यर्थः ॥ ५९ ॥

नाच्चोपादाननियमः। "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवत् विधिवाक्येऽधिकारान्तराश्रवणात् उद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते ॥ ६० ॥

समाहारात् ॥ ३-३-६१ ॥

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" इत्युपासनस्य समाहारनियमो दृश्यते। दुरुद्गीथं—वेदनविहीनमुद्गीथम्। वेदनहानावन्येन समाधानं ब्रुवत् तस्य नियमेनोपादानं दर्शयति ॥ ६१ ॥

गुणसाधारण्यश्रुतेश्च ॥ ३-३-६२ ॥

उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य, "तेनेयं त्रयी विद्या वर्तते। ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते। तेनेति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र सञ्चरति। अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानम् ॥ ६२ ॥

इति प्राप्ते उच्यते—

न वा तत्सहभावाश्रुतेः ॥ ३-३-६३ ॥

न चैतदस्ति, यत् उद्गीथाद्युपासनानां क्रतुपूद्गीथादिवदुपादाननियम इति। कुतः। तत्सहभावाश्रुतेः। उद्गीथाङ्गभावाश्रुतेरित्यर्थः। अङ्गभावे हि सहभावनियमो भवति। यद्यपि

---

शिष्टेश्च ॥ पूर्वं युक्तिरुक्ता; व्याप्तिरूपा हि युक्तिः। विधिवाक्यस्थफलसंबन्धेष्वङ्गत्वाभावः, विधिवाक्यस्थफलविरहेऽङ्गत्वं च हि दर्शितम्। अथ लिङ्गानि प्रदर्श्यन्ते, गोदोहनस्याप्यङ्गत्वप्रसङ्ग इत्यत्राह **गोदोहनेने**ति।

**समाहारात्**॥**समाहारः** ॥ समाधानम्। कथं दृश्यत इत्यत्राह-**दुरुद्गीथ**मिति ॥

**गुणसाधारण्यश्रुतेश्च** ॥ उपासनार्थत्वविवक्षया तदाश्रयस्य गुणत्वव्यपदेशः। **समाहारो गम्यत** इति। **समाहारः** अनुवृत्तिः। सोपासनप्रणवानुवृत्त्या उपासनानुवृत्तिर्गम्यते इत्यर्थः। तदुपपादयति **तेने**ति ॥ ६२ ॥

**न वा तत्सहभावाश्रुतेः** ॥ फलितमर्थमाह **उद्गीथाङ्गभावाश्रुते**रिति। कथमयमर्थ इत्यत्राह **अङ्गभावे ही**ति। सहभावमात्रस्य पूर्वपक्षिणाऽप्यङ्गीकृतत्वात् **सहभावनियम** इत्युक्तम्। सहभावनियम एवाङ्गत्वम्। अङ्गत्वविरोधि पृथक्फलसाधनत्वं सूत्राभिप्रेतम्। गोदोहनवाक्यसाम्यप्रतिपादनेन तदुपपादयति **यद्यपी**ति। स्ववाक्यस्थत्वं वाक्यान्तरस्थत्वं च न प्रयोजकम्, विलम्बाविलम्बावेव प्रयोजकौ। पर्णताविधिवाक्ये विलम्बद्वयमस्ति, पर्णताया अपापश्लोकश्रवणं प्रति साधनत्वाश्रवणात्; फलस्य वाक्यान्तरस्थत्वाच्च। गोदोहनवाक्ये त्वन्यतरविलम्ब एव; फलस्य स्ववाक्ये श्रवणात् पशुं प्रति गोदोहनस्य साधनतामात्रस्य कल्प्यत्वात्। एवं पर्णताविधिवाक्ये विलम्बद्वयसद्भावात् वाक्यस्वरससिद्धाङ्गत्वबाधायोगात् तत्फलश्रुतिरर्थवादः। एवं गोदोहनवाक्ये त्वन्यतरविलम्बाभावात् तत्र फलसाधनत्वमङ्गत्वविरोधि। एवमन्यतरविलम्बाभावसाधर्म्यात् तद्वदिदमपि पृथक्फलसाधनत्वमेवोपासनस्य प्रतिपादयतीति गोदोहनवत् उपासनमपि न क्रत्वङ्गम्। अतो विलम्बद्वयाभाववैषम्यात् पर्णतावाक्यवन्नेदं क्रत्वङ्गतां प्रतिपादयतीत्यर्थः। जुह्वाः प्रकृतिद्रव्याकाङ्क्षाऽस्ति; नैवमुद्गीथादीनामुपासनाकाङ्क्षाऽस्ति। पर्णताया अक्रियारूपत्वात्

"उद्गीथमुपासीत" इत्यस्मिन् पदसमुदायेऽधिकारान्तरं न प्रतीयते, तथाऽपि तदनन्तरमेव, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते। तेन क्रतुफलात् पृथग्भूतफलसाधनभूता विद्या 'उद्गीथमुपासीत' इति कर्तव्यतया विधीयते। क्रतुफलात् पृथग्भूतफलसाधनतयाऽवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते। अत(थ) उपासनस्याश्रयापेक्षायां संनिहित उद्गीथ आश्रयमात्रं भवति। उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः। वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम्। क्रतोरविलम्बितफलत्वमित्यर्थः। पर्णतादीनां तु, "यदेव विद्यया करोति...तदेव वीर्यवत्तरं भवति" इति विद्यायाः फलसाधनत्ववत् अपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात् तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यात्॥ ६३॥

## दर्शनाच्च ॥ ३-३-६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम्, "एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती। उद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुप-

---

क्रत्वनुप्रवेशाकाङ्क्षाऽस्ति; नैवमुपासनानाम्; क्रियारूपत्वेनाव्यवधानेन पुरुषार्थसंस्पर्शादिति च पर्णतावैषम्यं सिद्धम्। **अधिकारान्तरम्** फलान्तरसाधनत्वम्। **साधनभावः प्रतिपाद्यत** इति। अनेन गोदोहनवाक्ये साधनभावः कल्प्य इत्यन्यतरविलम्बः सूचितः। एवं तत्साम्येन पृथक्फलसाधनतयैव उद्गीथविद्या विहितेत्याह **तेने**ति। ततः किमित्यपेक्षायामुपासनस्य क्रत्वङ्गत्वमयुक्तमित्याह-**क्रतुफला**दिति। उद्गीथमुपासीतेत्युपासनस्योद्गीथशेषत्वं प्रतीयते इत्यत्राह **अत उपासनस्ये**ति। **आश्रयमात्रं भवति**। न तु शेषीत्यर्थः। यथा गोदोहनं किंसंबन्धि पशुसाधनमित्यपेक्षायां प्रणयनसंबन्धीति प्रणयनं संबन्धिमात्रतया प्रतीयते, तथा किंविषयमुपासनं वीर्यवत्तरत्वसाधनमित्यपेक्षायामुद्गीथ आश्रयमात्रं भवतीत्यर्थः। उपासनस्य प्रथक्फलसाधनत्वे अधिकार्यन्तरानुष्ठेयता स्यादित्यत्राह **उद्गीथश्चे**ति। यथा क्रत्वधिकारिण एव पशुकामनानिमित्तमधिकारान्तरं भवति गोदोहने, तद्वदत्रापीत्यर्थः। उद्गात्रानुष्ठितमप्युपासनं यजमानस्यैव फलप्रदम्। वीर्यवत्तरत्वस्य पृथक्फलतां दर्शयति **वीर्ये**ति। पर्णतावाक्यवैषम्यमाह **पर्णतादीनां त्वि**ति। फलस्य वाक्यान्तरस्थत्वेन विलम्बः स्पष्टतया न कण्ठोक्तः। फलसंबन्धस्य विलम्बद्वयोपहतत्वेनाविरोधित्वादङ्गतया विनियोगात्, अङ्गत्वे सति पृथक्फलकल्पनायोगात् तत्र फलश्रुतिरर्थवादः; अत्र पुनरन्यतरविलम्बसाम्यात् पृथक्फलसाधनत्वेनोपासनस्य पुरुषार्थतया क्रत्वर्थत्वाभावान्नोपादाननियम इत्यर्थः॥ ६३॥

**दर्शनाच्च**॥ पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता। अत्र लिङ्गानि प्रतिवक्ष्यन्ते। अनियमस्य प्रदर्शितत्वमुपपादयति **उद्गातृप्रभृतीना**मिति। 'यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति' इत्यत्र यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकरणादिभिरिति मन्तव्यम्। उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धादि। तस्य ब्रह्माख्यर्त्विग्वेदनेन

पद्यते। अनेन लिङ्गेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते। अतोऽनियम एवेति स्थितम् ॥ ६४ ॥ इति यथाश्रयभावाधिकरणम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य तृतीयः पादः ।

श्रीरस्तु

---

सिद्धौ सत्यां ह्युद्गातृप्रभृतिवेदनानियमसिद्धिः । **समाहारादिलिङ्गानां प्रायिकत्वमवगम्यत** इति । आदावेव क्रतुफलाप्रतिबन्धायोद्गीथोपासनं सङ्कल्पितं चेत ; वेदनविरहितोद्गीथे समाधानं कर्तव्यमित्यर्थः । सोपासनप्रणवसहभावनियमदर्शनमपि तथा सङ्कल्पितक्रतावेव । यद्वा तेनेति न सोपासनप्रणवपरामर्शः । अपि तु प्रणवमात्रपरामर्शः । उद्गीथसंबन्धितयोपासनविधानम्, न तूद्गीथविशेषणतयेत्यनेन शिष्टिश्च परिहृता ॥

**परे तु** किमुद्गीथादिप्रत्ययाः समुच्चीयेरन्, किं यथाकामं स्युरिति विचारयन्ति । 'पुरुषार्थत्वे यथाकाममनुष्ठेयत्वम् ; काम्यास्तु यथाकामम्' इति सिद्धम् । अतः पुरुषार्थत्वतदभावविषयविचारो युक्तः । **तत्सहभावाश्रुतेरिति**—'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति । स्तुतमनुशंसति । प्रस्तोतः! सामानि गाय । होतरेतद्यज' इत्यादिना स्तोत्रादीनां परस्परसहभावः श्रुतः । इह तथा न श्रूयते इति चाहुः । लिङ्गादीनामप्यङ्गभावे प्रमाणत्वात् सहभावाश्रवणमात्रेण नाङ्गत्वनिवृत्तिः ॥ सहभावाश्रुतिर्विनियोगप्रमाणाभावप्रदर्शनार्थेति चेत्—सहभावशब्देन तन्नियमरूपमङ्गत्वमुपस्थाप्य विनियोजकप्रमाणाभावेन तद्व्युदासपरत्वं सूत्रस्य ततोऽपि वरम् ॥ **अन्ये तु—शिष्टेश्च**—'यदेव विद्यया करोति' इत्यङ्गत्वं शिष्यत इत्याहुः । ततोऽपि वरम् 'उद्गीथमुपासीत' इति विधानपरत्वम् ; **शिष्टि**शब्दस्य विधाने स्वारस्यात् ; 'यदेव विद्यया' इत्यत्र विधिपदाश्रवणाच्च । **दर्शनाच्च**—'तेनोभौ कुरुतः' इत्यनियमदर्शनादिति व्याचक्षते । तदयुक्तम् ; **तद्दृष्टे**रित्यनेन पुनरुक्तत्वात् ॥ इति यथाश्रयभावाधिकरणम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा—भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयस्याध्यस्य तृतीयः पादः ॥

श्रीः । श्रीमते रामानुजाय नमः।

## श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

### तृतीयाध्याये चतुर्थः पादः ।

### पुरुषार्थाधिकरणम् ३-४-१

**पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ ३-४-१ ॥**

गुणोपसंहारानुपसंहारफलो विद्यैकत्वनानात्वचिन्ता कृता । इदानीं विद्यातः पुरुषार्थः, उत विद्याङ्गकात् कर्मणः इति चिन्त्यते । किं युक्तम्?। अतः—विद्यातः पुरुषार्थ इति भगवान् बादरायणो मन्यते । कुतः?। शब्दात् । दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन्, "ब्रह्म-विदाप्नोति परम्," "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय", "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" इत्यादिः॥ १ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ ३-४-२ ॥**

---

श्रीः ४. १.

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥** पूर्वपादेनास्याधिकरणस्य सङ्गतिमाह **गुणे**ति । उपासनचिन्तानन्तरमङ्गचिन्तनं क्रियते इति पादसङ्गतिरर्थसिद्धा । तत्र विद्याया अङ्गित्वे सति हि तदङ्गचिन्तनं कार्यम् । तस्मादङ्गचिन्तनोपयोगित्वेन विद्याया अङ्गित्वं प्रथमाधिकरणे निरूप्यते । किं विद्यातः पुरुषार्थः, उत विद्याङ्गकात् कर्मण इति ; किं विद्या क्रतुकर्तृभूतात्मसंस्कारद्वारेण क्रत्वर्था, उतापुनरावृत्तिफलसाधनतया पुरुषार्था ; किं 'ब्रह्मविदाप्नोति' इत्यादयः फलविधयः, उतार्थवादाः ; परविद्यासु कर्मीभूतो जीवः, उत तदन्यः परमात्मा ; किमाचारदर्शनादिलिङ्गानुगृहीतं तत्त्वमस्यादि-सामानाधिकरण्यमुपास्यस्य जीवभावमवगमयति, नेति ; किमिदं लिङ्गमनैकान्तिकम्, नेति । अनैकान्तिक-त्वाभावे तदनुगृहीतसामानाधिकरण्येनोपास्यस्य जीवभावावगमात् परविद्यानां स्वकर्मीभूतजीवसंस्कारत्वात् आत्मज्ञानफलश्रुतेरर्थवादतया पृथक्फलसाधनत्वाभावात् विद्या क्रत्वर्थेति तदङ्गकात् कर्मणः पुरुषार्थः स्यात् । लिङ्गस्यानैकान्तिकत्वे तदनुग्रहाभावेन सामानाधिकरण्यस्य जीवानतिरेकानवगमकत्वात् परविद्यानां जीवकर्मकत्वाभावेन तत्संस्कारत्वाभावात् आत्मविद्याफलश्रुतेरर्थवादत्वाभावेन पृथक्फलसाधनतया पुरुषार्थत्वात् विद्यातः पुरुषार्थसिद्धिः स्यात् ॥ इदं च सिद्धान्तोपक्रमम् । विद्यायाः पूर्वपादे प्रस्तुतत्वात् **अत**श्शब्देन सोक्ता । **ब्रह्मविदाप्नोति** इति वाक्ये विद्यया प्राप्यावाप्तिरुक्ता । **वेदाहम्** इत्यत्र विद्याया ब्रह्मप्राप्तिहेतुत्वं प्रतिबन्धनिवृत्तिद्वारकमित्यर्थः[1] । तत्र ब्रह्मणो 'विग्रहादिविशिष्टत्वमुपायान्तरनिषेधश्च सिद्धः । उभयमप्यभिहितं **यथा नद्यः** इति वाक्ये ॥ द्वितीयसूत्रप्रभृति पूर्वपक्षविषयम् । तदाह **अत्रे**ति ।

---

1 अर्थ इति । उक्त इति विपरिणमनेनानुषङ्गः ।

नैतदेवम्, यत्—विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यते इति। न ह्येषः, "ब्रह्मविदाप्नोति परम्" इत्यादिशब्दो वेदनात्पुरुषार्थावाप्तिमवगमयति; कर्मसु कर्तृभूतस्याऽऽत्मनो याथात्म्यवेदन-प्रतिपादनपरत्वात्। अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुतिरर्थवादमात्रम्, यथाऽन्येषु द्रव्यादिष्विति जैमिनिराचार्यो मन्यते। तदुक्तम्, "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इति। ननु च कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यते इति प्रागेवोपपादितम्, "नेतरोऽनुपपत्तेः", "भेदव्यपदेशाच्च", "अनुपपत्तेस्तु न शारीरः", "इतरपरामर्शात्स इति चेन्नासंभवात्" इत्येवमादिभिः सूत्रैः। तदेव ब्रह्म तत्त्वमस्यादि-सामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि, "अधिकं तु भेदनिर्देशात्" इत्येवमादिभिर्नि-रस्तम्। सामानाधिकरण्यनिर्देशश्च, "ऐतदात्म्यमिदं सर्वम्", "सर्वं खल्विदं ब्रह्म" इति चेतनाचेतनसाधारणः, "यः पृथिव्यां तिष्ठन्" "य आत्मनि तिष्ठन्" इत्यादिनाऽवगततत्तदात्म-तयाऽ(त्मता?)वस्थितिनिबन्धन इति, "अवस्थितेरिति काशकृत्स्नः" इत्यादिभिरुपपादितम्। तत् कथं कर्मसु कर्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते॥ उच्यते। वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन

---

शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः॥ व्याचष्टे **नैतदि**त्यादिना। **न ही**त्यादि। 'आदित्यो यूपः' इत्यादिष्विव न तात्पर्यमित्यर्थः। कुत इत्यत आह **कर्मस्विति**। व्रीह्यादेः प्रोक्षणादिवत् विद्या आत्मनश्शेषत्वेनावगता, 'आत्मा ज्ञातव्यः' इति। 'अधीत्य स्नास्यन्' इति ज्ञानमपि कर्मशेषत्वेनावगतम्। व्रीह्यादिशेषभूतप्रोक्षणादेः क्रतुशेषत्वं द्वारभूतव्रीह्यादेः क्रतुशेषत्वेनैव यथोपपद्यते, तथा आत्मशेषभूतज्ञानस्य कर्मशेषत्वमात्मनः कर्मशेषत्वेनोपपद्यत इति ज्ञातव्य आत्मा क्रतुशेष-भूत एव। कर्मशेषभूतत्वं च कर्मसु कर्तृभूतस्याऽऽत्मनः; स चात्मा जीव एवेति तत्स्वरूपप्रतिपादनपरं वेदान्तवाक्यजातमित्यर्थः। आत्मज्ञानस्य पृथक्फलसाधनत्वान्न कर्माङ्गत्वमित्यत्राह **अत** इति। 'आत्मा वा अरे द्रष्टव्यः' इत्यादिषु 'स्वाध्यायोऽध्येतव्यः' इतिवत् आत्मनः कर्मत्वावगमात् ज्ञानेन संस्कार्यत्वम्। अतो यज्ञादेर्व्रीह्यादिद्वारा प्रोक्षणादिवत् विद्याऽपि[1] कर्तृसंस्काररूपतया कर्मशेषभूता। तस्मात् यथा अव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा क्रतुशेषभूतपर्णमयत्वस्यापापश्लोकश्रवणमर्थवादः, तद्वत् अव्यभिचरितक्रतु-संबन्धिकर्तृद्वारा विद्यायाः क्रतुशेषभूतायाः फलश्रुतिरर्थवाद इत्यर्थः। प्रकरणान्तराधीतायाः विद्यायाः क्रतुशेषत्वमपि पर्णत्ववदुपपन्नम्। आदिशब्दविवरणार्थमाह **तदुक्त**मिति। चोदयति **नन्विति** अचेतनेनेव चेतनेनापि स्वरूपैक्यानुपपत्तिद्योतनार्थम् 'ऐतदात्म्यमिदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' इति वाक्यद्वयोपादानम्। एवं जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावात् तद्द्वारा विद्यायाः कर्माङ्गत्वमनुपपन्नमित्यर्थः। परिहरति—**उच्यत** इति। **वेदान्तवाक्येष्वेवे**ति। त्वया जीवविलक्षण-परत्वेनोक्तेष्वेवेति भावः। लिङ्गानुग्रहात् सामानाधिकरण्यमपि स्वरूपैक्यपरमित्याह **तदुपबृंहितेति**।

---

1 ननु प्रोक्षणादेः प्रकरणात् यागाङ्गत्वं श्रुत्या च व्रीह्यङ्गत्वम्। तत्र श्रुतेर्बलीयस्त्वात् प्रकरणं तदनुगुणं नीयते। विद्ययेति तृतीयाश्रुत्या साक्षात्कर्माङ्गत्वावगमात् नात्मार्थत्वमिति शंकापरिहाराय अपिशब्दः। विद्यायाः कर्मकरणत्वस्य दृष्टविधयोपपादनाय आत्मप्रकाशद्वारकत्वस्वीकारात् विद्ययेति, आत्मानमिति च वाक्ययोरैकरस्यमिहापीति भावः। तच्छ्रुतेरिति सूत्रे इदमनुसंधेयम्।

च वेदान्तशब्दाः देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः ॥ ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्, कर्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसंबन्धित्वाभावात् ॥ नैवम्; लौकिकस्य कर्मणः कर्तुर्देहादव्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात् तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुद्ध्यते। अतो विद्यायाः क्रतुशेषत्वात् नातः पुरुषार्थः ॥ २ ॥

कानि पुनस्तानि लिङ्गानि; यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते। तत्राह—

आचारदर्शनात् ॥ ३-४-३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते—अश्वपतिः केकयः किल आत्मवित्तमः तद्विज्ञानायोपगतान् तान् (?) ऋषीन् प्रत्याह—"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इति। यथा च जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते, "कर्मणैव हि संसिद्धिमास्थिता जनकादयः", "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति। अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्तृस्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ॥

लिङ्गमिदम्; प्राप्तिरुच्यतामित्यत्राह—

तच्छ्रुतेः ॥ ३ ४ ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति। नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थापयितुं शक्या, यतः प्रकरणात् श्रुतिर्बलीयसी। "यदेव विद्यया करोति" इति विद्यामात्रविषया ह्रीयं श्रुतिः ॥ ४ ॥

---

चोदयति **ननु चेति**। न ह्यन्यशेषमन्यशेषं भवति। तदसाधारणमेव हि तदङ्गम्। कर्ता च लौकिकवैदिककर्मसाधारणः। अतः कर्तुरव्यभिचरितक्रतुसंबन्धित्वाभावात् जुहूवत् प्रत्यभिज्ञा नास्तीति न तद्द्वारा क्रत्वङ्गत्वमित्यर्थः। [1]परिहरति **नैवमिति**।

अनन्तरसूत्रमवतारयति **कानीति**। **आचारदर्शनात्** ॥ गुणमुख्ययोर्विरोधे [2]मुख्यानुगुणं गुणो नेयः, न तु गुणानुगुणं मुख्यो नेयः। तस्मात् कर्मणो विद्यायाश्च प्रसङ्गे कर्मणोऽनुष्ठानं तस्य प्राधान्येनैवोपपद्यते। अतो विद्या कर्माङ्गमित्यर्थः ॥ ३ ॥

अनन्तरसूत्रमवतारयति **लिङ्गमिति**। **प्राप्तिः**—प्रमाणतः सिद्धिः। अनुग्राहकमुक्तम्, अनुग्राह्यमभिधीयतामित्यर्थः। आगमप्रमाणस्य[3] श्रुतिलिङ्गादयोऽनुग्राहकाः।

**तच्छ्रुतेः** ॥ विद्ययेति तृतीयाश्रुत्याऽङ्गत्वं गम्यते। **नेयमित्यादि**। ततः किमित्यत्राह **यदेवेति**।

---

[1] अत्र सूत्रे विद्ययेति वाक्यं दूरीकृत्य आत्मानं विद्यादित्येतन्मात्रमादायैव आत्मनः कर्मशेषत्वेन सर्वसंमतेन विद्याया अपि कर्माङ्गत्वोपपादनम्। विद्ययेति तु तच्छ्रुतेरिति उपरि दर्शयिष्यते।

[2] एकदा उभयोरनुष्ठाने प्रसक्ते तदा मुख्यमनुष्ठेयम्, अङ्गं त्वन्यदेति मीमांसितम्। तदत्र विद्यावद्भिरपि तदनुष्ठानोचितावसरे कर्मानुष्ठानं कर्मणो मुख्यत्वमवगमयतीति भावः।

[3] आगमप्रमाणं=विधायकवाक्यम्। तत्रापेक्षिता श्रुतिः तृतीयादिविभक्तिः। तत्कल्पकं सामर्थ्यं लिङ्गमित्येवं श्रुत्यादेरनुग्राहकत्वम् भा० प्र०.

**समन्वारम्भणात् ॥ ३-४-५ ॥**

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यं च दृश्यते। साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥ ५ ॥

**तद्वतो विधानात् ॥ ३-४-६**

विद्यावतः कर्मविधानात् विद्या कर्माङ्गमित्यवगम्यते। "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादौ "वेदमधीत्य" इत्यध्ययनवतः कर्माणि विदधत् अर्थावबोधपर्यन्ताध्ययनवत एव विदधाति। अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम्। अतो ब्रह्मविद्याऽपि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ॥ ६ ॥

**नियमात् ॥ ३-४ ७ ॥**

इतश्च न विद्यातः पुरुषार्थः। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति आत्मविदः पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात् कर्मण एव फलमित्यवगम्यते; विद्या तु कर्माङ्गमिति ॥

एवं प्राप्ते प्रचक्ष्महे—

---

**समन्वारम्भणात् ॥** अन्वारम्भणम्—स्पर्शः। तेन संबन्धो विवक्षितः। साहित्यं कर्मणो विद्याङ्गत्वेऽप्युपपद्यत इत्यत्राह **उक्तेन न्यायेनेति**। कर्तुरात्मनः कर्मशेषत्वमाचारदर्शनमित्यादिकं न्यायशब्देन विवक्षितम् ॥ ५ ॥

**तद्वतो विधानात् ॥ अतिशेषेण**—[1]निःशेषमित्यर्थः। अध्ययनवतः कर्माणि विदधीत, ततः किं ज्ञानस्य कर्माङ्गत्व इत्यत्राह **अर्थावबोधपर्यन्ताध्ययनवत** एवेति। अर्थज्ञानपर्यन्तत्वं कथमित्यत्राह **अर्थावबोधेति**। **स्थापितम्**—भाट्टैः प्राभाकरैश्च श्रुतेरविवक्षितार्थत्वादिदोषपरिहारार्थमित्यर्थः। 'स्नात्वा जुहुयात्' इत्युक्ते हि होमः स्नानाङ्गकः स्यात्; तथेदमपीति भावः। न हि क्रतुज्ञानस्य तदनुष्ठानमङ्गम्; अपि त्वनुष्ठानस्यानुष्ठेयज्ञानमङ्गं स्यात्; तद्वदिहापि ॥ ६ ॥

**नियमात् ॥** कृत्स्नस्यायुषः क्रतुशेषत्वात् मध्ये प्राप्तमन्यत् सर्वं तच्छेषभूतमित्यर्थः। इमानि पूर्वपक्षसूत्राणि ॥ ७ ॥

उत्तरसूत्रमवतारयति **एवं प्राप्त** इति।

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥** कथं विद्यातः फलम्, विद्यायाः

---

1 श्रुतौ कर्मातिशेषेणेत्यस्य गुरुकर्मानवरुद्धकालेनेत्यर्थवर्णने अधीत्येत्यधस्तादन्वयादन्यक्लेशः। कर्मेति पदं पृथक्कृत्य अतिशेषेण गुरोःकर्म समावृत्येत्यन्वयो न सुवचः, समावर्तनस्य कर्मनिराकांक्षत्वात्। न हि निर्वर्तनं समावर्तनम्। अत्र समावृत्येत्यस्य प्रसिद्धार्थ एव 'अध्ययनमात्रवतः' इत्यत्र टीकायां वक्ष्यते च। अतः अतिशेषशब्देऽव्ययीभावश्चेत्, तृतीयासप्तम्योरिति तृतीया। अतिहिममित्यत्रेव शेषाभावोऽर्थः। वस्तुत व्यृद्धिशब्दात्ययशब्दादिवत् सुबन्त एव शेषाभावार्थः। गुरुकर्मशेषाभावेनेत्यर्थः। दक्षिणादि समर्प्येति यावत्। निःशेषमित्यपि तस्मिन्नर्थेऽव्ययीभावः। समावृत्येत्यनेवान्वयः।

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३-४-८

तुशब्दात् पक्षो व्यावृत्तः । विद्यात एव पुरुषार्थः । कुतः । अधिकोपदेशात्—कर्मसु कर्तुर्जीवात् हेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेनाधिकस्य—अर्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् भगवतो बादरायणस्य विद्यातः पुरुषार्थः फलमित्येवमेव मतम् । लिङ्गानि तिष्ठन्तु ; वेद्यतयोपदेशस्तु तावत् कर्तुः प्रत्यगात्मनोऽधिकस्यैव । कथम् । तद्दर्शनात्—प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य वेद्यस्य निरस्तनिखिलहेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिकस्य कृत्स्न[स्य] प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात्—"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः", "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत", "यः सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "स एको ब्रह्मण आनन्दः", "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः", "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः", "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः", "भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः" इत्यादिषु । तस्मात् वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योतकल्पस्याविद्यादिहेयसंबन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयायाः विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्र तत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥ ८ ॥

लिङ्गान्यपि निरस्यन्ते—

तुल्यं तु दर्शनम् ॥ ३-४-९ ॥

यदुक्तम्—ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गमिति, तन्न । विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनम् । ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः । अननुष्ठानस्यापि दर्शनात् । दृश्यते हि ब्रह्मविदां कर्मत्यागः, "ऋषयः कावषेयाः, किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ । अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गम् । कथमिदमुपपद्यते-ब्रह्मविदां कर्मानुष्ठानमननुष्ठानञ्च;

---

कर्माङ्गत्वे लिङ्गानि दर्शितानि हीत्यत्राह **लिङ्गानि तिष्ठन्त्व**ति । **तद्दर्शना**दिति सूत्रखण्डोपादानम् । उपासनवाक्योपयोगित्वात् स्वरूपपरवाक्यानां **वेदनोपदेशवाक्ये**ष्वित्युक्तम् । स्वरूपपरवाक्योक्तगुणानामुपासनापेक्षितत्वादित्यर्थः । शुद्ध्यशुद्ध्युभयावस्थजीवस्यासंभावनीयानन्तकल्याणगुणा उच्यन्ते **परस्य ब्रह्मण** इत्यन्तेन । उक्तगुणविशिष्टत्वे प्रमाणमाह **अपहतपाप्मे**ति । जुहूवत् कर्तुरात्मनः प्रत्यभिज्ञाने सति हि तद्द्वारा विद्यायाः कर्माङ्गत्वम् । वेदनोपदेशवाक्येषु जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावान्न तद्द्वारा विद्यायाः कर्माङ्गत्वमिति श्रूयमाणं फलमपि नार्थवादरूपम् । तस्माद्विद्यायाः पृथक्फलसाधनत्वेन न क्रत्वर्थत्वम् ; किन्तु पुरुषार्थत्वमेवेत्यर्थः ॥ ८ ॥

उत्तरसूत्राणां कृत्यमाह **लिङ्गान्यपी**ति ।

**तुल्यं तु दर्शनम्** ॥ **अनैकान्तिक**शब्देनानियतत्वमुच्यते । **किमर्थाः**—किंप्रयोजनाः । अङ्गित्वे ह्यननुष्ठानं नोपपद्यत इति भावः । अनुष्ठानाननुष्ठाने व्याहते इत्यभिप्रायेणाह **कथ**मिति ।

फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात् तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते। वक्ष्यति च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात् तस्यानुष्ठानदर्शनमुपपन्नतरम्। विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते ॥ ९ ॥

यदुक्तम्—श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यत इति ; तत्राह—

**असार्वत्रिकी ॥ ३-४-१० ॥**

न सर्वविद्याविषयेयं श्रुतिः, अपि तूद्गीथविद्याविषयैव, "यदेव विद्यया करोति" इति यच्छब्दस्यानिर्धारितविशेषस्य, "उद्गीथमुपासीत इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्। न हि यत् करोति, तत् विद्ययेति संबध्यते, यदेव विद्यया करोति तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते ॥ १० ॥

यच्चेदमुक्तम्—"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यदर्शनाद्विद्या कर्माङ्गम्—इति ; तत्राह—

**विभागः शतवत् ॥ ३-४-११ ॥**

"तं विद्याकर्मणी समन्वारभेते" इत्यत्रोक्तेन न्यायेन विद्याकर्मणोर्भिन्नफलत्वाद्विद्या स्वस्मै फलाय समन्वारभते, कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः। शतवत्—यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतम्, रत्नार्थं शतमिति विभागः प्रतीयते ; तथेहापि ॥ ११ ॥

**अध्ययनमात्रवतः ॥ ३-४-१२ ॥**

यदुक्तं—विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति, नैतद्युक्तम्, 'वेदमधीत्य' इति अध्ययन-

---

फलाभिसन्धीति। भवत्पक्ष एवेयं व्याहतिरित्याह **विद्याया** इति। ब्रह्मविद्याफलानामर्थवादत्वेन मोक्षाख्यफलानभ्युपगमात्, 'मोक्षैकफलं कर्मानुष्ठेयम्, त्रिवर्गफलं त्वननुष्ठेयम्' इति विभागानुपपत्त्या व्याहतिस्तवैवेत्यर्थः ॥ ९ ॥

अनन्तरसूत्रशङ्कामाह **यदुक्त**मिति । **असार्वत्रिकी** ॥ प्रकरणाच्छ्रुतिर्बलीयसीत्युक्तमिति शङ्कायाम्—'एकपदसामर्थ्यं[1] हि श्रुतिः, अत्र च सामर्थ्यं नास्ति' इत्यभिप्रायेणाह—**न हीति**। यत् करोति तत् विद्ययेत्युक्ते विद्याया अङ्गत्वं विहितं स्यात्। न च तथान्वयः। यदेव विद्यया करोति, तदेव वीर्यवत्तरमित्यन्वयः। तथा सति यच्छब्दानूदितस्य विद्यया क्रियमाणस्य प्रापकप्रमाणाकाङ्क्षायां प्रकरणसंनिहितोद्गीथविद्या, 'यदेव विद्यया' इति विद्याशब्दं सङ्कोचयति। [1]अतोऽनुवादरूपत्वात् प्रमाणान्तरसापेक्षत्वेन स्वतोऽर्थनिश्चयसामर्थ्याभावात् विद्ययेति पदमेकपदसामर्थ्यरूपा[2] श्रुतिर्न भवतीत्यर्थः ॥१०॥

अनन्तरसूत्रस्य शङ्कामाह **यच्चेद**मिति। **विभागः शतवत्** ॥ समन्वारम्भणश्रुतिः सांसारिकफलविद्याकर्मविषया। विद्या स्वफलप्रदानायान्वेति, कर्म च स्वफलप्रदानायेत्यर्थः। ब्रह्मविद्यातदङ्गकर्मविषया वा स्यादियं श्रुतिः ; विद्या 'नेहाभिक्रमनाशोऽस्ति' इति न्यायात् प्रारब्धावसाने मुक्तिदानायान्वेति, कर्म च जन्मान्तरेऽपि विद्योत्पादनायान्वेतीत्यर्थः ॥ ११ ॥

---

1 प्रस्तुतोद्गीथकर्मविशेषपरत्वादित्यर्थः। 2 सामर्थ्यविशिष्टपदं श्रुतिरिति यावत्। प्रकरणवशादर्थान्तरस्यैव बोधनात् पूर्वपक्ष्यभिमतविद्याबोधनसामर्थ्यं भग्नमिति भावः।

मात्रवतो विधानात्। न चाध्ययनविधिरेवार्थाववोधे प्रवर्तयति; आधानवत् अध्ययनस्याक्षरराशिग्रहणमात्रे पर्यवसानात्। गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात् तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते। ततः कर्मार्थी कर्मज्ञाने प्रवर्तते, मोक्षार्थी च ब्रह्मज्ञाने—इति न विद्या कर्माङ्गम्। यद्यप्यध्ययनविधिरेवार्थाववोधे प्रवर्तयति, तथाऽपि न विद्या कर्माङ्गम्, अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः। यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात् फलसाधनभूतं कर्मानुष्ठानमर्थान्तरम्; तथाऽर्थज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसंबन्धगन्धो विद्यते ॥ १२ ॥

---

**अध्ययनमात्रवतः** ॥ **आधानवदिति**। 'अग्नीनादधीत' इत्यत्र आधानेनाग्नेः सम्पाद्यत्वमात्रमुक्तम्; न तूत्तरक्रतुविनियोगः। अग्निशब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्या[1]त्। तथाऽत्रापीत्यर्थः। एवं शब्दस्वारस्यमुपपादितम्। अथार्थानुपपत्तिः परिह्रियते **गृहीतस्य चेति**। प्रवर्तकाभावान्मीमांसाया अनारम्भणीयत्वं ह्यनुपपत्तिः। साऽपि रागतः प्रवृत्त्या परिह्रियत इत्यर्थः॥ श्रुतेरविवक्षितार्थत्वमपि परिहृतं भवति। अध्ययनविधेः प्रयोजनपर्यवसायित्वमपि परम्परयोपपद्यते, अर्थज्ञानपर्यन्तत्वपक्षवदिति। **कर्मावबोधित्वदर्शनादि**त्यापातप्रतीतिरुच्यते। तत्र कर्मोपक्रमत्वात् प्रथमं कर्मविचार उपपद्यते। आपातप्रतीत्या प्रवृत्तावपि, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्यादिभिर्व्याकुलतया न केवलं ब्रह्मविचार एव, कर्मविचारोऽपि कर्तव्य एव॥

अध्ययनविधेरर्थज्ञानपर्यन्तत्वे, 'वेदमधीत्य स्नास्यन्' इत्यध्ययनानन्तरं समावर्तनस्मृतेर्बाधितत्वात् मीमांसाश्रवणस्यावसरः स्यात्; रागतः प्राप्तौ नावसर इति चेत्—[न]। क्त्वाप्रत्ययः समानकर्तृकत्वपूर्वकालत्वमात्रपरः, न त्वानन्तर्यपरः। अतो न विरोधः। आनन्तर्येऽपि, स्वोपयोग्यर्थज्ञानस्यावसरप्रद एव विधिः; यथा क्रतुविधिरर्थार्जनादेः। न केवलं स्मृतिसिद्धा समावृत्तिः; श्रुतिसिद्धा च। 'अधीत्य.... अभिसमावृत्य' इति हि श्रूयते। अतो नाध्ययनविधिर्बाधते। किञ्च श्रुतिस्मृत्योर्विरोध एव नास्ति, येन बाध्यबाधकभावः स्यात्। उभयत्राप्यध्ययनशब्दस्यार्थज्ञानपर्यन्तत्वे वा अक्षरराशिग्रहणपर्यन्तत्वे वा तुल्यार्थत्वात्। समावृत्तस्यापि मीमांसाश्रवणावसरः श्रावयितुरिव स्यादेव। यावदर्थज्ञानं हितैषिवचनादनुष्ठानमप्युपपद्यते; यथा ब्रह्मचर्ये। न च तावता मीमांसानैरपेक्ष्यम्, हितैषिणामाप्तत्वनिश्चयार्थं स्वयं शिष्याणामुपपादनार्थं च श्रवणोपपत्तेः। न चाध्ययनजन्यज्ञाननिरपेक्षं हितैषिवचनादनुष्ठानेऽपशूद्राधिकरणविरोधः, हितैषिवचनादनुष्ठानेऽपि मन्त्रब्राह्मणविशेषाणां कृत्स्नवेदस्य च जप्यत्वात् तस्य चाध्ययनेनैव सम्पाद्यत्वात्, अध्ययनस्य चोपनयनाङ्गकत्वात्, उपनयनस्य च त्रैवर्णिकाधिकारत्वाच्च शूद्रादेरुपनयनानधिकारादनुष्ठानानुपपत्तेः। 'न शूद्राय मतिं दद्यात्', 'न चास्योपदिशेद्धर्मम्' इति निषेधाच्च शूद्रादेर्नोपदिशन्ति।

अतोऽध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावादध्ययनवतः कर्मविधानेऽप्यर्थज्ञानस्य कर्मविधिशेषत्वाभावान्न विद्या कर्माङ्गमित्यर्थः। अर्थज्ञानपर्यन्तत्वं विधेरभ्युपगम्य परिहरति **यद्यपीति**। **अर्थज्ञानादर्थान्तरत्वात्**—

---

1 आधानवाक्यस्य क्रतुप्रकरणपाठाभावेन क्रत्वङ्गभूताग्नीति विशेषग्रहणं न भवति। अध्ययनविधिवाक्येऽपि तथा स्वाध्यायमात्रग्रहणम्; न विशेषस्य।

## नाविशेषात् ॥ ३-४-१३ ॥

यच्चोक्तम्, "कुर्वन्नेवेह कर्माणि" इत्यात्मविदं ज्ञानाद्याश्रित्य यावज्जीवं कर्मानुष्ठाने नियमयतीति—तन्नोपपद्यते ; अविशेषात्। न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः। "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च, विदुषस्त्वाप्रयाणादुपासनस्यानुवर्तमानत्वात् ॥ १३ ॥

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य "कुर्वन्नेवेह कर्माणि" इत्यस्यार्थमाह—

## स्तुतयेऽनुमतिर्वा ॥ ३-४-१४ ॥

वाशब्दोऽवधारणार्थः, "ईशा वास्यमिदं सर्वम्" इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम्। विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति। वाक्यशेषश्चैवमेव दर्शयति—"एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति। अतो न कर्माङ्गं विद्या ॥ १४ ॥

## कामकारेण चैके ॥ ३-४-१५ ॥

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते, "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति। विदुषो विरक्तस्य कामकारेण गार्हस्थ्यकर्मत्यागं

---

अध्ययनशब्दवाच्य[1]व्यतिरिक्तत्वाद्विद्याया इत्यर्थः। न ह्यर्थज्ञानस्य ज्योतिष्टोमादिकर्म शेषभूतम् विपरीतं हि तत्। एवं शास्त्रजन्यज्ञानमुपासनाख्याया विद्यायाः शेषभूतमित्यर्थः ॥ १२ ॥

**नाविशेषात्** ॥ पूर्वपक्षिणोक्तस्य कर्मणैवेत्यादिवचनस्यापि [2]विद्याङ्गभूतकर्मविषयत्वमभिप्रेत्याह **कर्मणैव हीति**। तस्य यावज्जीवमनुवृत्तिरङ्गिन उपासनस्यानुवर्तमानत्वादुपपन्नेत्याह **विदुषस्त्विति** ॥ १३ ॥

उत्तरसूत्रसङ्गतिमाह **एवमिति**। **अर्थस्वाभाव्यं**-विद्याया अर्थज्ञानादर्थान्तरत्वं कर्मेतिकर्तव्यताकत्वं च। **स्तुतयेऽनुमतिर्वा** ॥ **ईशा वास्य**मिति ईट्छब्दः तृतीयान्तः ईशा। तेन वास्यम्। यद्वा [3]**ईशेन आवास्यम्** ; ईश्वरपरतन्त्रमित्यर्थः। **नरे**—न रमत इति **नरः** निस्सङ्गः। तस्मिन् इतोऽन्यथा नास्ति—नरे त्वयि न कर्म लिप्यत इतीतोऽन्यथा नास्ति। इदमेव (इदम् **एवम्** —?) तत्त्वम् ; न तु स्तुतिमात्रमित्यर्थः[4] ॥ १४ ॥

**कामकारेण चैके** ॥ गार्हस्थ्यत्यागमधीयत इत्यध्याहारः। **यज्ञादीति**। न [5]ह्यङ्गमवलम्ब्याङ्गिनस्त्याग उपपद्यते। तस्मात् त्याज्यस्य कर्मणोऽङ्गित्वं नास्तीत्यर्थः ॥ १५ ॥

---

1 परमुखात् सार्थकशब्दग्रहणमध्ययनम्। तत्रार्थग्रहणमपि वाच्यान्तर्गतमित्युक्तावपि विद्या न वाच्येत्यर्थः।

2 वस्तुतो गीतावचनस्य कर्मयोगपरत्वादन्यार्थत्वं कुर्वन्निति श्रुतेरिवेति भावः।

3 अनादिपदविभागरीत्युपेक्षया ईशशब्दग्रहणेऽपि न नः किञ्चिदनिष्टम्, प्राणाकाशादि-शब्दवदुपपत्तेरित्याशयेनाह यद्वेति। अत्रोपनिषदि श्रीदेशिकभाष्यं द्रष्टव्यम्।

4 अत्र सूत्रद्वयभाष्यटीकाविवरणमस्मदीये आचार्यभाष्यतात्पर्ये द्रष्टव्यम्।

5 तदादृतविद्यायाः कर्माङ्गत्वे कर्मार्थं विद्यावलम्बिनः कर्म कथं त्यजेयुरित्यर्थः। अतो विधेयमन्या।

ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति । यज्ञादिकर्माङ्गत्वे हि विद्यायाः, विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न संभवति । अतो न विद्या कर्माङ्गम् ॥ १५ ॥

उपमर्दं च ॥ ३-४-१६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं च प्रतिवेदान्तमधीयते, "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिकम् । तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि॥३-४ १७॥

ऊर्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्यादर्शनात् तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम् ॥ ननूर्ध्वरेतस आश्रमा न सन्त्येव, "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना अग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः । श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात् । अत आह शब्दे हि इति । वैदिके एव हि शब्दे ते दृश्यन्ते, "त्रयो धर्मस्कन्धाः", "ये चेमे अरण्ये श्रद्धा तप इत्युपासते", "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादौ । यावज्जीवश्रुतिस्त्वविरक्तविषया ॥ १७ ॥

परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ ३-४-१८ ॥

यदिदम्, "त्रयो धर्मस्कन्धाः" इत्यादौ वैदिके शब्दे ऊर्ध्वरेतस आश्रमा दृश्यन्ते; अतस्ते सन्त्येवेति—नैतदुपपद्यते, यतः"त्रयो धर्मस्कन्धाः"इत्यादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते—अनुवादमात्रमित्यर्थः । कुत एतत् । अचोदनात्—अविधानादित्यर्थः । न ह्यत्र विधिशब्दः श्रूयते ; "त्रयो धर्मस्कन्धाः" इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते ; "ब्रह्मसंस्थोऽमृतत्वमेति" इत्युपसंहारात् । अतोऽन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणाम् । "ये चेमे अरण्ये श्रद्धा तप इत्युपासते" इति च देवयानविधिपरत्वात् तत्रापि नाश्रमान्तरविधिसंभवः । अपि चापवदति हि श्रुतिराश्रमान्तरम्, "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका । अत ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥ १८ ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३-४-१९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः?। साम्यश्रुतेः—उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते ।"त्रयो धर्मस्कन्धाः"इत्यारभ्य

---

**उपमर्दं च ॥ तस्मिन् दृष्टे परावर इत्यादिकमिति ।** [1]अर्थप्रधानो निर्देशः । इत्याद्युक्तार्थरूपमुपमर्दमित्यर्थः । **तद्विद्याया इति ।** न ह्यङ्गेनाङ्गिन उपमर्द उपपद्यते । तस्मादुपमर्दिका विद्या उपमर्दनीयस्य कर्मणो नाङ्गमित्यर्थः ॥ १६ ॥

**ऊर्ध्वरेतस्सु च शब्दे हि ॥** स्मृतिष्वाश्रमाः प्रतीयन्त इत्यत्राह-**श्रुतिविरुद्धानामिति ।** **धर्मस्कन्धाः**—धर्माश्रया आश्रमाः ॥ १७ ॥

**परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ अन्यार्थं**—ब्रह्मोपासनस्तुत्यर्थम् ॥ १८ ॥

---

[1] उपमर्दकर्मकेऽध्ययने पुनः शब्दकर्मकत्वायोगात् इत्यादिकमिति उपमर्दविशेषणं करोति । अध्ययनक्रियाविशेषणं वा । इत्यादिकमित्यस्य तदित्युपरितनवाक्ये घटनं वा । तदा तदित्यस्य अधीयमानमित्यर्थः ।

ब्रह्मसंस्थस्तुत्यर्थतया सङ्कीर्तनं गृहस्थाश्रमस्येतरेषां च समानम्[1]। अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव संभवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतम्, तदितरेषामपि [2]समानमन्यत्रा-ऽभिनिवेशात्। न च—गार्हस्थ्यधर्म एव, यज्ञोऽध्ययनं दानं तपो ब्रह्मचर्यमिति सर्वैः शब्दैरभिधीयते, ब्रह्मचर्यतपसोर्गृहस्थस्यैव संभवात्—इति युक्तम्; त्रयो धर्मस्कन्धाः इति त्रित्वेन संगृह्य, "प्रथमः... द्वितीयः... तृतीयः" इति विभागवचनानुपपत्तेः। अतः "यज्ञोऽध्ययनं दानम्" इति गृहस्थाश्रम उच्यते। अध्ययनशब्दो वेदाभ्यासपरः। तपःशब्देन वैखानस-पारिव्राज्ययोर्ग्रहणम्, उभयोस्तपःप्रधानत्वात्। तपःशब्दो हि कायक्लेशे रूढः। स च द्वयोरपि समानः। ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते। "ब्रह्मसंस्थोऽमृतत्वमेति" इति परत्र श्रूयमाणो ब्रह्मसंस्थशब्दो यौगिकः सर्वाश्रमसाधारणः; सर्वेषामाश्रमिणां ब्रह्मसंस्थासंभवात्। ब्रह्मणि संस्था—संस्थितिः ब्रह्मसंस्थत्वम्। तच्च सर्वेषां संभवत्येव। ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः; तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाग्भवति। तदेतद्विस्पष्टमुक्तं भगवता पराशरेण, "प्राजापत्यं ब्राह्मणानाम्" इत्यारभ्य "ब्राह्मं संन्यासिनां स्मृतम्" इत्यन्तेन वर्णानामा-श्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय, "एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः" इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता। अतो गृहस्थाश्रमतुल्या ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति अरण्य इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वाद् देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥

---

**अनुष्ठेयं बादरायणः साम्यश्रुतेः** ॥ आश्रमशब्दो धर्मपरः। स्तुत्यर्थतयाऽनुवादसाम्यं[1] प्रमाणान्तर-प्राप्तिसाम्यं[2] चोभयं सूत्राभिप्रेतम्। आश्रमान्तरकीर्तने सति हि साम्यं वक्तव्यम्। तदेव नास्ति; गार्हस्थ्यधर्माणामेव कीर्तनादित्याशङ्कते **न च गार्हस्थ्ये**ति। परिहरति **त्रय** इति। व्याख्याना-न्तरव्यावृत्त्यर्थं [च] व्याचष्टे **अतो यज्ञ** इति। ब्रह्मसंस्थशब्दः संन्यासाश्रमविषयः परैर्व्याख्यातः; तद्व्यावृत्त्यर्थमाह **ब्रह्मसंस्थ** इति। **यौगिकः**—यौगिकत्वात्। अनेन 'क्लृप्तावयवशक्त्यैव' इत्याद्युक्तनयात् ब्रह्मसंस्थशब्दस्य चतुर्थाश्रमपरत्वानुपपत्तिरुक्ता। अर्थानुपपत्त्याऽपि न तथाऽर्थो वर्णनीय इत्याह **सर्वेषा**मिति। तस्यामेव श्रुतौ **पुण्यलोकभाजः** इत्युक्तम्; तद्व्याचष्टे **ब्रह्मनिष्ठाविकला** इति। **तदेत**दित्यादि। **अभिदधता पराशरेणे**त्यन्वयः। 'ये चेमेऽरण्ये' इत्यादिवाक्यस्य देवयानविधि-परत्वादाश्रमविधिपरत्वाभाव उक्तः पूर्वपक्षिणा; तत् परिहरति **ये चेमेऽरण्य** इति। देवयानविधानार्थं कृतोऽप्यनुवादो वानप्रस्थपारिव्राज्ययोः प्रमाणान्तरप्राप्तिसापेक्ष इति तत्रापि विधिरस्त्येवेत्यर्थः ॥ १९ ॥

---

1, 2. अनुवादःविध्यनधीनस्वैरलोकसमाचारस्येति चेत्—तत् समानमिह गृहस्थाश्रमेपीति समानमित्यन्तभाष्योक्तम्। तदसहनेन अथेत्याशंकितं प्रामाणिकार्थस्यैवानुवाद इति। तदिदं प्रमाणान्तरप्राप्तिसाम्यमिति उभयोर्भेदः।

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमित्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषाम्, नानुवाद इत्युपपादयितुमाह—

**विधिर्वा धारणवत् ॥ ३-४-२० ॥**

वाशब्दोऽवधारणार्थः। विधिरेवायमाश्रमाणाम्, धारणवत्। यथा दिग्यग्निहोत्रे, "अधस्तात् समिधं धारयन् अनुद्रवेत्; उपरि हि देवेभ्यो धारयति" इत्यत्रानुवादसरूपादपि वाक्यादुपरि धारणस्याप्राप्तत्वाद्विधिराश्रीयते ; तदुक्तं शेषलक्षणे, "विधिस्तु धारणेऽपूर्वत्वात्" इति-- तथा अत्राप्यप्राप्तत्वाद्विधिरेवाश्रयणीयः।

"ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद् वनी भूत्वा प्रव्रजेत्। यदि वेतरथा, ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा। यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति जाबालानामाश्रमविधिमसन्तमिव कृत्वा एतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम्। एवमाश्रमान्तरविधानात् ऋणश्रुतिर्यावज्जीवश्रुतिरपवादश्रुतिश्चाविरक्तविषया एवेति वेदितव्याः। अन्याश्च, ब्रह्मविदः कर्मणामाप्रयाणादवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रमधर्मविषयाः। अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानाद्विद्यातः पुरुषार्थ इति सिद्धम् ॥ २० ॥ इति पुरुषार्थाधिकरणम् ॥

---

उत्तरसूत्रसंगतिमाह— **परामर्शपक्ष** इति। **विधिर्वा धारणवत्** ॥ इयमस्मिन् सूत्रे [1]कृत्वाचिन्तेत्याह **ब्रह्मचर्यं समाप्येत्यादिना**। **ऋणश्रुतिः** 'त्रिभिःऋणै ऋणवा जायते' इत्यादिका। **अपवादश्रुतिः** 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्येषा। 'स खल्वेवं वर्तयन् यावदायुषम्' इत्यादिका आश्रमविशेषधर्मावृत्तिपराः श्रुतयोपि तत्तदाश्रमिणां तत्तद्धर्मानुवृत्तिपराः, न त्वाश्रमान्तरधर्माणां ब्रह्मविद्याङ्गत्वविरोधिन्य इत्याह **अन्याश्चेति**। अधिकरणार्थमुपसंहरति **अत** इति। ऊर्ध्वरेतसां ब्रह्मविद्याविधानेन विद्याया गृहस्थाश्रमधर्मं प्रत्यङ्गत्वाभावेन पृथक्फलसाधनत्वात् विद्यातः पुरुषार्थसिद्धिरित्यर्थः।

**इतरे त्रयोऽपि**—'विभागः शतवत्' इत्येतत् पुरुषभेदेन विभागपरमाहुः—'आभ्यां शतं देयम्' इत्युक्ते, पञ्चाशदेकस्य पञ्चाशदन्यस्येति विभागवदिति। तदयुक्तम्; 'तं विद्याकर्मणी समन्वारभेते' इत्येकस्मिन्नेव पुरुषे द्वयोरन्वारम्भणप्रतीतेस्तदविरोधेन विभागस्य दर्शनीयत्वात्।

**परे चापरे च**—अध्ययनस्यार्थावबोधपर्यन्ततामिच्छन्तो **मात्रशब्दस्य** वेदान्तसिद्धमात्मज्ञानं व्यवच्छेद्यमिति तस्य न कर्मशेषतेत्याहुः। तच्चायुक्तम्। सूत्रास्वारस्यात्। अर्थावबोधपर्यन्ततायाः शब्दस्वारस्यार्थानुपपत्तिविरहविध्वस्तत्वाच्च। **त्रयोऽपि, नाविशेषादिति** सूत्रम्, विदुष एवायं नियम इति विशेषाभावादविद्वद्विषयोऽयं **कुर्वन्नेवेति** नियमः इति व्याचक्षते। तदप्ययुक्तम्; ब्रह्मविदः प्रकृतत्वात्। अतः स्वतन्त्रकर्मविषयत्वे विशेषाभावाद्विद्याङ्गकर्मविषयत्वेनापि नियमोपपत्तिरूपतया व्याख्यानं युक्तम्। **अन्ये तु—परामर्शं जैमिनिरित्यादि** अधिकरणान्तरं वर्णयन्ति। तदपि तादर्थ्यनैरन्तर्याभ्यामयुक्तम्। **परे तु** ऐकाधिकरण्यमिच्छन्त एव **विधिर्वा धारणवदित्यत्र** 'त्रयो धर्मस्कन्धाः' इत्यादौ विषये **तपश्शब्दो** वनस्थमात्रपरः; **ब्रह्मसंस्थशब्दः** परिव्राजकवाची;

---

1 अनेन, सौत्रो वाशब्दः अनास्थायामिति भाष्याशयः विध्यन्तरसद्भावादित्युक्तं भवति।

## स्तुतिमात्राधिकरणम् ३ ४-२

### स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३-४-२१ ॥

इदमिदानीं चिन्त्यते,—"स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः" इत्येवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि, आहोस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्थानि—इति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन

त्रयाणां पुण्यलोकभाक्त्वमुक्त्वा ब्रह्मसंस्थस्यामृतत्वप्राप्तिवचनात्, यथा[1] देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरो महाप्राज्ञ इत्युक्ते विष्णुमित्रो महाप्राज्ञ इत्युक्तं स्यात्, न तु यज्ञदत्तः, तद्वदिति । तदनुपपन्नम्; तपश्शब्दस्य वनस्थमात्रपरत्वेऽपि ब्रह्मसंस्थशब्दस्य यौगिकत्वसम्भवेन प्रोक्षणीन्यायात् परिव्राजि रूढिकल्पनानुपपत्तेः प्रकृताश्रमत्रयमात्रावलम्बनत्वेनास्य वचनस्य परिव्राजाममृतत्वप्राप्तौ प्रमाणत्वाभावप्रसङ्गात् । अतः, 'तेषां खल्वेषां भूतानां त्रीण्येव बीजान्यण्डजं जीवजमुद्भिज्जम्' इत्यवधारणे सत्यपि स्वेदजोद्भिज्जयोरिव, अनवधारणस्थले तपश्शब्देनाऽऽश्रमद्वयस्य तन्त्रेणोपादानोपपत्तेः, पुण्यलोकभाक्त्वामृतत्वयोः तेष्वेवाश्रमेषु विद्वदविद्वद्विषयत्वेनोपपत्तेः, "प्राजापत्यं गृहस्थानाम्" इत्यादिस्मृत्यैकार्थ्याच्चाऽऽश्रमचतुष्टयविधिः । न च कर्मावरुद्धत्वेनाश्रमान्तराणामात्मानुसन्धानानवकाशः; कर्मानवरुद्धकालबाहुल्यात् । न हि सर्वस्मिन्नहोरात्रे उपासीतेति विधिः । अन्यथा जनकादीनामात्मवेदनादपवर्गप्राप्तिवचनानुपपत्तेः । उभयभावनानिष्ठगोचरशास्त्रवैयर्थ्यं च स्यात । यत्तु देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरो महाबुद्धिरिति निदर्शनम्, तत्रापि कालभेदेन यज्ञदत्तादिविषयत्वं युज्यते । [2]दृष्टान्तवैघट्यं च । तत्र धर्म्यन्तरोपस्थापकान्यतरशब्दसमभिव्याहारात् यौगिकस्य महाबुद्धिशब्दस्य धर्म्यन्तरनिष्ठत्वं युक्तम्; इह तु ब्रह्मसंस्थशब्दातिरेकेण विशेष्यसमर्पकपदाभावात् प्रकृतविषयत्वमेव स्यात् ॥ २० ॥

अनन्तराधिकरणद्वयं प्रासङ्गिकम् । **स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्** ॥ ब्रह्मसंस्थस्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्य आश्रमद्वयस्य विधानमुक्तम्; एवं स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराणि, उत नेति शङ्का जायत इति प्रासङ्गिकी सङ्गतिः । पूर्वं सप्तानां रसानां प्रतिपादितत्वादुद्गीथस्याष्टमरसत्वम् । **स एष रसाना**मित्यादिवाक्यानि किमुद्गीथादिस्तुतिमात्रपराणि, उत उद्गीथादिषु रसतमत्वादिदृष्टिविधिपराणि; किमेषामर्थवादत्वसमाश्रयणं न्याय्यम्, उत विधिपरत्वम्; अपूर्वत्वं किं विधित्वमवगमयति, नेति । न चेत्, अर्थवादत्वस्य न्याय्यत्वात् स्तुतिपराणि । अवगमयति चेत्, विधिपरत्वस्य न्याय्यत्वात् रसतमत्वादिदृष्टिविधिपराणि । उद्गीथाद्युपासनानां पुरुषार्थत्वं प्रागुक्तम्; तत् कथमुपासने संशय इत्यत्राह **अत्र प्रतिपादित**मिति ।

---

1 देवेति । देवदत्तयज्ञदत्तविष्णुमित्राणां प्रज्ञाविचारावसरे इति आदिः । अत्र द्वयस्यैकरूपत्वात् विधाद्वयधिया अन्यतर इति तरप्, न तु तमप् । विष्णुमित्रशब्दस्यैव प्रयोगे संदेहानवसरात् तदवसरप्रदर्शनाय शांकररीतिमुपेक्ष्य अन्यतरशब्दप्रयोगः ।

2 मन्दप्रज्ञौ भवतः महाबुद्धिर्भवतीति लडर्थविवक्षायां कालभेदायोगात् दूषणान्तरमाह । तदा अन्यतरपदस्य धर्म्यन्तरपरत्वमवर्जनीयम् । इह न तथा; अमृतत्वमेतीत्यस्य च प्रकृतविषयत्वं भवितुमर्हतीति भावः ।

क्रतुषूपादानानियम उक्तः। किं युक्तम्? स्तुतिमात्रपराणीति। कुतः? उद्गीथाद्युपादानात्। क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम्। यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य, "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिकस्य तत्स्तुतिमात्रपरत्वम्; तथेहापि। तदिदमाशङ्कते—स्तुतिमात्रमुपादानादिति चेत् इति। उद्गीथाद्युपादानात् तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत्—

अत्रोत्तरं नापूर्वत्वादिति। न स्तुतिमात्रत्वमुपपद्यते। कुतः। अपूर्वत्वात्—अप्राप्तत्वादिति। न ह्युद्गीथादयो रसतमादित्तया प्रमाणान्तरेण प्रतिपन्नाः; येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन्। न चोद्गीथादिविधिरत्र संनिहितः; येन, "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिवत् तदेकवाक्यत्वेन यया कयाचन विधया तत्स्तुतिपरत्वमाश्रीयेत। अतः क्रतुवीर्यवत्तरत्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम्॥ २१॥

**भावशब्दाच्च ॥ ३-४-२२ ॥**

उपासीतेत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम्। विधिप्रत्यययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति। तस्मादुपासनविधानार्था एताः श्रुतयः॥ २२॥

इति स्तुतिमात्राधिकरणम्॥

---

**उद्गीथाद्युपादाना**दित्येतत् विवृणोति **क्रत्वङ्गे**ति। ततः किमित्यत्राह **यथे**ति॥ ननु क्रत्वङ्गोपादानपूर्वकप्रतिपादनं स्तुतिश्चेत्, क्रत्वङ्गजुहूपादानपूर्वकपर्णताप्रतिपादनमपि स्तुतिः स्यात्॥ नैवम्; क्रत्वङ्गोपादानपूर्वकस्य पुरुषेण साधयितुमशक्यगुणप्रतिपादनस्यैव स्तुतिरूपत्वात्। शङ्काया अनुत्सूत्रतामाह **तदिद**मिति। उक्तमर्थं सूत्राक्षरेषु दर्शयति **उद्गीथादी**ति।

**अत्रोत्तर**मित्यादि। **अपूर्वत्वा**दित्येतद्व्याचष्टे **अप्राप्तत्वा**दिति। तदुपपादयति **नही**ति। स्तुतिर्हि प्रमाणान्तरप्राप्तगुणानुवादेन वा, अप्राप्तगुणविधानेन वा, मुख्यवृत्त्युपस्थापितगुणासम्भवे वृत्त्यन्तरोपनीतगुणान्वयेन वा क्रियते। तत्र प्रमाणान्तरप्राप्तगुणानुवादरूपस्तुत्यनुपपत्तौ हेतुः सूत्रे कण्ठोक्तः। तर्ह्यप्राप्तगुणविधानेन स्तुतिरियं स्यात्, यत् रसतमत्वादिकथनमिति चेत्—न; उद्गीथादेः रसतमादिकत्वस्यायोग्यत्वात्; अयोग्यार्थस्य च विधातुमशक्यत्वात् तद्विधानेन स्तुत्यनुपपत्तेरिति परिहारः सूत्रे भाष्ये चाभिप्रेतः। ननु मुख्यार्थायोग्यत्वे सति, 'इयमेव जुहूः' इत्यादाविव वृत्त्यन्तरोपनीतगुणान्वयेन स्तुतिः स्यात्। यदि स्वरूपेणान्वयायोग्यस्यापि रसतमत्वादेरारोपणस्य शक्यत्वात् दृष्टिविधिः, तर्हि 'इयमेव जुहूः' इत्यादिष्वपि दृष्टिविधिः स्यादित्यत्राह **न चोद्गीथादिविधि**रिति। आदिशब्देन पञ्चविधसामविध्यादिकं गृह्यते। **यया कयाचन विधया**। अमुख्यवृत्त्येत्यर्थः। इयमेवेत्यादिवाक्यस्य कर्मविधिप्रकरणसंनिधानात् "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति न्यायादेकवाक्यत्वसिद्ध्यर्थममुख्यवृत्त्या स्तुतित्वमाश्रितम्; अत्र तु तथा संनिहितत्वाभावेनैकवाक्यत्वाभावात् स्तुतित्वानुपपत्तिरित्यर्थः। सूत्रव्याख्यानमधिकरणार्थेन निगमयति-**अत** इति॥ २१॥

[पूर्वं] पूर्वपक्षयुक्तिः परिहृता; स्वपक्षसाधकहेतुरनन्तरसूत्रेणाभिधीयते। **भावशब्दाच्च**॥ उद्गीथादिविधेरत्राभाव उक्तः पूर्वसूत्रे; अत्र तूपासनविधेः सद्भाव उच्यते। **भावः**—क्रिया विधिप्रत्यययुक्तो भावशब्दोऽत्र विवक्षितः॥ २२॥

## पारिप्लवार्थाधिकरणम् ३-४-३

### पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३-४-२३ ॥

"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम", "श्वेतकेतुर्हारुणेय आस" इत्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविशेषप्रतिपादनार्थानीति चिन्तायाम्, "आख्यानानि शंसन्ति" इत्याख्यानानां पारिप्लवे विनियोगान्न विद्याप्रधानत्वं न्याय्यमिति चेत्—न सर्वाण्याख्यानानि पारिप्लवप्रयोगे विनियोगमर्हन्ति । कुतः । विशेषितत्वात् विनियोगस्य । "आख्यानानि शंसन्ति" इत्युक्त्वा तत्रैव, "मनुर्वैवस्वतो राजा" इत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते । अतस्तेषामेव तत्र विनियोग इति गम्यते । तस्मान्न सर्वा वेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः ; अपि तु विद्याविध्यर्थाः ॥ २३ ॥

### तथा चैकवाक्योपबन्धात् ॥ ३-४-२४ ॥

"आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिनैकवाक्यतयोपवन्धाच्चाख्यानानाम्, विद्याविध्यर्थान्येव तानीति गम्यते ; यथा "सोऽरोदीत्" इत्येवमादेः कर्मविध्यर्थत्वम् ; न पारिप्लवार्थत्वम् ॥ २४ ॥

इति पारिप्लवार्थाधिकरणम् ॥

---

**पारिप्लवार्था इति चेन्न विशेषितत्वात्** ॥ इदमपि प्रासङ्गिकमधिकरणम् । रसतमादिवाक्यानां स्तुत्यर्थत्वं पूर्वपक्षीकृत्योपासनपरत्वं स्थापितम् ; एवं प्रातर्दनादीन्याख्यानानि किं स्तुत्यर्थानि उत पारिप्लवार्थानीति शङ्कया सङ्गतिः । **पारिप्लवाः**—आख्यानानि । इह **पारिप्लव**शब्देनाख्यानशंसनं विवक्षितम् । 'श्वेतकेतुर्हाऽऽरुणेयः' इत्यादिवाक्यानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविधानार्थानि ; किं पारिप्लवे सर्वाख्यानानां विनियोगः, उत मन्वाद्याख्यानानामेवेति ; किम् 'आख्यानानि शंसन्ति' इत्याख्यानशब्दः सर्वाख्यानपरः, उत मन्वाद्याख्यानपरः ; किमाख्यानविशेषाम्नानमाख्यानशब्दस्य विशेषपरतामवगमयति, नेति । न चेत्, आख्यानशब्दस्य सर्वाख्यानपरतया सर्वेषां तत्र विनियुक्तत्वात् सर्वाख्यानानि पारिप्लवार्थानि स्युः । विशेषपरतामवगमयति चेत्, आख्यानशब्दस्य मन्वाद्याख्यानविशेषविषयतया तेषामेव पारिप्लवे विनियोगात् श्वेतकेतूपाख्यानादीनि विद्याविधानार्थानि स्युः । **विद्याविशेषप्रतिपादनार्थानि** । स्तावकत्वेन [1]प्रतिपादनार्थानीत्यर्थः । **विद्याविध्यर्था** इति । विद्याविधेः स्तावकतया शेषभूता इत्यर्थः । प्रकरणोपात्तमात्रानभ्युपगमे आख्यानानन्त्यात् अशक्यत्वं च स्यात् ॥ २३ ॥

**तथा चैकवाक्योपबन्धात्** ॥ **उपबन्धः**—अन्वयः । **यथे**ति । [2]हिरण्यदक्षिणत्ववाक्येनैकवाक्यतयोपबन्धात् **सोऽरोदी**दित्येवमादेः कर्मविध्यर्थत्वमित्यर्थः ॥ २४ ॥ इति पारिप्लवार्थाधिकरणम् ।

---

1 विद्याविशेषप्रतिपादनार्थत्वं नाम विद्यागतस्य विशेषस्य प्राशस्त्यस्य प्रतिपादकत्वम् । तथाच स्तावकत्वरूपप्रतिपादनफलानीत्यर्थः ।

2 हिरण्यदक्षिणत्वेति । हिरण्यदक्षिण्यत्वेति पा० । हिरण्यस्यादक्षिणत्वेति ताले । निषेधार्थवादः सोऽरोदीदिति । अग्न्यश्रुजत्वात् रजतरूपं हिरण्यम्, 'तस्मात् बर्हिषि रजतं न देयम्' इति यागे निषिध्यते । अतः हिरण्यपदसुप्रसिद्धं सुवर्णमेव दक्षिणेति भावः स्यात् ।

अग्नीन्धनाद्यधिकरणम् ३-४-४

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३-४-२५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम् । विद्यावन्त ऊर्ध्वरेतस आश्रमिणः सन्तीत्युक्तम्, "ऊर्ध्वरेतस्सु च शब्दे हि" इत्यादिभिः सूत्रैः । इदानीमूर्ध्वरेतसो यज्ञाद्यभावात् तदङ्गिका विद्या न संभवतीत्याशङ्क्याह--अत एव चाग्नीन्धनाद्यनपेक्षा--इति । यत ऊर्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते, "ब्रह्मसंस्थोऽमृतत्वमेति", "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते", "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति", "यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इत्यादिकया--अत एवोर्ध्वरेतस्सु विद्या अग्नीन्धनाद्यनपेक्षा । अग्नीन्धनम्--अग्न्याधानम् । आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या । केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥ इति अग्नीन्धनाद्यधिकरणम् ॥

सर्वापेक्षाधिकरणम् ३-४-५

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३-४- २६ ॥

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति, तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितुमर्हति । यज्ञादिश्रुतिरपि 'विविदिषन्ति' इति शब्दात् कर्मणो वेदनाङ्गतां न प्रतिपादयतीति--अत आह--सर्वापेक्षेति । यज्ञादि(अग्निहोत्रादि)सर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु । कुतः । यज्ञादिश्रुतेः,

---

**अत एव चाग्नीन्धनाद्यनपेक्षा** ॥ व्याख्यातयोरधिकरणयोः प्रासङ्गिकत्वमाह **स्तुतिप्रसङ्गादिति** । अस्याधिकरणस्य प्रथमाधिकरणेन सङ्गतिमाह **विद्यावन्त** इति । **आशङ्क्याहेति** । सूत्रे चशब्दः शङ्काद्योतक इति भावः । किं परिव्राजां ब्रह्मविद्याधिकारोऽस्ति, नेति ; किं यज्ञाङ्गिकैव विद्या, उताऽऽश्रमप्रयुक्तधर्माङ्गिका ; किमूर्द्ध्वरेतसां विद्यासंबन्धप्रतिपादकवाक्यानि विद्याया आश्रमधर्माङ्गकत्वमवगमयन्ति, नेति । न चेत्--यज्ञाद्यङ्गकत्वाद्विद्यायां परिव्राजामनधिकारः । अवगमयन्ति चेत्--आश्रमधर्माङ्गकतया परिव्राजां ब्रह्मविद्याधिकारः । अतश्शब्दार्थमाह **यत** इति ।

परे त्विदं सूत्रमाद्याधिकरणफलनिगमनपरमाहुः--अत एव--[1]विद्यातः पुरुषार्थत्वाद्विद्यया फलोत्पत्तौ न कर्मापेक्षेति । इदं च निगमनमुत्पत्तावेव[2] कर्मापेक्षेत्यनन्तरसूत्रे वक्तुमिति । तदिदं मन्दफलत्वादनादरणीयम् । पूर्वपक्षे युक्त्यन्तरे संभवति सङ्गते च सति तन्निरासपरत्वं हि सप्रयोजनम्, ऊर्द्ध्वरेतस आश्रमसद्भाव आसन्नत्वादत इति परामर्शायोग्यश्च ॥ २५ ॥

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** । सङ्गतिः स्फुटा । किं गृहस्थस्य यज्ञादिकर्मवतो विद्यायामधिकारः, उत तद्रहितस्येति ; यज्ञादिकर्म विद्याङ्गम्, नेति ; यज्ञेनेत्यादिश्रुतिर्विद्याङ्गतया यज्ञादिकर्म विनियुङ्क्ते, नेति । किं कर्मणो विद्योत्पादकत्वं संभवति, नेति । असंभवे--विनियोगाभावात् यज्ञादेर्विद्याङ्गत्वाभावात् तद्रहितस्य गृहस्थस्य विद्याधिकारः संभवेत् । संभवति चेत्--विनियोगाद् यज्ञादेर्विद्याङ्गतया तद्वतो गृहस्थस्य विद्याधिकारः । **यज्ञादिश्रुतिरपीति** । इच्छासाधनत्वं वदतीति भावः । **यज्ञादिसर्व-**

---

[1] विद्यायाः पुरुषार्थहेतुत्वादिति शांकरम् । अत्रैवमेव पाठे त्वेवमर्थः--प्रथमाधिकरणसिद्धान्तस्य विद्यातः पुरुषार्थ इत्येतद्रूपत्वात्--फलस्य विद्याजन्यपुरुषार्थत्वादिति वा ।

[2] उत्पत्तावेव कर्मापेक्षा--उत्पत्तावपि कर्मानपेक्षत्वमित्यस्याभावः ।

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते। यज्ञादिना विविदिषन्ति–वेदितुमिच्छन्ति ; यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः। यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते ; यथा असेर्हननसाधनत्वे सति असिना जिघांसतीति व्यपदेशः। अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते। ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षतापन्नस्मृतिरूपं निरतिशयप्रियम् अहरहरभ्यासाधेयातिशयम् आप्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव। वक्ष्यति च, "आवृत्तिरसकृदुपदेशात्" इत्यादिना। एवंरूपं च ध्यानमहरहरनुष्ठीयमानैर्नित्यैर्नैमित्तिकैः (नित्यनैमित्तिक)कर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायते—इति यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते। अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या। अश्ववत्—यथा [पुरुष]गमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्षः, एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा। तदिदमाह स्वयमेव भगवान्, "यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्", "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति॥ २६॥ इति सर्वापेक्षाधिकरणम्॥

---

**कर्मापेक्षैवे**ति। सूत्रे प्रतिज्ञापदानन्तरश्चशब्दोऽवधारणार्थ इति भावः। **ज्ञानसाधनत्वे सत्येवे**ति। परमसाध्येच्छया विनाऽवान्तरसाध्येषु प्रवृत्तिर्नोपपद्यते। यथा स्वर्गेच्छया विना स्वर्गार्थयज्ञादौ प्रवृत्त्यनुपपत्तिः, एवं ज्ञानेच्छया विना तदर्थेच्छासिद्ध्यर्थप्रवृत्त्यनुपपत्तेः, सञ्जातज्ञानेच्छस्य च इच्छासिद्ध्यर्थप्रवृत्तिनैरपेक्ष्याच्च यज्ञादेरिच्छासाधनत्वं नोपपद्यत इति भावः। ज्ञानस्य न यज्ञाद्यपेक्षा, वाक्यादेव तदुत्पत्तेरित्यत्राह **ज्ञानं चे**ति। **आप्रयाणादनुवर्तमान**मिति। अङ्गिनोऽनुवृत्त्या तदङ्गस्य कर्मणोऽनुवृत्तिरपेक्षितेति भावः। यज्ञादिषु प्रवृत्तिर्मनोवधानविरोधिनी स्यात्, प्रवृत्तिरूपत्वादित्यत्राह **एवंरूपं चे**ति। अदृष्टद्वारोपकारकत्वान्न दोष इत्यर्थः।

**अश्ववत्**—रथचर्यायोग्योऽश्वो न लाङ्गलाकर्षणे युज्यते, तथा फलोत्पत्तौ न कर्मापेक्षत इति **परे** व्याचक्षते। फलोत्पत्तावनपेक्षत्वे प्रामाणिकेऽपि उत्पत्तावपेक्षैव सूत्रप्रतिपाद्या, **सर्वापेक्षे**ति प्रतिज्ञातत्वात्। अतः परोक्तव्याख्यानं क्लिष्टम्। **अपरे** तु विद्यायाः फलोत्पत्तावनुग्राहकत्वेन यज्ञाद्यपेक्षाऽस्ति नेति विचार्य, अस्तीति सिद्धान्तयन्ति। [तन्न ; ?] यज्ञादिवाक्ये फलसिद्धावपेक्षाप्रतीत्यभावात्। वेदनसाधनत्वमात्रं हि तत्रावगम्यते। तेन न विद्यायाः फलसिद्धावुपकारकत्वम् अशाब्दत्वात्। 'निचाय्य', 'तस्मिन् दृष्टे', 'तमेवं विद्वान्' इत्यादिभिरुत्पन्नस्य वेदनस्य मोक्षसाधनत्वेऽन्यानपेक्षत्वप्रतीतिस्वारस्याच्च तदनुपपन्नम्।

**अन्ये** तु विद्याया यज्ञाद्यपेक्षत्वे परिव्राजां विद्यानधिकारप्रसङ्गात् गृहस्थेष्वपि यज्ञाद्यनपेक्षेति पूर्वपक्षं कृत्वा—गृहिणां परिव्राजां चाचारे समानेऽपि सङ्गति(सङ्ग ?)निवृत्तिरूपपारिव्राज्यस्य गार्हस्थ्यस्थाननिविष्टत्वात् कर्मतन्निवृत्तिरूपयोर्गार्हस्थ्यपारिव्राज्ययोर्ग्रहणाग्रहणवद्विकल्पोपपत्तेः परिव्राजकेषु विद्यायामनपेक्षितस्य यज्ञादिकर्मणो गृहिष्वपेक्षा युज्यत इति सूत्रद्वयमेकाधिकरणं वर्णयन्ति। तदयुक्तम् ;

### शमदमाद्यधिकरणम् ३-४-६

**शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३-४-२७ ॥**

गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि, उत नेति चिन्तायाम्—आन्तरबाह्यकरणव्यापाररूपत्वात् कर्मानुष्ठानस्य, शमदमादीनां तद्विपरीतरूपत्वाच्चानुष्ठेयानीति प्राप्ते—उच्यते। यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः, तथाऽपि स विद्वान् शमदमाद्युपेतः स्यात्। कुतः। तदङ्गतया तद्विधेः—विद्याङ्गतया तेषां विधेः, "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति। विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनाम्, विद्यानिर्वृत्तये तेषां शमदमादीनामप्यवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि। न च करणव्यापारतद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः; भिन्नविषयत्वात्। विहितेषु करणव्यापारः, अविहितेषु प्रयोजनशून्येषु च तदुपशम इति। न च करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशात् शमादीनामुपादेयत्वासंभवः; विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात्। अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः ॥ २७ ॥ इति शमदमाद्यधिकरणम् ॥

---

अधिकरणभेदस्यैव युक्तत्वात्। तथा हि—किमुभयं सिद्धान्तसूत्रम्? तर्हि यतिष्वनपेक्षाया गृहिष्वपेक्षायाश्च परस्परतादर्थ्याभावात् साध्यद्वयं स्यात्। तदानीमैकाधिकरण्यमयुक्तम्। यद्युच्येत—आद्यं सूत्रं पूर्वपक्षविषयं यतिष्वनपेक्षत्वात् गृहिष्वनपेक्षेत्येवमर्थपरमिति—तन्न; यतिषु यज्ञानपेक्षविद्याधिकारस्याधिकरणान्तरसाध्यत्वात्; तस्य च तन्मूलपूर्वपक्षस्य चैकसूत्रप्रतिपाद्यत्वे वाक्यभेदप्रसङ्गाच्च। 'ऊर्ध्वरेतस्सु च शब्दे हि' इत्यत्रैव तत्समर्थनमाभिप्रायिकमिति च न वाच्यम्, विद्यानङ्गत्वसमर्थनोपक्षीणस्य सूत्रस्य विद्याधिकारसमर्थनेऽपि तात्पर्यकल्पने गौरवप्रसङ्गात्। अत आद्यसूत्रस्याधिकरणान्तरत्वं युक्तम्। तथा सति अनन्तराधिकरणपूर्वपक्षहेतुरर्थसिद्धः स्यात्। अतोऽधिकरणभेदः स्वारसिकप्राप्तः ॥ २६ ॥

**शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्** ॥ सङ्गतिः पूर्वपक्षोत्थानमुखेन स्फुटा। किं विद्यानिष्ठ[स्य] गृहस्थस्य शमादीन्युपादेयानि, उत नेति; किं यज्ञादीनां शमादीनां च विरोधोऽस्ति, नेति; किमत्र विधीयमाना करणव्यापारोपरतिरूपा शान्तिर्यज्ञादिव्यतिरिक्तव्यापारशान्तिः, उत सर्वव्यापारशान्तिः। सर्वशान्तिश्चेत्—विरोधादनुपादेयानि। न चेत्—अविरोधात् गृहस्थस्याप्युपादेयानि। **यद्यपीत्यादि**। विहितत्वाद् दृष्टमुखेनोपकारकत्वाच्च शमादि अनुष्ठेयमित्यर्थः। **अविहितेषु प्रयोजनशून्येषु चेति**। शरीरधारणार्थमितभोजनादिव्यावृत्त्यर्थं **प्रयोजनशून्येष्वि**त्युक्तम्। यद्वा **अविहितेषु**—अविहिताप्रतिषिद्धेषु। **प्रयोजनशून्येषु**—मुमुक्षोः प्रयोजनशून्यानि काम्यकर्माणि; तेष्वित्यर्थः।

**परे** त्विदं सूत्रं पूर्वाधिकरणेऽन्तर्भाव्य व्याचक्षते—'यज्ञेन विविदिषन्ति' इति वर्तमानापदेशतया न यज्ञादिविधिः, किन्तु यज्ञादिपरिकरवती महाभागा विद्येति विद्यास्तुतिरित्याशङ्क्य—एवं यज्ञाद्यनपेक्षायामपि शमाद्युपेतः स्यात्; शमादीनां विधानाद्विहितानामवश्यानुष्ठेयत्वात्। यज्ञादीनि चानुष्ठेयानि; विविदिषासंयोगस्याप्राप्तत्वेन विहितत्वात्। तानि बाह्यतराणि, शमादीनि तु

## सर्वान्नानुमत्यधिकरणम् ३-४-७

### सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥

वाजिनां छन्दोगानां च प्राणविद्यायाम्, "न ह वा अस्यानन्नं जग्धं भवति। नानन्नं परि(प्रति)गृहीतं भवति", "न ह वा एवंविदि किञ्चनानन्नं भवति" इति प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते। किमियं प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः सर्वदा, उत प्राणात्ययापत्ताविति विशये—विशेषानुपादानात् सर्वदेति प्राप्ते—उच्यते प्राणात्यये इति। चशब्दोऽवधारणे। प्राणात्ययापत्तावेवेत्यर्थः। कुतः। तद्दर्शनात्। दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा; किं पुनः प्राणविदः। उषस्तिः किल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु इभ्यग्रामे वसन् अनशनेन प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाणः इभ्यं कुल्माषान् खादन्तं भिक्षमाणः, तेन च 'उच्छिष्टेभ्योऽन्ये न विद्यन्ते' इति प्रत्युक्तः, पुनरपि "एतेषां मे देहि" इत्युक्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्य, अनुपानप्रतिग्रहमिभ्येनार्थितः, "उच्छिष्टं वै मे पीतं स्यात्" इति वदन्, 'चाक्रायणः (चाक्रायण ?) किमेते

---

प्रत्यासन्नसाधनानि इति ॥ [1]शङ्का तावदयुक्ता; यज्ञाद्यनपेक्षया शमादेर्विरोधाभावात्। ततश्च **तथाऽपीति** वैयर्थ्यम्। विविदिषासंयोगस्याप्राप्ततया यज्ञादेरप्यनुष्ठेयत्वमविवक्षितमशाब्दं च ॥ पूर्वसूत्रविवक्षितस्यात्र कथनमिति चेन्न। ततोऽपि वरं पूर्वसूत्रस्य स्तुत्यर्थतापरत्वं विहाय विविदिषासंयोगसमर्थनपरतया व्याख्यानम्। विविदिषार्थत्वं चायुक्तमित्युक्तम्। तदभ्युपगमेऽपि यज्ञादीनां शमादीनां चोपादेयतासमर्थनस्य मिथस्तादर्थ्याभावात् सूत्रद्वयस्यैकाधिकरण्यमयुक्तम् ॥ २७ ॥

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्** ॥ ब्रह्मविदां शमादयोऽनुष्ठेया इत्युक्तम्। तत्र भोजननियमरूपः शमविशेषोऽस्ति न वेति विचार्यत इति सङ्गतिः। प्राणविदः सर्वान्नानुमतिः किं सर्वदा, उत प्राणसंशयापत्तौ; किं ब्रह्मविद उषस्तेः[2] प्राणसंशये सत्युच्छिष्टानुमतिदर्शनं प्राणविदः सर्वान्नानुमतेरापद्विषयत्वमवगमयति, नेति। न चेत्, सर्वदानुमतिः स्यात्। ब्रह्मविदोऽपि प्राणसंशयेऽनुमतिमवगमयति चेत्—कैमुत्यनीत्या प्राणविदः सर्वान्नानुमतिः प्राणसंशयापत्तावेव स्यात्। प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतेर्दर्शनात् ब्रह्मविदः किंपुनर्न्यायसिद्धा सर्वान्नानुमतिरिति पूर्वपक्षः। सूत्रं प्राणविद्यामात्रविषयम्; तथाऽपि ब्रह्मविदन्नानुमतिः पूर्वपक्षेऽभिप्रेता। **मटची**—अश्मवृष्टिः। इभमर्हतीति **इभ्यः** हस्तिपः। **कुल्माषः**—माषविशेषः। ब्रह्मविदामपि सर्वान्नानुमतिः प्राणात्यये; किंपुनर्दुर्बलप्राणविद्यानिष्ठस्येति कैमुत्यन्यायात् सिद्धान्तः ॥ २८ ॥

---

[1] परेत्वित्यादि दूषयति शंकेत्यादिना। अतः यज्ञाद्यनपेक्षयेति तालेपाठ एव ग्राह्यः, न तु यज्ञाद्यपेक्षयेति। अयमर्थः--वर्तमानापदेशतया यज्ञाद्यनपेक्षावादिना पूर्वपक्षिणा शमाद्यनपेक्षा दुर्वचा; यज्ञाद्यभावे निर्व्यापारत्वरूपशमादेरेव सिद्धेः। यज्ञाद्यपेक्षया साकमेव शंक्येत; शमादेर्विरोधः, न तदनपेक्षया साकम्। एवं शमाद्यभावशंकाविरहे च सूत्रे शमादिस्थापनं कुत इति। ततश्चेति। ततः तथापीत्यस्य वैयर्थ्यञ्चेत्यन्वयः। अनपेक्षामङ्गीकुर्वता सिद्धान्तिना विरोधपरापिशब्दप्रयोगायोगादिति। यदि शान्तोदान्त इत्यत्रापि पश्यतीति वर्तमानापदेमवलंब्य यज्ञादेः शमादेश्चानपेक्षेति अधिकरणपूर्वपक्ष इष्यते, तदा तथापीत्येतत्, तेषामपीत्यपिशब्दश्च व्यर्थे। तदा शमादीतिसूत्रात् परं सर्वेतिसूत्रं युक्तं स्यादित्यलम्। यज्ञाद्यपेक्षयाशमादेर्विरोधशंकातत्परिहारौ असन्मत एव। [2] तालेकोशादिपाठः उषस्तेरित्येव; न तु उपस्तस्येति। उषस्तोऽन्यः कहोलसखः।

कुल्माषा अनुच्छिष्टाः इतीभ्येन पर्यनुयुक्तः, "न वा अजीविष्यमिमानखादन्... कामो म उद्पानम्" इति कुल्माषाखादने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा, स्वखादितशेषं जायायै दत्त्वा तया च रक्षितान् अपरेद्युर्याजनेनार्जिजीषया जिगमिषुः पुनरपि प्राणसंशयमापन्नः तानिभ्येभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितान् चखाद । अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनादन्नाविशेषेण कीर्तितमपि प्राणविदः [1]सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

### अबाधाच्च ॥ ३-४-२९ ॥

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते । एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव ॥ २९ ॥

### अपि स्मर्यते ॥ ३-४-३० ॥

अपिच आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते—"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥ ३० ॥

### शब्दश्चातोऽकामकारे ॥ ३-४-३१ ॥

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव ; अत एव सर्वेषामकामकारे शब्दः— कामकारस्य प्रतिषेधकः शब्दो वर्तते । अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः, "तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा इति" इति । पाप्मना संस्पृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥ इति सर्वान्नानुमत्यधिकरणम् ॥

---

**अबाधाच्च** ॥ पूर्वसूत्रे ब्रह्मविदनुष्ठानदर्शनात् कैमुत्य(तिक)न्याय उपपादितः । अत्र ब्रह्मविद्विषयवचनेन स एव कैमुत्य(तिक)न्याय उपपादितः ॥ २९ ॥

**अपि स्मर्यते** ॥ न केवलं सर्वान्नानुमतेर्ब्रह्मविद आपद्विषयत्वात् प्राणविद आपद्विषयत्वं कल्प्यम् ; सर्वेषामपि स्मृतौ कण्ठोक्तमेवेति भावः ॥ ३० ॥

**शब्दश्चातोऽकामकारे** ॥ ब्राह्मणशब्दस्यासङ्कुचितवृत्तित्वात् ब्रह्मविदामपि इदं वाक्यं साधारणम् ; किंपुनः प्राणविद इति भावः ।

**परे चापरे च**—सर्वान्नानुज्ञानं किं शमादिवत् विद्याङ्गं विधीयते, उत स्तुत्यर्थं सङ्कीर्त्यत इति विचार्य—उपदेशस्य प्रवृत्तिकरत्वोपपत्तेः प्राणविद्यासंनिधानादङ्गविधिः ; भक्ष्याभक्ष्यशास्त्रं 'न हिंस्यात्' इतिवत् विशेषशास्त्रबाध्यमिति पूर्वपक्षं कृत्वा—विधायकाभावान्न सर्वान्नानुज्ञाविधिः; किन्तु सर्वं प्राणस्यान्नमिति विज्ञानप्रशंसार्थोऽर्थवादः । प्राणात्यये हि सर्वान्नानुज्ञा दृश्यते, न सर्वदेति व्याचक्षते ॥ तदयुक्तम् ; सूत्रेऽर्थवादशब्दाध्याहारेण प्रतिज्ञाया वर्णनीयत्वात् । भाष्योक्तयोजनायां हि **प्राणात्ययशब्देनैव** प्रतिज्ञा पूर्णा ।

**अन्ये तु** किं सर्वान्नानुमतिः क्रियते, उतार्थवाद इत्युपोद्घातविचारं कृत्वा ज्यैष्ठ्यश्रैष्ठ्यगुणकप्राणविद्याङ्गभूतस्य सर्वं प्राणस्यान्नमिति [2]ज्ञानस्य फलत्वात् तदुक्तिरर्थवादमात्रमिति पूर्वपक्षं कृत्वा,

---

[1] सर्वान्नं भक्षयतीति सर्वान्नीनः । खप्रत्ययः । (पाणिनिः 5-2-9)

[2] सर्वान्नीनत्वोक्तिरर्थवादः अङ्गभूतज्ञानं प्रति सर्वान्नीनत्वस्य फलत्वेन प्रतीतेरित्यर्थः ।

विहितत्वाधिकरणम्। ३-४-८

**विहितत्वाच्चाश्रमकर्मापि ॥ ३-४-३२ ॥**

यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्। तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि, उत नेति चिन्तायाम्, विद्याङ्गानां सतां केवलाश्रम(मि)शेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति यज्ञादीनां केवलाश्रम(मि)धर्मत्वं न संभवति—इति प्राप्ते—उच्यते आश्रमकर्मापि इति। आश्रमस्य कर्मापि भवति; केवलाश्रमिणाऽप्यनुष्ठेयानीत्यर्थः। कुतः? "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात्—जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥

तथा च विद्याङ्गतया "तमेतं वेदानुवचनेन" इत्यादिना विहितत्वाद्विद्याशेषतयाऽप्यनुष्ठेयानीत्याह—

**सहकारित्वेन च ॥ ३-४-३३ ॥**

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयानि। अग्निहोत्रादीनामिव जीवनाधिकारस्वर्गाधिकारवत् विनियोगपृथक्त्वेनोभयार्थत्वं न विरुद्ध्यत इत्यर्थः ॥ ३३ ॥

---

सर्वमिदं प्राणस्यान्नमिति वाक्यसामर्थ्याद्विधेः कल्प्यत्वात् अप्रतीतविज्ञानतद्विधिकल्पनायोगात् येन केनचिदन्नेन प्राणो रक्षितव्य इति विधिरिति निश्चित्य—पश्चात् साक्षाद्विचारमाहुः—किमियं सर्वान्नानुमतिः सर्वदा, उत प्राणात्यये इति। अविशेषात् सर्वदेति पूर्वपक्षः। अप्रतिषिद्धान्नेन अन्यदा रक्षणसिद्धेः प्राणात्यय इति सिद्धान्तः कृतः। तत्रोपोद्घातचिन्तायाम् अप्रतीतविज्ञानतद्विधिकल्पनगौरवं तदुक्तमयुक्तम्। 'स होवाच किं मेऽन्नं भविष्यति' इत्युक्ते, 'यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्यः, तत्तेऽन्नम्' इत्युक्त्वा 'न ह वा एवंविदि किञ्चनानन्नम्' इति एवंविच्छब्देन वेदनस्याभिहितत्वात्। अत एवाश्रुतस्य प्राणरक्षणस्य तद्विधेश्च कल्पनमप्ययुक्तम् ॥ ३१ ॥

**विहितत्वाच्चाश्रमकर्मापि** ॥ अवान्तरसङ्गतिमाह—**यज्ञादी**ति। परमप्रकृतेन सङ्गतिरित्यर्थः। किं विद्याङ्गभूतानि आश्रमकर्माणि केवलाश्रमिणोऽप्यनुष्ठेयानि, नेति; किमेषां विद्याङ्गत्वे केवलाश्रमाङ्गत्वं संभवति, नेति; किं केवलाश्रमाङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते, नेति; आश्रमाङ्गत्वे विद्याङ्गत्वे च कर्मान्तरत्वमस्ति, नेति च। कर्मान्तरत्वे सति अनेकस्य कर्मणो विनियोगपृथक्त्वाभावेन नित्यानित्यसंयोगविरोधप्रसङ्गेन केवलाश्रमाङ्गत्वासम्भवादमुमुक्षोरननुष्ठेयानि। कर्मान्तरत्वं नास्ति चेत्—विनियोगपृथक्त्वेन नित्यानित्यसंयोगविरोधाभावात् केवलाश्रमाङ्गत्वसम्भवात् केवलाश्रमिणोऽप्यनुष्ठेयानि। **नित्यानित्यसंयोगविरोध** इति। यावज्जीवमनुष्ठानं मोक्षेच्छानुगुणमनुष्ठानं च विरुद्धमित्यर्थः। **केवलाश्रमधर्मत्वम्** मुमुक्षारहिताश्रमधर्मत्वम्। **आश्रमी**ति पाठो दृष्टश्चेत्, **केवल**शब्दोऽमुमुक्षुपरः, **अनुष्ठेयानीत्यर्थ** इति। यज्ञादीनि कर्माणि इत्यध्याहारः ॥ ३२ ॥

अनेन सङ्गतमुत्तरसूत्रार्थमाह **तथाचे**ति। **सहकारित्वेन च** ॥ समुच्चयव्यावृत्त्यर्थं विद्योत्पत्तिद्वारेणेत्युक्तम्। नित्यानित्यसंयोगविरोधमाशङ्क्याह **अग्निहोत्रादीनामिवे**ति। **विनियोगपृथक्त्वेन**। **विनियोगः**—शेषत्वज्ञापकविधिः ॥ विनियोगपृथक्त्वदर्शनेन नित्यानित्यसंयोगविरोधपरिहारः सूत्रद्वयफलम्; न त्वेकस्य; विनियोगद्वैधस्यैकेनादर्शितत्वात् ॥ ३३ ॥

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह—

**सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३-४ ३४ ॥**

सर्वथा विद्यार्थत्वे आश्रमार्थत्वेऽपि त एव यज्ञादय इति प्रतिपत्तव्यम्, न कर्मस्वरूपभेद इत्यर्थः—कुतः। उभयलिङ्गात्—उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्; कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥

**अनभिभवं च दर्शयति ॥ ३-४ ३५ ॥**

"धर्मेण पापमपनुदति" इत्यादिभिश्च तानेव यज्ञादिधर्मान्निर्दिश्य तैर्विद्याया अनभिभवम्—पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति । अहरहरनुष्ठीयमानैर्हि यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्योत्पद्यते, अतस्त एवोभयत्र यज्ञादयः ॥ ३५ ॥ इति विहितत्वाधिकरणम् ॥

विधुराधिकरणम् ३-४-९

**अन्तरा चापि तु तद्दृष्टेः ॥ ३-४-३६ ॥**

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति (इति ?) विद्यासहकारिण आश्रमधर्मा इति चोक्तम्। ये पुनराश्रमान् अन्तरा वर्तन्ते विधुरादयः, तेषां ब्रह्मविद्यायामधिकारोऽस्ति, न वेति विशये—आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्यायाः, अनाश्रमिणाश्च आश्रमधर्माभावान्नास्त्यधिकार

---

उत्तरसूत्रकृत्यमाह **तद्वदिति । सर्वथाऽपि त एवोभयलिङ्गात्** ॥ अग्निहोत्रशब्दस्य तुल्यत्वेऽपि कुण्डपायिनामयनाग्निहोत्रे, 'मासमग्निहोत्रं जुहुति' इति विहिते स्वरूपभेदो दृश्यत इत्यत्राह **कर्मस्वरूपभेदे प्रमाणाभावाचे**ति । कर्मान्तरत्वव्युदासस्य तन्त्रेणानुष्ठानं फलम् ॥ ३४ ॥

**अनभिभवं च दर्शयति** ॥ **आदिशब्दो** यज्ञादिवाक्यपरः । अङ्गत्वं वदता, 'यज्ञेन दानेन' इत्यादिना यज्ञादिधर्मा निर्दिष्टाः ; अङ्गत्वेन किञ्चित्कारं वदत् वाक्यमपि यज्ञादिपर्यायशब्देन निर्दिशतीत्यर्थः । **दर्शयति** । श्रुतिरिति शेषः । किञ्चित्कारं विवृणोति **अहरहरि**ति ।

**सर्वापेक्षेति** विद्याङ्गत्वमुक्तम् ; **सहकारित्वेन चे**ति फलविरोधिनिरसनेन समसमुच्चय उक्तः **इत्यन्ये** । विद्याया एव प्रतिबन्धकनिवर्तनशास्त्रवशात्, ब्रह्मप्राप्तेर्नित्यतया साध्यत्वानुपपत्तेः, सहभावश्रवणस्याङ्गभावविषयतया अन्यथासिद्धत्वाच्च तथा विभागकल्पनमयुक्तम् । सूत्रभेदस्तु शङ्काभेदनिबन्धनः । **उभयलिङ्गादि**ति—'तमेतं वेदानुवचनेन', 'अनाश्रितः कर्मफलम्' इत्यादिश्रुतिलिङ्गात् स्मृतिलिङ्गाच्च सिद्धवज्ज्ञानरूपादित्याहुः । ततोऽपि श्रुतावेव वाक्यद्वये प्रत्यभिज्ञापनपरत्वं युक्तम् ; अनन्यत्वस्य साध्यत्वात् ॥ ३५ ॥ इति विहितत्वाधिकरणम् ॥

**अन्तरा चापि तु तद्दृष्टेः** ॥ अवान्तरसङ्गतिमाह—**चतुर्णा**मिति । किं विधुरादीनां ब्रह्मविद्याधिकारोऽस्ति, नेति ; किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति, नेति ; किमाश्रमाणां साधारणधर्माङ्गिका विद्या भवति, नेति ; **तपसा ब्रह्मचर्येणे**त्यादिविनियोगोपबृंहितं रैक्वादीनां विद्यानिष्ठत्वदर्शनं विद्यायाः साधारणकर्माङ्गकत्वमवगमयति, नेति । न चेत्, साधारणधर्माङ्गकत्वासंभवात् साङ्गविद्योपसंहारासामर्थ्येन विधुरादीनामनधिकारः । अवगमयति चेत्—साधारणधर्माङ्गकत्वेन विद्यायाः तदुपसंहारसामर्थ्याद्विधुरादीनां ब्रह्मविद्याधिकारः । **विधुरः**—मृतदारः । **आदिशब्दोपात्तो-**

इति प्राप्ते—उच्यते, अन्तरा चापि तु—इति। तुशब्दः पक्षव्यावृत्त्यर्थः। चशब्दोऽवधारणे। अन्तरा वर्तमानानाम्—अनाश्रमिणामपि विद्यायामधिकारोऽस्त्येव। कुतः। तद्दृष्टेः। दृश्यते हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम्। न चाश्रमधर्मैरेव विद्यानुग्रह इति शक्यं वक्तुम्; "यज्ञेन दानेन तपसाऽनाशकेन" इति दानादीनामाश्रमेष्वनैकान्तिकानामप्यनुग्राहकत्व-दर्शनात्। यथोर्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते, तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवताराधनादिभिर्विद्यानुग्रहः शक्यते कर्तुम्॥ ३६॥

## अपि स्मर्यते ॥ ३-४-३७॥

अपि चानाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते, "जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति; संसिद्ध्येत्--जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः॥ ३७॥

## विशेषानुग्रहश्च ॥ ३-४-३८॥

न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः। श्रूयते चानाश्रमनियतैर्धर्मविशेषैर्विद्यानुग्रहः, "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्य" इति॥ ३८॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३-४-३९॥

तुशब्दोऽवधारणे। अतः--अनाश्रमित्वात् इतरत्—आश्रमित्वमेव ज्यायः। अनाश्रमित्वमापद्विषयम्; शक्तस्य त्वाश्रमित्वमेवोपादेयमित्यर्थः। भूयोधर्मकाल्पधर्मकयोरतुल्यकार्यत्वात्। लिङ्गाच्च--स्मृतेरेवेत्यर्थः। स्मर्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम्, "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इत्यादिना। निवृत्तब्रह्मचर्यस्य मृतभार्यस्य चावैराग्ये सति दारालाभ आपत्॥ ३९॥ इति विधुराधिकरणम्॥

---

ऽकृतदारः। **न** चेति। आश्रमधर्मानुपपत्तौ वर्णधर्मैरनुग्रह उपपद्यत इत्यर्थः। **अनैकान्तिकानाम्**—अनियतानाम्॥ ६३॥

**अपि स्मर्यते**॥ **ब्राह्मणः** ब्रह्मविद्यानिष्ठः। अत्र जपादिना विद्यानुग्रहः कथं ज्ञायत इत्यत्राह **जपाद्यनुगृहीतयेति**॥ ३७॥

**विशेषानुग्रहश्च**॥ विशेषशब्दं समासं च व्याचष्टे **धर्मविशेषैर्विद्यानुग्रह** इति॥ ३८॥

आश्रमानियतधर्मैरेवानुग्रह उपपद्यते चेत्, आश्रमप्राप्तिक्षमैरप्याश्रमा उपेक्ष्येरन्। ततश्च यज्ञादि-श्रुतिवैयर्थ्यं स्यादित्यत्राह —**अतस्त्वितरत् ज्यायो लिङ्गाच्च**॥ **भूयोधर्मकाल्पधर्मकयोरतुल्यकार्य-त्वादिति**। शक्तं प्रत्यतुल्यकार्यत्वादित्यर्थः। श्रुतेरनुमापकत्वात् स्मृतिर्**लिङ्ग**शब्देनोच्यते। **आप**च्छब्दार्थमाह **निवृत्तब्रह्मचर्यस्येति**। पारिव्राज्यव्यावृत्त्यर्थमाह **अवैराग्ये सतीति**। ब्रह्मनिष्ठेष्वनुयायि **वैराग्यं** नाम लोकान्तरजन्मान्तरभोगनैरपेक्ष्यम्। अतः इदमवैराग्यमविरुद्धम्। यद्वा गार्हस्थ्यधर्मश्रद्धा **अवैराग्यम्**।

**परे चापरे च**—**अपि स्मर्यते** इति सूत्रं संवर्तादीनामाश्रमबहिष्ठनब्रह्मचर्यास्मरणपरं व्याचक्षते। **विशेषानुग्रहश्चे**त्येतत्—'जप्येनैव तु संसिध्येत्' इत्यनेन साधारणधर्मविशेषैर्विद्यानुग्रहसंभवपरम्, 'अनेक-जन्मसंसिद्धः' इति पूर्वकृतसुकृतैर्विद्यानुग्रहपरं च व्याचक्षते॥ तदयुक्तम्; विद्यायाः साधारणधर्मानुग्राह्यत्वे

## तद्भूताधिकरणम् ३-४-१०

### तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ ३-४-४० ॥

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति, नेति चिन्तायाम्-, विधुरादिवत् अनाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसंभवादस्त्यधिकारः इति प्राप्ते—उच्यते तद्भूतस्य तु नातद्भावः—इति । तुशब्दः पक्षव्यावृत्त्यर्थः । तद्भूतस्य--नैष्ठिकाद्याश्रमनिष्ठस्य, नातद्भावः--अतथाभावः, अनाश्रमित्वेनावस्थानं न संभवति । कुतः । तद्रूपाभावेभ्यो नियमात् । तद्रूपाणि--तेषां नैष्ठिकादीनां रूपाणि--वेषाः धर्मा इत्यर्थः । तेषामभावाः—तद्रूपाभावाः ; तेभ्यः शास्त्रैर्नियमात् । नैष्ठिकाद्याश्रमप्रविष्टान् स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि, "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति, "अरण्यमियात् । ततो न पुनरेयात्" इति, "संन्यस्याग्निं न पुनरावर्तयेत्" इति च । अतो विधुरादिवत् नैष्ठिकादीनामनाश्रमित्वेनावस्थानासंभवान्न तानधिकरोति ब्रह्मविद्या । जैमिनेरपीत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति ॥ ३-४-४० ॥

---

नग्नचरणस्य विरुद्धत्वात् । न हि नग्नचर्या नाम सर्वाश्रमसाधारणो धर्मः, स(न)तु [1]क्वचिच्चोदितः । अतः सूत्रद्वयस्य साधारणधर्मानुग्रहपरश्रुतिस्मृतिविषयत्वं युक्तम् ॥ उन्मत्तचर्यास्मरणेनाश्रमानपेक्षत्वं सिध्यतीति चेत्—न; उन्मत्तचर्यायाः 'जनेनावमतो योगी योगसिद्धिं च विन्दति' इति जनावमानजनितयोगसिद्धये स्वप्रकर्षाच्छादनार्थत्वात, दृष्टे संभवत्यदृष्टकल्पनस्यान्याय्यत्वात्, विध्यन्तरादर्शनात्, छादनार्थतयाऽप्युपपन्नेनोन्मत्ताचरणेन विद्याया आश्रमनैरपेक्ष्यकल्पनायोगात्, तत्कल्पनस्य 'अतस्त्वितरज्ज्यायः' इत्यनन्तरसूत्रविरोधात्, अनाश्रमित्वनिषेधकवचनान्तरविरोधाच्च । लिङ्गाच्चेत्येतस्य, "अग्ने गृहपते सुगृहपतिः" "तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च" इति गार्हस्थ्यप्राशस्त्यगमकश्रौतलिङ्गादनाश्रमनिन्दापरस्मृतिलिङ्गाच्चेत्यर्थमाहुः ॥ तत्र ज्यायस्त्वप्रतीतेरस्फुटत्वात् श्रौतलिङ्गानादरः ॥ ३९ ॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः** ॥ विधुरादेर्विद्याधिकार उक्तः । अनाश्रमित्वसाम्यादाश्रमभ्रष्टानामपि विद्याधिकार इति शङ्कया सङ्गतिः । **वैखानसः**—वानप्रस्थः । किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति, नेति ; किमेषां साङ्गविद्योपसंहारसामर्थ्यमस्ति, नेति ; किमेषां प्रायश्चित्तात् शुचित्वं संभवति, नेति ; किं 'यो ब्रह्मचारी स्त्रियमुपेयात्' इति विहितं प्रायश्चित्तं सर्वब्रह्मचारिविषयम्, उत नैष्ठिकादिव्यतिरिक्तविषयम् ; 'प्रायश्चित्तं न पश्यामि' इति प्रायश्चित्ताभावस्मरणं किं प्रायश्चित्तस्य व्यतिरिक्तब्रह्मचारिविषयतामवगमयति, नेति ; न चेत्—प्रायश्चित्तस्य सर्वविषयतया शुद्धिसंभवेन सामर्थ्यादधिकारः । अवगमयति चेत्—प्रायश्चित्तस्य उपकुर्वाणविषयतया शुद्धेरसंभवेनासामर्थ्यात् ब्रह्मविद्यानधिकारः । **ब्रह्मचारीत्यादिश्रुतिर्नैष्ठिकविषया** ॥ ४० ॥

---

[1] स तु इति तालपाठः । क्वचिदिति । आश्रमविशेषे तत्रापि -अतिविरक्तस्यावस्थाविशेषे इत्यर्थः । अन्यत्र नतु इति पाठः ।

अथ स्यात् –नैष्ठिकादीनां ब्रह्मचर्यात् प्रच्युतानां प्रायश्चित्तादधिकारः संभवति। अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम्, "अवकीर्णिपशुश्च तद्वत्" इति। अतः प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसंभवात् कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यति--इति। तत्राह--

**न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ३-४-४१ ॥**

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां तद्भ्रष्टानां न संभवति। कुतः?। पतनानुमानात् तदयोगात्। नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेस्तस्य प्रायश्चित्तस्यासंभवात्, "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" इति। अतोऽधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥ ४१ ॥

**उपपूर्वमपीत्येके भावमशनवत् तदुक्तम् ॥ ३-४-४२ ॥**

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपूर्वम्--उपपातकम्, महापातकेष्वपरिगणितत्वादिति तत्र प्रायश्चित्तस्य भावं—विद्यमानतामप्येके आचार्या मन्यन्ते। अशनवत्—यथा मध्वशनादिनिषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानम्—तदुक्तं स्मृतिकारैः, "उत्तरेषां चैतदविरोधि" इति। गुरुकुलवासिनो यदुक्तम्, तत् स्वाश्रमाविरोधि उत्तरेषामप्याश्रमिणां संभवतीत्यर्थः—तद्वदिहापि ब्रह्मचर्यप्रच्यवने प्रायश्चित्तसंभवाद्ब्रह्मविद्यायोग्यताऽप्यस्ति ॥ ४२ ॥

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥**

तुशब्दो मतान्तरव्यावृत्त्यर्थः। उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः; ब्रह्मविद्यायामनधिकृता इत्यर्थः। कुतः। स्मृतेः— पूर्वोक्तात् पतनस्मरणात्। यद्यपि कलुषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते, तथाऽपि कर्माधिकारानुगुण-

---

अनन्तरसूत्रमवतारयति **अथ स्यादिति**। **अधिकारलक्षणे**—षष्ठेऽध्याये। **अवकीर्णिपशुः**—गर्दभः। "ब्रह्मचार्यवकीर्णी नैरृतं गर्दभमालभेत" इत्युक्तम्, ब्रह्मचर्यभ्रष्टः अवकीर्णी। ब्रह्मचर्यं—स्त्रीनियतिः,[1] सा गृहस्थव्यतिरिक्तानां त्रयाणामपि तुल्या। तस्मात् तेषामवकीर्णिप्रायश्चित्तं कर्तव्यमिति।

**न चाधिकारिकमपि पतनानुमानात् तदयोगात्** ॥ तर्हि आधिकारिकप्रायश्चित्तं किंविषयमित्यत्राह **अत इति**। य उपकुर्वाणो ब्रह्मचारी भ्रष्टः, तद्विषयमवकीर्णिप्रायश्चित्तमित्यर्थः ॥ ४१ ॥

**उपपूर्वमपीत्येके भावमशनवत् तदुक्तम्** ॥ इदं चोद्यसूत्रम्[2]। ब्रह्मचर्यप्रच्यवनस्य महापातकेष्वपरिगणितत्वादुपकुर्वाणब्रह्मचारिणः स्त्रीनियमातिक्रमस्योपपातकान्तर्भू(र्ग)तस्य प्रायश्चित्तकथनात् तस्य च नैष्ठिकादिष्वतिदेशात् प्रायश्चित्तं प्राप्तमित्यर्थः। 'उत्तरेषां चैतदविरोधि' इत्यत्रैतच्छब्दः पूर्वोक्तधर्मान्[3] प्रायश्चित्तं च परामृशति। स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेर्गृहस्थादिष्वनापातार्थः ॥ पूर्वपक्षिणोऽभिप्रायः।

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च** ॥ **उभयथेति** पदं व्याचष्टे **उपेति**। अतिदेशवचनेन प्रायश्चित्तं प्राप्तम्; पतनस्मृतिश्चास्ति। तयोः कथं विरोधः परिह्रियते इत्यत्राह **यद्यपीति**।

---

1 स्त्रीनियतिः--स्त्रीतः स्वस्य नियन्त्रणम्; तदसंगमः।

2 न तु शांकरमत इव सिद्धान्तसूत्रमित्येतावदेवात्र विवक्षितम्।

3 पूर्वोक्तेत्यस्य धर्मपदेन समस्तत्वात् प्रायश्चित्ते पूर्वोक्तत्वं नाभिप्रेतम्। एतदित्यनेन तद्ग्रहणं तु बुद्धिस्थत्वात् (भाष्यदर्पणे)।

**शुद्धिहेतुप्रायश्चित्तं न संभवति, "प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" इति स्मृते-रित्यर्थः। आचाराच्च—शिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति। तेभ्यो ब्रह्म-विद्यादिकं नोपदिशन्ति। अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः॥ ४३ ॥ इति तद्भूताधिकरणम्॥**

कर्मशक्तिः त्रयी(त्रिधा)—प्रत्यवायकरी, वैदिककर्माधिकारप्रतिबन्धकरी, सजातीयकर्मरुचिकरी चेति। तत्र कानिचित् प्रायश्चित्तानि शक्तित्रयविनाशकानि, कानिचिदन्यतमशक्तिविनाशकानि, अत्रातिदेशपतन-स्मृतिविरोधेऽतिदेशस्मृतिः प्रत्यवायजननशक्तिविनाशकं प्रायश्चित्तमाह; पतनस्मृतिस्तु वैदिककर्मानधि-कारशक्तिविनाशकप्रायश्चित्ताभावमाह, 'येन शुद्ध्येत्' इत्युक्तत्वात्। तस्मादविरोधः। अतोऽतिदेश-सिद्धप्रायश्चित्तेन [1]नरकानुभवलाघवे सत्यपि पतनस्मृतिवचनान्न ब्रह्मविद्याधिकार इत्यर्थः। **आचाराच्चेति** सूत्रखण्डोपादानम्। वर्जनफलमाह **नोपदिशन्तीति**॥ 'अनाश्रमी न तिष्ठेत्' इत्यनाश्रमित्वं निषिद्धम्; आश्रमभ्रंशोऽपि निषिद्धः; एवं निषेधे समाने कथमेकत्र विद्याधिकारः, अन्यत्रानधिकारः॥ उच्यते—अनाश्रमिणामपि विद्याधिकारः [अ]श्लाघ्यत्वं [2]च श्रुतम्, आश्रमप्रच्युतानां तु न तथेति विशेष इति।

**परे तु—तद्भूतस्येत्येकं** सूत्रं पृथगधिकरणं वदन्ति। तत्र ऊर्ध्वरेतसामाश्रमप्रत्यवरोहः प्रामाणिको न वेति संशेरते ब्रह्मविद्याधिकारानधिकारसिद्ध्यर्थम्। पूर्वाश्रमधर्मस्वनुष्ठानचिकीर्षया[3] रागादिना वा संभवतीत्युक्त्वा नियमश्रुत्या तदप्रामाणिकत्वं सिद्धान्तयन्ति। **न चाधिकारिकमपि** इत्यधिकरणान्तरं नैष्ठिकादीनामाश्रमभ्रष्टानां प्रायश्चित्तसम्भवासम्भवविषयं वदन्तः, असम्भव [इत्याशंक्य संभव?] इति सिद्धान्तयन्ति। यदा आश्रमभ्रष्टानां प्रत्यवायवचनानि दृश्यन्ते, प्रायश्चित्तासम्भवोऽपि[4] संशयास्पदं भवति—तदा कथं भ्रंशस्य सद्भावे प्रमाणविरुद्धत्वे च संदेहः। अतः संदेहाभावाद्विचारो-ऽनुपपन्नः। अतो **नातद्भावः** इति सूत्रमपि मूलविचारे हेतुगर्भम्।

ऐकाधिकरण्यमिच्छताम**परेषा**मपि प्रच्युतिरस्ति नेति विचार उक्तन्यायादनुपपन्नः।

अन्येषामपि **तद्भूत**सूत्रस्य पृथगधिकरणत्वं संशयाभावादयुक्तम्॥ आश्रमादाश्रमं गच्छेदित्य-विशेषवचनात्, पतनवचनस्यानाश्रमित्वरूपेण प्रच्यवनविषयत्वसंभवाच्च विचार इति चेत्—न, 'संन्यस्याग्निं न पुनरावर्तयेत्' इत्याश्रमप्रत्यवरोहनिषेधश्रुतेः स्फुटार्थतया संभावितार्थान्तरस्मृतिवचनेन संदेहानुदयात्॥ अविदितनिषेधवाक्यस्य संदेहोदय इति चेत्—अविदितस्मृतिवचनस्य संदेहाभावादनारम्भः स्यात्॥ विदित-स्मृतिवचनस्याविदितनिषेधवाक्यस्य सन्देह इति चेत्--तर्हि तत्तदंशाज्ञाननिमित्तसन्देहानन्त्यादनन्ताधिकरण कल्पनप्रसङ्गः॥ **न चाधिकारिक**मिति ऊर्ध्वरेतसामाश्रमभ्रष्टानां प्रायश्चित्ताभावस्मरणाद्विद्यानधिकार इति

---

1 लाघवे=न्यूनतायाम्। वैदिककर्मानधिकारापादकशक्त्याद्यापादितनरकांशसद्भावात् नात्यन्ताभावः। 2 श्लाघ्यत्वमिति। 'सर्वं तदेनमभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेदेति रैक्वः श्लाघितः। 3 अयं भावप्रकाशिकास्थः शांकरानुसारी पाठः। 4 प्रायश्चित्तासंभव-शंकाया अप्यवकाशोऽस्तीति भवद्भिरेव द्वितीयाधि करणरचनादिना ज्ञाप्यत इत्यर्थः। एवमुप-क्षेपार्थमेव पूर्वं न चाधिकारिकमपीत्यादिः टीकाग्रन्थः। न तु खण्डनार्थम्। बहिस्त्वित्यादि अधिकरणान्तरमिति परोक्तं त्वनुपयोगात् नानूदितम्। उपपूर्वमपीति सूत्रस्य सिद्धान्तत्वे अस्वारस्यमन्यपक्षखण्डनकाले ज्ञापयिष्यत इति अत्र तदुपेक्षा। विशेषान्तरं तु भाष्यार्थदर्पणे।

स्वाम्यधिकरणम् ३-४-११

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३-४-४४ ॥**

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि उतर्त्विक्कर्तृकाणीति चिन्तायाम्—यजमानकर्तृकाणीत्यात्रेयो मन्यते। कुतः। फलश्रुतेः। वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनात् इह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः। न च गोदोहनादिवत् अङ्गाश्रयत्वेन यजमानकर्तृकत्वासंभवः; गोदोहनादिषु ह्यध्वर्युकर्तृक-

---

पूर्वपक्षसूत्रं कृत्वा, "वार्धुषिकत्वं व्रताच्च्युतिः" इति व्रतच्युतेरुपपातकत्वात्, मध्वशनोपपातकप्रायश्चित्तस्यात्रापि प्राप्तिस्मरणात्, श्रौतस्याप्यवकीर्णिप्रायश्चित्तस्य ब्रह्मचारित्वसामान्येन नैष्ठिकेऽपि प्राप्तत्वात, "वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं वर्धयेत्" इत्यादिवचनात, प्रायश्चित्ताभावस्मृतेः प्रायश्चित्तगौरवाभिप्रायत्वसंभवाच्च, प्रायश्चित्ताभावस्मरणस्य मूलादर्शनात्, तत्सद्भावस्मरणस्य ब्रह्मचारित्वादिरूपसामान्यन्यायमूलत्वेन शास्त्रसंस्पर्शसम्भवात, "शास्त्रस्था वा तन्निमित्तत्वात्" इति न्यायेन शास्त्रसंस्पर्शवतः प्राबल्यात् प्रायश्चित्तेन ब्रह्मविद्याधिकार इति **उपपूर्वमिति** सूत्रेण सिद्धान्तयन्त्यन्ये। **उपपूर्वमपि इत्येके,** '**बहिस्तूभयथाऽपि** इति सूत्रस्वारस्यविरोधात् तदयुक्तम्। **एक** इति पदेन पूर्वपक्षत्वम्, **तु**शब्देन तद्व्यावृत्तिः, **उभयथा**शब्देन पतनीयत्वे अपतनीयत्वे च बहिष्कार्यत्वं हि प्रतीयते॥ प्रायश्चित्ताभावस्मरणस्य न शास्त्रसंस्पर्श इत्यप्ययुक्तम्; बाधकाभावे श्रुतिमूलत्वसिद्धेः॥ शास्त्रसंस्पृष्टं प्रायश्चित्तस्मरणं बाधकमिति चेत्—न; **येन शुद्ध्येदिति** प्रायश्चित्ताभाववचनस्य शुद्धिहेत्वभावविषयत्वात्, प्रायश्चित्तसद्भाववचनस्य तु कल्मषनिर्हरण(निबर्हण)विषयत्वेनाप्युपपत्तेः, अधिकारापादकप्रायश्चित्तसद्भावानवगमकतया च विरोधाभावात् बाधकत्वानुपपत्तेः। अनन्यथासिद्धं हि बाधकम्॥ **बहिस्तूभयथापीति** सूत्रमकृतप्रायश्चित्तानामाश्रमभ्रष्टानामनधिकारसमर्थनपरमधिकरणान्तरं वर्णयन्ति। तदप्ययुक्तम्—संशयाभावात्। प्रायश्चित्ततोऽपि शुद्धौ संदिग्धायाम् अकृतप्रायश्चित्ततया निर्णीताशुद्धीनां कथं ब्रह्मविद्याधिकारसंभावना॥ ननु "इन्धनार्थमशुष्काणां द्रुमाणामवशातनम्" इत्यादेरुपपातकत्वात् तादृशं कुर्वतामितरैः संव्यवहारादिशास्त्रीयानुष्ठानादिदर्शनात् आश्रमभ्रंशस्याप्युपपातकत्वाविशेषात् संशय इति चेत्—तर्ह्यनधिकार इति सिद्धान्तोऽनुपपन्नः; अशुष्कद्रुमशातनादिकारिषु कर्मानधिकारासंव्यवहाररूपहेत्वभावस्य भवद्भिरेवोक्तत्वात्॥ उपपातकेष्वपि गुरुतरपापकारिषु हेतुसद्भाव इति चेत्—तर्हि तेषु पूर्वोक्तन्यायेन संशयाभावादेवानारम्भणीयता॥ ४६॥

**स्वामिनः फलश्रुतेरित्यात्रेयः॥** इदमधिकरणं प्रासङ्गिकम्। उपासनानुष्ठात्रनुष्ठातृविभागप्रसङ्गेनोद्गीथोपासनादेरनुष्ठात्रनुष्ठातृविभागचिन्ता क्रियत इति सङ्गतिः। क्रत्वङ्गाश्रयाण्युपासनानि किं यजमानकर्तृकाणि, उत ऋत्विक्कर्तृकाणि; किं दहराद्युपासनानामिव फलिकर्तृकत्वं न्याय्यम्, उत गोदोहनादेरिव ऋत्विक्कर्तृकत्वम्; किं गोदोहनादिषु ऋत्विक्कर्तृकत्वं यजमानेनाशक्योपादनतया, उत साङ्गप्रधानानुष्ठानाय ऋत्विक्परिक्रयश्रवणात्। अशक्यतया चेत्—तदभावात् फलिकर्तृकत्वोपपत्तेः यजमानकर्तृकत्वम्। परिक्रयश्रवणाच्चेत्—गोदोहनादीनामिव ऋत्विक्कर्तृकत्वस्य न्याय्यत्वादृत्विक्कर्तृकत्वम्। **उद्गीथाद्युपासनानी**त्युक्ते उपासनस्य कर्माङ्गत्वं मा भूदिति **कर्माङ्गाश्रयाणी**त्युक्तम्। **न चे**त्यादि।

प्रणयनाश्रयगोदोहनोपादानमन्येनाशक्यम्; इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादेः रसतमत्वानुसन्धानं यजमानेनैव कर्तुं शक्यते ॥ ४४ ॥ इति प्राप्तेऽभिधीयते—

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ३-४-४५ ॥**

आर्त्विज्यम्—ऋत्विजः कर्म उद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते। कुतः। तस्मै हि प्रयोजनाय ऋत्विक् परिक्रीयते; फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः। कर्मविधिषु, "ऋत्विजो वृणीते", "ऋत्विग्भ्यो दक्षिणां ददाति" इति ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते। तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव। न च शक्त्यशक्ती तस्य निबन्धनम्। यद्यप्युद्गीथाद्युपासनं पुरुषार्थः, तथाऽपि क्रत्वधिकृताधिकारत्वात् क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात् "यदेव विद्यया करोति..तदेव वीर्यवत्तरम्" इति ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायास्तदेककर्तृकत्वश्रवणादृत्विक्कर्तृकाण्येतानि। दहरादिषूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात् "शास्त्रफलं प्रयोक्तरि" इति न्यायाच्च फलिकर्तृकत्वमेव ॥ ४५ ॥

इति स्वाम्यधिकरणम् ॥

---

प्रणयनस्याध्वर्युकर्तृकत्वात् तदाश्रयस्य गोदोहनस्योपादानं यजमानेन फलाश्रयभूतेनापि कर्तुमशक्यम्; अत्र तु शक्यत्वात् फलाश्रय एव कर्तेत्यर्थः ॥ ४४ ॥

सिद्धान्तसूत्रमाह—**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते** ॥ **तस्मै हि प्रयोजनायेति** चतुर्थीव्याख्यानम्। **फलसाधनेत्यादिना** तच्छब्दव्याख्यानम्। **परिक्रीयत** इत्येतद्विवृणोति **कर्मविधिष्विति**। ततः किमित्यत्राह **तदन्तर्गतानीति**। **न च शक्त्यशक्ती तस्य निबन्धन**मिति। न हि ऋत्विजाऽन्येन क्रियमाणमन्येन कर्तुमशक्यम्। तस्माद्वचननिबन्धनं गोदोहने एककर्तृकत्वमित्यर्थः। अङ्गत्वे सति हि ऋत्विक्कर्तृकत्वम्; नेदमङ्गमित्याह **यद्यपीति**। परिहरति **तथाऽपीति**। ऋत्विक्कर्तृककर्मोपयोगित्वेन प्रोक्षणादिवदिदमपि ऋत्विक्कर्तृकम्, अभ्युपायन्यायादित्यभिप्रेत्याह **क्रत्वधिकृतेति**। **यदेव विद्ययेति**। ऋत्विक्कर्तृककर्मणो वीर्यवत्तरत्वसाधनभूताया विद्यायाः कर्त्रपेक्षायामन्तरङ्गबहिरङ्गन्यायेन आसन्नर्त्विक्कर्तृकत्वं न्याय्यमिति न्यायोपेतात् **विद्यया करोती**ति वाक्यस्वारस्याच्चोद्गीथाद्युपासनानि ऋत्विक्कर्तृकाणीत्यर्थः। "एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति", "तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानीति" इत्यादिवाक्यैः ऋत्विक्कर्तृकवेदनफलस्य यजमानगामित्वप्रतिपादनं तु (च?) हेतुतयाऽनुसन्धेयम्। तस्य न्यायसिद्धार्थानुवादरूपत्वात् तन्मूलयुक्तिमात्रमेवोक्तं भाष्ये। दहरादिषु फलिकर्तृकत्वे को विशेष इत्यत्राह दहरादिष्विति। ऋत्विक्कर्तृकत्वाश्रवणं वैषम्यमित्यर्थः। तच्छ्रवणमन्यत्र फलिकर्तृकत्वस्यापवादकम् ॥ ४५ ॥ इति स्वाम्यधिकरणम्।

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ॥ पूर्वं यज्ञादिः शमादिश्च विद्यासहकारी निरूपितः; इदानीं सहकार्यन्तरं निरूप्यत इति सङ्गतिः। अधिकरणान्तराणि तु सङ्गतिविशेषप्राप्तानि। मननस्य प्रवृत्तिरूपत्वेपि ध्यानालम्बनशुभाश्रयगोचरत्वेनातद्गोचरेभ्यो यज्ञादिभ्यः शमादिभ्यश्च विलक्षणत्वात् अतद्गोचरत्वसाधर्म्येण यज्ञादीन् शमादींश्च निरूप्य पश्चान्मननं निरूप्यते। शुभाश्रयगोचरत्ववैलक्षण्याद् यज्ञादेः शमादेश्च मध्ये निरूपणाभावः। विद्यासहकारित्वसाम्यात् तदुभयतदनुबन्धिचिन्ता-

## सहकार्यन्तरविध्यधिकरणम् ३-४-१२

### सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३-४-४६ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र बाल्यपाण्डित्यवत् मौनमपि विधीयते, उतानूद्यते इति विशये—मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात्, 'पाण्डित्यं निर्विद्य' इति विहितमेव ज्ञानम् 'अथ मुनिः' इत्यनूद्यते। विधिशब्दो न ह्यत्र श्रूयते इत्येवं प्राप्ते—ब्रूमः सहकार्यन्तरविधिः—इति। तद्वतः—विद्यावतः। विध्यादिवत्। विधीयत इति यज्ञादिः सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते। आदिशब्देन श्रवणमनने गृह्येते। सहकार्यन्तरविधिरित्यत्रापि विधीयत इति विधिः। सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः। एतदुक्तं भवति--यथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिना "शान्तो दान्तः" इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते, यथा च "श्रोतव्यो मन्तव्यः" इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते--तथा, 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादिना पाण्डित्यं बाल्यं मौनमिति त्रितयं विद्यायाः सहकार्यन्तरं विधीयते—इति। मौनं च पाण्डित्यादर्थान्तरमित्याह पक्षेणेति।

---

नन्तरं निरूपणं प्राप्तमित्युक्तं भवति। किमस्मिन् वाक्ये मौनं विधीयते, उतानूद्यत इति; किं पाण्डित्यमेव मौनम्, उतार्थान्तरं मननरूपमिति; [1]किं मननं विधातुं योग्यम्, उत नेति; किं मननस्य यज्ञादिश्रुतिविरोधोऽस्ति, उत नेति; किं मननं कर्मानुष्ठानप्रतिक्षेपकम्, उत नेति; स्वप्रकरणे प्रकरणान्तरे च कतिपयाश्रमधर्मानुक्तिर्मननस्य कर्मानुष्ठानप्रतिक्षेपकत्वमुपोद्बलयति, उत नेति; किं कतिपयोक्तिरनुक्तानादरमूलैव स्यात्, उतानुक्तप्रदर्शनार्था च स्यादिति। यदा कतिपयोक्तिरनुक्तानादरमूलैव स्यात्—तदानीं तत्तत्प्रकरणभेदेन सर्वाश्रमधर्माणामनुक्तत्वाविशेषादनादरगर्भा तदनुक्तिर्मननस्याश्रमधर्मप्रतिक्षेपकत्वमुपोद्बलयतीति तत्प्रतिक्षेपकत्वे मननस्य यज्ञादिश्रुतिविरुद्धतया विधातुमयोग्यत्वात् मौनशब्दो मननपरत्वायोगेन प्राप्तपाण्डित्यानुवादीति मौनमनूद्यत इति फलं स्यात्। यदा कतिपयोक्तिरनुक्तप्रदर्शनार्थाऽपि भवेत्—तदानीं तत्तत्प्रकरणभेदेनाश्रमधर्माणामनुक्तत्वाविशेषेऽप्यनुक्तेरनादरगर्भत्वाभावात् तदुक्तिर्मननस्याश्रमधर्मप्रतिक्षेपकत्वं नोपोद्बलयतीति मननस्य तदप्रतिक्षेपकतया यज्ञादिश्रुतिविरोधाभावेन विधातुं योग्यत्वात् मौनशब्दो न वाक्यान्तरप्राप्तपाण्डित्यानुवादीति मौनस्य विधेयत्वं फलं स्यात्। **तद्वतः**—विद्यावतः **तृतीयं**—मौनम् **सहकार्यन्तर**रूपो **विधिः**—सहकारित्वेन विधेयम्, यज्ञदानशमदमादिवत्; **पक्षेण**[2] प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनादिति सूत्रार्थः। **मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वादि**ति। मौनशब्दस्य मननार्थत्वात् मननस्य श्रवणप्रतिष्ठार्थज्ञानविशेषरूपत्वात् पण्डितशब्दस्य विद्वद्विषयताप्रसिद्धेश्च मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वम्। **तद्वत** इति व्याख्येयं पदम्। विधिशब्दं व्याचष्टे **विधीयत** इति। पदार्था उक्ताः। अथ सूत्रस्य वाक्यार्थमाह **एतदि**ति ॥ ४६ ॥

---

1 अत्राधिकपूरणेन फलफलिभावक्रमः कृत्स्नो भावप्रकाशिकायां प्रादर्शि।

2 परमतखण्डनावसरे टीकायामस्मन्मते, 'व्यासादौ प्रयोगदर्शनात्' इत्यध्याहारस्य वक्ष्यमाणतया न प्रयोगादिः पक्षशब्दार्थः। अनध्याहारपक्षो भाष्यार्थदर्पणे।

मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनात् । मौनं पाण्डित्यबाल्ययोर्द्वयोस्तृतीयम् । यद्यपि "अथ मुनिः" इत्यत्र विधिप्रत्ययो न श्रूयते, तथाऽपि मौनस्याप्राप्तत्वात् विधेयत्वमङ्गीकरणीयम्, अथ मुनिः स्यादिति । इदं च मौनं श्रवणप्रतिष्ठार्थात् मननात् अर्थान्तरभूतमुपासनालम्बनस्य पुनःपुनः संशीलनं तद्भावनारूपम् । तदेवं वाक्यार्थः--ब्राह्मणः--विद्यावान् पाण्डित्यं निर्विद्य--उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा--श्रवणमननाभ्यामप्राप्तं[1] (भ्यां प्राप्तं) वेदनं प्रतिलभ्येत्यर्थः । तच्च भगवद्भक्तिसहकृतसत्त्वविवृद्धिकृतम् । यथोक्तम्,, "नाहं वेदैः" इत्यारभ्य, "भक्त्या त्वनन्यया शक्यः....ज्ञातुम्" इति । श्रुतिश्च, "यस्य देवे परा भक्तिः", "नायमात्मा प्रवचनेन लभ्यः" इत्यादिका । बाल्येन तिष्ठासेत् । बाल्यस्वरूपञ्च अनन्तरमेव वक्ष्यते । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः स्यात्--बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो भवेत् निदिध्यासनरूपविद्यावाप्तये । एवमेव त्रितयोपादानेन लब्धविद्यो भवतीत्याह, "अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति । अमौनम्--मौनेतरसहकारिकलापः । तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्पाद्यां लभेतेत्यर्थः । "स ब्राह्मणः केन स्यात्" इति उक्तादुपायात् किमन्योऽप्युपायोऽस्तीति पृष्टे, "येन स्यात् तेनेदृश एव" इति--येन मौनपर्यन्तेन ब्राह्मणः स्यादित्युक्तम्, तेनैवेदृशः स्यात्; न केनाप्यन्येनोपायेनेति परिहृतम् । अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिकं मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते ॥ ४६ ॥

अथ स्यात्--यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मसहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमुच्यते, कथं तर्हि छान्दोग्ये, "अभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यारभ्य, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते ; न च पुनरावर्तते" इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यते । अत आह--

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३-४-४७ ॥**

तुशब्दश्चोद्यं व्यावर्तयति । कृत्स्नभावात्--कृत्स्नेषु भावात् । कृत्स्नेष्वाश्रमेषु विद्यायाः सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः । तस्मात् सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ॥ ४७ ॥

तथैतस्मिन्नपि वाक्ये; "ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति पारिव्राज्यैकान्तधर्मं प्रतिपाद्य, "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पारिव्राज्यधर्मस्थितिहेतुकमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह--

**मौनवदितरेषामप्युपदेशात् ॥ ३-४-४८ ॥**

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः । कुतः । एवंविधमौनोपदेशवदितरेषामाश्रमिणामपि, "त्रयो धर्मस्कन्धाः" इत्यारभ्य, "ब्रह्मसंस्थोऽमृत-

---

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ मौनवदितरेषामप्युपदेशात् ॥ एवंविधमौनोपदेशवत्--सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशवदित्यर्थः ।

परे तु--विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवत् विधिः । "गार्हस्थ्यमाचार्यकुलं मौनं

---

1 अप्राप्तमिति तालकोशे । युक्तमिदम् ; विधेयस्य पाण्डित्यस्यानुवाद्यान्मननादन्यत्वात् ।

त्वमेति" इति ब्रह्मप्राप्त्युपदेशात् । उपपादितश्च पूर्वमेव ब्रह्मसंस्थशब्दः सर्वाश्रमिसाधारण इति ।

वानप्रस्थम्' इति प्रयोगात् मुनिशब्दस्य, चतुर्थाश्रमपरत्वव्यवच्छेदायाह— तृतीयमिति । तृतीयमिदं मौनम्; ज्ञानातिशयरूपमित्यर्थः । विद्यावत्त्वे प्राप्नोत्येवातिशयः; किं विधिनेत्यत्राह—पक्षेणेति । यस्मिन् पक्षे भेददर्शनप्राबल्यात् विद्योपक्रमदशायामेकत्वज्ञानस्य नातिशयः, तस्मिन्नेष विधिः, दर्शपूर्णमासविध्यादावङ्गविधिवत् । मोक्षाश्रमे बाल्यादिप्रधानेऽपि, छान्दोग्ये गृहिणोपसंहारः कथमित्यत्राह **कृत्स्नभावात्तु गृहिणोपसंहारः** इति । गृहिषु यज्ञादिकर्माणि अहिंसेन्द्रियसंयमनादि च यथासम्भवं विद्यन्ते । अतस्तेनोपसंहारः । न तु गार्हस्थ्यमात्रपर्यवसानादिति । मौनगार्हस्थ्याश्रमद्वयोपन्यासादितराश्रमाभावशङ्कां व्युदस्यति **मौनवदितरेषामप्युपदेशादिति** । यथा मौनगार्हस्थ्याश्रमौ प्रामाणिकौ, तथा वानप्रस्थगुरुकुलवासावपि; **उपदेशा**विशेषात् । बहुवचनं तत्तदवान्तरवृत्तिभेदापेक्षयेति वर्णयन्ति ।

तत्र तावत् षष्ठीसमासादपि सहकार्यन्तरं विधेयमिति युक्तम्; **विध्यादिव**दिति विधिशब्दस्य विधेयवाचित्वात् तदैकरूप्यस्य उचितत्वाच्च । तस्यापि विधानवाचित्वे षष्ठ्यन्ताध्याहारप्रसङ्गः । **तृतीयविधिशब्दयोः** सामानाधिकरण्ये सत्येकवाक्यत्वं स्यात् । त्वत्पक्षे तु, तस्मात् तृतीयं मौनं विधीयते इति वाक्यभेदकल्पनं स्यात् । तच्च निष्प्रयोजनम् । किञ्च विध्यादिवदिति विधिशब्दस्य विद्याङ्गभूतयज्ञादिशमादिपरत्वं युक्तम्; अङ्गमात्रे दृष्टान्तसमर्पणादपि विद्याङ्गत्वे दृष्टान्तसमर्पणौचित्यात् । पक्षेणेत्यत्र भेददर्शनप्राबल्यात् अतिशयो विधेय इत्यध्याहारादपि **व्यासादौ प्रयोगा**दित्यध्याहारौचित्यात् (त्यम् ?) । ज्ञानार्थस्य **मुनिशब्दस्य** तद्विशेषविषयत्वे हेतोर्वक्तव्यत्वात् ॥ विद्यावतोऽतिशयप्राप्तेः, अविधेयत्वशङ्का चापाकरणीयेति चेत्—न; अतिशयमात्रवाचित्वाभावान्मुनिशब्दस्य । शुभाश्रयमननं हि विधेयम्; तत्कारिषु प्रयोगात् । मौनशब्दस्य ध्यानसमाधिपर्यायत्वाभावात् । तत्तद्विषयविशेषसंशीलनं हि मननम्; न तु निरन्तरस्मृतिः, न च समाधिः ॥ तच्च विद्यावतः सिद्धमिति चेत्—न; **तद्वत** इति पदस्य प्रारब्धविद्यविषयत्वात् । तच्च अनुक्तसहकारिसापेक्षत्वादवगम्यते । ब्राह्मणशब्दश्च न जातिवाची; 'अथ ब्राह्मणः' इत्युक्तेः, जातिर्हि प्रागेव सिद्धा । **कृत्स्नभावा**दित्यनन्तरसूत्रस्य च[1] इतराश्रमसद्भावपरत्वमयुक्तम्; 'विधिर्वा धारणवत्' इत्यत्र आश्रमविधीनामुपपादितत्वात् । यदाऽऽश्रमान्तरस्य विद्याङ्गत्वे विरोधपरिहारपरं कृत्स्नभावादिति सूत्रम्, तदा प्रदर्शनार्थतया व्याख्याने समीचीनमुत्तरं स्यात्; न तु गृहस्थे कृत्स्नश्रौतस्मार्तब्रह्मचर्यमौनादिसद्भावपरत्वेन व्याख्याने । ?

? अत एव कथं गृहिणः कृत्स्नमित्याशङ्क्य, मौनवत् शमादीनामपि गृहमेधिनि उपदेशादिति कार्त्स्न्योपपादकत्वेन तृतीयसूत्रव्याख्यानमप्ययुक्तम्; पूर्वसूत्रस्य गृहस्थे कृत्स्नधर्मपरत्वाभावात् ।

**अन्ये** तु—'एतमेव विदित्वा मुनिर्भवति' इति वाक्यान्तरैकार्थ्यात् फलार्थवादः स्यात्; ब्राह्मण्यसाहचर्याच्च, 'अथ मुनिः' इति विद्याफलकीर्तनमिति पूर्वपक्षं कृत्वा—मौनं नाम पारिव्राज्यं

---

1 चकारो मौनसूत्रसमुच्चायकः । सूत्रद्वयेन क्रमेण गार्हस्थ्योपरितनस्य संन्यासस्य ब्रह्मचर्यवानप्रस्थयोश्च सर्वात्मना नास्तित्वशंका निवर्त्यत इति परेषां पक्षस्य प्रागेवोक्तत्वात् । अत एवेत्यादिना दृश्यमानं तृतीयसूत्रव्याख्यानं तु न परेषाम् । अत एव भास्करीयमिति । भा० प्र०

?? नूनं मध्ये परपक्षखण्डनसमाप्ति-अपरपक्षप्रस्तावनवाक्यानि भ्रष्टानि स्युः ।

अतः सुष्ठूक्तम्—यज्ञादिसर्वाश्रमधर्मवत् मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयत इति ।

इति सहकार्यन्तरविध्यधिकरणम् ॥

---

विधीयते, 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इति प्रयोगात्; भवतीत्यध्याहारादपि अपूर्वतया भवेदित्यध्याहारस्य युक्तत्वात्। पूर्वत्र, 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति पारिव्राज्यप्रस्तावात् स्तुतेश्च विध्यर्थत्वाच्च मुनिर्भवतीत्यत्रापि अयमेवार्थ इति। ब्राह्मण्यमपि न विद्याफलम्; किन्तु सहकार्यन्तरं विधेयम्। तच्च सर्वाश्रमधर्मपरित्यागरूपम्; दुर्वासःसंवर्तादीनां नग्नचर्यादिदर्शनात्। "नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं धृतिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः" इति भारतवचनात्। इदं च न यतीनामेव; संवर्तस्यैव आर्त्विज्यकरणदर्शनादिति सिद्धान्तयन्ति। बाल्यपाण्डित्यापेक्षया तृतीयं मौनं च न नित्यवदनुष्ठेयम्, किं तु **पक्षेण**—इच्छया; विकल्पेन। **विध्यादिवत्**—'अथ यद्यज्ञ इत्याचक्षते' इत्यादिवाक्योक्तयज्ञेष्टसत्रायण-अनाशकायन-अरण्यायनादिवत्। तेषु मौनस्य परस्तात् गार्हस्थ्यस्य आमरणाच्छ्रवणात् छान्दोग्ये। **गृहिणोपसंहारः** तत्र विद्यापरिकरसद्भावात्; न तु मौनब्राह्मण्ययोरविहितत्वादिति चाहुः। **मौनवदि**त्यधिकरणान्तरम्। ब्रह्मचर्यवानप्रस्थयोर्न विद्याङ्गत्वम् अविधानादिति पूर्वपक्षं कृत्वा—तमेतमित्यादिवाक्ये वेदानुवचनतपोऽनाशकशब्दैर्वाक्यान्तरैश्च ब्रह्मचारिणां वानप्रस्थानामप्युपदेशात् विद्याङ्गत्वमिति सिद्धान्तयन्ति।

अत्र ब्रूमः—फलकीर्तनमिति पूर्वपक्षोऽनुपपन्नः; ज्ञानव्यतिरेकेण फलविशेषवाचित्वाप्रतीतेः। ज्ञानमेव चेत् फलम्, तर्हि पाण्डित्यानुवाद इति पूर्वपक्षो युक्तः। पारिव्राज्यविधिरिति सिद्धान्तोऽप्यनुपपन्नः, 'व्युत्थाय भिक्षाचर्यं चरन्ति' इति पूर्वमेव विहितत्वात्। लिङाद्यश्रवणमुभयत्र तुल्यम्। विधिकल्पनं तु तत्रैवोचितम्; बह्वर्थसाधारणान्मुनिशब्दादपि तत्र पारिव्राज्यस्फुटप्रतीतेः। न च ब्राह्मण्यं नाम सर्वाश्रमधर्मपरित्यागः; अशाब्दत्वात्। 'ततस्ततश्चोपरमः क्रियाभ्यः' इति वचनं तु लौकिकव्यापारविषयतयोपपन्नम्। संवर्तादीनां नग्नचर्यावचनं न सर्वाश्रमधर्मत्यागे प्रमाणम्; जनावमानकृतयोगसिद्धये स्वप्रकर्षाच्छादनार्थतयाऽप्युपपन्नत्वात्। आर्त्विज्यकरणेन गार्हस्थ्यापरित्यागावगमात् आश्रमधर्माणामात्मध्यानस्येव छन्नानुष्ठानसम्भवाच्च। तथा हि स्मरन्ति, "यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्। न सुवृत्तं न दुर्वृत्तं वेद कश्चित्, स ब्राह्मणः। गूढधर्मा श्रुतो विद्वानज्ञानचरितं चरेत्। अन्धवज्जडवच्चैव मूकवच्च महीं चरेत्" इति। द्वितीयसूत्रे गृहिणोपसंहारस्य निर्वाह्यत्वादाद्यसूत्रे पक्षेणेति पारिव्राज्यस्य विकल्पेनोपादेयत्वं चासमर्थनीयम्। विद्याङ्गत्वेन गार्हस्थ्यप्रामाणिकत्वबुद्धौ सत्यां पारिव्राज्यनियमशंकानुपपत्तेः। **तद्वत** इत्यस्य विद्यावत इति व्याख्यानमुचितम्; न तु बाल्यपाण्डित्यवत इति; विद्यायाः प्रकृतत्वात्; पारिव्राज्यानियमस्यासमर्थनीयत्वाच्च। यतो मौनब्राह्मणशब्दौ न पारिव्राज्यसर्वाश्रमधर्मत्यागपरौ, किंतु शुभाश्रयमनननिदिध्यासनलाभपरौ—अत एव तयोरनियतत्वमप्यनुपपन्नम्; सर्वासु विद्यासु शुभाश्रयमननस्यापेक्षितत्वात्; उपासनस्य निदिध्यासनरूपत्वाच्च। द्वितीयसूत्रनिर्वाहो दत्तोत्तरः। ब्रह्मचर्यवानप्रस्थयोर्विद्याङ्गत्वनिरूपकतया अधिकरणान्तरत्वं

### अनाविष्काराधिकरणम् ३-४-१३

### अनाविष्कुर्वन्नन्वयात् ॥ ३-४-४९ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम्। बालस्य भावः, कर्म वा बाल्यम्। बालभावस्य वयोवस्थाविशेषस्यानुपादेयत्वात् कर्मैवेह गृह्यते। तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम्, उत डम्भादिरहितत्वमेवेति विशये--विशेषाभावात् सर्वमुपादेयम्; नियमशास्त्राणि च विशेषविधिनाऽनेन बाध्यन्त इत्येवं प्राप्ते--अभिधीयते अनाविष्कुर्वन्--इति। बालस्य यत् स्वभावानाविष्काररूपं कर्म, तदुपाददानो वर्तेत विद्वान्। कुतः। अन्वयात्--तस्यैवान्वयात्। "बाल्येन तिष्ठासेत्" इत्यस्मिन् विधौ तस्यैव ह्यन्वयसंभवः। इतरेषां विद्याविरोधित्वश्रवणात्, "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्", "आहारशुद्धौ सत्त्वशुद्धिः" इत्यादिषु ॥ ४९ ॥

इति अनाविष्काराधिकरणम् ॥

### ऐहिकाधिकरणम् ३-४-१४

### ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३-४-५० ॥

द्विविधा विद्या--अभ्युदयफला मुक्तिफला च। तत्राभ्युदयफला स्वसाधनभूतैः पुण्यक-

---

च मौनवदिति सूत्रस्यायुक्तम्; सर्वापेक्षेत्यत्रैव तमेतमित्यादिवाक्येन विद्यायाः सर्वाश्रमधर्माङ्गकत्वस्य समर्थितत्वात् ॥ ४८ ॥ इति सहकार्यन्तरविध्यधिकरणम् ॥

**अनाविष्कुर्वन्नन्वयात्** ॥ सङ्गतिः स्फुटा। बाल्योपादाने किं कामचारादिकमपि उपादेयम्, उत माहात्म्यानाविष्करणमेव; किं बाल्यशब्दः सर्वबालकर्मपरः उत माहात्म्यानाविष्काररूपबालस्वभावविशेषपरः; नाविरतः' इत्यादिश्रुतिः किं बाल्यशब्दस्य अनाविष्कारपरतामवगमयति, नेति; न चेत् सर्वबालकर्मपरतया बाल्यशब्दस्य, कामचारादेरुपादेयत्वम् ॥ अवगमयति चेत्—अनाविष्कारपरतया बाल्यशब्दस्य डम्भादिराहित्यमेवोपादेयं स्यात्। ननु कथं रागप्राप्तस्य कामचारादेर्विधेयत्वशङ्का ॥ नैवम्; रागप्राप्तस्यर्तुगमनादेर्नियमार्थं विधानदर्शनात् ॥ ऋतुगमनं नान्यत्र निषिद्धम् ॥ रागप्राप्तं निषिद्धं कथं विधेयमिति चेन्न; पश्वालम्भनविधानवद् बाल्यविधानस्यापि संभावितत्वात्। **नियमशास्त्राणि चेति**। नियमशास्त्राणि ब्रह्मविद्यातिरिक्तविषयाणीति भावः। राद्धान्तमाह **एवं प्राप्ते** इति। **बालस्येति**। स्वभावोऽभिजनशुद्ध्यादिः। नियमशास्त्राणां ब्रह्मविद्व्यतिरिक्तविषयत्वं परिहृतम्; एतदाश्रमनिष्ठस्य विशेषतो नियमदर्शनादित्यर्थः ॥ ४९ ॥

**ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्** ॥ अङ्गचिन्ता कृता, अङ्गिनिष्ठासिद्धिसमयो निरूप्यत इति सङ्गतिः। किमैहिकफलोपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यते, उतानन्तरं कालान्तरे वेत्यनियमः; किं तदुत्पत्तेः प्रतिबन्धः संभवति, नेति। न चेत्—आनन्तर्यनियमः। सम्भवे त्वनियमः। उद्गीथाद्युपासनरहितयज्ञादिसुकृतैर्विद्यानिष्पत्तावयं विचारः। विद्यायाः पुण्यहेतुकत्वे सिद्धे हि अयं विचार इत्यत्राह **यथोक्तमिति** ॥ ५० ॥

र्मभिः पुण्यकर्मानन्तरमेवोत्पद्यते, उतानन्तरं कालान्तरे वेत्यनियम इति संशयः । पूर्वकृतैः पुण्यकर्मभिर्हि विद्वान् जायते । यथोक्तं भगवता, "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन" इति । साधने निर्वृत्ते विलम्बहेत्वभावात् अनन्तरमेवेति प्राप्ते उच्यते--ऐहिकमप्रस्तुतप्रतिबन्धे इति । ऐहिकम्[1]-अभ्युदयफलमुपासनम्, अप्रस्तुतप्रतिबन्धे-अप्रस्तुते-प्रबलकर्मान्तरप्रतिबन्धे असति अनन्तरम्, प्रतिबन्धे सति तदुत्तरकालमित्यनियमः। कुतः। तद्दर्शनात्--दृश्यते हि प्रबलकर्मान्तरेण कर्मफलप्रतिबन्धाभ्युपगमः श्रुतौ, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥ इति ऐहिकाधिकरणम् ॥

## मुक्तिफलाधिकरणम् ३-४-१५

### एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ३-४-५१ ॥

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेव कालानियमः; तस्यापि पूर्ववत् प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावगतेः । अत्रापि तस्य हेतोः समानत्वादित्यर्थः । सर्वेभ्यः कर्मभ्यो मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात् प्रतिबन्धासंभव इत्यधिकाशङ्का । तत्रापि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां संभवात् प्रतिबन्धसंभव इति परिहारः ।

---

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** ॥ सङ्गतिः स्फुटा । किं मुक्तिफलमुपासनं स्वसाधनकर्मानन्तरमेवोत्पद्यते, उतानन्तरं कालान्तरे वेत्यनियमः ; किं परविद्यासाधनात् कर्मणः प्रबलकर्मान्तरं संभवति, नेति ; असंभवे नियमः ; संभवे त्वनियम इति । **मुक्तिफल**शब्दो बहुव्रीहिः, उद्गीथाद्युपासनरहितयज्ञादिनिष्पाद्यपरविद्यानिष्पत्तिविषयोऽयं विचारः । **तस्य हेतोः**—पूर्वत्रोक्तहेतोः । अधिकाशङ्कामाह **सर्वेभ्य** इति । भगवत्प्रीत्यतिशयहेतुत्वेन प्राबल्यात न तत्प्रतिबन्धकमस्तीति शङ्का ; ब्रह्मविदपचारः प्रतिबन्धक इति परिहारः ।

**इतरे त्रयोऽपि**—इदमधिकरणद्वयं विद्यासाधनानन्तरं विद्योत्पत्तिविषयम्, निष्पन्नायां विद्यायां तत्फलभूतमुक्तिविषयं च वर्णयन्ति । तत्र **परे** तु ऐहिकमित्यत्र विद्योत्पत्तिरप्रतिबन्धे सति अस्मिन् जन्मनि स्यात्, अन्यथा अन्यत्रेति सिद्धान्तयन्ति । तत्र विचारस्य ऐहिकोपासनविषयत्वाभावमात्रे विरोधः । तत्तु अनन्तराधिकरणविचारानुपपत्तेरनुपपन्नम् । अनन्तराधिकरणस्य को विचारः ॥ मुक्तिरूपे फलेऽपि उत्कर्षनिकर्षकृतः कश्चिद्विशेषप्रतिनियमः फलत्वात् सम्भवति इत्याशङ्क्य परिह्रियते, मुक्तेरेकरूपत्वावधृतेरिति चेत्—उच्यते—उत्कर्षनिकर्षकृतविशेषप्रतिनियम इति किं स्वरूपगतविशेषः, उत विलम्बाविलम्बरूपविशेषो विवक्षितः । न प्रथमः—इहासङ्गतत्वात् । चतुर्थस्य चतुर्थे पादे हि तस्य निरूप्यता । निरूप्यते च 'संपद्याविर्भावः' इति । द्वितीयेऽपि—किं विद्यायामनिष्पन्नायां विलम्बाविलम्बविचारः, उत निष्पन्नायाम् । प्रथमे, निवर्तकानिष्पत्तौ निवर्त्यनिवृत्तेः प्रसङ्गाभावेन विलम्बनिश्चयादनारम्भः, द्वितीये, वसिष्ठादीनामाधिकारिकाणां विद्यावतामपि विलम्बस्य पूर्वं समर्थितत्वात् इदानीन्तनानां ब्रह्मज्ञानवतां देहपातविलम्बाच्च विलम्बाविलम्बरूपविशेषप्रतिनियमनिरासोऽनुपपन्नः । अत उपासनभेदेनैव अधिकरणवर्णनं युक्तम् ।

---

1 ऐहिकम्—एतज्जन्मभवमित्यर्थः । भावप्रकाशिकाभाष्यार्थदर्पणौ द्रष्टव्यौ ।

द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ ५१ ॥ इति मुक्तिफलाधिकरणम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य चतुर्थः पादः ॥

इति तृतीयोऽध्यायः

श्रीरस्तु

श्रीमते रामानुजाय नमः

---

अपरे तु—विद्याफलमात्मापरोक्ष्यं किमिहैव जन्मनि उत इह वाऽन्यत्र वेत्यनियम इति विचार्य पूर्वाधिकरणेनानियम इति सिद्धान्तयन्ति । अनन्तरे च—आपरोक्ष्ये सति तद्देहपाते मोक्षः, दर्शनमात्रे कर्मक्षयश्रुतेरिति पूर्वपक्षं कृत्वा—आपरोक्ष्ये तारतम्यसंभवात् तत्र वाऽन्यत्र वेत्यनियमः । मोक्षस्त्वेकरूपः । परमात्मावस्था हिं मुक्तिरवधृतेत्याहुः । तेषामपि मोक्षैकरूपत्वं सिद्धान्तश्चेत्—पूर्ववदसङ्गतिः ; पुनरुक्तिश्च । विलम्बाविलम्बसंभवे निरूप्ये यावदधिकारमित्यनेन गतार्थत्वादनारम्भणीयता । संशयाभावाच ; आपरोक्ष्यमात्रे मुक्तिः कस्य केन संभाव्यते ।

अन्ये तु—साक्षात्कारसाधनानि इहैव अप्रतिबन्धे, सति तु प्रतिबन्धे अन्यत्र जन्मनि साक्षात्कारं जनयन्तीति पूर्वाधिकरणे निश्चित्य—चरमाधिकरणे ब्रह्मसाक्षात्कारफलस्य मुक्तेस्तद्देहावसानभावित्वं स्वतः, सति तु प्रतिबन्धे जन्मान्तरे ; आधिकारिकेषु वसिष्ठादिषु मुक्त्यवस्थावधृतेः । अयं च न्यायः कर्मफलेषु स्वर्गादिषु च ; सूत्रकारेण प्रसङ्गादिह प्रतिपादितः—इत्याहुः । एषामपि चरमाधिकरणसिद्धान्तस्य प्रागेव सिद्धतया अधिकरणद्वयविभागानुपपत्तिः पूर्ववदनुसन्धेया । यज्ञादिकर्मफलानामिह विचारस्तु न सूत्रविवक्षितः ; मुक्तिफलशब्दोपादानात् । न हि 'फलमत उपपत्तेः' इतिवत् साधारणशब्देन निर्देशः । अनपेक्षितत्वादभिप्रायकल्पनं चानुपपन्नम् । यज्ञादीनां विद्याङ्गत्वादपेक्षितमिति चेत्—तत् पूर्वसूत्रेण कृतमित्यनपेक्षितत्वम् । अत उपासनभेदविषयतयैव अधिकरणद्वयवर्णनं युक्तमिति ॥ इति मुक्तिफलाधिकरणम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्य—हृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां तृतीयस्याध्यायस्य चतुर्थः पादः ॥

शुभमस्तु ।

श्रीमते व्यासार्याय सुदर्शनसूरये नमः ।

श्रीमते रामानुजाय नमः

## श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये प्रथमः पादः ।

### आवृत्त्यधिकरणम् ४-१-१

**आवृत्तिरसकृदुपदेशात् ॥ ४-१-१ ॥**

तृतीयेऽध्याये साधनैः सह विद्या चिन्तिता । अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते । तत्र "ब्रह्मविदाप्नोति परम्", "तमेव विदित्वाऽति मृत्युमेति", "ब्रह्म वेद ब्रह्मैव भवति", "यदा पश्यः पश्यते रुक्मवर्णम्" इत्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उत असकृदावृत्तमिति संशयः । किं युक्तम् । सकृत्कृतमिति ; "ब्रह्म वेद ब्रह्मैव भवति" इति वेदनमात्रस्यैव विधानादसकृदावृत्तौ प्रमाणाभावात् । न चावघातादिवत् वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वात् यावत्कार्यमावृत्तिरिति शक्यं वक्तुम्, वेदनस्य दृष्टोपायत्वाभावात् । ज्योतिष्टोमादिकर्माणि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच्च परमपुरुषात् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि, "फलमत उपपत्तेः" इत्यत्र प्रतिपादितम् । अतो ज्योतिष्टोमादिवत् यथाशब्दं सकृत्कृतमेव शास्त्रार्थः—

इति प्राप्ते प्रचक्ष्महे—आवृत्तिरसकृदिति । असकृदावृत्तमेव वेदनं शास्त्रार्थः । कुतः । उपदेशात्—ध्यानोपासनपर्यायेण वेदनशब्देनोपदेशात् । तत्पर्यायत्वं च विद्युपास्तिध्यायती-

---

श्रीः ४·१

**आवृत्तिरसकृदुपदेशात्** ॥ अध्यायसङ्गतिमाह—**तृतीय** इति । तृतीये पादद्वयेन प्रथममुपासनोपयोगिबाह्यविषयवैतृष्ण्यभगवत्तृष्णाजननहेतोर्निरूपणीयं हि निरूपितम् ; तृतीये विद्याभेदाभेदचिन्ता ; चतुर्थेऽङ्गचिन्तेति तृतीयाध्याये विद्यैव निरूपितेत्यर्थः । चतुर्थे फलमेव प्रधानतः प्रतिपाद्यम् । विद्याविषये पूर्वमनिरूपितांशश्च निरूप्यते, अस्य साध्यस्येदं साधनमिति साध्यसाधनभावसंबन्धज्ञापनार्थम्, भक्तिरूपापन्नज्ञानस्य प्रीतिरूपतया फलकोटिनिवेशज्ञापनार्थं च । कर्मयोगापेक्षया च साध्यत्वमस्तीति अत्र चिन्त्यते । **तत्रे**त्यादि । किं वेदान्तविहितवेदनं सकृत्कृतः(तं ?) शास्त्रार्थः, उतासकृदावृत्तमिति ; किं ब्रह्मविदाप्नोतीत्यादिभिर्वेदनमात्रं विधीयते, उत निदिध्यासनम् ; किमत्र विदिशब्दो ज्ञानमात्रपरः, उतोपासनपरः ; उपक्रमोपसंहाराभ्यां वाक्यान्तराच्चोपासनपरत्वं विदिशब्देऽवगम्यते, नेति । न चेत्, उपासनपरत्वाभावेन वेदनमात्रं विधीयत इति सकृत्कृतः(तं ?) शास्त्रार्थः । अवगम्यते चेत्, विदिशब्दस्योपासनपरत्वान्निदिध्यासनपरं(रूपं ?) वेदनं विहितमिति असकृदावृत्तमेव शास्त्रार्थः । आवृत्तौ प्रमाणाभावेऽपि दृष्टोपयोगेष्वावृत्तिः क्रियत इत्यत्राह **न चे**ति । अदृष्टोपायत्वं सिद्धान्तिनैवोक्तमित्याह **ज्योतिष्टोमादी**ति ।

सिद्धान्तमाह—**इति प्राप्त** इति । **ध्यानोपासनपर्यायेण वेदनशब्देने**ति । अत्र निमित्तभेदेऽप्येकार्थपर्यवसायित्वं पर्यायत्वं विवक्षितम् । पर्यायत्वं कथमित्यत्राह **तत्पर्यायत्वं चे**ति ।

नामेकस्मिन् विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते । तथा हि, "मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रान्तोऽर्थः "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति विदिनोपसंह्रियते । तथा, "यस्तद्वेद यत् स वेद स मयैतदुक्तः" इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम्, "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इत्युपासिनोपसंह्रियते ; तथा "ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यसमानार्थेषु वाक्येषु, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिषु ध्यायतिना वेदनमभिधीयते । ध्यानं च चिन्तनम् । तच्च स्मृतिसन्ततिरूपम् ; न स्मृतिमात्रम् । [1]उपास्तिरपि तदेकार्थः ; एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात् । तदुभयैकार्थ्यादसकृदावृत्तसंततस्मृतिरिह, "ब्रह्म वेद ब्रह्मैव भवति", "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिषु वेदनादिशब्दैरभिधीयत इति निश्चीयते ॥ १ ॥

## लिङ्गाच्च ॥ ४-१-२ ॥

लिङ्गं—स्मृतिः । स्मृतेश्चायमर्थोऽवगम्यते । स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपम् । "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा । तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा" इति । तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ इति आवृत्त्यधिकरणम् ॥

---

**कीर्तिः**—परत्वविषयप्रथा ; **यशः**—सौलभ्यप्रथा ; ताभ्यां भाति, ब्रह्मवर्चसेन तपतीत्यर्थः । यथा भक्तिस्नेहौ परत्वसौलभ्यविषयौ भिद्येते, तथा कीर्तियशसी । "स्नेहो मे परमो राजन्....भक्तिश्च नियता वीर" इत्यत्र हि तथा दृश्यते । रञ्जनवाचिना राजन्शब्देन वीरशब्देन च स्नेहभक्ती सौलभ्यपरत्वविषये अवगम्येते । 'नाथ योनिसहस्रेषु' इत्यत्र 'तेषु तेष्वच्युता भक्तिः' इति, तत्रैव प्रकरणे, 'या प्रीतिरविवेकानाम्' इति च पठ्यते —तथा कीर्तियशसोर्भेदः । **'यस्तद्वेद**—यो वेदिता, **यत्स वेद**—यच्च वेद्यम्, **स मयैतदुक्तः**—स वेदिता रैक्वः, तद्वेद्यं ब्रह्म चोभयं मयोक्तमित्यर्थः । पुँल्लिङ्गनिर्देशो रैक्वाभिप्रायेण । **अनु म** इत्यादि । मे अनुशाधीत्यन्वयः । "व्यवहिताश्च" इति सूत्रात् । **उपसंह्रियते** उपक्रमोक्तिः पश्चादनूद्यत इत्यर्थः । एकैकत्र विद्युपास्त्योरेकार्थविषययोः प्रयोगो दर्शितः । अथानेकत्र प्रदेशभेदेनैकैकस्य प्रयोगं दर्शयति **तथे**ति । अत्र, "छागो वा मन्त्रवर्णात्" इति न्यायोऽभिप्रेतः । **ध्यायमान**शब्दोपादानेन 'निदिध्यासित्व्यः' इत्यत्र सन्प्रत्ययस्य इष्यमाणप्रधानत्वं दर्शितम् । ध्यायतिना वेदनमुच्यताम् ; ततः किमसकृदावृत्तेरित्यत्राह **ध्यानञ्च चिन्तन**मिति । ध्यै चिन्तायामिति हि धातुः । असकृदावृत्तत्वं विच्छेदेऽप्युपपद्यत इति तद्व्यावृत्त्यर्थमाह **असकृदावृत्तसन्ततस्मृति**रिति ॥ १ ॥

**लिङ्गाच्च** ॥ लिङ्गशब्दं व्याचष्टे **लिङ्गं स्मृति**रिति ।

**परे चापरे च**—श्रवणमनननिदिध्यासनानामावृत्तिरपेक्षिता, न वेति विचारयन्ति । तदयुक्तम् ; श्रवणमननयोः रागप्राप्तत्वेन यावदर्थनिश्चयं तदावर्तनस्य प्राप्तत्वात् । असकृत्पदं हेत्वंशविषयमाहुः ; 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यसकृदुपदेशादिति । तदयुक्तम् ; श्रोतव्यादिशब्दैरेकैकस्यावृ-

---

[1] उपास्तिरिति श्तिपा निर्देश इति स्पष्टम् । धातुनिर्देशात् । अत्र स्त्रियां क्तिन् न ; ण्यासश्रन्थोयुजित्यपवादात् उपासनेत्येव । सेवा भक्तिरुपास्तिरिति स्त्रीलिङ्गपाठो न भवति; किंतूपासेति ।

स्यभावात् ॥ उपदेशक्रियाया आवृत्तिर्विवक्षितेति चेत्—तर्हि सकृच्छ्रवणेन सकृन्मननेन सकृन्निदिध्यासनेन च तस्योपदेशस्य सफलतया तेषां प्रत्येकावृत्तौ प्रमाणत्वाभावात् ॥ तेषामात्मसाक्षात्कारार्थत्वात् वैतुष्यार्थावघातस्येव दृष्टार्थत्वादावृत्तिसिद्धिरिति चेत्—तर्हि **असकृदुपदेशा**दिति हेतुरहेतुः स्यात् । दृष्टार्थत्वादित्येव सूत्रयितव्यम् । असकृच्छब्दस्यावृत्तिविशेषणत्वं तु सफलम् । आवृत्तिशब्दस्य द्विस्त्रिः—प्रत्ययमात्रेणापि कृतार्थत्वात् ॥ आवृत्तिश्चात्मापरोक्ष्ये दृष्टोपायः ; सकृच्छ्रुताद्वाक्यादप्रतीतस्यार्थस्यावर्तनेन सम्यक्प्रतिपत्तिदर्शनात् । तदापरोक्ष्यं च बन्धनिवृत्तौ दृष्टोपायः ; रज्ज्वापरोक्ष्येण सर्पभ्रमनिवृत्तिदर्शनादिति चायुक्तम् ; 'वीतशोको[1] धातुः प्रसादात्', 'मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि' इति श्रुतिस्मृतिविरोधात् । ज्ञानवेदनशब्दान्वितवाक्यान्येव विषयः ; न तु ध्यानादिशब्दान्वितानि ; ध्यानादिपदानामावृत्तप्रत्ययविषयत्वे संशयाभावात् । आत्मनो नित्यापरोक्षत्वाभ्युपगमान्न तदावृत्तिसाध्यम् । बन्धनिवर्तकसाक्षात्कारस्तु न वाक्यजन्यप्रत्ययावृत्त्या भवति ; ज्योतिष्टोमादिवाक्यार्थप्रत्ययावृत्तेस्तदर्थापरोक्ष्यहेतुत्वाभावात् ; एकश्चन्द्र इति वाक्यजन्यप्रत्ययावृत्त्या चन्द्रैकत्वापरोक्ष्याभावाच्च ॥ तिमिराद्यपगमे जायत इति चेत्—तत्तु चक्षुषा जायते ; न तु चन्द्रैकत्वप्रत्ययावृत्तिमात्रात् ; तदनुगृहीतादेकश्चन्द्र इति वाक्याद्वा ॥ तिमिरादिस्थानीयदोषो भेदवासना चेत्—तत्र वक्तव्यं सर्वं प्रागेवोक्तम् । निर्गुणब्रह्मणो वेद्यत्वाभावात् ब्रह्म वेदेत्यादिवाक्यानां क्लिष्टता । तत्र कल्पनापोहेन सम्यङ्निश्चयोदयाय श्रवणाद्यावृत्तिर्विधेया, तदनुष्ठाननान्तरीयकतया निर्गुणब्रह्मप्रत्ययावृत्तिरिति पक्षोऽप्ययुक्तः ; ध्रुवानुस्मृतिविरोधात्, विजातीयप्रत्ययाव्यवहितप्रत्ययसन्तानं(नो ?) हि ध्रुवानुस्मृतिः ॥ भेदो मिथ्या, निर्विशेषज्ञप्तिमात्रं सत्यमिति भावनाया विजातीयप्रत्ययसंपर्कान्न ध्रुवानुस्मृतिसिद्धिः । समाधिविधिश्चानुपपन्नः[2] समाधौ मनसः प्रलयो नाम बहिर्व्यापारानर्हत्वम् ; न तु विनाशः ; अनुपपन्नत्वात् । बन्धनिवर्तकं वाक्यार्थज्ञानं मनोविनाशरूपसमाधिजन्यं वा, जनकं वा । न प्रथमः ; मनसो नाशे वाक्यस्य ज्ञानजनकत्वायोगात् । शब्दो हि मनसा गृह्यमाण एवार्थज्ञानं जनयति । न द्वितीयः ; वाक्यार्थज्ञानस्य कृत्स्नप्रपञ्चमिथ्यात्वविषयस्य देहे स्थिते मनोमात्रप्रलयहेतुत्वानुपपत्तेः । पुनर्मनउत्पत्त्यनुपपत्तेश्च । न हि ज्ञाननिवृत्तस्य बन्धस्य पुनरुदयः ॥ पूर्वं ज्ञाननिवृत्तस्यापि रज्जुसर्पस्येव पश्चादुदयोपपत्तिरिति चेत्—तर्हि बन्धस्यापि पुनरुदयप्रसङ्गः ॥ दोषानिवृत्त्या रज्जुसर्पस्य पुनरुदयः संभवेत् ; तदभावात् बन्धस्य पुनरुदयाभाव इति चेत्—मनोनिवर्तकस्यापि वाक्यार्थज्ञानस्य दोषनिवर्तकत्वात् पुनर्मनस उत्पत्त्यनुपपत्तिः ॥ क्रियाविशेषेण मनःप्रलयः, न तु वाक्यार्थज्ञानेनेति चेन्न ; उत्पादकक्रियाविशेषाभावेन मनउत्पत्त्यनुपपत्तेः । किञ्च मनःप्रलयस्य वाक्यार्थज्ञानोत्पत्तिविरोधित्वात् मुमुक्षोः समाधिरकर्तव्यः स्यात् ॥ [3]मुक्तस्य सर्वज्ञत्वे

---

1 एवं शोधनं कार्यम् । 2 ननु भेदतन्मिथ्यात्वाद्यनेकग्रहणस्वभावकमनोलये समाधिसंज्ञादिते शुद्धब्रह्मसाक्षात्कारः स्यादिति शंकां निरस्यति विस्तरेण समाधीत्यादिना ।

3 सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमिति आत्मानुभव इह शांकरे दर्शितः । ईदृशस्वरूपभंगः स्यादसदुक्तमुक्तिप्रकारे इति तदनुयायी कश्चित् पृच्छति । तं प्रतिवक्तुं मुक्तस्येत्यादिः नन्वित्यादिश्च ग्रन्थः ।

## आत्मत्वोपासनाधिकरणम् ४-१-२

### आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४-१-३ ॥

इदमिदानीं चिन्त्यते—किमुपास्यं ब्रह्म उपासितुरन्यत्वेनोपास्यम्, उतोपासितुरात्मत्वेनेति। किं युक्तम्। अन्यत्वेनेति। कुतः। उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः। अर्थान्तरत्वं च, "अधिकं तु भेदनिर्देशात्", "अधिकोपदेशात्", "नेतरोऽनुपपत्तेः" इत्यादिषूपपादितम्।

---

प्राक्तनभगवदलाभानुसन्धानेनानन्तदुःखित्वमिति चेन्न; स्वसंसरणस्य भगवल्लीलात्वानुसन्धानस्य सुखरूपत्वात्॥ ननु मुक्तस्यानन्दाधिक्ये सार्वज्ञ्यं हीयेत; अतिशयितानन्दस्य मोहनत्वदर्शनादिति चेन्न; तमोगुणसंमिश्रणप्रयुक्तत्वान्मोहनत्वस्य। मनो हि गुणत्रयात्मकम्।

**इतरे त्रयोऽपि लिङ्गाच्चेति** सूत्रमेवं व्याचक्षते—'रश्मिबहुत्वं पर्यावर्तयेत्[1]' इति बहुपुत्रतायै रश्मिबहुत्वोपासनपरे वाक्ये आवृत्तिशब्देनोपासनानुवादश्चावृत्तौ लिङ्गमिति। एकस्मिन् दिने सकृच्चिन्तनेऽपि दिनभेदेनावृत्तिमात्रेणाप्यावृत्तिशब्दव्यपदेशोपपत्तेर्निरन्तरवृत्तौ लिङ्गत्वायोगात् तदनादरः। **अन्ये** त्विमं विचारमहङ्ग्रहोपासनव्यतिरिक्तविषयमाहुः; तस्य ध्यानफलसाक्षात्कारपर्यन्तत्वादावृत्तिसिद्धेरिति। तदयुक्तम्; तस्य साक्षात्कारपर्यन्तत्वेऽन्येषामतत्पर्यन्तत्वे च नियामकाभावात्। द्रष्टव्यताश्रुतिर्हि सर्वोपासनसाधारणी। किञ्च अहमर्थमात्रसाक्षात्कारो नित्यसिद्ध इति नोपास्तिसाध्यता। ईश्वरतादात्म्यं घटस्य शरावत्ववत् अतात्त्विकमिति शब्दप्रतीतिमात्रसिद्धस्य न साक्षात्कार उपपद्यते ॥२॥

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च** ॥ उक्तस्यासकृदावृत्तस्योपासनस्योपास्यं ब्रह्म किमुपासितुरन्यत्, उत तस्यैवात्मेति शङ्कायां व्यतिकरोपदेशज्ञापनाय पूर्वप्रकृतवाक्यस्थात्मशब्दार्थो निरूप्यत इति सङ्गतिः। **आत्मत्वेनेति**। आत्मशब्दः स्ववाची; **आत्मत्वेन**—अहमर्थसामानाधिकरण्येन; **अन्यत्वेन**—वैयधिकरण्येनेत्यर्थः। अथवा आत्मशब्दः शरीरप्रतिसंबन्धिपरः; **आत्मत्वेन**—जीवं प्रति शरीरित्वेन; **अन्यत्वेन**—शरीरशरीरिभावसंबन्धशून्यत्वेनेत्यर्थः। एवं सति ब्रह्मोपासनविधिः किं दृष्टिविधिः, उत नेति फलफलिभावः। मुमुक्षोः किं ब्रह्म वैयधिकरण्येनोपास्यम्, उत सामानाधिकरण्येन; किमुपास्यं ब्रह्म उपासितुरन्यत्वेनोपास्यम्, उताऽऽत्मत्वेन; किमात्मत्वेनोपासने, 'पृथगात्मानम्' इति विहितपृथक्त्वानुसन्धानविरोधः प्रसज्यते, नेति। प्रसज्यते चेत्—अन्यत्वेनोपासनम्; न चेत् आत्मत्वेनोपासनमिति ॥

ननु, 'अंशो नानाव्यपदेशात्' इत्यादिषु जीवपरयोः शरीरशरीरिभावे शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधाने च सिद्धे, यथावस्तूपासने च कर्तव्ये, कथं संशयोत्थानम् ॥ उच्यते। अहमर्थसामानाधिकरण्येन वैयधिकरण्येन च ब्रह्मोपासनानि विहितानि। शाण्डिल्यविद्यादिषु समानाधिकरणोपासनेषु व्यधिकरणोपासनेष्वप्ययं विचारोऽनुपयुक्तः स्यात्। यत्र सामानाधिकरण्योपासने दृष्टिविधित्वशङ्का संभवति,

---

1 आदित्योद्गीथदृष्टावेकपुत्रजननं फलमुक्त्वा, (छा) "रश्मींस्त्वं पर्यावर्तयात्। बहवो वै ते भविष्यन्ति" इति वाक्येनोक्तार्थानुवादोऽयम्।

**यथावस्थितञ्च ब्रह्म उपास्यम् । अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात् । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायात् । अतोऽन्यत्वेनोपास्यमिति ॥ एवं प्राप्तेऽभिधीयते—आत्मेति तु—इति। तुशब्दोऽवधारणे। उपासितुरात्मेत्येवोपास्यम्। उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथाऽऽत्मा—तथा स्वात्मनोऽपि परं ब्रह्म आत्मे[ति आ त्मे ?]त्येवोपासी तेत्यर्थः । कुतः । एवं ह्युपगच्छन्ति पूर्वे उपासितारः, "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" इति । उपासितुरर्थान्तरभूतं ब्रह्म उपासितारोऽहमिति कथमभ्युपगच्छन्तीत्यत्राह ग्राहयन्ति चेति। इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि—तान् प्रत्युपपादयन्तीत्यर्थः । "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः" इति, तथा "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्", "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति च—सर्वस्य चिदचिद्वस्तुनः तज्जत्वात् तल्लत्वात् तदनत्वात् तन्नियाम्यत्वात् तच्छरीरत्वाच्च सर्वस्यायमात्मा; अतः स ते(?) आत्मा; अतो यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वात् देवोऽहं मनुष्योऽहमित्यनुसन्धानम्; तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनः, तस्याप्यहमित्येवानुसन्धानं युक्तमिति। एवं शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः, "त्वं वा अहमस्मि भगवो**

---

'येऽन्नं ब्रह्मोपासते', 'ये प्राणं ब्रह्मोपासते', 'विज्ञानं ब्रह्म चेद्वेद' इत्यादिषु जीवे[1] ब्रह्मदृष्टिविधिदर्शनात्, 'आत्मेत्येव' इति वाक्ये इतिकरणदर्शनाच्च—तस्य दृष्टिविधित्वशङ्काव्युदासार्थमारम्भणीयत्वमिति ।

**अयथाभूता स्यादि**ति । संसारित्वप्राप्तिः स्यादित्यर्थः ।

राद्धान्तमाह **एवं प्राप्त** इति। सामानाधिकरण्यफलितमर्थमाह [2]**स्वशरीरस्य स्वयमि**ति । **उपगच्छ**न्ति । गत्यर्था बुद्ध्यर्थाः । उपासत इत्यर्थः । **त्वं वा अहमस्मि**—[3]अहंबुद्धिरहंशब्दश्च त्वत्पर्यवसायिनौ। अहंशब्दयोगादुत्तमपुरुषः। **अहं वै त्वमसि**—अहंबुद्धिशब्दपर्यवसानभूमिस्त्वम्। त्वंशब्दयोगान्मध्यमपुरुषः । उभयस्मिन् वाक्ये अहंत्वंशब्दप्रयोगे सत्यपि अहंशब्दार्थ[4]तात्पर्यविवक्षयोत्तमपुरुषः, त्वंशब्दार्थतात्पर्येण मध्यमपुरुषः ॥ अहं त्वं त्वमहमिति सामानाधिकरण्येनार्थे लब्धे किमर्थम् **अस्मि**-**असी**ति पदप्रयोगः इति चेत्—उच्यते—अस्तिधातोः सत्ता ह्यर्थः, । तेनेदं तादात्म्यं [5]युक्तमिति दर्शितं भवतीति । उपपादकशास्त्राणि दर्शयति **य आत्मनी**ति । 'सन्मूलाः' इत्यादावपि सदायतनत्वतदनत्वाभ्यामात्मत्वसिद्धिः । 'सन्मूलाः' इत्यादिवाक्योपेतस्य 'य आत्मनि' इत्यादिवाक्यस्यार्थमाह—**सर्वस्येति** । कार्यकारणभावः कार्यकारणभूतजगद्ब्रह्मसामानाधिकरण्योपयोगी, अत्र तु शुद्धस्वरूपजीवसामानाधिकरण्योपयोगी शरीरशरीरिभाव एव । नियाम्यत्वं हि शरीरलक्षणत्वेनोक्तम् । **युक्तमिति**

---

1 अन्नप्राणशब्दयोरप्यभिमानिदेवतापरत्वाशयेन सामान्यतः जीव इत्युक्तिः ।

2 अत्र भाष्ये तथेत्येतदन्वयौचित्याय, ब्रह्मात्मेति आत्मेत्येवोपासीतेति पाठो युक्तः।

3 सर्वोऽयं तात्पर्यार्थः । अहंशब्दस्योभयत्र मदात्मेत्येवार्थः ।

4 तात्पर्यम्—उद्देशः । उद्देश्यानुसारी पुरुषः; न तु विधेयानुसारीत्युक्तं भवति ।

5 युक्तमिति । सर्वत्र विधेयांशसत्ता सविशेषणस्य अस्तेरर्थः । सत्ता प्रामाणिकत्वं वास्तवत्वं तत्त्वमिति पर्यायाः । अन्ततो विधेयतावच्छेदकधर्मादिकमेव तदित्यन्यदेतत् ।

देवते अहं वै त्वमसि भगवो देवते" इति व्यतिक्रेरेणोक्तवन्तः। एवं च "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद", "अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत", "सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद" इत्यन्यत्वानुसन्धान(न्यात्मत्वाननुसंधान)निषेधः, "पृथगात्मानं प्रेरितारं च मत्वा" इति पृथक्त्वानुसन्धानविधानं चाविरुद्धम्। अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धाननिषेधो रक्षितः। स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत् स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधानं च रक्षितम्। अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात् तस्य च ब्रह्मशरीरत्वात् निषेधवाक्ये,[4] "अकृत्स्नो ह्येषः" इत्युक्तम्। अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम्॥ ३॥ इति आत्मत्वोपासनाधिकरणम्॥

---

उपपादयन्तीत्यन्वयः[1]। एवंचेत्यादिना एकत्वपृथक्त्वश्रुत्योरविरोधमाह। तद्विविच्य दर्शयति अहमिति। गुणगुणिरूपार्थद्वयसद्भावाभिप्रायाः भेदश्रुतयः। तत्र द्वयोरपि स्वनिष्ठत्वं नास्तीत्यन्यतरस्य प्रकारिनिष्ठत्वात् गुणभूतवस्तुनः स्वनिष्ठत्वनिषेधपरा अभेदश्रुतय इति विभाग इत्यर्थः। तदुपपादयति अधिकस्येति। अकृत्स्नः अपूर्णः। गुणमात्रपरत्वे च न पूर्तिः। विशिष्ट एव पूर्णः। ईदृशापूर्तिवचनं गुणगुणिभेदे सत्येवोपपद्यते इत्यर्थः। एवं शरीरात्मभावगोचरस्य सामानाधिकरण्यस्याप्रामाणिकत्वानुपपन्नत्वयोरभावात् मोक्षफलश्रवणाच्च न दृष्टिविधित्वमित्युक्तं भवति। अधिकरणार्थमुपसंहरति अत इति।

**परे तु**—जीवपरयोरैक्यं सिद्धान्तयन्ति। तत्र विरुद्धधर्मयोगादैक्यानुपपत्तिः, ईश्वरस्य जीवत्वे ईश्वराभावप्रसङ्गः, जीवस्येश्वरत्वे शास्त्रस्याधिकारिविरहः, अहं दुःखीत्यादिप्रत्यक्षविरोधश्चेति परिचोद्य ईश्वराभावं [2]तस्य प्रामाणिकत्वात् परिहरन्ति। तदयुक्तम्; प्रामाणिकपरित्यागप्रसङ्ग इति चोदिते, प्रामाणिकत्वादिति परिहारायोगात्। न हि प्रसञ्जनीयविपर्ययप्रतिज्ञानेन प्रसञ्जकधर्मः परिह्रियते; सर्वतर्कोच्छेदप्रसङ्गात्; प्रसञ्जकप्रसञ्जनीयव्याप्तेरभग्नत्वाच्च॥ तत्त्वावबोधात् प्रागधिकारिलाभ इत्यधिकारिविरहं परिहरन्ति। तदप्ययुक्तम्; ईश्वरस्य सर्वज्ञत्वात्, निर्विशेषचिन्मात्रस्य ज्ञातृत्वाभावात्, ज्ञातुश्च स्वनाशस्यापुरुषार्थत्वात् शास्त्रप्रद्वेषवत्त्वेन च त्रयाणामप्यधिकारानुपपत्तेः॥ श्रवणात्पूर्वं स्वनाशानभिज्ञत्वात् दस्युभूयिष्ठमार्गे मार्गानभिज्ञवदवतरतीति चेन्न, अश्रुतेऽपि शास्त्रे सौगतानां सर्वक्षणिकत्ववत् मायावादिनां मुक्तेर्ज्ञातृनाशत्वस्य प्रसिद्धिप्राचुर्येण शास्त्र[3]भीरुत्वाल्लोकस्य॥ प्रत्यक्षादीनां संसार्यात्मविषयत्वादविरोध इति चायुक्तम्; नियमेन हेयानर्हतदर्हयोः नियमेन शृङ्गानर्हतदर्हयोः शशमहिषयोरिवैक्यविरोधस्यावर्जनीयत्वात्॥ दुःखयोगस्य मिथ्यात्वादविरोध इति चायुक्तम्; मिथ्याभूतहेयानर्हतदर्हयोर्विरोधस्यावर्जनीयत्वात्। महिषविषाणमपि त्वन्मते मिथ्या; तथापि शशमहिषयोः स्वरूपविरोधोऽभ्युपगतः॥ ननु स्वाप्नशशमहिषयोः स्वप्नावस्थायामेव विरोधः; न प्रबोधे, विषाणस्य निवृत्तत्वात्। एवमविद्यानिवृत्तौ दुःखनिवृत्तेर्जीवपरयोर्न स्वभावविरोध इति चेत्—तर्हि स्वाप्नशशमहिषयोरिव जीवेश्वरयोरुभयोरपि विनाश एवाविरोधनिर्वाहकः स्यात्। ततश्चेश्वरनित्यत्वश्रुतिविरोधः। स्वभावविरोधश्चा-

---

1 युक्तमितीत्यन्तवाक्यमध्ये ते इति पदसत्त्वात्, इति चेत्यन्तोक्तवाक्यानां भवत्यध्याहारं विना कर्तृतयाऽन्वयौचित्याच्च उपपादयन्तीत्यनुषङ्गसंपादनम्। (भाष्यार्थदर्पणे)। 2 तस्य—ईश्वरस्य।
3 भीरुत्वात्—भीरुत्वप्रसङ्गात्। 4 भाष्ये निषेधवाक्ये इत्युक्तिः, 'योऽत एकैकमुपास्ते न स वेद' इति पूर्वं सत्त्वात्।

प्रतीकाधिकरणम् ४-१-३

## न प्रतीके न हि सः ॥ ४-१-४ ॥

"मनो ब्रह्मेत्युपासीत", "स यो नाम ब्रह्मेत्युपास्ते" इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसंधानं कार्यम्, उत नेति चिन्तायाम्, "मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वसाम्यात् ब्रह्मणश्चोपासितुरात्मत्वादात्मेत्येवोपासीतेत्येवं प्राप्तेऽभिधीयते—न प्रतीके—इति । प्रतीके नात्मत्वानुसन्धानं कार्यम् । न हि सः—न ह्युपासितुरात्मा प्रतीकः । प्रतीकोपासनेषु प्रतीक एवोपास्यः ; न ब्रह्म । ब्रह्म तु तत्र दृष्टिविशेषणमात्रम् । प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम् । तत्रोपास्यस्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुसन्धेयम् ॥ ४ ॥

नन्वत्रापि ब्रह्मैवोपास्यम् ; ब्रह्मण उपास्यत्वसंभवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वाश्रयणस्यान्याय्यत्वात् । अतो मनआदिदृष्ट्या ब्रह्मैवोपास्यमिति । तत्राह—

---

परिहृतः ; यावत्सत्ताकं विरोधस्यावस्थितत्वात् । यदि—प्रबोधेऽपि परस्य हेयानर्हत्वं तिष्ठत्येव; जीवस्य हेयार्हत्वमेव निवर्तते इत्युच्येत—तथाऽपि जाग्रदनुभूतशशस्वाप्नमहिषयोरिव न तयोरेकत्वसंभवः ; सत्तया हेयानर्ह ईश्वरः, विनाशात् तदनर्हो जीव इति विद्यमानदशायां हेयार्हत्वतदनर्हत्वयोर्विनाशित्वाविनाशित्वयोश्च विरोधस्यावस्थितत्वात् ॥ ईश्वरत्वं परमार्थश्चेत्—निर्विशेषत्वहानिः ; न चेत्—ईश्वराभावः ॥ ऐश्वर्यादिगुणाभावेऽपि स्वरूपमवतिष्ठत इति चेत्—रजतत्वनिवृत्तावप्यधिष्ठानमवतिष्ठत इति शुक्तिरूप्येश्वरयोरवैषम्यमेव स्यात् ॥ जीवेश्वरैकत्वविधीनां दृष्टिविधित्वं पूर्वपक्षे आशङ्क्य भेदनिषेधात् तदयुक्तमिति परिहृतम् । तदप्ययुक्तम् ; दृष्ट्युपासननिष्ठस्य भेदानुसन्धाने प्रत्यवायपरतयाऽपि भेदनिषेधश्रुत्युपपत्तेर्भेदतात्त्विकत्वाबाधकत्वात् । न हि गरुडात्मनोर्भेददृष्टौ विषं न नश्यतीति गरुडनरेन्द्रैकत्वं तात्त्विकं स्यात् ।

हेयानर्हत्वतदर्हत्वरूपस्वभावविरोधस्यावर्जनीयत्वा**दपरेषां** पक्षोऽप्यनुपपन्नः ।

**अन्येषां** तु गरुडोऽहमितिवदीश्वरोऽहमिति ज्ञानस्यातत्त्वविषयत्वात् अतत्त्वज्ञानान्मोक्षः स्यात् । यथोपासनं फलमिति मुक्तावपि भ्रान्त्यनुगमः स्यात् । यदि सदहमिति सदैक्योपास्तिर्विधीयते, तदयुक्तम् ; आत्मसत्त्वस्य लोकसिद्धत्वात् सदैक्यानुसन्धानस्याविधेयत्वात् ॥ नियन्त्रंशेन भोक्त्रंशस्य सदाकारेणैकत्वमनुसन्धेयमिति चेत्—घटेनापि तादृशैक्यं समानमिति जीवस्य परमात्मात्मकत्वं घटात्मकत्वतुल्यं स्यात् । जगतो ब्रह्मणैकत्वं नाम जात्यैक्यं स्यात् ॥ ३ ॥ इति आत्मत्वोपासनाधिकरणम् ॥

**न प्रतीके न हि सः** ॥ आत्मत्वेनोपासनमुक्तम् । तत् प्रतीकोपासनेऽस्ति नेति शङ्कया सङ्गतिः । किं मनो ब्रह्मेत्यादिप्रतीकोपासनेष्वात्मत्वेनानुसन्धानं कर्तव्यम्, उत नेति, तेषूपास्यं किमुपासितुरात्मा, नेति ; किं ब्रह्मणः प्रतीको दृष्टिविशेषणम्, उत प्रतीकस्य ब्रह्म दृष्टिविशेषणमिति । प्रतीकस्य दृष्टिविशेषणत्वे ब्रह्मण उपास्यत्वात् तत्राप्यात्मत्वेनानुसंधानं कार्यं स्यात् । ब्रह्मणः प्रतीके दृष्टिविशेषणत्वे प्रतीकस्यैवोपास्यत्वात् तस्य चोपासकं प्रत्यात्मत्वाभावात् आत्मधीर्न कार्या स्यात् । **मन** इत्यादि । **ब्रह्मोपासनत्वसाम्यादि**ति । ब्रह्मशब्दनिर्देशाद् ब्रह्मोपासनत्वसाम्यमित्यर्थः ।

**एवं प्राप्त** इति । प्रतीकोपासनेऽप्युपास्यं ब्रह्म । तच्चोपासितुरात्मा । अतो ब्रह्मोपासनत्वसाम्यादात्मेत्युपास्यमित्यत्राह-**प्रतीकोपासने**ष्विति । तर्हि ब्रह्मशब्दनिर्देशः कथमित्यत्राह-**ब्रह्म त्वि**ति ॥

अनन्तरसूत्रशङ्कामाह-**नन्वि**ति ।

**ब्रह्मदृष्टिरुत्कर्षात् ॥ ४-१-५ ॥**

मनआदिषु ब्रह्मदृष्टिरेव युक्ता; न ब्रह्मणि मनआदिदृष्टिः; ब्रह्मणो मनआदिभ्य उत्कर्षात्; तेषाञ्च विपर्ययात्। उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी। भृत्ये तु राजदृष्टिरभ्युदयाय ॥ ५ ॥

इति प्रतीकाधिकरणम् ॥

आदित्यादिमत्यधिकरणम् ४-१-४

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४-१-६ ॥**

"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः—किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या, उतादित्यादिषूद्गीथादिदृष्टिरिति। उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति

---

**ब्रह्मदृष्टिरुत्कर्षात्** ॥ अचेतनमनःप्रभृतेरुपास्यत्वासंभवोऽभिमानि[1]देवतोपास्यत्वेन परिहृत इति भावः।

**इतरे त्रयोऽपि ब्रह्मदृष्टिरिति** सूत्रमधिकरणान्तरमाहुः। नियामकाभावात् पूर्वपक्षम्, उत्कर्षात् सिद्धान्तमाहुः ॥ तदयुक्तम्; तादर्थ्यनैरन्तर्याभ्यामैकाधिकरण्यसिद्धेः।

**परे तु—नप्रतीक** इत्यत्र सिद्धान्तयुक्तिमेवमाहुः—प्रतीकानां ब्रह्माभिन्नत्वात् तस्या(?)ऽप्यात्मत्वमिति चेत्, विकारस्वरूपोपमर्देन ब्रह्मत्वं स्यात्; यथा जीवस्य जीवभावप्रविलयेन ब्रह्मत्वम्, स्वस्तिकस्य तदाकारोपमर्देन स्वर्णात्मकत्वम्। एवं स्वरूपोपमर्दे सति प्रतीकस्यैवाभावात् तस्यात्मत्वमेव न स्यादिति ॥ तदप्ययुक्तम्; जीवस्य ब्रह्मशरीरतया तत्पर्यन्तत्वेन जीवभावप्रविलयेन विना ब्रह्मतादात्म्यसिद्धिवत् प्रतीकानामपि ब्रह्मशरीरत्वोपपत्तेस्तदभावप्रसङ्गाभावात्[2]।

**अपरे तु**—"वासो ददाति"-, "अनो ददाति" इत्यत्र तन्तुकाष्ठादीनामिव मनआद्युपासने ब्रह्मणश्चोदितत्वाभावादनुपास्यत्वमिति। तदयुक्तम्; तत्र तन्तुकाष्ठादिनिर्देशाभावात्, इह तु ब्रह्मसामानाधिकरण्याच्च दृष्टान्तवैषम्यात्। अतोऽनादरः ॥

ननु दृष्टिविधित्वे सिद्धे हि ब्रह्म वा मनो वा दृष्टिविशेषणमिति विशयः। प्रतीकस्यापि ब्रह्मशरीरतया तत्त्वोपासनपरत्वे संभवति कथमतत्त्वोपासनपरताङ्गीकारेण ब्रह्मणो दृष्टिविशेषणत्वपरं द्वितीयसूत्रं घटते ॥ उच्यते। इतिकरणवैयर्थ्यं हेतुः; उद्देश्यत्वज्ञापकेन प्रथमनिर्देशेन विशेष्यतावगमश्च; क्वचित् प्रतीकगतद्वितीयाविभक्तिरपि हेतुः ॥ ५ ॥

**आदित्यादिमतयश्चाङ्ग उपपत्तेः** ॥ देवताया उत्कर्षात् दृष्टिविशेषणत्वमुक्तम्। तदुत्कर्षाक्षेपेण कर्मण एवोत्कर्षशङ्कयाऽवान्तरसङ्गतिः। क्रत्वङ्गाश्रयोपासनेषु किमादित्यादावुद्गीथदृष्टिः; उतोद्गीथादावादित्यादिदृष्टिः; फलसाधनतयोत्कर्षः किमादित्यादेः, उतोद्गीथादेः। उद्गीथादेश्चेत्—

---

1 उद्गीथादौ प्राणादिदृष्टौ प्राणादिशब्दस्याभिमानिपरत्वेऽपि उद्गीथादिशब्दस्यापि तत्परत्वं कुतः। का देवता श्रेयसीति तारतम्यसंदेहापाताच्च। अचेतनस्यापि चेतनत्वारोपे उपास्यत्वं संभवतीत्येव सुवचमित्यपि विमृश्यम्।

2 चिदचिदीश्वररूपतत्त्वत्रयस्यैव प्रामाणिकतया स्वरूपोपमर्देऽप्यैक्यं न भवति। शरीरात्मभावेन तु तादात्म्यमनुपमर्देऽपि भवति। परंत्वेषामुपासनानां दृष्ट्युपासनत्वात् शरीरात्मभावो न विषयः। स तु तत्त्वमसीत्यत्रैव। अतः प्रमेयविरोधात् तदुक्तरीत्या न पूर्वपक्षसिद्धान्ताविति भावः।

न्यायात् उद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेन अफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टि इति प्राप्ते अभिधीयते—आदित्यादिमतयश्चाङ्गे—इति। चशब्दोऽवधारणे। क्रत्वङ्गे उद्गीथादावादित्यादिदृष्टय एव कार्याः। कुतः। उपपत्तेः—आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः। आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम्। अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥

इति आदित्यादिमत्यधिकरणम् ॥

---

आदित्य उद्गीथादिदृष्टिः, आदित्यादेश्चेत्, उद्गीथादौ आदित्यादिदृष्टिः कार्या स्यात्। ननु फलसाधनत्वं … पूर्वमेव सिद्धम्, 'स एवैनं भूतिं गमयति' इति। तत् कथमुद्गीथादेः फलसाधनत्वशङ्कया पूर्वपक्षोत्थानम् ॥ सत्यम्; फलसाधनतया विहितत्वात् प्रधानस्य कर्मणः काष्ठानां ज्वालावत देवताप्रीतिरवान्तरव्यापारमात्रमित्यप्राधान्यमाशङ्क्यते। [1]ब्रह्ममतिवदादित्यादिमतयोऽपीति चशब्दार्थः। 'मनो ब्रह्मेत्युपासीत' इत्यत्रोपास्यं प्रथमं निर्दिष्टम्; दृष्टिशेषणं चरमनिर्दिष्टम्। एवमत्रापि, 'य एवासौ तपति तमुद्गीथम्' इत्युद्गीथस्य चरमनिर्देशात् स दृष्टिविशेषणम्। देवतायां यद्वृत्तयोगात् प्राथम्याच्चोद्देश्यत्वमित्यपि पूर्वपक्षयुक्तिरभिप्रेता। **अफलेभ्यः** अफलसाधनेभ्यः।

राद्धान्ते—**आदित्यादिदेवताराधनद्वारेणेति**। 'अर्यम्णे चरुं निर्वपेत्' इत्यादि द्रष्टव्यम्. देवताया स्थिरत्वेनाव्यवहितसाधनतया लोकदृष्टसेव्यसेवान्यायेन आराधनस्याराध्यदेवताप्रधानत्वाच्च देवतोत्कर्षसिद्धेर्यद्वृत्ताद्यस्वारस्यं सोढव्यमिति भावः।

**परे तु**—उद्गीथादित्यादीनां दृष्टिविशेषणत्वमनियमेन स्यात्, नियामकाभावादिति च पूर्वपक्षमाहुः। नियामकसद्भावात् तदनादरः। एवं च[2] पूर्वपक्षान्तरमाहुः—उद्गीथादीनां कर्मसमवायितया[3] क्रियारूपाणां फलसाधनतयोत्कर्षः। 'इयमेवर्गग्निः साम' इत्यत्र, 'तदेतदस्यामृच्यध्यूढं साम' इत्यृक्सामशब्देन पृथिव्यग्न्यभिधानञ्च ऋक्सामाध्यासनिबन्धनम्। क्षत्तरि हि राजाध्यासाद्राजशब्दः। न राज्ञि क्षत्तृशब्दः; तत्र क्षत्त्रध्यासाभावात। 'लोकेषु पञ्चविधं सामोपासीत' इति लोकानामधिकरणत्वश्रवणात् तत्र क्रत्वङ्गाध्यासः। 'पृथिवी हिङ्कारः' इति प्रथमनिर्देशाच्च पृथिव्याद्युद्देशेन हिङ्कार-

---

1 पूर्वमीमांसादेवताधिकरणं देवताप्रीतिमिच्छदपि कर्मप्राधान्यमेव स्थापयति। शारीरकफलाधिकरणं तु ब्रह्ममात्रप्राधान्यम्। तदन्यदेवताविषयेऽत्राप्राधान्यशंका। प्राधान्यं सिद्धान्ते। तत्त्वटीकायामप्येतदधिकरणं देवताप्राधान्यस्थापकमिष्टम्। एवञ्च कर्माङ्गे उद्गीथे निर्विवादप्राधान्यकहिरण्मयपुरुषरूपब्रह्मदृष्टिवत् अङ्ग एवादित्यादिदृष्टयोऽपीत्यर्थोऽपि सौत्रचकाराभिमत इति अत्रैव प्रसक्तत्वादाह ब्रह्मेति। एतेन—ब्रह्ममतिवत् उद्गीथादिमतय आदित्यादावपि किं न भवेत्; अत्र को विनिगमको विशेष इति शङ्काऽप्यपैति, पूर्वपक्षघट्टे एतद्वाक्यसंगतिरिति च न भवति।

2 एवञ्च—नियमावलम्बनेन चेत्यर्थः।

3 शांकरे उद्गीथादेः कर्मात्मकत्वमेवोक्तम्। तद्व्याख्यासु गीतिरूपत्वात् क्रियात्मकत्वमिति विवृतम्। अथापि ओमित्यक्षरे उद्गीथे तदयोगात् 'श्रीभाष्य इव फलसाधनकर्माङ्गत्वेनकर्मात्मकत्वमेव क्रियात्मकतदनात्मकोद्गीथोद्गात्रादिसर्वानुगतं शांकरसंमतञ्चास्त्विति दर्शयितुं कर्मसमवायितयेत्यादि।

त्वादिदृष्टिविधिरिति पूर्वपक्षहेतव उपन्यस्ताः । 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति विद्यया कर्मणो वीर्यवत्तरत्वं श्रुतम्; न सिद्धरूपद्रव्यस्य । अत आदित्यादिमतिभिरुद्गीथादिकर्मस्वतिशय उपपद्यते; न तूद्गीथादिमतिभिरादित्यादीनाम् । कर्मणो ह्यपूर्वसंनिकर्षः; न त्वादित्यादीनाम्; असाधितस्य करणत्वायोगात् । अतः [1]कर्मस्वतिशयावहत्वात् आदित्यादिःप्रधानं कर्म(आदित्यादिप्रधानकर्म)फलस्यादित्यादिप्राप्तिलक्षणत्वात् फलात्मकतया [2]चादित्यादीनां प्राधान्यम् । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपक्रमे द्वितीयाश्रुत्योद्गीथादिरुपास्यत्वेनावगतः । इयमेवर्गिति एवकारोपश्लेषादृचि पृथिवीत्वं विधेयमवगतम् । 'य एवं विद्वान् साम गायति' इत्यङ्गाश्रयविज्ञानमुपसंहृतम् । अत आदित्यादेर्दृष्टिविशेषणत्वम् । [3]पृथिव्यामृक्छब्दः लाक्षणिकः—सम्बन्धमात्रमपेक्षते; न तूत्कर्षमिति न तन्निबन्धनः, सामात्मना लोकमुपासीतेति विभक्तिद्वयविपरिणामादपि, लोकात्मना सामोपासीतेति सप्तमीमात्रविपरिणामो वरम् । पृथिवी हिङ्कार इत्यादिक्रमो बह्वपपत्त्यनुरोधेन नेयः । अतोऽङ्गेष्वादित्यादिदृष्टिविधिरिति सिद्धान्तयन्ति ॥

**उपपत्तेरिति,** कस्योपपत्तिरित्यपेक्षायामुत्कर्षस्य पूर्वसूत्रप्रकृतत्वात् तस्योपपत्तेरिति व्याख्यानमुचितम्; न त्वर्थान्तरस्य । उत्कर्षश्च प्रागुक्तलक्षणः । कर्मस्वतिशयाधायकत्वेन फलात्मकत्वेन च प्राधान्यमुत्कर्षान्तर्गतम् । उद्गीथेनोपक्रमः साम्नोपसंहारश्च सर्वेषु देवतादृष्टिविधिष्वननुगताविति व्यापक एव हेतुर्भाष्येऽभिहितः । लोकेषु पञ्चविधं साम, सप्तविधं सामेत्यादिषु विभक्तिद्वयविपरिणामाभावादेव, लोकस्य दृष्टिविशेषणत्वोपपादनं मन्दम् । न हि द्वितीयाविभक्त्यर्थोऽनन्वितः । लोकादिशब्दानां देवतापरत्वे प्रामाणिके सति उत्कर्षादेव देवताया दृष्टिविशेषणत्वम् । न चेत्, यथाप्रतिपन्न[4]स्वीकारेऽप्यविरोधः । पृथिवी हिङ्कार इत्यादिरप्येतेन व्याख्यातः । अतो भाष्योक्तप्रकारेण सारतरयुक्त्यभिप्रायं सूत्रम् ।

**अन्ये तु**—फलसाधनतयोत्कर्षादेव पूर्वपक्षं कृत्वा एवं सिद्धान्तमाहुः—उद्गीथादिष्वादित्यादिदृष्टिः; कर्मसमृद्ध्यर्थेषूपासनेष्वधिकृताधिकारोपपत्तेः । आदित्यादीनां कर्माङ्गदृष्ट्योपास्यत्वे हि क्रत्वधिकृतेनैव कर्तव्यत्वनियमो न स्यात् । तन्नियमश्च, यदेव विद्यया करोतीति श्रुत्याऽवगम्यते । 'य एवासौ तपति तमुद्गीथमुपासीत', 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इत्यादिषु यच्छब्दयोग-प्राथम्याभ्यामुद्देश्यत्वावगमादादित्यादीनामुपास्यत्वमिति चेत्; न; 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथोपास्यताया उपक्रमसिद्धत्वात्; क्रत्वधिकृताधिकारोपपत्तेश्च । कर्मसमृद्धिव्यतिरिक्तफलेष्वङ्गाश्रितेषूपासनेषु 'लोकेषु पञ्चविधं सामोपासीत' इत्यादिषु क्रत्वधिकृताधिकारसंबन्धे प्रमाणाभावात् न क्रत्वङ्गेषु देवतादृष्टिरिति नियमः । तत्रैवं निर्वाहः—त्रिविधमुपासनं भूतार्थम्, अध्यासः, सम्पदिति । **भूतार्थे**

1 दृष्टेः स्वविशेष्यसंबन्धिनि कर्मणि वीर्यवत्तरत्वकरत्वं वाच्यम् । कर्म चोद्गीथेनैव संबन्धि, न त्वादित्येनेत्यादित्य एव प्रधानम्—दृष्टिप्रतियोगित्वार्ह इत्यर्थः । अयं भा० प्र० पाठः । आदित्यादिप्रधानकर्मेति प्रायिकपाठे तु आदित्योद्देश्यककर्मेत्यर्थः । आदित्यप्राप्त्यौचित्याय तत् विशेषणम् ।

2 बहिरङ्गभूतोद्गीथाद्यपेक्षया देवतोद्देश्यकत्यागादिरूपकर्मान्तर्गत्यर्हतयाऽन्तरङ्गत्वादिति चकारार्थः । 3 ऋक्शब्दः ऋच्यध्यूढं सामेत्यत्र ।

4 लोकविशेष्यकसामदृष्टिस्वीकारेऽपीत्यर्थः । उपरीदं व्यक्तम् ।

आसीनाधिकरणम् । ४-१-५

## आसीनः संभवात् ॥ ४-१-७ ॥

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन् आसीनः शयानः तिष्ठन् गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेदिति प्राप्त उच्यते—आसीनः इति । आसीन उपासनमनुतिष्ठेत् । कुतः?। संभवात् । आसीनस्यैव ह्येकाग्रचित्ततासंभवः; स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयाने च निद्रासंभवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ॥ ७ ॥

---

यथार्थविषयम् ; न तत्र किंचिन्निरूप्यम् । अध्यासोऽन्यस्मिन्नन्यधर्माध्यासः ; यथोद्गीथेऽसुरपाप्मविध्वंसनादयः प्राणधर्माः, भयतमोपहत्यादयः आदित्यधर्माः । अन्यसादृश्यानुसन्धानं सम्पत् ; यथा पञ्चविधत्वसप्तविधत्वाद्यनुसन्धानम् । तच्च वाक्येनैवोपपादनादवगम्यते । अध्याससम्पत्ती च निकृष्टगतधर्मतत्सादृश्यविषये चेत्, उपास्यं निकृष्टं कृतं स्यात् । उत्कृष्टगतधर्मतत्सादृश्यविषये चेत्, उपास्यमुत्कृष्टं कृतं स्यात् । ततो महत्कृतमेवोपास्यम् । तत्र दृष्टिविशेषणनिर्णयस्तु उपक्रमोपसंहारवाक्यशेषप्राथम्ययच्छब्दयोगमहत्त्वाद्यनुरोधेन वर्णनीयः । लोकेषु पञ्चविधं सामोपासीतेत्यादिषु सामप्रतियोगिकं सादृश्यं लोकेषु विधीयते । प्रथमनिर्दिष्टत्वात् सप्तम्याञ्ज(म्यसामञ्ज)स्याच्च । सामशब्दः सामसादृश्यपरः । लोकसामशब्दयोरन्यतरस्य लक्षणाया अवर्जनीयत्वेऽपि साम्नि लोकसादृश्ये विधित्सिते सप्तमी न घटते । इयमेवर्गित्यत्रापि पृथिव्या ऋगात्मकत्वं विधित्सितम् ; निर्देशप्राथम्यात्, एवकारान्वयस्य 'उर एव वेदिः' इत्यत्र व्यभिचारात् । पृथिव्येव, नान्या ऋगस्तीति वाक्यशेषश्चेत्—पृथिव्या ऋगात्मकत्वं विधेयं स्यात् । ऋक् पृथिव्येव, न पृथिव्या अन्येति वाक्यशेषश्चेत्—ऋचः पृथिवीत्वविधानं स्यात् । कर्मसमृद्ध्यर्थोपासनव्यतिरिक्तेषु न कर्माङ्गेषु देवतादृष्टिनियमः ; कर्मसमृद्ध्यर्थेषु क्रत्वङ्गेषु देवतादृष्टिरिति स्थितिरिति ॥

अत्रापि क्रत्वङ्गव्यतिरिक्तेषु देवतादृष्टिनियमाभावोऽनुपपन्नः; अध्याससम्पत्त्योर्निकृष्टधर्मसादृश्यविषयत्वानुपपत्तेः स्वयमेव प्रतिपादितत्वात् । अतः क्रत्वङ्गविषयेष्वतद्विषयेषु चोपासनेषु देवताविवक्षायाः सुव्यक्तत्वे देवताया उत्कर्षादेव दृष्टिविशेषणत्वम्, विवक्षाविरहे यथाश्रुताङ्गीकारश्च युक्त इति उत्कर्ष एवोपपत्तिशब्दविवक्षितो हेतुर्भवितुमर्हति ; अर्थस्वाभाव्यात् ; प्रकृतत्वाच्च । अतः सर्वत्रोत्कर्षस्यैव दृष्टिविशेषणत्वे प्रयोजकत्वात् क्रत्वधिकृतानुष्ठेयत्वमप्रयोजकमित्युपपत्तिशब्दस्योत्कृष्टतोपपत्तिपरत्वमुक्तं भाष्ये । क्रत्वङ्गविषयेषु क्रत्वधिकृतानुष्ठेयत्वमप्यभ्युच्चयहेतुः स्यात् । सर्वत्राप्युत्कर्षानुगुणमेव दृष्टिविशेषणत्वनिर्णयो युक्तः ।

इति आदित्यादिमत्यधिकरणम् ॥

**आसीनः संभवात्** ॥ अवान्तरसङ्गतिमाह **मोक्षे**ति । अनन्तराधिकरणयोः प्रासङ्गिकत्वात् परमप्रकृतेन प्रधानभूतेन ब्रह्मोपासनेन सङ्गतिरुक्ता । यद्वा दृष्ट्युपासनानामप्यासनसापेक्षत्वेऽपि आसनसमर्थनहेतोरैकाग्र्यस्याद्याधिकरणसमर्थितत्वात् तेन सङ्गतिरुक्ता । किमासीनश्चिन्तयेत्, उतासीनः शयानस्तिष्ठन् गच्छन् वेति ; किं गमनादिषु ध्यानं संभवति, न वेति । संभवति चेत्, आसनानियमः । न संभवति चेत्, तन्नियमः । उपासनसंभवादित्यतोऽप्येकाग्रतासम्भवादित्युचितम् । उपासनसंभवादित्युक्तेऽपि कथमित्यपि शङ्काया एकाग्रताभिप्रायेण शमयितव्यत्वात् ; **यत्रैकाग्रता**

**ध्यानाच्च ॥ ४-१-८ ॥**

"निदिध्यासितव्यः" इति ध्यानरूपत्वादुपासनस्यैकाग्रचित्तताऽवश्यम्भाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥

**अचलत्वं चापेक्ष्य ॥ ४-१-९ ॥**

निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते—"ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौः, ध्यायन्तीवाऽऽपः, ध्यायन्तीव पर्वताः" इति । अतः पृथिवी-पर्वतादिवत् एकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव संभवेत् ॥ ९ ॥

**स्मरन्ति च ॥ ४-१-१० ॥**

स्मरन्ति च आसीनस्यैव ध्यानम्, "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्याऽऽसने युञ्ज्यात् योगमात्मविशुद्धये" इति ॥ १० ॥

**यत्रैकाग्रता तत्राविशेषात् ॥ ४-१-११ ॥**

एकाग्रतातिरिक्तदेशकाल[1]विशेषाश्रवणादेकाग्रतानुकूलो यो देशः कालश्च, स एवोपासनस्य देशः कालश्च । "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह; न तु देशं नियच्छति, 'मनोऽनुकूले' इति वाक्यशेषात् ॥ ११ ॥ इति आसीनाधिकरणम् ॥

---

इत्येकाग्रतायाः संनिहितत्वात्; योग्यत्वाच्च । 'उपविश्यासने युञ्ज्यात्' इति [2]स्मृतिवचनस्य मनोनुकूलताभिप्रायतां मत्वा पूर्वपक्षी प्रत्यवतिष्ठते । तदवश्यम्भावात् तत्परिहारः ॥ ७ ॥

**ध्यानाच्च** ॥ ध्यानादिति भावप्रधाननिर्देश इत्यभिप्रायेणोक्तं **ध्यानरूपत्वादिति** । स्थितिगत्योर्विजातीयप्रत्ययसंभवात् तदैकाग्र्यविरोधि गत्यादिकमित्यर्थः ॥ ८ ॥

**अचलत्वं चापेक्ष्य ॥ आप** इति स्थिरं तटाकादिजलं विवक्षितम् । निश्चलत्वमात्रसाम्यं विवक्षितम् । निश्चलत्वमैकाग्र्याद् भवति । तच्चाऽऽसीनस्यैव; गत्यादौ विजातीयप्रत्ययेन चलनसंभवादित्यर्थः ॥ ९ ॥

**स्मरन्ति च** ॥ न केवलमर्थसामर्थ्यात् । वचनादपि तत्सिद्धिरित्यर्थः ॥ १० ॥

**यत्रैकाग्रता तत्राविशेषात् ॥ स एवोपासनस्य देशः कालश्चेति** । तिथिनक्षत्रादिनियमो नास्तीत्यर्थः । वर्णाश्रमधर्मावि[3]रुद्धकालविशेषसंभवात् । आसनसहपठितो देशादिरप्यैकाग्र्यसिद्ध्यर्थमपेक्ष्यते, किंपुनरासनमिति सूत्राभिप्रायः ।

**इतरे त्रयोऽपि—यत्रैकाग्रतेति** सूत्रमधिकरणान्तरमाहुः । वैदिककर्मसु देशकालादिनियमदर्शनादुदगयनादिपरिग्रह इति पूर्वपक्षं कृत्वा, न नियम इति सिद्धान्तयन्ति । उक्तप्रकारेण पूर्वाधिकरणशेषत्वोपपत्तेर्नाधिकरणान्तरत्वं युक्तम् ॥ ११ ॥

---

1 विशेषाश्रवणादित्यनेन अविशेषादिति सौत्रपदं व्याख्यातम् । देशादिविशेषसाधक वचनाभावादित्यर्थः । एकाग्रताया अविशिष्टत्वादित्यप्यर्थज्ञापनार्थमेकाग्रतातिरिक्तेति पदम् ।

2 स्मृतीति श्रुतेरप्युपलक्षणम् । यद्वा स्मरन्तीति सूत्रणात् प्रसिद्धश्रुत्यभावमूलकः पूर्वपक्ष इति । 3 श्रौतस्मार्तविरुद्धेषु कालेषु जपमाचरेदितिवत् ।

आप्रयाणाधिकरणम् ४ १-६

## आप्रयाणात् तत्रापि हि दृष्टम् ॥ ४-१-१२ ॥

तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव संपाद्यम् । उताऽऽप्रयाणात् प्रत्यहमनुवर्तनीयमिति विशये—एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात् तावतैव परिसमापनीयमिति प्राप्ते उच्यते आप्रयाणात्—इति । आमरणादनुवर्तनीयम् । कुतः । तत्रापि हि दृष्टम्—उपासनोद्योगप्रभृति आप्रयाणात् मध्ये यः कालः, तत्र सर्वत्रापि दृष्टमुपासनम्, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति ॥ १२ ॥ इति आप्रयाणाधिकरणम् ।

---

**आप्रयाणात्तत्रापि हि दृष्टम्** ॥ सङ्गत्यादि स्पष्टम् । उक्तलक्षणमुपासनं किमेकस्मिन्नहनि कर्तव्यम्, उताऽऽप्रयाणादिति; किमेकदिनानुष्ठानेन शास्त्रार्थस्य कृतत्वम्, नेति । कृतत्वं चेत्, एकस्मिन्नहनि कर्तव्यम् । न चेत्, आप्रयाणात् कर्तव्यमिति ।

**परे तु**—साक्षात्कृतात्मतत्त्वस्यानियोज्यत्वात् अनुवर्तयेदिति शासनमशक्यम् । अतोऽभ्युदयफलोपासनविषयेयं चिन्तेति । तदयुक्तम्; 'एवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते', 'प्रायणान्तमोङ्कारमभिध्यायीत' इत्यत्रापुनरावृत्तिलक्षणमोक्षसाधनविद्यास्वेव आप्रयाणादनुवृत्तेः श्रुतत्वात् । यावच्छरीरपातं शास्त्रवश्यत्वात्, 'अनियोज्य' इति चायुक्तम् । अन्तिमप्रत्ययस्य मोक्षहेतुत्वदर्शनात्, तदौपयिकाहारशुद्ध्यादिसापेक्षत्वाच्च शास्त्रवश्यत्वमवर्जनीयम् । न चान्तिमप्रत्ययशास्त्रममुमुक्षुविषयम्; मुमुक्षुविषयतयैव प्रतिपादितत्वात् । 'प्रयाणकाले मनसा' इत्यारभ्य, 'स तं परं पुरुषमुपैति दिव्यम्' इति[1] ह्युच्यते । न च साक्षात्कृततत्त्वस्य भेददर्शनाभावान्नान्तिमप्रत्ययापेक्षेति वाच्यम्; देहपोषणादिषु प्रवृत्तिदर्शनात् ॥ तेषु मिथ्यात्वज्ञानमस्तीति चेत्—तथाऽप्यन्तिमप्रत्ययः कार्य एव । तद्वैकल्येन ह्यादिभरतस्य मृगत्वप्राप्तिः । न च तस्य देहादिषु मिथ्यात्वधीर्नास्तीति वाच्यम्; विप्रजन्मनि पूर्वार्जितज्ञानातिरिक्तज्ञानाभावात् । अतः शास्त्रवश्यत्वमस्त्येव ॥ किञ्च किमिदमशास्त्रवश्यत्वं नाम, किमुच्चार्यमाणमपि शास्त्रं भेददृष्ट्यभावान्न शृणोति, उत शृण्वन्नपि नार्थं प्रत्येति, उत सत्यामप्यर्थप्रतीतौ ब्राह्मण्याद्युपाधेः कर्तृत्वादेश्चाभावान्नाहं कर्मवश्य इति जानाति, अर्थे प्रतीतेऽपि किं नानुतिष्ठति, उताननुतिष्ठतो न प्रत्यवायः, उतेष्टानिष्टप्राप्तिनिवृत्ती नेच्छतीति । न प्रथमद्वितीयौ; प्रतिबुद्धतत्त्वानां वसिष्ठादीनामप्युक्तिप्रत्युक्तिदर्शनात् । न तृतीयः; आत्मनि ब्राह्मण्याद्यभावेऽप्युपाधेरनिवृत्तत्वात् । तदभावज्ञानवतां वसिष्ठजनकभीष्मादीनामनुष्ठानदर्शनाच्च । न चतुर्थः; अज्ञस्याननुतिष्ठतोऽप्यशास्त्रवश्यत्वप्रसङ्गात् । न पञ्चमः—आदिभरतादीनां प्रत्यवायदर्शनात्, विप्रजन्मनि, 'सतां मार्गमदूषयन्' इति वचनाच्च । न षष्ठः; अमुमुक्षुत्वप्रसङ्गात् । बन्धनिवृत्तीच्छा हि मुमुक्षा ॥ मुक्तस्य न मुमुक्षेति चेन्न; क्षुदाद्युपशमाय प्रवृत्तिदर्शनात् । अतोऽनुवृत्तिविधिवश्यत्वादाप्रयाणात् परविद्याऽनुवर्तनीया ।

**अन्ये तु**—साक्षात्करणफलत्वादुपासनस्य तत्पर्यन्तत्वमिति पूर्वपक्षयन्ति । तदयुक्तम्; परमपुरुषप्रीतिफलकत्वादुपासनस्य, प्रीतेश्च यथाशास्त्रमनुष्ठानजन्यत्वात् । अतः **शास्त्रार्थस्य कृतत्वादित्येव** पूर्वपक्षयुक्तिर्युक्ता । अत एव सिद्धान्तेऽपि साक्षात्कारमात्रफलकत्वाभ्युपगमेनान्तिमप्रत्ययसिध्द्यर्थमनुवर्तनीयतोक्तिरपि न युक्ता; किन्तु यथाशास्त्रमनुष्ठानसिद्धयेऽनुवर्तनीयत्वमेव वक्तव्यम् ॥ १२ ॥

---

1 अस्य गीतावचनस्यास्मन्मते ऐश्वर्यविषयकत्वेऽपि परमते तथा नेति एवमुक्तिः ।

तदधिगमाधिकरणम् । ४-१-७

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४-१-१३ ॥

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते । ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते, "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते", "तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन" इत्युत्तराघाश्लेषः ; "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते", "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति पूर्वाघविनाशः । एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते, नेति संशयः । किं युक्तम् । नोपपद्येते इति । कुतः । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिशास्त्रविरोधात् । अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथञ्चिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते । न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते ; येन प्रायश्चित्तेनाघविनाश उच्यते । विद्या हि, "ब्रह्मविदाप्नोति परम्", "ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मप्राप्त्युपायतया विधीयते । अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इति । एवं प्राप्तेऽभिधीयते—तदधिगमे इति । विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते । कुतः । एवंविधं हि विद्यामाहात्म्यमवगम्यते ; "एवंविदि पापं कर्म न श्लिष्यते", "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिव्यपदेशात् ।

न च "नाभुक्तं क्षीयते कर्म" इत्यनेन शास्त्रेणास्य विरोधः ; भिन्नविषयत्वात् । तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम् ; एतत्तु उत्पन्नाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम् , उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते । यथा अग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम् , एवमत्रापीति न कश्चिद्विरोधः ।

---

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ पेटिकासङ्गतिमाह **एव**मिति । उपायभूतोपासनस्य उपास्यनिरतिशयप्रियत्वेन स्वयमपि प्रियरूपत्वादुपेयरूपत्वमप्यस्तीति अत्र तन्निरूपणं कृतम् । 'दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः, "तच्चित्तविमलाह्लादक्षीणपुण्यचयस्तदा" इत्यादिभिः प्रीतिरूपत्वं ह्यवगम्यते । **ब्रह्मविद्याप्राप्ता**विति । **ब्रह्मविद्याप्राप्तिः**—साक्षात्कारावस्थोपासनलब्धिर्विवक्षिता । तस्मिन् दृष्टे क्षीयन्त इति हि विषयवाक्यम् । **प्राप्तिः**—उपक्रमः । **विद्याप्राप्ति**शब्दः साधारण्यात् प्रपदननिष्पत्तेरपि द्योतकः । संश्लिष्टस्य पूर्वाघस्याश्लेषायोगाद्विनाश एव, उत्तराघस्य त्वश्लेष एवेति योग्यतावशाद्विभागः । अश्लेषविनाशप्रतीतिसंशयाभावात् तयोरुपपत्त्यनुपपत्तिविषयः संशय उक्तः । किं विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ सम्भवतः, नेति ; किमश्लेषविनाशशास्त्रे यथाश्रुतार्थपरे, उत 'नाभुक्तं क्षीयते' इत्यनेन विरोधात् विद्यास्तुत्यर्थतया नेये ; किमश्लेषविनाश शास्त्रयोरभुक्तकर्मापरिक्षयशास्त्रस्य च विरोध एव, उताविरोधः सम्भवति ; विरोध एव चेत् , विद्यास्तुत्यर्थत्वादश्लेषविनाशासम्भवः ; अविरोधसम्भवे शास्त्रस्य यथाश्रुतार्थपरत्वादश्लेषविनाशसम्भव इति । **नाभुक्त**मित्यादिना पूर्वपक्षोपन्यासः । अननुभवेऽपि कर्मणां प्रायश्चित्तेन विनाशो दृश्यत इत्यत्राह—**न चे**ति ।

**एवं प्राप्त** इति । नाभुक्तमित्यादिवचनविरोधं परिहरति **न चे**ति । अत्र **शक्तिशब्दः** कर्मानुष्ठानजनितभगवन्निग्रहपरः । भिन्नविषयत्वेन वचसोरविरोधे दृष्टान्तमाह—**यथे**ति । **अश्लेषविनाशौ**

अघस्याश्लेषकरणम्—वैदिककर्मायोग्यता-वासना-प्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायं च कुर्वन्ति। अघस्य विनाशकरणम्—उत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति ; सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्त-परमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति। तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्, "नाविरतो दुश्चरितात्" इत्यादिभिः शास्त्रैराप्रयाणादहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात्॥ १३॥ तदधिगमाधिकरणम्॥

---

विवृणोति अघस्येति। उत्पत्स्यमानस्य कर्मणः स्वकार्यकरणशक्तेः प्रतिबन्धोऽश्लेषः। उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेर्विनाशकरणं विनाश इत्यर्थः। शक्तिशब्दार्थमाह **शक्तिरपी**ति। एतदुप-पन्नमित्याह **तदेव**मिति। ब्रह्मानुभवस्य स्वतःप्राप्तत्वेनासाध्यत्वात् प्रतिबन्धनिवृत्तिरूपसाध्ये प्रायश्चित्ततुल्यैव ब्रह्मविद्या। स्वर्गादेः साध्यत्वात् तत्तत्साधनस्य कर्मणो न प्रतिबन्धनिवर्तकत्वम् ; अत्र तु प्रतिबन्धनिवृत्तेरेव साध्यत्वात् विद्यायास्तद्धेतुत्वं युक्तमित्यर्थः। तर्हि ब्रह्मविदो निषेधशास्त्रवश्यत्वं न स्यादित्यत्राह **तदिद**मिति॥ ननु ब्रह्मविद्याया अपि पापप्रायश्चित्तत्ववचनात् कृच्छ्रादीनामिव बुद्धिपूर्वपापनिवर्तकत्वमपि स्यात्॥ नैवम्। प्रामादिकाघप्रायश्चित्तत्वेनैव तद्विधानात्, 'अपि चेत् पातकं किंचित् योगी कुर्यात् प्रमादतः। योगमेव निषेवेत नान्यं यत्नं समाचरेत्' इति ह्युच्यते॥ ननु पूर्वं शरीरपातानन्तरं कर्मक्षय उक्तः ; अत्र तूपासनारम्भे कर्मप्रहाणमुक्तम् ; कथमिदमुपपद्यते। उच्यते—उपासनारम्भसमाप्त्योर्भगवत्प्रीति-विशेषाभिप्रायत्वात् अधिकरणद्वयाविरोधः। उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षमिष्यामीति सङ्कल्पयति, समाप्तौ तु क्षान्तमिति सङ्कल्पयति, अतोऽधिकरणद्वयार्थ उपपन्नः।

**परे तु**—ज्ञानस्याविधेयत्वेन कर्मक्षयोद्देशेन विद्यायाः प्रायश्चित्तकर्मवत् विधानाभावात् तया कथं कर्मक्षय उक्त इत्याशङ्क्य—सगुणविद्यायां तावत् विधानमस्ति ; निर्गुणविद्यायामपि वस्तुसामर्थ्यात् कर्मक्षयः ; कालत्रयेऽपि नाहं कर्ता भोक्तेत्यवगमादिति परिहरन्ति॥ तदयुक्तम् ; नाहं कर्ता नाहं भोक्तेति ज्ञाने सत्यपि चन्दनेन कण्टकेन स्वदेहं लिम्पतस्तुदतश्च पुरुषस्य लेपतोदकर्मकृतसुखदुःखान्वयदर्शनात्॥ साक्षात्कारवतो न सुखाद्यन्वय इति चेन्न ; 'व्युत्थानकाले राजेन्द्र आस्ते हेयतिरोहितः' इति योगव्युत्थाने देहसुखदुःखाद्यन्वयस्य प्रामाणिकत्वात्। निर्गुणविद्याया अप्रामाणिकत्वाच्च वन्ध्यासुतस्य व्याधिपरिहारवद् व्यर्थः प्रयासः। कर्मफलभोगावश्यम्भावेऽपि देशकालनिमित्तापेक्षो मोक्ष इति पूर्वपक्षि-णोक्ते—तथा चेत्, कर्मफलवदनित्यत्वप्रसङ्ग इति सिद्धान्तिना परिहारश्चानुपपन्नः ; निवर्तकज्ञा-नोदयानन्तरभाविन्या अविद्यानिवृत्तेरनित्यत्वप्रसङ्गात्॥ प्रागप्यविद्यानिवृत्तिरस्ति चेत्--शास्त्रवैयर्थ्यम्[1]।—

**अपरे तु** नासुक्तमिति स्मरणमविद्वद्विषयमित्याहुः। तत् भाष्योक्तविषयव्यवस्थाफलम्। विद्यायाः कर्मणां फलोत्पादनशक्तिविनाशसामर्थ्ये ह्युक्ते कर्मणां फलजननसामर्थ्यं विद्यारहितेषु भवतीति ज्ञायते। अविद्वद्विषयत्वमूलेऽभिहिते तद्विषयत्वं सिध्यतीति भाष्ये मूलयुक्तिरुक्ता।

---

1 अतो निवृत्तित्वादेव मोक्षो नित्यः ध्वंसान्तरवत्। न च सर्वोच्छेदः ; अवैकच्छेदोक्तेः।

**अन्ये त्वाहुः**—अघफलं द्विविधम्—लेपो विपाकश्चेति । तत्र लेपः—अप्रायत्यम्—स्नानाद्यपनेयम् । विपाकः—नरकपातादिः । सुकृतस्यापि लेपः—महत्त्व-पङ्क्तिपावनत्व-शापानुग्रहसामर्थ्य-काम्यकर्मरुचिरूपः । विपाकः—स्वर्गादिः । तत्र महत्त्वं नाम 'सवनगतौ क्षत्रियवैश्यौ हत्वा ब्रह्महा भवति', 'अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत्' इत्यवगम्यते । तत्र लेपः स्वसामर्थ्यप्रसूतं फलम्, विपाको नैयोगिकफलम् । एवं ज्ञानस्यापि स्वसामर्थ्यप्रभावितं नैयोगिकं चेति फलं द्विविधम् । तत्र पुरुषशुद्धिलक्षणेन माहात्म्यशब्दवाच्येन कल्मषविरोधिना पूर्वकल्मषविनाशः उत्तराघानामप्रायत्यकरणरूपसंश्लेषविघातश्च । ज्ञानस्य नैयोगिकफलं तु देहपातेऽन्तिमप्रत्ययसापेक्षं सुकृतदुष्कृतप्रहाणं ब्रह्मभावाविष्करणं च । उत्तरेषामघानामश्लेष एव ; न विनाशः । अत एव 'सुकृतदुष्कृते धूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इति धूननवचनम् अप्रियज्ञात्युपायनवचनं च उत्तराघविषयमिति ।

अत्रोच्यते—यद्यपि कर्मणामधिकारानधिकारसजातीयकर्मान्तररुचिस्वर्गनरकादिफलविभागोऽस्ति—तथाऽपि सामर्थ्यप्रभावितनैयोगिकफलविभागो नोपपन्नः । भगवत्प्रीत्यप्रीतिव्यतिरेकेण सामर्थ्याभावान्नियोगाभावाच्च । तद्व्यतिरेकेण सामर्थ्यनियोगाभ्युपगमेऽप्यश्लेषवचनस्य लेपविघातमात्रविषयत्वं धूननोपायनवचनयोरुत्तराघमात्रविषयत्वं चानुपपन्नम् । तथाहि—उत्तराघस्य विपाकहेतुशक्तिरुत्पन्ना, न वा । न चेत्, लेपविघातोऽश्लेष इति विशेषोपादानवैयर्थ्यं स्यात् ; अस्मदीयपक्षः परिगृहीतश्च भवेत् । उत्पत्तिपक्षे—क्रियोत्तीर्णा कर्मशक्तिः आत्मधर्मभूता, परमात्मप्रीत्यप्रीतिरूपा वा स्यात् ; उभयथाप्यश्लेषवचनमनुपपन्नं स्यात् । आत्मधर्मत्वे तत्समवेतत्वात्, परमात्मप्रीत्यप्रीत्योश्चेतनविषयत्वाच्च ॥ विपाकशक्तेः श्लेषस्त्विष्टः, लेपविघात एवाश्लेषरूपतयाऽभिप्रेत इति चेत्—तर्ह्यश्लेषवचनसङ्कोचः स्यात् ॥ 'सुकृतदुष्कृते धूनुते' इति धूननश्रवणबलादवर्जनीयः सङ्कोच इति चेत्—तर्ह्यनुत्पन्नस्य धूननायोगाद्विपाकशक्त्युत्पत्तिकल्पनगौरवं च स्यात् । न चानुत्पन्नस्य धूननायोगात् तदुत्पत्तिः कल्पनीया भवेत् ; उत्पन्नस्याप्यदृष्टस्य पांसुभसितकरीषादिवत् संयोगविभागार्हद्रव्यत्वाभावाद्धूननानुपपत्तेस्तत्कल्पनवैयर्थ्यात् ॥ धूननशब्देन विनाशो लक्ष्यत इति चेत्—न ; विनष्टस्य प्रियाप्रियज्ञातिपरिग्रहायोगात् ॥ पुरुषगतादृष्टविनाशेऽपि प्रियाप्रियेषु नष्टसजातीयादृष्टान्तरोत्पत्तिरेव तत्संक्रमणमिति चेत्—कर्तृगतादृष्टविनाशस्य पुरुषान्तरगतादृष्टान्तरोत्पत्तेश्च किं कर्मस्वभाव एव कारणम्, तर्हि सर्वेषां सर्वाणि कर्माणि नश्येयुः, पुरुषान्तरेष्वदृष्टं जनयेयुश्च । ततश्च कर्तॄणां भोगाभावः, अन्येषां भोगनियमश्च स्यात् ॥ अभुक्तफलस्याकृतप्रायश्चित्तस्य कर्मणोऽयं स्वभाव इति चेत्, तर्हि द्वादशवार्षिकादिषु केनचिदनुष्ठितेषु तद्द्विषतां ब्रह्महत्यादिदोषान्वयेन संव्यवहारादिषु बहिष्कार्यता स्यात् ॥ यद्युच्येत—नात्र कर्मस्वभावः कारणम् ; अपि तु परविद्यामाहात्म्यमेव । तत्तु विद्वद्गतं पूर्वाघं विनाश्य तदप्रियेषु तादृशमघं जनयतीति, तर्ह्युत्तराघप्रतिबन्धं प्रियाप्रियेषु तादृशादृष्टं च विद्या करोतीत्यभ्युपगमो वरम् । तथा सति उत्पत्तिकल्पनगौरवाभावात् । एवं च धूननोपायनयोरुत्तराघमात्रविषयत्वनिर्बन्धो निर्निबन्धनः स्यात् । विदुषः पूर्वाघविनाशने ज्ञातिषु तादृशाघजनने च विद्यासामर्थ्यस्योपपन्नत्वात् । एवं च सति 'सुकृतदुष्कृते धूनुते' इत्यत्र

इतराधिकरणम् ४-१-८

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४-१-१४ ॥

उत्तरपूर्वाघयोः विद्यया अश्लेषविनाशावुक्तौ । इतरस्य—पुण्यस्यापि एवम्—उक्तेन

सुकृतदुष्कृतशब्दयोरसङ्कोचः स्यात् । अन्यथा सङ्कोचो निर्निबन्धनः स्यात्; नष्टस्य कर्मणोऽन्यत्र संक्रमणायोगरूपस्य सङ्कोचहेतोः परिहृतत्वात्। पुरुषान्तरे तादृगदृष्टान्तरोत्पत्तिरुपायनमिति त्वयैव ह्युक्तम्। इयान् विशेषः—एकस्मिन् पक्षेऽश्लेषवचनस्य धूननोपायनवचनयोश्च सङ्कोचो विपाकशक्त्युत्पत्तिकल्पनगौरवं च, पक्षान्तरे तु सर्वश्रुत्यसङ्कोचो लाघवं चेति।

**अत्रायमर्थोऽनुसन्धेयः**—विदुषः कर्मणां चतस्रोऽवस्थाः श्रुताः—विनाशोऽश्लेषो धूननमुपायनं चेति। क्रियामात्रविनाशस्य लोकसिद्धत्वात् क्रियाया अश्लेषधूननसंक्रमणानामयोग्यत्वाच्चावस्थाचतुष्टयं क्रियोत्तीर्णशक्तिविषयं निर्णीतम्। सा च शक्तिः इष्टानिष्टफलदित्सालक्षणपरमात्मप्रीत्यप्रीतिरूपा; अन्यथा श्रुतहानाश्रुतकल्पनप्रसङ्गादिति प्रागेवोपपादितम्। तत्र विनाशाश्लेषवचनयोः पूर्वोत्तराघविषयत्ववत् उपायनवचनस्य पुरुषान्तरे तत्समानादृष्टोत्पत्तिविषयत्वञ्च अर्थसामर्थ्यात् सर्वैरभ्युपगन्तव्यम्। अश्लेषवचनं च[1] कृत्स्नोत्तराघविषयम्; असङ्कोचस्य स्वतःप्राप्तत्वात्। अश्लेषश्च प्रतिबद्धोदयत्वम्; उत्पत्तिकल्पनगौरवाभावात्। तत्कल्पनेऽपि धूननसंक्रमणायोगात्। एवं च विद्यायाः पूर्वाघविनाशने उत्तराघप्रतिबन्धे प्रियाप्रियेषु सजातीयादृष्टजनने च सामर्थ्यं सिद्धम्। एवं विद्याया विनष्टप्रतिबद्धादृष्टसजातीयादृष्टजननसामर्थ्यादुपायनश्रुतिश्च नोत्तराघमात्रविषया; अपि तु पूर्वोत्तराघविषया स्यात्। तथा चोपायनवाक्यस्थसुकृतदुष्कृतशब्दासङ्कोचश्च भवेत्। तत्र विनाशः—भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः। अश्लेषश्च—उत्तरकर्मफलदित्साप्रतिबन्धः। तौ च यथार्थोपहितौ; यद्ययं प्रक्रान्तमुपासनं समापयेत् पूर्वोत्तरयोः कर्मणोः फलं न दास्यामीति सङ्कल्परूपौ हि तौ। समाप्ते तु, कर्मफलं नैव दास्यामीति सङ्कल्पो विधूननश्रुत्यभिप्रेतः; लोके सेवारम्भसमापनयोः प्रीतितारतम्यदर्शनात्; शास्त्रेषु तीर्थसेवाद्युपक्रमसमापनयोः फलतारतम्यदर्शनाच्च। लोके राजादीनामिव परमात्मनोऽपि स्वसेवकविषयप्रीत्यतिशयेन तत्प्रियाप्रियजनेषु तदनुरूपेष्टानिष्टफलदित्सा च भवति। एवं पूर्वोत्तराघविनाशप्रतिबन्धधूननोपायनहेतुर्विद्यामाहात्म्यमिति ॥ १३ ॥ इति तदधिगमाधिकरणम् ॥

**इतरस्याप्येवमसंश्लेषः पाते तु ॥** अवान्तरसङ्गतिः स्फुटा। **इतरस्याप्यसंश्लेष** इति प्रतिज्ञानिर्देशः। **एवमिति** न्यायातिदेशः। उत्तरपूर्वसुकृतयोरश्लेषविनाशौ किं संभवतः, नेति; किं 'पापं कर्म न श्लिष्यते' 'सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यद्वयं सुकृतदुष्कृताश्लेषविनाशपरम्; उत दुष्कृतमात्राश्लेषविनाशपरम्; किमत्र पापकर्मशब्दो निषिद्धपरः, उत विद्याविरोधिफलकर्मपरः; 'सर्वे पाप्मानः' इति वाक्यं किं पापशब्दस्य विद्याविरोधिफलकर्मपरतामवगमयति, नेति। 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति हि श्रूयते। न चेत्—पापशब्दस्य निषिद्धमात्रपरतया वाक्ययोर्दुष्कृतमात्रश्लेषविनाशपरत्वान्न सुकृताश्लेषविनाशसंभवः। अवगमयति चेत्—पापशब्दस्य विद्याविरोधिफलकर्मपरत्वेन वाक्ययोः सुकृतदुष्कृताश्लेषविनाशपरत्वात् पूर्वोत्तरसुकृतयोरश्लेषविनाशसंभव

---

1 उत्तराघस्य विषयः फलं लेपो विपाकश्च। कृत्स्नतत्फलाश्लेष एवाश्लेषवचनार्थ इत्यर्थः। न तु बुद्धिपूर्वोत्तराघस्याप्यश्लेष इति।

न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्यात् । व्यपदेशाच्च । भवति च व्यपदेशः उभे सुकृतदुष्कृते निर्दिश्य, "सर्वे पाप्मानोऽतो निवर्तन्ते" इति, "तत् सुकृत दुष्कृते धूनुते" इति च । मुमुक्षोरनिष्टफलत्वात् सुकृतस्यापि पाप्मशब्देन व्यपदेशः । सुकृतस्यापि शास्त्रीयत्वात् तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्यया अविरोधशङ्कां निवर्तयितुमतिदेशः ॥ ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव ; कथं तेषां विरोधाद्विनाश उच्यते ; तत्राह—पाते तु—इति । शरीरपाते तु तेषां विनाशः । शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥ इति इतराधिकरणम् ॥

## अनारब्धकार्याधिकरणम् ४-१-९

### अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४-१-१५ ॥

ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ ; ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति विशये—"सर्वे पाप्मानः प्रदूयन्ते" इति विद्याफलस्याविशेषश्रवणात् विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत् संस्कारवशादप्युपपत्तेरविशेषेणेति प्राप्ते—उच्यते—अनारब्धकार्ये एव तु पूर्वे--इति । विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये—अप्रवृत्तफले एव विद्यया विनश्यतः । कुतः । तदवधेः । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातविलम्बावधिश्रुतेः ।

---

इति । एवंशब्दं व्याचष्टे **उक्तेने**ति । उक्तन्यायं विवृणोति **विद्याफले**ति । एवंशब्देन पूर्वसूत्रानुकृष्टव्य**पदेश**शब्दार्थमुपपादयति **भवति चे**ति । पुण्यस्यापि पाप्मशब्दवाच्यत्वे श्रुतिं दर्शयति-**उभे** इति । उभयोः पृथगभिधाने श्रुतिमाह-**तत्सुकृते**ति । अतिदेशस्याधिकाशङ्कामाह-**सुकृतस्ये**ति । सूत्रखण्डान्तरस्य शङ्कामाह **नन्वि**ति । विद्यानुगुणदृष्टफलानि तिष्ठन्ति चेत्, तानि शरीरपातादूर्ध्वं नश्यन्तीत्यर्थः ।

**परे** चापरे च 'पाते तु' इति सूत्रखण्डमेवं व्याचक्षते—अश्लेषविनाशसिद्धेर्देहपाते मुक्तिरवश्यम्भाविनी ; तुशब्दोऽवधारण इति ॥ तत निष्प्रयोजनम् ; सर्वबन्धकविरहे मोक्षस्य वक्ष्यमाणप्रकारेण निःसंशयत्वात् ; सर्वप्रारब्धकर्मानपक्षये सति देहपाते मोक्षस्योपरितनाधिकरणविरुद्धत्वाच्च ।

**अन्ये** त्वनेनाधिकरणेनाश्लेषमात्रातिदेशः, न विनाशातिदेश इति वदन्ति ॥ तदयुक्तम् ; विनाशाश्रवणरूपहेतोरसिद्धत्वात्, पाप्मशब्दस्यैवोभयवाचित्वोपपादनाच्च ॥ देहान्ते ज्ञातिभिः परिग्रहादविनाश इति चेन्न, द्विषद्भिः परिग्रहेण दुष्कृतस्याप्यविनाशप्रसङ्गात् ॥ सुकृतस्याश्लेषो नाम—काम्यकर्मरुच्यनुत्पत्तिः । पङ्क्तिपावनत्वादिलक्षणमाहात्म्यस्य तु विद्यया विरोधाभावान्नाश्लेषः । एवं स्वसामर्थ्यप्रभावितं ज्ञानफलं निरूपितम् । कदा तर्हि नैयोगिकफलं सुकृतदुष्कृतप्रहाणमित्यपेक्षायामाह--**पातेत्वि**ति । देहपात एवेत्यर्थः—इत्याहुः ॥ **पात** इत्यस्य व्याख्यानमनुपपन्नम् ; निष्फलत्वादेव । तच्च **साम्पराय** इत्यत्र प्रागुक्तत्वात् । अपेक्षिताकथनं च; भाष्योक्तशङ्कायाः परिहरणीयत्वात् । अतो यथाभाष्यमेवार्थः ॥ १४ ॥

**अनारब्धकार्ये एव तु पूर्वे तदवधेः** ॥ अवान्तरसङ्गतिमाह **ब्रह्मविद्योत्पत्तेरि**ति । **ततः पूर्वभाविनोः**—ब्रह्मविद्योत्पत्तिपूर्वभाविनोरित्यर्थः । किं पूर्वे सुकृतदुष्कृते अविशेषेण नश्यतः, उतानारब्धफले । किं 'सर्वे पाप्मानः' इति सर्वशब्दस्वारस्यानुरोधो न्याय्यः, उत **तस्य तावदि**ति विलम्ब-

**न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥ इति अनारब्धकार्याधिकरणम् ॥**

**अग्निहोत्राद्यधिकरणम् । ४-१-१०**

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४-१-१६ ॥

**'इतरस्याऽप्येवमसंश्लेषः' इति विद्याबलात् सुकृतस्याप्यसंश्लेष उक्तः । अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि स्वकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्ते उच्यते—अग्निहोत्रादि तु—इति । तुशब्दः सुकृतान्तरेभ्यो विशेषणार्थः । अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासंभवादनुष्ठेया एव । तदसंभवश्च तत्कार्यार्थत्वात् तेषाम् । विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम् ॥ कथमिदमवगम्यते ॥ तद्दर्शनात् । दृश्यते हि, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेत" इत्यादिना अग्निहोत्रादीनां विद्यासाधनत्वम् । विद्यायाश्चाप्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात् तदुत्पत्त्यर्थमाश्रमकर्माप्यहरहरनुष्ठेयमेव । अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥१६॥**

---

श्रुत्यनुरोधः ; किं कुलालचक्रभ्रमणवत् कर्मविनाशे संस्कारेण शरीरधारणमुपपद्यते, नेति ; किमीश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति, नेति । अस्ति चेत्—तेन शरीरधारणोपपत्तेः सर्वशब्दस्वारस्यानुरोधस्य न्याय्यत्वादविशेषेण नश्यतः । न चेत्—संस्कारेण शरीरधारणायोगात् विलम्बश्रुत्यनुरोधेनानारब्धफले एव नश्यत इति सिद्ध्यति ।

**सर्वमिथ्यात्ववादि**नामिदमधिकरणं विरुद्धम्, प्रारब्धकर्मणोऽपि मिथ्यात्वेन बाधात् स्थित्यनुपपत्तेः । द्विचन्द्रज्ञानवैषम्यं प्रागेवोक्तम् । प्रवृत्तफलस्य कर्मणः कुलालचक्रवेगवत् अन्तराले प्रतिबन्धासंभव इत्यपि दुरुक्तम्; स्वाप्नकुलालचक्रभ्रमणवद् द्वितीयक्षणे प्रबोधे सति तद्वेगस्य बाधितत्वदर्शनात् ॥ संस्कारात् देहधारणं चेत्—क्षीणायुषामविदुषामपि देहधारणं स्यात् ॥ १५ ॥

'**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** ॥ अवान्तरसङ्गतिमाह **इतरस्यापी**ति । उर्ध्वरेतस्सु अग्निहोत्रादिनैरपेक्ष्यदर्शनादनूर्ध्वरेतसामपि तन्नैरपेक्ष्यशङ्कायां **सर्वापेक्षा** इति सूत्रम्; यज्ञादेराश्रमधर्मत्वे विद्याङ्गत्वे च नित्यानित्यसंयोगविरोधपरिहारार्थं **सहकारित्वेन च** इति सूत्रम्; सुकृतफलाश्लेषादननुष्ठेयत्वशङ्कापरिहारार्थम् **अग्निहोत्रादि** इति सूत्रम् । एवं सूत्राणामपौनरुक्त्यावहेषु शंकाविशेषेषु सूत्राणामुत्थानात् समुच्चयवादो निरवकाशः । किमग्निहोत्राद्याश्रमधर्मो विदुषः कार्याश्लेषादननुष्ठेयः, उतानुष्ठेयः; किमश्लेषवचनं सर्वसुकृतविषयम्, उत विद्याङ्गाश्रमधर्मव्यतिरिक्तसुकृतविषयम्; किं विद्वत्संबन्ध्याश्रमधर्मस्यापि फलं विद्याव्यतिरिक्तम्; उत विद्यैवेति । व्यतिरिक्तं चेत्—अश्लेषवचनस्य सर्वसुकृतविषयतया कार्याश्लेषादननुष्ठेयता । यदा विद्यैव फलम्, तदा चाश्लेषवचनस्य विद्वत्संबन्ध्याश्रमधर्मव्यतिरिक्तविषयत्वेन कार्याश्लेषाभावादनुष्ठेयता । पूर्वपक्षमाह **इतरस्ये**त्यादिना ।

राद्धान्तस्तु **अग्निहोत्रादि त्वि**त्यादि । तर्हि सकृदनुष्ठेयमित्यत्र **विद्यायाश्चे**ति ।

यदि अग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्थाः; विद्योत्पत्तेः प्राचीनं च सुकृतम्, "यावत्संपात-मुषित्वा", "प्राप्यान्तं कर्मणः" इत्यनुभवेन विनष्टम्; भुक्तशिष्टं च प्रारब्धफलम्—"सुहृदः साधुकृत्याम्" इत्यस्य को विषयः। तत्राह—

अतोऽन्याऽपि ह्येकेषामुभयोः ॥ ४-१-१७ ॥

अतः—अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्त्यर्थाया अन्याऽपि—विद्याधिगमात् पूर्वोत्तरयो-रुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता संभवत्येव। तद्विषयमिदमेकेषां शाखिनां वचनम्, "तस्य पुत्रा दायमुपयन्ति; सुहृदः साधुकृत्याम्" इति। विद्यया अश्लेषविना-शश्रुतिश्च तद्विषया ॥ १७ ॥

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसंभवं पूर्वोक्तं स्मारयति—

यदेव विद्ययेति हि ॥ ४-१-१८ ॥

"यदेव विद्यया करोति तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्व-वचनेन अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि। अतो विदुषोऽनुष्ठित-प्रतिबद्धफलविषयम्, "सुहृदः साधुकृत्याम्" इति शाट्यायनिकम् ॥ १८ ॥ इति अग्निहोत्राद्यधिकरणम् ॥

---

उत्तरसूत्रस्य शङ्कामाह **यद्यग्निहोत्रादीति**। **सुहृदः साधुकृत्यामित्यस्य को विषय** इति। उत्तरपाप[1]कृत्यायाः प्रागभुक्तत्वात् प्रारब्धफलत्वाभावात् विद्यार्थत्वाभावाच्च 'द्विषन्तः पापकृत्याम्' इत्यस्योत्तराघं विषयः स्यादिति मत्वा **सुहृदः साधुकृत्यामित्यस्य को विषय** इत्युक्तम्।

**अतोऽन्यापि ह्येकेषामुभयोः** ॥ भुक्तं भुज्यमानं भोक्ष्यमाणं प्रतिबद्धफलं चेति विविधं कर्म। तत्र पूर्वकृतं पश्चाच्च वृष्ट्यन्नादिहेतोः कृतं प्रतिबद्धफलं कर्मास्ति। तद्विषया **सुहृदः साधुकृत्यामिति** श्रुतिः अश्लेषविनाशश्रुतिश्चेत्यर्थः ॥ १७ ॥

अनन्तरसूत्रसङ्गतिमाह **अनुष्ठितस्यापीति**। **पूर्वोक्तं स्मारयतीति**। 'पृथगृध्यप्रतिबन्धः फलम्' इति सूत्रेण कण्ठोक्तमत्र **स्मारयतीत्यर्थः**। **यदेव विद्ययेति हि** ॥ **सूच्यते हीति**। अयं **हिशब्दः** 'पृथगृध्यप्रतिबन्धः फलम्' इत्यत्र हिशब्दवन्नोपपत्तिप्रसिद्धिद्योतकः, किन्तूपपादितप्रसिद्धिद्योतकः।

**परे तु—तत्कार्यायेति** ज्ञानस्य यत्कार्यं मोक्षः तदर्थमिति व्याख्याय, ज्ञानकार्यस्य मोक्षस्य कर्मकार्यत्वं विद्योत्पत्तिद्वारेणेत्यौपचारिकमिति वदन्ति। ततो वरं ज्ञानाख्यकार्यायेति व्याख्यानम्। 'उत्पन्ने सम्यग्दर्शने विदुषः शास्त्रवश्यत्वाभावात् विद्यायाः प्रागनुष्ठितकर्मविषयं तत्कार्यार्थत्वाभिधानम्। यद्वा सगुणविद्यासु कर्तृत्वानतिवृत्तेर्विद्योत्पत्तावपि तस्याग्निहोत्रादिसंभवात् तद्विषयम्' इति चाहुः। तदपि सम्यग्दर्शनवतामपि प्रत्यहमन्तःकरणशुद्ध्यर्थमग्निहोत्रादेरनुवर्तनीयतायाः, 'स खल्वेवं वर्तयन् यावदायुषम्' इति श्रुतिसिद्धत्वात् सगुणनिर्गुणविद्याविभागस्याप्रामाणिकत्वाच्चानुपपन्नम्। **अतोऽन्यापि** इति साधुकृत्यावाक्यं काम्यविषयमित्याहुः।

**यदेव विद्ययेति** सूत्रमधिकरणान्तरमाहुः। 'तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद' इत्युद्गीथादिविद्यासंयुक्तमसंयुक्तं च कर्म। तत्र विद्यासंयुक्तं कर्म प्रकृष्टम्। ब्राह्मणाय दद्यादित्युक्तत्वेऽपि, 'विद्यां व्रत(वृत्त)वते दद्यान्न मूर्खाय' इति विशिष्टविषयत्वसिद्धिवत्, यज्ञेनेत्यविशेषेणोक्तेऽपि विद्यासंयुक्तविशिष्ट-

---

1 उत्तरपापेति। प्रामादिकोत्तरपापेत्यर्थः स्यात्।

कर्मविषयत्वसिद्धेर्विद्यासंयुक्तकर्मण एव ज्ञानार्थत्वमिति पूर्वपक्षं कृत्वा—'तदेव वीर्यवत्तरम्' इति श्रवणात् विद्याविधुरस्य वीर्यवत्त्वमात्रं गम्यत इति तावदुपकारहेतुत्वादविशेषेणासंयुक्तमपि कर्म ज्ञानार्थमनुष्ठेयमिति सिद्धान्तयन्ति ॥ तदयुक्तम्; यज्ञेनेत्यविशेषश्रवणाद्वेदानुवचनदानादीनामिव विद्याविधुरस्य यज्ञस्य ज्ञानार्थत्वप्रतीतेः। यज्ञस्यैव ब्रह्माश्रयोपासनम्; न दानादेः॥ ब्राह्मणायेत्युक्तेऽपि विलक्षणपात्रसिद्धिवदित्यप्ययुक्तम्। 'दानमश्रोत्रिये यथा', 'अश्रोत्रिये श्राद्धमधीतमव्रतम्' इत्यादिनिषेधवचनान्तरवासितमनस्कस्य तदैकार्थ्याद्विशेषविषयत्वप्रतीतिः; न तु वचनान्तरनिरपेक्षा। इह तु वाक्यान्तरेण विद्याविधुरयज्ञस्य ज्ञानार्थत्वप्रतिषेधादर्शनात् यज्ञविशेषविषयप्रतीत्यभाव एव। यथा 'स्वर्गकामो यजेत', 'यज्ञेन देवेभ्यः' इत्यादिषु विद्यासंयुक्तयज्ञाप्रतीतिः। अतः पूर्वपक्षानुत्थानादनारम्भणीयतैव।

**अपरे तु—तत्कार्याय**—अपवर्गायेति समुच्चयपरमाहुः। तदयुक्तम्; ज्ञानकर्मसमुच्चयस्याप्रामाणिकत्वात्। ते च, **यदेव विद्ययेति** सूत्रमुपैक्षिषत। तदयुक्तम्; यदा परोक्तयोजनैव स्यात्, तदा ह्यानर्थक्यम्। प्रतिबद्धकर्मद्योतनरूपप्रयोजनसद्भावात्परेषां मतिमान्द्यमेव तेन द्योतितम्।

समुच्चयाप्रामाणिकत्वदोषोऽन्येषामपि तुल्यः। **अन्ये तु**—विद्यासहकारिणां कर्मणां विद्यया प्रहाणसंभावनाया एवाभावात् विद्याधिगमात् प्राक् जन्मान्तरे चानुष्ठितकाम्यव्यतिरिक्तनित्यनैमित्तिककर्मविषयमिदमधिकरणं व्याचक्षते। राजनियोगानुष्ठायिनां संमाननाप्राप्तिवत् स्वाधिकारार्थानामप्यग्निहोत्रादीनामपवर्गोऽ(र्गा ?)वान्तरफलं भवतीत्यप्रहाणमिति सिद्धान्तयन्ति। 'य आत्मानमेव लोकमुपास्ते, न हास्य कर्म क्षीयते' इति वचनमत्र प्रमाणयन्ति। 'यस्य तु खलु संस्काराणामेकदेशोऽपि अष्टावात्मगुणाः, अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' इति गर्भसंस्कारादेरपवर्गार्थत्वविषयस्मृत्युपबृंहितत्वात् प्रागनुष्ठितस्यापवर्गार्थत्वसिद्धिरिति ॥ तदयुक्तम्—उदाहृतवचनस्य विद्याधिगमात् प्रागनुष्ठितकर्मविषयत्वे स्वरसतः प्रामाण्याभावात्; कथंचिदापाद्यमानस्यानुपपन्नत्वाच्च। कर्तृत्वममताफलविषयत्रिविधत्यागाभावे कर्मणोऽपवर्गार्थत्वायोगाद्वेदान्तज्ञानात् पूर्वं त्रिविधपरित्यागानुपपत्तेश्च तदाऽनुष्ठितस्यापवर्गार्थत्वायोगात् ॥ विद्यासहकारिणां कथं विद्यया प्रहाणाशङ्केति चेन्न; अश्लेषविनाशश्रुतिबलेन विद्यासहकारित्वनिश्चयस्य प्रतिबद्धत्वात् तद्विषयश्रुतेरर्थवादत्वाश्रयणोपपत्तेः। परविद्याकार्यमपि जनयन्ति यज्ञादयः, किंपुनः स्वर्गमिति हि स्तोतुं शक्यम्। अतः प्रागनुष्ठितविषयत्वमनादृत्य विद्वत्सम्बन्धाश्रमधर्मविषयत्वाश्रयणं युक्तम्।

**अतोऽन्यापीति** सूत्रेण प्रहाणवचनं विनियोगवचनं च काम्यविषयमित्युक्ते, मोक्षार्थं कर्म तु न प्रहीयते, किं त्वाब्रह्मलयात् तमनुगच्छति। एवं काम्यानि विज्ञानानि च देहान्ते प्रहीयन्ते, नित्यानि विज्ञानानि विद्वांसमनुगच्छन्ति' इति कर्मसु ज्ञानेषु च विभागमुक्त्वा—नित्यानि विज्ञानानि न सन्तीति शङ्कामापाद्य, तत्परिहारपरं **यदेव विद्ययेति** सूत्रं व्याचक्षते। कर्मसमृद्ध्यर्थं विज्ञानं हि विहितम्। तत्र काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयते, मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छतीति ॥ अत्र ब्रूमः—मोक्षार्थं कर्म विद्वांसमनुगच्छतीत्येतत् मुमुक्षोश्चरमदेहपाते, उत तद्व्यतिरिक्तदेहपाते। प्रथमे कल्पे नायं विभागः—ज्ञानकर्मसमुच्चयस्य निरस्ततया विद्योत्पादनमात्रचरितार्थस्य कर्मणो मोक्षार्थमनुगत्यनुपपत्तेः, द्वितीये तु—कृत्स्नसुकृतदुष्कृतप्रहाणाभावात् काम्यं कर्म प्रहीयते, मोक्षार्थमनुगच्छतीति विभागोऽनुपपन्नः। यतः कर्मणां

इतरक्षपणाधिकरणम् । ४-१-११

भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ ४-१ १९ ॥

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियमः इति संशये—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये" इति तच्छरीरविमोक्षावसानत्वश्रवणात् तदवसाने इति प्राप्ते उच्यते—भोगेन तु--इति। तुशब्दः पक्षव्यावृत्त्यर्थः। इतरे--आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयि तत्फलभोगसमाप्त्यनन्तरं ब्रह्म संपद्यते। ते च पुण्यपापे एकशरीरोपभोग्यफले चेत्, तच्छरीरावसाने संपद्यते। अनेकशरीरोपभोग्यफले चेत्--तदवसाने संपद्यते; भोगेनैव च क्षपयितव्यत्वादारब्धफलयोः कर्मणोः। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च भोगेन तयोः कर्मणोर्विमोक्ष उच्यते; देहावधिनियमाश्रवणात्।

तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमानारब्धफलं पुण्यपापरूपं कर्म अनादिकालेसञ्चित-

---

विद्याङ्गत्वमेव, न मोक्षार्थत्वम्—अत एव—मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति, काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयत इति च विभागोऽनुपपन्नः ॥ ननु मुमुक्षोश्चरमेतरदेहपातेऽपि विद्याङ्गकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति, इतरत् प्रहीयत इति विभागपरं सूत्रं स्यादिति चेत्—चरमदेहपातात् पूर्वमशेषसुकृतदुष्कृतप्रहाणाभावेन सुकृतसमृद्ध्यर्थज्ञानस्यापि प्रहाणायोगात्। उपकार्यानुगमाननुगमानुगुणौ हि उपकारकानुगमाननुगमौ। अत एव हि मोक्षार्थकर्मसमृद्ध्यर्थविज्ञानानुगमस्त्वयोत्प्रेक्ष्यते। अतः प्रतिबद्धफलसाधुकृत्योपपादनमाकाङ्क्षितमिति तत्परत्वमेव सूत्रस्य युक्तम् ॥ १८ ॥ इति अग्निहोत्राद्यधिकरणम् ॥

**भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते** ॥ सङ्गतिः स्फुटा। आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने देहान्तरावसाने वेत्यनियमः; किं 'तस्य तावत्' इति वाक्यं विद्यायोनिशरीरावसानमवगमयति, उत शरीरमतन्त्रीकृत्य फलभोगावसानमवगमयतीति। प्रथमे विद्यायोनिशरीरावसानत्वम्; द्वितीये त्वनियमः।

पूर्वपक्षहेतुं परिहरति **तस्य तावदिति**। 'यावन्न विमोक्ष्ये' इत्यत्र देहस्तदवधिश्च न श्रुतौ। 'धूत्वा शरीरमकृतं कृतात्मा' इत्यत्र शरीरं श्रुतम्; अवधिस्तु न श्रुतः। **शरीरमिति** एकवचनमपि जातिविषयम्, 'अश्व इव रोमाणि विधूय पापम्' इति पूर्वखण्डस्थपापशब्दैकवचनवदित्यभिप्रायेण **देहावधिनियमाश्रवणादित्युक्तम्**।

अस्मिन् पादे बह्वधिकरणोक्तार्थस्य सुमहत्वायाह **तदेवमिति**।

**परे तु**—'अनारब्धकार्ये' इत्यत्र यत् व्यावर्तितम्, तस्य कर्मणः क्षयप्रकारं दर्शयतीदं सूत्रमित्याहुः। तत् प्रयोजनशून्यत्वादनादरणीयम्। अनारब्धकार्ययोर्ज्ञानदाह्यत्वेऽभिहिते तदितरयोर्हि भोगेन क्षयः स्फुटः। **अपरे तु**—कर्तृत्वस्याविद्यामूलत्वात् अविदुषश्चाविद्यानिवृत्तौ भोक्तृत्वासंभवात्, बहुशरीरप्रदैककर्मणो देहान्तरोपाधौ **तस्य तावदेवेति** श्रुतिवशेन भोगासंभवाच्च प्रारब्धस्यापि ज्ञानेनैव क्षय इति पूर्वपक्षं कृत्वा—**तस्य तावदित्यवशेषितस्य** कर्मणो ज्ञानदाह्यत्वायोगात् विदुषोऽपि सुखदुःखानुभवदर्शनेन प्रारब्धभोगानुगुणाविद्यालेशानुवृत्तेरभ्युपगन्तव्यत्वात्, **तस्य तावदिति** श्रुतेः प्रारब्धसर्वकर्म-

मनन्तं विद्यामाहात्म्याद्विनश्यति। विद्यारम्भोत्तरकालमनुष्ठितश्च न श्लिष्यति। तत्र पुण्यरूपं सर्वे विदुषः सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥ इति इतरक्षपणाधिकरणम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः।

श्रीरस्तु

---

क्षयावधिपरत्वोपपत्ते, अत एव प्रारब्धस्य देहान्तरोपाधौ ज्ञानदाह्यत्वाश्रयणायोगाच्च भोगेनैव क्षय इति सिद्धान्तयन्ति।

तदयुक्तम्—**अनारब्धकार्ये एवे**त्यत्र समर्थितत्वात्। **एव**कारार्थो हि प्रारब्धस्य ज्ञानादाह्यत्वम्। तच्च **तस्य ताव**दित्यवधिश्रवणेन समर्थितम् ॥ अविद्यापूर्वकत्वात् कर्तृत्वस्य, तदभावात् भोगानुपपत्तिः परिहरणीयेति चेत्—यदि सा परिहार्या, तर्हि तत्रैव परिहर्तव्या। इह सूत्रेऽपि तत्परिहारस्याऽऽभिप्रायिकत्वं वक्तव्यम्; तत तत्रैव वक्तुं युक्तम्; साध्यसिद्ध्युपयोगस्याविशिष्टतया तदौपयिकार्थानां तत्रैव वक्तव्यत्वात्। युक्तिरपि निर्मूला, 'जक्षत् क्रीडन् रममाणः' इति मुक्तौ परं ब्रह्म उपसंपन्नस्यापि कर्तृत्वश्रवणेन तस्याविद्यापूर्वकत्वाभावात्। कर्मफलभोगादिकर्तृत्वं चौपाधिकमिति, पूर्वपक्षयुक्तेर्निर्मूलतयाऽनारम्भणीयता। अतः **अनारब्धकार्ये** इत्यत्र प्रारब्धस्य भोगविनाश्यत्वे सिद्धे तदवधेरेव चिन्तनीयत्वं युक्तम्।

**अन्ये तु**—एकस्यापि कर्मणो बहुशरीरप्रदत्वसंभवात् **तस्य ताव**दित्यस्य कर्मक्षयावधिपरत्वोपपत्तेः व्यासादीनां पुनर्जन्मदर्शनाच्च विद्यायोनिशरीरावसानत्वनियमाभावं पूर्वपक्षीकृत्य—विद्यायोनिशरीरावसाने प्रारब्धस्यापि कर्मणो विरतव्यापारत्वात् विरतव्यापारस्यानारब्धतुल्यत्वेन विद्याविनाश्यत्वात्, **तस्य ताव**दिति वाक्यस्य तद्देहावधिविषयत्वोपपत्तेः व्यासादीनामाधिकारिकत्वादविरतव्यापारेण पूर्वकर्मणैव बहुशरीरग्रहणोपपत्तेश्च विद्यायोनिशरीरावसानत्वं सिद्धान्तयन्ति ॥ तदयुक्तम्; विद्यायोनिशरीरपाते प्रारब्धकर्मणो विरतव्यापारत्वे प्रमाणाभावात्। प्रत्युत व्यासादीनां बहुदेहपरिग्रहस्तद्विरुद्ध उपलभ्यते। तेषां कर्मणोऽविरतव्यापारत्वे संपतिपन्ने तदितरेषामेकस्मिन् विद्यायोनिदेहान्त एव विरतव्यापारत्वे किं प्रमाणम्? **तस्यताव**दिति श्रुतेस्त्ववधिविशेषाश्रवणात् तद्देहपातावधिपरत्वमनुपपन्नम्। न हि, 'विद्यायोनेः शरीरात् यावन्न विमोक्ष्ये' इति श्रूयते। तस्माद्विद्यायोनिशरीरावसानत्वनियमाभाव एव सिद्धान्तीकर्तव्यः ॥ १६ ॥ इति इतरक्षपणाधिकरणम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्य—हृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां चतुर्थस्याध्यायस्य प्रथमः पादः ॥

शुभमस्तु

श्रीमते रामानुजाय नमः

# श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

## चतुर्थाध्याये द्वितीयः पादः ।

### वागधिकरणम् ४-२-१

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४-२-१ ॥

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमं तावत् उत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायते--"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्" इति । अत्र "वाङ्मनसि संपद्यते" इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया, उत वाग्विषयेति विशये—वृत्तिमात्रविषयेति युक्तम् । कुतः । मनसो वाक्प्रकृतित्वाभावात् तत्र वाक्स्वरूपसम्पत्त्यसंभवात् । वागादिवृत्तीनां मनोधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथंचिदुपपद्यत इत्येवं प्राप्ते—

अभिधीयते--वाङ्मनसि--इति । वाक्स्वरूपमेव मनसि संपद्यते । कुतः । दर्शनात् । दृश्यते हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः । वृत्तिमात्रसम्पत्त्याऽपि तदुपपद्यत इति चेत्--

---

श्रीः ४-२

**वाङ्मनसि दर्शनाच्छब्दाच्च** ॥ शरीरस्थितिसमये यत् विद्याफलम्, तदुक्तम् । अथ गत्युपक्रमश्चिन्त्यत इति पादसङ्गतिः । **गतेरुपक्रमः** उत्क्रान्तिः । सा चिन्त्यते—किमियं संपत्तिः वाग्वृत्तिविषया उत वाक्स्वरूपविषयेति ; किं वाक्शब्दस्य मुख्यार्थपरिग्रह उपपन्नः, नेति ; किमियं संपत्तिर्लयरूपा उत व्यापारनिवृत्तिपूर्वकसंयोगरूपेति ; इन्द्रियान्तरसम्पत्तिवचनं किं लयपरत्वेऽप्युपपद्यते, उत संयोगपरत्व एवेति । यदा लयपरत्वेऽप्युपपद्यते, तदा सम्पत्तेर्लयरूपतया वाक्छब्दस्य मुख्यार्थपरिग्रहायोगात् सम्पत्तिर्वृत्तिविषया स्यात् । यदा संयोगपरत्व एवोपपत्तिः, तदा सम्पत्तेः संयोगरूपत्वेन वाक्छब्दस्य मुख्यार्थत्वात् संपत्तिः स्वरूपविषया स्यात् । **कुत** इत्यादि । कारणे हि लयः । न वाचो मनः कारणम् । तत्प्रवृत्तेरेव कारणं मन इति वृत्तिविषया संपत्तिरित्यर्थः । वाग्वृत्तेर्हि वाक् आश्रयभूता ; न मनः ; अतस्तद्वृत्तिहेतुत्वरूपव्यापारस्य मनसि लय इत्यस्वारस्याभिप्रायेण **कथञ्चि**दित्युक्तम् ।

**वाक् मनसी**ति । **वाक्छब्दस्य** वृत्तिपरत्वे लक्षणा स्यात् । स्वरूपपरत्वे तु न लक्षणा । सम्पत्तिशब्दो लयवाची, संयोगवाची च ॥ लयवाचित्वे प्रसिद्धिप्राचुर्यात् संयोगवाचित्वमस्वरसमिति चेत्, पूर्वपक्षिणोऽपि लयवाचित्वमयुक्तम् । उपादाने हि लयः । वाग्वृत्तेर्वागेवोपादानम् ; मनस्तु निमित्तम् । एवं **वाक्छब्दसम्प**त्तिशब्दयोरुभयोरपि लाक्षणिकत्व-अस्वारस्यप्रसङ्गः पूर्वपक्षे । अस्माकं तु संपत्तिशब्दास्वारस्यमेव, न वाक्छब्दलक्षणेति विशेष इत्यर्थः । **दृश्यते ही**ति । प्रवृत्तव्यापारं मनः, निवृत्तव्यापारं वागिन्द्रियम् । तत्र प्रवृत्तस्वकार्ये मनसि निवृत्तस्वकार्यं वागिन्द्रियमन्तर्गतं भवितुमर्हति, यथा प्रवृत्तस्वकार्ये दारुणि निवृत्तस्वकार्योऽग्निरन्तर्भूत इति भावः । **वृत्तिमात्रे**ति । यत् यत् निवृत्तस्वकार्यं

तत्राह--शब्दाच्चेति । "वाङ्मनसि संपद्यते" इति वाक्स्वरूपसंपत्तावेव हि शब्दः, न वृत्तिमात्र-संपत्तौ । न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते ; येन वृत्तिमात्रं (त्वमेव) संपद्यत इत्युच्येत । यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि संपत्तिर्नोपपद्यत इति ; तत् 'वाङ्मनसि सम्पद्यते' इति वचनात्—मनसा वाक् संयुज्यते, न तु तत्र लीयत इति परिहर्तव्यम् ॥ १ ॥

अत एव सर्वाण्यनु ॥ ४-२-२ ॥

यतो वाचो मनसा संयोगमात्रं सम्पत्तिः, न तु लयः—अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि संपत्तिश्रुतिरुपपद्यते, "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति ॥ २॥

इति वागधिकरणम् ॥

मनोधिकरणम् । ४-२-२

तन्मनः प्राण उत्तरात् ॥ ४-२-३ ॥

तत्= सर्वेन्द्रियसंयुक्तं मनः प्राणे संपद्यते—प्राणेन संयुज्यते ; न मनोवृत्तिमात्रम् । कुतः । उत्तरात्—'मनः प्राणे' इति वाक्यात् ।

अधिकाशङ्का तु—"अन्नमयं हि सोम्य मनः" इति वचनान्मनसोऽन्नप्रकृतिकत्वमवगम्यते । अन्नस्य च, "ता अन्नमसृजन्त" इत्यम्मयत्वं सिद्धम् । "आपोमयः प्राणः" इति चाप्प्रकृतित्वं प्राणस्यावगम्यते । अतः, 'मनः प्राणे संपद्यते' इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता अपो निर्दिश्य तासु मनःसंपत्तिप्रतिपादने परम्परया स्वकारणे लय इति संपत्तिवचनमुपपन्नं भवति—इति ।

परिहारस्तु—"अन्नमयं हि सोम्य मनः, आपोमयः प्राणः" इति मनःप्राणयोरन्नेनाद्भिश्चाप्या-यनमुच्यते; न तत्प्रकृतित्वम् ; आहङ्कारिकत्वान्मनसः, आकाशविकारत्वाच्च प्राणस्य । प्राणशब्देन अपां लक्षणा च स्यादिति ॥ ३ ॥ इति मनोधिकरणम् ॥

---

तत्तत् प्रवृत्तस्वकार्येऽन्तर्गतं भवतीति न व्याप्तिरस्ति । अतो वृत्तिमात्रसंपत्त्याऽपि वागिन्द्रियोपरमे मनःप्रवृत्तिदर्शनमुपपद्यत इत्यर्थः । **दर्शनाच्छब्दाच्चेति** द्वयमप्येको हेतुः ॥ १ ॥

**अत एव सर्वाण्यनु** ॥ **वाचमनु**—वाचः [1]पश्चादित्यर्थः ॥ २ ॥ इति वागधिकरणम् ॥

**तन्मनः प्राणे उत्तरात्** ॥ सङ्गतिः स्फुटा । किमत्र मनसो लय उच्यते, उत संयोगः ; किमत्र प्राण इति अपां निर्देशः उत प्राणस्यैव ; 'आपोमयः' इति वाक्यं किं प्रकृतिविकारभावपरम्, उताप्यायनपरम् । प्रकृतिविकारपरत्वे, प्राण इत्यपां निर्देशात् संपत्तिर्लयः स्यात् । आप्यायनपरत्वे, प्राणस्यैव निर्देशात् संपत्तिः संयोगः स्यात् । तच्छब्दं व्याचष्टे **सर्वेन्द्रियेति** । **अधिकाशङ्केत्यादि** । **परम्परया स्वकारणे लय** इति । स्वकारणपृथिवीद्वारेणान्नमयस्य मनसः प्राणशब्दलक्षितासु अप्सु लय इत्यर्थः ।

परिहरति **परिहारस्त्विति** ।

**परे तु**—श्रुतिलक्षणाविशये श्रुतेर्बलीयस्त्वात् वागेव सम्पद्यत इति पूर्वपक्षं कृत्वा, वाचो मनःप्रकृतिकत्वाभावेन तत्र तल्लयायोगात् पार्थिवेन्धनजन्याया अग्निवृत्तेरप्सु उपशमदर्शनेन वृत्त्युद्भवाभि

---

1 इन्द्रियाणां युगपत्संपत्तावपि पश्चादित्युक्तिः वाङ्मनसीत्यत्र सर्वेन्द्रियसंपत्तिबोधस्य पश्चाद्भावात् सूत्रं तल्लक्षणापरमित्याशयेन । वाक् संपद्यत इति प्रथमः श्रुतावापातबोधः । पश्चाच्च वाक्पदलक्षणया, सर्वाण्यपि संपद्यन्त इति बोधः । लक्षणाग्राहकम् इन्द्रियैर्मनसीति वचनम् ।

भवयोः प्रकृतिसमाश्रयत्वासम्भवाच्च (अप्रकृतिसमाश्रयत्वसंभवाच्च ?) **वाग्वृत्तिर्मनसि** संपद्यते, एवमेवेन्द्रियान्तरवृत्तिर्मनसि संपद्यत इति सिद्धान्तयन्ति । **शब्दात्** इति वाक्छब्दस्यापि वृत्त्यभेदोपचारादुपपत्तेरिति व्याचक्षते ।

तदयुक्तम् ; सौत्रयोर्वाक्छब्दशब्दशब्दयोर्वृत्त्युपपत्तिपरत्वे लाक्षणिकत्वप्रसङ्गात् । अर्थविरोधाच्च । अर्थविरोधश्च श्रुतिस्वारस्यहान्याधिक्यरूपः । वाक्छब्दस्य वृत्तिपरत्वम्, मनसीति सप्तम्या निरर्थकत्वम्, लयवाचिनः संपत्तिशब्दस्योपशमपरत्वं च । स्वावस्थाप्रहाणेन कारणसंश्लेषो हि लयः; न तु उपशममात्रम् । जलसंसर्गो वह्निशान्तिहेतुः; न स्थानम् । अभिज्वलनाभावो ह्यग्न्यवयवाश्रयः, अम्भसोक्षिते दहने सति अम्भसा शाम्यतीति ह्युच्यते ; न त्वम्भसि शाम्यतीति । बहुजलप्रक्षिप्तेऽप्यग्नौ तच्छान्तिहेतुरेव जलम् ; न त्वभिज्वलनाभावाधिकरणम् । बहुसलिलस्याङ्गाराधिकरणतया विवेकाभावात् निरिन्धनोऽप्सु शाम्यतीति व्यवहारः । अतः श्रुतिस्वारस्यभङ्गाधिक्यम् । अस्माकं तु संपत्तिशब्दास्वारस्यमात्रमेवेति अस्मत्पक्ष एवोपपन्नः । **तन्मनःप्राण** इत्यनन्तराधिकरणस्यापि मनोवृत्तिलयपरत्वमुक्तदोषग्रस्तम् ।

**अपरे**ऽप्यस्मिन्नधिकरणे तुल्याभिप्रायाः, तुल्यप्रतिक्षेपाश्च ; हेतुवैषम्यमेव । ब्रह्मणि लयश्रुतिविरोधात् अविदुषोऽपि देहान्तरप्रतिपत्तौ करणानु(णानु ?)वृत्त्यनुपपत्तेश्च वाग्वृत्तिलय इति । तत्राद्यो हेतुरयुक्तः । तथा हि—मनसि वाग्वृत्तिलयश्चेत्, ब्रह्मणि सर्ववस्तुलयश्रुतिविरोधः । मनसो ब्रह्माभिन्नत्वादविरोधश्चेत् —स्वरूपलयेऽपि तुल्यम् । द्वितीयस्तु स्वरूपलयाभावहेतुत्वादस्मत्पक्षानुगुणः ।

**अन्ये तु**—वागादिबाह्येन्द्रियाणां मनस्येव लयः उतान्यत्रेति विचार्य मनःशब्दलक्षिते अहङ्कारे लय इति पूर्वपक्षं कृत्वा—संपत्तिशब्देन वृत्तिविलोपाय संयोगस्य विवक्षितत्वात् मनस्येव सम्पत्तिरिति सिद्धान्तयन्ति । **तन्मन** इति—प्राणशब्दलक्षिते अहङ्कारे मनसो लय इत्याशङ्क्य पूर्ववत् सिद्धान्तयन्ति । मुख्यप्राणे मनःसंश्लेषश्चेत्, सहोत्क्रान्तिर्वाच्या, न तु पश्चात् । सर्वे प्राणा अनूत्क्रामन्तीति पश्चादुत्क्रान्तिश्रवणात् सर्वेन्द्रियसंयुक्तस्य मनसो न प्राणसंयोग इत्यधिकाशङ्कामुक्त्वा—**अनुर्न** पश्चाद्भावपरः, किंतु तृतीयार्थे कर्मप्रवचनीयः, तस्मात सहोत्क्रामतीत्यधिकं परिहारमाहुः । तत्र विचारस्य संपत्तिस्थानविषयत्वादपि संपद्यमानवस्तुविषयत्वमुचितम् ; 'आकाशाद्वायुर्वायोरग्निरग्नेरापः' इत्युत्पत्तिवचन इव संपत्तिवाक्येऽपि, 'वाङ् मनसि, मनः प्राणे, प्राणस्तेजसि' इति शृङ्खलितनिर्देशे पूर्वापरयोर्मनःशब्दयोः प्राणशब्दयोश्चार्थैक्यस्य स्वतःप्राप्तत्वेन अहङ्कारवाचित्वमनोवाचित्वाहङ्कारवाचित्वप्राणवाचित्वाश्रयणायोगात एकस्मिन्नर्थे ग्राह्ये, तत्रापि मुख्यार्थस्य स्वतःप्राप्तत्वात्, मनःप्राणशब्दयोरमुख्यैकरूपार्थस्वीकारे सति अहङ्कारपरत्वात् तयोरुत्तरवाक्यान्वयायोगात् मुख्यार्थः स्वतःप्राप्त इति (च?), यथाप्रसिद्धि अर्थे स्वीकृते सति क्रियमाणो विचारः संपद्यमानवस्तुविषय एव भवितुमर्हतीति ॥ पश्चादुत्क्रान्तिश्रवणमिन्द्रियाणां प्राणसंश्लेषबाधकमिति अधिकाशङ्का चानुपपन्ना । प्राणशब्दस्याहङ्कारपरत्वं पूर्वपक्षयतामनभिमतम् ; पूर्वपक्षविरुद्धत्वाच्छङ्कायाः । पूर्वपक्षसाधकयुक्त्याधिक्यमूला ह्यधिकाशङ्का । मनसोऽहङ्कारलीनत्वे मुख्यप्राणात् पृथगिन्द्रियोत्क्रमणं हि विरुध्यते । तस्माद्विचाराधिकशङ्के यथाभाष्यमेवोपपन्ने ॥ २ ॥ इति मनोधिकरणम् ॥

अध्यक्षाधिकरणम् । ४-२-३

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४-२-४ ॥**

यथा, "वाङ्मनसि संपद्यते मनः प्राणे" इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्तिः ॥ तथा प्राणस्तेजसीति वचनात् तेजस्येव प्राणः संपद्यते—

इति प्राप्ते उच्यते—सोऽध्यक्षे—इति । स प्राणः अध्यक्षे करणाधिपे जीवे संपद्यते । कुतः । तदुपगमादिभ्यः । प्राणस्य जीवोपगमस्तावच्छ्रूयते, "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति । तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति ॥ प्रतिष्ठा च जीवेन सह श्रूयते, "कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति । एवं जीवेन संयुज्य तेन सह तेजस्संपत्तिरिह, प्राणस्तेजसीत्युच्यते ; यथा यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुद्ध्यते, तद्वत् ॥ ४ ॥

इति अध्यक्षाधिकरणम् ॥

भूताधिकरणम् ४-२-४

**भूतेषु तच्छ्रुतेः ॥ ४-२-५ ॥**

---

**सोऽध्यक्षे तदुपगमादिभ्यः ॥** सङ्गतिः स्फुटा । किं प्राणस्तेजसि संपद्यते, उत जीवे ; किं प्राणस्तेजसीति वाक्यं जीवसंपत्तिपूर्वकतेजस्सम्पत्तिपरम्, उत केवलतेजस्संपत्तिपरम् ; जीवसंपत्तिपरत्वे प्राणस्तेजसीति वाक्यस्वारस्यं हीयते, नेति । हीयते चेत्, वाक्यस्य केवलतेजःसंपत्तिपरत्वान्न जीवे संपत्तिः । न हीयते चेत्, जीवसंपत्तिपूर्वकतेजःसम्पत्तिपरत्वाद्वाक्यस्य प्राणस्य जीवे संपत्तिः । **यथेत्यादि । उपगमः**—संबन्धः ॥ तेजश्शब्देन[1] भूतसूक्ष्मांशाः(शकाः) विवक्षिताः । **आदि**शब्दविवक्षितार्थमाह **तथे**ति । अन्येन संयुज्य पदार्थान्तरसंबन्धेऽप्यन्यतरवाचिशब्दनिर्देशे दृष्टान्तमाह **यथे**ति ।

**इतरे त्रयोऽपि** अश्रुतत्वादिति पूर्वपक्षहेतुमाहुः । अतिरिक्तहेतौ संभवति अश्रवणमात्रस्य हेतुत्वायोगादग्न्यप्रायन्यायो भाष्ये दर्शितः । सिद्धान्ते च स्रुघ्नात् पाटलिपुत्रगमनस्य मथुराव्यवधानेऽपि स्रुघ्नात् पाटलिपुत्रगमनव्यवहारो दृष्टान्तितः । ततोऽपि गङ्गासाहित्यकण्ठोक्तिरहितयमुनासागरगमनव्यवहारदृष्टान्त उचितः ; पाटलिपुत्रगमने स्रुघ्नमथुरयोः सहगमनाभावात्, इह तु सहगमनसद्भावात् । गङ्गास्थानीयजीवापेक्षया यमुनास्थानीयस्य **प्राणस्य** गुणभावाच्च ॥ सहावस्थानस्य श्रुतिं 'सविज्ञानो भवति' इत्युदाहरन्ति—विज्ञायतेऽनेनेति व्युत्पत्त्या **विज्ञानानी**न्द्रियाणि । सेन्द्रिय इत्यर्थः । तस्याविशदार्थत्वात प्रतिष्ठाविषयश्रुत्यन्तरमुदाहृतं भाष्ये ॥ ४ ॥

**भूतेषु तच्छ्रुतेः ॥** सङ्गतिः स्फुटा । किमत्र भूतान्तरसंसृष्टतेजस्संयोगः, उत तेजोमात्रसंयोग इति ; किं तेजश्शब्दस्तेजोमात्रपरः, उत भूतान्तरसंसृष्टपरः ; किं 'पृथिवीमय आपोमयः' इत्यादिवाक्यं

---

1 यथेत्यादि वाक्य एव भाष्ये तेजश्शब्दसत्त्वात् तेजश्शब्दव्याख्यानं प्राक्, उपगमपदव्याख्यानं पश्चादिति युक्तम् भा० प्र० । यद्वा भाष्यव्याख्यारम्भज्ञापनाय यथेत्यादीतिप्रतीकमादारणम् । सिद्धान्ते तेजश्शब्दस्याध्यक्षलक्षकत्वमध्यक्षपर्यन्तत्वं वा नेति ज्ञापनायान्ते प्रकृततेजश्शब्दार्थवर्णनमिति भाव्यम् ।

"प्राणस्तेजसि" इति जीवसंयुक्तस्य प्राणस्य तेजसि संपत्तिरुक्ता ; सा संपत्तिः किं तेजोमात्रे उत संहतेषु सर्वेषु भूतेष्विति विशये, तेजोमात्रश्रवणात् तेजसि इति प्राप्ते—उच्यते भूतेषु—इति। भूतेषु संपद्यते। कुतः। तच्छ्रुतेः—"पृथिवीमय आपोमयः तेजोमयः" इति जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः ॥ ५ ॥

ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण संपत्तावपि 'पृथिवीमयः' इत्यादिका श्रुतिरुपपद्यते। अत आह—

**नैकस्मिन् दर्शयतो हि ॥ ४-२-६ ॥**

नैकस्मिन् ; एकैकस्य कार्याक्षमत्वात्। दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती—

"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति—नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते—"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः। समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महादाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति। अतः 'प्राणस्तेजसि' इति तेजश्शब्देन भूतान्तर-

---

युगपदनेकभूतसंसर्गं दर्शयति, नेति ; किं त्रिवृत्करणश्रुतिः पञ्चीकरणस्मृतिश्च संहतानामेव कार्यसामर्थ्यं दर्शयतः, नेति। न चेत्—'पृथिवीमयः' इत्यादिना यौगपद्यप्रदर्शनाभावेन तेजश्शब्दस्य तेजोमात्रपरतया तेजोमात्रसंयोगः स्यात्। दर्शयतश्चेत्—पृथिवीमयत्वादिश्रुत्या युगपदनेकभूतसंसर्ग-प्रदर्शनेन तेजश्शब्दस्य भूतान्तरसंसृष्टतेजःपरतया भूतान्तरसंसृष्टतेजस्संयोगः स्यात्। **सर्वभूतमयत्व-श्रुतेरि**ति। भूतमात्रे शक्तेऽपि सामर्थ्यात् भूतमयत्वपरामर्शित्वसिद्धिः **तच्छब्दस्य**[1] फलितेति भावः ॥५॥

अनन्तरसूत्रशङ्कामाह **नन्विति**। **नैकस्मिन् दर्शयतो हि** ॥ पञ्चीकृतेषु त्रिवृत्कृतेषु वा भूतेष्वेकैकमेम कार्यसमर्थम् ; न त्वत्रिवृत्कृतमेकैकं कार्यसमर्थम् ; 'आपः पुरुषवचसो भवन्ति' इत्यत्र त्रिवृत्कृतानामेवापां कार्यकरत्वदर्शनात्। अजहल्लक्षणया तेजशब्दस्त्रिवृत्कृतान् भूतसूक्ष्मांशानाह।

अत्र **परे चापरे च—नैकस्मिन्नि**ति सूत्रान्तमेकमधिकरणं वर्णयन्ति। कथं तर्हि प्राणस्तेजसीति श्रुतिरित्यपेक्षायां तन्निर्वाहार्थं **भूतेषु तच्छ्रुतेरि**ति सूत्रम्। सः प्राणसंपृक्तोऽध्यक्षः तेजः-सचिवभूतेषु वर्तत इत्यवगन्तव्यम् ; **तच्छ्रुतेः**—प्राणस्तेजसीति श्रुतेरिति व्याख्याय, तावता प्राणस्य साक्षात्तेजःप्राप्तिश्रुतिविरोधस्यापरिहृतत्वात् स्रुघ्नपाटलिपुत्रदृष्टान्तेन विरोधं शमयन्ति। एकमेव तेजः श्रूयते, न भूतान्तरमित्यपेक्षायां **नैकस्मिन्नि**ति सूत्रमवतारयन्ति। **दर्शयतः** प्रश्नप्रतिवचने 'आपः

---

1 तन्मयत्वपरपदाभावेपि सौत्रस्य तच्छब्दस्येत्यर्थः। ननु तेजश्शब्दो भामतीरीत्या विशिष्ट-जीवपरोऽस्तु। तत् प्राणविशिष्टजीवस्य भूतेषु संपत्तिवचनं कथम्। श्रद्धां जुह्वतीत्यत्रेव युक्तं जीव-परत्वं तेजश्शब्दस्य। उच्यते। आदौ, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति प्राणादिविशिष्टमात्मानं जीवशब्देन निर्दिश्य तस्य भूतप्रवेशवर्णनात् सैव रीतिः सर्वत्र। तथा, एनं सर्वे प्राणा अभिसमायान्तीति पूर्वं जीवे सर्वप्राणसंबन्धमुक्त्वा पश्चादेव, 'स एतास्तेजोमात्राः समभ्याददानः' इति भूतसूक्ष्मग्रहणमुक्तं श्रुतौ। तेजोमात्राशब्दस्य भूतसूक्ष्मार्थकत्वमेव ४-२-१२ टीकोक्तम्। अत एव चक्षुर्मय इत्यादि प्रागुक्त्वा पश्चादेव पृथिवीमय इत्याद्युक्तिः। अतः प्रवेशपरवाक्ये तेजश्शब्दो न विशिष्टात्मपरः। प्रविष्टपाश्चात्यस्थितिपरत्वात्तु श्रद्धापदं विशिष्टवाचीति। अतः, सोऽध्यक्षे, भूतेषु इति सौत्रक्रम उपपन्नः।

संसृष्टमेव तेजोऽभिधीयते। अतो भूतेष्वेव संपत्तिः ॥ ६ ॥ इति भूताधिकरणम् ॥

आसृत्युपक्रमाधिकरणम्। ४-२-५

**समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४-२-७ ॥**

इयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, उताविदुष एवेति चिन्तायाम्—अविदुष एवेति प्राप्तम्। कुतः। विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात्। विदुषो ह्यत्रैवामृतत्वं श्राव्यते, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति।

एवं प्राप्तेऽभिधीयते—समाना चासृत्युपक्रमात्—इति। विदुषोऽप्यासृत्युपक्रमादुत्क्रान्तिः समाना। आसृत्युपक्रमात्—आगत्युपक्रमात्—नाडीप्रवेशात् प्रागित्यर्थः। विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते, "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका।

---

पुरुषवचसः' इति। [1]व्याख्यातं त्र्यात्मकत्वादिति। 'पृथिवीमय आपोमयः', 'अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः। ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः' इति श्रुतिस्मृती दर्शयत इति वेति ॥

भूतेष्विति सूत्रे दृष्टान्तस्य कण्ठोक्त्यभावादभिप्रायकल्पनायाम्, साक्षात्तेजःसम्पत्तिश्रुतिविरोधपरिहारो दृष्टान्ताभिप्रायकल्पनं च 'सोऽध्यक्षे' इति सूत्र एव कर्तुं युक्तम्; तत्र जीवसंपत्तिपरतायाः स्फुटत्वात् **भूतेष्वि**ति सूत्रे जीवसहितप्राणनिर्देशाभावात् भूतशब्दतद्गतबहुवचनस्वारस्येन सर्वभूतसंसर्गपरत्वस्य स्फुटत्वात्, तत्र च व्युदसनीयशङ्काभेदसद्भावात् अधिकरणभेदस्य न्याय्यत्वात् ॥ ननु **नैकस्मि**न्नित्यनेन पुनरुक्तिरिति चेन्न; तस्य च व्युदसनीयशङ्कान्तरस्योपन्यस्तत्वात्।

**अन्ये तु**—अधिकरणभेदं वर्णयन्त एव तच्छ्रुतेरिति प्राणस्तेजसीति श्रुतेरिति व्याचक्षते। तदयुक्तम्; तत्र तेजोमात्रश्रवणेन पूर्वपक्षबीजतया तन्निवारणक्षमत्वाभावात्। अतः पृथिवीमय इत्यादिश्रुतिरेव तत्रोदाहार्या। अतो **नैकस्मि**न्नित्यत्र त्रिवृत्करणपञ्चीकरणवाक्ये एवोदाहर्तव्ये। पञ्चाग्निविद्यावाक्यस्य दशार्धानामिति स्मृतेश्च पुनःसम्भवविषयतया विद्वदविदुषोः समानत्वाभावात् भाष्ये तदनादरः ॥ ६ ॥

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य** ॥ सङ्गतिः स्फुटा। किमियमुत्क्रान्तिर्विद्वदविदुषोः समाना; उताविदुष एवेति; 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रुतिः किं विदुष उत्क्रान्तिमवगमयति, नेति; किमेषा श्रुतिरिहामृतत्वश्रुत्युत्क्रान्तिनिषेधश्रुतिभ्यां व्याहन्यते, नेति; इहामृतत्वं किमघाश्लेषविनाशरूपम्, उत सर्वबन्धमोक्षरूपम्; निषिध्यमाना चोत्क्रान्तिः किं शरीरापादाना; उत शारीरापादानेति च। यदेहामृतत्वं सर्वबन्धनिर्मोक्षरूपम्, उत्क्रान्तिश्च शरीरापादाना, तदा तद्विषयश्रुतिभ्यां तयोर्ध्वमायन्निति श्रुतेर्व्याघातादविदुष एवोत्क्रान्तिः। यदेहामृतत्वमघाश्लेषविनाशरूपम्, निषिद्धोत्क्रान्तिश्च शारीरापादाना, तदा तद्विषयश्रुतिभ्याम् ऊर्ध्वमायन्निति श्रुतेरविरोधात् विदुषोऽप्युत्क्रान्तिं सा अवगमयतीत्युत्क्रान्तिर्विद्वदविदुषोः समाना स्यात्। पूर्वपक्षहेतुमाह **विदुष** इति।

---

1 'तद्व्याख्यातं त्र्यात्मकत्वात्तु भूयस्त्वादित्यत्र' इति शांकरम्। भा० प्र०।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात् प्राक्विशेषाश्रवणात् समाना । तत्प्रवेशदशायां च विशेषः श्रूयते, "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इति । "शतं चैका च हृदयस्य" इत्यनया श्रुत्या ऐकार्थ्यात् मूर्ध्नो निष्क्रमणं विद्वद्विषयम् ।

यदुक्तं विदुषोऽत्रैवामृतत्वं श्राव्यते इति—तत्रोच्यते—अमृतत्वं चानुपोष्येति । चशब्दोऽवधारणे । अनुपोष्य--शरीरेन्द्रियादिसंबन्धमदग्ध्वैव यत् अमृतत्वम्--उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते, तदुच्यते "यदा सर्वे प्रमुच्यन्ते" इत्यादिकया श्रुत्येत्यर्थः । "अत्र ब्रह्म समश्नुते" इति च उपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्रायः ॥ ७ ॥

**तदापीतेः संसारव्यपदेशात् ॥ ४-२-८ ॥**

अवश्यं च तत्--अमृतत्वमदग्धदेहसंबन्धस्यैवेति विज्ञेयम् । कुतः । आ अपीतेः संसारव्यपदेशात् । अपीतिरप्ययः ब्रह्मप्राप्तिः । सा चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते । आ तदवस्थाप्राप्तेः संसारः देहसंबन्धलक्षणो हि व्यपदिश्यते, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति, "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति च ॥ ८ ॥

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४-२-९ ॥**

इतश्च विदुषोऽपि बन्धो नात्र विदग्धः, यतः सूक्ष्मं शरीरमनुवर्तते । कुत इदमवगम्यते । प्रमाणतस्तथोपलब्धेः । उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः, "तं प्रतिब्रूयात्....सत्यं ब्रूयात्" इति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्तते । अतश्च बन्धो न दग्धः ॥ ९ ॥

**नोपमर्देनातः ॥ ४-२-१० ॥**

अतः, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति वचनं न बन्धोपमर्देनामृतत्वं वदति ॥ १० ॥

---

राद्धान्ते—**विष्वङ्ङिति** । अन्या नाड्यः विष्वग्वितताः । ताश्चामुमुक्षूणामुत्क्रमणार्था इत्यर्थः । **तेन प्रद्योतेन**—प्रकाशेन, 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति' इति पूर्वं श्रुतेः । मूर्ध्नो निष्क्रामत एव ऊर्ध्वया नाड्या प्रकाशितद्वारया निष्क्रमणमित्यर्थो वस्तुसामर्थ्यात् । **अनुपोष्य** । 'उष दाहे' इति धातुः ॥ ७ ॥

**तदापीतेः संसारव्यपदेशात् ॥** उत्क्रान्तस्यापि गच्छतः सूक्ष्मशरीरसंबन्धात् आ अपीतेः संसार इत्यभिप्रायः । ब्रह्मण. सर्वगतत्वादत्रैव हि ब्रह्म प्राप्तमिति शङ्काया व्यावृत्त्यर्थमाह **सा चार्चिरादिने**ति ॥ ८ ॥

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥** पूर्वसूत्राभिप्रेतसूक्ष्मशरीरसंबन्धे प्रमाणमिहोच्यते ॥ ९ ॥

**नोपमर्देनातः ॥** जीवन्मुक्तिनिराचिकीर्षातिशयादिदं सूत्रमुक्तम् । उपासनविधानात्, तस्याऽऽप्रयाणादनुवृत्तिश्रुतेः, उत्क्रान्तिश्रुतेः, अर्चिरादिमार्गश्रुतेः, देशविशेषप्राप्त्या सर्वबन्धविमोक्षश्रुतीनां बाधप्रसङ्गात्, प्रत्यक्षविरोधाच्च जीवन्मुक्तिरनुपपन्नेति भावः । तदुक्त भगवताऽऽ**पस्तम्बेन**, "वेदानिमं लोकममुञ्च परित्यज्याऽऽत्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणम् । इहैव न दुःखमुपलभेत" इति । **शास्त्रै**रिति बहुवचनेनानेकशास्त्रविरोधो विवक्षितः । **विप्रतिषिद्धं**—

**अस्यैव चोपपत्तेरूष्मा ॥ ४-२-११ ॥**

अस्य—सूक्ष्मशरीरस्य कचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्राक् ऊष्मा स्थूलशरीरे काचित्क उपलभ्यते । न च स्थूलस्यैव शरीरस्यायमूष्मा ; अन्यत्रानुपलब्धेः । ततश्चोष्मणः कचिदुपलब्धिर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते । तस्माद्विदुषोऽप्यामृत्युपक्रमात् समाना उत्क्रान्तिरिति सुष्ठूक्तम् ॥ ११ ॥

पुनरपि विदुष उत्क्रान्तिर्न संभवतीत्याशङ्क्य परिह्रियते—

**प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ ४-२-१२ ॥**

यदुक्तं विदुषोऽप्युत्क्रान्तिः समानेति, तन्नोपपद्यते विदुष उत्क्रान्तिप्रतिषेधात् ।

तथा हि—"स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वव(प)क्रामति" इत्युपक्रम्य "तेन प्रद्योतेनैष आत्मा निष्क्रामति । तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यविदुष उत्क्रान्तिप्रकारमभिधाय, "अन्यन्नवतरं कल्याणतरं रूपं कुरुते" इति देहान्तरपरिग्रहं चाभिधाय, "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे इति तु कामयमानः" इत्यविद्वद्विषयं परिसमाप्य, "अथाकामयमानः— योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्य प्राणा उत्क्रामन्ति ; ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिः प्रतिषिध्यते, तथा पूर्वत्र आर्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते, 'अप पुनर्मृत्युं जयति' इति विद्वांसं प्रस्तुत्य, "याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते, उदस्मात् प्राणाः क्रामन्त्याहो(न)" इति पृष्टः नेति होवाच

---

विशेषप्रतिषिद्धम् । प्रकरणसमवन्न समबलेन प्रतिरोधः; कालात्ययापदिष्टवदधिकबलेन विरोधः, अनेकशास्त्रविरोधादिति भावः ॥ १० ॥

**अस्यैव चोपपत्तेरूष्मा ॥** स्थूलशरीरस्योष्मा सार्वत्रिकः ; 'सन्तापयति स्वं देहमापादतलमस्तकम्' इति श्रुतेः । अत उत्क्रान्तौ काचित्क ऊष्मा सूक्ष्मशरीरस्य काचित्कत्वेन ; तत्रैव सर्वदेहव्याप्ताग्निशिखायाः क्रमेणोपसंह्रियमाणत्वादित्यर्थः ॥ ११ ॥

**पुनरपीति ।** पूर्वम् इहामृतत्वश्रुतिनिबन्धन उत्क्रान्त्यसंभवः परिहृतः । अथोत्क्रान्तिनिषेधश्रुतिनिबन्धनस्तदसंभवः परिह्रियत इत्यर्थः ।

**प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ यदुक्तमित्यादि । तेजोमात्राः**— भूतसूक्ष्मांशान् । **हृदयमेवान्वपक्रामति** हृदया[1]न्निष्क्रामतीत्यर्थः । **तेन प्रद्योतेने**त्यादिवाक्यस्य कथमविद्वदुत्क्रान्तिपरत्वमिति चेत्—उच्यते । चतुर्मुखलोकगन्तुरुपासकस्यार्चिरादिकां गतिं पूर्वपक्षी मन्यते ; न तु मुक्तस्य । तस्मादविदुष इत्युक्तं पूर्वपक्षे । सिद्धान्ते तु [2]विद्वद्विषयमेवेदं वाक्यम् । **'अकामयमानो योऽकामो निष्कामः'** इत्यत्र पुत्रवित्तविषयैषणात्रय[3]राहित्यं विवक्षितम् । **उदस्मात्**

---

1 अपक्रामतीति पाठम्, एवकारस्वारस्यञ्चावधार्यैवं व्याख्यातम् । हृदयमेव—यत्र स्थितस्तदेव—एकहृदयप्रदेशमेव गन्तुं ततो निष्क्रामतीति । अतो नोत्तरश्रुतिविरोधः ।

2 विद्वदविद्वदुभयविषयकत्वात् एवकार इह अयोगव्यवच्छेदपरः । अविद्वद्विषयं भवत्येवेत्यर्थः । 3 विषयपदेन लोकैषणेत्युक्तलोकपदार्थकथनम् । एवमेषणात्रयस्योक्तिः । अत्रपुत्रेत्यत्र अर्थपुत्रेति पाठदर्शनेन अर्थपदं लोकपरमिति भा० प्र० । तदा विषयेति षष्ठ्यर्थः ।

याज्ञवल्क्यः; अत्रैव समवलीयन्ते स उच्छ्वयत्याध्मायति आध्मातो मृतः शेते इति। अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्—

तन्न। शारीरात् प्रत्यगात्मनः प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते, न शरीरात्। 'न तस्य प्राणा उत्क्रामन्ति' इत्यत्र तच्छब्देन, 'अथाकामयमानः' इति प्रकृतः शारीर एव परामृश्यते; नाश्रुतं शरीरम्॥ तस्येति षष्ठ्या प्राणानां संबन्धित्वेन शारीरो निर्दिष्टः; न तूत्क्रान्त्यपादानत्वेन। उत्क्रान्त्यपादानं तु शरीरमेवेति चेन्न—अपादानापेक्षायामश्रुताच्छरीरात् संबन्धितया श्रुतस्याऽऽत्मन एव संनिहितत्वेनापादानतयाऽपि ग्राह्यत्वात्। किञ्च प्राणानां जीवसंबन्धितयैव प्रज्ञातानां तत्संबन्धकथने प्रयोजनाभावात् संबन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते; यथा नटस्य शृणोतीति। न चात्र विवदितव्यम्; स्पष्टो ह्येकेषाम्—माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति—योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्मात् प्राणा उत्क्रामन्तीति॥ शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात् तत्प्रतिषेधो नोपपद्यते इति चेन्न; 'तस्य तावदेव चिरम्' इति विदुषः शरीरवियोगकाले ब्रह्मसंपत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद् विदुषो वियोगः प्रसज्यते। ततश्च देवयानेन पथा ब्रह्मसंपत्तिर्नोपपद्यत इति, न तस्य प्राणा उत्क्रामन्ति—देवयानेन

---

**प्राणाः क्रामन्ति**। उत्क्रामन्तीत्यन्वयः। **समवलीयन्ते अत्रैव**—शरीरे लीयन्त इत्यर्थः। **स ऊच्छ्वयत्याध्मातः**—वायुना पूरित उच्छूनो भवतीत्यर्थः। **तन्ने**त्यादि। प्रकृतपरामर्शिनस्तच्छब्दस्य शारीरपरत्वात् तस्मात्प्राणानुत्क्रान्तिरुच्यत इत्यर्थः। चोदयति **तस्ये**ति। षष्ठ्यन्ततच्छब्दनिर्दिष्टः शारीरोऽस्तु; तत्सम्बन्धिनां प्राणानामुत्क्रान्त्यपादानं शरीरमेवेत्यर्थः। षष्ठ्या उपकरणोपकरणित्वलक्षण-सम्बन्धपरत्वमभ्युपगम्य परिहरति **ने**ति। अश्रुतस्य धर्मिणः, तस्यापादानत्वस्य चोभयोः कल्प्यत्वादपि सिद्धरूपस्यैव धर्मिणोऽपादानत्वमात्रकल्पनं युक्तमित्यर्थः। षष्ठ्या एवापादानत्वपरतामाह **किञ्चे**ति। प्राणानां जीवसंबन्धकथननैरर्थ्यात् षष्ठ्या अपादानवाचकत्वाच्च शारीर एवापादानमित्यर्थः। नायमर्थः कथंचिदर्थानुगुण्यावगम्यः; अपि तु कण्ठोक्तश्चेत्याह **न चात्रे**ति। स्पष्टोह्येकेषामिति व्याख्येयं [1]पदद्वयं व्याचष्टे **माध्यन्दिनाना**मिति। यथा, 'यो विज्ञाने तिष्ठन्' इत्यत्र विज्ञानशब्दः समानप्रकरणस्थेन, य आत्मनि तिष्ठन्नित्यात्मशब्देनात्मपरो निश्चीयते—तथा **तस्ये**ति षष्ठ्यन्तपदं **तस्मा**दिति पञ्चम्यन्तपदेन पञ्चम्यर्थे निश्चीयते इत्यर्थः।[2] चोदयति **शारीरा**दिति। प्रसक्तस्य हि प्रतिषेधः। अत्र तदभावान्न निषेधोपपत्तिरित्यर्थः। परिहरति **ने**ति। **शरीरवियोगकाले**—प्रारब्धकर्महेतुकचरमशरीरवियोगकाल इत्यर्थः। तदानीं शारीरात् प्राणानां वियोगस्यानिष्टत्वे सति हि तन्निषेधः कार्य इत्यत्राह **ततश्च देवयानेने**ति।

---

1 एकेषामित्यस्य व्याख्यानं माध्यन्दिनानामिति। स्पष्ट इत्यस्य विशेष्यसमर्पणात् व्याख्यानं 'शारीर'इत्यादि भाष्यम्। अपादानमिति स्पष्ट इत्यन्वयः। सौत्रः शारीरो विशेष्यः। शरीरोऽपादानत्वेन (स्पष्ट) इत्यर्थः। तच्छब्दषष्ठीविभक्तिरूपपदद्वयं श्रुतिप्रदर्शनेन व्याचष्टे इति च ध्येयम्।

2 षष्ठ्याः पञ्चम्यर्थः स्पष्ट इत्यर्थः।

यथा ब्रह्मप्राप्तेः प्राग् जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते। आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः, तदाऽयमेव परिहारः। स त्वविद्वद्विषयः। तत्र प्रश्नप्रतिवचनयोर्ब्रह्मविद्याप्रसङ्गादर्शनात्। तत्र हि ग्रहातिग्रहरूपेणेन्द्रियार्थस्वभावः, अपामग्न्यन्नत्वम्, म्रियमाणस्य जीवस्य प्राणापरित्यागः, मृतस्य नामवाच्यकीर्त्यनुवृत्तिः, तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः। तत्र च, अप पुनर्मृत्युं जयतीत्यपामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते। अतो नात्र विदुषः प्रसङ्गः ; अविदुषस्तु प्राणानुत्क्रान्तिवचनं स्थूलदेहवत् प्राणा न मुञ्चन्ति, अपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्तीति प्रतिपादयतीति निरवद्यम् ॥ १२ ॥

## स्मर्यते च ॥ ४-२-१३ ॥

स्मर्यते च विदुषोऽपि मूर्द्धन्यनाड्योत्क्रान्तिः, "ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ इति आसृत्युपक्रमाधिकरणम् ॥

---

**न तस्य प्राणाः** इत्यस्यार्थमाह **न तस्येति**। **आर्तभागेत्यादि**। [1]**ग्रहातिग्रहरूपेण**। **ग्रहः** पात्रविशेषः ; तत्स्थद्रव्य**मतिग्रह** ; तद्रूपेण। आकर्षकरज्जुतत्समाकृष्ट(ष्य)रूपेण वा। **अपामग्न्यन्नत्वम्** अग्नेरपां [2]भक्षकत्वानुसंधानं विहितं फलविशेषाय। **उदस्मात्प्राणाः क्रामन्ती**त्यादिना जीवस्य प्राणापरित्यागकथनम्। **अप पुनर्मृत्युं जयति**—मृत्युशब्दवाच्यमग्निमपजयति। **उदस्मा**दित्यादि अविद्वद्विषयं चेत्, कथं प्राणानुत्क्रान्तिवचनमित्यत्राह अविदुषस्त्विति ॥ १२ ॥

स्मर्यते च ॥ 'ऊर्ध्वमेक' इत्यादिवचनं याज्ञवल्क्यस्मृतौ। **तेषां** नाडीविशेषाणाम्।

**परे तु—समाना च** इत्यादिसूत्रमेकं पृथगधिकरणयन्ति। निर्गुणब्रह्मविद इव सगुणोपासकस्याप्यमृतत्वप्राप्तिश्रवणेन पुनर्भवाभावात् पुनर्भवहेतुभूतभूताश्रयविशिष्टा उत्क्रान्तिः सगुणनिष्ठस्यापि न संभवति। विद्याप्रकरणेऽप्युत्क्रान्तिकथनं स्वापादिवत् सर्वप्राणिसाधारणोत्क्रान्त्यनुवादः तेजस्सम्पत्तिस्थानभूतपरदेवतातादात्म्यप्रतिपादनार्थमिति पूर्वपक्षं कृत्वा—अविदुषः सगुणविदुषश्च समाना उत्क्रान्तिर्नाडीप्रवेशात् पूर्वमिति सिद्धान्तयन्ति॥ निर्गुणविद्याया अप्रामाणिकत्वादेव तदयुक्तम्। **तदापीतेः** इत्यादिकमधिकरणान्तरमाहुः। 'तेजः परस्यां देवतायाम्' इति साध्यक्षस्य सप्राणस्य सकरणग्रामस्य तेजस आत्यन्तिकप्रलय उच्यते ; ब्रह्मणः सर्वप्रकृतित्वात् तत्र लयोपपत्तेरिति पूर्वपक्षं कृत्वा—ज्योतिष्टोमादिविधानविद्याशास्त्रवैयर्थ्यादिभिः सुषुप्तिप्रलयवत् नात्यन्तिक इति सिद्धान्तयन्ति। तदप्ययुक्तम् ; कृतकरत्वात्। 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यत्र सुषुप्तौ सुनिरूपितो ह्ययमर्थः। न च शङ्कान्तरमस्ति। अत ऐकाधिकरण्यमेव युक्तम्। इय(त्थ)ञ्च **तेषां** सूत्रयोजना—[3]तच्च तेजो भूतान्तरसंसृष्टं **सूक्ष्मम्**। नाडीनिष्क्रमणश्रुति[4]रूप**प्रमाणात्** सौक्ष्म्यमुपलभ्यते। अत एव पार्श्वस्थैरनुपलम्भो

---

[1] कति ग्रहाः कत्यतिग्रहाः इति प्रश्ने, अष्टौ ग्रहा अष्टावतिग्रहा इति इन्द्रियतदर्था उक्ताः। तेषां ग्रहातिग्रहशब्दवाच्यत्वे रूढियोगाभ्यामौचित्यं साम्यमुखेन दर्शयति ग्रह इति। [2] अग्नेरिति। अपामग्निभक्षकत्वेत्यर्थः। [3] प्रथमसूत्रयोजनेह भ्रष्टा। द्वितीयादिसूत्रयोजनेति वा पाठ्यम्। तन्मते तदर्थस्तु तत् तेजआदि आपीतेः—मोक्षपर्यन्तमस्ति ; तावत् संसारव्यपदेशादिति।

[4] प्रमाणपदमिह परिमाणार्थकं परमते यथा, तथा नाडीनिष्क्रमणश्रवणेति शांकरात् प्रमाणतश्चतथोपलब्धेरितिव्याचष्ट इति भामतीतश्च शास्त्रपरमपीति दर्शयितुं श्रुतिरूपप्रमाणेत्युक्तम्।

मूर्तान्तराप्रतिघातश्चेति । अत एव सूक्ष्मत्वात् स्थूलदेहोपमर्देन नोपमृद्यत इति । इदमधिकरणमविदुष आत्यन्तिकलयाभावसमर्थनार्थं चेत्—सूक्ष्ममित्यादि सूत्रत्रयमनपेक्षितम्; सूक्ष्मदेहसमर्थनस्यानुपयोगात्; भूतसूक्ष्मसंसर्गस्य पञ्चाग्निविद्यायां निरूपितत्वाच्च ॥ नन्वविदुष आत्यन्तिकलयाभावे तस्य सूक्ष्मदेहवतो निःसरतः उपलम्भादिप्रसङ्गः परिहर्तव्य इति चेत्—न; वेतालादिस्थूलशरीरस्याप्यदृश्यत्वे स्थिते कथं दृश्यत्वशङ्का भवेत्। यद्यपि कस्यचित् सा स्यात्, अतिमन्दतया न परिहर्तव्या। यद्यपि परिहर्तव्या, तदन्तरप्रतिपत्तावित्यत्रैव परिहर्तव्या। कृतकरत्वस्योक्तत्वादेव सर्वमिदमसङ्गतम्।

**प्रतिषेधादिति चेन्न शारीरादिति** पूर्वपक्षसूत्रं कृत्वा—**स्पष्टो ह्येकेषामिति** सिद्धान्तसूत्रं योजयन्ति। तत् तावत् अक्षराननुगुणम्; हिशब्देन पूर्वोक्तोपपादकत्वप्रतीतेः। **स्पष्टो ह्येकेषामिति** आर्तभागप्रश्नप्रतिवचनवाक्यमुदाहरन्ति। अत्र प्राणानुत्क्रान्तेरस्य मृतत्वाभावशङ्कां शमयितुम् 'अत्रैव समवलीयन्ते' इति प्राणविलय उक्तः। **अस्मा**दिति न शारीरोऽवधिरुच्यते; स उच्छ्वयतीत्युच्छ्वयनादिधर्मोक्तेः। तदैकार्थ्यात् 'न तस्मात्प्राणा उत्क्रामन्ति' इत्यत्रापि शरीरादुत्क्रान्तिर्निषिध्यते। **तस्मा**दित्यस्य प्रकृतपरामर्शित्वेऽप्यभेदोपचारादुच्छ्वयनादिमतो देहस्यैव निर्देशः; आर्तभागप्रश्नैकार्थ्यात्; अप्राप्तस्य निषेधायोगाच्च। न च शारीरादुत्क्रान्तेः प्राप्तिरस्ति। अतः सा न निषेध्या। वाक्यसामञ्जस्यं च न स्यात्। कामयमानस्योत्क्रान्तिमुक्त्वा, 'अथाकामयमानः' इत्यकामयमानं पृथङ्निर्दिश्य तस्याप्युत्क्रमणोपदेशे हि पृथग्व्यपदेशोपक्रमो भ्रान्तजल्पवत् स्यात्। 'न तस्य प्राणाः' इति षष्ठ्यवगतसंबन्धमात्रस्य करणत्वकरणित्वादिलक्षणविशेषपर्यवसानसिद्धेः, 'न तस्मात्प्राणाः' इति वाक्यान्तरावगतविशेषपर्यवसानाकांक्षा च नास्ति। तत्र च तच्छब्दः शारीरपर इत्युक्तम्। **स्मर्यते चे**ति सूत्रेण 'सर्वभूतात्मभूतस्य सम्यग् भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः' इति निषेधस्मृतिरभिप्रेतेत्याहुः। शुकस्याऽऽदित्यमण्डलप्राप्तिर्विशिष्टदेशे देहत्यागाय; न तु मुक्तेर्मार्गगमनापेक्षयेति चाहुः।

अत्र ब्रूमः—निर्गुणविद्याया अभावात् निर्गुणप्राप्त्यभावाच्च सगुणनिष्ठ एव परविद्यानिष्ठः; सद्विद्यादिष्वप्यानन्दाद्यनुगमात्; 'अथ परा यया तदक्षरमधिगम्यते' इत्युपक्रम्य, 'यः सर्वज्ञः सर्ववित्' इत्यामननात्; परं ज्योतिरुपसंपन्नस्य जक्षणाद्यामननात्; सत्यं ज्ञानमित्यत्र सर्वकामविशिष्टब्रह्मानुभवदर्शनाच्च। परविद्यानिष्ठस्यैव सर्वे वेदान्ता गतिमामनन्ति—'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य', 'तयोर्ध्वमायन्नमृतत्वमेति', 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा', 'यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले' इति; 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत; सैषा विदृतिर्नाम' इत्युपक्रम्य,....'स य एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामान् आप्त्वाऽमृतः समभवत्', 'अपुनर्भवाय कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति, शीर्षकपालं भित्त्वा पृथिवीं भिनत्ति' इत्यारभ्य, 'आकाशं भित्त्वाऽव्यक्तं भिनत्ति,...अक्षरं भिनत्ति,...मृत्युं भिनत्ति। मृत्युर्वै परे देव एकीभवति' इति।

यदुक्तमार्तभागप्रश्नैकार्थ्य-उच्छ्वयनाम्नान-वाक्यासामञ्जस्य-अप्राप्तनिषेधायोग-विशेषपर्यवसान-नैराकाङ्क्ष्यैर्नोत्क्रान्तिर्विदुष इति—तदयुक्तम्। तथा हि—आर्तभागप्रश्नस्य विद्वद्विषयत्वाभावात् तदैकार्थ्य-

मनपेक्षितं तत्र । स सर्वप्राणिसाधारणः । तत्र च, 'अस्मात्प्राणाः क्रामन्त्युत न' इति प्रश्नो न शरीरादुत्क्रान्तिविषयः; किं तु शारीरात्'। शरीरे प्राणस्थित्यभावेन तत उत्क्रान्तेरसंदिग्धत्वात् । अतः प्रतिवचनमपि शारीरादनुत्क्रान्तिविषयम् । **अत्रैव**—जीवे **समवलीयन्ते**—संसृज्यन्ते । **स** उच्छ्वयतीति अभेदोपचारादहमभिमानविषयदेहनिर्देशः । यथा परपक्षे, 'योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्मात प्राणा उत्क्रामन्ति' इति तच्छब्दनिर्देशः । अतो विद्वत्प्रकरणस्य न तदैकार्थ्यापेक्षा । आर्तभागप्रश्नस्य विद्वद्विषयत्वेऽपि शारीरविषयत्वं दर्शितम् । वाक्यासामञ्जस्यं तु नास्ति; कामयमानाकामयमानयोः समानायामप्युत्क्रान्तौ ब्रह्मप्राप्त्यभावतत्सद्भावरूपवैषम्यकृतत्वाद्वाक्यभेदस्य । सकामनिष्कामविषयतया प्रकरणभेदः; नोत्क्रान्त्यनुत्क्रान्तिविषयतया । 'काममय एवायं पुरुषः' इत्युपक्रम्य, 'इति तु कामयमानः' इत्युपसंहृत्य, 'अथाकामयमानः' इति प्रस्तावात । तयोश्च वैषम्यं ब्रह्मप्राप्तितदभावाभ्याम्, नोत्क्रान्तितदभावाभ्यामिति वाक्यसामञ्जस्यसिद्धिः । अप्राप्तनिषेधोऽपि नास्ति; अर्थप्राप्तविषयत्वान्निषेधस्य । सर्वशाखाप्रत्ययन्यायेन सर्वासु विद्यासु देहपातसमये सुकृतदुष्कृतप्रहाणमुक्तं भवति । अतो भोक्तव्याभावेन लोकान्तरगमनाभावाद्विदुषो लोकान्तरगत्यौपयिकप्राणादिविश्लेषः शारीरस्यार्थवशात् प्राप्तः । अतः शारीरादुत्क्रान्तिरर्थप्राप्ता प्रतिषेध्या स्यादर्चिरादिगत्युपपत्त्यर्थम् । षष्ठ्यवगतस्य संबन्धस्योपकरणोपकरणित्वादिलक्षणसंबन्धविशेषपर्यवसाने संभवत्यपि उत्क्रमणस्यापादानापेक्षायां संनिहितस्यैवापादानत्वकल्पनोपपत्तेर्विशेषसाकाङ्क्षस्य संबन्धमात्रस्याकाङ्क्षितापादानत्वविशेषपर्यवसानं न्याय्यम्; न त्वनाकाङ्क्षिते करणत्वकरणित्वादिरूपे । अपादानस्याकाङ्क्षितत्वादेव छागपशुन्यायाद्वाक्यान्तरावगतापादानविशेषपर्यवसायित्वं च न्याय्यम् ।

यत उत्क्रान्तिनिषेधः श्रुतौ नास्ति, अत एव **स्मर्यते** च इत्यत्राप्युत्क्रान्तिविषयस्मृतिवचनमेवोदाहर्तव्यम् । 'देवा अपि मार्गे मुह्यन्ति' इति वचनं त्वतद्विषयत्वादनुदाहार्यम् । तच्च न गतिनिषेधपरम्; किन्तु गतेर्दुरवगमत्वपरम् । तथा च परपक्षानौपयिकत्वाच्च नोदाहार्यम् । तस्य च गतिनिषधपरत्वाभावो मोक्षधर्म एव गतिविधानादवगम्यते, "ते तीर्त्वा दुस्तरं जन्म विशन्ति विमलं नभः । ततस्तान् सुकृतीन् सर्वान् सूर्यो वहति रश्मिभिः ॥ पद्मतन्तुवदाविश्य प्रवहन् विषयान् नृप । तत्र तान् प्रवहन् वायुः प्रतिगृह्णाति भारत । वीतरागान् यतीन् सिद्धान् धिया युक्तांस्तपोधनान् । सूक्ष्मः शीतः सुगन्धिश्च सुखस्पर्शश्च भारत । सप्तानां मरुतां श्रेष्ठो लोकान् गच्छति यः शुभान् । स तान् वहति कौन्तेय तमसः परमां गतिम् । तमो वहति लोकेश रजसः परमां गतिम् । रजो वहति राजेन्द्र सत्त्वस्य परमां गतिम् । सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् । प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना । परमात्मानमासाद्य तद्भूताः यतमानसाः । अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभिभो । परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् । आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति । ईदृशं परमं स्थानं निरयास्ते च तादृशाः" इति ।

यत्तु—शुकोत्पतनं विशिष्टदेशो देहत्यागाय; न तु मुक्तौ मार्गापेक्षयेति—तदप्ययुक्तम्; **'दृष्टो मार्गः प्रवृत्तोऽस्मि'** इति गतिचिन्तायां मार्गस्य दृष्टत्वाभिधानात; **'भूतैः समतिबाध्यते'**

---

परसंपत्त्यधिकरणम् । ४-२-६

**तानि परे तथा ह्याह ॥ ४-२-१४ ॥**

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु संपद्यत इत्युक्तम्। सैषा संपत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम्। तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति, उत परमात्मनि संपद्यन्त इति विशये— मध्ये परमात्मसंपत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात् तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्तीति प्राप्ते—उच्यते तानि परे इति। तानि परस्मिन् आत्मनि संपद्यन्ते ; कुतः। तथा ह्याह श्रुतिः, "तेजः परस्यां देवतायाम्" इति। यथाऽऽह श्रुतिः, तदनुगुणं कार्यं कल्प्यमित्यर्थः। सुषुप्तिप्रलययोर्यथा परमात्मसंपत्त्या सुखदुःखोपभोगायासविश्रमः ; तद्वदिहापि ॥ १४ ॥

इति परसम्पत्त्यधिकरणम् ॥

---

इत्यातिवाहिकैरतिवाहनस्योक्तत्वाच्च। स्थूलदेहेन आसूर्यमण्डलात् गमनं योगप्रभावज्ञापनार्थमित्युक्तम्, 'दर्शयित्वा प्रभावं स्वम्' इति। 'सर्वभूतगतोऽभवत्' इति च ज्ञानेन सर्वभूतव्याप्तिरुक्ता ; 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इत्यादिश्रुतेः।

अन्ये तु—अप्राप्तायाः शारीरादुत्क्रान्तेः कथं प्रतिषेध इत्येतदेवं परिहरन्ति—नात्र शारीरादुत्क्रान्तिः प्रतिषिध्यते ; किं तु 'अत्र ब्रह्म समश्नुते' इति वक्तुमनुवादः—सञ्जातविद्यः पुरुषः प्रारब्धवशादनुत्क्रान्तप्राणो जीवद्दशायामेव ब्रह्मानुभवतीत्यर्थ इति। तदविरुद्धम्। तथापि तदनादरे कारणमस्ति। शारीरादनुत्क्रान्त्यनुवादेनात्र ब्रह्मापरोक्ष्याभिधानेऽपि गतिप्रतिषेधशङ्कापरिहारः सिद्ध्येत्—तथाऽपि 'न शारीरात् स्पष्टो ह्येकेषाम्' इति वदतः सूत्रकारस्य शारीरादुत्क्रान्तिर्भोक्तव्याभाव-प्राप्ता प्रतिषिध्यते इत्येवाभिप्राय इति ॥ इति आसृत्युपक्रमाधिकरणम् ॥

**तानि परे तथा ह्याह ॥ १४ ॥** अवान्तरसङ्गतिमाह-**सकरणे**ति। **सैषे**ति। पूर्वं 'समाना चाऽऽसृत्युपक्रमात्' इति नाडीप्रवेशात् पूर्वं मुमुक्षुसंसारिणोर्गतेः समानत्वमुक्तम्। तत्र वक्ष्यमाणाधिकरण-द्वयप्रतिपाद्यायां परमात्मसंपत्तौ मुक्तस्यास्तित्वनास्तित्वविगानं नास्ति। यतः पूर्वाधिकरणप्रतिपादितार्थ एव विप्रतिपत्तिः, अतः तदोकोग्रज्वलनमित्येतस्मात्पूर्वाधिकरणप्रतिपाद्येऽर्थे विद्वदविदुषोः समानेऽपि **'तानिपरे'** इत्यधिकरणात् पूर्वत्रैव विद्वदविदुषोः समानत्वविप्रतिपत्तिरिति हृदि कृत्वा सूत्रकारैः समानत्व-मुक्तमित्यभिप्रायेणात्र **सैषा संपत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृत**मित्युक्तं भाष्ये। किं तेजश्शब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि यथाकर्म यथाविद्यं गच्छन्ति, उत परमात्मनि संपद्यन्ते, किमत्र परदेवताशब्दो गन्तव्यस्थानावस्थपरमात्मपरः, उतातदवस्थपरमात्मपर इति ; किमत्र संपत्तौ प्रयोजनं संभवति, नेति ; असंभवे परमात्मशब्दस्य गन्तव्यप्रदेशविशेषावस्थपरमात्मपरत्वेन यथाकर्मविद्यं गच्छेयुः। सम्भवे तु—अतदवस्थपरमात्मपरत्वेन तस्मिन् संपद्येरन्। पूर्वपक्षमाह **मध्य** इति। 'तेजः परस्याम्' इति श्रुतिः परस्यात्मनः सर्वदा सर्वाधारत्वमात्रपरेति पूर्वपक्षिणोऽभिप्रायः।

राद्धान्ते—**तथा ह्याह श्रुतिरिति**। 'वाङ्मनसि संपद्यते' इत्यादिनिर्देशो न सर्ववस्तुसाधारण-धारकत्वाभिप्रायः। अतः सम्पत्तिरेवार्थ इति भावः ॥ १४ ॥

## अविभागाधिकरणम् ४-२-७

### अविभागो वचनात् ॥ ४-२-१५ ॥

सेयं परमात्मनि संपत्तिः किं प्राकृतलयवत् कारणापत्तिरूपा, उत 'वाङ्मनसि' इत्यादिवदविभागरूपेति चिन्तायाम्, परमात्मनः सर्वेषां योनिभूतत्वात् कारणापत्तिरूपेति प्राप्ते उच्यते अविभागः--इति। अपृथग्भावः--पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः। कुतः। वचनात्। 'तेजः परस्यां देवतायाम्' इत्यत्रापि 'वाङ्मनसि संपद्यते' इत्यतः 'संपद्यते' इति वचनस्यानुषङ्गात्, तस्य च संसर्गविशेषवाचित्वात्, अनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावात्। उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात्; पुनस्तत्राव्यक्तादिसृष्ट्यवचनाच्च ॥ १५ ॥ इति अविभागाधिकरणम् ॥

---

**अविभागो वचनात्** ॥ सङ्गतिपूर्वपक्षावुच्येते **सेय**मित्यादिना। किमियं संपत्तिर्लयरूपा, उत अविभागरूपा; किं तेजःपरस्यामिति वचनस्य कारणापत्तिपरत्वं न्याय्यम्, उताविभागमात्रपरत्वमिति। प्रथमे लयरूपत्वम्। द्वितीये त्वविभागरूपत्वम्। **अविभाग इती**ति। अनुषक्तमपि पदमत्र कारणापत्तिवाचीत्यत्राह **अनुषक्तस्ये**ति। **उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावा**दिति। भारवाहकस्य देहिनः सभारस्यैव यष्ट्यवष्टम्भेन विश्रमतुल्यः सुषुप्तौ विश्रमः; अपनीतभारस्य विश्रमतुल्यो महाप्रलये; यथा च कञ्चुकोष्णीषवतस्तद्रहितस्य च विश्रमः, तद्वत् कारणे लीनस्य करणकलेबररहितस्य द्विपरार्द्धकाले विश्रमः—इति प्रयोजनविभागः सुषुप्तिप्रलययोः शरीरान्वयव्यतिरेकाभ्यामवगतः; तदभावादित्यर्थः। अव्यक्तादेः पुनःसृष्टिरुक्ता चेत्, कारणापत्तिः प्रयोजनं च कल्प्यम्; सा च नास्तीत्याह **पुनस्तत्राव्यक्तादिसृष्ट्यवचनाच्चे**ति। सुषुप्तौ जीवमात्रस्याविभागापत्तिः; प्रलय एव विशिष्टस्य लयापत्तिः; उत्क्रान्तौ तु भूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या संयोगमात्रमेव ॥ विशेष्यांशस्य प्रलय इति चेत्, [न?] तेजश्शब्दस्य विशेष्यभूतजीवमात्रवाचित्वाभावात् अनुषक्तपदार्थवैरूप्यायोगादिभिश्च। एवं विभागानर्हभूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या प्रयोजनाभावाव्यक्तादिसृष्ट्यवचनाभ्यां च सम्पत्तिः संयोगः। नित्यान्तरवस्थितेऽपि परमात्मनि तदानीं संसर्गविशेषः शास्त्रैकसमधिगम्यः।

**परे** त्विदमधिकरणद्वयं परविद्यानिष्ठविषयं व्याचक्षते। तत्र 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति प्रतिष्ठाशब्दवाच्यस्वकारणेषु कलानां लयं पूर्वपक्षीकृत्य—'षोडश कलाः पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुत्या ब्रह्मणि लयः। इयं विद्वद्दृष्टिः। स्वकारणेषु लयोक्तिस्तु अविद्वद्दृष्ट्या स्यात्। स्वकारणेषु लयेऽपि तैः पृथिव्यादिभिः सह ब्रह्मणि लयश्चोपपन्नः इति सिद्धान्तयन्ति प्रथमे। स च ब्रह्मविदः परमात्मनि कलाप्रलयः सावशेषः उत्क्रान्त्यादाविवेति पूर्वपक्षं कृत्वा, 'भिद्येते चासां नामरूपे; पुरुष' इति वचनादविद्याकल्पितानां विद्यानिमित्तप्रलये सावशेषत्वानुपपत्तेश्च निरवशेषः प्रलय इति द्वितीये सिद्धान्तयन्ति।

तत्र आद्ये ब्रह्मण्येव लयसमर्थनं प्रत्यक्षविरुद्धं श्रुतिविरुद्धं च। भस्माद्यवस्थो हि देहः पृथिव्यादिषु लीयमानो दृष्टः। 'पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते' इति च श्रुतिः। नायमविद्वद्दृष्ट्या लय उच्यते, 'इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते' इत्यादिनोक्तस्य सेन्द्रियाणां तन्मात्रादीनां भूतादिप्रभृतिषु लयस्याविद्वद्दृष्ट्याऽप्यनवगतत्वात् ॥[1] सांख्यदृष्टिरियमिति

---

1 परमते इन्द्रियाणां भौतिकत्वस्य भूतानां महदाद्यद्वारकतया साक्षादविद्याजन्यत्वस्य च स्वीकारादेवं शंका। (भामतीपरिभाषादौ हि तथा)।

चेत्—ततः किम्? यतः (यत्र?) श्रुत्यविरोधः, तत्र सांख्यदृष्टेः श्रुतिमूलत्वान्न निराकरणीयता। 'तद्धैक आहु...कुतस्तु खलु सोम्यैवं स्यात्' इतिवत् परमतत्वेनोपन्यस्य श्रुत्यैव निराकृतत्वाभावाच्च नोपेक्ष्यता। पराशराद्युपबृंहणानुगृहीता चेयं श्रुतिः॥ सर्वस्य तल्लत्वश्रुतिविरोधात् परमतत्वमिति चेन्न; सर्वस्य तज्जत्वश्रुतिविरोधेन आकाशाद्वायुरित्याद्युक्तसर्गस्यापि परमतत्वप्रसङ्गात्॥ तत्तदवस्थब्रह्मणः कारणत्वाद-विरोधश्चेत्—लयेऽपि तुल्यम्। अत एव 'पुरुषं प्राप्यास्तं गच्छन्ति' इति चोपपन्नम्। एवमद्वार-कलयस्य श्रुतिप्रत्यक्षविरोधात् सद्वारकलयस्य सर्वसाधारणतया श्रुतिप्रत्यक्षसिद्धतया ब्रह्मविदो विशेषा-भावाच्चाद्याधिकरणवर्णनमयुक्तम्।

इतरत्र च—निरवशेषलयो नाम किं निरन्वय(निरवयव)विनाशः, उत पृथिवीत्वादिप्रहाणम्, उत मुक्तस्य पुनर्देहारम्भायोग्यत्वम्, उत चेतनान्तरयुक्तस्यापि देहारम्भायोग्यत्वम्। न प्रथमः; 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाशविकल्पवत्' इति नित्यत्ववचनात्। नापि द्वितीयः; ब्रह्मविद्देहस्यापि भस्मीभावादिदशायां पृथिवीत्वानुवृत्तिदर्शनात्; पृथिवीत्वादिप्रहाणस्य समष्टितत्त्वलय-दशाभावित्वात् तस्य च प्राकृतप्रलयभावित्वात् नैमित्तिकादिप्रलयेषु पृथिवीत्वादिप्रहाणस्य प्रमाणाभावात्। 'भिद्येते चासां नामरूपे' इति श्रुतेर्देवमनुष्यादिनामरूपविषयतया वा, [1]प्राकृतप्रलयविषयतया वाऽर्थ-वत्त्वाच्च। न तृतीयः—मुक्तस्यापुनरावृत्तेर्वक्ष्यमाणतया तं प्रति देहारम्भकत्वशङ्काया असम्भवेना-विचार्यत्वात्। न चतुर्थः—नियामकाभावात्। न हि देवदत्तस्यांगुलीयतया परिणतः कनकांशो यज्ञदत्तं प्रति न तथा परिणमतीति नियन्तुं शक्यम्। अतोऽनुपपन्नम्।

**अपरे** तु 'तानि परे' इति सूत्रं न पृथगधिकरणयन्ति, तैश्च सूत्रार्थः परैरिव वर्णितः, तत्रानुपपत्तिश्च **पूर्ववत्**। अविभागसूत्रनिर्वाहोऽपि पूर्वोक्तयैव दिशा निरस्तः।

**अन्ये तु** वागादिलयस्यामुख्यत्वादस्वयोनौ लयसम्भवेऽपीह लयस्य मुख्यत्वात् तेजःप्रभृतिभूतानां स्वयोनिष्विति पूर्वपक्षं कृत्वा—तन्त्वादीनां भस्माद्यवस्थानामस्वयोनौ विनाशदर्शनानुगृहीतात्, 'तेजः परस्याम्' इति वचनात् हृदिस्थे परमात्मनि लय इति आद्ये सिद्धान्तयन्ति। अनन्तरे च स एव मरणे भूतलयः किं स्थूलभेदे स्थिते वस्त्वन्तरसंश्लेषमात्रम्, उत जीवानामिव स्थूलभेदनिवृत्त्या सूक्ष्मशक्तिभेदयोगेनैव नीरक्षीरन्यायादविभागप्राप्तिलक्षण इति संशय्य, पूर्वपक्षं कृत्वा—मरणे 'भूतेभ्यः समुत्थाय तान्येवानु-विनश्यति' इति जीवविनाशदर्शनात् तद्वदविभागापत्तिरिति सिद्धान्तयन्ति। भूतानां कारणानां च महाप्रलये सूक्ष्मशक्तिभेदोऽपि नावशिष्यते, मरणे तु सोऽवशिष्यते, शरीरान्तरार्थं तेषां गमनोपपत्तेरिति चाहुः।

तत्र तावत् हृदयस्थः परदेवताप्राज्ञात्मशब्दवाच्यः परमात्मा नाम ईश्वर एव। तत्र लयो मुख्य इत्यनुपपन्नम्; ईश्वरांशस्य निमित्तकारणत्वात्॥ अस्वयोनावपि लयो दृष्ट इति चेत्—न। भस्माद्यवस्थ-तन्त्वादीन् प्रति साक्षादनुपादानत्वेऽपि प्रणाड्योपादानत्वात् पृथिव्यास्तत्र लय उपपन्नः। ईश्वरः प्रणाड्यापि न भूतकरणग्रामोपादानमिति न तत्र मुख्यलयसंभवः॥ सन्मात्रे लय इति चेन्न; तस्य परदेवताप्राज्ञात्म-शब्दवाच्यत्वाभावात्; अंशत्रयव्यतिरेकेण सन्मात्रस्य कस्यचित् घटशरावाद्यवस्थमृद्वत् अवस्थाना-

1 कलानां प्राकृतप्रलयावसरपर्यन्तं स्वरूपेण स्थितानां तदवसरे संभवत्प्रलयपरतयेत्यर्थः।

### तदोकोधिकरणम् ४-२-८

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४-२-१६ ॥

एवं गत्युपक्रमावधि विद्वदविदुषोः समानाकार उत्क्रान्तिप्रकार उक्तः। इदानीं विदुषो विशेष उच्यते। तत्रेदमाम्नायते—"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति। अनया नाडीनां शताधिकया मूर्द्धन्यनाड्यैव विदुषो गमनम्, अन्याभिरेव चाविदुषो गमनमित्ययं नियम उपपद्यते, नेति संशयः। किं युक्तम्। नियमो नोपपद्यत इति। कुतः। नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात्। "तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमिति।

एवं प्राप्ते प्रचक्ष्महे—शताधिकयेति। विद्वान् शताधिकया मूर्द्धन्ययैव नाड्योत्क्रामति। न चास्याः विदुषो दुर्विवेचत्वम्। विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात्, विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति। ततश्च तदोकः—तस्य जीवस्य स्थानं हृदयम् अग्रज्वलनं भवति। अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम्। परमपुरुषप्रसादात् प्रकाशितद्वारो विद्वान् तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते ॥ १६ ॥ इति तदोकोधिकरणम्।

---

नभ्युपगमाच्च। तस्मात्—लय इति सिद्धान्तः, तस्य च मुख्यत्वेऽभ्युपगते सति अस्वयोनौ परमात्मनि लय इत्यप्यनुपपन्नम्। वचनं तु वाङ्मनसीतिवत् अन्यथासिद्धत्वादस्वयोनौ लये प्रमाणं न स्यात्। अनन्तरे चाधिकरणे स्थूलभेदनिवृत्त्या जीववदविभाग इति यत्—तन्निरूपणीयम्। भूतकरणानां महाप्रलयवत् विनाशस्तावदनभ्युपगतः; लोकान्तरगमनश्रवणात्। सूक्ष्मशक्तिभेदावशेषस्थूलभेदविशेषनिवृत्तिर्नाम किं मनुष्यादिसंनिवेशप्रहाणम्, उत पृथिवीत्वादिप्रहाणम्। न प्रथमः—संस्थानापगमस्य प्रत्यक्षतया निरूपणीयत्वाभावात्। न द्वितीयः; लोकान्तरगमनानुपपत्तेः। यदि निवृत्तस्थूलाकाराणां परमात्मनि सम्पत्तिर्निरूप्या, सा तु 'तानि परे' इत्यत्र निरूपितेति निरूपणीयाभावादविभागाधिकरणानारम्भ एव स्यात् ॥ इति अविभागाधिकरणम्।

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया** ॥ अवान्तरसङ्गतिमाह **एवमिति**। उत्क्रान्तौ ब्रह्मणि सम्पत्तेर्विद्वदविदुषोस्तुल्यत्वात् **समाना चे**त्यादिसूत्रमत्र वक्तव्यम्। तथा न कृतम्। तत्र हेतुर्विदुषो ब्रह्मसम्पत्तावविवादः। **तत्रे**त्यादि। किं विदुषो मूर्धन्यनाड्यैव गमननियमः संभवति, नेति; किं 'तयोर्ध्वमायन्' इति यादृच्छिकगमनानुवादः, उत नाडीविशेषेण गमननियमविधिः; किं नाड्यो दुर्विवेचाः, उत सुविवेचाः। दुर्विवेचत्वे यादृच्छिकगत्यनुवादपक्षस्य न्याय्यत्वान्नियमासंभवः। सुविवेचत्वे नियमविधिपरत्वोपपत्तेर्गतिनियमसंभवः। **परे** तु अपरविद्याविषयमिमं विचारमाहुः। तत् पूर्ववदयुक्तम्।

'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति' इतीदं वाक्यमत्रापेक्षितं पूर्वत्रोपात्तत्वान्नात्रोदाहृतम् ॥ १६ ॥

रश्म्यनुसाराधिकरणम् ४-२-९

रश्म्यनुसारी ॥ ४-२-१७ ॥

विदुषो हृदयात् शताधिकया मूर्धन्यनाड्या निर्गतस्याऽऽदित्यरश्मीन् अनुसृत्याऽऽदित्यमण्डलं-गतिः श्रूयते । "अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति । तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमः संभवति, नेति चिन्तायाम्—निशि मृतस्य विदुषो रश्म्यनुसारा-संभवादनियमः । वचनं तु पक्षप्राप्तविषयमिति प्राप्ते—उच्यते, रश्म्यनुसारी इति । रश्म्नुसार्येव विद्वान् ऊर्ध्वं गच्छति । कुतः?। "अथैतैरेव रश्मिभिः" इत्यवधारणात्; पाक्षिकत्वे ह्येवकारोऽनर्थकः स्यात् । यदुक्तम्—निशि मृतस्य रश्म्यसंभवात् रश्मीननुसृत्य गमनं नोपपद्यत इति—तन्न । निश्यपि सूर्यरश्म्युनुसारः संभवति । लक्ष्यते हि निश्यपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः, हेमन्तादौ तु हिमाभिभवात् दुर्दिन इवोष्मानुपलम्भः । श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः, "तद्यथा महापथ आततः उभौ ग्रामौ गच्छतीमञ्चामुं च, एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुञ्च । अमुष्मादादित्यात् प्रतायन्ते; ता आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति । तस्मान्निश्यपि रश्मिसंभवान्निशि मृतानामपि विदुषां रश्म्यनु-सारेणैव ब्रह्मप्राप्तिरस्त्येव ॥ १७ ॥ इति रश्म्यनुसाराधिकरणम् ।

निशाधिकरणम् ४-२-१०

निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ ४-२-१८ ॥

इदमिदानीं चिन्त्यते—विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति । यद्यपि निशायां

---

**रश्म्यनुसारी** ॥ अवान्तरसङ्गतिः स्फुटा । किं रश्म्यनुसारेण गमननियमो विदुषः संभवति, नेति; किं 'रश्मिभिरूर्ध्वमाक्रमते' इति वाक्यं पाक्षिकगमनानुवादकम्, उत नियमविधिपरम्; किं निशि प्रेतस्य रश्म्यनुसारेण गमनं संभवति, नेति; किं निशि रश्मयः संभवन्ति, नेति । न चेत्; निशि रश्म्यनुसारासंभवात् श्रुतेः पाक्षिकगत्यनुवादकतया नियमासंभवः । सन्ति चेत्, निशि रश्म्यनुसारसंभवाच्छ्रुतेर्नियमविधिपरतया रश्मिभिरेव गतिनियमसंभवः ।

पूर्वपक्षमुक्त्वा राद्धान्तमाह **उच्यत** इति । ऊष्मोपलम्भयोग्यरश्मिसद्भावे सत्यपि अन्धकारस्थिति-रुपपद्यते; रश्मीनामल्पत्वात् । यथा उद्धृताग्नौ प्रदेशे सूक्ष्माग्न्यवयवसम्पर्कादौष्ण्योपलब्धावपि सूक्ष्माग्न्यवयवैर्न तिमिरं निरस्यते, तद्वदिति । नाडीषु **सृप्ताः**—सम्बद्धा इत्यर्थः ॥ १७ ॥

**निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च** ॥ सङ्गतिः स्फुटा । किं निशि मृतस्य विदुषो ब्रह्मप्राप्तिः संभवति, नेति; किं निशामरणस्याधोगतिहेतुत्वं निशि मृतस्य ब्रह्मप्राप्त्यभावं ज्ञापयति, नेति; निशामरणनिन्दावचनं किमविद्वद्विद्वत्साधारणम्, उताविद्वद्विषयमिति । साधारणत्वे निशि मरणस्याधोगतिहेतुत्वेन ब्रह्मप्राप्त्यभावावगमात् निशि मृतस्य न ब्रह्मप्राप्तिः, अविद्वद्विषयत्वे निशामरणस्याधोगतिहेतुतया ब्रह्मप्राप्त्यभावानवगमात् निशि मृतस्यापि ब्रह्मप्राप्तिः स्यात् ।

सूर्यरश्मिसंभवात् रश्म्यनुसारेण गतिर्निशायामपि संभवति, तथाऽपि निशामरणस्य शास्त्रेषु गर्हितत्वात् परमपुरुषार्थलक्षणब्रह्मप्राप्तिर्निशामृतस्य न संभवति । शास्त्रेषु दिवामरणं प्रशस्तम्; विपरीतं निशामरणम्, "दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति । दिवामरणनिशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम् । अतो निशि मरणमधोगतिहेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेत्—तन्न; विदुषः कर्मसंबन्धस्य यावद्देहभावित्वात् । एतदुक्तं भवति—अनारब्धकार्याणामधोगतिहेतुभूतानां कर्मणां विद्यासंबन्धेनैव विनाशादुत्तरेषां चाश्लेषात् प्रारब्धकार्यस्य च चरमदेहावधित्वात् बन्धहेत्वभावाद्विदुषो निशामृतस्यापि ब्रह्मप्राप्तिः सिद्धैव । दर्शयति च श्रुतिः, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति । "दिवा च शुक्लपक्षश्च" इत्यादिवचनमविद्वद्विषयम् ॥ १८ ॥ इति निशाधिकरणम् ।

---

पूर्वपक्षमुक्त्वा राद्धान्तमाह **तन्नेति** । 'प्रारब्धकर्मणोऽनेकदेहहेतुत्वसंभवात् कथं कर्मसंबन्धस्य यावद्देहभावित्वम् । प्रारब्धसमाप्तिरस्तु ; अभुक्तपूर्वाण्यपि कर्माणि सन्ति । कर्मणो यावद्देहभावित्वेन कथं निशामरणस्याधोगतिहेतुत्वं परिहृतम् । तथा च सति निशामरणनिन्दावचनस्य का गतिः' इत्यत्राह **एतदुक्तमिति** । दिवानिशाविभागनिरपेक्षं प्रारब्धकर्मावसाने मोक्षश्रवणात्, 'तस्य तावदेव चिरम्' इति वाक्यमुपात्तम् ॥ ननु अप्रशस्तकाले निशि मृतं शरीरं न चरमं स्यात् । चारम्ये सिद्धे हि ब्रह्मप्राप्तिसिद्धिः ॥ नैवम्; 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा' इत्यारभ्य 'तस्माद्ब्रह्मणो महिमानमाप्नोति' इति दक्षिणायनाद्यप्रशस्तकालमृतस्यापि ब्रह्मप्राप्तिश्रवणात् अप्रशस्तकालमरणेन हेतुना चरमदेहत्वं न बाध्यम् । अतो [1]यथोक्त एवार्थ इति ।

**इतरे त्रयोऽपि**—इदं सूत्रद्वयमपि रश्म्यनुसारविषयमेकमधिकरणमाहुः—निशि रविरश्मयो न सन्तीति चेत्—न; नाडीरविरश्मि**सम्बन्धस्य यावद्देहभावित्वात्** । तथा 'अमुष्मादादित्यात्प्रतायन्ते' इति श्रुति**र्दर्शयतीति** योजयन्ति । न यदि निशि रविरश्मयः स्युः, तर्हि निशि मृतस्य ब्रह्मप्राप्तिर्न स्यात् । तस्य रविरश्म्यनपेक्षत्वे, दिवाऽपि तैर्विना गमनसंभवात रश्म्यनुसारशास्त्रवैयर्थ्यम् । रात्रौ मृतस्य ब्रह्मप्राप्तिर्वा न स्यात् । मा भूदिति न वाच्यम्; विद्यायाः पाक्षिकफलतया तत्र प्रवृत्त्यनुपपत्तेः । यावदुदयं प्रतीक्षणकल्पनमप्ययुक्तम्; 'स यावत् क्षिपेन्मनः, तावदादित्यं गच्छेत्' इति शैघ्र्यावगमादित्युपपादयन्ति ॥

निशि मृतस्य ब्रह्मप्राप्तिर्न स्यादिति प्रसङ्गो निशामरणनिन्दावचनमवलम्बमानानां नानिष्टः स्यात् । विद्यायाः पाक्षिकफलत्वं च निशामरणस्य विद्यानिष्पत्त्यभावनिबन्धनत्वाश्रयणेन परिहृतं स्यात् । अतोऽपेक्षितं निशि मृतस्य मोक्षसमर्थनमिति तदर्थमधिकरणभेदो न्याय्यः ॥ नाडीरविरश्मिसम्बन्धनियमाभिधानमपेक्षितमिति चेत्—सत्यम्; तस्य तु प्रतिज्ञायामपेक्षितत्वादाभिप्रायिकत्ववर्णनमुचितम् । अन्यथाऽपेक्षितार्थान्तरप्रतिज्ञाया उपपत्तेश्चानभिहितत्वप्रसङ्गात् । प्रतिज्ञाहेत्वोरुभयोरप्याभिप्रायिकत्वकल्पनादपि पूर्वप्रतिज्ञोपपत्तिमात्रस्याभिप्रायिकत्वकल्पनं न्याय्यमिति ॥ १८ ॥

---

[1] 'अविदुषो निशादिमरणे तस्य संचितकर्मसद्भावात् तत्र पापकर्मफलदानं प्रारभ्यते इति निन्दावचनतात्पर्यादविदुषो भयमन्यस्याभयश्च सुस्थम् ।

## दक्षिणायनाधिकरणम् ४-२-११

### अतश्चायनेऽपि दक्षिणे ॥ ४-२-१९ ॥

निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तः, तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः । अधिकाशङ्का तु—"अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति" इति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तानां च, "तेषां यदा तत्पर्यवैति", "अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनात् दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न संभवति---इति ।

परिहारस्तु—अविदुषां पितृयाणेन पथा चन्द्रं प्राप्तानामेव पुनरावृत्तिः; विदुषस्तु चन्द्रं प्राप्तस्यापि, "तस्माद्ब्रह्मणो महिमानमाप्नोति" इति वाक्यशेषात् तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिः ब्रह्म प्रपित्सतो[1] (प्रेप्सतो ?) विश्रमहेतुमात्रमिति गम्यते । वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावात् विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या । भीष्मादीनां योगप्रभावात् स्वच्छन्दमरणानां धर्मप्रवर्तनाय उत्तरायणप्राशस्त्यप्रदर्शनार्थस्तथाविधाचारः ॥ १९ ॥

ननु च विदुषो मुमूर्षून् प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते, "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते । शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः" इति । तत्राह—

### योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ ४-२-२० ॥

नात्र मुमुर्षून् प्रति मरणकालविशेषोपादानं स्मर्यते; अपि तु योगिनः-योगनिष्ठान् प्रति स्मार्ते

---

**अतश्चायनेऽपि दक्षिणे ॥** अवान्तरसङ्गतिः स्फुटा । किं दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिः संभवति, नेति; किं 'अथ यो दक्षिणे' इति दक्षिणायनमृतस्य चन्द्रप्राप्तिवचनं ब्रह्मप्राप्त्यभावं गमयति, नेति; चन्द्रं प्राप्तानामावृत्तिवचनं किं विद्वदविद्वत्साधारणम्; उताविद्वद्विषयमिति ; किं भीष्मादीनां कालप्रतीक्षा-कालविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधेन साधारणत्वसमाश्रयणं न्याय्यम्, उत 'ब्रह्मणो महिमानम्' इति वाक्यशेषानुरोधेनाविद्वद्विषयत्वसमाश्रयणं न्याय्यमिति । साधारण्याश्रयणे न्याय्ये सति आवृत्तिवचनस्य साधारण्येन ब्रह्मप्राप्त्यभावावगमकतया न ब्रह्मप्राप्तिः । अविद्वद्विषयत्वाश्रयणे न्याय्ये सति आवृत्तिवचनस्याविद्वद्विषयतया 'अथ यो दक्षिणे' इति वाक्यस्य ब्रह्मप्राप्त्यभावानवगमकत्वात् दक्षिणायनमृतस्य विदुषोऽपि ब्रह्मप्राप्तिः स्यात् । **दक्षिणायनमृतस्येति** । 'उदगयने प्रमीयते', 'दक्षिणे प्रमीयते' इत्यत्र धूमादिमार्गलिङ्गाभावात् ब्रह्मप्राप्तिवचनाच्चार्चिरादिगतस्यैव मरणकालविशेषेण मार्गे संमानविशेष उच्यत इत्यर्थः ॥ १९ ॥

उत्तरसूत्रशङ्कामाह **नन्विति । योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ स्मार्ते इति**

---

1 गीतायां 'तमेव चाद्यं पुरुषं प्रपद्ये' इत्येव पाठः, न तु प्रपद्येदित्येवं परस्मैपदमनभ्युपयता भाष्यकारेण 'प्रपित्सत' इति प्रयोगो नैव क्रियेत । अत आतिवाहिकाधिकरण इव प्रेप्सत इति पाठः ।

स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते, योगाङ्गतया अनुदिनं स्मर्तुम् । तथा ह्युपसंहारः, "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन । तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति । "अग्निर्ज्योतिः", "धूमो रात्रिः" इति च देवयानपितृयाणे प्रत्यभिज्ञायेते । उपक्रमे च, 'यत्र काले तु' इति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः ; अग्न्यादेः कालत्वासंभवात् । अतः, "तेऽर्चिषमभिसंभवन्ति" इति विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान् प्रति विधीयते ; न मुमूर्षून् प्रति मरणकालविशेषः ॥ २० ॥ इति दक्षिणायनाधिकरणम् ।

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्याध्यायस्य द्वितीयः पादः ।

श्रीरस्तु

---

सौत्रं पदम् ; तत् व्याचष्टे **स्मृतीति । योगयुक्तो भव**—मार्गानुसंधानरूपयोगयुक्तो भवेत्यर्थः । अन्यथा सङ्गत्यभावप्रसङ्गात् । **यत्र काले** त्विति । मध्ये, उपसंहारे च मार्गविधानपरत्वदर्शनात् महावाक्यस्वारस्येनोपक्रमो बाध्यत इत्यभिप्रायेण **अग्निर्ज्योति**रित्यादिवचनमुक्तम् । **योगिन** इति सौत्रयोगिशब्दश्चतुर्विधभगवदुपासकसाधारणः[1] ; भक्तियोगस्य तेषां साधारणत्वात् । तत्र मुमुक्षोर्देवयानानुसंधानम्, ऐश्वर्यार्थियोगिनः पितृयाणानुसन्धानमिति । **विधीयत** इति । श्रुतौ गतिद्वयं विहितम् । तदनुसन्धानमत्र विधीयत इत्यर्थः । **न मुमूर्षून् प्रति मरणकालविशेष** इति । **विधीयत** इत्यन्वयः ।

अत्र **परे चापरे च—योगिनः प्रति** इति सूत्रमेवं व्याचक्षते—योगिनः प्रति स्मार्तोपासनार्थोऽयं स्मार्तः कालविनियोगः, प्रत्यासन्नत्वात् । अतः श्रौतेषूपासनेषु नावतरति । यदि तत्रापि कालवाचिशब्दः कालाभिमानिदेवतापरः, तदा न श्रुतिविरोध इति ।

अग्न्यादिशब्दानां कालवाचित्वाभावेन, "नैते सृती" इति निगमनाच्च कालविधिपरत्वायोगात् विषयव्यवस्थया निर्वाहो भाष्येऽनादृतः ।

अन्ये त्विदं सूत्रमेवं व्याचक्षते—**योगिनः**-प्राणायामेन वायुविजयपराः । योगिनः प्रति एतौ अयनरूपकालौ स्मर्येते । ते हि शक्नुवन्त्येव स्वच्छन्देन मर्तुममर्तुं चेति ॥

तदयुक्तम् ; प्रशस्तकाले मर्तव्यमिति विधिश्चेत्, अग्न्यादिकीर्तनस्य विफलत्वात् ; 'नैते सृती' इत्युक्तत्वात् श्रुतिसिद्धमार्गप्रत्यभिज्ञाभङ्गप्रसङ्गाच्च ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्य—हृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

शुभमस्तु

---

1 अस्य टीकाग्रन्थस्य गीताभाष्यस्य चैकरस्यं विमृश्यम् । शेषं भाष्यार्थदर्पणे ।

श्रीमते रामानुजाय नमः

## श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

### चतुर्थाध्याये तृतीयः पादः।

### अर्चिराद्यधिकरणम्—४-३-१

### अर्चिरादिना तत्प्रथितेः ॥ ४-३-१ ॥

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहात् गत्युपक्रम उक्तः। तस्य गच्छतो मार्ग इदानीं निर्णीयते। तत्र श्रुतिषु मार्गप्रकारा बहुधा आम्नायन्ते। छान्दोग्ये तावत्, "यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते, "अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न, अर्चिषमेवाभिसंभवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। तथाऽत्रैवाष्टमे, "अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति। कौषीतकिनश्च देवयानमार्गमन्यथाऽधीयते, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं [स[1] आदित्यलोकं] स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति। तथा बृहदारण्यके, "य एवमेतद्विदुः, ये चेमे अरण्ये श्रद्धां सत्यमुपासते ते अर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मासानुदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलोकादादित्यमादित्यात् वैद्युतं वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति" इति। तत्रैव पुनरन्यथा, "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति। तस्मै स तत्र विजिहीते, यथा आडम्बरस्य खम्। तेन स ऊर्ध्वमाक्रमते। स चन्द्रमसमागच्छति। तस्मै स तत्र विजिहीते, यथा दुन्दुभेः खम्" इत्यादि।

---

श्रीः ४-३

**अर्चिरादिना तत्प्रथितेः** ॥ पादसङ्गतिमाह **विदुष** इति। ब्रह्मविदो मार्ग इति दर्शयितुम्, 'यथा पुष्करपलाश आपो न श्लिष्यन्ते' इत्याद्युदाहृतम्। **शव्यम्**—शवयोग्यं संस्कारम्। **यत्**—यदि। शवसंस्कारं यदि कुर्वन्ति, यदि वा न कुर्वन्ति—अर्चिषमेव ते **अभिसंभवन्ति**। प्राप्नुवन्तीत्यर्थः। **उदङ्**। आदित्य इत्यध्याहार्यम्। **छान्दोग्ये** अर्चिरादिका गतिः श्रूयते ; **कौषीतकिवाक्ये** अग्निलोकादिका ; **बृहदारण्यके**ऽप्यर्चिरादिका ; तत्रैव वाय्वादिका च। **आडम्बरं**—वाद्यविशेषः। **अन्यत्र** विद्यान्तरे। किं विद्वान् अर्चिरादिनैव मार्गेण गच्छति, उत ततः मार्गान्तरेण वेत्यनियमः ;

---

[1] सर्वत्रोपलभ्यमानोऽपि स आदित्यलोकमित्ययम् अधिकपाठ इति भावप्रकाशिकायां वरुणाधिकरणटीकास्वारस्यदर्शनेन विचारितम्। न च प्राप्तपाठक्रमबाधेनेति तत्रत्यभाष्यविरोधः शंक्यः ; तस्य वायुवरुणपाठक्रमबाधपरत्वात्। कथञ्चित् स्थितनिर्वाहोऽपि तत्र कृतः। एतदभावपक्षे तत्रत्यटीका स्वरसा। श्रौतक्रमेण आदित्यस्यान्यत्रापनयनेऽवशिष्टमादाय वा पाठक्रमोक्तिः।

तत्र संशयः—किमर्चिरादिरेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव ब्रह्म गच्छति विद्वान्, उत तस्मादन्येऽन्यत्र मार्गा इति तैर्वाऽनेन वेत्यनियम इति। किं युक्तम्? अनियम इति। कुतः? अनेकरूपत्वात् नैरपेक्ष्याच्चेति ॥

एवं प्राप्तेऽभिधीयते—अर्चिरादिनेति। अर्चिरादिरेक एव मार्गः सर्वत्र प्रतिपाद्यते। अतोऽर्चिरादिनैव गच्छति। कुतः। तत्प्रथितेः—तस्यैव सर्वत्र प्रथितेः। प्रथितिः—प्रसिद्धिः। तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः। प्रत्यभिज्ञानात् स एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवत् अन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते। छान्दोग्ये तावत् उपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते; वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिरल्पान्तरः आम्नायते। अतस्तत्रापि स एवेति प्रतीयते। अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥१॥

इति अर्चिराद्यधिकरणम्।

वाय्वधिकरणम्। ४-३-२

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४-३-२ ॥

---

किं सर्वविद्यास्वेको मार्ग आम्नायते, उत नानामार्गा इति; किं क्रमान्तराम्नानात् नानामार्गसमाश्रयणं न्याय्यम्, उताऽऽदित्यादिप्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यमिति। नानामार्गाश्रयणस्य न्याय्यत्वे नानाविद्यासु नानामार्गाम्नानादनियमः। मार्गैकत्वाश्रयणे न्याय्ये, सर्वविद्यासु मार्गैकत्वाम्नानादर्चिरादिनैवेति नियमः। **अनेकरूपत्वा**दित्यनेन क्रमभेदः क्रमिभेदश्च विवक्षितः।

**एवं प्राप्त** इति। क्रमक्रमिभेदात् कथं मार्गैक्यमित्यत्राह—**सर्वत्रे**ति। प्रत्यभिज्ञानं दर्शयति **छान्दोग्ये तावदि**ति। **अल्पान्तर** इति। संवत्सरशब्दस्थाने देवलोकशब्द इति भावः। **सर्वत्र**—बहुषु प्रदेशेष्वित्यर्थः। परविद्यासु ब्रह्मप्रत्यभिज्ञानेऽपि गुणानन्त्यादुपसंहारो न शक्यत इति विद्यैक्यासंभवः। मार्गान्वयिनां पदार्थानां द्वादशसंख्यान्तर्भूतत्वात् चिन्तायोग्यतया अग्न्यादिप्रत्यभिज्ञानुगुण्येन मार्गैक्यमिति भिदा।

अत्र **परे** तु—भिन्नविद्याशेषत्वाच्च भिन्नत्वम्; 'अथैतैरेव रश्मिभिः' इत्यवधारणात्; 'यावत् क्षिपेन्मनः तावदादित्यं गच्छेत्' इति शैघ्र्यवचनाच्च इति पूर्वपक्षयुक्तीराहुः ॥ भिन्नविद्याशेषत्वेऽपि सुकृतदुष्कृतप्रहाणे भिन्नत्वादर्शनात् मन्दतया तदुपेक्षा। **रश्मिभिरेवे**त्ययोगव्यवच्छेदे एवकारमात्रस्य प्रमाणसिद्धबाधकत्वायोगात् अर्चिरादीनां देवतात्वेन मार्गदैर्घ्यहेतुत्वाभावेन शैघ्र्याविरोध इति वदनास्था। **अन्ये** तु—'**ये** चत्वारः पथयो देवयानाः' इति मन्त्रवर्णाद्बहुत्वावगमाच्च पूर्वपक्षमाहुः ॥ अर्चिरादिका, वाय्वादिका, सूर्यद्वारेणेति सूर्यादिका, रश्मिमती, देवलोकवती, वरुणलोकादिमती चेति चतुष्टयाधिक्यादमुमुक्षुविषयत्वाच्च तदनुपन्यासः। मन्त्रवर्णस्तु चातुराश्रम्याभिप्रायो वा, ऐष्टिकपाशुकसौमिकदार्विहौमिकगत्यभिप्रायो वा ॥ १ ॥

**वायुमब्दादविशेषविशेषाभ्याम्** ॥ सङ्गतिः स्फुटा। संवत्सरादित्ययोर्मध्यप्राप्तौ वायुदेवलोकौ किमनियतक्रमेण निवेशयितव्यौ, उत नेति; किं वायुदेवलोकशब्दावर्थान्तरपरौ, उत नेति; किं देवलोकशब्दस्य देवावासपरत्वं न्याय्यम्, उत वायोर्देवगृहत्वश्रवणानुरोधेन वायुपरत्वं न्याय्यम्।

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम्। तत्रार्चिरादिके मार्गे छन्दोगाः मासादित्ययोरन्तराले संवत्सरमधीयते, "मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इति। वाजसनेयिनस्तु तयोरेवान्तराले देवलोकम्, "मासेभ्यो देवलोकं देवलोकादादित्यम्" इति । उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ। तत्र मासादूर्ध्वमभिहितयोः संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि, "अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्" इत्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासादनन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते। अन्यत्र वाजसनेयिनः, "यदा वै पुरुषोऽस्माल्लोकात् प्रैति, स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति" इति आदित्यात् पूर्वं वायुमधीयते। कौषीतकिनस्तु, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्" इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते। तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोः, वाजसनेयिनाम्, "तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात् पूर्वं प्रवेशो निश्चीयते। अत आदित्यात् पूर्वं संवत्सरादूर्ध्वं देवलोको वायुश्च प्राप्तौ।

तत्रेदं चिन्त्यते—किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेत्, उतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेदिति। किं युक्तम्? भिन्नार्थत्वम्; प्रसिद्धेः। भिन्नार्थत्वे चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वाद्विशेषाभावाच्च यथेष्टम्।

इति प्राप्ते उच्यते—वायुमब्दात् इति। वायुं संवत्सरादूर्ध्वमभिगच्छेत्। कुतः। अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात्। देवलोकशब्दो ह्यविशेषेण—सामान्येन देवानां लोक इत्यनेन

---

देवावासपरत्वे न्याय्ये, तयोः शब्दयोरर्थान्तरपरत्वादनियतक्रमेण निवेशः, वायुपरत्वे सति अर्थान्तरपरत्वाभावादनियतक्रमेण निवेशाभावः स्यात्। **अर्चिरादिनैवे**त्यादि। संशयं वक्तुं विषयं शोधयति **तत्रे**त्यादिना। **श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डाः क्रमप्रमाणानि**। तत्र प्रातिपदिकाभिहितो विभक्त्यभिहितश्च श्रौत एवेति। अत्र पञ्चम्यभिहितं संवत्सरदेवलोकयोर्मासादूर्ध्वत्वमविशिष्टम्। तत्र संवत्सरस्य मासादूर्ध्वभावित्वे अधिककालानां न्यूनकालोत्तरनिवेशरूपार्थस्वभावोऽधिकहेतुरस्ति। अतो मासानन्तरं संवत्सरप्राप्तिः, तत ऊर्ध्वमादित्यात् पूर्वं देवलोक इति स्थितम्। बृहदारण्यकेऽन्यत्र आदित्यात्पूर्वं वायुः श्रुतः। कौषीतकिवाक्ये अग्नेः परत्वेन वरुणात् पूर्वत्वेन वायुः पाठक्रमसिद्धः। तत्र पाठक्रमात् बलीयसा वाजसनेयकोक्तश्रौतक्रमेण पाठक्रमप्राप्तस्याग्न्यनन्तरत्वस्य बाधितत्वात् आदित्यात् पूर्वमेव वायुः प्राप्तः, देवलोकश्च प्राप्तः। तत्र संशय इत्यर्थः। **'मासेभ्यो देवलोकं देवलोकादादित्यम्'** इति देवलोकस्यादित्यात् पूर्वत्वं पञ्चम्याभिहितम्। 'स ऊर्ध्वमाक्रमते' इति वायोरादित्यात्पूर्वत्वं प्रातिपदिकाभिहितम्। **विशेषाभावाच्चे**ति। यथा पूर्वं संवत्सरस्य मासानन्तरत्वे पञ्चमीमात्रादधिकः अधिककालानां न्यूनकालोत्तरनिवेशो हेतुरुक्तः—तथाऽत्र श्रुतिप्रमाणादधिकं प्रमाणं नास्तीत्यर्थः।

सिद्धान्तमाह **वायुमि**ति। **अविशेषविशेषाभ्याम्**—सामान्यविशेषाभ्याम्। देवलोकशब्दः

रूपेण वायुमभिधत्ते । "स वायुमागच्छति, तस्मै स तत्र" इति वायुशब्दो विशेषेण वायुमभिधत्ते । अतो देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत् । कौषीतकिनां वायुलोकशब्दश्चाग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते । वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते, "योऽयं पवते, एष[एव]देवानां गृहाः" इति ॥ २ ॥ इति वाय्वधिकरणम् ।

वरुणाधिकरणम् ४-३-३

**तटितोऽधि वरुणः संबन्धात् ॥ ४-३-३ ॥**

कौषीतकिनाम्, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स

---

सामान्यशब्दः ; वायुशब्दो विशेषः । लोकपरत्वव्यावृत्त्यर्थमाह **वायुश्चासा**विति । उक्तस्यावयवार्थस्य प्रामाणिकत्वं दर्शयति **वायुश्च देवाना**मिति ॥ ननु 'संवत्सरः खलु वै देवानां पूः' इति श्रुत्यनुरोधेन देवलोकशब्दस्य संवत्सरविषयत्वं किं न स्यात् ॥ नैवम् । संवत्सरस्य देवपुरत्वोक्तेः स्तुतिमात्रत्वात् ; वायोर्देवगृहत्वस्य वास्तवत्वात् ; अवास्तवप्रहाणेन वास्तवस्वीकारस्य न्याय्यत्वाच्च । ज्योतिर्मयक्रूरत्नवैमानिकदेवतागणस्य वायुपाशधृतत्वात् वायोर्देवगृहत्वं हि यथार्थः[1] ।

**परे चापरे** चाहुः—मासानन्तरमर्थक्रमात् संवत्सरः तदनन्तरं देवलोकः तदनन्तरं वायुरिति । **वायुमब्दा**दिति सूत्रनिर्देशः छान्दोग्यश्रुत्यपेक्षः, तत्र संवत्सरस्य पठितत्वादिति ॥

तदयुक्तम् । देवलोकवायुशब्दयोः सामान्यविशेषरूपेणैकार्थत्वे संभवत्यर्थभेदकल्पनानुपपत्तेः । देवलोकादूर्ध्वं वायोर्निवेशे सति **देवलोकादादित्य**मिति श्रौतक्रमभङ्गश्च । देवलोकस्य सूत्रेणानिरूपितत्वं च स्यात् ; वायोरब्दादूर्ध्वं निवेशपरत्वादस्य । सूत्रान्तराभावाच्च । संदिग्धेऽर्थे न्यायश्च वक्तव्य एव । 'स ऊर्ध्वमाक्रमते स आदित्यमागच्छति', 'देवलोकादादित्यम्' इति श्रौतक्रमसाम्यात् भवति च संशयः । वायुदेवलोकयोरेकत्वे च न संशयसंभवः । अत एव, **अविशेषविशेषाभ्या**मिति सौत्रपदस्य वायोरग्न्यानन्तर्ये शाब्दक्रमविशेषाभावात् आदित्यात् पूर्वत्वे ऊर्ध्वशब्देन विशेषावगमाच्चेति व्याख्यानमप्ययुक्तम् । अतो यथाभाष्यमेव सूत्रार्थः ।

**अन्यैस्तु**—वायुः किमग्नेरुपरि निवेशयितव्यः, उत संवत्सरस्योपरि, उतादित्यस्याधस्तादिति संशय उक्तः । तदचतुरम् ; अग्नेरानन्तर्यपक्षस्तावन्मन्दः,[2] तस्य पाठक्रमप्रतिपन्नस्य श्रौतक्रमेण स्फुटबाधात् । संशयशिरोन्तरद्वयं तु वायुदेवलोकयोरेकत्वेऽनुत्थितं स्यात् । अतः पृथक्त्वैकत्वे संशयितव्ये । एकत्वे नियमेन वायुप्राप्तिः, पृथक्त्वे विकल्पेन प्राप्तिश्च फलम् । अतः सहेतुकः सफलः संशयो भाष्योक्त एव ज्यायान् ॥ २ ॥

**तटितोऽधि वरुणः संबन्धात्** ॥ किं वरुणादयो यथापाठं निवेशयितव्याः, किं विद्युतोऽधीति ; किं वरुणस्य विद्युत्संबन्धानुरोध उपपन्नः, नेति ; अनुपपत्तौ यथापाठं निवेशः । उपपत्तौ विद्युतोऽधि निवेशः । **कौषीतकिनामि**त्यादिना वक्ष्यमाणार्थवैशद्याय पूर्वोक्तार्थं द्रढयति । तत्रार्चिषः प्राथम्ये,

---

1 यथाभूतोऽर्थो यथार्थः तात्त्विकार्थः ।

2 एतदधिकरणभाष्यार्थदर्पणे एतद्विषयविचारो द्रष्टव्यः ।

वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यत्राग्निलोक-शब्दस्यार्चिष्प[1](र्चिःप)र्यायत्वेन प्राथम्यमविगीतम् । वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः । आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन "देवलोकादादित्यमादित्याद्विद्युतम्" इति वाजसनेयकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहितस्य[2](तात्)वायोरुपरिनिवेशः सिद्धः । इदानीं वरुणेन्द्रादिषु चिन्ता । किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः, आहोस्विद्विद्युतोऽधीति विशये—अर्चिःप्रभृतिषु सर्वेषु "अर्चिषोऽहः" इत्यादिश्रुतिक्रमोपरोधात्, विद्युतः परस्ताच्च, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ[3] चोपदेशावैयर्थ्यायावश्यं कस्यचित् बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः । वाय्वादित्ययोः क्रमस्य बाधितत्वेन इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्यौ इति प्राप्ते—उच्यते तटितोऽधि वरुणः—इति । वरुणस्तावत् विद्युत उपरिष्टान्निवेशयितव्यः । कुतः । संबन्धात् ॥ मेघोदरवर्तित्वाद्विद्युतो वरुणेन संबन्धो लोकवेदयोः प्रसिद्धः ।

---

वायोः संवत्सरादूर्ध्वत्वे, आदित्यस्य वायोरूर्ध्वत्वे च कौषीतकिवाक्याविगानं [4]विगीतविषये तस्य दौर्बल्यं चाह निरूपितांशनिरूपणीयांशदर्शनार्थेन **कौषीतकिनामित्यादिना** । **आदित्यस्यापीति** । अत्र—कौषीतकिवाक्ये । **उपदेशावैयर्थ्यायेति** । क्रमिबाधादपि क्रमबाधो न्याय्य इति भावः । **इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्याविति** । वरुणे वाय्वनन्तरे सति इन्द्रप्रजापत्योरन्यत्र निवेशे क्रमद्वयभङ्गः स्यात् । तस्मादेकक्रममात्रभङ्गेन तयोरपि क्रमिणोः सावकाशत्वं युक्तमिति भावः ।

**वरुणस्तावदित्यादि** । विद्युच्च वरुणाभिमानविषय(यं)जलं च मेघोदरस्थम् । तत्र विद्युतः स्फुटतरदृश्यत्वात् सलिलस्य तथा दृश्यत्वाभावाच्च सलिलस्य विद्युत उपरि स्थितिर्गम्यते । एवमभिमानविषययोः संबन्धानुरूपम् अभिमानिदेवतयोरपि संबन्धो न्याय्य इति तटिदभिमानिन ऊर्ध्वं जलाभिमानी वरुण इति भावः । किञ्च द्युपर्जन्यपृथिवीक्रमेण पर्जन्यः स्वर्गादनन्तरस्थः ; तटित् ततोऽप्यधस्तात्, तटित्पुरुषस्योपरि वरुणो मेघोदरे ॥ तटित्संबन्धोऽस्तु ; तेन पाठक्रमं बाधित्वा

---

[1] अत्र षत्वस्यावश्यकत्वम्, तथा प्रायो भाष्यपाठः, पाठान्तरनिर्वाहश्च भावप्रकाशिकायाम् ।

[2] अभिहितादिति क्वचित्पाठ इति भावप्रकाशिकोक्त्या षष्ठ्यन्तपाठोऽप्यस्तीति सिद्धम् । पञ्चमीनिर्वाहश्च तत्रैव द्रष्टव्यः । टीकाप्रयोगेऽपि । एवं बहुत्र । देशान्वयविवक्षायां षष्ठी, तद्धर्मावधित्वविवक्षायां पञ्चमीति महाभाष्ये पञ्चमीप्रयोगाशयः स्यात् ।

[3] अप्राप्तावित्यस्यावैयर्थ्यैकदेशे वैयर्थ्येऽन्वयः । अथवा अप्राप्तौ आपतितायामिति, सत्यामिति वा पूरणीयम् ।

[4] अग्निप्राथम्यमविगीतम । इतरद्द्वयं विगीतम् ; वायौ अग्न्यानन्तर्यस्य वरुणे वाय्वानन्तर्यस्य च श्रौतक्रमतो बाधात् । एवमप्यस्मिन्नधिकरणे आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन वरुणादिनिवेशवशेनादित्यक्रम आक्षिप्तो भवति । एवञ्च भाष्ये उक्तः प्राप्तपाठक्रमः वायुवरुणयोः ; तद्बाधेनादित्यनिवेशः सिद्धः—पूर्वोक्तरीत्या स्वरसप्रतीतः पुनरिह स्थापनाच्च निश्चित इत्यर्थः ।

एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधि वरुणो निवेशयितव्यः। ततश्चामानवस्य गमयितृत्वं व्यवधानसह-मित्यवगम्यते। तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यनिवेशयितव्यस्य वरुणादुपर्यु-पदिष्टत्वात् आगन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ॥ ३ ॥

इति वरुणाधिकरणम्।

आतिवाहिकाधिकरणम् ४-३-४

## आतिवाहिकास्तल्लिङ्गात् ॥ ४-३-४ ॥

इदमिदानीं चिन्त्यते—किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढार इति। किं तावद् युक्तम्?। मार्गचिह्नभूता इति। कुतः। उपदेशस्य तथा-विधत्वात्। दृश्यते हि लोके ग्रामादीन् प्रति गन्तृणामेवंविधो देशिकैरुपदेशः—'इतो निष्क्रम्यामुकं वृक्षममुकां नदीममुकं च पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इति। अथवा भोगभूमय एताः स्युः, कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेः; अन्यस्य च मार्गचिह्नभूतस्यैतेषामन-भिधायकत्वात्। भोगभूमित्वं च, "एत एव लोकाः यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः'

---

कथं तडिदुपरि वरुणनिवेशः; कथं वेन्द्रप्रजापत्योस्तत्रावकाश इत्यत्राह **एतदुक्त**मिति। अर्थक्रमस्य पाठक्रमात् बलीयस्त्वेन वरुणस्य तडिदुपरि निवेशः। कौषीतकिपाठक्रमानुरोधात्, आगन्तूनामन्ते निवेशयितव्यत्वरूपात् **मीमांसा**सिद्धन्यायाच्चेन्द्रप्रजापत्योर्वरुणोपरि निवेशः॥ तडितो गमयितृत्वा-व्यवधानाय वरुणस्तडितः पूर्वं निवेश्यः; [1]तथा सति मेघोदरसंबन्धरूपार्थक्रमोऽपि स्यादिति चेन्न—-तथा सतीन्द्रप्रजापत्योर्यथापाठं वरुणतडिन्मध्यनिवेशेऽर्थक्रमभङ्गात्। तडिदानन्तर्ये वरुणेन्द्रप्रजापतीनां पाठक्रमभङ्गप्रसङ्गः। तस्मात् पाठक्रमानुरोधेनार्थक्रमानुविधाने संभवति न पाठक्रमभङ्गो युक्तः। तडितो गमयितृत्वमव्यवहितमिति न श्रुतम्। तस्मात् तस्य गमयितृत्वं व्यवधानसहमिति अयमेव क्रम इत्यर्थः।

अत्रास्मदाचार्याणां वरदमिश्राणामयं श्लोकः—

"अर्चिरहस्सितपक्षान् उदगयनाब्दमरुदर्केन्दून्।
अपि वैद्युतवरुणेन्द्रप्रजापतीन् आतिवाहिकानाहुः॥" इति ॥ ३ ॥

**आतिवाहिकास्तल्लिङ्गात्**॥ अन(वा)न्तरसङ्गतिः स्फुटा। किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, उतातिवोढारः इति; किं लौकिकोपदेशप्रक्रमानुरोधो न्याय्यः, किम् 'एत एव लोका यदहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सराः' इति वाक्यानुरोधो युक्तः, उत गमयितृत्वलिङ्गानुरोध उचितः। आद्ये मार्गचिह्नत्वम्, द्वितीये भोगभूमित्वम्, तृतीये त्वातिवाहिकत्वम्। **अथवे**त्यादि। भोगभूमित्वस्या-प्यवाचकाः शब्दा इत्यत्राह **एत एव लोका** इति। लोका अहरादिशब्दवाच्या इति अस्य वाक्यस्यार्थ इति पूर्वपक्षिणो हृदयम्। अत्राहरादिकालविशेषाणां लोकशब्दवाच्यत्वमुक्तं स्यात्; न भोगभूमीनाम-

---

[1] श्रौतक्रमापेक्षया अर्थक्रमस्य दुर्बलत्वात् वरुणानन्तरं विद्युद्ग्रहणं न भवति, चन्द्रमसो विद्युतमिति तस्याश्चन्द्रानन्तर्यादिति समाधौ वक्तव्येऽपि, वायुवरुणपाठक्रममर्थक्रमश्चाहत्य प्रश्नस्य कृतत्वात् अर्थक्रमपाठक्रमभंगमेव दोषमाह तथासतीति।

इत्यहरादीनां लोकत्ववचनादुपपद्यते । अत एव च कौषीतकिनः, "अग्निलोकमागच्छति" इत्यादिना लोकशब्दानुविधानेनार्चिरादीन् पठन्तीति ।

एवं प्राप्ते ब्रूमः, आतिवाहिकाः इति । विदुषामतिवाहे परमपुरुषेण नियुक्ता आतिवाहिकाः देवताविशेषा एतेऽर्चिरादयः । कुतः । तल्लिङ्गात्—अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम् । गमयितृत्वं च, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव संबन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतान् अभिमानिदेवताविशेषान्, "तं पृथिव्यब्रवीत्" इतिवत् ॥ ४ ॥

यद्येवम्, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति वैद्युतस्यैव पुरुषस्य ब्रह्म गमयितृत्वश्रुतेः, विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत्राह—

वैद्युतेनैव ततस्तच्छ्रुतेः॥ ४-३-५ ॥

ततः—विद्युत उपरि, वैद्युतेन—अमानवेनैवातिवाहिकेन विदुषामाब्रह्मप्राप्तेः गमनम् । कुतः । तच्छ्रुतेः । "स एनान् ब्रह्म गमयति" इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु अनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव ॥ ५ ॥ इति आतिवाहिकाधिकरणम् ॥

---

हरादिशब्दवाच्यत्वमित्यत्राह **अत एव च कौषीतकिन** इति । **लोकशब्दानुविधानम्**—अनुवृत्तिः । 'तस्मै स तत्र विजिहीते' इत्यपि [1]लोकत्वसाधकहेतुरर्थसिद्धः ।

राद्धान्तमाह **एवमिति** । तर्ह्यर्चिरादिशब्दाः कथं देवतावाचिन इत्यत्राह **वदन्ति चेति** । 'तं पृथिव्यब्रवीत्', 'आपो वा अकामयन्त', 'अग्निर्वाग् भूत्वा मुखं प्राविशत्', 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' इतिवदिति भावः ॥ ४ ॥

उत्तरसूत्रशङ्कामाह **यद्येवमिति** । **वैद्युतेनैव ततस्तच्छ्रुतेः** ॥ ततश्शब्दस्य पश्चाद्भावपरत्वव्यावृत्त्यर्थं व्याचष्टे **ततो विद्युत** इति । तर्ह्यातिवाहिकेषु वरुणादीनामन्वयः कथमित्यत्राह **वरुणादयस्त्विति** ।

**परेषां** पक्षे नातीव विरोधः । सगुणोपासकविषयमित्येतावत्तु पूर्वमेव प्रत्युक्तम् । **तेषामपरेषां** च पक्षे उपपादनप्रकारवैषम्यमेव, न तूपपाद्यवैषम्यम् । 'स एनान् ब्रह्म गमयति' इति गमयितुरमानवत्वं दर्शयति । इदं च विशेषणं मानवगमयितृ[त्व]व्यवच्छेदकत्वात् पूर्वेषां मानवत्वेव गमयितृत्वे लिङ्गम् । **अमानवत्वं** नाम—मनोर्देशातिगत्वम् । अचेतनानामग्न्यादीनां गमयितृत्वायोगात्, संपिण्डितकरणग्रामस्योत्क्रान्तस्यापि स्वातन्त्र्येण गमनायोगात् अर्चिराद्यभिमानिनो देवा आत्मनो गमयितारोऽभ्युपगन्तव्या इति ॥

अमानवशब्दस्य यौगिकत्वेऽपि व्यवच्छेद्यस्य मानवत्वं गमयेत्, न तु गमयितृत्वम्; विशेषणं हि स्वप्रत्यनीकाकारयोगं व्यवच्छेद्यस्य दर्शयति, न स्वाकारान्तरसाम्यम् । चन्द्रमसा संवादादिदर्शनादत्यन्तापटुकरणत्वमपि दुर्वचम् । अतस्तदनादरः ।

अन्ये तु—वरुणस्य तटित्संबन्धो वर्षद्वारकः । स तस्य वाय्वादित्याभ्यामपि तुल्यः; 'वायुर्वै वृष्ट्या ईशे । तस्माद्वायुप्रच्युता दिवो वृष्टिः' इति, 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति'

---

1 स तत्रेति लोकस्यापि सप्तम्यन्तपदेनोक्तेरिति भावः । 'विजिहीषेत'इति त्वशुद्धः पाठः ।

इति च तयोर्वृष्टिहेतुत्वश्रवणात् । ततश्च केवलार्थक्रमेण विद्युत उपरि निवेशनादपि पाठक्रमसहकृतार्थक्रमवशादादित्यस्याधस्ताद्वरुणो निवेशनीय इति सिद्धान्तयन्ति । **तटितोऽधी**ति सूत्रं विद्युत उपरि वरुणनिवेशनपरं व्याख्यातम्[1] । तत्र वाय्वादित्यतटिद्भिः संबन्धस्य समानतयाऽतिप्रसङ्गपरिहारार्थं शङ्कान्तरमेवमुपन्यस्तम्—'स एनान् ब्रह्म गमयति' इति श्रवणाद्विदुषामन्येन नेतव्यत्वं प्रतीयते; न तु स्वयं गन्तृत्वम् । तत्र प्रजापतिरिन्द्रश्च चेतनत्वात् स्वस्वलोकावधि नेतारौ, विद्युतस्त्वचेतनत्वात् इन्द्रलोकावधिनेतृत्वानुपपत्तेर्नेतृविशेषाकाङ्क्षायां वरुणस्य विद्युत्सम्बन्धश्चास्तीत्याकाङ्क्षासहकृतात् संबन्धाद्विद्युत उपरि वरुणो निवेशनीय इत्युक्त्वा—तर्ह्यर्चिरादीनामप्यचेतनत्वेन नेतृत्वानुपपत्तेस्तत्रापि नेतृभिरन्यैर्भवितव्यमिति । शङ्कापरिहारार्थमर्चिरादीनां चेतनत्वेन नेत्रन्तरनैराकाङ्क्ष्यप्रतिपादकम् **आतिवाहिकाः** इत्यादि सूत्रं व्याख्यातम् । अस्मिन् सूत्रे मार्गपरत्वं भोगभूमित्वं चार्चिरादीनां पूर्वपक्षीकृत्य देवतात्वं समर्थितम् । तलवकारिणाम्, 'गुहासि देवोऽसि' इत्यादिश्रुतौ, 'तमग्निरभिप्रवहति, तं वायुरभिप्रवहति' इत्यादिना पृथिवी अग्निर्वायुरन्तरिक्षलोको दिशोऽहोरात्रे अर्धमासा मासा ऋतवः संवत्सरो दिव्यगन्धर्वाप्सरसो द्यौर्देवा आदित्यश्चन्द्रमाः इत्यातिवाहिका उच्यन्ते । त एवैते अर्चिरादयः ; तत्तन्नामधेयक्रमप्रत्यभिज्ञानलिङ्गात् । 'देवानामेव महिमानं गत्वा आदित्यस्य सायुज्यं गच्छति' इति विदुषां तत्र सायुज्यप्राप्तिरर्चिरादीनां देवतात्वे लिङ्गम् । अतो न तत्र नेत्रन्तरापेक्षा । विद्युतस्त्वचेतनतया तदपेक्षाऽस्तीति तस्या उपरि वरुणो नेतेति पूर्वपक्षं परिसमाप्य सिद्धान्त उच्यते—**वैद्युतेनैवे**ति सूत्रेण । 'आदित्याद्वैद्युतं वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति अमानवस्य पुरुषस्य ब्रह्मलोकगमयितृत्वं वैद्युतस्यापादानत्वं चावगम्यते । अतो विद्युदभिमानी पुरुषो वैद्युतः, स च ब्रह्मलोकादर्वाचीनेषु लोकेषु नेतेति प्रतीतम् । अतो नेत्रन्तरनिराकाङ्क्षत्वाद्वरुणो यथाश्रुति वायोरुपर्येव वर्तते, न तु तस्यास्ति नेतृत्वमिति सिद्धान्तसूत्रं वर्णयन्ति ॥

अत्रोच्यते—आदित्यादधस्ताद्वरुणनिवेशनस्य सिद्धान्तितत्वं तावदयुक्तम् । पाठक्रमार्थक्रमयोरुभयोरपि श्रौतक्रमबाध्यत्वात् । 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम् ; तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति, 'देवलोकादादित्यम्' इति च वायोरनन्तरमादित्यस्य श्रौतक्रमप्राप्तत्वात् तयोर्मध्ये, 'स वायुलोकं, स वरुणलोकं, स आदित्यलोकम्' इति पाठक्रमानुरोधेन वरुणनिवेशनं हि श्रौतक्रमबाधितं स्यात् । एतदुक्तं भवति—वाय्वादित्ययोर्मध्ये तटित उपरि च वरुणनिवेशनमर्थक्रमप्राप्तम् । तत्र वाय्वादित्ययोरर्थक्रमस्य श्रौतक्रमबाधितत्वादबाधितार्थक्रमेण तटित उपरि वरुणनिवेशनमेव युक्तमिति । किञ्च अर्थक्रमानुगृहीतपाठक्रमेण क्रमनिर्णये कर्तव्ये वृष्टिहेतुत्वलक्षणार्थक्रमसचिवेन 'स आदित्यलोकं, स इन्द्रलोकं स प्रजापतिलोकम्' इति पाठक्रमेणादित्यादुपरि इन्द्रनिवेशनप्रसङ्गः ॥ 'आदित्याच्चन्द्रमसम्' इति श्रौतक्रमविरोधात् तदयुक्तमिति चेत्—पूर्वदर्शितक्रमविरोधात् वायोरूर्ध्वं वरुणनिवेशनमप्ययुक्तम् । यतः श्रौतक्रमाविरोधात् विद्युतः परं वरुणनिवेशनमेव युक्तम् , अत एव **तटितोऽधी**ति सिद्धान्तसूत्रम् ;

---

1 व्याख्यातमित्यत्र पूर्वपक्षतयेति शेषः । शङ्कान्तरमुपन्यस्तमित्यस्य उक्त्वेत्येतदनन्तरं संबन्धः ।

## कार्याधिकरणम् ४-३-५

### कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४-३-६ ॥

अर्चिरादिनैव गच्छति विद्वान्; अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम् । इदमिदानीं चिन्त्यते—किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान् नयति, उत परमेव ब्रह्मोपासीनान्, अथ परब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति विशये—कार्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते । कुतः । अस्य—हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः । न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते ; प्राप्तत्वादेव । नित्यप्राप्तपरब्रह्मविषयाविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यम् । कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यर्थं गमनमुपपद्यते । अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयति ॥ ६ ॥

### विशेषितत्वाच्च ॥ ४-३-७ ॥

---

न तु पूर्वपक्षविषयम् । अत एव **आतिवाहिका** इत्यादिसूत्रद्वयमधिकरणान्तरं भवितुमर्हतीति तस्य परोक्तयोजनाऽनुपपन्ना[1] ॥ ५ ॥ इति आतिवाहिकाधिकरणम् ॥

**कार्यं बादरिरस्य गत्युपपत्तेः** ॥ अवान्तरसङ्गतिमाह **अर्चिरादिनैवेति** । **कार्यं हिरण्यगर्भमुपासीनानिति** । कार्योपासकस्य कार्यप्राप्तिः, परोपासकस्य परप्राप्तिश्च तत्क्रतुन्यायसिद्धा । अत उपासितृविशेषे निश्चिते प्राप्तिसंदेहाभावात् संशयस्योपासितृभेदमूलत्वात् 'स एनान्' इत्युपासितॄणां प्रतिपन्नत्वाच्च **उपासीना**नित्यध्याहृतम् । **नयति**पदं सिद्धान्तसूत्रादाकृष्टम् । किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनानेव नयति, उत परं ब्रह्म उपासीनानेव, उत परं ब्रह्म उपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति; किं परब्रह्मणि प्राप्ये गतिब्रह्मलोकशब्दावुपपद्येते, नेति; ब्रह्मोपासीनानामेव गमयितृत्वे 'तद्य इत्थं विदुर्ये चेमे' इत्यादिवाक्यसामञ्जस्यमस्ति, नेति । यदा नोपपद्येते, तदा कार्यमुपासीनानेव नयेत् । यदा गतिब्रह्मलोकशब्दावुपपद्येते, यदा च 'तद्य इत्थम्' इत्यादिवाक्यसामञ्जस्यमस्ति, तदा ब्रह्मोपासीनानेव नयेत् । यदा सामञ्जस्यं नास्ति, तदा परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्च नयेत् । उपास्तिनयत्योर्द्वयोरपि कर्म हिरण्यगर्भः । **कार्यमुपासीना**नित्यादि । सर्वगत्वात् ब्रह्मणः, मुक्तेन तत्प्राप्त्यर्थं न क्वचिद्गन्तव्यम् । सर्वगतत्वेऽपि देशविशेषप्राप्तानेव जानाति, नान्यमिति न नियमोऽस्ति, येन क्वचिद्गन्तव्यम् ; सर्वज्ञत्वात् । क्वचित् कल्याणगुणपूर्तिः, क्वचिदपूर्तिरिति न तदर्थं गन्तव्यम् ; सर्वतः परिपूर्णत्वात् । संबन्धविशेषसंपादनाय नान्यत्र गन्तव्यम् ; सर्वात्मत्वात्—इति विशेषणानां तात्पर्यम् । नित्यप्राप्तिश्चेत्, उपासनावैयर्थ्यमित्यत्राह **नित्यप्राप्तेति** ॥

**विशेषितत्वाच्च** ॥ 'एतं ब्रह्मलोकं न विन्दन्ति' इत्यादिषु कर्मधारयः स्वीकृतः । तद्व्यावृत्त्यर्थं

---

1 अत्र आतिवाहिकसूत्रेणैव विद्युतोऽपि चेतनत्वे सुवचे वैद्युतसूत्रं न तदर्थमिति तत्रापि भाष्योक्त एवार्थः । वैद्युतामानवयोर्भेदस्तु यादवप्रकाशोक्तः नास्मत्संमत इति वक्तव्यं विस्तरभियोपेक्षितम् । विस्तरः श्रीदेशिकग्रन्थेषु अस्मदीये बृहदारण्यकपरिष्कारे च ।

"पुरुषो मानस एत्य ब्रह्मलोकान् गमयति" इति लोकशब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेव गमयतीति विशेष्यते । किञ्च, "प्रजापतेः सभां वेश्म प्रपद्ये" इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतः प्रत्यभिसंधत्ते ॥ ७ ॥

नन्वेवम्, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्ययं निर्देशो नोपपद्यते ; हिरण्यगर्भनयने हि 'स एनान् ब्रह्माणं गमयति' इति निर्देष्टव्यं स्यात्, अत आह—

**सामीप्यात्तु तद्व्यपदेशः ॥ ४-३-८ ॥**

"यो ब्रह्माणं विदधाति" इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात् तस्य ब्रह्मशब्देन व्यपदेश इति गत्यनुपपत्ति-विशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयत इत्यर्थः ॥ ८ ॥

अथ स्यात्—अर्चिरादिना हिरण्यगर्भप्राप्तौ, "एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते", "तयोर्ध्वमायन्नमृतत्वमेति" इत्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते ; हिरण्यगर्भस्य कार्यभूतस्य द्विपरार्द्धकालावसाने विनाशशास्त्रात्, "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति वचनात् हिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वादिति । अत्राह—

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ३-४-९ ॥**

कार्यस्य—ब्रह्मलोकस्यात्यये तदध्यक्षेण हिरण्यगर्भेणाऽऽधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतविद्यः अतः—कार्याद्ब्रह्मलोकात् परं ब्रह्म प्राप्नोतीति, अर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात्, "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ॥ ६ ॥

**स्मृतेश्च ॥ ४-३-१० ॥**

स्मृतेश्चायमर्थोऽवगम्यते, "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति । अतः कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥

---

**बहुवचनेन चे**त्युक्तम् । बहुवचनान्तलोकशब्दे तात्पर्यम् ॥ ७ ॥

उत्तरसूत्रशङ्कामाह **नन्विति । सामीप्यात्तु तद्व्यपदेशः** ॥ **गत्यनुपपत्तिविशेषणादिभिरिति । आदिशब्देन** ब्रह्मेति निर्देशोपपत्तिर्गमनोपपत्तिश्च विवक्षिता । कार्ये कारणोपचार इत्यर्थः ॥ ८ ॥

उत्तरसूत्रशङ्कामाह **अथ स्यादिति । कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्** । अयमर्थः कथमवगत इत्यत्राह **ते ब्रह्मलोक** इति । **परामृतात्**—परामृतं प्राप्य । [1]ल्यब्लोपे पञ्चमीति पूर्वपक्षिणोऽभिप्रायः ॥ ९ ॥

**स्मृतेश्च ॥ परस्य**—ब्रह्मायुषः ॥ १० ॥

---

1 असन्मत इव परमात्मनस्तन्मते सिद्धोपायत्वायोगात् पञ्चम्यनुपपत्तिरित्यत्राह ल्यबिति । परान्तकाले इत्यस्य अन्तिममरणकाले इत्यप्यर्थसंभवात् कार्यलोकात्यये तदध्यक्षेण सहैव प्राप्तिरित्यर्थो न लभ्यत इति शंकापरिहाराय, स्मृतेश्चेति सूत्रम् । एवञ्च स्मृत्यनुसारात् परस्य ब्रह्मायुषः अन्तकाले इति तस्यार्थः (पूर्वपक्षे) । अन्यथा परान्तकाले इति पदवैयर्थ्यञ्च ।

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते—

परं जैमिनिर्मुख्यत्वात् ॥ ४ ३ ११ ॥

परं ब्रह्मोपासीनमेवार्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते । कुतः । मुख्यत्वात् । 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणम्; परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिशास्त्रात् । यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा, "तमेतं वेदानुवचनेन" इत्यादिशास्त्रादवगम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते । विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् ।

यत्तु ब्रह्मलोकानिति लोकशब्दबहुवचनाभ्यां विशेषणात् कार्यभूतहिरण्यगर्भप्रतीतिरिति— तदयुक्तम्; निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात् । अर्थस्य चैकत्वे[1] निश्चिते बहुवचनस्य, 'अदितिः पाशान्' इतिवदुपपत्तेः । परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति; श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥

दर्शनाच्च ॥ ४-३-१२ ॥

दर्शयति च श्रुतिः मूर्द्धन्यनाड्या निष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम्, "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति ॥ १२ ॥

यदुक्तम्, "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यर्चिरादिना गतस्य प्रत्यभिसंधिर्दृश्यत इति, तत्रोत्तरम्—

---

अत्रेति । **पक्षान्तरपरिग्रहेण**—पूर्वपक्षात् पक्षान्तरेण; न तु कृत्स्नसिद्धान्तेनेत्यर्थः ॥ **परं जैमिनिर्मुख्यत्वात्** ॥ **विद्यानिष्पत्तिः** । विद्या हि स्वमाहात्म्यात् सूक्ष्मशरीरस्थितिहेतुरनुवर्तते, तस्या **निष्पत्तिः** कार्यकरत्वावस्थापत्तिः । यद्वा **निष्पत्तिर्**नितरां विकासः । सा गतिसापेक्षेत्यर्थः । नित्यत्वेऽपि कालविशेषापेक्षावत् सर्वगतत्वेऽपि देशविशेषापेक्षा युक्तेति भावः । नित्यमुक्ततया कालविशेषापेक्षा न चेत्, शास्त्रवैयर्थ्यं प्रत्यक्षविरोधश्च । उत्क्रान्त्यनुपपत्त्या न गतिरिति चेत्—तत्राह विदुष इति । यत्त्वित्यादि । **नात्यन्ताय न सन्तीति** । **न न सन्ति**—निषेधप्रसङ्गो नास्ति; सन्त्येव; अत्यर्थं सन्त्येवेत्यर्थः । **परमव्योम**शब्दादीनां हृदयगुहादिस्थानपरत्वापादनेन लोकविशेषापलापो न युक्तः; "क्षयन्तमस्य रजसः पराके", "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्य आत्मविदो विदुः", "तदक्षरे परमे व्योमन्" इत्यादिभिर्दुरपह्नवत्वादिति प्रमाणदार्ढ्यं विवक्षितम् ॥ ११ ॥

**दर्शनाच्च** ॥ उत्थायोपसंपत्तिवचनेन[2] देवयानेन प्राप्तिसिद्धिः ॥ १२ ॥

उत्तरसूत्रशङ्कामाह **यदुक्तमिति** । **न च कार्ये प्रत्यभिसन्धिः** ॥ उपपादकवाक्यवशात्

---

1 एकत्व इति । न हि पूर्वपक्षेऽपि एकैकोपासकप्राप्यं कार्यं ब्रह्मलोकस्यानेकत्वमिति भावः ।

2 इदमुपलक्षणम्—उपरि अपराजितनगरी-आदित्यमहापथ-शताधिकनाड्यादिवचनात् ।

## न च कार्ये प्रत्यभिसन्धिः ॥ ४-३-१३ ॥

न चायं प्रत्यभिसन्धिः कार्ये हिरण्यगर्भे; अपितु परस्मिन्नेव ब्रह्मणि । वाक्यशेषे, "यशोऽहं भवामि ब्राह्मणानाम्" इति तस्याभिसन्धातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात् । "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इत्यभिसंभाव्यस्य ब्रह्मलोकस्याकृतत्वश्रवणात् । सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात् । अतः परमेव ब्रह्म उपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान् स्वमतेन सिद्धान्तमाह—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॥ ४-३-१४ ॥

अप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते । एतदुक्तं भवति—कार्यमुपासीनान् नयतीति नायं पक्षः संभवति । परमेवोपासीनानित्ययमपि नियमो नास्ति । न च प्रतीकालम्बनानपि नयति । अपि तु ये परं ब्रह्मोपासते, ये चाऽऽत्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते—तान् उभयविधान्नयति । ये तु ब्रह्मकार्यान्तर्भूतं नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवद्ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते, न तान्नयति । अतः परं ब्रह्मोपासीनान् आत्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयति—इति । कुतः । उभयथा च दोषात् । कार्यमुपासीनान्नयतीति पक्षे, "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य" इत्यादिकाः श्रुतयः प्रकुप्येयुः । परमेव ब्रह्मोपासीनानिति च नियमे, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति" इति पञ्चाग्निविदोऽर्चिरादिर्गणो नयतीति श्रुतिः प्रकुप्येत् । अत उभयस्मिन्नपि पक्षे दोषः स्यात् । तस्मादुभयविधान्नयतीति । तदेतदाह—

---

परस्मिन्नेवेत्युक्तम् ॥ १३ ॥

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च** ॥ प्रतीकालम्बनव्यतिरिक्त एव हि परं ब्रह्मोपासीनः । तं नयतीति दर्शनात् जैमिनिमतात् सिद्धान्तिमतस्य को विशेष इत्यत्राह **एतदुक्तमिति** । [1]कार्यमुपासीनोऽपि प्रतीकालम्बनः; नामादिषु ब्रह्मदृष्ट्योपासीनश्च प्रतीकालम्बनः । **नचप्रतीकालम्बनानित्यत्र प्रतीकालम्बन**शब्दो दृष्ट्युपासनपरमाह, [2]गोबलीवर्दन्यायात् । प्रतीकालम्बनव्यतिरिक्तेषु केषांचिदर्चिरादिगतिर्जैमिनिनोक्ता । प्रतीकालम्बनव्यतिरिक्तत्वोपाधिर्येषु, तान् सर्वान् नयतीति सिद्धान्तिमतमिति विशेषः । **कार्यमुपासीनान् नयतीति नायं पक्ष इति** । हिरण्यगर्भोपासीनानामर्चिरादिगतिरनुपपन्ना; अर्चिरादिना गतस्य परब्रह्मप्राप्तेः । न हि हिरण्यगर्भोपासकस्य परब्रह्मप्राप्तिः । यथोपासनं हि फलम् । तस्मादर्चिरादिना परब्रह्मोपासक एव

---

1 को विशेष इत्यत्र प्रतीकालम्बनव्यतिरिक्तसर्वग्रहणं विशेष इत्युत्तरं वक्तुं प्रतीकालम्बनशब्दस्यार्थं भाष्याविरोधञ्चाह—कार्यमित्यादिना ।

2 भाष्येऽत्र कार्योपासकरूपस्य प्रतीकालम्बनस्य पृथगुक्तत्वादत्र परं तदतिरिक्ते पर्यवासानमिति इहैव गोबलीवर्दन्यायः । उत्तरभाष्यानुसारात्तु सूत्रे सर्वग्रहणमिति भावः । 'आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः प्रतीक इति वृद्धाः' इति भामत्यां भावोऽन्यः । तत्र प्रतीक इति प्रथमान्तम् ।

तत्क्रतुश्चेति। तत्क्रतुः--तथोपासीनस्तथैव प्राप्नोतीत्यर्थः, "यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति", "तं यथा यथोपासते" इति न्यायात्। पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात् अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च अत एव तत्क्रतुन्यायात् प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम्। नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते ॥ १४ ॥

तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह—

**विशेषं च दर्शयति ॥ ४-३-१५ ॥**

"यावन्नाम्नो गतम्, तत्रास्य यथाकामचारो भवति" इत्यादिका श्रुतिर्नामादिप्राणपर्यन्तप्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति।

---

गच्छति ; न कार्योपासक इत्यर्थः। उदाहृतश्रुतिवाक्यप्रतिपन्नयोरन्यतरस्य प्रतीकालम्बनत्वात् **अप्रतीकालम्बनान्** नयतीति प्रतिज्ञानं व्याहतमित्यत्राह **पञ्चाग्नीति**। तत्र प्रतिपन्नयोरुभयोरप्यप्रतीकालम्बनत्वं साधयितुं[1] सूत्रकारः **तत्क्रतुश्चे**त्युक्तवानित्यर्थः। 'तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यत्र पञ्चाग्निविद्यानिष्ठस्यार्चिरादिगतिश्रवणात् तया गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणात् फलस्य च यथोपासनभावित्वात् अर्चिरादिना ब्रह्मप्राप्तिफलोपासननिष्ठः पञ्चाग्निविद्यानिष्ठो ब्रह्मोपासक एव। तत्र, 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति विभागान्यथानुपपत्त्या स्वात्मविशिष्टब्रह्मोपासनं ब्रह्मात्मकस्वात्मोपासनं चेति कल्प्यम् ; ब्रह्मप्राप्त्यानुगुण्यात् पृथङ्निर्देशवैयर्थ्याच्चेत्यर्थः। के पुनरत्र प्रतीकालम्बना इत्यत्राह **नामादीति**॥ १४ ॥

**विशेषं च दर्शय**ति ॥ **यावन्नाम्नो गतम्**—देवादिनाम्नो गोचर इत्यर्थः। [2]**ब्रह्मणा सह ते सर्वे** इत्यादिवचनं नार्चिरादिगतपुरुषविषयम्, अपि तु चतुर्मुखलोकस्थयोगिविषयम्। **ते ब्रह्मलोके** इति— ब्रह्मैव लोको **ब्रह्मलोकः** ; तत्र वर्तमाना ब्रह्मनिष्ठाः **परान्तकाले**—'अन्तकाले च मामेव' इत्युक्तचरमदेहावसानसमये **परामृतात्**—प्रसन्नात् ब्रह्मणो हेतोः, सर्वे परिमुच्यन्त इत्यर्थः। **ब्रह्मलोक**शब्दस्य कर्मधारयः स्वतः प्राप्तः। वर्तमानशब्दाध्याहारस्तुल्यः। **अन्तकाल**शब्दस्य

---

1 ननु पञ्चाग्निवित् कथमप्रतीकालम्बनः इत्यत्राह तत्क्रतुश्चेति। पञ्चाग्निवित् प्राप्यपरविषयकोपासनवांश्च भवतीति पञ्चाग्निविच्च परविषयकोपासनवानिति वाऽर्थः। नायं पञ्चाहुतिमत्त्वोपासकः, संसारित्वापत्तेः। नापि शुद्धचिन्मात्रोपासकः, कैवल्यविभ्रमापत्तेः। अतो ब्रह्मात्मकस्वोपासनात् नैष प्रतीकालम्बनः। यदि पञ्चाग्निविदपि 'येचेमेऽरण्ये' इत्युक्तोपासनसाहित्येनैव ब्रह्माप्नोतीति जैमिनिमतम्, तदयुक्तम् ; येइत्थं येचेमे इति यच्छब्दद्वयश्रवणावगतव्यक्तिभेदादिभंगप्रसंगादिति भावः।

2 पूर्वपक्षिदर्शितयोर्वचनयोः सिद्धान्तेऽर्थं भाष्येऽनुक्तत्वात् स्वयमाह—ब्रह्मणेत्यादिना। श्रुतेरस्यास्याः भक्तियोगरहित ब्रह्मलोकगन्तृसंन्यस्तपुरुषविषयकत्वेऽपि न सिद्धान्तहानिरिति भाष्य तद्व्याख्यानोपेक्षा। वास्तवार्थस्तु दीपे गीताभाष्ये च दर्शितः।

[1]तस्मादचिन्मिश्रं केवलं वा चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते, न तान् नयति ; अपि तु परं ब्रह्मोपासीनान् आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् आतिवाहिको गणो नयतीति सिद्धम् ॥ १५ ॥ इति कार्याधिकरणम् ।

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य तृतीयः पादः ॥
श्रीरस्तु

---

चरमदेहावसानपरत्वं स्मृतिप्रसिद्धम् । अतोऽस्मिन्नेव पक्षे स्वारस्यम् । अधिकरणार्थमुपसंहरति **तस्मा**दिति ।

अत्र **परेषां** पूर्वपक्षसूत्राण्येव सिद्धान्तसूत्राणि, **परं जैमिनि**रित्यादिसूत्रत्रयं पूर्वपक्षविषयम् । तत्तु सर्वाधिकरणरीतिविरोधात् **सूत्रकारा**भिप्रायविरुद्धम् । सत्यपि सिद्धान्तोपक्रमेऽधिकरणे सिद्धान्तावसानत्वं सर्वत्र दृष्टम् ; न तु पूर्वपक्षावसानत्वम् ॥ परविद्याप्रकरणे गतिकीर्तनं स्तुत्यर्थमित्यनुपपन्नम् ; अन्यफलतयाऽवगम्यमानेनान्यस्तुत्यनुपपत्तेः । गतिर्हि सगुणविद्याफलत्वेन मता । यत्तूक्तम्—'प्रजापतेः सभाम्' इत्यत्र कार्ये प्रत्यभिसन्धिरुपपद्यते 'ते यदन्तरा' इति पूर्ववाक्यविच्छेदात् ; प्रकरणाद्धि श्रुतिवाक्ये बलीयसी इति—तदयुक्तम् ; 'यशोऽहं भवामि ब्राह्मणानाम्' इति सर्वात्मकत्वकीर्तनात् सगुणब्रह्मणः सर्वात्मत्वकीर्तनानुपपत्त्या च परप्रकरणाविच्छेद इति यतः । न च वाच्यम्—सगुणेऽपि ब्रह्मणि सर्वकामत्वादिवत् उपासनार्थं प्रशंसार्थं वा तदिति ; तत्र पूर्वापरवाक्ययोः परविषयत्वेऽवगम्यमाने मध्यगतवाक्यस्य पदश्रुतेर्वा अग्निना सिञ्चेदितिवत् अयोग्यार्थत्वेन दुर्बलत्वात् । प्रजापतिशब्दस्य परविषयत्वेऽपि 'प्रजापतिश्चरति गर्भे अन्तः' इतिवत् प्रयोगोपपत्तेः, परविषयत्वकार्यविषयत्वयोरेकवाक्यत्वानुपपत्त्या वाक्यभेदकल्पनप्रसङ्गात् एकवाक्यत्वे संभवति वाक्यभेदायोगाच्च प्रत्यभिसन्धिरनुपपन्नः । परब्रह्मण एव निरवधिककल्याणगुणकस्य सर्वान्तरात्मत्वात् सर्वात्मत्वकीर्तनस्य प्रशंसार्थत्वमप्ययुक्तम् ।

यत्तूक्तम्—विभोर्गन्तव्यत्वानुपपत्तिः । भूगतेन प्रदेशान्तरगमनवत् पयसो दध्याद्यवस्थापत्तिवच्च अंशभेदेनावस्थाभेदेन च गन्तव्यभावोऽनुपपन्नः ; निरंशत्वादवस्थाभेदशून्यत्वाच्च ब्रह्मणः । गन्तुश्च जीवस्य ब्रह्मावयवत्वे तद्विकारत्वे च तत्प्रहाणेन स्थित्यभावात् गमनमयुक्तम् । मध्यमपरिमाणत्वे अनित्यत्वात् अणुत्वे कृत्स्नशरीरवेदनानुपपत्तेः व्यापित्वे गत्यनुपपत्तेश्च न मार्गगमनम् । संसार्यात्मनः पारमार्थ्ये बन्धादनिर्मोक्षः, मोक्षे स्वरूपनाशः—इत्यादितर्कबलात् **परं जैमिनि**रित्यादिसूत्राणां पूर्वपक्षविषयतेति—तदप्ययुक्तम् ; ग्रामादिगतेरिव ब्रह्मसंयोगार्थत्वाभावादर्चिरादिगतेः । निःशेषप्रतिबन्धनिवृत्त्यर्था हि सा । तस्याश्च कालापेक्षावत् देशापेक्षा युज्यते । 'यावन्न विमोक्ष्ये' इति कालापेक्षा ह्युपलभ्यते । परिमाणविकल्पेन गमनानुपपत्तिरपरविद्याफलत्वेऽपि प्रसजेदिति स्वव्याघातः । न च गतेर्मिथ्यात्वेन तत्रोपपत्तिः ; विभुत्वस्य गतिमात्रविरोधित्वात् ॥ सत्यगमनमेव विभुत्वविरोधीति चेन्न ; दृष्टान्ताभावात्

---

[2] अचिन्मात्रोपासकस्य ब्रह्मप्राप्तिं न कश्चिन्मन्यते । कार्यब्रह्मोपासने ब्रह्मप्राप्तिशंका केषाञ्चित् । जीवब्रह्मैक्ये चिदुपासनेऽपि मोक्षः स्यादिति च शंकाऽन्येषाम् । तत्तद्व्यावृत्तिरत्र सिद्धेत्याह तस्मादिति भाष्येण ।

व्याप्त्यसिद्धेः । विभुत्वगत्योर्विरोधो नाम नियमेन भिन्नाधारत्वलक्षणः । ततश्च यत्र विभुत्वाभावस्तत्रैव सत्यगतिदर्शनात् विरोधो निश्चीयेत । न च विभुत्वानाश्रयघटादिनिष्ठं गमनं त्वन्मते सत्यम् । तस्मात् गतिमात्रं विभुत्वविरोधीति स्वव्याघातो दुस्तरः । अणुत्वे कृत्स्नदेहवेदनानुपपत्तावपि तुल्यो व्याघातः ॥ तत्रापि वास्तवकृत्स्नवेदनस्यैवाणुत्वविरोध इति चेत्, [न] पूर्ववत् दृष्टान्ताभावात् व्याप्त्यसिद्धेः । प्रभाप्रभावन्न्यायेनानुपपत्तिरपि नास्तीति प्रागेवोक्तम् । संसारित्वस्य पारमार्थ्येऽपि स्वरूपत्वाभावादनिर्मोक्षस्वरूपनाशौ न स्याताम् ।

यत्तु संसारस्य कर्मनिमित्तत्वे सूक्ष्मापराधसंभवात् कर्तृत्वशक्तिसद्भावाच्च निश्शेषकर्मक्षयानुपपत्त्यादि जल्पितम्—तत् 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति शास्त्रबलादीश्वरप्रसादशक्तिद्वारा निवर्तनीयत्वान्नोपपन्नम् । या तु स्वपक्षे मोक्षोपपत्तिः, सा च प्रागेव ध्वस्ता ।

**अप्रतीकालम्बना**निति पृथगधिकरणयन्ति । सगुणब्रह्मव्यतिरिक्तविकारालम्बनाः प्रतीकालम्बनाः । तेषां पितृयाणतृतीयस्थानसंबन्धाभावात्, प्रतीकविशेषणत्वेन ब्रह्मणोऽप्युपासितत्वात्, 'ये चेमेऽरण्ये' इत्यत्र तेषामप्युपादानात् सर्वान् विकारालम्बनान् अमानवो ब्रह्मलोकं नयतीति पूर्वपक्षं कृत्वा—प्रतीकालम्बनान् वर्जयति, तद्व्यतिरिक्तान् विकारालम्बनान् नयतीत्युभयथाऽभ्युपगमेऽपि दोषाभावादिति योजयन्ति ॥

तत्र तावत् अधिकरणभेदोऽनुपपन्नः । त्रिशिरस्के विचारे जैमिनिपक्षस्य सिद्धान्त्येकदेशिमतत्वात् **अप्रतीकालम्बना**नित्यस्य साक्षात्सिद्धान्तपरत्वाच्चाधिकरणभेदानुपपत्तिः । **उभयथा च दोषा**दिति पठ्यमानत्वात **अदोषा**दिति [1]पदमनुपपन्नम् । उभयथा अदोषादित्यर्थानौचित्यं च । स्वपक्षे दोषाभावमात्रादपि परपक्षे दोषोद्घाटनं हि स्वपक्षदार्ढ्यहेतुः ।

**अपरे** तु—'सामीप्यात्तु तद्व्यपदेशः' इत्यन्तं पूर्वपक्षमुक्त्वा सिद्धान्तं वक्तुमन्तरा चिन्तान्तरपरं **कार्यात्यये** इत्येतत् व्याचक्षते—कार्यब्रह्मप्राप्तानां पुनरावृत्तिरस्ति, 'तेषामिह न पुनरावृत्तिः इति वाजसनेयके **इह**शब्दश्रवणात् तस्य कल्पविषयत्वात् कल्पान्तरे चावृत्तिरिति पूर्वपक्षं कृत्वा—'श्वोभूते निर्वपेत्' इति श्वोभावस्येव सर्वकल्पाना**मिहशब्दार्थ**त्वाविशेषात्, अन्यथा 'अनावृत्तिः स्यात्; इह स्यात्' इति वाक्यभेदप्रसङ्गात्, 'एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः' इत्युक्तवैषम्याभावप्रसङ्गाच्च कार्यब्रह्मप्राप्तानामपि नावृत्तिरिति । अतस्तत्सामर्थ्यात कार्यात्यये तदध्यक्षेण सह परब्रह्मप्राप्तिरित्येवं निर्णीय, **परं जैमिनि**रिति पूर्वोक्तस्य पूर्वपक्षस्य सिद्धान्तमाहुः । तत्र **चाप्रतीकालम्बनान्**—प्रतीकालम्बनव्यतिरिक्तान् कार्यब्रह्मोपासकान् परब्रह्मोपासकांश्च नयति । हिरण्यगर्भोऽहं भविष्यामीति प्रवृत्ताः कार्यब्रह्मोपासकाः । उभयेषामप्यर्चिरादिमार्गेण गतिः; 'तयोर्ध्वमायन्' इत्यादिश्रुतेः । पर्यङ्कविद्यापञ्चाग्निविद्ययोः कार्यब्रह्मोपासकस्यार्चिरादिश्रवणात् । कार्यब्रह्मविदः क्रममुक्तिः; अतोऽनावृत्तिः । परब्रह्मविदस्तु सद्योमुक्तिः, अर्चिरादिना सत्यलोकमतिक्रम्य कारणे ब्रह्मणि सूक्ष्मदेहस्य करणानाञ्च प्रविलयः

1 यादवप्रकाशीये पाठद्वयमप्यनुसृत्य व्याख्यातम् ।

इति **परं जैमिनि**रित्यनेन न विरोधः। ब्रह्मणो विभुत्वेऽपि कार्यमण्डलातिक्रमरूपा गतिः, जीवत्वस्यौपाधिकत्वाल्लिङ्गगमनमेव गतिरिति सिद्धान्तयन्ति।

तत्र हिरण्यगर्भं प्राप्तानां सर्वेषामपुनरावृत्तिश्चेत्—अयुक्ता; ब्रह्मलोकगतानां श्वेतमहाश्वीषादीनां पुनरावृत्तिस्मरणात्। तत्रत्यज्ञानिनामपुनरावृत्तिश्चेत्—अभिमता। यत्तु हिरण्यगर्भोऽहं भविष्यामीति कार्यब्रह्मोपासीनानामर्चिरादिगत्या तत्प्राप्तिरिति—तदयुक्तम्; हिरण्यगर्भस्य क्षेत्रज्ञतया तदुपासकानाममृतत्वप्राप्त्यभावादेवार्चिरादिगत्यनुपपत्तेः। तस्य च कार्यत्वकर्मवश्यत्वानुपास्यत्वादि च मुहुरुपपादितम्। अतस्तदुपासकानामप्रतीकालम्बनत्वमयुक्तम्। **जापकोपाख्याने** ब्रह्मकायं [1]प्रविशतो जापकस्य जिह्वया निष्क्रान्तस्य मूर्द्धन्यनाड्या निष्क्रमणाभावादर्चिरादिगत्यभावः स्फुटतरः। 'अथवा नेच्छते तत्र ब्रह्मकायनिषेवणम्। उत्क्रामति च मार्गस्थः शीतीभूतो निरामयः इति ब्रह्मकायनिषेवणमनिच्छतो मुक्तिमार्गस्थतयोत्क्रमणवचनाच्च हिरण्यगर्भं प्राप्तवतो नार्चिरादिगतिः। अर्चिरादिना प्राप्यत्वं च न चतुर्मुखलोकस्योपपद्यते; नारदादीनामादित्यमण्डलमभित्त्वा ब्रह्मलोकगमनदर्शनात्। 'अपुनर्भवाय कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति' इत्युपक्रम्य, 'पृथिवीं भिनत्ति अपो भिनत्ति' इत्यारभ्य, 'अव्यक्तं भिनत्ति अक्षरं भिनत्ति मृत्युं भिनत्ति' इत्यभिधानात् ब्रह्माण्डतदावरणात् बहिर्भूतत्वादव्यक्ताक्षरतमसां च न शरीरानुप्रविष्टपृथिव्यादीनां भेदनं तत्रोच्यते; 'कोशं भिनत्ति शीर्षकपालं भिनत्ति' इत्यभिधाय पृथिव्यादिभेदनप्रतिपादनस्य पार्थिवाण्डकटाहतदावरणविषयताया अवर्जनीयत्वात्। जापकोपाख्याने 'द्वाभ्यां मुक्तं त्रिभिर्मुक्तम्' इति मुक्तप्राप्यस्य परमस्थानस्य गुणत्रयोत्तीर्णत्वाभिधानात् 'न कालस्तत्र वै प्रभुः इति अत्राकालकाल्यत्वप्रतिपादनात्, ब्रह्मलोकस्य च प्राकृतत्वेन गुणत्रयोत्तीर्णत्वायोगात द्विपरार्द्धावसानत्वेनाकालकाल्यत्वायोगात्, अत एव 'अक्षरे परमे व्योमन्' इत्यक्षरत्वश्रवणविरोधाच्च, तमसःपरत्वाद्ययोगाच्च न चतुर्मुखलोकोऽर्चिरादिप्राप्यः॥ कार्यब्रह्मोपासकान् परब्रह्मोपासकांश्च नयतीत्युभयथाशब्दव्याख्यानमनुपपन्नम्; एवमुभयथाभाव एव दोषात, "न [स] कारणं....कारणं तु ध्येयः" इति कार्योपासनं हि प्रतिषिध्यते॥ क्रममुक्त्यभ्युपगमादविरोध इति चेन्न; अर्चिरादिगतस्य [2]क्रममुक्तेः श्रुतिविरुद्धत्वात्। 'स एनान् ब्रह्म गमयति' इति श्रुतिः; न तु क्रमेण गमयतीति। हिरण्यगर्भादीनां मोक्षप्रदत्वाभावादेव तदुपासकानामर्चिरादिगत्ययोगाच्चैवं व्याख्यातुमयुक्तम्॥ कार्योपासकस्यार्चिराद्यन्वये पर्यङ्कविद्यादिकं प्रमाणमिति चेन्न—कारणत्वबलादाकाशादिशब्दानां प्रसिद्धार्थपरत्वाभाववत् अर्चिराद्यन्वयबलेन तस्याप्युपास्यसमर्पकशब्दस्य[3] कार्यपरत्वासिद्धेः॥ विग्रहाद्यन्वयात् कार्यत्वमिति चेत्—विलक्षणविग्रहयोगस्यैव कारणत्वसाधकत्वात्।

---

[1] ब्रह्मकायं प्रवेक्ष्यतः, मरणकाले स्वजिह्वाप्रदेशान्निष्क्रान्तस्य जापकजीवस्येत्यर्थः।

[2] ब्रह्मोपासनं विनाऽन्योपासनेनार्चिरादिनाऽन्यदुपसद्य तत्रोपासनान्मुक्तिरितीदृशक्रममुक्तीत्यर्थः।

[3] सत्यमिति ब्रूयादित्युक्तसत्पदत्यपदघटितसत्यादिशब्दस्य।

अन्ये त्वाहुः—कार्यं ब्रह्म हिरण्यगर्भलोकः । 'परं चापरं च' इत्युपक्रम्य 'स सामभिरुन्नीयते ब्रह्मलोकम् इति प्रयोगदर्शनात् सर्वगतस्य परब्रह्मणो गन्तव्यत्वायोगात् पर्यङ्कविद्यायां ह्रदनदीवृक्षादिविशेषवत्त्वदर्शनात् हिरण्यगर्भसामीप्येन लोकस्य ब्रह्मशब्दवाच्यत्वोपपत्तेश्च लोकप्राप्तिरिति पूर्वपक्षं कृत्वा—ब्रह्मशब्दमुख्यत्वात् लोकस्थस्य हिरण्यगर्भस्य सतः परमात्मनः प्राप्यत्वेऽपि पूर्वपक्षयुक्तीनां संभवात् मुक्तानां चतुर्मुखलयावधि ब्रह्मलोके भोगाभ्युपगमात् हिरण्यगर्भाकारं परं ब्रह्मैव नयतीति सिद्धान्तयन्ति। अत्र चतुर्मुखलोकप्राप्तिरेव विद्याफलम्, तत्र आप्रलयात् भोगः, तल्लोकनाशे सृज्यताहेतुकर्माभावात् मोक्ष इति बादरिमतम् । ब्रह्मलोकप्राप्त्यनन्तरमेव ब्रह्मणि लयः, तेन लिङ्गनाशः, ततश्च गुणाष्टकाविर्भावात् समानभोगता, ब्रह्मलोके लीने परमाकाशप्राप्तिः, तत्र च भोग इति जैमिनेरभिप्राय इति पक्षद्वयवैषम्यं दर्शितं भवति । अप्रतीकालम्बनानिति—किं सर्वेऽप्युपासका देवयानेन ब्रह्मलोकं यान्ति, उत नेति चिन्ता । तत्र देवयानेन गतान् सर्वान् अमानवः परं ब्रह्म हिरण्यगर्भाख्यं नयति, उत नेति । 'द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्' इति मार्गद्वित्वं प्रतिज्ञाय, 'अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति ते धूममभिसंविशन्ति' इतीष्टादिकारिणां धूमादिप्राप्तिश्रवणात्, तद्व्यतिरिक्तसर्वोपासकानामुत्तरमार्गस्य प्राप्तत्वादब्रह्मविदां पञ्चाग्निवित्प्रभृतीनामप्यर्चिरादिश्रवणात् 'एष पन्था ब्रह्मणो हा(भा)नुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत तैजसश्च' इति तैजसाख्यपञ्चाग्निवित्प्रभृतिपुण्यकृतां ब्रह्मविन्मार्गगमनदर्शनात, 'अयं वा व एषोऽग्निश्चित' इत्यादिचित्याग्न्युपासनेष्वपि देवयानश्रवणात, 'विद्ययैव तदारोहन्ति यत्र कामाः परागताः' इति अन्ते ब्रह्मलोकप्राप्तिश्रवणाच्च सर्वोपासकानां देवयानप्राप्तौ सिद्धायाम् 'स एनान्' इति विशेषेणोक्तान् देवयानेन गतान् सर्वान् अमानवो ब्रह्म गयमतीति पूर्वपक्षं कृत्वा—'यावन्नाम्नो गतम्' इत्यादिफलप्राप्तौ ब्रह्मलोकस्य देवयानापेक्षायां प्रमाणाभावान्न सर्वेषां देवयानप्राप्तिरिति सिद्धेः, पञ्चाग्निवित्प्रभृतीनामब्रह्मविदामपि ब्रह्मलोकप्राप्ततया प्रमाणसिद्धानां लोकवासमात्रमेव, न तत्रत्यचतुर्मुखप्राप्तिः, ब्रह्मविदामेव चतुर्मुखप्राप्तिः एवमुभयथाभावे दोषाभावात ; सर्वेषां ब्रह्मप्राप्तौ ब्रह्मशब्दस्य कार्यवचनत्वे परवचनत्वे चोभयथाऽपि ब्रह्मविदामितरतुल्यफलत्वमितरेषां ब्रह्मवित्तुल्यफलत्वं चेति दोषप्रसङ्गात् । ततश्च तत्क्रतुन्यायविरोधात् । अतो देवयानेन ब्रह्मलोकगतेषु अब्रह्मविदो न ब्रह्म गमयति, ब्रह्मविदस्तु गमयति, अब्रह्मविदोऽपि तत्र लब्धज्ञानाश्चेत् क्रमेण मुच्यन्ते, यथा पञ्चाग्निविदः, यथा च चित्याग्निविदः—इति सिद्धान्तयन्ति ।

अत्र ब्रूमः—कार्यं ब्रह्म ब्रह्मलोकः, चतुर्मुखः परं ब्रह्मेत्ययुक्तम् ; तस्यापि सृज्यत्वश्रवणेनानपोदितेन कार्यब्रह्मान्तर्भावावगमात् । न च तत्र ब्रह्मगुणानां ज्ञानानन्दैश्वर्यादीनां नित्याविर्भूतत्वात् परमात्मत्वम् ; वेदापहारादिषु ज्ञानशक्त्यैश्वर्यादीनां परिमितत्वदर्शनात् ; योगाधीनभगवत्साक्षात्कारत्व—तदाहितसर्गशक्तित्वदर्शनात् उभयभावनान्वयेनानुपास्यत्वावगमाच्च । 'ब्रह्मा विश्वः कतमः स्वयम्भुः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा' इत्यादिश्रुतयस्तु ब्रह्माण्डोदरवर्तितत्तद्विभूतिविशेषनिर्वाहकत्वाभिप्रायतया न निरङ्कुशैश्वर्ये प्रमाणम् । 'हिरण्यगर्भः समवर्तत'

इत्याद्युक्ते त्वाकाशप्राणादिवाक्यतुल्यन्यायत्वादुपपत्त्यन्तरैश्च परमपुरुषपरमिति समर्थितम् । अपरेषां प्रतिक्षेपे दर्शितैर्मानन्यायैर्देवयानमार्गस्य चतुर्मुखलोकप्राप्तिहेतुत्वमयुक्तमिति, तन्न सिद्धान्तेऽनुमन्तव्यम् । ह्रदनदीवृक्षसंस्थानादियोगो न चतुर्मुखलोकत्वे प्रमाणम् । तलवकारसाम्नि 'सप्तमो ब्रह्मलोकः' इत्युपक्रम्य 'उत परस्मात् उतापरस्मात्परस्तृतीयादथवा चतुर्थात् । सहस्रस्थूणे विधृते दृढ उग्रे यत्र देवानामधिदेव आस्ते' इति चतुर्मुखलोकात्परतः परत्र सहस्रस्थूणाविशिष्टस्थानविशेषावगमात् । अतः सत्यलोकचतुर्मुखयोर्देवयानप्राप्यत्वपरब्रह्मत्वाभावात्, 'चतुर्मुखलोके गुणाष्टकाविर्भावः आप्रलयान्मुक्तानां तत्रावस्थानं ततः परमाकाशप्राप्तिः' इत्यनुपपन्नम् ।

अनन्तरं चाब्रह्मविदोऽपि देवयानेन गच्छन्तीति न युक्तम्; 'स एनान् ब्रह्म गमयति' इति देवयानगतानामविशेषेण ब्रह्मप्राप्तिश्रवणात् । न च पञ्चाग्निविदां ब्रह्मप्राप्तिश्रवणं स एनानिति वाक्यसङ्कोचकम्; तेषामब्रह्मवित्त्वे प्रमाणान्तराभावात् देवयानगतिश्रवणेनैव तत्रापि ब्रह्मवेदनस्य कल्प्यत्वात् । चित्याग्निविदां प्रकरणे देवयानश्रवणं प्रासङ्गिकम् [1]अहीननयात परविद्याप्रकरणान्वयि स्यात् । 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इत्यत्र ब्रह्मविद एव पदान्तरविशेष्यत्वसम्भवात् तदपि नाब्रह्मविदां देवयानगतौ प्रमाणम् । 'द्वे सृती अशृणवम्' इत्यत्र द्वित्वावधारणमपि नास्मिन्नर्थे प्रमाणम्; 'अथ ये यज्ञेन दानेन' इति वाक्यस्य परविद्याव्यतिरिक्तश्रेयःप्रदर्शनार्थत्वसम्भवात् । एवं सर्वत्र ब्रह्मवेदनकल्पन-प्रकरणोत्कर्ष-सामानाधिकरण्य-प्रदर्शनार्थत्वादिभिर्निर्वाहसम्भवात् न काचिदपि श्रुतिरब्रह्मविदां देवयानगमने प्रमाणम् । अत एव देवयानगतान् सर्वान् वा, न वेति चिन्ता निरवकाशा । हिरण्यगर्भमेव परं ब्रह्म मन्वानस्य [2] नाब्रह्मविदां परब्रह्मप्राप्तिः । तत्र गुणाष्टकाविर्भावात् ब्रह्मसमानभोगः, तत्र परब्रह्मप्राप्तानामपुनरावृत्तिरिति सर्वमिदमनुपपन्नम् ! अब्रह्मविदां श्वेतमहाभीषकरैवतप्रभृतीनां ब्रह्मसभायामासिकाप्रतिपादनात्, क्षुत्पिपासाकामाद्यभिभवपुनर्जन्मप्रतिपादनाच्च । श्वेतादीनामब्रह्मवित्त्वं च पुनरावृत्त्यैव सिद्धम् ।

नन्वब्रह्मविदां देवयानेन परब्रह्मप्राप्तिरेव निवार्यते; न तु परब्रह्मप्राप्तिमात्रम् । अमानवेन नयनं देवयानगतब्रह्मविदामेव; नान्येषाम् । अमानवनीतानामेव अपुनरावृत्तिः; नान्येषां ब्रह्मप्राप्तानाम् । अतः सर्वमुपपन्नमिति ॥ नैवम्—'नान्यः पन्था अयनाय विद्यते' इति ब्रह्मविद्व्यतिरिक्तानां ब्रह्मप्राप्तिनिषेधात् । तत्राप्यब्रह्मविदां देवयानेन ब्रह्मप्राप्तिर्निषिध्यत; न ब्रह्मप्राप्तिमात्रमिति चेत्, तर्ह्यब्रह्मवित्तयाऽभिमतानां पञ्चाग्निविदां देवयानगतिर्न स्यात । यद्युच्येत—विशिष्टमिह निषेध्यम्—अब्रह्मविदां देवयानविशिष्टब्रह्मप्राप्तिर्नास्ति (स्तीति ?) । तस्मादब्रह्मविदां ब्रह्मप्राप्तिविधुरदेवयानगतिर्देवयानगतिविधुरब्रह्मप्राप्तिश्चोपपद्यत इति—तदयुक्तम्; अयनायेत्येतावन्मात्रस्य श्रुतत्वात् । देवयानेन ब्रह्मण इत्यध्याहारप्रसङ्गाच्च ॥ ननु नाध्याहारापेक्षा, अयनं चेत्—देवयानपूर्वकं ब्रह्मकर्मकं च विद्रितमिति चेन्न; त्वया देवयानविधुरब्रह्मप्राप्तेर्ब्रह्मप्राप्तिविधुरदेवयानगतेश्चाभ्युपगतत्वात् । किञ्च अयनशब्दस्य कः सङ्कोचकः येन विशिष्टायनविवक्षाऽऽश्रीयेत ॥ अब्रह्मविदां देवयानगमनशास्त्रं ब्रह्मप्राप्तानां केषाञ्चित् पुनरावृत्तिशास्त्र

---

1 यथा 'द्वादशाहीनस्य' इति वाक्यस्य ज्योतिष्टोमप्रकरणादुत्कर्ष इति ।

2 मन्वानस्येति । मन्वानेन त्वयोक्तमितियावत् ।

चेति चेन्न, तयोस्तद्विषयत्वेऽयनशब्दसङ्कोचः, तत्सङ्कोचे तयोस्तद्विषयत्वमित्यन्योन्याश्रयप्रसङ्गात् । तस्मात् यस्मिन् मते श्रुत्यसङ्कोचः शास्त्रद्वयार्थवत्त्वं च तदेवोपपन्नमिति तावकः पक्षोऽनुपपन्नः ।

किञ्च सर्वैरितरैरधिकरणभेदो वर्णितः । तदयुक्तम्—सूत्रकारशैलीविरोधात् । अस्मिन् शास्त्रे सर्वत्र बादरायणकीर्तनस्य ऋष्यन्तरमतव्यावृत्तिविवक्षामूलत्वं तावत् दृश्यते । 'तदुपर्यपि बादरायणः संभवात्' इत्यत्र कर्मकाण्डदेवताधिकरणप्रसिद्धजैमिनिमतात् वैषम्यविवक्षया बादरायणकीर्तनं दृष्टम् । 'मध्वादिष्वसंभवादनधिकारं जैमिनिः', 'भावं तु बादरायणोऽस्ति हि' 'धर्मं जैमिनिः', 'पूर्वं तु बादरायणः', 'शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः' 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' 'परामर्शं जैमिनिः', 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' इत्यधिकरणेषु पूर्वसूत्रोपन्यस्त-ऋष्यन्तरमतव्यावृत्त्यर्थत्वं बादरायणकीर्तनस्य दृष्टम् । यत्र ऋष्यन्तरमतमङ्गीकृतम्, तत्र न बादरायणकीर्तनं दृष्टम्, यथा 'अनुस्मृतेर्बादरिः', 'सम्पत्तेरिति जैमिनिः', 'सुकृतदुष्कृते एवेति तु बादरिः', 'अवस्थितेरिति काशकृत्स्नः', 'तद्भूतस्य तु नातद्भावो जैमिनेरपि', आर्त्विज्यमित्यौडुलोमिः' इत्यादिषु । ऋष्यन्तराणां मिथोविरुद्धेषु मतेषु चरमस्याङ्गीकारात् बादरायणमतस्य पृथक्कीर्तनाभावश्च दृष्टः, 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' 'अवस्थितेरिति काशकृत्स्नः' 'तदुपलक्षणार्थेति तु कार्ष्णाजिनिः', 'सुकृतदुष्कृते एवेति तु बादरिः', 'स्वामिनः फलश्रुतेरित्यात्रेयः', 'आर्त्विज्यमित्यौडुलोमिः' इत्यादिषु सूत्रेषु । अतो बादरायणकीर्तनम् ऋष्यन्तरमतवैषम्यप्रदर्शनार्थम् । **उभय**शब्दश्चोपन्यस्ताकारद्वयपरो दृष्टः, 'उपपूर्वमपीत्येके' 'बहिस्तूभयथाऽपि', 'अभावं बादरिः' 'भावं जैमिनिः' 'द्वादशाहवदुभयविधम्' इति च । एवमुभयशब्दस्य कीर्तितमतद्वयव्यावृत्त्यर्थत्वदर्शनात् बादरायणकीर्तनस्य ऋष्यन्तरमतवैषम्यप्रदर्शनार्थत्वात्, अत एव दोषशब्दस्य नञ्पूर्वकत्वायोगाच्च त्रिशिरस्कविचारास्पदैकार्थविषयत्वं 'कार्यं बादरिः', इत्यादिसूत्रसमुदायस्य स्वरसतः प्रतिपन्नमिति युक्तमैकाधिकरण्यम् ।

**दर्शनाच्चे**ति सूत्रे 'तयोर्ध्वमायन्' 'तस्य तावदेव' इति वाक्य**मितरै**रुदाहृतम् । ततोऽपि, 'परं ज्योतिरुपसंपद्य' इति वाक्योदाहरणं सफलम्, अस्य वाक्यस्य साक्षान्मोक्षपरत्वसम्प्रतिपत्त्या क्रममुक्तिविषयत्वेन निर्वाहस्यानुपपन्नत्वात्; अत्र च शरीरादुत्थानश्रवणेनार्चिरादिगतविषयत्वस्य दुरपह्नवत्वाच्च ॥ १५ ॥

इति कार्याधिकरणम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्य— हृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां चतुर्थस्याध्यायस्य तृतीयः पादः ॥

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये चतुर्थः पादः ।

### संपद्याविर्भावाधिकरणम् ४ ४-१

**संपद्याविर्भावः स्वेनशब्दात् ॥ ४-४-१ ॥**

परं ब्रह्मोपासीनानामात्मनश्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेण अपुनरावृत्तिलक्षणा गतिरुक्ता। इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते। इदमाम्नायते, "एव मेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति । किमस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपन्नस्य देवादिरूपवत् साध्येन रूपेण संबन्धोऽनेन वाक्येन प्रतिपाद्यते, उत स्वाभाविकस्य स्वरूपस्याविर्भावः इति संशये—

साध्येन रूपेण संबन्ध इति युक्तम्। अन्यथा ह्यपुरुषार्थाववोधित्वं मोक्षशास्त्रस्य स्यात्; स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात् । न हि सुषुप्तौ देहेन्द्रियव्यापारेषु उपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसंबन्धो दृश्यते। न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसंपन्नस्य पुरुषार्थः, येन स्वरूपाविर्भाव एव मोक्ष इत्युच्येत, "स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य", "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात्। न च अपरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपम्; तच्च संसारदशायामविद्यातिरोहितं परं ज्योतिरुपसम्पन्नस्याविर्भवति—इति शक्यं वक्तुम्, ज्ञानस्वरूपस्य तिरोधानासंभवात् । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति

---

श्रीः ४-४

**संपद्याविर्भावः स्वेनशब्दात्** ॥ पादसङ्गतिमाह **परं** ब्रह्मेत्यादिना । विषयवाक्ये, 'न च पुनरावर्तते' इति श्रवणाद**पुनरावृत्तिलक्षणे**त्युक्तम् । किम् 'अस्माच्छरीरात्' इत्यादिवाक्ये मुक्तस्य साध्येन रूपेण संबन्धः प्रतिपाद्यते उत स्वाभाविकस्वरूपाविर्भावः; किं स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य पुरुषार्थाववोधित्वं संभवति, नेति; किं स्वरूपस्य स्वतोऽपरिच्छिन्नानन्दत्वं संभवति, नेति; किमानन्दस्वरूपस्य तिरोधानं संभवति, नेति; किमाविर्भावपरत्वेऽभिनिष्पत्तिशब्दवैयर्थ्यमस्ति, नेति च । यदा वैयर्थ्यं यदा च तिरोधानासंभवेन स्वतोऽपरिच्छिन्नानन्दायोगात् शास्त्रस्य न पुरुषार्थपर्यवसानम्, तदा साध्येन रूपेण संबन्धः प्रतिपाद्यः स्यात् । यदा नाभिनिष्पत्तिव्यपदेशवैयर्थ्यम्, यदा च तिरोधानसंभवेन स्वतोऽपरिच्छिन्नानन्दत्वोपपत्तेः मोक्षशास्त्रस्य पुरुषार्थपर्यवसानम्, तदा स्वाभाविकरूपाविर्भावः प्रतिपाद्यः स्यात् । **रूपेण**—आकारेण । **न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थ** इति । अत्रायं भावः—दुःखनिवृत्तिमात्रे मोक्षश्चेत्, संसारनिर्विशेषः स्यात्; पुरुषार्थापुरुषार्थमिश्रत्वात् । दुःखनिवृत्तिः सुखप्राप्तिश्चेष्टे दृष्टे, सुखनिवृत्तिर्दुःखप्राप्तिश्चानिष्टे दृष्टे । तत्र दुःखनिवृत्तेरिष्टत्वात्सुखनिवृत्तेरनिष्टत्वादिष्टानिष्टमिश्रो मोक्षः संसारतुल्य इति । तस्मात् पुरुषार्थापुरुषार्थमिश्रो न मोक्ष एवेति । स्वरूपभूतस्यैवापरिच्छिन्नस्यानन्दस्य तिरोधाननिवृत्तौ तथात्वं प्रकाशत इति श्रुत्यर्थ इत्यत्राह—**न चेति** । तदुपपादयति **ज्ञानस्वरूपस्येति** । तिरोधानतन्निवृत्त्योः

हि पूर्वमेवोक्तम् । न च प्रकाशमात्रस्याऽऽनन्दता संभवति । सुखस्वरूपता ह्यानन्दस्वरूपता । सुखस्वरूपत्वं चात्मनोऽनुकूलत्वम् । प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः कथञ्चिदप्यानन्दस्वरूपता दुरुपपादा । स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वात्, उपसंपन्नस्य "स्वेन रूपेणाभिनिष्पद्यते" इति वचनमनर्थकं स्यात् । अतोऽपूर्वेण साध्येन रूपेण संबध्यते । एवंच 'अभिनिष्पद्यते' इति वचनं मुख्यार्थमेव भवति । स्वेन रूपेणेत्यपि आनन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति सङ्गच्छते इत्येवं प्राप्ते—

प्रचक्ष्महे—संपद्याविर्भावःइति । अयं प्रत्यगात्मा अर्चिरादिना परं ज्योतिरुपसंपद्य यं दशाविशेषमापद्यते, स स्वरूपाविर्भावरूपः, नापूर्वाकारोत्पत्तिरूपः । कुतः । स्वेनशब्दात् । स्वेन रूपेणेति विशेषणोपादानादित्यर्थः । आगन्तुकविशेषपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यात् । अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ॥ १ ॥

यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वात्, 'उपसंपद्याभिनिष्पद्यते' इति वचनमनर्थकमिति–तत्रोत्तरम्–

**मुक्तः प्रतिज्ञानात् ॥ ४-४-२ ॥**

कर्मसंबन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविकेन रूपेणावस्थितोऽत्र, "स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते । अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधान-

---

संभवेऽपि पुरुषार्थरूपत्वं स्वरूपस्य प्रतिक्षिपति **न च प्रकाशे**ति । **कस्ये**ति । अनुकूलत्वं नाम सप्रतियोगिको धर्मविशेषः प्रकाशवदित्यर्थः । अन्यथाऽनुकूलत्वमेव न स्यादिति भावः । न केवलं तर्कविरोधः, श्रुतिविरोधश्चेत्याह **स्वरूपापत्ती**ति । **अनर्थकं स्यात्**—अभिनिष्पत्तिशब्दानर्थक्यमित्यर्थः । **स्वेन**शब्दः कथमित्यत्राह **स्वेने**ति । **स्व**शब्दोऽसाधारण्यपरः ; न त्वसाध्यत्वपरः ; अभिनिष्पत्तिवचनात् । **स्वरूपेणाभिनिष्पद्यते**—रूपविशिष्टतया साध्यत इति रूपं साध्यमित्यर्थः । [1]**एवं चे**ति । **स्व**शब्दा**भिनिष्पत्ति**शब्दावुभावपि मुख्यावित्यर्थः ।

राद्धान्तं वक्तुं सूत्रमुपादत्ते **संपद्ये**ति । **यं दशाविशेष**मिति । **दशा**—अवस्था । ज्ञानविकासस्य कालविशेषे [अ] भावादवस्थात्वम् ; ज्ञानस्य विकासार्हत्वात् स्वाभाविकत्वम् । **स्वेन रूपेणेति विशेषणमनर्थकं स्या**दिति । कथमानर्थक्यम् ; स्वासाधारण्यं ह्युक्तमित्यत्राह **अविशेषणेऽपी**ति । 'परं ज्योतिरुपसंपद्याभिनिष्पद्यते' इत्येतत्सम्बन्धादेव तदसाधारणत्वं सिद्धम् । न ह्यन्यस्य रूपेणान्यो निष्पद्यते । अतस्तत्संबन्धादेव तदसाधारण्यं सिद्धमिति **स्वेन**पदमनर्थकं स्यादित्यर्थः ॥ १ ॥

उत्तरसूत्रशङ्कामाह **यत्तूक्त**मिति । **मुक्तः प्रतिज्ञानात्** ॥ **मुक्त** इति प्रतिज्ञाखण्डं व्याचष्टे **कर्मे**ति । ततः किमित्यत्राह **अत** इति । पूर्वमसिद्धायास्तिरोधाननिवृत्तेर्वाचकत्वाद**भिनिष्पत्ति**शब्दो

---

1 स्वेनेत्येतदनन्तरम् एवञ्चेति प्रतीकधारणात् भाष्ये स्वेनेतिवाक्यं प्राक् एवञ्चेति वाक्यं च पश्चात् स्यात् । अत एव शब्दद्वयमुख्यत्वनिगमनमत्र टीकोक्तं घटत इति भवत्युल्लेखः । टीकायां वा पाठव्यत्यासः । अन्यथा पुनः एवञ्चेत्यादेः संगच्छतइत्यन्तस्य निष्कृष्टमर्थं वर्णयितुं एवञ्चेत्यस्य पूर्वस्थितस्यैव पश्चात् ग्रहणमिति निर्वाह्यम् ।

निवृत्तिरत्राभिनिष्पत्तिरुच्यते। कुतः। प्रतिज्ञानात्। सा हि प्रतिपाद्यतया प्रतिज्ञाता। कुत इदमवगम्यते। य आत्मेति प्रकृतं प्रत्यगात्मानं जागरिताद्यवस्थात्रितयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तञ्च प्रतिपादयितुम्, "एतं त्वेव भूयोऽनुव्याख्यास्यामि" इति पुनः पुनरुक्त्वा, "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यभिधानात्। अतः कर्मणा संवद्धस्य परं ज्योतिरुपसंपद्य वन्धनिवृत्तिरूपा मुक्तिः, स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते। स्वरूपाविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते, 'युक्त्याऽयमर्थो निष्पद्यते' इत्यादिषु ॥ २ ॥

यच्चोक्तम्—आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात् स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थाववोधित्वं स्यादिति कृत्वा देवाद्यवस्थावत् सुखसंवन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिरिति—तत्रोत्तरम्—

### आत्मा प्रकरणात् ॥ ४-४-३ ॥

स्वरूपेणैवायमात्माऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक इति प्रकरणादवगम्यते। "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति हि प्रजापतिवाक्यप्रक्रमः। इदं च प्रकरणं प्रत्यगात्मविषयमिति, "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यत्र प्रतिपादितम्। अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्ययाऽविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसंपद्याऽऽविर्भूतस्वरूपो भवति। अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसंपन्नस्याविर्भवन्ति; नोत्पद्यन्ते। यथोक्तं भगवता शौनकेनापि—

---

नानर्थक इत्यर्थः। **प्रतिज्ञाना**दिति हेतुं व्याचष्टे-**सा ही**ति। **सा**—तिरोधाननिवृत्तिः। निवृत्ततिरोधानं स्वरूपं प्रतिज्ञातमिति भावः। तथा प्रतिज्ञातमिति कथमवगतमित्याह **कुत इद**मिति। **य आत्मे**त्यादि। जाग्रदाद्यवस्थासु उच्यमानासु प्रत्यवस्थम्, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युक्तम्। तत्र 'एतं त्वेव तेऽनुव्याख्यास्यामि' इति प्रतिपर्यायमुक्तस्य **एत**च्छब्दस्य प्रकृतपरामर्शित्वात् **य आत्मे**त्यादिना प्रकृतस्यापहतपाप्मत्वादिगुणकत्वात् अपहतपाप्मत्वादीनां च जाग्रदाद्यवस्थस्यासंभवात् गुणाष्टकयुक्तस्वाभाविकरूपकथनमेव प्रतिज्ञातम्। श्रोतुराशयपरीक्षार्थं [1]जाग्रदादिकथनम्। तस्मात् **व्याख्यास्यामी**त्युक्तम्। व्याख्यातव्यरूपं स्वाभाविकमेवेत्यर्थः। ततः किमित्यत्राह **अतः कर्मणे**ति। **अभिनिष्पत्ति**शब्दः कथं वाचक इत्यत्राह **स्वरूपाविर्भावेपी**ति। **निष्पद्यत इत्यादि**ष्विति। **आदिशब्देन**, 'विचार्य च पुनःपुनः|इदमेकं सुनिष्पन्नम्' इत्यादिप्रयोगो विवक्षितः। एवमयमर्थः साध्यत इति सिद्धिपर्यायत्वेन प्रयुज्यमानोऽभिनिष्पत्तिशब्द आविर्भावस्यापि वाचक इत्यर्थः ॥ २ ॥

उत्तरसूत्रशङ्कामाह **यच्चोक्त**मिति। **आत्मा प्रकरणात्** ॥ परमात्मविषयं हीदं वाक्यमित्यत्राह **इदं चेति**। स्वाभाविकत्वे सर्वदोपलभ्येरन्निमे गुणा इत्यत्राह **अत** इति। आनन्दश्चेत्, औपाधिकाकारसम्बन्धनिबन्धनो[2] न भवति। संसारदशायां स्वाभाविकानन्दस्य तिरोहितत्वादौपाधिकरूपसम्बन्धसापेक्ष

---

1 आत्मनो जाग्रदाद्यवस्थत्वोक्त्या तत्स्वाभाविकत्वावगमात् अपहतपाप्मत्वादिस्वरूपं कथमिति शंकते नवेति परीक्षार्थमित्यर्थः। 2 योयं आनन्दः स स औपाधिकाकारनिबन्धन इति न भवतीत्यर्थः।

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम्। सदेव नीयते व्यक्तिमसतः संभवः कुतः॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाश्यन्ते, न जन्यन्ते, नित्या एवात्मनो हि ते॥"

इति। अतो ज्ञानानन्दादिगुणानां कर्मणाऽऽत्मनि सङ्कुचितानां परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं सम्पद्याविर्भावः इति॥ ३॥

इति सम्पद्याविर्भावाधिकरणम्।

---

आनन्दयोगो भवति। अत एव सुषुप्तौ चानन्दायोगः[1] न त्वानन्दस्यौपाधिकाकारहेतुत्वस्वाभाव्यात्। तिरोधाननिवृत्तौ स्वाभाविक एवाऽऽनन्द आविर्भवतीति स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य नापुरुषार्थावबोधित्वमित्यर्थः।

**परे चापरे च**—परं ज्योतिरिति ज्योतिश्शब्दस्य भौतिकपरत्वशङ्कायामात्मविषयत्वप्रतिपादकं **आत्मा प्रकरणा**दिति सूत्रं व्याचक्षते। तदयुक्तम्। अस्माभिर्दहराधिकरणे निर्णीतत्वात् तैश्च **ज्योतिर्दर्शना**दित्यत्र समर्थितत्वाच्च भौतिकविषयत्वशङ्कानुदयात्; अधिकशङ्काहेत्वभावाच्च। अतोऽपुरुषार्थत्वपरिहारपरत्वं युक्तम्। अनध्याहारे सूत्रवैयर्थ्यात् तत्परिहारार्थोऽध्याहारो न दोषाय; अपि तु गुणायैव। तस्मिंश्च न्याय्ये सति आत्मसंबन्धितया श्रुतगुणवाचिपदाध्याहारो न्याय्यः॥ कः पुनर्विशेषः पूर्वावस्थात इति शङ्कायां द्वितीयसूत्रमवतारयन्ति॥ तत्र **परे** प्रष्टव्याः—किं काल्पनिकाकारनिवृत्तिः स्वरूपं वा तदतिरिक्तं वेति। आद्ये, मोक्षोपायवैयर्थ्यम्; द्वितीये, निवृत्तिर्बाध्या वा, न वा। बाध्या चेत, अपुनरावृत्तिश्रुतिविरोधः। अबाध्या चेत्, परमार्थविशेषवत्त्वम्। निवृत्तिर्जडा वा, न वा?। जडा चेत् अजडस्य जडधर्मत्वं स्यात्। ततश्च भवद्भिरुक्ता एव दोषाः स्युः। विजातीयनानात्वञ्च स्यात्। अजडा चेत्—सजातीयनानात्वं स्यात्। सा च निवृत्तिः कस्मै प्रकाशते। यदि ब्रह्मणेः, तदयुक्तम्। स्वानुभवस्वभावस्याविद्यया विनाऽप्यन्यानुभवरूपत्वविरोधात। यदि स्वस्मै, तदा प्रत्यगर्थद्वयप्रसङ्गः।

**अन्ये तु** परं ज्योतिरुपसम्पन्नस्य जक्षणादिश्रवणात् विलक्षणसांसारिकफलप्राप्तोऽयं मुक्त इति पूर्वपक्षं कृत्वा मुक्तात्मप्रतिपादनप्रतिज्ञानात् जक्षणादेः साङ्कल्पिकत्वोपपत्तेश्च सिद्धान्तपरमधिकरणान्तरं द्वितीयसूत्रं व्याचक्षते॥ तदयुक्तम्; 'सङ्कल्पादेव तच्छ्रुतेः' इत्यत्र पितृलोकादिसृष्टेः सत्यसङ्कल्पमूलताया उपपादयिष्यमाणत्वात् अत्र वक्तव्याभावात्। अश्लिष्टविनष्टोत्तरपूर्वाघत्वात् सांपराये विधूतकर्मत्वाच्च परं ज्योतिरुपसंपन्नस्य संसारित्वशङ्कानुदयात्। अभिनिष्पन्नं रूपं किमपहतपाप्मत्वादिविशिष्टस्वरूपम्, उत जक्षणादिनिष्पादनशक्तिरिति विचारे—पूर्वं कर्मसंबन्धभाजः [2]पाप्मप्रागभावप्रध्वंसात्यन्ताभावरूपापहतपाप्मत्वाद्ययोगात् तदाविर्भावानुपपत्तेः जक्षणादिशक्तिरिति पूर्वपक्षं कृत्वा—पुण्यपापहेतुभूतव्यापारचिरधृतदेहेन्द्रियशोकादिहेतुषु सत्स्वपि पापजराद्युत्पत्तिप्रतिबन्धशक्तेर्नित्यायाः प्राक्तिरोभूताया आविर्भावो-

---

1 आनन्दायोगः—धर्मभूतानन्दाभावः।

2 तदत्यन्ताभावः तत्प्रागभावात्यन्ताभावः तद्ध्वंसात्यन्ताभावश्च समनियतत्वादेकः। सः तस्य भावस्य तत्प्रागभावस्य तद्ध्वंसस्य वा सर्वदाऽधिकरणे न भवति; विरोधात्।

अविभागेनदृष्टत्वाधिकरणम् । ४-४-२

## अविभागेन दृष्टत्वात् ॥ ४-४ ४ ॥

किमयं परं ज्योतिरुपसंपन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तमिति विशये—"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिश्रुतिस्मृतिभ्यां मुक्तस्य परेण साहित्य[1]साम्यसाधर्म्यावगमात् पृथग्भूतमनुभवति—इति प्राप्ते—उच्यते—अविभागेनेति । परस्माद् ब्रह्मणः स्वात्मानमविभागेनानुभवति मुक्तः । कुतः । दृष्टत्वात्—परब्रह्मोपसंपत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि "तत्त्वमसि" "अयमात्मा ब्रह्म", "ऐतदात्म्यमिदं सर्वम्," सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यनिर्देशैः, "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा ऽन्तर्याम्यमृतः", "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम्, "अवस्थितेरिति काशकृत्स्नः" इत्यत्र । अतोऽविभागेन—अहं ब्रह्मास्मीत्येवानुभवति । साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः

---

पपत्तेः, जक्षणादिशक्तेरपि सत्यसङ्कल्पत्वान्तर्भावाच्चापहतपाप्मत्वादिलक्षणं स्वरूपमिति सिद्धान्तपरमधिकरणान्तरं तृतीयं सूत्रं व्याचक्षते ॥ तदयुक्तम्; अपहतपाप्मत्वादिलक्षणं स्वरूपमिति व्यवस्थापिते सति, ब्राह्मेण जैमिनिरित्यधिकरणस्यानुत्थानप्रसङ्गात् । अतोऽपुरुषार्थत्व-अभिनिष्पत्तिवचनवैयर्थ्यशङ्कापरिहारपरत्वमेव सूत्रद्वयस्य न्याय्यम् ॥ ३ ॥ सम्पद्याविर्भावाधिकरणम् ।

**अविभागेन दृष्टत्वात्** ॥ अवान्तरसङ्गतिः स्पष्टा । मुक्तः किमात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तम्; किं साहित्यसाम्यसाधर्म्यवचनानि अविभागेनानुभवे विरुध्यन्ते, नेति; किं प्रकारभूतस्यैव साहित्यादिकमुपपन्नम्, नेति । न चेत्—तद्वचनविरोधात् पृथग्भावेनानुभवः । उपपन्नं चेत्—तद्वचनाविरोधादविभागेनानुभवः । यथावस्थितस्योपास्यत्वे यथोपासनभावित्वे च फलस्य स्थिते कथं पूर्वपक्षोत्थानमिति शङ्कायाम्, सहश्रुतिसाम्यश्रुतिसाधर्म्यस्मृतीनां बलात् तत्क्रतुन्यायोऽपोदित इत्यभिप्रायेण पूर्वपक्षमाह **सह ब्रह्मणेति** । श्रुतेर्भोक्तृसाहित्यपरत्वं पूर्वपक्षिणो मतम् । **साम्यसाधर्म्यशब्दौ** नार्थभेदविवक्षया प्रयुक्तौ; अपि तु उदाहृतश्रुतिस्मृतिवचनस्थत्वात् प्रयुक्तौ । साम्यस्य पारम्ये सति प्रकारप्रकारिभावादिलक्षणवैषम्यं बद्धावस्थायामेवेति पूर्वपक्षिणोऽभिप्रायः ।

**अविभागेनेतीति** । याथातथ्येन स्वरूपं दृष्टमस्तु; ततः किमित्यत्राह **स्वात्मनः स्वरूपं हीति** । स्वरूपैक्यव्यावृत्त्यर्थमाह **य आत्मनीति** । **अहं ब्रह्मासीत्येवानुभवतीति** । अहमर्थस्य तत्पर्यन्तत्वेन

---

1 साम्यादिसमानार्थत्वाय भोक्तृसाहित्यं सहशब्दार्थ इति भावः ।

**प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः। ब्रह्मप्रकारतया तदविभागोक्तेर्हि, "सङ्कल्पादेव तच्छ्रुतेः" इत्यादि न विरुद्ध्यते; "अधिकं तु भेदनिर्देशात्", "अधिकोपदेशात्" इत्यादि च ॥ ४ ॥ अविभागेनदृष्टत्वाधिकरणम् ।**

---

तद्बुद्धिशब्दयोश्च तत्पर्यन्तत्वात् तथात्वेनानुभवतीत्यर्थः। **न कश्चिद्विरोधः**। सहश्रुतेर्भोग्य[1]साहित्यपरत्वात् भोग्यसाहित्यस्य ब्रह्मपर्यन्तत्वेऽपि संभवात् तत्पर्यन्तत्वेनानुभवे न विरोध इत्यर्थः ॥ उक्तप्रकार एवाविभागः, न तु स्वरूपैक्यमविभागः, तथा सति पूर्वापरवैघट्यादित्याह **ब्रह्मप्रकारतये**ति ।

**परे** त्वत्र—'स तत्र पर्येति' इत्यधिकरणाधिकर्तव्यभावेन, उपसंपत्तौ कर्मकर्तृभावेन च भेदं पूर्वपक्षीकृत्य—तत्त्वमसीत्यादिवाक्यैः परमात्मनो दृष्टत्वात् यथादर्शनं फलत्वात् नदीसमुद्रनिदर्शनादिभिश्चाविभागं सिद्धान्तयन्ति। 'स्वे महिम्नि प्रतिष्ठितः' इतिवत् 'स तत्र पर्येति' इत्यादीनामर्थः। अस्मिन् पक्षे परविद्याप्रकरणस्थानां मुक्तौ भेदश्रुतीनां गुणानुभवश्रुतीनां चामुख्यार्थत्वमिति, तासामभेदश्रुतीनाञ्च मुख्यार्थत्वानुगुणः पक्ष एव प्रबलः। भेदश्रुत्यमुख्यार्थत्वदोषोऽ**परेषाम**पि समानः। औपाधिकनामरूपप्रहाणेन संश्लेषे दृष्टान्तो नदीसमुद्रघटकरकाकाशादिरिति सर्वमुपपन्नम् ।

**अन्ये** तु—'सह ब्रह्मणा', 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव' इत्यत्र तादृक्त्वमुक्तम्; न तु तद्भावः। 'सर्वैष्वात्मस्वन्नमत्ति' इत्यादिभेदव्यपदेशात् मुक्तस्य स्वपरविज्ञानवत्तया स्वापप्रलययोरिव विभागशक्तिमत्तया निर्वाहायोगात्। "शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः। प्रत्यभाषत धर्मात्मा भोश्शब्देनानुनादयन्" इति सर्वात्मभूतस्यापि संभाषणादिदर्शनात्, वेदान्तेषु 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इत्याम्नातो मुक्तस्य सर्वात्मभावः संश्लेषमात्रमिति पूर्वपक्षं कृत्वा—भोक्तृभोग्येश्वरैर्जले जलवत् क्षीरे नीरवदविभागं गच्छति, नामरूपविलयप्रतिपादनसामानाधिकरण्याभ्याम्; 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिश्रुतेश्च। शक्तिभेदस्य विद्यमानत्वाद्भेदवादा अविरुद्धाः, अविभागापत्तावपि स्वपरसंबोध उपपन्नः, सुषुप्ताविव करणाधीनज्ञानत्वे सति उपरतकरणत्वाभावात्। अतः स्थित एव सर्वात्मभावे शरीरभेदेन विहर्तुमिच्छति चेत्, विहरतीति सिद्धान्तयन्ति ॥ अस्मिन् पक्षे पूर्वपक्षात् सिद्धान्तस्य शब्दमात्रेण भेदः, न त्वर्थतः; स्वपरसंबोधविभागशक्त्यनपगमात् तत्कार्यसंबोधस्य पृथग्व्यवहाराणां च विद्यमानत्वात् ॥ कदाचिदसंबोधेनापि तिष्ठतीति चेत्—तदयुक्तम्; करणानपेक्षज्ञानस्य सङ्कोचकाभावात्। यद्यप्यसंबोधः, तथाऽपि सुषुप्तात्मनां परस्परैक्याभावात् तद्वन्नाविभागः ॥ देहाद्युपाधिसंबन्धान्न परस्परैक्यमिति चेत्—तर्हि सूक्ष्माचित्तत्त्वादिव भेदो दुष्परिहवः ॥ अचितः शक्तिमात्रशेषत्वाभावान्नानावस्थत्वात् तस्माद्भेद इति चेत्, तर्हि निस्सम्बोधेऽपि तस्मिन्नीश्वरात्सर्वज्ञाद्भेदः स्यादेव, अन्यतरशिरसि भेदकधर्मस्य विद्यमानत्वादेव। किञ्च यदि अयुतसिद्धिरविभागः, असत्सिद्धान्ताभ्युपगमः स्यात। न ह्यध्यस्तभेदनिवृत्तिः, ब्रह्माज्ञानपक्षप्रसङ्गात्। नाप्यौपाधिकभेदनिवृत्तिः; भास्करमतादविशेषापातात्। नाप्येकसमुदायान्तर्भावः; देवदत्तस्य पारषत्सामानाधिकरण्यवत् 'स इदं सर्वम्' इति सामानाधिकरण्यस्य मुख्यत्वायोगात्। नापि सर्वथा भेदनिवृत्तिः, शक्तितो भेदस्याभ्युपगमात् ॥

---

1 आप्नोतिपरमित्येतद्विवरणरूपत्वात् भोग्यसाहित्यपरमेवेति भावः ।

ब्राह्माधिकरणम् ४-४-३

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४-४-५ ॥

प्रत्यगात्मनः परं ज्योतिरुपसंपद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम्। तत्र येन स्वरूपेणायमाविर्भवति तत् स्वरूपं श्रुतिवैविध्याद्विचार्यते—किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवति, उत विज्ञानमात्रमेवेति तेन रूपेण, अथोभयोरविरोध इत्युभयस्वरूपेणेति। किं तावत् प्राप्तम्। ब्राह्मेणेति जैमिनिराचार्यो मन्यते। ब्राह्मेण—अपहतपाप्मत्वादिनेत्यर्थः। अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसंबन्धितया श्रुताः। ब्राह्मेणेति कुतोऽवगम्यते। उपन्यासादिभ्यः। उपन्यस्यन्ते हि ब्रह्मगुणाः अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये, "य आत्माऽपहतपाप्मा" इत्यादिना "सत्यसङ्कल्पः" इत्यन्तेन। आदिशब्देन सत्यसङ्कल्पत्वादिगुणायत्ताः जक्षणादयः, "जक्षत्क्रीडन् रममाणः" इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते। अत एभ्य उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न संभवतीति जैमिनेर्मतम् ॥५॥

---

विभागशक्तिव्यतिरिक्तभेदाभाव इति चेत्, किं तदा—'विभागो नास्ति, किंतु विभागशक्तिरेव' इति मतम्? तन्न; अणुत्वस्य स्थितत्वात्। अणुत्वं त्यक्तं न वा। त्यक्तं चेत्, सर्षपघटमहीधरादीनामिव स्वरूपगतपरिमाणविरहेण लयाभ्युपगमे स्वरूपानित्यत्वमेव स्यात्। न चेत्, विभागशक्तिव्यतिरिक्तभेदस्य स्थितौ नाविभागः। किञ्च विभागशक्तिव्यतिरिक्तनित्यभेदानभ्युपगमे विभागशक्त्या कदाचिदात्मानं विभज्य विहरन्मुक्तः किं पूर्वमुक्त एवात्मा वा, रामकृष्णादिवत् परमात्मैकदेशो वेति विशये सति—इदानीमुद्धृतशीकरस्य पूर्वप्रलीनशीकरांशानन्यत्वनिश्चयस्येव देवदत्तात्मानन्यत्वनिश्चयस्य दुष्करत्वात् मुक्तेश्वरांशसङ्करः स्यात्। ततश्च कदाचिन्मुक्तस्यापि जगद्व्यापारसम्भवः स्यात् ॥ ईश्वरः सर्वज्ञत्वाच्छक्तिमात्रावशेषमपि मुक्तमसङ्कीर्णं जानातीति न जगद्व्यापारप्रसङ्ग इति चेत्—तर्ह्यसङ्कीर्णतया ज्ञानं भेदकाकारेण विना स्वरूपभेदेन वा विनाऽनुपपन्नमिति विभागशक्तिव्यतिरिक्तभेदाभावरूपाविभागोऽनुपपन्नः। भोक्तृभोग्येश्वराणां विरुद्धस्वभावत्वाच्च मुक्तस्य तैरविभागोऽप्यनुपपन्नः। अतः पूर्वपक्षाद्विशेषसिद्धिर्दुरुपपादा॥

इति अविभागेनदृष्टत्वाधिकरणम्।

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः** ॥ अवान्तरसङ्गतिमाह **प्रत्यगात्मन** इति। प्रथमाधिकरणेन सङ्गतिरित्यर्थः। **अपहतपाप्मत्वादिकमेवेति एवकारेण** स्वप्रकाशत्वव्यावृत्तिः, **विज्ञानमात्रमेवेति मात्रशब्देनांशतो** जाड्यव्युदासः, **एवकारेण** गुणाष्टकव्युदासः। किं गुणाष्टकविशिष्टमेवास्य स्वरूपम्, उत विज्ञानमात्रमेव, उतोभयं स्वरूपम्; किं गुणाष्टकवैशिष्ट्य-ज्ञानमात्रस्वरूपत्वविषयश्रुत्योः प्राबल्यदौर्बल्यविभागो युज्यते, नेति; तयोः किमविरोधः संभवति, नेति; विज्ञानघन एवेत्यवधारणं किं गुणान्तरं व्यावर्तयितुं शक्नोति, नेति। यदाऽवधारणं गुणान्तरव्यावर्तनक्षमम्, तदानीमविरोधासंभवेन प्राबल्यदौर्बल्यविभागाश्रयणस्य न्याय्यत्वात् ऋषिद्वयपक्षापेक्षयाऽन्यतरस्वरूपत्वसिद्धिः। यदा न व्यावर्तनक्षमम्, तदा विरोधाभावेन प्राबल्यदौर्बल्यविभागाश्रयणस्यायुक्तत्वादुभयस्वरूपत्वम्। अपहतपाप्मत्वादेः कथं ब्राह्मत्वमित्यत्राह **अपहतपाप्मत्वादयो** हीति। **व्यवहाराः**—प्रवृत्तयः। **न संभवतीति**। स्वरूपं जडं ज्ञानत्वे ज्ञानाश्रयत्वायोगादिति भावः ॥ ५ ॥

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४-४-६ ॥**

चैतन्यमात्रमेवास्यात्मनः स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते । कुतः । तदात्मकत्वात्—तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव", "विज्ञानघन एव" इत्यवधारणाद्विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते । अतोऽस्य गुणान्तराभावादपहतपाप्मेत्यादयः शब्दाः विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चितितन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥ ६ ॥

संप्रति भगवान् बादरायणः स्वमतेन सिद्धान्तमाह—

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ४-४-७ ॥**

एवमपि—विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि, सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते । कुतः । उपन्यासात् पूर्वभावात् । औपनिषदात्, "य आत्माऽपहतपाप्मा" इत्याद्युपन्यासात् प्रमाणात् पूर्वेषामपहतपाप्मत्वसत्यसङ्कल्पत्वादीनामपि भावात्—विद्यमानत्वात् । तुल्यप्रमाणकानामितरेतरबाधो न युज्यते इत्यर्थः । न च वस्तु-

---

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः** ॥ **तेने**ति । सूत्रे भाष्ये च तृतीयान्तनिर्देशः औपचारिकः । **विकारसुखदुःखादी**ति । आदिशब्दादुपेक्षाग्रहणम् । **विजर** इत्यादिपदानि निर्विकारत्वपराणि । **विशोकः**—निर्दुःखः, **सत्यकामः**—सत्यम्—अकादाचित्कं सुखमस्येति **सत्यकाम**पदं कादाचित्कसुखराहित्यपरम् ; [1] न तु नित्यसुखत्वपरम् । **सत्यसङ्कल्पः**—उपेक्षारहितः । न ह्युपेक्षकः सत्यसङ्कल्पः । मोघेन सङ्कल्पेन रहित इति वा पूर्वपक्षार्थः ॥ ६ ॥

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः** ॥ विज्ञानमात्रप्रतिपादनपरत्वापातप्रतीतिं विज्ञानघन एवेत्यादिवाक्यस्याभ्युपगम्य परिहरति **एवमपी**त्यादिना । अपहतपाप्मेत्यादिके वाक्ये सत्यपि तत् पूर्वपक्षीकृत्य ह्यौडुलोमिमतमुदीरितमिति शङ्कायां सूत्रतात्पर्यमाह **तुल्यप्रमाणकाना**मिति । **एवकारः** कस्यचिद्वाक्यस्य शेषभूततया न स्वतन्त्रार्थप्रतिपादकः ; अवधारणीयसापेक्षत्वादवधारणस्य । अतः शेषभूतैवकारस्वारस्याय न शेषिभूतपदजातभङ्गः कार्यः ; अपि तु शेषिणमभङ्क्त्वा शेषभूतभङ्ग एव कार्यः । तस्मादेवकारस्वारस्यार्थं वाक्यान्तरगता गुणा न भञ्जनीया इति विज्ञानरूपत्वमपहतपाप्मत्वादिकं च तुल्यप्रमाणकत्वादेवकारभङ्गेनापि स्वीकर्तव्यमित्यर्थः । **न च वस्तुविरोधा**दिति । **वस्तुविरोधः**—ज्ञानस्य ज्ञानान्तराश्रयत्वासंभवः । स किं व्याप्त्याऽभिधीयते, उत श्रुतिबलात् । व्याप्त्या चेत्—ज्ञानं कस्यचित् गुणभूतं दृष्टमिति ब्रह्म च तथा स्यात् ॥ श्रुतिप्रतिपन्नत्वान्न गुणभूतमिति चेत्—तत एव श्रुतिबलात् गुणाश्रयत्वमप्यङ्गीक्रियताम् । यत्तु न ज्ञानं ज्ञानान्तराश्रय इति—तन्न

---

1 राहित्यवाचकपदाभावात् कथमेवमर्थलाभ इति चेत्—लोके यत् सुखं यः संकल्पः, तत् सर्वं कादाचित्कमिति नियमात् सत्यसुख इत्यादिप्रयोगः असुख इत्यादिप्रयोगतुल्यः । विषाणरहित इति प्रयोक्तव्ये शशविषाणवानिति प्रयोगवदित्याशयः ।

विरोधादपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यम्; विशेषाभावाद्विपरीतं कस्मान्न भवतीति न्यायात्। तुल्यबलत्वे ह्यशक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम्। 'एवमप्यविरोधः' इति अभ्युपगम्य वदन्, ज्ञानमात्रमेवास्य स्वरूपं नान्यत् किञ्चिदस्तीत्ययमर्थो 'विज्ञानघन एव' इत्यादिभिर्न प्रतिपाद्यत इति मन्यते। कस्तर्हि 'विज्ञानघन एव' इत्यवधारणस्यार्थः। कृत्स्नोऽप्यात्मा जडव्यावृत्तस्वप्रकाशः; नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीति। अयमर्थो वाक्यादेव सुव्यक्तः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति। न चैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसंबन्धो वाक्यान्तरावगतो विरुध्यते; यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते। इदमत्र वाक्यतात्पर्यम्—यथा रसवत्सु आम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वम्—तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वम्; स्वप्रकाशरूपत्वमित्यर्थः॥ ७॥ इति ब्राह्माधिकरणम्।

---

ज्ञानत्वप्रयुक्तम्; अपि तु गुणभूतज्ञानत्वप्रयुक्तम्। आत्मनस्तु गुणत्वाभावात् ज्ञानस्वरूपस्यापि ज्ञानाश्रयत्वे व्याप्तिविरोधोऽपि नास्तीत्यनुसन्धेयम्। **विशेषाभावादि**ति। उभयमपि श्रुतिसिद्धत्वाविशेषान्नान्योन्यबाधकम्। बाधकं चेत्, विपर्ययेण स्यादित्यर्थः। **अशक्यस्य** गुणान्तरबाधेन निर्वोढुमशक्यस्य। **अन्यपरत्वम्**—अविरुद्धार्थान्तरपरत्वम्। अभ्युपगम्य वदतस्तात्पर्यमाह **एवमपी**ति। अपहतपाप्मत्वादिविरुद्धार्थप्रतीत्यभावं मन्यत इत्यर्थः। तमेव चोद्यपूर्वकमुपपादयति **कस्तर्ही**त्यादिना। वाक्यादेव सुव्यक्तत्वं वाक्यैकदेशभूतदृष्टान्तवाक्येनोपपादयति **स यथे**ति। आत्मनः सर्वत्र विज्ञानघनत्वं स्यात्; ततः किं गुणाश्रयत्वस्येत्यत आह **न चैवमि**ति। **स यथे**ति दृष्टान्तवाक्येऽप्यविरोधः कथमवगम्यत इत्यत्राह **यथे**ति। दृष्टान्तवाक्यगतावधारणस्य कोऽर्थः, तत्रोपजीव्यांशश्च क इत्यत्राह **इदमत्र वाक्यतात्पर्य**मिति। प्रदेशभेदे जडत्वं व्यावर्त्यमित्यर्थः। **विज्ञानस्वरूपत्व**मित्येतद्व्याचष्टे **स्वप्रकाशस्वरूपत्व**मिति॥

**परे** तु तृतीयं सूत्रमेवं वर्णयन्ति—ज्ञानमात्रस्वरूपत्वेऽपि सत्यसङ्कल्पत्वादीनां व्यावहारिकत्वादविरोधं बादरायणो मन्यत इति॥ तदयुक्तम्; व्यावहारिकत्वाश्रयणस्य विरोधफलत्वेनाविरोधसूत्रप्रणयनस्य निष्प्रयोजनत्वात्, संभवत्यविरोधादुभयपारमार्थ्ये विरोधफलभूतव्यावहारिकत्वाश्रयणायोगात्। सत्यकामत्वादीनां दुःखाद्यभावपरत्वेन निर्वाहेऽभिमते तेषां पदानाममुख्यत्वाच्च।

**अपरै**रविरोधः। **अन्येषां** पक्षे सन्मात्ररूपेण सर्वात्मभावेन स्थित एवान्येन विभक्तेन रूपेण नानाशरीरवर्तिना विहरतीति यदुक्तम्—तन्निरूप्यम्। किं—स्वरूपं सर्वात्मभावेन तिष्ठति। विसर्पता ज्ञानेनाधिष्ठितशरीरो विहरतीत्यभिप्रायः? तत्र स्वरूपस्य सर्वात्मभावोऽनुपपन्नः; अणुत्वात्। तत्प्रहाणेन सन्मात्रब्रह्मतापत्तिर्जलबिन्दोर्बिन्दुत्वप्रहाणेन समुद्रतापत्तितुल्या। ततश्च जृम्भमाणस्य तरङ्गस्य पूर्वप्रलीनबिन्दुविशेषाश्रयत्वनिर्धारणवत् विसर्पतो ज्ञानस्य मुक्तात्मविशेषाश्रयत्वनिर्द्धारणायोगात् न मुक्तो विहरतीति

## सङ्कल्पाधिकरणम् ४-४-४

### सङ्कल्पादेव तच्छ्रुतेः ॥ ४-४-८ ॥

मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम् । तमधिकृत्य तस्य सत्यसङ्कल्पत्वप्रयुक्ता व्यवहाराश्च श्रूयन्ते, "स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति । किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा, उत परमपुरुषस्येव सङ्कल्पमात्रादेव भवतीति विशये—लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षेति प्राप्ते उच्यते—

---

वक्तुं युक्तम्॥ ननु मुक्तस्यात्मभावो नाम जलबिन्दोः समुद्र इव न भेदकाकारप्रहाणेन लयः, किंतु क्षीरे नीरस्येव भेदकाकाराप्रहाणेन संसर्गः । तस्य च स्वरूपस्य विसर्पणसङ्कोचनविभागाविभागविषयाः शक्तयः सन्ति । अतो विभागशक्त्या विभक्त एकदेशो विहरतीति चेत्—विभक्तांशः किम् इदन्तया भाति, उताहमिति । आद्ये च, सोंशोऽनादिश्चेत्—धर्मभूतनित्यज्ञानविकासाद्यभ्युपगमादस्मदीय एव पक्षः स्यात् । सादिश्चेत्—प्रत्यगर्थैकदेशस्य पराक्तया परिणामान्निर्विकारत्वश्रुतिभङ्गः । अहमिति भातीति चेत्—तस्याहमिति भासमानस्य विभक्तस्यांशस्यांशान्तरं किमिदन्तया भाति, उताहन्तया । आद्ये, तयोरात्मान्तरत्वं विभक्तस्यांशस्यादिमत्त्वं ध्रुवस्यैकस्य परिणामित्वं च स्यात् । द्वितीये च, परस्परापेक्षयाऽहमिति भासमानावंशौ किमहं चाहं चेति समुच्चयार्हौ भवतः, किमहमेवेति । आद्ये, मिथो भेदकधर्मग्रहणेन विना समुच्चयावभासायोगात् व्यावर्तकधर्मग्रहणं स्यात् । जीवान्तरव्यवच्छेदायैक्यग्रहणं च स्यात् । तत्रेदन्तया व्यावृत्तिः अहन्तयैकत्वञ्च वक्तव्यम् । अत एकं प्रति एकस्याहन्तया इदन्तया च भानं विरुद्ध्येत । समुच्चयानर्हमहमेवेति भातीति चेत्—तर्हि भेदकधर्माभावात् विभक्तत्ववादोऽर्थशून्यः स्यात् । अधिष्ठेयदेहभेदसंबन्ध एव भेदकाकार इति चेन्न ; धर्मभूतज्ञानसंबन्धेनापि करचरणादीनामिवाधिष्ठेयत्वोपपत्तेः । अतः सन्मात्ररूपेण सर्वात्मभावेनावस्थानम् , अन्येन विभक्तरूपेण नानाशरीरवर्तिना विहरणं चानुपपन्नम् ॥ ७ ॥

**सङ्कल्पादेव तच्छ्रुतेः** ॥ अवान्तरसङ्गतिमाह **मुक्त** इति । **विज्ञानघन एवेतिवत् सङ्कल्पादे**वेत्यवधारणस्य सङ्कोचशङ्कया च सङ्गतिरभिप्रेता । **प्रयत्नान्तरे**ति । **प्रयत्न**शब्दः सङ्कल्पव्यतिरिक्तव्यापारपरः । सत्यसङ्कल्पत्वं किं प्रयत्नान्तरसापेक्षम्, उत नेति विशय इत्यर्थः । मुक्तस्य किं ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा, उत सङ्कल्पमात्रमूला ; किमस्य सत्यसङ्कल्पत्वं राजादीनामिव भवति, उत परमपुरुषस्येव ; किं सङ्कल्पादेवेत्यवधारणं राजादितुल्यतां निवर्तयितुं प्रभवति, नेति ; किमीश्वरसङ्कल्पवत् मुक्तात्मसङ्कल्पस्यामोघत्वं संभवति, नेति ; किमस्य जक्षणादयो व्यापाराः पुण्यपापरूपतया बन्धका भवन्ति, नेति । बन्धकाश्चेत्—तत्सङ्कल्पस्य कर्माधीनप्रतिघातसंभवेनेश्वरवत् तत्सङ्कल्पस्यामोघत्वाभावेन अवधारणस्य राजादितुल्यतानिवर्तनाक्षमत्वात् मुक्तस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा स्यात् । यदा बन्धका न भवन्ति, तदा मुक्तात्मनः कर्माधीनप्रतिघातासंभवेन ईश्वरवदमोघसङ्कल्पत्वसंभवेनावधारणस्य राजतुल्यत्वनिवर्तनक्षमत्वात् मुक्तस्य ज्ञात्यादिप्राप्तिः सङ्कल्पमात्रमूला स्यात् । **अस्यापि तत्सापेक्षे**ति । ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षेत्यर्थः । **सङ्कल्पादे**वेत्येवकारस्तु विज्ञानघन एवेतिवत् अयोगव्यवच्छेदपरः, न त्वन्ययोगव्यवच्छेदपर इत्यभिप्रायः ।

**सङ्कल्पादेव—इति । कुतः । तच्छ्रुतेः । "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरसापेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते ; येनास्य सङ्कल्पादेवेत्यवधारणस्य विज्ञानघन एवेतिवत् व्यवस्थापनं क्रियते ॥ ८ ॥**

## अत एव चानन्याधिपतिः ॥ ४-४-९ ॥

**यतो मुक्तः सत्यसङ्कल्पः, अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव 'स स्वराड् भवति' इत्युच्यते ॥ ९ ॥ इति सङ्कल्पाधिकरणम् ।**

---

राद्धान्ते—**विज्ञानघन एवेतिवदि**ति । अनेन [1]सङ्गतिविशेषोऽप्यभिप्रेतः ॥ ८ ॥

**अत एव चानन्याधिपतिः** ॥ सत्यसङ्कल्पत्वोपपादकमिदं सूत्रम् । जक्षणादिव्यापाराणां पुण्यपापरूपत्वेन सङ्कल्पप्रतिघातसंभवात् मोघसङ्कल्पत्वशङ्काव्युदासेनावधारणस्य सङ्कोचनिरासकं हीदम् । अक्षरार्थमाह **यत** इति । अन्याधिपतित्वं विवृणोति **विधिनिषेधे**ति । अनन्याधिपतित्वसत्यसङ्कल्पत्वयोरुपपाद्योपपादकभावं व्यतिरेकेण दर्शयति **विधिनिषेधयोग्यत्वे** हीति । ननु सत्यसङ्कल्पत्वात् विधिनिषेधायोग्यत्वं तदयोग्यत्वात् सत्यसङ्कल्पत्वमित्यन्योन्याश्रय इत्यत्राह **अतः सत्यसङ्कल्पत्वश्रुत्यैवे**ति । **सङ्कल्पादे**वेत्यवधारणासङ्कोचः स्वतः प्राप्तः । मुक्तस्य जक्षणादिव्यापाराणां पुण्यपापरूपत्वमश्रुतम् । न च तत् कल्प्यम्, स्वर्गिणां कर्मफलभूतेषु तिरश्चां व्यापारेषु च व्यभिचारात् । अतः सङ्कोचकाभावादसङ्कुचितेनावधारणेन सत्यसङ्कल्पत्वं सिद्धमिति तयैव श्रुत्या विधिनिषेधागोचरत्वं च ज्ञापितमित्यर्थः । उक्ततर्कानुगृहीतं श्रुत्यन्तरं च विधिनिषेधायोग्यत्वे प्रमाणमित्याह **अत एवे**ति । अनेन सूत्रस्थचशब्दार्थो व्याख्यातो भवति । एवमनेन सूत्रेण मुक्तानामीश्वरवद् ब्राह्मगुणान्वयः प्रतिष्ठापितो भवति । अपहतपाप्मत्वं नाम न पापप्रध्वंसवैशिष्ट्यम्, अपि तु पुण्यपापसजातीयव्यापारेषु सत्स्वपि तत्फलसम्बन्धानर्हत्वमिति अत्रैव हि स्पष्टं दर्शितम् । अत्र **अनधिपति**रिति नोक्तम् ; किन्त्व**नन्याधिपति**रिति । अत्रायमभिप्रायः—स्वाभाविकशेषिणः परमपुरुषादन्यो नाधिपतिर्मुक्तस्येति । अन्यथा ह्य**नधिपति**रित्येतावताऽलम् ॥ **अन्यश**ब्दो बहुव्रीहिसूचनार्थं इति चेन्न ; **अनन्याधिपति**रित्युक्तेऽप्यन्येषामिति समाससद्भावात् । अतोऽन्यशब्दस्योक्त एवार्थ इति **सम्प्रदायः** ।

**परे तु सङ्कल्पादेव** पित्रादि सृजन्नपि मुक्तोऽनन्याधिपतिः, न स्वामिनं सङ्कल्पयतीत्येतदर्थपरम**नन्याधिपति**शब्दमाहुः । तत्र को हेतुः ? स्वामिपारतन्त्र्यस्यापुरुषार्थत्वादिति चेत्—पित्रादिपारतन्त्र्येऽपि तुल्यम् । पित्रादयः प्रियङ्कराश्च स्युः । अतस्तत्सङ्कल्प इति चेत—तत् स्वामिनोऽपि तुल्यम् । अतो नायमर्थ उपपन्नः । **अपरेषामपि** तुल्येयमनुपपत्तिः ।

**अन्ये तु**—'अत एव' इति सूत्रमधिकरणान्तरमाहुः । सर्वेश्वरत्वपरवाक्यैर्मुक्तस्यापीश्वरोऽधिपतिरिति पूर्वपक्षं कृत्वा—मुक्तस्य सत्यसङ्कल्पत्वादेव नास्याधिपतिरित्याहुः ॥ कथम् । दुःखहेतुविरहेण मुक्ते

---

[1] **विज्ञानघन एवेति एवकारो यथा अयोगव्यवच्छेदपरः, तथा संकल्पादेवेत्येवकारोऽपीत्युत्थितेः संगतिरित्यर्थः । पूर्वोक्तरीतिरन्या ।**

## अभावाधिकरणम् ४-४-५

### अभावं बादरिराह ह्येवम् ॥ ४-४-१० ॥

किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं सन्ति न सन्ति चेति

---

तदापादनायोगात्, दुःखासद्भावादेव तन्निवर्तनायोगात्, स्वतःसिद्धानन्दतया तदापादनतन्निवर्तनायोगात्, प्रवृत्तस्य विघाते निवृत्तस्य प्रवर्तने च प्रवृत्तिनिवृत्तिविषयसङ्कल्पयोर्मोघत्वप्रसङ्गाच्च । 'अथ येऽन्यथाऽतो विदुरन्यराजानः, ते क्षय्यलोका भवन्ति' इति अन्यराजवतः क्षय्यलोकतां दर्शयन्(तु?) आत्मविदोऽनन्यराजत्वं दर्शयति(तीति?) 'स स्वराड् भवती'त्यादेश्चायमेवार्थ इति ॥

अत्र ब्रूमः—अधिपतिशब्दस्य शेषिवाचित्वमभिमतं चेत्—तत् अप्रतिषेध्यम्; शेषलक्षणस्य मुक्तात्मनि विरोधासंभवात् । यदि नियन्तृत्वं विवक्षितम्, तच्च मुक्तं प्रति संभवत्येव । तथाहि—नियमनशब्देन यदि नियमनसामान्यं विवक्षितम्, तदा धारणमपि तदन्तर्गतत्वेन विवक्षितं स्यात् । तत् तावदप्रतिषेध्यम्; "स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाहम्" इति वचनात् । स्वेच्छया परप्रवृत्तिनिवृत्त्योरुत्पादनरूपनियमनविशेषो यदि विवक्षितः, तत्प्रतिषेधस्तावत् स्वपक्षव्याघातकः । **जगद्व्यापारवर्ज**मित्यत्र, 'ईश्वराधीनं मुक्तस्य सङ्कल्पादि प्रवर्तते । अस्य जगद्व्यापारवर्जितेषु स्वभोगार्थेषु नित्यं संकल्पो भूयात्; मा भूत् तत्संकल्पविरुद्धेषु जगद्व्यापारेष्वित्यपवर्गप्रदानसमय एवेश्वरः सङ्कल्पयति' इत्यभ्युपगमात् ॥ अपवर्गप्रदानोत्तरकाले तु न तादधीन्यमिति चेन्न; जगद्व्यापारविषयसङ्कल्पोत्पत्तिप्रतिबन्धे तत्प्रतिबन्धकेश्वरसङ्कल्पस्य नित्यस्य वा तदा सञ्जातस्य वा विद्यमानत्वस्यापेक्षितत्वात् । न हि प्रतिबन्धकासंनिधौ कार्यप्रतिबन्धसंभवः ॥ अथ मतम्—प्राथमिकसङ्कल्पजन्यः कश्चिदतिशयो मुक्तात्मगतः सर्वदा जगद्व्यापारं प्रतिबध्नाति, न तदा ईश्वरनियाम्यत्वम् । न ह्यतिशयाधायकानां नियन्तृत्वम्; आधायकविनाशेऽप्याहितातिशयस्य कार्यकरत्वदर्शनादिति—तन्न; कल्पनागौरवप्रसङ्गात् । ईश्वरसङ्कल्पजन्यातिशयस्य स्थायित्वाभ्युपगमादपि वरं हीश्वरसङ्कल्पस्यैव स्थायित्वोपगमः । अतः स्ववचनव्याघातः, सर्वेश्वरत्ववाचिश्रुतिस्वारस्यभङ्गश्च स्यात् । 'यस्यात्मा शरीरम्' इति श्रुतिविरोधश्च । काष्ठाप्राप्तं नियाम्यं हि शरीरम् । न चात्मशब्दो बद्धमात्रपरः । सर्वदेवसर्वभूतानां बद्धानां तन्नियाम्यत्वस्योक्तत्वात् । नाप्यन्तःकरणविषयः, अमुख्यत्वादात्मशब्दस्य; 'यो मनसि तिष्ठन्' इत्यनेन पुनरुक्तत्वाच्च । 'येन येन धाता गच्छति तेन तेन सह गच्छति' इति मुक्तस्य परमात्मानुविधानश्रुतिविरोधश्च । नित्यस्य परसापेक्षत्वमीश्वरप्रमिति- नित्यपदार्थगतपरिमाणादिषु सर्वसंप्रतिपन्नत्वात् संभवति ॥ ९ ॥ इति सङ्कल्पाधिकरणम् ।

**अभावं बादरिराह ह्येवम्** ॥ **यथासङ्कल्प**मिति । अनेन [1]सङ्गतिर्दर्शिता । किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, उत यथासङ्कल्पं सन्ति न सन्ति चेति; तदर्थं 'स एकधा

---

[1] अयोगव्यवच्छेदरूपैवकारार्थास्वीकारात् यथा संकल्पो जीवीयो न नियतः, ईश्वरसंकल्पमात्रादप्यस्य कार्यलाभस्येष्टत्वात् । तद्वद् देहादिकमप्यनियतमिति सिद्धान्तसाम्यात् संगतिरिति भावः । अन्यत् भाष्यार्थदर्पणे ।

**सङ्कल्पादेव**—इति । कुतः । तच्छ्रुतेः । "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरसापेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते ; येनास्य सङ्कल्पादेवेत्यवधारणस्य विज्ञानघन एवेतिवत् व्यवस्थापनं क्रियते ॥ ८ ॥

**अत एव चानन्याधिपतिः ॥ ४-४-९ ॥**

यतो मुक्तः सत्यसङ्कल्पः, अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव 'स स्वराड् भवति' इत्युच्यते ॥ ९ ॥ इति सङ्कल्पाधिकरणम् ।

---

राद्धान्ते—**विज्ञानघन एवेतिवदि**ति । अनेन [1]सङ्गतिविशेषोऽप्यभिप्रेतः ॥ ८ ॥

**अत एव चानन्याधिपतिः** ॥ सत्यसङ्कल्पत्वोपपादकमिदं सूत्रम् । जक्षणादिव्यापाराणां पुण्यपापरूपत्वेन सङ्कल्पप्रतिघातसंभवात् मोघसङ्कल्पत्वशङ्काव्युदासेनावधारणस्य सङ्कोचनिरासकं हीदम् । अक्षरार्थमाह **यत** इति । अन्याधिपतित्वं विवृणोति **विधिनिषेधेति** । अनन्याधिपतित्वसत्यसङ्कल्पत्वयोरुपपाद्योपपादकभावं व्यतिरेकेण दर्शयति **विधिनिषेधयोग्यत्वे** हीति । ननु सत्यसङ्कल्पत्वात् विधिनिषेधायोग्यत्वं तदयोग्यत्वात् सत्यसङ्कल्पत्वमित्यन्योन्याश्रय इत्यत्राह **अतः सत्यसङ्कल्पत्वश्रुत्यैवेति** । **सङ्कल्पादेवे**त्यवधारणासङ्कोचः स्वतः प्राप्तः । मुक्तस्य जक्षणादिव्यापाराणां पुण्यपापरूपत्वमश्रुतम् । न च तत् कल्प्यम्, स्वर्गिणां कर्मफलभूतेषु तिरश्चां व्यापारेषु च व्यभिचारात् । अतः सङ्कोचकाभावादसङ्कुचितेनावधारणेन सत्यसङ्कल्पत्वं सिद्धमिति तयैव श्रुत्या विधिनिषेधागोचरत्वं च ज्ञापितमित्यर्थः । उक्ततर्कानुगृहीतं श्रुत्यन्तरं च विधिनिषेधायोग्यत्वे प्रमाणमित्याह **अत एवे**ति । अनेन सूत्रस्थचशब्दार्थो व्याख्यातो भवति । एवमनेन सूत्रेण मुक्तानामीश्वरवद् ब्राह्मगुणान्वयः प्रतिष्ठापितो भवति । अपहतपाप्मत्वं नाम न पापप्रध्वंसवैशिष्ट्यम्, अपि तु पुण्यपापसजातीयव्यापारेषु सत्स्वपि तत्फलसम्बन्धानर्हत्वमिति अत्रैव हि स्पष्टं दर्शितम् । अत्र **अनधिपति**रिति नोक्तम् ; किन्त्व**नन्याधिपति**रिति । अत्रायमभिप्रायः—स्वाभाविकशेषिणः परमपुरुषादन्यो नाधिपतिर्मुक्तस्येति । अन्यथा ह्य**नधिपति**रित्येतावताऽलम् ॥ **अन्यश**ब्दो बहुव्रीहिसूचनार्थ इति चेन्न ; **अनन्याधिपति**रित्युक्तेऽप्यन्येषामिति समाससद्भावात् । अतोऽन्यशब्दस्योक्त एवार्थ इति **सम्प्रदायः** ।

**परे तु सङ्कल्पादेव** पित्रादि सृजन्नपि मुक्तोऽनन्याधिपतिः, न स्वामिनं सङ्कल्पयतीत्येतदर्थपरम**नन्याधिपति**शब्दमाहुः । तत्र को हेतुः ? स्वामिपारतन्त्र्यस्यापुरुषार्थत्वादिति चेत्—पित्रादिपारतन्त्र्येऽपि तुल्यम् । पित्रादयः प्रियङ्कराश्च स्युः । अतस्तत्सङ्कल्प इति चेत—तत् स्वामिनोऽपि तुल्यम् । अतो नायमर्थ उपपन्नः । **अपरेषामपि** तुल्येयमनुपपत्तिः ।

**अन्ये तु**—'अत एव' इति सूत्रमधिकरणान्तरमाहुः । सर्वेश्वरत्वपरवाक्यैर्मुक्तस्यापीश्वरोऽधिपतिरिति पूर्वपक्षं कृत्वा—मुक्तस्य सत्यसङ्कल्पत्वादेव नास्याधिपतिरित्याहुः ॥ कथम् । दुःखहेतुविरहेण मुक्ते

---

[1] विज्ञानघन एवेति एवकारो यथा अयोगव्यवच्छेदपरः, तथा संकल्पादेवेत्येवकारोऽपीत्युत्थितेः संगतिरित्यर्थः । पूर्वोक्तरीतिरन्या ।

## अभावाधिकरणम् ४-४-५

### अभावं बादरिराह ह्येवम् ॥ ४-४-१० ॥

किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं सन्ति न सन्ति चेति

---

तदापादनायोगात्, दुःखासद्भावादेव तन्निवर्तनायोगात्, स्वतःसिद्धानन्दतया तदापादनतन्निवर्तनायोगात्, प्रवृत्तस्य विघाते निवृत्तस्य प्रवर्तने च प्रवृत्तिनिवृत्तिविषयसङ्कल्पयोर्मोघत्वप्रसङ्गाच्च । 'अथ येऽन्यथाऽतो विदुरन्यराजानः, ते क्षय्यलोका भवन्ति' इति अन्यराजवतः क्षय्यलोकतां दर्शयन्(त्?) आत्मविदोऽनन्यराजत्वं दर्शयति(तीति?) 'स स्वराड् भवती'त्यादेश्चायमेवार्थ इति ॥

अत्र ब्रूमः—अधिपतिशब्दस्य शेषिवाचित्वमभिमतं चेत्—तत् अप्रतिषेध्यम् ; शेषलक्षणस्य मुक्तात्मनि विरोधासंभवात् । यदि नियन्तृत्वं विवक्षितम्, तच्च मुक्तं प्रति संभवत्येव । तथाहि—नियमनशब्देन यदि नियमनसामान्यं विवक्षितम्, तदा धारणमपि तदन्तर्गतत्वेन विवक्षितं स्यात् । तत् तावदप्रतिषेध्यम् ; "स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाहम्" इति वचनात् । स्वेच्छया परप्रवृत्तिनिवृत्त्योरुत्पादनरूपनियमनविशेषो यदि विवक्षितः, तत्प्रतिषेधस्तावत् स्वपक्षव्याघातकः । **जगद्व्यापारवर्ज**मित्यत्र, 'ईश्वराधीनं मुक्तस्य सङ्कल्पादि प्रवर्तते । अस्य जगद्व्यापारवर्जितेषु स्वभोगार्थेषु नित्यं संकल्पो भूयात् ; मा भूत् तत्संकल्पविरुद्धेषु जगद्व्यापारेष्वित्यपवर्गप्रदानसमय एवेश्वरः सङ्कल्पयति' इत्यभ्युपगमात् ॥ अपवर्गप्रदानोत्तरकाले तु न तादधीन्यमिति चेन्न ; जगद्व्यापारविषयसङ्कल्पोत्पत्तिप्रतिबन्धे तत्प्रतिबन्धकेश्वरसङ्कल्पस्य नित्यस्य वा तदा सञ्जातस्य वा विद्यमानत्वस्यापेक्षितत्वात् । न हि प्रतिबन्धकासंनिधौ कार्यप्रतिबन्धसंभवः ॥ अथ मतम्—प्राथमिकसङ्कल्पजन्यः कश्चिदतिशयो मुक्तात्मगतः सर्वदा जगद्व्यापारं प्रतिबध्नाति, न तदा ईश्वरनियाम्यत्वम् । न ह्यतिशयाधायकानां नियन्तृत्वम् ; आधायकविनाशेऽप्याहितातिशयस्य कार्यकरत्वदर्शनादिति—तन्न ; कल्पनागौरवप्रसङ्गात् । ईश्वरसङ्कल्पजन्यातिशयस्य स्थायित्वाभ्युपगमादपि वरं हीश्वरसङ्कल्पस्यैव स्थायित्वोपगमः । अतः स्ववचनव्याघातः, सर्वेश्वरत्ववाचिश्रुतिस्वारस्यभङ्गश्च स्यात् । 'यस्यात्मा शरीरम्' इति श्रुतिविरोधश्च । काष्ठाप्राप्तं नियाम्यं हि शरीरम् । न चात्मशब्दो बद्धमात्रपरः । सर्वदेवसर्वभूतानां बद्धानां तन्नियाम्यत्वस्योक्तत्वात् । नाप्यन्तःकरणविषयः, अमुख्यत्वादात्मशब्दस्य ; 'यो मनसि तिष्ठन्' इत्यनेन पुनरुक्तत्वाच्च । 'येन येन धाता गच्छति तेन तेन सह गच्छति' इति मुक्तस्य परमात्मानुविधानश्रुतिविरोधश्च । नित्यस्य परसापेक्षत्वमीश्वरप्रमिति- नित्यपदार्थगतपरिमाणादिषु सर्वसंप्रतिपन्नत्वात् संभवति ॥ ९ ॥ इति सङ्कल्पाधिकरणम् ।

**अभावं बादरिराह ह्येवम्** ॥ **यथासङ्कल्प**मिति । अनेन [1]सङ्गतिर्दर्शिता । किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, उत यथासङ्कल्पं सन्ति न सन्ति चेति ; तदर्थं 'स एकधा

---

1 अयोगव्यवच्छेदरूपैवकारार्थास्वीकारात् यथा संकल्पो जीवीयो न नियतः, ईश्वरसंकल्पमात्रादप्यस्य कार्यलाभस्येष्टत्वात् । तद्वद् देहादिकमप्यनियतमिति सिद्धान्तसाम्यात् संगतिरिति भावः । अन्यत् भाष्यार्थदर्पणे ।

विशये—शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते । कुतः । आह ह्येवम्—"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति शरीरसंबन्धे दुःखस्यावर्जनीयत्वमभिधाय, "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥

**भावं जैमिनिर्विकल्पामननात् ॥ ४-४-११ ॥**

मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते । कुतः । विकल्पामननात्—विविधः कल्पो विकल्पः ; वैविध्यमित्यर्थः । "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा" इत्यादिश्रुतेः । आत्मन एकस्याच्छेद्यस्यानेकधाभावासंभवात् त्रिधाभावादयः शरीरनिबन्धना इत्यव-

---

भवति' इत्यादिश्रुतिरशरीरत्वश्रुतिं सङ्कोचयितुं शक्नोति, नेति; किं 'स एकधा भवति' इत्यादिश्रुतिर्मुक्तस्य सशरीरत्वं प्रतिपादयितुं प्रभवति, उत न ; प्रतिपादनेऽपि किं सशरीरत्वमात्रं प्रतिपादयति, उत तस्यैच्छत्वमप्यवगमयति ; तदर्थमेकधाभवनत्रिधाभवनादिकं मुक्तस्य शरीरेण विना संभवति, उत न ; असंभवे च मुक्तस्य ब्रह्मानुभवैकभोगस्य तद्व्यतिरिक्तदेहसर्गादाविच्छादिकं संभवति, नेति ; अणोर्जीवस्यानेकशरीरपरिग्रहः संभवति, नेति च । यदा अनेक[1](?)शरीरपरिग्रहो न संभवति, यदा च शरीरेण विनापि त्रिधाभवनादिकमुपपद्यते—तदा सएकधेत्यादिवाक्यस्य शरीरप्रतिपादकत्वाभावेन अशरीरत्वश्रुतिसङ्कोचनासामर्थ्यात् मुक्तोऽशरीर एव स्यात् । यदा—अणोरप्यनेकशरीरयोगः संभवति ; यदा च शरीरेण विना त्रिधाभवनादिकमनुपपन्नम् ; ब्रह्मानुभवैकभोगस्य देहसर्गादीच्छा च न स्यात्—तदा शरीरस्यावश्यापेक्षितत्वात् इच्छाधीनान्वयव्यतिरेकत्वाभावाच्च तत्प्रतिपादकवाक्येनाशरीरत्वश्रुतिसङ्कोचे सति मुक्तः सशरीर एव स्यात् । यदा—अनेकशरीरपरिग्रहोपपत्तिः, अनेकधाभवनञ्च शरीरसापेक्षम्, ब्रह्मानुभवैकभोगस्य देहसर्गादाविच्छा च संभवति—तदानीमैच्छशरीरप्रतिपादनक्षमेण, स एकधा भवतीत्यादिवाक्येनाशरीरत्वश्रुतेः सङ्कोचे सति मुक्तो यथेच्छं सशरीरोऽशरीरश्च स्यादिति । **शरीरेन्द्रियाणामभावमिति** । अभावप्रतिसंबन्धि किमित्यपेक्षायाम्, **तन्वभाव** इति सूत्रस्थतनुशब्देन प्रतियोगिविशेषावगम इति भावः । **शरीरसंबन्ध** इति । शरीरत्वप्रयुक्तं दुःखहेतुत्वमिति भावः । **एवमशरीर एवेत्येकः पक्षः** ॥ १० ॥

**भावं जैमिनिर्विकल्पामननात्** ॥ अत्र शरीरिवाचिशब्दो न श्रुत इत्यत्राह **आत्मन एकस्ये**ति । द्विधाशब्दादीनां धर्मिभेदे एव स्वारस्यम् ; 'तदण्डमकरोत् द्विधा' इत्यादिप्रयोगात् ; द्रव्यत्वपृथिवीत्वादिजातिसंयोगादिगुणपरिस्पन्दरूपक्रियासहस्रान्वितेऽपि घटे द्विधा त्रिधा सहस्रधाऽभूदिति प्रयोगाभावाच्च । तथाऽऽप्यात्मनि स्वरूपभेदासंभवात् शरीरद्वारकमित्यर्थः । तर्ह्यशरीरत्वश्रुतिः कथमित्यत्राह **अशरीरत्ववचनं** त्विति । स्ववाक्येनैव तदुपपादयति **तदेव** हीति । प्रियाप्रियहेतुतया शरीरस्य निषेधात्, प्रियाप्रिययोश्च कर्मफलत्वात् कर्मकृतशरीरविषयो निषेध इत्यर्थः । अतः

---

[1] अनेकेतिपदं न स्यात् ।

गम्यते । अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम् । तदेव हि शरीरं प्रियाप्रियहेतुः ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ४-४-१२ ॥**

'सङ्कल्पादेव' इत्येतत् अतश्शब्देन परामृश्यते । अत एवं सङ्कल्पात् उभयविधम्—सशरीरमशरीरं च मुक्तं भगवान् बादरायणो मन्यते । एवंचोभयी श्रुतिरुपपद्यते, द्वादशाहवत्—यथा "द्वादशाहमृद्धिकामा उपेयुः" "द्वादशाहेन प्रजाकामं याजयेत्" इत्युपैतियजतिचोदनाभ्यां [1]सङ्कल्पभेदेन सत्रमहीनश्च भवति ॥ १२ ॥

यदा शरीराद्युपकरणवत्त्वम् ; तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

**तन्वभावे सन्ध्यवदुपपत्तेः ॥ ४-४-१३ ॥**

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने, "अथ रथान् रथयोगान् पथः सृजते" इत्यारभ्य, "अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता" इति, "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन" इति चेश्वरसृष्टैः रथाद्युपकरणैर्जीवो भुङ्क्ते, तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥

---

सशरीरत्वश्रुतेर्निवारकाभावात् कादाचित्कहेत्वन्तरानुक्तेश्च सर्वदा सशरीरत्वं फलितमिति सूत्राभिप्रायः ॥

सिद्धान्तसूत्रमवतारयति **भगवांस्त्विति** । **द्वादशाहवदुभयविधं बादरायणोऽतः** ॥ अतःपदं व्याचष्टे **सङ्कल्पादेवेति** । त्रिधाभवनादेर्हेत्वाकाङ्क्षायां सत्यसङ्कल्पत्वश्रुतिरेव पूरयति, व्यापारान्तरेष्वपि तस्यैव हेतुत्वश्रवणेनौचित्यादिति भावः । सूत्रस्य वाक्यार्थमाह **अत एवेति**। ननु **उभयी श्रुतिरिति** सशरीरत्वाशरीरत्वश्रुती विवक्षिते । अशरीरत्वश्रुतेः कर्मकृतशरीरपरत्वमुक्तम् । कर्मकृतशरीराभावश्च सर्वदाऽस्ति । तत् कथं कदाचिदशरीरत्वे सा प्रमाणम् ॥ नैवम् ; प्रमाणतया विवक्षितत्वाभावात् । सत्यसङ्कल्पादिवाक्यानुगृहीतया सशरीरत्वश्रुत्या यथेच्छशरीरत्वे चाभ्युपगते सति अशरीरत्वश्रुतिरप्यर्थवती, सशरीरत्वश्रुतिरप्यबाधिता स्यादिति भाष्यार्थः । **सङ्कल्पभेदेन** ।[1] सत्रत्वेऽहीनत्वे च प्रामाणिके सति तत्तत्प्रयोगविशेषेषु सङ्कल्पभेदो नियामक इत्यर्थः । बहुयजमानसङ्कल्पात्[2] सत्रम्, एकस्य सङ्कल्पादहीनम् ॥ १२ ॥

पूर्वसूत्रसङ्गतमुत्तरसूत्रार्थं संक्षिपन् सूत्रमवतारयति **यदेति** । **तन्वभावे सन्ध्यवदुपपत्तेः** ॥ **परमपुरुषसृष्टैः**—अद्वारकसृष्टैरित्यर्थः । **भोगोपपत्तेरिति** । देहादिसृष्टेर्ब्रह्मानुभवान्तर्गतत्वे तत एव तदिच्छाद्यसंभवेऽभ्युपगम्यमानेऽपि एकधाभवनादिश्रवणबलाद् तदनुगुणप्रकारपरिकल्पनेन निर्वाहो न्याय्य इति भावः । **यथेति**, अस्य निर्वाहस्यौचित्यप्रदर्शनार्थं सूत्रे सन्ध्यदृष्टान्तोपादानमित्यभिप्रयन् सार्थत्वमाह (साक्षादर्थमाह) ॥ १३ ॥

---

1 यथाचोदनं द्वादशाहमुपैष्यामः, द्वादशाहेन यक्ष्ये इत्येवं संकल्पे भेदः । तदधीनं कर्मक्रमेण सत्राहीनसंज्ञम् । ऋत्विगभिन्नयजमानकत्वं सत्रे ; अन्यत्रान्यथा । 2 बह्विति । बहुयजमान संकल्पनियमादित्यर्थः । एकस्येति । एकस्यापीत्यर्थः ।

भावे जाग्रद्वत् ॥ ४-४-१४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुष[भोग]वत् मुक्तोऽपि लीलारसं भुङ्क्ते। परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं यथा भुङ्क्ते—तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्, कदाचिच्च मुक्ताः सत्यसंकल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसंभव इत्यत्राह—

प्रदीपवदावेशस्तथा हि दर्शयति ॥ ४-४-१५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः, तथाऽऽत्मनोऽप्येकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः। यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः, तद्वत्। इयान् विशेषः—अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न संभवति; मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमितिग्रहणानुगुणा च नानुपपन्ना। तथा हि दर्शयति, "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति। अमुक्तस्य कर्म नियामकम्, मुक्तस्य तु स्वेच्छेति विशेषः।

ननु परं ब्रह्म प्राप्तस्य आन्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः, "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति। तत् कथं मुक्तस्य सार्वज्ञ्यमुच्यते। तत्रोत्तरम्—

---

**भावे जाग्रद्वत्** ॥ सूत्रं योजयति **स्वसङ्कल्पादे**वेति। ननु मुक्तस्य पित्रादिसर्गसापेक्षत्वे ब्रह्मानुभवादन्यपरत्वं ब्रह्मणि भोग्यतावैकल्यम्[1]; पित्रादीच्छाया अकर्मकृतत्वं च न स्यादिति शङ्कायामाह **परमपुरुषोऽपी**ति। पितृलोकादिसृष्टेर्भगवल्लीलान्तर्गतत्वे निदर्शनं दशरथादिसृष्टिः। तदन्तर्गतत्वादेव पित्रादिसृष्टावपि मुक्तस्य न ब्रह्मानुभवादन्यपरत्वम्। ब्रह्मसंबन्धिलीलाविशेषस्यानुकूलत्वं ब्रह्मणः प्रियतमत्वातिशयनिबन्धनम्। अत एव न ब्रह्मणः प्राप्यत्ववैगुण्यम्। मुक्तात्मनां पित्रादीच्छाया अकर्मकृतत्वं भगवतो वसुदेवादि[पितृत्वादि ?]कल्पनेच्छाया इवोपपन्नमित्यर्थः ॥ १४ ॥

उत्तरसूत्रशङ्कामाह—**नन्वि**ति। **प्रदीपवदावेशस्तथा हि दर्शयति** ॥ अत्र वक्तव्यं सर्वं **गुणाद्वाऽऽलोकव**दित्यत्रापेक्षितत्वादुक्तम्। स्वरूपस्यैकदेशस्थत्वेऽपि धर्मस्य प्रदेशान्तरे कार्यकरत्वमात्रं दृष्टान्तोपजीव्यम्। तर्हि वस्त्वन्तराण्यपि ज्ञानेनाधितिष्ठेदित्यत्राह- **इयानि**ति। **आत्माभिमानानुगुणे**ति। प्रवर्तकत्वशक्तिविशिष्टेत्यर्थः। **आत्माभिमानो** हि शरीरत्वाभिमानः। तदेकप्रवर्त्यं हि शरीरम्। तत्प्रेरकत्वं शरीरित्वमिति। **इदमितिग्रहणानुगुणे**ति प्रकाशकत्वशक्तिरुक्ता। **तथा हि दर्शयति**। स्वरूपाणुत्वे ज्ञानेनानेकशरीरित्वोपपत्तौ च श्रुतिरस्तीत्यर्थः। अमुक्तेष्वपि सौभर्यादिष्वनेकशरीरपरिग्रहो दृश्यते; मुक्तस्य को भेदः; मुक्तोऽनेकशरीरपरिग्रहक्षमश्चेत्—पूर्वावस्थायामपि करोत्वित्यत्राह **अमुक्तस्य कर्मे**ति ॥ १५ ॥

---

1 वैकल्यमिति। च स्यादिति शेषः; उपरि नञोऽत्रानन्वयात्।

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४-४-१६ ॥**

नेदं वचनं मुक्तविषयम्, अपितु स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् । स्वाप्ययः--सुषुप्तिः । संपत्तिश्च मरणम्, 'वाङ्मनसि संपद्यते' इत्यारभ्य 'तेजः परस्यां देवतायाम्' इति वचनात् । तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निःसंबोधत्वं च विद्येते । अतस्तयोरन्यतरापेक्षमिदं वचनम् । सुषुप्तिमरणयोर्निःसंबोधत्वं मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या "नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि" इति सुषुप्तिवेलायां निस्संबोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य, "स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति सर्वज्ञत्वमुच्यते । तथा, "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्संबोधत्वम्, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्युक्तम् । विनश्यति—न पश्यतीत्यर्थः । अतः, "प्राज्ञेनात्मना" इति वचनं स्वाप्ययसंपत्त्योरन्यतरापेक्षम् ॥ १६ ॥ इति अभावाधिकरणम् ॥

---

उत्तरसूत्रशङ्कामाह **नन्विति** । **स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि** । 'सता सोम्य तदा संपन्नो भवति' इत्यादिभिः स्वापे ब्रह्मसम्पत्तिः प्रसिद्धेति[1] मृतौ ब्रह्मसंपत्तिविषयं प्रमाणमाह **तेजः परस्यामिति** । अस्य वाक्यस्य [2]मरणविषयत्वद्योतनाय **वाङ्मनसीत्यादिकमुक्तम्** । ब्रह्मसंपत्ति-निर्बोधत्वयोस्तदा संभवे सति ह्यस्य वाक्यस्य तयोरन्यतरपरत्वमिति शङ्काव्यावृत्त्यर्थमाह **तयोश्चावस्थयोरिति** । [3]**इति वचनाद्विद्येते** इत्यन्वयः । सूत्रखण्डान्तरं व्याचष्टे **सुषुप्तीति** । [4]**'सता सोम्य', 'तेजः परस्यां देवतायाम्'** इति च सुषुप्तिमरणयोर्ब्रह्मसंपत्तिश्रुतिश्चानुसन्धेया ।

**सङ्कल्पादेवेत्यनेन** मनःसिद्धेः शरीरेन्द्रियविषयोऽयं विचार इति **परैरुक्तम्** । शरीराभावपक्षेऽपि न भोगानुपपत्तिः । अत्र दृष्टान्तः **सन्ध्यवदिति** । तत्र शरीरावस्थानं मनोवस्थानाय, न भोगाय ; शरीरस्थितेरन्यथासिद्धत्वादिति **तन्वभाव** इत्यस्यार्थमाहुः ॥ तत्र मनःसृष्टावीश्वरस्येव तत्साम्यापन्नस्य मुक्तस्य मनोनपेक्षसङ्कल्पोपपत्तेः सङ्कल्पान्मनस्सिद्धिरनुपपन्ना । स्वप्ने चेश्वरसृष्टदेहादिसद्भावस्य प्रामाणिकत्वान्मनोमात्रेण भोगोत्पत्तौ न स्वप्नो दृष्टान्तः स्यात् ।

**अपरे तु**—स्वप्ने मानसभोगस्य भ्रान्तिकृतत्वात् शरीरभोगस्य कर्मकृतत्वात् मुक्तस्य भ्रान्तिकर्मणोर-भावात् भोगासंभवं पूर्वपक्षीकृत्य, 'मनसैतान् कामान्', 'स एकधा भवति' इत्यादिश्रुतेः, स्वप्ने केवलमनसा भोगदर्शनाच्च भ्रान्तिकर्मणोरभावेऽपि भोगसंभवं राद्धान्तयन्तः, **तन्वभावे** इत्यधिकरणान्तरमाहुः ॥ तत्र तादर्थ्यनैरन्तर्याभ्यामधिकरणान्तरत्वमयुक्तम् । ईश्वरसृष्टदेहलाभादेव मनसैव भोगेऽपि न दृष्टान्तः ।

**अन्येऽप्यैकाधिकरण्यं** वदन्तः—स्वप्ने मनसैव रूपरसाद्यनुभवो दृष्टान्तः । स्वप्नधीश्च न स्मृतिः ; किंत्वनुभवः । दोषसचिवत्वात् भ्रान्तिः ; मुक्तस्य तु योगसचिवत्वात् यथार्थ इत्याहुः । तदपि पूर्ववत्

---

1 प्रसिद्धेतीति । अतः कथं स्वाप्ययातिरिक्तं मरणं सूत्रे संपत्तिरिति शंकायामित्यर्थः । अपेक्षितवचनद्वये स्वाप्ययवचनस्य प्रसिद्धत्वादेकमात्रोक्तिः । अतः अभिप्रेतत्वात् इतिवचनादि-त्यस्योपर्यप्यन्वयमुपर्याह । 2 मरणविषयत्वेत्येतत् निर्बोधत्वविषयत्वस्याप्युपलक्षणम् ।

3 उपस्थितवचनतोऽपि एतल्लाभं वक्तुमेव तयोश्चेति भाष्यमित्याशयेन पूर्वान्वितस्याप्युत्त-रत्रान्वयोऽभिप्रेतः ।

4 भाष्योदाहृतप्रकृतश्रुतौ प्राज्ञप्राप्त्यलाभात् पूर्वोक्तश्रुत्यैव तल्लाभं विवक्षति सतेति ।

दत्तोत्तरम् । अत ईश्वरसृष्टदेहवत्त्वे प्रामाणिके सति स्वप्नजागरौ दृष्टान्तौ केवलेश्वरप्रयत्नसृष्टत्व-जीवव्यापारद्वारकेश्वरप्रयत्नसृष्टत्वाभिप्रायाविति युक्तम् । तदुपन्यासश्च देहसृष्टौ जीवपरयोरभिप्रायाविरोधज्ञापनार्थं इति युक्तम् ॥ **प्रदीपवदावेशः** इत्यादिसूत्रद्वयमधिकरणान्तरमि**तरे त्रयोऽपि** वर्णयन्ति ।

स एकधा भवति त्रिधा भवतीति मुक्तसृष्टानि शरीराणि सालभञ्जिकावन्निरात्मकानि निर्मनस्कानि, आत्मनो मनसश्च भेदानुपपत्तेरिति पूर्वपक्षं कृत्वा, मनस एकत्वेऽपि एकमनोनुवर्तीनि समनस्कान्यपराणि सत्यसङ्कल्पत्वात् सृष्ट्वा उपाधिभेदेन भिन्नः सन् आत्मा तान्युपाधिभूतान्यधितिष्ठतीति। 'तत् केन कं विजानीयात्' इत्यादिभिर्मुक्तस्य द्वितीयदर्शनाभावादनेकशरीराधिष्ठानलक्षणैश्वर्यानुपपत्ति-परिहारपरं **स्वाप्ययसम्पत्त्योः**रिति सूत्रम् । सुषुप्तौ कैवल्ये च द्वितीयदर्शनाभावः, तदधिकार[1]वशात् तदाविष्कृतं हि । सगुणविद्याविपाकः स्वर्गादिवदवस्थान्तरमिति तत्रैश्वर्योपपत्तिरिति **परे** व्याचक्षते ।

तत्र तादर्थ्यनैरन्तर्याभ्यामधिकरणभेदानुपपत्तिः । मनःसृष्टावीश्वरस्येव मनोनपेक्षसङ्कल्पोपपत्तेः, आत्मभेदस्यान्तःकरणोपाधिकत्वाभावाच्चैकमनोमूलत्वनिर्बन्धोऽत्यन्तानुपपन्नः । सगुणविद्याया एव परविद्यात्वात् साक्षान्मोक्षस्यैव परविद्याफलत्वाद्विज्ञानप्रतिषेधस्य स्वाप्ययकैवल्यविषयत्वमैश्वर्यस्य सगुणविद्याविपाकत्ववचनं चानुपपन्नम् ।

**अपरे** तु सुषुप्त्युत्क्रान्तिविषयो विज्ञानप्रतिषेध इति वदन्ति । तत्पक्षेऽपि विरुद्धांशः प्रागेव प्रत्युक्तः ; आत्मभेदस्य निरुपाधिकत्वात् ।

**अन्ये** तु—अणोरनेकशरीरवृत्त्ययोगात् महत्त्वेऽपि भृत्यादिशरीरवृत्तेरपुरुषार्थत्वात् मुक्तानां मुक्तान्तरानुपसर्जनत्वात् अमुक्तानां मोक्षस्थानारोहणायोगाच्च जीवान्तरावेशायोगान्मुक्तसृष्टशरीराणि निरात्मकानीति पूर्वपक्षं कृत्वा—विभागशक्तियोगान्मुक्तादणुपरिमाणादात्मसहस्रोत्पत्तेः 'आत्मनां तु सहस्राणि बहूनि भरतर्षभ । योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत्' इति स्मृत्या सङ्कोचविभागादिशक्तेर्दर्शितत्वात् स्वेषु शरीरेष्वहङ्कारकरणात् स्त्र्यादिशरीरेष्वहङ्कारकरणाकरणयोर्विरोधाभावात् भृत्यादिशरीरेषु चैतन्यप्रभासंसर्गेणाहङ्काराकरणात्, तथा कूटस्थपुरुषस्य जीवसमष्टेर्व्यष्टिजीवत्वेनानुपयुक्तादंशाद्विभज्य तत्तच्छरीरेष्वात्मप्रवेशनोपपत्तेश्च सात्मकानीति सिद्धान्तयन्ति ॥ तत्र मुक्तानां परस्परगुणभावाभावेऽपीश्वरानुसञ्चरणाय संसारमण्डले पित्रादिसङ्कल्पनं भवतीति अमुक्तानां मोक्षस्थानारोहणानुपपत्तिर्न वक्तव्या । अत एव भृत्यादिशरीरेष्वनुप्रवेशस्यापुरुषार्थत्वादिति न वक्तव्यम् । अविभक्तनामरूपजीवसमूहव्यतिरेकेण कूटस्थपुरुषो नाम न कश्चित् प्रामाणिकः ; जीवसमूहविषयतया वचनोपपत्तेः । यत्त्वेकस्माज्जीवादात्मसहस्रसङ्कल्पनं विभागशक्तिमत्त्वादिति—तत् पूर्वमेव निरस्तम् । 'आत्मनां तु सहस्राणि' इत्यत्रात्मशब्दो देहवचन इति न तद्वचनं विभागशक्तौ प्रमाणम् । स्त्र्यादिशरीरेष्वहङ्कारकरणाकरणे भृत्यादिशरीरेषु चैतन्यप्रभासंसर्गेणाहङ्कारं न करोतीति विभागकल्पना च निर्मूला । भृत्यादिभावस्यानिष्टत्वात् स्वयमेवाहङ्कारकरणाभावश्चेत्—शरीरसंबन्धस्यैव दुःखहेतुत्वदर्शनात् शरीरसृष्टिरपि न स्यात् । स्वेच्छायत्ततया शरीरस्य दुःखाहेतुत्वं चेत्—भृत्यादिभावेनाविष्टेयत्वेऽपि तुल्यम् ॥

---

1 सुषुप्तिकैवल्यान्यतरप्रस्ताव एवान्यादर्शनमाविष्क्रियते इति ।

## जगद्व्यापारवर्जाधिकरणम् ४-४-६

### जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ ४-४-१७ ॥

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलं परमपुरुषानुभवविषयमिति संशयः । किं युक्तम्? । जगदीश्वरत्वमपीति । कुतः? । "निरञ्जनः परमं साम्यमुपैति" इति परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च । न हि परमसाम्यसत्यसङ्कल्पत्वे सर्वेश्वरासाधारणजगन्नियमनेन विनोपपद्येते । अतः सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तस्यैश्वर्यमिति ।

---

**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च** ॥ सत्यसङ्कल्पताविचाररूपत्वात् सङ्गतिरर्थसिद्धा । **जगत्सृष्ट्यादि सर्वेश्वरत्वम्** । सर्वेश्वरत्वप्रकारो हि सृष्ट्यादिः । **परमपुरुषानुभवविषयम्**— तदनुभवान्तर्गतशरीरसर्गादिविषयम् । किं मुक्तस्य जगद्व्यापारविषयमैश्वर्यमस्ति, नेति ; परमसाम्यसत्यसङ्कल्पत्वश्रवणं किं मुक्तैश्वर्यस्य जगद्व्यापारविषयत्वमवगमयितुं शक्नोति, नेति ; जगन्नियमनस्य मुक्तैश्वर्यान्तर्भावे 'यतो वा इमानि' इत्यादिब्रह्मलक्षणवाक्यं विरुध्यते, नेति ; किं मुक्तस्य सृष्टिप्रकरणासंनिधानेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणं न्याय्यम्, उत मुक्तस्य विकारलोकानुसञ्चरणश्रवणेन जगन्नियमनस्य ब्रह्मलक्षणत्वाश्रयणं न न्याय्यम् ; किं मुक्तस्य विकारलोकानुसञ्चरणं नियमनार्थम्, उत केवलभोगार्थम् ; केवलभोगार्थत्वे किं मुक्तस्यापरिच्छिन्नानन्दत्वविरोधः स्यात्, उत नेति । अत्र तदर्थो विचारस्त्रिविधः—किं विकारलोकानां भोगानित्यत्वेनानन्दानित्यता स्यात्, उत नेति; किं विकारलोकानां भोग्यत्वं विकारात्मकत्वात्, उत ब्रह्मविभूतित्वात् ;—किञ्च किं मुक्तस्यास्वातन्त्र्यमानन्दवैकल्यमापादयति, उत नेति ; स्वातन्त्र्यं स्वातन्त्र्यरूपत्वादानन्दावहम्, उत आत्माभिमानानुरूपत्वात् ;—किञ्च अस्वतन्त्रस्यानावृत्तिः संभवति, नेति ; किमनावृत्तिश्रुतिः चातुर्मास्याक्षय्यफलत्वश्रुतिवत् चिराभिप्राया, उत मुख्यार्था ; किं मुक्तात्मानावर्तनविषयः सङ्कल्प ईश्वरस्य न संभवति, उत संभवतीति ।

यदा न संभवति, तदा अनावृत्तिश्रुतेश्चिराभिप्रायत्वेनावृत्तिसंभवादानन्दः परिच्छिद्यते । स्वातन्त्र्यं स्वातन्त्र्यरूपत्वात् सुखरूपं चेत्—तद्वैकल्यादानन्दवैकल्यम् । विकारलोकानां विकारात्मकतया भोग्यत्वे तदनित्यत्वादानन्दानित्यत्वम् । अतः केवलभोगार्थत्वाभावेन विकारलोकानुसञ्चरणस्य नियमनार्थत्वाज्जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणमन्याय्यमिति तस्य लक्षणत्वाभावेन तदविरोधात् परमसाम्यादिश्रवणस्य मुक्तैश्वर्ये जगद्व्यापारान्तर्भावावगमकत्वात् जगद्व्यापारविषयमैश्वर्यं मुक्तस्य संभवेत् ॥ यदा मुक्तानावर्तनविषयः सङ्कल्प ईश्वरस्य संभवति, तदाऽनावृत्तिश्रुतेर्मुख्यत्वेनानावृत्तिसंभवात् नानन्दानित्यत्वम् । यदा च स्वातन्त्र्यमात्माभिमानानुरूप्यात् सुखरूपम्, तदा मुक्तेषु स्वात्माभिमानाननुरूपत्वात् स्वातन्त्र्यस्य तद्वैकल्यान्नानन्दवैकल्यम् । यदा च विकारलोकानां मुक्तभोग्यत्वं ब्रह्मविभूतितया, तदा विकारभूतस्यानित्यत्वेऽपि सर्वावस्थासु जगतो ब्रह्मविभूतित्वस्यानपायित्वेन नानन्दविच्छेदः । एवं विकारलोकानुसञ्चरणस्य नियमनार्थत्वाभावेऽप्यपरिच्छिन्नानन्दत्वाविरोधात् केवलभोगार्थतया तदविरोधेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणस्य न्याय्यत्वात् परमसाम्यादिश्रवणस्य मुक्तैश्वर्ये जगन्नियमनान्तर्भावानवगमकत्वात् जगद्व्यापारवर्जमेव मुक्तैश्वर्यं स्यात् ।

एवं प्राप्ते प्रचक्ष्महे- जगद्व्यापारवर्जम्-इति । जगद्व्यापारः-निखिलचेतनाचेतनस्वरूपस्थिति-प्रवृत्तिभेदनियमनम् । तद्वर्जम् , निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम् । कुतः। प्रकरणात् । निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते, "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म" इति । यद्येतत् निखिलं जगन्नियमनं मुक्तानामपि, साधारणं स्यात् । ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते । असाधारणस्य हि लक्षणत्वम् । तथा, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत", "ब्रह्म वा इदमेकमेवाग्र आसीत् । तदेकं सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रम् । यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति", "आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत", "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः । स एकाकी न रमेत । तस्य ध्यानान्तःस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु । "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य, "य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते ।

असंनिहितत्वाच्च—न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानमस्ति, येन जगद्व्यापारस्तस्यापि स्यात् ॥ १७ ॥

## प्रत्यक्षोपदेशान्नेति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॥ ४-४-१८ ॥

"स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति," "स इमांल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इति प्रत्यक्षेण—श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते । अतो न जगद्व्यापारवर्जमिति चेत्—तन्न, आधिकारिकमण्डलस्थोक्तेः । आधिकारिकाः—अधिकारेषु नियुक्ताः हिरण्यगर्भादयः; मण्डलानि—तेषां लोकाः ; तत्स्थाः—भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः, "तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिनोच्यते । अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्तिन आधिकारिकमण्डलस्थान् सर्वान् भोगान् ब्रह्मविभूतिभूतान् अनुभवतीति अनेन वाक्येनोच्यते; न जगद्व्यापारः ॥१८॥

---

यदि 'अनावृत्तिः शब्दात्' इत्यधिकरणान्तरम् यदा अनावृत्त्यनुबन्धिनी विचारपरम्परा पृथगनुसंधेया । तादर्थ्यसंभवस्तु सङ्गतिमात्रोपयोगीति द्रष्टव्यः ।

पूर्वपक्षमुक्त्वा राद्धान्तमाह **जगदिति** । **निर्व्याजब्रह्मानुभवरूपम्**—यथावस्थितब्रह्मानुभवरूपमित्यर्थः । सृष्ट्यादेरपि नियमनविशेषरूपत्वात् **जगद्व्यापार**शब्दोक्तिः । **कन्या**—मनः, प्रकाशकत्वात् । कन दीप्ताविति धातुः ॥ १७ ॥

**प्रत्यक्षोपदेशान्नेति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः** ॥ कामान्नित्वकामरूपित्वसर्वलोकसञ्चारश्रवणात् जगतस्तदधीनत्वं सिद्धमिति मुक्तस्येश्वरत्वमपि स्यादिति पूर्वपक्षोत्थानम् । **प्रत्यक्षेणे**ति व्याख्येयस्य व्यासेनोपादानम् ; तद्व्याचष्टे **श्रुत्ये**ति । **विकारलोकान्**—कार्यभूतलोकान् । **विकार**शब्दो धर्मिपरः । हेयातीतस्य मुक्तस्य हेयास्पदविकारलोकभोगापेक्षा कथमित्यत्राह **अकर्मे**ति । भगवद्विभूतित्वेनात्यन्तभोग्यता स्यादित्यर्थः । एवं कामान्नीत्यादिश्रुतिवाक्यं व्याख्यातम्; उक्तश्रुतिवाक्यार्थप्रतिपादकस्य सूत्रस्यार्थं निगमयति **तदेव**मिति ॥ १८ ॥

यदि संसारिवत् मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते ; तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातम्, अल्पं च स्यात् । तत्राह—

**विकारावर्ति च तथा हि स्थितिमाह ॥ ४-४-१९ ॥**

विकारे जन्मादिके न वर्तते इति विकारावर्ति; निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीक-कल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः । तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम् । तथा हि परस्मिन् ब्रह्मणि निर्विकारे ऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः, "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति" "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिका । तद्विभूतिभूतं च जगत् तत्रैव वर्तते, "तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति श्रुतेः । अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिन आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते इति, "सर्वेषु लोकेषु कामचारः" इत्यादिनोच्यते ; न मुक्तस्य जगद्व्यापारः ॥ १९ ॥

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४-४-२० ॥**

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य, नियन्तृभूतपरमपुरुषासाधारणं जगद्व्या-पाररूपं नियमनं न संभवतीत्युक्तम् । निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति दर्शयतः श्रुतिस्मृती—"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धा-वति पञ्चमः" इति, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि । तथा, "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानाम-संभेदाय" इति च श्रुतिः । स्मृतिरपि, "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति; "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः—"एष ह्येवानन्दयाति", "मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति । यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः— तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम् । तस्य नित्यस्थितिश्च तदायत्ता, परमपुरुषस्यै-

---

उत्तरसूत्रशङ्कामाह-**यदीति** । **विकारावर्ति च तथा हि स्थितिमाह** ॥ मुक्तस्य सविभूतिक-ब्रह्मानुभवितृत्वेन स्थितिवचनात् सर्वत्र कामचारादयो भवन्ति ; न नियन्तृत्वादिकमित्यर्थः ॥ १९ ॥

**दर्शयतश्चैवं प्रत्यक्षानुमाने** ॥ **ब्रह्मणो हि प्रतिष्ठाऽहमिति** । [1]**ब्रह्म**—जीवः । **अमृतं** मोक्षः । **शाश्वतधर्मः**— ज्ञानम् । **सुखम्**—आनन्दः ॥ अन्याधीनत्वनित्यत्वयोर्विरोधमाशङ्क्य परिहरति **यद्यपीत्यादिना** । **तस्य**—अपहतपाप्मत्वादिगुणस्य । **तथाविधत्वं**—स्वाभाविकत्वम् । **तस्य**— प्रत्यगात्मस्वरूपस्य नित्यस्थितिस्तदायत्तेत्यर्थः । तदुपपादयति **परमपुरुषस्येति** । मुक्तस्वरूपतद्गुणनित्यत्वं

---

1 ब्रह्मणोहीति गीतावचनेऽत्रैवमर्थवर्णनम् । गीताभाष्ये तु अमृताव्ययपदे ब्रह्मविशेषणे । अतः कैवल्यं फले पूर्वार्धोक्तम् । सुखस्येति मोक्षानन्दः । परिशेषात् शाश्वतधर्मपदमैश्वर्यपरम् । एवं त्रयविवक्षया गीतायां चकारत्रयम् ।

तन्नित्यताया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः। एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य, परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते। अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यञ्च जगद्व्यापारवर्जम् ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ ४·४·२१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्जमित्यवगम्यते, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति। अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पात् मुक्तस्य पुनरावृत्तिसंभवाशङ्केत्यत्राह—

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ ४·४·२२ ॥

इति चतुर्थोऽध्यायः।

इति श्रीभगवद्बादरायणमुनिप्रणीतं शारीरकम्।

इति मीमांसाशास्त्रे उत्तरमीमांसा ॥

श्रीरस्तु।

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसंभावनः परब्रह्मा-

---

परसङ्कल्पायत्तमित्युक्तम्; अन्यदपि नित्यं वस्तु तदधीनस्थित्यादिकमित्याह—**एवमि**ति। मुक्तस्य नियन्तृत्वाभावान्नानन्दवैकल्यम्; प्रत्युत तत्पौष्कल्यमेव। सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च। तथा पुरुषपश्वादिषु दृश्यते। तस्मादात्मन आविर्भूतयथावस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमपरोक्षयतः स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात्। तद्विपर्ययेणेशितृत्वमत्यन्तानिष्टमेव। तस्मान्नानन्दवैकल्यम्, अपि तु तत्पौष्कल्यमेव ॥ २० ॥

**भोगमात्रसाम्यलिङ्गाच्च** ॥ **ब्रह्मे**त्यादि। "स एवंवित् सर्वेषां भूतानामात्मा भवति। यथैषा [1]देवता, एवं सः। यथैतां देवतां सर्वाणि भूतान्यवन्ति, एवंहैवंविदं सर्वाणि भूतान्यवन्ति। तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति" इत्यादिवाक्यान्यप्यभिप्रेतानि। "छागो वा मन्त्रवर्णात्" इति न्यायात् सामान्येनावगतं साम्यम्, भोगसाम्ये दृष्टे, तादृशसाम्यविशेषे पर्यवस्यतीति भावः। परमात्मनियाम्यत्वादिश्रुत्यानुगुण्याद्वाक्यमर्थ इति वदन् अधिकरणार्थमुपसंहरति **अत** इति।

अनन्तरसूत्रं शङ्कामुखेनावतारयति **यदी**ति। अपुनरावृत्तिश्रुतिः पाक्षिकविषया, ईश्वरस्वातन्त्र्यात् कस्यचिदनावृत्तिसंभवादिति च पूर्वपक्ष्यभिप्रायः। **अनावृत्तिः शब्दादनावृत्तिः शब्दात्** ॥ **यथे**त्यादि। भगवता मुक्तस्यापरित्याज्यत्वोपपादनार्थं मुक्तस्य ब्रह्मानुभवजिहासानुदयज्ञापनार्थं प्रामाणिकत्वे दृष्टान्तसिद्ध्यर्थं च **निखिलहेयप्रत्यनीकत्वा**दिगुणा उक्ताः। अन्येन निवृत्तिशङ्काव्यावृत्त्यर्थं **निरस्तसमाभ्यधिकसंभावनः** इति पदम्। 'स यदि पितृलोककामः' इत्याद्युक्तभगवत्परिचरणार्थ-

---

[1] एषा देवतेति यागादिदेवताभूताग्न्याद्यनेकग्रहणम् (बृ. 3 5)। एतस्यै देवतायै इति (3.6) प्राणदेवताग्रहणम्। ईदृशदेवतासायुज्यं यथा भोगसाम्यमेव, नाधिकारप्राप्तिः, तद्वदिहापीति भावः।

भिधानः परमपुरुषोऽस्तीति शब्दादवगम्यते, एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनान् अनादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते" इत्यादिकः। तथा च भगवता स्वयमेवोक्तम्, "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति।

न चोच्छिन्नकर्मबन्धस्यासंकुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्य अनवधिकातिशयानन्दं ब्रह्मानुभवतः, अन्यापेक्षातदर्थारम्भाद्यसंभवात् पुनरावृत्तिशङ्का। न च परमपुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति; य एवमाह—"प्रियो हि ज्ञानिनो-

---

विग्रहव्यावृत्त्यर्थं **पुनर्जन्म दुःखालयमशाश्वतम्** इति वचनमुपात्तम्। दुःखालयत्वादिविशेषणाभावेऽप्येतदैकार्थ्यं [1]स्यादित्यभिप्रायेण **पुनर्जन्म न विद्यते** इति वचनमुदाहृतम्। अनेनाऽऽवृत्तिः कर्मकृता न भवति, **इमान्लोका**नित्युक्तकामसञ्चारादिति च फलितम्। पुनरावृत्तिहेतुत्वेन संभावितानि शिरांस्याशङ्क्य परिहरति **न चे**त्यादिना। प्रमाणस्यानुग्राहकतर्ककृतार्थतां च अर्थाद्दर्शयति। स्वेच्छा वा कर्म वा भगवत्सङ्कल्पो वा त्रयमेव पुनरावृत्तिहेतुतया संभावितम्। तत्र स्वेच्छाकर्मभ्यामावृत्तिशङ्कां परिहरति **न चे**ति। **तदर्थारम्भाद्यसम्भवा**दिति। कर्म विद्यमानं चेत्, सजातीयकर्मान्तरारम्भरुचिरूपां वासनामुपजनय्य तद्द्वारा कर्मान्तरं कारयति। कर्मणः सवासनस्य विनष्टत्वात् कर्मान्तरासंभवात् न कर्म पुनरावृत्तिहेतुः; अनवधिकातिशयानन्दभगवदनुभवैकतानस्य नान्यापेक्षेति न स्वयं स्वस्य पुनरावृत्तिहेतुरित्यर्थः। भगवत्सङ्कल्पस्य पुनरावृत्तिहेतुत्वं परिहरति **न चे**ति। मुक्तान् पुनर्नावर्तयिष्यामीति सङ्कल्पो नान्यथा स्यादित्यभिप्रायेण **सत्यसङ्कल्प** इत्युक्तम्। ज्ञानिनोऽत्यर्थं प्रियत्वाच्च तथा सङ्कल्पः। अत्यर्थप्रियत्वे प्रमाणं दर्शयति **य एवमाहे**ति। एवं **न चोच्छिन्ने**त्यादिना अपुनरावृत्तिश्रुतेरनुग्राहकस्तर्क उक्तो भवति।

**परे तु**—**प्रत्यक्षोपदेशा**दित्यत्र "आप्नोति स्वाराज्यम्" इत्युदाहृत्य सवितृमण्डलादिस्थानेषु भोगोक्तेर्न जगद्व्यापार इत्याहुः। **स्वाराज्यशब्दस्य**[2] परमाकाशावस्थानेऽप्युपपत्तेस्तस्यानुपादानम्। सर्वलोकक्रमणशङ्काबीजत्वात् इमान् लोकानित्याद्युपादानमुचितम्। तेन हि निरङ्कुशैश्वर्यं दर्शितं भवति। विकाररूपं विकारोत्तीर्णं च नित्यमुक्तं परं ब्रह्म। **द्विधा हि स्थितिमाह** 'पादोऽस्य' इति। 'न तत्र सूर्यो भाति', 'न तद्भासयते सूर्यः' इति प्रत्यक्षानुमाने च **विकारावर्ति**त्वं दर्शयत इति व्याचक्षते। किमर्थं सूत्रद्वयमिति चेत्—विकारालम्बनानां निर्विकारपररूपप्राप्तिरनुपपन्ना अतत्क्रतुत्वादित्यभिप्राय इति चाहुः॥ इदमपि विकारालम्बना न

---

1 दुःखालयत्वाशाश्वतत्वादिविशिष्टजन्मेत्यर्थैक्यमित्यर्थः। पुनश्शब्दस्वारस्यं साजात्य एवेति।
2 स्वः—उपरितनलोके राजत इति स्वाराट्; तद्भाव इत्यर्थः।

ऽत्यर्थमहं स च मम प्रियः। उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्॥ आस्थितः स हि

प्राप्नुवन्तीत्यध्याहारसापेक्षत्वादनुपपन्नम् । अध्याहारेऽपि जगद्व्यापारवर्जनस्यानुपयोगि सूत्रद्वयम् ॥ परं नाप्नुवन्ति; सगुणेऽपि न निरवग्रहैश्वर्यमिति ज्ञापनार्थमिति चेत्—अतिदूराभिप्रायकल्पनमेव दोषः । 'तथा हि स्थितिमाह' इत्यत्रैव निर्विकारस्वरूपविषयश्रुतीनामपि विवक्षितत्वे, पुनः प्रत्यक्षशब्देन परस्वरूपविषयश्रुत्युपादानवैयर्थ्यञ्च ।

ऐश्वर्यं चेत , अन्तवत्; तस्मादावृत्तिरिति शङ्काव्युदासार्थम् **अनावृत्तिः शब्दा**दिति सूत्रमिति, निर्गुणप्राप्तावावृत्तिशङ्काया अभावादित्याहुः ॥

तदयुक्तम्; अकर्मकृतसहजैश्वर्ये ऐश्वर्यत्वादावृत्तिशङ्काया मन्दतरत्वात् । अतः पाराधीन्यकृतावृत्तिशङ्काव्युदासपरत्वमेव युक्तं सूत्रस्य । सगुणनिष्ठविषयत्वञ्चायुक्तम्; निर्गुणप्राप्तेरप्रामाणिकत्वात् विशेषणवैयर्थ्यम् । निर्गुणप्राप्त्यभावादेवात्रावृत्तिशङ्कानुदयश्चानुपपन्नः ।

**अपरे** तु—वेदान्त एव मुक्तस्य भेदेनावस्थानं मन्यमानानां मतमभ्युपगम्य तस्य सावधिकमैश्वर्यमिति प्रतिपादनार्थमिदमधिकरणमित्याहुः । तत्र **परे**षामिव सूत्रयोजना । अस्मिन् पक्षे विकारप्रलये तदाश्रितैश्वर्यप्रलयादावृत्तिः स्यादेव । अविभागपक्ष एवानावृत्तिरित्याह **अनावृत्तिः शब्दा**दितीत्याहुः । तत् तावदयुक्तम् । अप्रामाणिकपक्षस्य निरसनमेव हि कर्तव्यम्; न तु तदभ्युपगमेन निर्वाहः ॥ सावधिकैश्वर्यप्रतिपादनमेव तन्निरसनमिति चेन्न; प्रतीकालम्बनोपासनानां सावधिकैश्वर्ये कथितेऽपि तेषां निरस्तत्वाभावात् ॥ अप्रामाणिकत्वसमर्थनं हि निरसनम् ॥ सावधिकैश्वर्यं प्रामाणिकं चेत्—कथं तस्य निरासः । अनावृत्तिसूत्रमविभागपक्ष एवेत्यशाब्दम्; अविभागशब्दस्याप्रकृतत्वात् ॥ अर्थस्वभावादविभागपक्षविषयत्वमिति चेन्न; अक्षरपरमव्योमगतानां मुक्तानामैश्वर्यप्रच्युत्यसंभवादेवार्थस्वभावासिद्धेः ॥ विकारलोकाश्रितमैश्वर्यं प्रध्वस्तमिति चेत्—ततः किम्; ईश्वरस्येव तदानीमप्रच्युतगुणाष्टकत्वादपरिच्छिन्नानन्दत्वोपपत्तेः । न हि जगत्प्रलयादीश्वरस्यैश्वर्यभङ्गः । तथा तदवस्थतदनुभवरूपमैश्वर्यं मुक्तानामपि न भ्रश्येत् । अतः सूत्रासङ्गतिः ॥ ननु विभागपक्षे सावधिकैश्वर्यप्रसङ्गो विवक्षितः, न तु तत्पक्षनिर्वाह इति चेत्—न; जगद्व्यापारवर्जत्वप्रसङ्ग इति सूत्रितत्वाभावात् । यथा 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः', 'कृत्स्नप्रसक्तिः' इति च । तस्मात् सूत्रस्वारस्यविरोधः । **विकारावर्ती**त्यादिसूत्रद्वयवैयर्थ्यातिदूरलक्षणादोषः पूर्ववत् । अविभागपक्षे वा कथं, 'जक्षत् क्रीडन् रममाणः', 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्याद्यैश्वर्यमुपपद्यते, किमीश्वरव्यापारा एव तदभिन्नस्य मुक्तस्य क्रीडात्वेनोच्यन्ते, उत व्यापारान्तराणि । प्रथमे बद्धस्यापि तदभिन्नत्वादीश्वरव्यापारा एव क्रीडाः किं न स्युः ॥ उपाधितो भिन्नत्वादिति चेत्—तर्हि ईश्वरस्यापि ते व्यापारा लीला न स्युः; तस्यापि सवितृमण्डलाद्युपाधिभिर्भिन्नत्वात् ॥ भिन्नत्वेऽपि सर्वज्ञः स्वलीलात्वेन सर्वत्र प्रत्यभिसंधत्त इति चेत्—तर्हि बद्धव्यापारेष्वपि प्रत्यभिसंधानात् दुःखित्वेन, लीलात्वं तद्व्यापाराणां न स्यात् । एवं मुक्तानामपीश्वरादभिन्नत्वात् प्रत्यभिसंधानाच्च दुःखित्वमिति तेषामविभागपक्ष एवाऽऽवृत्तिः ।

युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स

यदीश्वरव्यापारात् व्यापारान्तराणि मुक्तानां लीला, तर्हि व्यापारान्तरत्वमाश्रयभेदात् स्यात् । अन्यथा ईश्वरव्यापारानतिरेकेण प्रागुक्तदोषप्रसङ्गात् । आश्रयभेदेन व्यापारान्तरत्वे मुक्तेश्वरविभागपक्ष एवाङ्गीकृतः स्यात् ।

अन्ये तु वर्णयन्ति—**प्रकरणा**दिति य आत्मेत्यादिमुक्तप्रकरणस्य भोगगोचरत्वान्न जगद्व्यापार इति । **असंनिहितत्वात्** सृष्टिप्रकरणेष्वसंनिहितत्वात्, परमाकाशस्थस्य मुक्तस्य विकार-स्थानेष्वसंनिहितत्वादिति । **प्रत्यक्षोपदेशा**दिति—'आप्नोति स्वाराज्यम्' इत्युपदेशान्न निरवग्रहं मुक्तस्यै-श्वर्यमिति चेत्—**आधिकारिक**पदावच्छेदकदेशविशेषेषु हिरण्यगर्भसायुज्यं गतस्य तदधीनभोगोक्तेः । न तु परमाकाशस्थस्येति । **विकारावर्ती**ति—'परमे व्योमन् सोऽश्नुते' इति मुक्तैश्वर्यस्य परमाकाशस्थस्य विकारस्थानावर्तितया परमात्मन एव जगदनुप्रवेशादिरिति । **दर्शयतश्चैव**मिति—"यत्पुराणमाकाशं तत्र मे स्थानं कुर्वतः (?) पुनर्भवाय" इत्यादिश्रुतिः स्मृतिश्च परमाकाशस्थितिं दर्शयत इति । 'सोऽश्नुते' इति **भोगमात्रसाम्यलिङ्गाच्च** न जगद्व्यापारः । "इमं मानवमावर्तं नावर्तन्ते", "तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति । तेषामिह न पुनरावृत्तिः" इति इमंशब्देहशब्दविशेषितत्वाद् ब्रह्मलो-कगतानामन्यस्मिन् मानव आवर्ते पुनरावृत्तिशङ्कां व्युदस्यति **अनावृत्तिः शब्दा**दिति । इमंशब्देहशब्दौ संनिहितत्वमात्रावलम्बनौ ; न तु व्यक्तिविशेषपरौ ; श्रुतेरनित्यार्थत्वप्रसङ्गात् । अतो नावर्तान्तरे पुनरावृत्तिः । मानव आवर्ते जन्माभावोऽनावृत्तिशब्देनोच्यते ; गमनमात्रं न प्रतिषिध्यते । अतः सर्वेषु कामचारो भवतीत्यदोषः । ब्रह्मलोकगतानां मानवावर्तगमनं स्वदेशात् परदेशगमनवदुपपन्नम् । तस्मान्न ब्रह्मलोकगतानामिह पुनर्जन्मेत्यनावृत्तिरुपपन्ना । तदेवं मुक्तैश्वर्यं निरवग्रहमिति ॥

तत्र ब्रूमः—मुक्तप्रकरणे भोगप्रतिपादनस्य हेतुतयोक्तिर्विफला; तावता जगद्व्यापाराप्रतिषेधात् । विकारस्थानेष्वसंनिधानादिति चायुक्तम् ; अन्तिमसूत्रे मुक्तस्य स्वदेशात् परदेशगमनवत् सर्वलोकसञ्चरण-स्याभ्युपगमात् ; इमाँल्लोकानिति श्रुतत्वाच्च । आदिक्षेत्रज्ञस्य हिरण्यगर्भस्योभयभावनान्वितस्य मुक्तप्राप्यत्वायोगात् मुक्तस्य तत्पारतन्त्र्यायोगाच्च द्वितीयसूत्रार्थोऽनुपपन्नः । विकारस्थाने सञ्चरणाभ्यु-पगमादेवानन्तरसूत्रद्वयार्थोऽनुपपन्नः । **तथा हि स्थितिमाहे**त्यस्य प्रत्यक्षानुमाने इति प्रत्यक्षशब्देन पुनरुक्तिश्च ॥ श्रुत्यन्तरविषयः **प्रत्यक्ष**शब्द इति चेन्न—एकार्थविषयानेकश्रुत्युपादानस्य सूत्रभेदसापेक्ष-त्वाभावात् । तद्भावे च सूत्रान्तराणामपि करणप्रसङ्गाच्च । यदि तत्सूत्रद्वयं मुक्तैश्वर्यस्य परमाकाशस्थिति-मात्रपरम्, तत निरवग्रहैश्वर्यविरुद्धम् । यदि तत्रैवावस्थानपरम्, तदा विकारस्थानसञ्चरण-तदभ्युप-गमविरोधः । अन्तिमसूत्रस्य च **इहादि**शब्दानां संनिहितार्थमात्रपरतयाऽन्यस्मिन्नावर्ते पुनरावृत्तिशङ्का-व्युदासपरत्वं चानुपपन्नम् ; वैदिकशब्दानामनित्यव्यक्तिविशेषवाचित्वशङ्कायाः **समाननामरूपत्वा**दित्यत्रैव निरस्तत्वेनात्र तच्छङ्काया एवानुत्थानात् । अत ईश्वरपाराधीन्यप्रयुक्तशङ्कैवात्र परिहर्तव्या । सा च सुपरिहृता । अतो यथाभाष्यमेवाधिकरणवर्णनं युक्तम् ॥

महात्मा सुदुर्लभः" इति। सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति—इति सर्वं समञ्जसम् ॥

इति जगद्व्यापारवर्जाधिकरणम्।

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

इति श्रीभगवद्रामानुजविरचितं श्रीभाष्यम्।

श्रीरस्तु। शुभमस्तु॥

—०—०—०—

यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत्। रामानुजाय मुनये तस्मै भगवते नमः॥

---

**इति सर्वं समञ्जसमि**ति। **सर्वशब्देन** भेदश्रुत्यभेदश्रुतिघटकश्रुति-गुणादिविधिनिषेधश्रुति-भगवत्कृपास्वातन्त्र्यादिपरवाक्यप्रत्यक्षादीन्यभिप्रेत्य तेषां सामञ्जस्यमुक्तम्। **इतिशब्दोऽखिलभुवने**त्यादि-भाष्योक्ताशेषार्थपरामर्शी। **सर्वशब्देना**नुदाहृतश्रुतिस्मृतीतिहासपुराणवचांसि तदनुग्राहकतर्कजातं च विवक्षितम्। तेषामनया दिशा सामञ्जस्यं द्रष्टव्यम्। उक्तार्थबाधकत्वेन ये प्रमाणतर्काः परैः प्रयुक्ताः, तेषां सर्वेषां परिहारोऽत्रास्त्येव। एतदनन्तर्भूतार्थो नास्ति। तस्मादुक्तप्रकारेण बाधकप्रमाणतर्क-परिहारश्चानुसन्धेयः इत्यभिप्रायेण **इति सर्वं समञ्जस**मित्युक्तम्॥ २२॥ इति जगद्व्यापारवर्जाधिकरणम्।

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन
श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्य—
हृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां
चतुर्थस्याध्यायस्य चतुर्थः पादः॥

**इति श्रीसुदर्शनसूरिविरचिता श्रीभाष्यटीका श्रुतप्रकाशिका**

**श्रीरस्तु**

—०—०—०—

गुरवे वरदार्याय कुर्वीमहि नमस्क्रियाम्। यत्पदाम्भोजसेवा नः सूते वेदान्तसंपदम्॥
श्रीमते व्यासविदुषे यतीन्द्राङ्घ्रिरजोजुषे। नमः कारुण्यवपुषे मायावादतमोमुषे॥
व्यासार्यचरणाम्भोजयुगलं शरणं भजे। यद्गिरां परिणामस्य फलं नो भाष्यवेदनम्॥
यतीन्द्रकृतभाष्यार्थाः यद्व्याख्यानेन दर्शिताः। व्यासं सुदर्शनार्यं तं वन्दे कूरकुलाधिपम्॥
श्रुतप्रकाशिका येन ह्यादौ त्राता प्रवर्तिता। तस्मै वेदान्तगुरवे श्रेष्ठाय श्रीमते नमः॥

नमो गुरुभ्यः। नमः परमगुरुभ्यः। नमो ब्रह्मणे।

—०—०—०—

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे। वृणीमहे च तत्राऽऽद्यौ श्रीश्रीशौ जगतां पती॥
इति अभिनवदेशिकवात्स्य श्रीशैलसच्चक्रवर्ति वीरराघवाचार्य कृता सुदर्शनसेवा॥

शुभमस्तु॥

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते रामानुजाय नमः ।





श्रीमद्वेदमार्गेत्यादिविरुदावलीमेदुरैः श्रीमदहोबिलमठदिव्यास्थाने

चतुरधिकचत्वारिंशत्संख्यासंख्यातपट्टाभिषेकपरिमण्डितैः

श्रीवण्शठकोप-श्रीवेदान्तदेशिकयतीन्द्रमहादेशिकैः

पूर्वाश्रमे अनुगृहीता

# ब्रह्मसूत्रार्थपद्यमालिका ॥

विजयतेतमाम् ।

१९६७

॥ श्रीः ॥

# ॥ ब्रह्मसूत्रार्थपद्यमालिका ॥

श्रीरङ्गशठकोपाख्ययतीन्द्रपद्पङ्कजम् । ध्यात्वा श्रीवीरराघवशठारातियतीश्वरम् ॥
नत्वा यतीन्द्रवर्याभ्यां वीक्षितः पद्यमालिकाम् । तनुते राजगोपालो[1] ब्रह्मसूत्रार्थबोधिनीम् ॥

## ॥ प्रथमाध्यायस्य प्रथमः पादः ॥

1 जिज्ञासाधिकरणम् । ॥ अथातो ब्रह्मजिज्ञासा ॥ 1

1 विचारात् कर्मणः स्वल्पं फलं ज्ञात्वा मुमुक्षुणा । कर्तव्या ब्रह्मजिज्ञासा फलस्यानन्त्यमिच्छता ॥

2 जन्माद्यधिकरणम् । ॥ जन्माद्यस्य यतः ॥ 1

2 अस्य जन्मस्थितिलयं जगतस्तु यतो भवेत् । सर्वज्ञात्सत्यसंकल्पात् तद्ब्रह्मेति जगौ श्रुतिः ॥

3 शास्त्रयोनित्वाधिकरणम् । ॥ शास्त्रयोनित्वात् ॥ 1

3 शास्त्रेणैवावसेयत्वाज्जगद्योनेः परात्मनः । अनुमातुमशक्यत्वमिति शास्त्रमिहार्थवत् ॥

4 समन्वयाधिकरणम् । ॥ तत्तु समन्वयात् ॥ 1

4 शास्त्रैककारणत्वं तु ब्रह्मणः सूपपद्यते । पुरुषार्थतया तस्मिन् बोधकत्वेन चान्वयात् ॥

5 ईक्षत्यधिकरणम् । ॥ ईक्षतेर्नाशब्दम् ॥ 1

5 सदेवेत्यादिकैश्शब्दैः न प्रधानमिहोच्यते । ईक्षतेरन्वयात् तस्मिन् ब्रह्म सच्छब्दगोचरः ॥

॥ गौणश्चेन्नात्मशब्दात् ॥ 2

6 ईक्षतिस्त्वेष गौणस्स्यात् सद्भवेदानुमानिकम् । इति चेन्नात्मशब्देन सच्छब्दो हि विशेष्यते ॥

॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ 3

7 सदर्थोपासकस्यात्र मोक्षोक्तेर्ब्रह्म तद्भवेत् । प्रधानप्राप्तिरिति चेत् मुक्तिर्नानन्दतां भजेत् ॥

॥ हेयत्वावचनाच्च ॥ 4

8 सच्छब्दवाच्यं न ध्येयं हेयत्वादित्यनुक्तितः । ध्येयत्वेनैव चोक्तत्वाद्ब्रह्माऽऽनन्दः सदुच्यते ॥

॥ प्रतिज्ञाविरोधात् ॥ 5

9 कारणस्य तु विज्ञानात् कार्यज्ञानं भवेदिति । प्रतिज्ञाया विरोधाच्च प्रधानं तु न कारणम् ॥

॥ स्वाप्ययात् ॥ 6

10 कारणे लयवाक्याच्च स्वात्मनो लयकारणम् । ब्रह्मैवेति प्रधानं तु सच्छब्देन न कथ्यते ॥

॥ गतिसामान्यात् ॥ 7

11 कारणाख्यायिवाक्यानां या प्रवृत्तिः प्रदृश्यते । सद्वाक्यस्यापि तत्साम्यात् सच्छब्दार्थः परः पुमान् ॥

---

[1] श्रीवण्शठकोप-श्रीवेदान्तदेशिकयतीन्द्रमहादेशिकाः ।

|| श्रुतत्वाच्च || 8

12 इदमात्मन एवेति श्रुतत्वादिह नो भवेत् । प्रधानं कारणं किंतु ब्रह्मैवास्य हि कारणम् ॥

6 आनन्दमयाधिकरणम् । || आनन्दमयोऽभ्यासात् || 1

13 आनन्दमयशब्देन परमात्मा हि कथ्यते । ते ये शतमिति श्रुत्या त्वभ्यस्तानन्दवत्त्वतः ॥

|| विकारशब्दान्नेति चेन्न प्राचुर्यात् || 2

14 विकारार्थे मयट्शब्दान्न ब्रह्मात्रेति चेन्न तत् । प्राचुर्यार्थक एवैष मयट् यस्मात् परो हि सः ॥

|| तद्धेतुव्यपदेशाच्च || 3

15 एष ह्येवानन्दयातीत्यात्मानन्दस्य वाक्यतः । हेतुत्वव्यपदेशाच्च ब्रह्मानन्दमयो भवेत् ॥

|| मान्त्रवर्णिकमेव च गीयते || 4

16 सत्यं ज्ञानमनन्तं यदुदितं मन्त्रवर्णतः । आनन्दमयशब्देन गीयते तत्परं तथा ॥

|| नेतरोऽनुपपत्तेः || 5

17 ब्रह्मेतरो मन्त्रवर्णैर्नोदितः स्वल्पधीरयम् । बहु स्यामिति संकल्पानुपपत्तेर्विशेषतः ॥

|| भेदव्यपदेशाच्च || 6

18 जीवाच्च विज्ञानमयाद्भेदेनास्य प्रकीर्तनात् ॥ आनन्दमय इत्यत्र ब्रह्मैव प्रतिपाद्यते ॥

|| कामाच्च नानुमानापेक्षा || 7

19 इच्छयैव जगत्सृष्टेः अचित्संसर्गतो विना । बहु स्यामिति वाक्यात्तु न जीवोऽस्य हि कारणम् ॥

|| अस्मिन्नस्य च तद्योगं शास्ति || 8

20 जीवस्यास्मिन् महानन्दे ह्यानन्दावाप्तिरुच्यते । लब्ध्वाऽऽनन्दीति शास्त्रेण ब्रह्मानन्दमयस्ततः ॥

7 अन्तरधिकरणम् । || अन्तस्तद्धर्मोपदेशात् || 1

21 आदित्येऽक्षणि योऽन्तः स परमात्मा हिरण्मयः । सर्वपाप्मोदितत्वादितद्धर्माणामिहेरणात् ॥

|| भेदव्यपदेशाच्चान्यः || 2

22 आदित्ये तिष्ठतोऽस्यैव सूर्याद्भेदोपदेशतः । तिष्ठन् य आदित्य इति जीवादन्यः परः पुमान् ॥

8 आकाशाधिकरणम् । || आकाशस्तल्लिङ्गात् || 1

23 आकाशः परमात्मेति तल्लिङ्गादिह तूच्यते । परायणत्वसृष्ट्यादिकारणत्वविशेषणात् ॥

9 प्राणाधिकरणम् । || अत एव प्राणः || 1

24 पूर्वोक्तादेव लिङ्गाच्च प्राणो ब्रह्मेति कथ्यते । सर्वप्राणिप्राणनाच्च निर्देशो हि प्रसिद्धवत् ॥

10 ज्योतिरधिकरणम् । || ज्योतिश्चरणाभिधानात् || 1

25 परो दिवो ज्योतिरिति निर्दिष्टः पुरुषोत्तमः । भूतजातस्य कृत्स्नस्य तत्पादत्वप्रकीर्तनात् ॥

|| छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात् तथा हि दर्शनम् || 2

26 प्रक्रमेऽस्मिंस्तु गायत्र्याः अभिधानान्न तेजसः । इति चेन्न परस्यैव तत्साम्योपास्तये तथा ॥

|| भूतादिपादव्यपदेशोपपत्तेश्चैवम् || 3

27 भूतपृथ्वीशरीरादिपादोक्तेरुपपत्तितः । गायत्रीशब्दनिर्दिष्टं ज्योतिर्ब्रह्मेति गम्यते ॥

|| उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् || 4

28 दिवीत्येकत्र सप्तम्या पञ्चम्या दिव इत्यपि उक्तिभेदात् परो नेति नोभयत्राविरोधतः ॥

11 इन्द्रप्राणाधिकरणम् । ॥ प्राणस्तथानुगमात् ॥ 1

29 इन्द्रप्राणपदोद्दिष्ट(ः)इन्द्रात्मा ब्रह्म भाव्यते । आनन्दामृतशब्दाद्यैः उपसंहारदर्शनात् ॥

॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ 2

30 इन्द्रस्य वक्तुस्स्वस्यैव मामुपास्स्वेति चोदनात् । इन्द्र एवेति चेन्नात्र ब्रह्मानन्तगुणान्वयात् ॥

॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ 3

31 जगच्छरीरं ब्रह्मेति शास्त्रज्ञानात्तु चोदना । वामदेवादिवच्चात्र मामुपास्स्वेति वज्रिणः ॥

॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्त्वादिह तद्योगात् ॥ 4

32 इन्द्रजीवप्राणलिङ्गान्नात्र ब्रह्मेति चेन्न हि । उपासा त्रिविधाऽन्यत्र यथेहाख्यानतस्तथा ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायस्य प्रथमः पादः ॥

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

12 सर्वत्रप्रसिद्धाधिकरणम् । ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ 1

33 सर्वं खल्विदमित्येवं प्रसिद्धस्योपदेशतः । सर्वात्मा परमात्मैव मनोमय उदीर्यते ॥

॥ विवक्षितगुणोपपत्तेश्च ॥ 2

34 वक्ष्यमाणगुणानां तु परस्मिन्नेव संभवात् । तज्जलानित्युपास्यत्वं परमात्मनि युज्यते ॥

॥ अनुपपत्तेस्तु न शारीरः ॥ 3

35 मनोमयो न जीवोऽत्र स्रष्टृत्वादेरसंभवात् । संकल्पेनैव सर्वत्र बहु भावस्य कीर्तनात् ॥

॥ कर्मकर्तृव्यपदेशाच्च ॥ 4

36 प्रेत्याभिसंभवानीति कर्मकर्तृत्वशंसनात् । प्राप्योपासकयोरत्र प्राप्यं ब्रह्म हि कारणम् ॥

॥ शब्दविशेषात् ॥ 5

37 आत्मा म एष इत्यादिषष्ठ्या प्रथमया च तौ । निर्दिष्टौ प्रथमान्तार्थस्तयोर्मध्ये मनोमयः ॥

॥ स्मृतेश्च ॥ 6

38 सर्वस्य चाहमित्यादिस्मृत्या चैव हृदि स्थितः । जीवादन्यः स्मृतेर्दाता ज्ञानदः परमेश्वरः ॥

॥ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च ॥ 7

39 अल्पत्वाल्पस्थानवत्त्वव्यपदेशात् स नेश्वरः। इति चेन्न निचाय्यत्वात् तथाऽसौ व्योमवन्महान् ॥

॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ 8

40 हृदये वर्तमानत्वे जीवस्येव परात्मनः । दुःखादिप्राप्तिरिति चेन्नास्याः कर्म हि कारणम् ॥

13 अत्त्रधिकरणम् । ॥ अत्ता चराचरग्रहणात् ॥ 1

41 सूचितोऽत्ता तु संहर्ता परमात्मेति निश्चयः । मृत्यूपसेचनं ब्रह्मक्षत्रान्नं हि जगद्भवेत् ॥

॥ प्रकरणाच्च ॥ 2

42 महान्तं विभुमित्यादिप्रक्रमात् पर एव सः । अत्ता चराचरस्येति संहर्ता जगतो भवेत् ॥

॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ 3

43 हृत्प्रविष्टौ जीवपरौ बुद्धिजीवौ तु नात्र हि । गुहाहितं प्रविश्येति तयोरेव तदुक्तितः ॥

|| विशेषणाच्च || 4

44 तयोरेव प्रकरणे ह्युपास्योपासकत्वतः । विशिष्य वचनादत्र ब्रह्मजीवौ गुहाहितौ ॥

14 अन्तराधिकरणम् । || अन्तरः उपपत्तेः || 1

45 अक्ष्यन्तर्वर्तिपुरुषो जीवबिम्बरवीतरः । अमृतत्वाभयत्वादिगुणानामुपपत्तितः ॥

|| स्थानादिव्यपदेशाच्च || 2

46 यश्चक्षुषीति श्रुत्या च तत्स्थितिव्यपदेशतः । नियन्तृत्वामृतत्वादिगुणेभ्यश्च परः पुमान् ॥

|| सुखविशिष्टाभिधानादेव च || 3

47 कं ब्रह्मेति सुखाढ्यस्य ध्यानार्थमिह चाक्षणि । अभिधानात्स्थितेरत्र ह्यक्ष्यन्तःस्थः परः पुमान् ॥

|| अत एव च स ब्रह्म || 4

48 तस्मात् कं ब्रह्म खं ब्रह्मेत्यत्राकाशस्य कीर्तनात् । अक्ष्याधारतया तस्य त्वाकाशो हि परः पुमान् ॥

|| श्रुतोपनिषत्कगत्यभिधानाच्च || 5

49 श्रुतोपनिषदां या हि गतिरुक्ताऽर्चिरादिका । सैवात्रोपासकस्योक्तेत्यतोऽपि स परः पुमान् ॥

|| अनवस्थितेरसंभवाच्च नेतरः || 6

50 नियमेनाक्षण्यवृत्ते र्जीवादिर्नाक्षिगस्त्विह । नियन्तृत्वामृतत्वादिपूर्वोक्तासंभवाच्च हि ॥

15 अन्तर्याम्यधिकरणम् ॥ || अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् || 1

51 अन्तर्याम्यधिदैवाधिलोकाद्युक्तिगतः परः । सर्वावेद्यनियन्तृत्वब्रह्मधर्मस्य शंसनात् ॥

|| न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च || 2

52 प्रधानजीवौ नैवात्र त्वन्तर्यामितयोदितौ । असंभावितधर्माणां तयोरत्राभिधानतः ॥

|| उभयेऽपि हि भेदेनैनमधीयते || 3

53 उभयेऽन्तर्यामिवाचि'यो विज्ञाने,य आत्मनि'। इति ह्यक्ष्यादिवत् जीवात् भेदेनैनमधीयते ॥

16 अदृश्यत्वादिगुणकाधिकरणम् । || अदृश्यत्वादिगुणको धर्मोक्तेः || 1

54 अदृश्यत्वादिगुणकमक्षरं परमः पुमान् । सर्वज्ञत्वादिधर्मोक्तेः सोऽक्षरात्परतः परः ॥

|| विशेषणभेदव्यपदेशाभ्यां च नेतरौ || 2

55 स्वज्ञानात्सर्वविज्ञानादक्षरं नेतरौ भवेत् । अक्षरात्परतो जीवात्परत्वेन पृथक् श्रुतेः ॥

|| रूपोपन्यासाच्च || 3

56 अग्निर्मूर्धा चन्द्रसूर्यौ चक्षुषी इति चाक्षरे । सर्वदेवाद्यङ्गकत्वशंसनात्परमेश्वरः ॥

17 वैश्वानराधिकरणम् । || वैश्वानरः साधारणशब्दविशेषात् || 1

57 वैश्वानरः परं ब्रह्म जाठरादिविलक्षणम् । ब्रह्मशब्दप्रभृतिभिः सामान्यस्य विशेषणात् ॥

|| स्मर्यमाणमनुमानं स्यादिति || 2

58 अग्निर्मूर्धेति यद्रूपं ब्रह्मण्युक्तं श्रुतौ स्मृतौ । वैश्वानरः परं ब्रह्म तद्रूपस्मरणादिह ॥

|| शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न
तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते || 3

59 होमाधारान्तराग्नित्वश्रुतेर्ब्रह्म न चेन्न तत् । जाठराग्निशरीरस्योपास्तये पुरुषस्य सा ॥

|| अत एव न देवता भूतं च || 4

60 लोकत्रयशरीरत्वात् पुरुषत्वेन कीर्तनात् । वैश्वानरो नाग्निदेवो न च भूततृतीयकम् ॥

साक्षादप्यविरोधं जैमिनिः || 5

61 वैश्वानरपदेनैवाग्निशब्देनापि योगतः । बोधनादविरोधं तु ब्रह्मणो जैमिनिर्जगौ ॥

|| अभिव्यक्तेरित्याश्मरथ्यः || 6

62 द्युमूर्धत्वादिमात्राभिः परिच्छिन्नत्वमत्र तु । उपासकेऽभिव्यक्तेरित्याश्मरथ्यमुनेर्मतम् ॥

|| अनुस्मृतेर्बादरिः || 7

63 द्युलोकप्रभृतीनां तु मूर्धत्वादिप्रकल्पनम् । तथैवोपासनं वक्तुमिति बादरिरब्रवीत् ॥

|| संपत्तेरिति जैमिनिस्तथा हि दर्शयति || 8

64 अग्निहोत्रत्वसंपत्तेः प्राणाहुत्यास्तु जैमिनिः । उरोवेदित्यादिक्लृप्तिमब्रवीदाह हि श्रुतिः ॥

|| आमनन्ति चैनमस्मिन् || 9

65 द्युमूर्धादीन् अवयवान् उपासकतनौ तथा । ध्यात्वाऽऽहुत्यार्चनार्थं च वैश्वानरमिहामनत् ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥

अथ प्रथमाध्यायस्य तृतीयः पादः ||

18 द्युभ्वाद्यधिकरणम् । || द्युभ्वाद्यायतनं स्वशब्दात् || 1

66 द्युभ्वाद्यायतनं ब्रह्म नाज्याधारं च तद्विदुः । स्वशब्दादमृतस्यैष सेतुरित्यादिकादिह ॥

|| मुक्तोपसृप्यव्यपदेशाच्च || 2

67 प्रक्रमेऽस्मिन् यदा पश्यो रुक्मवर्णं च पश्यति । साम्यं परं तदैतीति श्रुतेर्ब्रह्म द्युभूधरम् ॥

|| नानुमानमतच्छब्दात् प्राणभृच्च || 3

68 प्रधानवच्च जीवोऽपि द्युभ्वाद्यायतनं न हि । तद्वाचकानां शब्दानामभावादिति सिद्ध्यति ॥

|| भेदव्यपदेशात् || 4

69 यदा पश्यत्यन्यमीशमिति श्रुत्या तयोरिह । भेदेन व्यपदेशाच्च न जीवः सर्वधारकः ॥

|| प्रकरणात् || 5

70 परा ययेत्यादिपूर्वं ब्रह्मप्रकरणादपि । द्युभ्वाद्यायतनं ब्रह्म निश्चेयं नेतराविह ॥

|| स्थित्यदनाभ्यां च || 6

71 एकत्रैव तनौ तिष्ठन् अन्योऽनश्नन् फलं स्वराट् । अश्नन् जीवो मुह्यतीति तत्राभोक्ता परः पुमान् ॥

19 भूमाधिकरणम् । भूमा संप्रसादादध्युपदेशात् || 1

72 सनत्कुमारगुरुणा नारदाय विशेषतः । जीवादूर्ध्वं चोपदेशाद्भूमाऽत्र परमः पुमान् ॥

|| धर्मोपपत्तेश्च || 2

73 प्रतिष्ठितः स्वे महिम्नि भूमेति वचनादिह । अनन्याधारकत्वादिगुणवत्त्वाच्च तत् परम् ॥

20 अक्षराधिकरणम् । || अक्षरमम्बरान्तधृतेः || 1

74 अक्षरं तु परं ब्रह्म ह्यव्याकृतधृतेरिह । ओतत्वेन च सर्वस्य प्रोतत्वेनात्र तच्छ्रुतेः ॥

॥ सा च प्रशासनात् ॥ 2

75 प्रशासने त्वक्षरस्य विधृताविति शंसनात् । शासनात् सा विधृतिरित्यज्ञो जीवश्च नाक्षरम् ॥

॥ अन्यभावव्यावृत्तेश्च ॥ 3

76 अदृष्टं द्रष्ट्रिति श्रुत्या ह्यन्यभावनिषेधतः । अक्षरं परमात्मा हि जगत्कारणमुच्यते ॥

21 ईक्षतिकर्माधिकरणम् । ईक्षतिकर्म व्यपदेशात्सः ॥ 1

77 य ईक्षते पुरुषमित्यजरत्वादिशंसनात् । चतुर्मुखादन्य इति पुरुषोऽसौ परः पुमान् ।

22 दहराधिकरणम् । ॥ दहरः उत्तरेभ्यः ॥ 1

78 दहरोऽस्मिन्नन्तरिति प्रोक्तो हि दहरः परः । उत्तरेभ्यस्तु वाक्येभ्यः प्रतिपन्नगुणान्वयात् ॥

॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ 2

79 तस्मिन् गतिब्रह्मलोकशब्दाभ्यां दहरः परः । संपद्येति ब्रह्मलोक इत्यन्यश्रुतिलिङ्गतः ॥

॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ 3

80 असंभेदाय लोकानां महिम्नो विधृतेरिह । परस्य तस्य चास्मिंस्तु श्रवणात् दहरः परः ॥

॥ प्रसिद्धेश्च ॥ 4

81 प्राणनादिसनाथा या प्रसिद्धिः प्रबला हि सा । भूताकाशप्रसिद्धेरप्यतो दह्रः परः पुमान् ॥

॥ इतरपरामर्शात्स इति चेन्नासंभवात् ॥ 5

82 जीवस्य च परामर्शात् संप्रसाद इतीह तु । वाक्यशेषे स इति चेन्न जीवोऽनुपपत्तितः ॥

॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ 6

83 य आत्मापहतेत्यादिश्रुत्या जीव इहेति चेत् । तत्राविर्भूतरूपोक्त्या न जीवो दहरो भवेत् ॥

अन्यार्थश्च परामर्शः ॥ 7

84 माहात्म्यकथनार्थं तु ब्रह्मणस्तत्र कीर्तनम् । संप्रसादस्य मुक्त्यादौ स्वरूपापादनादिना ॥

॥ अल्पश्रुतेरिति चेत् तदुक्तम् ॥ 8

85 अल्पत्वाल्पस्थानवत्त्वश्रुत्या ब्रह्म न तद्यदि । निचाय्यत्वादेवमिति दत्तोत्तरमिदं पुरा ॥

॥ अनुकृतेस्तस्य च ॥ 9

86 परमं साम्यमित्यादिश्रुत्या साम्यानुकारतः । जीवोऽनुकर्ता दहरस्त्वनुकार्यः परः पुमान् ॥

॥ अपि स्मर्यते ॥ 10

87 इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । इति स्मृत्या चानुकर्ता जीवस्त्विति न कारणम् ॥

23 प्रमिताधिकरणम् । ॥ शब्दादेव प्रमितः ॥ 1

88 अङ्गुष्ठमात्रः पुरुषः कठवल्ल्यामुदीरितः । भूतभव्यादीशितृत्वशब्दादेव परः पुमान् ॥

॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ 2

89 उपासने मनुष्याणामधिकारात्परात्मनः । अङ्गुष्ठप्रमितत्वं च हृदयापेक्षया भवेत् ॥

24 देवताधिकरणम् । ॥ तदुपर्यपि बादरायणः संभवात् ॥ 1

90 देवानां च भवेद्ध्यानमर्थित्वादेश्च संभवात् । बादरायण आचार्य एवमेवेति मन्यते ॥

॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ 2

91 शरीरवत्त्वे देवानां विरोधः कर्मणीति चेत्। नैवं नानावपुःप्राप्तेः सौभर्यादिषु दर्शनात् ॥

॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ 3

92 देवादीनां तनोर्नाशे वेदोऽनित्यार्थयुक् भवेत्। इत्ययुक्तमिदं शब्दात् तत्सृष्टेश्च श्रुतेः स्मृतेः ॥

॥ अत एव च नित्यत्वम् ॥ 4

93 सूर्याचन्द्रमसौ धाता यथापूर्वमिति श्रुतेः। धाता पदं हि संस्मृत्य सृजतीत्यस्तु नित्यता ॥

॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ 5

94 समाननामरूपाभ्यां पुनर्ब्रह्म सृजत्यतः। अविरोधो लयेऽपीति श्रुत्या स्मृत्या च गम्यते ॥

25 मध्वधिकरणम् ॥ ॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ 1

95 प्राप्तत्वाच्च वसुत्वस्य स्वस्योपास्यत्वतोऽपि च। मध्वादिषु वसूनां चानधिकारं तु जैमिनिः ॥

॥ ज्योतिषि भावाच्च ॥ 2

96 ज्योतिर्होपासते देवा(ः) इत्येवं ब्रह्मचिन्तने। अधिकारप्रतीत्यैषामन्यत्रानधिकारिता ॥

॥ भावं तु बादरायणोऽस्ति हि ॥ 3

97 जन्मान्तरे वसुत्वस्य प्राप्त्यर्थं स्वतनोर्भवेत्। परस्योपासनं तेषां आहैवं बादरायणः ॥

26 अपशूद्राधिकरणम् ॥ ॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ 1

98 हंसेनानादरश्रुत्या तदैवाद्रवणाद्गुरौ। शूद्रेत्यामन्त्रयत् शोकं दृष्ट्वा न त्वस्य शूद्रता ॥

॥ क्षत्रियत्वगतेश्च ॥ 2

99 जानश्रुतेस्तु तत्रैव बहुदायित्वदर्शनात्। क्षत्रियत्वं गम्यतेऽतो न शूद्रस्याधिकारिता ॥

॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ 3

100 उपरिष्टाच्च विद्यायां क्षत्रियत्वं तु गम्यते। अयाजयंश्चैत्ररथमित्यतोऽभिप्रतारिणः ॥

॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ 4

101 ब्रह्मविद्याप्रकरणे संस्कारपरिमर्शनात्। संस्काराभाववचनान्न शूद्रस्याधिकारिता ॥

॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ 5

102 जाबालस्य तु शुश्रूषोः शूद्रत्वाभावनिश्चये। उपदेशप्रवृत्तेश्च न शूद्रस्याधिकारिता ॥

॥ श्रवणाध्ययनार्थप्रतिषेधात् ॥ 6

103 आम्नायश्रवणाध्याययागादिप्रतिषेधतः। उपासनेऽप्यधीकारो न शूद्रस्येति निश्चितम् ॥

॥ स्मृतेश्च ॥ 7

104 न चास्योपदिशेद्धर्ममित्यादिस्मृतितस्तथा। उपासने नाधिकारः शूद्रस्येत्यवगम्यते ॥

(प्रमिताधिकरणशेषः) ॥ कम्पनात् ॥ 3

105 अङ्गुष्ठप्रमितप्राणपदोक्तब्रह्मजाड्ग्यात्। सर्वे देवा जागरूका इति श्रुत्या परः स हि ॥

॥ ज्योतिर्दर्शनात् ॥ 4

106 (अङ्गुष्ठमात्रस्तु परो ज्योतिषोऽत्रैव दर्शनात्। तस्य भासा सर्वमिदं विभातीति श्रुतं यतः ॥)
तस्य भासा सर्वमिदं विभतीति श्रुताविह। अभ्युत्तमज्योतिषश्च दर्शनात्स परः पुमान् ॥

27 अर्थान्तरत्वादिव्यपदेशाधिकरणम् । ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ 1

107 नामरूपविनिर्वोढा ह्याकाशः परमेश्वरः । बद्धमुक्तोभयावस्थादन्यत्वेनास्य कीर्तनात् ॥

॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ 2

108 प्राज्ञेन संपरिष्वक्तः सुषुप्तौ कीर्त्यते पृथक् । उत्क्रान्तौ च तथा तस्मात् जीवादन्यः परः पुमान् ॥

॥ पत्यादिशब्देभ्यः ॥ 3

109 सर्वस्याधिपतीत्यादिशब्दैश्च व्यपदेशतः । प्राज्ञश्च परमात्माऽयं जीवादन्यस्सुनिश्चितः ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

## अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

28 आनुमानिकाधिकरणम् । आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ 1

110 प्रधानमप्याहुरेके कारणं त्विति चेन्न हि । रथरूपेण विन्यस्ता तनुर्ह्यव्यक्तमुच्यते ॥

॥ सूक्ष्मं तु तदर्हत्वात् ॥ 2

111 शरीरावस्थमव्यक्तं प्रवृत्त्यर्हं तदेव हि । तस्मादव्यक्तशब्देन न प्रधानमिहोच्यते ॥

॥ तदधीनत्वादर्थवत् ॥ 3

112 परमात्माधीनतया रथत्वादिनिरूपणम् । स्यात् प्रयोजनवत् सर्वं नाव्यक्तमिह तान्त्रिकम् ॥

॥ ज्ञेयत्वावचनाच्च ॥ 4

113 ज्ञेयत्वेन ह्यवचनान्न प्रधानमिहोच्यते । व्यक्ताव्यक्तज्ञविज्ञानादिति तेषां मतं यतः ॥

॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ 5

114 अशब्दमस्पर्शमिति ज्ञेयं तत् वदति श्रुतिः । इति चेन्न प्रकरणात् परमात्मा हि कथ्यते ॥

॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ 6

115 उपासनमुपास्यं च ध्यातारं चात्र पृच्छते । उपदेशस्त्रयाणां तन्न प्रधानमिहोच्यते ॥

॥ महद्वच्च ॥ 7

116 महत्तत्त्वाग्रहो यद्वदात्मशब्दविशेषणात् । प्रधानस्याप्यग्रहस्तु परत्वादात्मनस्तथा ॥

29 चमसाधिकरणम् । चमसवदविशेषात् ॥ 1

117 इदं तच्छिर इत्येवं चमसस्य शिरस्त्ववत् । अजाया अविशेषाच्च न परोक्ता त्वजा हि सा ॥

॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ 2

118 ब्रह्मकारणिका सा तु ज्योतिषाऽधिष्ठितां ह्यजाम् । अणोरणीयानित्यत्र तैत्तिरीया अधीयते ॥

॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ 3

119 यथा स्थितस्यैकतया मधुत्वं कार्यता रवेः । अजाया अपि सृष्ट्यादिवचनाच्च तथा भवेत् ॥

30 संख्योपसंग्रहाधिकरणम् । ॥ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ 1

120 पञ्च पञ्चजना यस्मिन् इति संख्याग्रहेऽपि च । नानाभावातिरेकाभ्यां सांख्योक्तप्रक्रिया न हि ॥

॥ प्राणादयो वाक्यशेषात् ॥ 2

121 प्राणादयः पञ्चजना इन्द्रियाणीति निश्चिताः । प्राणस्य प्राणमित्येवं वाक्यशेषो हि दृश्यते ॥

|| ज्योतिषैकेषामसत्यन्ने || 3

122 केषांचिदन्नस्येत्यादेः पाठाभावेऽपि शाखिनाम् । ज्योतिषामिति शब्देन बोध्यन्ता-मिन्द्रियाणि तु ॥

31 कारणत्वाधिकरणम् । || कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः || 1

123 आकाशादौ कारणत्वं सर्वज्ञस्योदितं पुरा । असद्वा इदमित्यत्राप्यस्योक्तेर्ब्रह्म कारणम् ॥

|| समाकर्षात् || 2

124 असद्वा इदमित्यादौ सर्वज्ञं सर्वकारणम् । समाकृष्य ब्रवीतीति ब्रह्मैवात्रापि कारणम् ॥

32 जगद्वाचित्वाधिकरणम् । || जगद्वाचित्वात् || 1

125 यस्य वैतत्कर्म चेति श्रुतं कर्म जगद्भवेत् । पुण्यादिवशगो जीवः कथ्यते नात्र हि श्रुतौ ॥

|| जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् || 2

126 जीवलिङ्गात् प्राणलिङ्गात् कारणं ब्रह्म नो भवेत् । इति चेत्–त्रिविधोपास्तिसिद्ध्यर्थमिति वर्णितम् ॥

|| अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके || 3

127 अस्मिन् जीवपरामर्शो जीवादन्यत्वसिद्धये । इत्याह जैमिनिः प्रश्नव्याख्यानाभ्यां श्रुतिस्तथा ॥

33 वाक्यान्वयाधिकरणम् । || वाक्यान्वयात् || 1

128 मैत्रेयीब्राह्मणस्थानां वाक्यानामन्वयात् तदा । द्रष्टव्य आत्मा कथितः परमात्मा न तान्त्रिकः ॥

|| प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः || 2

129 प्रतिज्ञायास्तु सिद्ध्यर्थं जीवबोधकशब्दतः । ब्रह्माभिधानं तल्लिङ्गमाश्मरथ्यमुनेर्मतम् ॥

|| उत्क्रमिष्यत एवंभावादित्यौडुलोमिः || 3

130 जीववाचा परस्योक्तिरुत्क्रमिष्यत एव हि । ब्रह्मसाम्यापत्तितः स्यादौडुलोमेरिदं मतम् ॥

|| अवस्थितेरिति काशकृत्स्नः || 4

131 अवस्थितेरात्मनि च ब्रह्मणो जीववाचकैः । अभिधानं युक्तमिति काशकृत्स्नमुनेर्मतम् ॥

34 प्रकृत्यधिकरणम् । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् || 1

132 उपादानं च तद्ब्रह्म प्रतिज्ञासिद्धये तथा । सुवर्णकटकादीनां दृष्टान्तानामबाधतः ॥

|| अभिध्योपदेशाच्च || 2

133 बहु स्यामिति संकल्पश्रुत्या ब्रह्मैव कारणम् । उपादानं निमित्तं च जगतोऽस्येति निश्चितम् ॥

|| साक्षाच्चोभयाम्नानात् || 3

134 उपादानं निमित्तं च भवेद्ब्रह्म जगत्प्रति । साक्षात् ब्रह्म वनं ब्रह्म वृक्ष इत्युप्युदीरणात् ॥

|| आत्मकृतेः || 4

135 बहुत्वकरणात्स्वस्य कर्तृत्वं कर्मता च हि । अतो ब्रह्म निमित्तञ्चोपादानञ्चेति कथ्यते ॥

|| परिणामात् || 5

136 सूक्ष्माचेतनचिद्वस्तुशरीरस्य शरीरतः । ब्रह्मणो बहुधा ह्यत्र परिणामो न तत् क्षतिः ॥

|| योनिश्च हि गीयते || 6

137 यद्भूतयोनिमित्यादिश्रुत्या सर्वजगत् प्रति । उपादानमिति ब्रह्म गीयते चेति निश्चितम् ॥

35 सर्वव्याख्यानाधिकरणम् । ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ 1

138 न्यायेन चैतदन्तेन सर्वे कारणवादिनः । वेदान्ताः परमब्रह्मबोधका इति निश्चितम् ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥

इति श्रीमद्वेदमार्गेत्यादिबिरुदावळीमेदुराणां चतुरधिकचत्वारिंशत्संख्यासंख्यातपट्टाभिषेक-
परिमण्डितानां श्रीवण्शठकोप श्रीवेदान्तदेशिकयतीन्द्रमहादेशिकानां
कृतिषु ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायः ॥

## ॥ अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

36 स्मृत्यधिकरणम् । स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाश-
दोषप्रसंगात् ॥ 1

139 प्रधानस्याकारणत्वे त्यक्ता स्यात् कपिलस्मृतिः । इति न ब्रह्मणोऽतत्त्वे मन्वादिस्मृतयो मुधा ॥

॥ इतरेषां चानुपलब्धेः ॥ 2

140 इतरेषां मुनीनां तु प्रधानस्य जगत् प्रति । हेतुत्वानुपलब्धेः स्यात् ब्रह्मैवाशेषकारणम् ॥

37 योगप्रत्युक्त्यधिकरणम् । ॥ एतेन योगः प्रत्युक्तः ॥ 1

141 निमित्तमात्रं ब्रह्मेति वदन्ती वेधसः स्मृतिः । पूर्वोक्तेन नयेनैव प्रत्याख्याता श्रुतेर्बलात् ॥

38 विलक्षणत्वाधिकरणम् । ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ 1

142 जगद्विलक्षणत्वेन कारणत्वं न सिद्ध्यति । ब्रह्मणः तत्तथात्वं तु सच्च त्यच्चेति शब्दतः ॥

॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ 2

143 अभिमानिविवक्षातः तं पृथिव्यब्रवीदिति । देवतास्तिस्र इत्युक्तेः प्रवेशादपि कीर्तितात् ॥

॥ दृश्यते तु ॥ 3

144 क्रिम्यादेर्माक्षिकादिभ्यो यथोत्पत्तिः समञ्जसा । जगतोऽपि तथोत्पत्तिर्ब्रह्मणोऽपि विलक्षणात् ॥

॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ 4

145 नन्वसत्कार्यवादः स्यादिति चेन्नात्र चोभयोः । सालक्षण्यस्य नियमः केवलं प्रतिषिध्यते ॥

॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ 5

146 प्रळये सृष्टिकाले च जगद्भावात्परात्मनः । जगद्दोषाः ब्रह्मणोऽतो वाक्यं स्यादसमञ्जसम् ॥

॥ न तु दृष्टान्तभावात् ॥ 6

147 व्यवस्थिता गुणास्तावदात्मनश्च तनोर्यथा । जगत्तनोर्ब्रह्मणश्च तथैवेति समञ्जसम् ॥

॥ स्वपक्षदोषाच्च ॥ 7

148 स्वपक्षे दोषभूयस्त्वात् परित्यज्य स्वकं मतम् । ब्रह्मकारणवादस्तु स्वीकार्यो भवताऽनघः ॥

॥ तर्काप्रतिष्ठानादपि ॥ 8

149 कुतर्कस्याप्रतिष्ठानात्प्रधानं तु न कारणम् । ब्रह्मानधिष्ठितं यस्मात् त्वया वादात्प्रकल्पितम् ॥

॥ अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ 9

150 प्रबलात् तर्कसंवादात् प्रधानं सिद्ध्यतीति चेत् । ततोऽपि बलवत्तर्कबाधान्मुच्येत नो भवान्

39 शिष्टापरिग्रहाधिकरणम् । ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ 1

151 वेदापरिग्रहाश्शिष्टा(ः) निरस्तास्सांख्यपक्षवत् । कुतर्कहेतुमूलत्वादन्योन्यव्याहतेः पुनः ॥

40 भोक्त्रापत्त्यधिकरणम् । ॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ 1

152 ब्रह्मणोऽखिलदेहत्वे भोक्तृत्वं जीववद्भवेत् । नातो विभाग इति चेत् देहित्वेऽपि न भोक्तृता ॥

41 आरम्भणाधिकरणम् । ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ 1

153 अनन्यत्वं तु जगतो ब्रह्मणः कारणादिह । वाचारम्भणमित्यादेर्मृत्पिण्डाद् घटवद्भवेत् ॥

॥ भावे चोपलब्धेः ॥ 2

154 कुण्डलादिषु कार्येषु हिरण्याद्युपलब्धितः । कार्यं कारणतोऽनन्यदिति वेदविदां मतम् ।

॥ सत्त्वाच्चापरस्य ॥ 3

155 अपरस्य तु कार्यस्य सत्त्वात् सूक्ष्मं स्वकारणे । अनन्यत् कारणात्कार्यं मृदि सूक्ष्मं घटोऽस्ति हि ॥

॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च ॥ 4

156 व्यपदेशादसदिति नेति चेन्न स सूक्ष्मतः । व्यपदेशो वाक्यशेषात् युक्तेश्शब्दान्तरात्तथा ॥

॥ पटवच्च ॥ 5

157 व्यतिषङ्गविशेषेण नामरूपान्तरस्पृशः । पट इत्यभिधीयन्ते यथा जगति तन्तवः ॥

॥ यथा च प्राणादिः ॥ 6

158 प्राणादिः स्थानभेदेऽपि वायोर्नान्यो यथा भवेत् । जगच्चापि तथा नान्यद्ब्रह्मणो निजकारणात् ॥

42 इतरव्यपदेशाधिकरणम् । इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ 1

159 जीवत्वव्यपदेशात्तु हिताकृत्यादिदोषतः । ब्रह्मणः कारणत्वं न सिद्ध्येदिति च चोद्यते ॥

॥ अधिकं तु भेदनिर्देशात् ॥ 2

160 भेदेनास्यैव करणाधिपाधिप इतिश्रुतौ । निर्देशादधिकं ब्रह्म जीवान्नातोऽत्र दुस्स्थता ॥

अश्मादिवच्च तदनुपपत्तिः ॥ 3

161 अश्मादीनां ब्रह्मभावो यथा नैवोपपद्यते । तथैवाघौघपूर्णस्य जीवस्यापि न युज्यते ॥

43 उपसंहारदर्शनाधिकरणम् । ॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ 1

162 समर्थेऽपि हि साहाय्यापेक्षा दृष्टा न कारणम् । अद्वितीयं ब्रह्म तस्मात् मैवं क्षीरे यथा दधि ॥

॥ देवादिवदपि लोके ॥ 2

163 देवादयः स्वस्वलोके सृजन्ति विविधं यथा । ब्रह्मापि निजसंकल्पात् तनोति निखिलं तथा ॥

44 कृत्स्नप्रसक्त्यधिकरणम् । ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ 1

164 बहु स्यामिति संकल्प्य ब्रह्म कृत्स्नं कथं भवेत् । निरंशबोधकैर्वाक्यैः सांशत्वे तु विरुद्धता ॥

॥ श्रुतेस्तु शब्दमूलत्वात् ॥ 2

165 शब्दमात्रेण वेद्यत्वाच्छ्रुत्युक्तं ब्रह्मणो भवेत् । कारणत्वं यतः सर्वं श्रुतिमूलं समञ्जसम् ॥

॥ आत्मनि चैवं विचित्राश्च हि ॥ 3

166 अचिद्धर्माप्रसक्तिश्च जीवात्मनि यथा तथा । जलादौ न यथौष्ण्यादिशक्तयश्च तथा परे ॥

॥ स्वपक्षदोषाच्च ॥ 4

167 कारणत्वं निरंशस्य प्रधानस्य भवेत् कथम् । स्वपक्षे तु तदा दोषादस्तु ब्रह्मैव कारणम् ॥

|| सर्वोपेता च तद्दर्शनात् || 5

168 विचित्रसर्वशक्त्या च ह्युपेता देवता परा । उपास्या श्रुतिसिद्धेति जगत्कारणमुच्यते ॥

|| विकरणत्वान्नेति चेत् तदुक्तम् || 6

169 निरिन्द्रियत्वान्नो हेतुरिति चेत् तत् कृतोत्तरम् । न तस्य कार्यं करणमिति वाक्यात्परात्मनि ॥

45 प्रयोजनवत्त्वाधिकरणम् । || न प्रयोजनवत्त्वात् || 1

170 सृष्टेः प्रयोजनव्याप्त्या तदभावात्परात्मनः । स्रष्टृत्वं परिपूर्णस्य न भवेदिति चोद्यते ॥

|| लोकवत्तु लीलाकैवल्यम् || 2

171 लोके तु परिपूर्णानां कन्दुकादिविहारवत् । ब्रह्मणः परिपूर्णस्य सृष्टेर्लीला प्रयोजनम् ॥

|| वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति || 3

172 न वैषम्यं न नैर्घृण्यं नीचादीन् सृजतः प्रभोः । कर्मानुरूपं स्रष्टृत्वात् तथा दर्शयति श्रुतिः ॥

|| न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च || 4

173 जीवाभावेनाविभागान्नास्ति कर्म तदेति चेत् । जीवस्यानादिताश्रुत्याऽविभागोऽप्युपपद्यते ॥

|| सर्वधर्मोपपत्तेश्च || 5

174 प्रधानपरमाण्वादिहेतुत्वे यच्च दूषणम् । न ब्रह्महेतुतायां तत् सर्वधर्मोपपत्तितः ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायस्य प्रथमः पादः ॥

|| अथ द्वितीयाध्यायस्य द्वितीयः पादः ||

46 रचनानुपपत्त्यधिकरणम् || रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च || 1

175 सृष्ट्याद्यनुपपत्तेश्च नानुमानं तु कारणम् । ब्रह्मणाधिष्ठितस्यास्य जगत्सृष्टौ प्रवृत्तितः ॥

|| पयोम्बुवच्चेत् तत्रापि || 2

176 क्षीराम्बुनोर्दधित्वाभ्ररसाभ्यां तु यथा जनिः । तथाऽत्रापि भवेन्मैवं तत्रापि प्राज्ञसंयुतेः ॥

|| व्यतिरेकानवस्थितेश्चानपेक्षत्वात् || 3

177 अनपेक्षप्रवृत्तित्वे सर्वदा सृष्टिरेव हि । प्रलयादेरप्रसक्त्या व्यवस्था ऽतो न सिद्ध्यति ॥

|| अन्यत्राभावाच्च न तृणादिवत् || 4

178 तृणादिकं यथा क्षीरं प्रकृतिश्च तथेति चेत् । वृषभेणोपभुक्तं तत् तृणं न हि भवेत् पयः ॥

|| पुरुषाश्मवदिति चेत् तथाऽपि || 5

179 पङ्गुरन्धमयस्कान्तोऽयः प्रयुङ्क्ते यथा तथा । प्रधानं पुरुषश्चेति मैवं स्यात् स्रष्टृता सदा ॥

|| अङ्गित्वानुपपत्तेश्च || 6

180 सत्त्वादीनां गुणानां तु प्रळये समता भवेत् । गुणस्य चैकस्याङ्गित्वायोगाच्चैतदसंभवः ॥

|| अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् || 7

181 अन्यथा स्यात् प्रधानानुमितिर्यद्यत्र, तत्र च । ज्ञातृत्वशक्तिविरहात् रचनादेरसंभवः ॥

|| अभ्युपगमेऽप्यर्थाभावात् || 8

182 प्रधानसाधनेऽप्यत्र फलाभावाद्विपर्ययः । भोगमोक्षौ च न स्यातां प्रधानेन सदा स्थितेः ॥

॥ विप्रतिषेधाच्चासमञ्जसम् ॥ 9

183 पूर्वापरविरोधाच्च कापिलं त्वसमञ्जसम् । निर्लेपस्याविकारस्य द्रष्टृत्वाद्युपपादनात् ॥

47 महद्दीर्घाधिकरणम् । ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ 1

184 द्व्यणुकं परमाणुभ्यां भवतीत्यसमञ्जसम् । द्व्यणुकैश्च महद्दीर्घमन्यच्चाप्यसमञ्जसम् ॥

॥ उभयथाऽपि न कर्मातस्तदभावः ॥ 2

185 कादाचित्कं च कर्मैव परिमण्डलजीवयोः । न संभवति तन्मूलं महद्दीर्घं न सिद्ध्यति ॥

॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ 3

186 समवायाभ्युपगमात् तस्य चाप्यपृथक्स्थितेः । हेत्वपेक्षानवस्थानादसमञ्जसमेव तत् ॥

॥ नित्यमेव च भावात् ॥ 4

187 संबन्धस्य च नित्यत्वे संबन्धिजगतस्तथा । नित्यत्वं संभवेदेवेत्यसमञ्जसमेव तत् ॥

॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ 5

188 रूपादिमत्त्वनियमात् परमाणोरनित्यता । घटादीनां रूपवत्त्वादनित्यत्वस्य दर्शनात् ॥

॥ उभयथा च दोषात् ॥ 6

189 कार्यनिष्ठगुणानां तु कारणस्थगुणात्परः । हेतुर्नेति च तद्वत्त्वे तदभावे च दोषतः ॥

॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ 7

190 काणादस्य मतस्यास्य सर्वांशेऽप्यपरिग्रहात् । मुमुक्षुभिश्च कर्तव्या त्वनपेक्षा सदा बुधैः ॥

48 समुदायाधिकरणम् । ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ 1

191 सर्वेषां क्षणिकत्वोक्त्या समुदायोऽणुमूलकः । भूताद्यारब्धतन्वादिसमुदायश्च नो भवेत् ॥

॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ 2

192 इतरेतरहेतुत्वादविद्यादेर्जगद्भवेत् । इति चेन्न तथाप्यस्याः न सङ्घातेऽत्र हेतुता ॥

॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ 3

193 कार्योत्पत्तौ कारणस्य नष्टत्वात्कारणं न हि । कारणत्वे त्वभावस्य सर्वं स्यात्सर्वदा जगत् ॥

॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ 4

194 हेतावसति कार्यं चेत् प्रतिज्ञा चोपरुद्ध्यते । चत्वारो हेतवो ह्युक्ताः यौगपद्यं ततोऽन्यथा ॥

॥ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ 5

195 निरन्वयौ स्थूलसूक्ष्मौ विनाशौ यौ न तावपि । अवस्थान्तरसद्भावान्न हि नाशो निरन्वयः ॥

॥ उभयथा च दोषात् ॥ 6

196 उत्पन्नस्य च तुच्छत्वं तुच्छादेवोद्भवं तथा । वदतां भवतां नूनं तुच्छं स्यान्निखिलं जगत् ॥

॥ आकाशे चाविशेषात् ॥ 7

197 जगत्प्रतीतितुल्यत्वान्नाकाशस्यापि तुच्छता । पतत्यत्र श्येन इति प्रतीतिर्हि न बाध्यते ॥

॥ अनुस्मृतेश्च ॥ 8

198 स एवायं घट इति प्रत्यभिज्ञा प्रसिद्ध्यति । अतो घटादिकार्याणां क्षणिकत्वं न सिद्ध्यति ॥

॥ नासतोऽदृष्टत्वात् ॥ 9

199 विनष्टेषु पदार्थेषु तद्गुणस्यान्यवस्तुनि । न दृष्टः संक्रम इति क्षणिकत्वं न युज्यते ॥

॥ उदासीनानामपि चैवं सिद्धिः ॥ 10

200 यतमानविनाशेऽपि फलं भवति यन्मते । निष्प्रयत्नजनानां च तत्र मोक्षादिकं भवेत् ॥

49 उपलब्ध्यधिकरणम् । नाभाव उपलब्धेः ॥ 1

201 ज्ञानादन्यपदार्थानामभावोक्तिर्न सिद्ध्यति । सर्वेषां तु पदार्थानां उपलब्धेः प्रमाणतः ॥

॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ 2

202 स्वप्नादिवत् जागरितज्ञानस्यापि न युज्यते । मिथ्यात्वं दोषराहित्यात् वैधर्म्यादत्र सत्यता ॥

॥ न भावोऽनुपलब्धेः ॥ 3

203 ज्ञानस्य चार्थशून्यस्य सद्भावो नैव विद्यते । कर्तृकर्मवियुक्तस्य ज्ञानस्यानुपलब्धितः ॥

50 सर्वथानुपपत्त्यधिकरणम् । ॥ सर्वथाऽनुपपत्तेश्च ॥ 1

204 सर्वशून्यत्ववादश्च न सिद्ध्यति भवन्मते । सर्वथाऽनुपपत्तेश्च प्रमाणादिविरोधतः ॥

51 एकस्मिन्नसंभवाधिकरणम् । ॥ नैकस्मिन्नसंभवात् ॥ 1

205 एकस्मिन्नेव युगपदस्तिनास्त्यादिशंसनम् । भिन्नाभिन्नत्ववादश्चासंभवात्तु निरस्यते ॥

॥ एवञ्चात्माकार्त्स्न्यम् ॥ 2

206 तद्देहपरिमाणत्वे ह्यात्मनोऽपूर्णता भवेत् । गजदेहस्थितस्याजतनुं प्रविशतस्तदा ॥

॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ 3

207 अवस्थान्तरयोगेऽपि ह्यविरोधो न सिद्ध्यति । आत्मनोऽपि विकारित्वे घटादिसमता भवेत् ।

॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ 4

208 मुक्तात्मपरिमाणस्य मुक्तस्याप्यात्मनस्तथा । नित्यत्वादुभयोर्जीवः न देहपरिमाणवान् ॥

52 पशुपत्यधिकरणम् । ॥ पत्युरसामञ्जस्यात् ॥ 1

209 मतं पशुपतेश्चापि त्याज्यमेव विवेकिभिः । वेदाचारविरुद्धत्वादुपादानादिभेदतः ॥

॥ अधिष्ठानानुपपत्तेश्च ॥ 2

210 अशरीरस्येश्वरस्य जगत्सृष्टिर्न सिद्ध्यति । कुलालवदधिष्ठानानुपपत्तेर्विरोधतः ॥

॥ करणवच्चेन्न भोगादिभ्यः ॥ 3

211 जीवः स्वकरणं यद्वदधितिष्ठत्यजस्तथा । इति चेत् कर्मभोगादि जीवस्येव प्रसज्यते ॥

॥ अन्तवत्त्वमसर्वज्ञता वा ॥ 4

212 तस्याप्यदृष्टवत्त्वे तु सृज्यत्वादि ततो भवेत् । सर्वज्ञताया हानिश्च तस्मात् तन्न समञ्जसम् ॥

53 उत्पत्त्यसंभवाधिकरणम् । ॥ उत्पत्त्यसंभवात् ॥ 1

213 जीवोत्पत्त्यादिवादस्तु पाञ्चरात्रे प्रदृश्यते । उत्पत्त्यसंभवश्रुत्या विरोधात् सोऽसमञ्जसः ॥

॥ न च कर्तुः करणम् ॥ 2

214 तथा संकर्षणात् जीवात् मनसो जन्मशंसनात् । कर्तुर्जीवाच्च करणं मनस्तु न हि जायते ॥

॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ 3

215 संकर्षणप्रद्युम्नादेः स्याज्जीवाद्यभिमानिनः । अवतारः परात् तस्मात् प्रामाण्यं न निषिध्यते ॥

॥ विप्रतिषेधाच्च ॥ 4

216 पाञ्चरात्रेऽपि तन्त्रेऽस्मिन् जीवोत्पत्तिनिषेधतः। समीचीनं तन्त्रमिदं ग्राह्यं स्यान्मुक्तिमिच्छता॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां द्वितीयाध्यायस्य द्वितीयः पादः।

॥ अथ द्वितीयाध्यायस्य तृतीयः पादः

54 वियदधिकरणम्। ॥ न वियदश्रुतेः ॥ 1

217 उत्पत्तिवचनाभावान्नोत्पत्तिर्वियतो विभोः। नित्यत्वाच्चात्मन इव निरंशस्येति शङ्कते॥

॥ अस्ति तु ॥ 2

218 श्रुत्या चात्मन आकाशस्संभूत इति शंसनात्। उत्पत्तिर्विद्यते तस्य त्वाकाशस्येति निश्चितम्॥

॥ गौण्यसंभवाच्छब्दाच्च ॥ 3

219 स्यात्संभूतिश्रुतिर्गौणी व्योम्न उत्पत्त्यसंभवात्। तेजःप्राथम्ययोगाच्च ह्यमृतत्वश्रुतेरपि॥

॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ 4

220 संभूतशब्दस्यैकस्य गौणत्वं मुख्यताऽपि च। ब्रह्मशब्दस्येव तु स्यादनुषक्तस्य मुख्यता॥

॥ प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ 5

221 प्रतिज्ञाया अहानिः स्यात् कार्यत्वाद्वियतश्च हि। छान्दोग्येऽपि वियत्सृष्टिरभिप्रेतेति गम्यते॥

॥ शब्देभ्यः ॥ 6

222 सदेव सोम्यैतदात्म्यमिदमित्यादिशब्दतः। ब्रह्म प्रति शरीरत्वाद्वियतो ब्रह्मकार्यता॥

॥ यावद्विकारं तु विभागो लोकवत् ॥ 7

223 ऐतदात्म्यमिदं सर्वमिति श्रुत्या विकारता। सर्वस्यापि तथोत्पत्तिः ब्रह्मणो लोकवद्भवेत्॥

॥ एतेन मातरिश्वा व्याख्यातः ॥ 8

224 वायोरप्यमृतस्यैवमाकाशाद्वायुरित्यतः। शब्दात्तु ब्रह्मकार्यत्वं व्याख्यातमिति निश्चितम्॥

॥ असंभवस्तु सतोऽनुपपत्तेः ॥ 9

225 सर्वहेतोः परस्यैव प्रतिज्ञानुपपत्तितः। नोत्पत्तिस्संभवेत् तस्मात् तदन्यज्जायतेऽखिलम्॥

55 तेजोधिकरणम्। तेजोऽतस्तथा ह्याह ॥ 1

226 तेजश्च वायोः संभूतं तस्य न ब्रह्मकार्यता। वायोरग्निरिति श्रुत्या वचनादिति शंकते॥

॥ आपः ॥ 2

227 आपश्च तेजसा सृष्टाः ब्रह्मकार्यं कथं च ताः। अग्नेराप इति श्रुत्या निश्चिता इति शङ्कते॥

॥ पृथिवी ॥ 3

228 अद्भ्यश्च पृथिवी जाता तस्मान्न ब्रह्मजा हि सा। यत् अद्भ्यः पृथिवीत्येवं श्रुतिराहेति शंकते॥

॥ अधिकाररूपशब्दान्तरेभ्यः ॥ 4

229 ता अन्नमसृजन्तेति पृथिव्यास्सृष्टिरुच्यते। भूताधिकाररूपान्यशब्देभ्योऽन्नं धरा भवेत्॥

॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ 5

230 बहु स्यामिति संकल्पात् निजसृष्ट्यादिलिङ्गतः। पूर्वपूर्वशरीरस्सन् सृजतीशः परं परम्॥

॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ 6

231 आनन्तर्यक्रमादत्र पारम्पर्यविपर्ययात् । तत्तच्छरीरात् सृष्ट्यादि ब्रह्मणस्तूपपद्यते ॥

॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ 7

232 तन्मात्रभूतयोर्मध्ये त्विन्द्रियाणीति लिङ्गतः । क्रमोत्पत्तिश्चेति चेन्न साक्षादेवाविशेषतः ॥

॥ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ 8

233 चराचराश्रयाश्शब्दाः वाचकाः परमात्मनः । सर्ववस्तुप्रविष्टत्वान्मुख्याः सर्वशरीरिणि

56 आत्माधिकरणम् । ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ 1

234 आत्मा नोत्पद्यते श्रुत्या नित्यत्वाच्चेति गम्यते । नित्यत्वं चात्मनो नित्यो नित्यानामिति च श्रुतेः॥

57 ज्ञाधिकरणम् । ॥ ज्ञोऽत एव ॥ 1

235 ज्ञानस्वरूपो ज्ञाता च नित्यमात्मेति निश्चितम् । पश्यन् स रमते ज्ञानघन इत्यादितः श्रुतेः ॥

॥ उत्क्रान्तिगत्यागतीनाम् ॥ 2

236 उत्क्रान्तिवचनाच्चैव गतेरपि च कीर्तनात् । आगतेश्चापि वचनात् आत्माऽणुरिति गम्यते ॥

॥ स्वात्मना चोत्तरयोः ॥ 3

237 गत्यागत्योस्स्वात्मनैव संपाद्यत्वादिहात्मनः । अणुत्वं निश्चितं तस्मात् शङ्का नैवात्र युज्यते ॥

॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ 4

238 आत्मा महानिति श्रुत्या नाणुरात्मेति चेत् श्रुतिः। परमात्मपरा सेति जीवोऽणुरिति निश्चितम्॥

॥ स्वशब्दोन्मानाभ्यां च ॥ 5

239 अणुरात्मेति वचनादपिचाणुत्वमात्मनः । आराग्रमात्रो ह्यवर इत्युन्मानाच्च निश्चितम् ॥

॥ अविरोधश्चन्दनवत् ॥ 6

240 अणुत्वेऽप्यात्मनो देहे सर्वत्र सुखभागिता । एकदेशस्थितस्यापि चन्दनस्येव युज्यते ॥

॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ 7

241 अवस्थितेस्तु वैशेष्याच्चन्दनं तु तथा भवेत् । इति चेन्नाऽऽत्मनोऽपि स्वे हृदये ह्युच्यते स्थितिः ॥

॥ गुणाद्वाऽऽलोकवत् ॥ 8

242 आत्मा तु स्वगुणात् ज्ञानाद्देहं व्याप्य सुखं भजेत् । आलोकात् खलु मण्यादिः कृत्स्नं व्याप्य प्रकाशयेत् ॥

॥ व्यतिरेको गन्धवत् तथा च दर्शयति ॥ 9

243 जानामीति प्रतीत्यैव ज्ञानं ज्ञातुः पृथग्भवेत् । गन्धवत्याः पृथिव्यास्तु यथा गन्धस्तथा श्रुतेः ॥

॥ पृथगुपदेशात् ॥ 10

244 विज्ञातुर्न हि विज्ञातेः इति श्रुत्या तथाऽऽत्मनः । पृथग्ज्ञानस्य वचनात् ज्ञानं तस्मात् पृथग्भवेत् ॥

॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ 11

245 तज्ज्ञानगुणसारत्वाज्ज्ञानमित्यपिचात्मनः । ब्रह्मवत् व्यपदेशःस्यात् ; सत्यं ज्ञानमिति श्रुतेः ॥

॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ 12

246 सर्वदाऽऽत्मगुणत्वाच्च न दोषो ज्ञानकीर्तने । यथा तादृग्गोत्वयोगाद्व्यपदेशे तु गौरिति ॥

॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ 13

247 सुषुप्तौ विद्यमानस्य ज्ञानस्यैवोद्भवस्त्विह । बाल्येऽपि विद्यमानस्य पुंस्त्वादेरिव यौवने ॥

॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ 14

248 विभुत्वे चात्मनो ज्ञानत्वे च सर्वत्र सर्वदा । उपलब्धिरभावश्च नियमोऽन्यतरस्य वा ॥

58 कर्त्रधिकरणम् । ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ 1

249 अयमात्मा तु कर्तैव यागध्यानविधायिनाम् । शास्त्राणामर्थवत्त्वाय न सत्त्वादेस्तु कर्तृता ॥

॥ उपादानाद्विहारोपदेशाच्च ॥ 2

250 इन्द्रियाणामुपादानाद्विहारादिश्रुतेरयम् । कर्ता चात्मेति कर्तृत्वमिह निश्चितमात्मनः ॥

॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ 3

251 विज्ञानं तनुते यज्ञमित्यादिव्यपदेशतः । क्रियायां कर्तृता तस्य; न चेत्, भाव्यं तृतीयया ॥

॥ उपलब्धिवदनियमः ॥ 4

252 प्रकृतेरेव कर्तृत्वेऽकर्तृत्वे ह्यात्मनोऽपि च । उपलम्भानियमवत् फलस्यानियमो भवेत् ॥

॥ शक्तिविपर्ययात् ॥ 5

253 तस्या एव तु कर्तृत्वे भोक्तृत्वं प्रकृतेर्भवेत् । अन्यस्य भोक्तृभावात्तु भोक्तृत्वं चास्य हीयते ॥

॥ समाध्यभावाच्च ॥ 6

254 प्रकृतेरन्य इत्यादेः समाधेरप्यसंभवात् । मोक्षसाधनभूतस्य स्यादात्मन्येव कर्तृता ॥

॥ यथा च तक्षोभयथा ॥ 7

255 वास्यादिसंनिधानेऽपि यथा तक्षा तथा ह्ययम् । कर्ता चैवमकर्ता च देहीच्छातदभावतः ॥

59 परायत्ताधिकरणम् । ॥ परात्तु तच्छ्रुतेः ॥ 1

256 परमात्मायत्तमेव कर्तृत्वं त्वात्मनो भवेत् । अन्तः प्रविष्टश्शास्तेति वदतीयं श्रुतिर्यतः ॥

॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ 2

257 निषेधविध्योस्सिद्ध्यर्थं जीवोद्योगमपेक्ष्य सः । प्रवर्तयति तं चेति पराधीनाऽस्य कर्तृता ॥

60 अंशाधिकरणम् । ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्व-मधीयत एके ॥ 1

258 जीवः स्यात् ब्रह्मणस्त्वंशः नानात्वव्यपदेशतः । अभेदव्यपदेशाच्च ब्रह्म दाशा इति ह्यपि ॥

॥ मन्त्रवर्णात् ॥ 2

259 पादोऽस्य विश्वा भूतानीत्येवमादेश्च मन्त्रतः । अंशा ब्रह्मण एवैत आत्मान इति निश्चितम् ॥

॥ अपि स्मर्यते ॥ 3

260 ममैवांशो जीवलोक इति स्मृत्यापि चोच्यते । वासुदेवस्यांश इति तस्य ब्रह्मशरीरता ॥

॥ प्रकाशादिवत्तु नैवं परः ॥ 4

261 ब्रह्मांशत्वेऽपि जीवस्य जैवो भावः परे न हि । प्रभादीनां स्वभावस्तु न मण्यादौ यथा भवेत् ॥

॥ स्मरन्ति च ॥ 5

262 एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणश्शक्तिः तथैवेदमिति स्मृतेः॥

॥ अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत् ॥ 6

263 ब्रह्मांशत्वेऽपि जीवानां अनुज्ञापरिहारयोः। उपपत्तिर्देहभेदात् अग्न्यादेरिव युज्यते॥

॥ असन्ततेश्चाव्यतिकरः ॥ 7

264 प्रतिदेहं च भिन्नत्वात् अणुत्वेन च तत्र तु। सुखदुःखाव्यतिकरः निश्चितो मुनिसत्तमैः॥

॥ आभास एव च ॥ 8

265 आभासा हेतवः सर्वे भवेयुरिति निश्चितम्। ब्रह्माभेदे तु जीवस्य तिरोधानादिकल्पने॥

॥ अदृष्टानियमात् ॥ 9

266 अदृष्टजोपाधिमूलब्रह्मजीवात्मकल्पनम्। अदृष्टानियमात्तेषां न सिद्ध्येदिति निश्चितम्॥

॥ अभिसन्ध्यादिष्वपि चैवम् ॥ 10

267 अभिसन्धेस्त्वदृष्टादि जायते चेति चेन्न हि। नियमस्त्वभिसन्ध्यादौ न वक्तुं शक्यते यतः॥

॥ प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ 11

268 अविद्योपहितो भागः जीवश्चेन्नियमोऽत्र न। उपाधीनां गतावन्त[ः]तोऽनुपहितो यतः॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां द्वितीयाध्यायस्य तृतीयः पादः॥

## ॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

61 प्राणोत्पत्त्यधिकरणम्। ॥ तथा प्राणाः ॥ 1

269 खादिवच्च त्विन्द्रियाणि ह्युत्पद्यन्ते परात्मनः। सृष्टेः पूर्वं स्थिताः प्राणा इति ब्रह्मपरं हि तत्॥

॥ गौण्यसंभवात् तत्प्राक्छ्रुतेश्च ॥ 2

270 प्राक्सृष्टेरेकमेवेति ब्रह्मैकपरिशेषणात्। प्राणा ऋषय इत्येषा गौणी बहुवचश्श्रुतिः॥

॥ तत्पूर्वकत्वाद्वाचः ॥ 3

271 तत्सृष्टिपूर्वकत्वाच्च नामधेयस्य वस्तुनः। प्राणशब्दैरिन्द्रियाणि ह्युच्यन्त इति निश्चितम्॥

62 सप्तगत्यधिकरणम्। ॥ सप्त गतेर्विशेषितत्वाच्च ॥ 1

272 चरन्ति सप्त सप्तेति गतिश्रुत्या विशेषणात्। ज्ञानानीति च सप्तैव त्विन्द्रियाणीति शङ्कते॥

॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ 2

273 स्थिते जीवे शरीरेऽत्र वाग्घस्ताद्युपकारतः। एकादश त्विन्द्रियाणीत्यतस्सप्तेति नैव हि॥

63 प्राणाणुत्वाधिकरणम्। ॥ अणवश्च ॥ 1

274 अणून्येवेन्द्रियाण्येतान्यनुत्क्रान्त्यादिभिः श्रुतैः। उपासार्थत्वनन्ता इत्येतानि गदितानि हि॥

॥ श्रेष्ठश्च ॥ 2

275 श्रेष्ठश्चोत्पद्यते प्राणस्त्वाकाशादिवदस्य च। एतस्माज्जायते प्राण इत्युत्पत्तिश्रुतेरिह॥

64 वायुक्रियाधिकरणम्। ॥ न वायुक्रिये पृथगुपदेशात् ॥ 1

276 पृथगुत्पत्तिवचनात् न वायुर्न च तत्क्रिया। विशेषं कंचनापन्नः वायुः प्राण इति स्थितम्॥

|| चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः || 2

277 वाय्ववस्थाभेद इति नायं भूतान्तरं भवेत् । इन्द्रियैस्सह शिष्ट्यादेः प्राणसंवदनादिषु ॥

|| अकरणत्वाच्च न दोषस्तथा हि दर्शयति || 3

278 अक्रियत्वात् दोष उक्तो यः प्राणस्य स नैव हि । शरीरादेर्धारणादिक्रियाधत्त्वेन कीर्तनात् ॥

|| पञ्चवृत्तिर्मनोवद्व्यपदिश्यते || 4

279 कामादिवृत्तिभेदेन मनः सङ्कीर्त्यते यथा । तथैकः पञ्चधा वृत्तेः प्राणापानादिरुच्यते ॥

65 श्रेष्ठाणुत्वाधिकरणम् । || अणुश्च || 1

280 प्राणोऽनूत्क्रामतीत्यादिश्रुत्या प्राणोऽप्यणुर्भवेत् । महत्त्वं शङ्कितं यत्तु तद्वैभवपरं भवेत् ॥

66 ज्योतिराद्यधिष्ठानाधिकरणम् । ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् || 1

281 ज्योतिरादिस्तु जीवेन सङ्कल्पात् परमात्मनः । इन्द्रियादेरधिष्ठातेत्येवं शब्दात् प्रमीयते ॥

|| तस्य च नित्यत्वात् || 2

282 परात्माधिष्ठितत्वस्य नित्यत्वाज्जगतां सताम् । अवर्जनीयसङ्कल्पादधिष्ठानं ततो भवेत् ॥

67 इन्द्रियाधिकरणम् । || त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् || 1

283 करणत्वेऽपि सर्वेषां श्रेष्ठादन्यत्र शंसनात् । इन्द्रियाणीति न श्रेष्ठ इन्द्रियं भवति त्वसौ ॥

|| भेदश्रुतेर्वैलक्षण्याच्च || 2

284 समनस्केन्द्रियेभ्योऽस्य भेदेनोत्पत्तिशंसनात् । सुषुप्तौ च प्राणवृत्तेः उपलब्ध्या विशेषतः ॥

68 संज्ञामूर्तिक्लृप्त्यधिकरणम् । || संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् || 1

285 चतुर्मुखतनोरेषा जगत्सृष्टिः परात्मनः । नामरूपादिकरणं त्रिवृत्कुर्वत एव हि ॥

|| मांसादि भौमं यथाशब्दमितरयोश्च || 2

286 श्रुते तु मांसमनसी भौमे चैवमबादिके । अन्नं चाशितमित्यादौ त्रिवृतां करणं न हि ॥

|| वैशेष्यात्तु तद्वादस्तद्वादः || 3

287 त्रिवृत्कृतेषु भूतेषु भूयस्त्वं यस्य वै भवेत् । तत्तद्वाचकशब्देन तत्तद्वस्तूच्यते बुधैः ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

इति श्रीमद्वेदमार्गेत्यादिविरुदावलीमेदुराणां श्रीमदहोबिलमठदिव्यास्थाने चतुरधिकचत्वारिंशत्संख्यासंख्यातपट्टाभिषेकपरिमण्डितानां श्रीवणशठकोप श्रीवेदान्तदेशिकयतीन्द्र महादेशिकानां कृतिषु ब्रह्मसूत्रार्थपद्यमालिकायां प्रथमाध्यायः ॥

## || अथ तृतीयाध्यायस्य प्रथमः पादः ||

69 तदन्तरप्रतिपत्त्यधिकरणम् । || तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् || 1

288 देहाद्देहान्तरप्राप्तौ आत्मा गच्छति सूक्ष्मकैः । भूतैरेव परिष्वक्तः प्रश्नप्रत्युक्तिदर्शनात् ॥

|| त्र्यात्मकत्वात्तु भूयस्त्वात् || 2

289 त्र्यात्मकत्वात्तु भूतानां त्रिवृत्करणतस्तथा । आधिक्यात् व्यपदेशः स्यात् नांभसा याति केवलम् ॥

|| प्राणगतेश्च || 3

290 इन्द्रियाणां तेन गतेः तदाधारतया तनोः । भूतसूक्ष्मशरीरेण गच्छतीति च गम्यते ॥

|| अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् || 4

291 अग्न्यादिषु गतिश्रुत्या जीवेन गमनं कथम् । तेषामिति न वक्तव्यं अभिमानिपरा हि सा ॥

|| प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः || 5

292 अपामश्रवणाद्धोमे प्रथमे नेति चेन्न हि । ते श्रद्धां जुह्वतीत्युक्ता ह्याप एवोपपत्तितः ॥

|| अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः || 6

293 अश्रुतत्वाच्च जीवस्य परिष्वङ्गः कथं च तैः । इति चेन्नात्र यज्ञादिकारिणां गमनश्रुतेः ॥

|| भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति || 7

294 तं देवा भक्षयन्तीति भक्षणं गौणमेव हि । अनात्मवित्त्वात् तेषां तु पशुतुल्यत्वकीर्तनात् ॥

70 कृतात्ययाधिकरणम् । || कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च || 1

295 कृतकर्मात्यये जीवः भुक्तावशिष्टेन कर्मणा । यथागतं चान्यथा चाप्यवरोहति शब्दतः ॥

|| चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः || 2

296 आचारवाचिचरणश्रुत्या कर्मात्र नेति चेत् । कर्मोपलक्षणार्थेति कार्ष्णाजिनिरिहाब्रवीत् ॥

|| आनर्थक्यमिति चेन्न तदपेक्षत्वात् || 3

297 आचारस्य स्वकार्यत्वे वैयर्थ्यमिति नेत्र हि । आचाराणामपेक्ष्यत्वात् कर्मणेति तु मन्यते ॥

|| सुकृतदुष्कृते एवेति तु बादरिः || 4

298 श्रुतौ चरणशब्देन पुण्यपापे च कर्मणी । साक्षादेवोदिते एवं बादरिर्मनुते मुनिः ॥

71 अनिष्टादिकार्यधिकरणम् । || अनिष्टादिकारिणामपि च श्रुतम् || 1

299 गच्छन्ति ते सर्वे इति श्रुत्याऽनिष्टादिकारिणाम् । अपि चान्द्रमसप्राप्तिः भवतीति विशङ्कते ॥

|| संयमने त्वनुभूयेतरेषां आरोहावरोहौ तद्गतिदर्शनात् || 2

300 चन्द्रारोहावरोहौ तु यातनां यमशासने । अनुभूयैवेतरेषामिति तद्गतिदर्शनात् ॥

|| स्मरन्ति च || 3

301 सर्वे चैव वशं यान्ति यमस्य भगवन् किल । इति स्मृत्या च तेषां तु यमवश्यत्वशंसनात् ॥

|| अपि सप्त || 4

302 सप्त चैषां रौरवादिलोका इति च गम्यते । यातनां त्वनुभूयाथो तत्रापि गतिरुच्यते ॥

|| तत्रापि तद्व्यापारादविरोधः || 5

303 यमस्य शासनादेव पापिनां यातना भवेत् । तत्रापि तत्स्मृतेरेवेत्यविरोधश्च शंकते ॥

|| विद्याकर्मणोरिति तु प्रकृतत्वात् || 6

304 अनिष्टादिकृतां नैव पितृयाणपथाद्गतिः । विद्यायाः सुकृतस्यापि फलं मार्गद्वयं श्रुतम् ॥

---

॥ तृतीये तथोपलब्धेः ॥ 7

305 तृतीयस्थानवाच्यानां पापिनां नैव विद्यते । पञ्चमाहुत्यपेक्षा तु नेति देहाय च श्रुतेः ॥

॥ स्मर्यतेऽपि च लोके ॥ 8

306 पुण्यकर्मवतां चापि केषां चिद् देहसम्भवे । पञ्चमाहुत्यपेक्षा न ; द्रौपद्यादिषु दृश्यताम् ॥

॥ दर्शनाच्च ॥ 9

307 पञ्चमाहुत्यभावेन जायस्वेत्यादिदर्शनात् । उद्भिज्जस्वेदजानां तु देहोत्पत्तिस्तथा भवेत् ॥

॥ तृतीयशब्दावरोधः संशोकजस्य ॥ 10

308 उद्भिज्जमिति शब्देन स्वेदजस्यापि संग्रहः । श्रुत्युक्तेन तृतीयेन ह्यण्डजाज्जीवजात्परम् ॥

72 तत्स्वाभाव्यापत्त्यधिकरणम् । ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ 1

309 अवरोहेऽस्य जीवस्य तत्तत्सादृश्यमात्रतः । वियद्भावादिवचनं न भोगायेति निश्चयात् ॥

73 नातिचिराधिकरणम् । ॥ नातिचिरेण विशेषात् ॥ 1

310 व्रीह्यादिभावे जीवस्य चिरनिर्गमनश्रुतेः । अन्यत्र त्वचिरेणैव ह्याग(निर्ग)गच्छति च चेतनः ॥

74 अन्याधिष्ठिताधिकरणम् । ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ 1

311 अन्याधिष्ठित एव स्यात् व्रीह्यादौ पूर्ववत् स्थितिः । अनुभाव्यान्तराभावात् मध्ये तद्भावरोहतः ॥

॥ अशुद्धमिति चेन्न शब्दात् ॥ 2

312 पश्वादिहिंसया स्वर्गे प्राप्तानां शिष्टकर्म च । अशुद्धमिति भोगश्चेत् न तत्, शुद्धमिति श्रुतेः ॥

॥ रेतः सिग्योगोऽथ ॥ 3

313 रेतः सिञ्चति तद्भूयो भवतीति श्रुतेरिह । रेतस्सिचा यथा योगो व्रीह्यादिषु तथा भवेत् ॥

॥ योनेः शरीरम् ॥ 4

314 योनिप्राप्तेः परस्ताद्धि शरीरं प्राप्यते पुनः । कर्मणामुपभोगाय यत्र तत्र च योनिषु ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां तृतीयाध्यायस्य प्रथमः पादः ॥

॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

75 सन्ध्याधिकरणम् । ॥ सन्ध्ये सृष्टिराह हि ॥ 1

315 स्वप्नस्थाने जीव एव सृजतीति च चोद्यते । सृजते स हि कर्तेति श्रुतिराह हि तत्र च ॥

॥ निर्मातारश्चैके पुत्रादयश्च ॥ 2

316 कामानां स्वप्नकाले स्यात् निर्माता जीव एव तु । वदन्त्येके शाखिनश्च पुत्रादीन् कामशब्दतः ॥

॥ मायामात्रं तु कात्स्न्येंनानभिव्यक्तस्वरूपत्वात् ॥ 3

317 स्वप्ने यत्सृष्टमाम्नातं तदिदं ब्रह्मणा कृतम् । आश्चर्यभूतं जीवे न सत्यसङ्कल्पता तदा ॥

॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ 4

318 अनादिकृतपापेन ब्रह्मसङ्कल्पतस्तदा । तिरोहितं सत्यतादि (तत्स्वरूपं) बन्धमोक्षौ ततोऽस्य हि ॥

॥ देहयोगाद्वा सोऽपि ॥ 5

319 तिरोभावो गुणानां तु सृष्टौ देहस्य योगतः । प्रळये प्रकृतेर्योगमात्रेणैव तथा भवेत् ॥

॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ 6

320 शुभादिसूचकः स्वप्न इति श्रुत्या हि दृश्यते । तद्विदां वचनाच्चैव न जीवस्यात्र कर्तृता ॥

76 तदभावाधिकरणम् । ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ 1

321 स्वप्नाभावः सुषुप्तिर्हि नाडीषु च पुरीतति । ब्रह्मण्यपि भवेत् तेषां सुषुप्तिस्थानताश्रुतेः ॥

॥ अतः प्रबोधोऽस्मात् ॥ 2

322 पर्यङ्कस्थानभूते तु सुषुप्तिर्ब्रह्मणीत्यतः । तस्मात्प्रबोध इत्यादिश्रुतिश्चाप्युपपद्यते ॥

77 कर्मानुस्मृतिशब्दविध्यधिकरणम् । ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ 1

323 न मुक्तिरेषा संपत्तिः आगच्छति स एव तु । कर्मानुस्मृतिशब्देभ्यः मोक्षोपायविधेः (घेरपि) पृथक् ॥

78 मुग्धाधिकरणम् । ॥ मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ 1

324 मरणायार्धसंपत्तिः मूर्छेति मरणेतरा । उत्थानाभावानियमाद्यभावात् परिशेषतः ॥

70 उभयलिङ्गाधिकरणम् । ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ 1

325 परस्य ब्रह्मणो दोषः स्थानतोऽपि न विद्यते । यतो निर्दोषकल्याणगुणतोभयलिङ्गता ॥

॥ भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ 2

326 अवस्थाभेदतो दोषः जीवस्येव परस्य चेत् । नैवं स्यात् तत्र तत्रैव ह्यमृतत्वश्रुतेर्बलात् ॥

॥ अपि चैवमेके ॥ 3

327 एकदेहस्थितस्यापि न भोक्तृत्वं परात्मनः । द्वा सुपर्णा इति श्रुत्याऽधीयते चैकशाखिनः ॥

॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ 4

328 शरीरस्थमपि ब्रह्म रूपाभाववदेव हि । नामरूपादिकरणे प्रधानत्वात्परात्मनः ॥

॥ प्रकाशवच्चावैयर्थ्यात् ॥ 5

329 यथा ज्ञानादिवाक्यस्यावैयर्थ्यात् स्वप्रकाशता । तथैव सत्यकामादिवाक्यावैयर्थ्यतो गुणी(णाः) ॥

॥ आह च तन्मात्रम् ॥ 6

330 प्रकाशरूपतामात्रं सत्यं ज्ञानमिति श्रुतिः । वदत्यन्यान् गुणांस्तांस्तु न निषेधति वै यतः ॥

॥ दर्शयति चाथो अपि स्मर्यते ॥ 7

331 निष्कलम्, मामनादिं च वेत्तीत्यादिश्रुतिस्मृती । ब्रह्म ह्युभयलिङ्गं तु वदतश्च विशेषतः ॥

॥ अत एव चोपमा सूर्यकादिवत् ॥ 8

332 सर्वत्रोभयलिङ्गत्वात् जलसूर्योपमा कृता । ब्रह्मणश्शास्त्रतश्चेति जलाधारेष्विवांशुमान् ॥

॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ 9

333 वस्त्वभावेऽप्यम्भसीवाग्रहणात् ब्रह्मणः स्थितेः । सर्वेषु वस्तुषु ब्रह्म सदोषमिति शङ्कते ॥

॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ 10

334 स्थानतो ह्रासवृद्ध्यादिभाक्त्वं चात्र निषिध्यते । आकाशसूर्यदृष्टान्तद्वयाञ्जस्याच्च लोकतः ॥

|| प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः || 11

335 प्रकृतैतावत्त्वमात्रं नेति नेति निषिध्यते । ततोऽधिकगुणाढ्यत्ववचनाद्ब्रह्मणस्त्विह ||

|| तदव्यक्तमाह हि || 12

336 ब्रह्मस्वरूपं केनापि प्रमाणेन न गृह्यते । एवं न पश्यतीत्यादिश्रुतिराह हि वाचन ||

|| अपि संराधने प्रत्यक्षानुमानाभ्याम् || 13

337 एकेन ध्यानयोगेन गृह्यते परमः पुमान् । यमेवैष इति श्रुत्या तथा स्मृत्या च गम्यते ||

|| प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् || 14

338 ध्यानकर्मणि चाभ्यासात् दर्शनं चोपजायते । ज्ञानानन्दाद्यवैशेष्यात् विभूतीनां च केषुचित् ||

|| अतोऽनन्तेन तथा हि लिङ्गम् || 15

339 अतोऽनन्तेन कल्याणगुणजातेन योगतः । परस्य स्वप्रकाशस्योभयं लिङ्गं समञ्जसम् ||

80 अहिकुण्डलाधिकरणम् । || उभयव्यपदेशात्त्वहिकुण्डलवत् || 1

340 जगतो ब्रह्मणा साकं द्वैताद्वैतोपदेशतः । पृथक्त्वं चाप्येकत्वमहिकुण्डलवद्भवेत् ||

|| प्रकाशाश्रयवद्वा तेजस्त्वात् || 2

341 प्रभायास्तद्वतश्चापि तेजस्त्वेन यथैकता । प्रपञ्चब्रह्मणोस्तद्वत् इति केषांचिदाशयः ||

|| पूर्ववद्वा || 3

342 एकजात्यादियोगाच्च नानयोरैक्यसंभवः । जीवस्येवाचेतनस्यापृथक्स्थित्यांशता हरेः ||

|| प्रतिषेधाच्च || 4

343 आत्माऽजरोऽमृत इति ह्यचिद्धर्मनिषेधतः । अपृथक्स्थितियोगेन तयोरंशांशिकल्पना ||

81 पराधिकरणम् । || परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः || 1

344 सेतून्मानाप्तिसम्बन्धभेदानां व्यपदेशतः । ब्रह्मणः परमेव स्यात् प्राप्यं पूर्णं तु कूलवत् ||

|| सामान्यात्तु || 2

345 सेतुशब्दस्ततस्त्वन्यत् सूचयेन्नात्र किञ्चन । सेतुसाम्याद्विधरणात् शब्दोऽयं ब्रह्मवाचकः ||

|| बुद्ध्यर्थः पादवत् || 3

346 चतुष्पादादि चोन्मानं त्वत्र वाक्पादवद्भवेत् । उपासार्थमनन्तस्य नातोऽन्यत् परमिष्यते ||

|| स्थानविशेषात् प्रकाशादिवत् || 4

347 अवच्छिद्यानुसन्धानं तत्तत्स्थानविशेषतः । प्रकाशाकाशयोर्यद्वत् वातायनघटादिषु ||

|| उपपत्तेश्च || 5

348 अमृतस्यैष सेतुः स्यात् परं ब्रह्मामृतस्य च । स्वस्यैव प्राप्तये हेतुरतः सम्बन्धसङ्गतिः ||

|| तथाऽन्यप्रतिषेधात् || 6

349 कश्चिज्ज्यायो नास्ति चेति श्रुत्या च प्रतिषेधतः । ततो यदुत्तरतरमिति ब्रह्मैव चोच्यते ||

|| अनेन सर्वगतत्वमायामशब्दादिभ्यः || 7

350 ब्रह्मणाऽनेन सर्वस्य व्याप्यत्वमवगम्यते । सर्वव्याप्त्यर्थकैः शब्दैः पूर्णमित्यादिकैरिह ||

82 फलाधिकरणम् । ॥ फलमत उपपत्तेः ॥ 1

351 पारत्रिकं चैहिकं च फलं सर्वमतो भवेत् । परस्मादेव पुरुषात् क्षणध्वंसि हि कर्म तत् ॥

॥ श्रुतत्वाच्च ॥ 2

352 अन्ना(न्न)दो वसुदानोऽथानन्दयातीति वाक्यतः । भोगापवर्गमुभयं ब्रह्मैवैतद्ददाति हि ॥

॥ धर्मं जैमिनिरत एव ॥ 3

353 उपपत्तेः श्रुतत्वाच्च फलदो धर्म एव हि । अपूर्वद्वारतश्चेति जैमिनिर्मनुते मुनिः ॥

॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ 4

354 पूर्वोक्तं फलदातृत्वं मनुते बादरायणः । तत्तच्छरीरकस्यैव ब्रह्मणस्त्विति शब्दतः ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥

83 सर्ववेदान्तप्रत्ययाधिकरणम् । ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ 1

355 वेदान्तेषु च सर्वेषु प्रतीतं तत्र तत्र च । दहरादिध्यानमेकं विधिसंज्ञाद्यभेदतः ॥

॥ भेदान्नेति चेदेकस्यामपि ॥ 2

356 अविशेषपुनःश्रुत्या विद्यैक्यं नेति चेन्न हि । एकस्यामपि विद्यायां श्रोतृभेदात्पुनःश्रुतिः ॥

॥ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ 3

357 समाचारेऽतिदेशाच्च स्वाध्यायार्थं शिरोव्रतम् । सवहोमो यथैकाग्नौ न त्रेताग्निषु विद्यते ॥

॥ दर्शयति च ॥ 4

358 गुणाद्युक्तं यच्छान्दोग्ये यजुष्यन्तरिदं मतम् । विद्यैक्यं श्रुतिराहातो दहयोरुभयोरपि ॥

॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ 5

359 उपासने समाने च ह्युपकारा शेषतः । गुणानामुपसंहारस्त्वेकस्मिन्विधिशेषवत् ॥

84 अन्यथात्वाधिकरणम् ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ 1

360 उद्गातरि च तत्कर्मण्यध्यासस्य विधानतः । विद्यैक्यं नेति चेन्नैवं ह्यविशेषादुपक्रमे ॥

॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ 2

361 नैवं कृत्स्नोद्गीथ एतदंशे च विधिभेदतः । परोवरीयस्त्ववच्च विद्याभेद इहोच्यते ॥

॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ 3

362 नोद्गीथोपासनमिति नामैक्यादेकतामित्यपि । कुण्डपाय्यग्निहोत्रे च नित्ये चास्त्येकनाम हि ॥

॥ व्याप्तेश्च समञ्जसम् ॥ 4

363 औपक्रमात्तु सर्वत्र व्याप्त्या प्रणव एव हि । उपास्यत्वेनोच्यतेऽतश्छान्दोग्ये तत् समञ्जसम् ॥

85 सर्वाभेदाधिकरणम् । ॥ सर्वाभेदादन्यत्रेमे ॥ 1

364 कौषीतक्यां (कि) प्राणबुद्धावन्यरीत्यविशेषतः । अन्यत्रोक्तवसिष्ठत्वादिकमप्यत्र चिन्त्यताम् ॥

86 आनन्दाद्यधिकरणम् । ॥ आनन्दादयः प्रधानस्य ॥ 1

365 आनन्दादिगुणास्सर्वत्र स्वरूपस्य निरूपकाः । सर्वविद्यास्वनुगताः प्रधानस्याविभेदतः ॥

॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ 2

366 ध्याने प्रियशिरस्त्वादेरप्राप्तिः सर्वदा भवेत् । शिरःपक्षादिभेदे चोपचयापचयौ ध्रुवम् ॥

॥ इतरे त्वर्थसामान्यात् ॥ 3

367 आनन्दादिगुणैर्ब्रह्मस्वरूपस्य निरूपणात् । ब्रह्मस्वरूपसाम्याच्च तेऽनुवृत्ता इति स्थितम् ॥

॥ आध्यानाय प्रयोजनाभावात् ॥ 4

368 उपासनार्थमेवेदं रूपणं क्रियते तथा । प्रयोजनान्तराभावात् तस्माद् ब्रह्मगुणानते ॥

॥ आत्मशब्दाच्च ॥ 5

369 आत्माऽऽनन्दमयश्चेति श्रौतादेवात्मशब्दतः । शिरआदेरभावाच्चाप्यात्मनो रूपणं हि तत् ॥

॥ आत्मगृहीतिरितरवदुत्तरात् ॥ 6

370 आनन्दमय आत्मेति ह्यात्मशब्दात्परग्रहः । सङ्कल्पादुत्तरादत्र आत्मेत्याद्यात्मशब्दवत् ॥

॥ अन्वयादिति चेत्स्यादवधारणात् ॥ 7

371 अनात्मन्यात्मशब्दस्यान्वयादिति न, सर्वतः । एतस्मादात्मन इति परस्यैवावधारणात् ॥

78 कार्याख्यानाधिकरणम् । ॥ कार्याख्यानादपूर्वम् ॥ 1

372 पूर्वाप्राप्तं प्राणवासस्त्वानुध्यानं विधीयते । अपाम् , आचमनं नात्र विधेरप्राप्तबोधनात् ॥

88 समानाधिकरणम् । ॥ समान एवञ्चाभेदात् ॥ 1

373 मनोमयत्वादितौल्ये चैक्यं शाण्डिल्यविद्ययोः । सत्यसङ्कल्पताया हि विततिर्वशितादयः ॥

89 सम्बन्धाधिकरणम् । ॥ सम्बन्धादेवमन्यत्रापि ॥ 1

374 आदित्येऽक्षणि संबन्धाद्विद्यैक्यान्नामनी उभे । यथेच्छमुपसंहार्ये शाण्डिल्योपासने यथा ॥

॥ न वा विशेषात् ॥ 2

375 न विद्यैक्यमिहाप्यस्ति रूपे चास्याः विशेषतः । तत्तत्स्थानविशिष्टस्य परस्योपासनादिह ॥

॥ दर्शयति च ॥ 3

376 आदित्येऽक्षणि भिन्नत्वादतिदेशो हि दृश्यते । तदेव रूपमित्येवमप्रासक्त्य हि युज्यते ॥

90 सम्भृत्यधिकरणम् । सम्भृतिद्युव्याप्त्यपि चातः ॥ 1

377 द्युव्याप्तिः संभृतिश्चापि स्वल्पस्थानासु नैव हि । उपास्ये इति सर्वत्र न विद्यास्वन्वयस्तयोः ॥

91 पुरुषविद्याधिकरणम् । ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ 1

378 छान्दोग्यस्था तु पुरुषविद्याऽन्या तैत्तिरी यतः । इतरेषां गुणानां च ह्यनाम्नानात् फलस्य च ॥

92 वेधाद्यधिकरणम् । ॥ वेधाद्यर्थभेदात् 1

379 शन्न इत्यादिमन्त्राणां विद्यांगत्वं न विद्यते । यथा शुक्रश्रुतौ वेधाद्यर्थभेदादनंगता ॥

93 हान्यधिकरणम् । ॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युप-
गानवत् तदुक्तम् ॥ 1

380 उपायनादिशब्दस्य हान्यादिपदशेषता । सर्वत्रोभयचिन्ताऽतः कुशाच्छन्दादिवद्भवेत् ॥

94 साम्परायाधिकरणम् । ॥ साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ 1

381 देहादुत्क्रान्तिकाले तु पुण्यपापविमोचनम् । भोगाद्यभावान्मध्ये च तथा ह्यन्येऽप्यधीयते ॥

॥ छन्दत उभयाविरोधात् ॥ 2

382 निश्चिते ह्यानिकाले चोभयश्रुत्यविरोधतः । धूननाद्यर्थवाक्यस्यच्छन्दतोऽन्वय उच्यते ॥

॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ 3

383 उभयत्र क्षये चैव संभवोऽस्ति गतेः पथि। अन्यथा चेत्, विरोधस्स्यात् देवयाने गतिश्रुतेः ॥

॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ 4

384 कर्माभावेऽपि सूक्ष्मेण संभवेत् वपुषा गतिः । एकधेत्युपलब्धेश्च सस्यायेव सरांसि च ॥

॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ 5

385 अधिकारे नियुक्तानां स यावद्वर्तेतेऽत्र हि । अवस्थितिस्तावदिति वसिष्ठादेर्न मध्यतः ॥

95 अनियमाधिकरणम् । ॥ अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ 1

386 सर्वेषामविशेषेण ह्यर्चिरादिकया गतिः । श्रुतिस्मृत्यविरोधाय निश्चिता मुनिसत्तमैः ॥

96 अक्षरध्यधिकरणम् । अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ 1

387 सर्वत्रास्थूलतादीनां संग्रहो ब्रह्मणोऽन्वयात् । अन्तर्भावाच्चौपसदनीत्या, सा पूर्वकाण्डगा ॥

॥ इयदामननात् ॥ 2

388 एतावद्गुणजातस्य सर्वविद्यासु संग्रहः । येनैव (यावता) गुणजातेन विना न ग्रहणं विभोः ॥

97 अन्तरत्वाधिकरणम् । ॥ अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ 1

389 सर्वान्तरस्तु जीवात्मा प्रत्युक्तेश्च विभेदतः । मैवं स पर इत्येव सद्विद्यावत् प्रतीयते ।

॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ 2

390 सद्विद्यावच्च सर्वत्र परमात्मविशेषणात् । परस्परं व्यतीहारस्सवत्रोपस्तकहोळयोः ॥

॥ सैव हि सत्यादयः ॥ 3

391 सत्यादीनां तु सर्वत्र प्रत्युक्तौ संग्रहो यतः । सैषा परा देवतैव सद्विद्याप्रतिपादिता ॥

98 कामाद्यधिकरणम् । ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ 1

392 विद्ययोरुभयोः सत्यकामत्वादिगुणान्वयात् । फलेस्थानाद्यैक्यतश्च विद्यैका दहराभिधा ॥

॥ आदरादलोपः ॥ 2

393 वशित्वादिगुणानां तु वेदनं श्रुतिभिर्विना । न भवेदित्यादराच्च ध्येयत्वं त्याज्यता न हि ॥

॥ उपस्थितेऽतस्तद्वचनात् ॥ 3

394 ब्रह्मप्राप्तेस्तु जीवेऽतः पितृलोकादिकं फलम् । भवतीत्यादिवचनात् न तत्सांसारिकं फलम् ॥

99 तन्निर्धारणानियमाधिकरणम् । ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ 1

395 कर्मण्युद्गीथविद्यायाः नियमो नास्ति दर्शनात् । प्रतिबन्धनिवृत्तिर्हि तत्फलं पृथगुच्यते ॥

100 प्रदानाधिकरणम् । ॥ प्रदानवदेव तदुक्तम् ॥ 1

396 आवृत्तिः करणीयैव दहरस्य गुणैस्सह । इन्द्रायेति पुरोडाशप्रदाने निश्चितं यथा ॥

101 लिङ्गभूयस्त्वाधिकरणम् । ॥ लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ 1

397 सहस्रशीर्षमित्यादि सर्वविद्यानुयायि च । वाक्यभूम्ना प्रकरणात् तत् बलीयस्तथोक्तितः ॥

102 पूर्वविकल्पाधिकरणम् । ॥ पूर्वविकल्पः प्रकरणात्स्यात् क्रिया मानसवत् ॥ 1

398 प्रक्रियातो मनश्चित्तु क्रियामयमखान्वयी । विकल्पश्चेष्टकचितवह्निना मानसं यथा ॥

॥ अतिदेशाच्च ॥ 2

399 यावानसौ पूर्व इति ह्यतिदेशाद्विकल्पतः । मनश्चिदादेस्तत्तुल्यः क्रियामयमखान्वयः ॥

॥ विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ 3

400 मनश्चिदपि विद्यैव(द्यायै) दशनादवधारणात् । ते विद्याचित एवेति मनसैषु ग्रहा इति ॥

॥ श्रुत्यादिवलीयस्त्वाच्च न बाधः ॥ 4

401 प्रक्रियातो बलीयस्त्वाच्छ्रुतेरस्मिन् प्रघट्टके । बाधो विद्यामयमखस्यान्वये न भवेद्ध्रुवम् ॥

॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ 5

402 क्रियामयात्पृथगयं पृथक्स्तोत्रादितः श्रुतेः । दहरादिभेदवद्दृष्टोऽनुवादेऽपि विधिर्ननु ॥

॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ 6

403 ऐकदेश्यं नातिदेश्यमन्यथाऽप्युपपत्तितः । न तल्लोकस्थितिस्सूर्ये ह्येष मृत्युरिति श्रुतौ ॥

॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ 7

404 उत्तरेण ब्राह्मणेन वाचो विद्यामयान्वयः । अग्न्यंगानां च भूयस्त्वात्संबन्धोऽग्निरहस्यके ॥

103 शरीरे भावाधिकरणम् । ॥ एक आत्मनः शरीरे भावात् ॥ 1

405 आत्मनः कर्तृतायुक्तं स्वरूपं ध्येयमिष्यते । शरीरे वर्तमानस्य तथा भावादितीतरे ॥

॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ 2

406 नैवं वाच्यमसंसारिरूपमेव हि भावयेत् । यथोपास्तिफलावाप्तेर्ब्रह्मध्यानोक्तिर्नीतितः ॥

104 अंगावबद्धाधिकरणम् । ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ 1

407 क्रत्वंगमाश्रिताश्चैताः न शाखासु व्यवस्थिताः । उद्गीथोपासनाः सर्वशाखास्वपि च संगताः ॥

॥ मन्त्रादिवद्वाऽविरोधः ॥ 2

408 क्रत्वङ्गभूतमन्त्रादेः एकशाखोदितस्य च । सर्वशाखासु संबन्ध इवात्राप्यविरोधितः ॥

105 भूमज्यायस्त्वाधिकरणम् । ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ 1

409 वैश्वानरे समस्तस्य ज्यायस्त्वं क्रतुवद्भवेत् । व्यस्तस्य मूर्धा त इति निषेधं श्रुतिराह हि ॥

106 शब्दादिभेदाधिकरणम् । ॥ नानाशब्दादिभेदात् ॥ 1

410 शब्दान्तराभ्याससंख्यागुणप्रकरणान्तरैः । नामधेयेन चाप्यत्र विद्या नानेति निश्चितम् ।

107 विकल्पाधिकरणम् । ॥ विकल्पोऽविशिष्टफलत्वात् ॥ 1

411 उपासके विकल्पः स्यात् विद्यानां न समुच्चयः । विद्यान्तरस्य वैफल्यात्तुल्यानन्तफलत्वतः ॥

॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ 2

412 तथाऽनन्तफलाभावात् फलाधिक्येच्छया क्वचित् । काम्यानां तु समुच्चित्य
विकल्पाद्वाप्यनुष्ठितिः ॥

108 यथाश्रयभावाधिकरणम् । ॥ अङ्गेषु यथाश्रयभावः ॥ 1

413 उद्गीथादिष्वाश्रितानामुपास्तीनां यथाश्रयम् । क्रत्वङ्गभावो गोदोह इव तत्र फलाश्रुतेः ॥

॥ शिष्टेश्च ॥ 2

414 तमुद्गीथमुपासीतेत्येवं तत्र विधानतः । क्रत्वङ्गत्वप्रतीत्या च तदुपादाननित्यता ॥

॥ समाहारात् ॥ 3

415 अन्येन च समाधानमुद्गीथस्यानुपासने । ब्रुवती च श्रुतिर्मानं नियमेन तदन्वये ॥

॥ गुणसाधारण्यश्रुतेश्च ॥ 4

416 ओमित्युद्गायतीत्यादिश्रुत्या तु प्रणवं प्रति । गुणभूतोपासनस्य सर्वत्रान्वयदर्शनात् ॥

॥ न वा तत्सहभावाश्रुतेः ॥ 5

417 उपासनस्यानियमः क्रत्वङ्गत्वाश्रुतेरिह । यदेव विद्ययेत्यादिफलान्तरविधानतः ॥

॥ दर्शनाच्च ॥ 6

418 उपासनस्यानियमं दर्शयत्येव वेदवाक् । यदेवंविद्ध्वै ब्रह्मेत्युक्तो ब्रह्मैव वित्तिमान् ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां तृतीयाध्यायस्य तृतीयः पादः ॥

## ॥ अथ तृतीयाध्यायस्य चतुर्थः पादः ॥

109 पुरुषार्थाधिकरणम् । ॥ पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ 1

419 पुरुषार्थं तु विद्यातः मन्यते बादरायणः । ब्रह्मवित्परमाप्नोतीत्यादिस्पष्टार्थशब्दतः ॥

॥ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ 2

420 विद्यायाः कर्मशेषत्वात् स्तुतिमात्रं फलश्रुतिः । यथा हि द्रव्यसंस्कारकर्मस्विति तु जैमिनिः ॥

॥ आचारदर्शनात् ॥ 3

421 यक्ष्यमाणो ह वै चेति ह्याचारस्यापि दर्शनात् । विद्यायाः कर्मशेषत्वं भवतीति च चोद्यते ॥

॥ तच्छ्रुतेः ॥ 4

422 यदेव विद्यया चेति स्पष्टश्रुत्याऽपि कर्मसु । विनियोगाच्च विद्यायाः कर्माङ्गत्वं तु सिध्यति ॥

॥ समन्वारम्भणात् ॥ 5

423 तं विद्याकर्मणी चेति ह्येकस्मिन् कर्मविद्ययोः । साहित्यदर्शनाच्चापि विद्यायाः कर्मशेषता ॥

॥ तद्वतो विधानात् ॥ 6

424 गुरोर्वेदमधीत्येति श्रुत्या विद्यावतस्त्विह । कर्मानुष्ठानविधितः कर्माङ्गं वेदनं भवेत् ॥

॥ नियमात् ॥ 7

425 कुर्वन्नेवेह कर्माणीत्यात्मवित्पुरुषस्य हि । आयुषो नियमात्कर्मण्यतस्स्यात्कर्मशेषता ॥

॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ 8

426 विद्यातः पुरुषार्थस्तु बादरायणसंमतः । जीवाधिकपरस्यैव वेद्यत्वाच्च तथा श्रुतेः ॥

॥ तुल्यं तु दर्शनम् ॥ 9

427 प्रधानत्वेऽपि विद्यायाः तुल्यमाचारदर्शनम् । यक्ष्यमाणो ह वै चेति विद्याङ्गत्वात् सुसङ्गतम् ॥

|| असार्वत्रिकी || 10

428 न सर्वविद्याविषया यदेवेति श्रुतिर्हि सा । उद्गीथविषयैवेति विद्याया नाङ्गता भवेत् ॥

|| विभागश्शतवत् || 11

429 पृथक्स्वस्वफलायैते पुरुषं ह्यनुगच्छतः । क्षेत्रार्थं चापि रत्नार्थं द्विशतोक्तौ यथा भवेत् ॥

|| अध्ययनमात्रवतः || 12

430 श्रुतिर्वेदमधीत्येति विद्यावत्पुरुषं न हि । केवलोधीतिनं प्राह नातः कर्माङ्गता मता ॥

|| नाविशेषात् || 13

431 विद्वत्स्वेवेति नियमः कर्मणो नाविशेषतः । अङ्गत्वेन फलार्थं वा चोपपत्तिर्हि दृश्यते ॥

|| स्तुतयेऽनुमतिर्वा || 14

432 कुर्वन्नेवेह कर्माणीत्यत्रापि स्तुतये भवेत् । कर्मानुमतिरेवेति नाङ्गं विद्या तु कर्मणः ।

|| कामकारेण चैके || 15

433 प्रजया किं करिष्यामः इति गार्हस्थ्यकर्मणाम् । कामकारेण चैके तु त्यागमिच्छन्ति शाखिनः ॥

|| उपमर्दं च || 16

434 क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । इत्येवं कर्मणां नाशो विद्ययेति च दर्शनात् ॥

|| ऊर्ध्वरेतस्सु च शब्दे हि || 17

435 ऊर्ध्वरेतस्सु विद्याया दर्शनात् तत्र कर्मणाम् । अभावाच्चापि नाङ्गत्वं शब्दे तेऽप्याश्रमाः स्थिताः॥

|| परामर्शं जैमिनिरचोदनाचापवदति हि || 18

436 धर्मस्कन्धेष्ववैधत्वाम् स्तुत्यर्थं तस्य जैमिनिः । अनुवादं तु मनुते वीरहेत्यपवादतः ॥

|| अनुष्ठेयं बादरायणस्साम्यश्रुतेः || 19

437 गृहस्थाश्रमसाम्याचाप्यनुष्ठेयं बुधैरिह । अन्याश्रमं श्रुतिश्चाह धर्मस्कन्धास्त्रयस्त्विति ॥

|| विधिर्वा धारणवत् || 20

438 धर्मस्कन्धास्त्रय इति विधिरेवोर्ध्वरेतसाम् । यथोपरिहिदेवेभ्य इति धारणकर्मणः ।

110 स्तुतिमात्राधिकरणम् । स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् || 1

439 उद्गीथोक्ते रसतम इति तत्स्तुतिरेव हि । इति चेन्न ह्यपूर्वत्वात् दृष्टिरेव विधीयते ॥

|| भावशब्दाच्च || 2

440 उपासीतोद्गीथमिति तत्रैव विधिशब्दतः । स्तुतिमात्रं न चैव स्यात् दृष्टिरेव विधीयते ॥

111 पारिप्लवार्थाधिकरणम् । || पारिप्लवार्था इति चेन्न विशेषितत्वात् || 1

441 प्रतर्दनो ह वै चेति स्युराख्यानानि यानि च । तानि पारिप्लवार्थानीति चेन्नान्यनियन्त्रणात् ॥

|| तथा चैकवाक्योपबन्धात् || 2

442 विद्याविध्येकवाक्यत्वसंबन्धाच्चापि केवलम् । सोऽरोदीदितिवच्चापि विद्याविध्यर्थता मता ॥

112 अग्नीन्धनाद्यधिकरणम् । || अत एव चाग्नीन्धनाद्यनपेक्षा || 1

443 विद्यावत्त्वश्रुतेरेव विद्या स्यादूर्ध्वरेतसाम् । अग्न्याधानादिरहितेत्यवगन्तुं च शक्यते ॥

113 सर्वापेक्षाधिकरणम् । || सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् || 1

444 कर्मवत्सु गृहस्थेषु सर्वापेक्षा हि सा भवेत् । यज्ञेनेति श्रुतेरेव गमनायाऽऽदृताश्ववत् ॥

114 शमदमाद्यधिकरणम् । ॥ शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ 1

445 कर्मसु व्यापृतोऽपि स्यात् शान्तिदान्त्यादिभिर्युतः । विद्याङ्गताविधानाच्चाप्यनुष्ठेयत्वदर्शनात् ॥

115 सर्वान्नानुमत्यधिकरणम् । ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ 1

446 सर्वान्नानुमतिः प्राणविदः प्राणात्यये भवेत् । ब्रह्मविद्यावतां चापि तथैवान्यत्र दर्शनात् ॥

॥ अबाधाच्च ॥ 2

447 आहारशुद्धाविति च शुद्धाहारविधेर्बलात् । अबाधाय च तस्यापि तत्प्राणात्यय इष्यते ॥

॥ अपि स्मर्यते ॥ 3

448 प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । इति स्मृत्याऽपि तेषां वै परमापदि चोच्यते ॥

॥ शब्दश्चातोऽकामकारे ॥ 4

449 सुरां तु न पिबेच्चेति शब्दश्चापि निषेधति । कामकारं सुरापानं ततः प्राणात्यये स्मृतम् ॥

116 विहितत्वाधिकरणम् । ॥ विहितत्वाच्चाश्रमकर्मापि ॥ 1

450 यावज्जीवमिति श्रुत्या केवलाश्रमिणामपि । अनुष्ठेयानि कर्माणि विहितत्वाद्भवन्ति हि ॥

॥ सहकारित्वेन च ॥ 2

451 विद्योत्पत्त्युपकारेण सहकारितया च तत् । अनुष्ठेयं कर्म सर्वमिति श्रुत्याऽपि दर्शितम् ॥

॥ सर्वथापि त एवोभयलिङ्गात् ॥ 3

452 यज्ञादेरुभयत्रैव विनियोगेऽपि नो भिदा । उभयत्र तदेवेति प्रत्यभिज्ञानलिङ्गतः ॥

॥ अनभिभवश्च दर्शयति ॥ 4

453 धर्मेण पापमित्यादिश्रुतिर्विविधपाप्मभिः । विद्याया अभिभूतत्वं धर्मवार्यं ब्रवीति च ॥

117 विधुराधिकरणम् । ॥ अन्तरा चापि तु तद्दृष्टेः ॥ 1

454 अनाश्रमाणामपि च ब्रह्मविद्या विधीयते । रैक्वभीष्मादिकानां तु विद्यानिष्ठत्वदर्शनात् ॥

॥ अपि स्मर्यते ॥ 2

455 जप्येनापि च संसिद्ध्येत् इति स्मृत्या च तेष्वपि । विद्यायाश्चापि संसिद्धेरधिकारो भवेदिति ॥

॥ विशेषानुग्रहश्च ॥ 3

456 आश्रमानुक्तधर्मेण विद्यानुग्रहदर्शनात् । तपसा ब्रह्मचर्येण विद्यया चेति च श्रुतेः ॥

॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ 4

457 अनाश्रमित्वादितरत् ज्यायो धर्मेण भूयसा । अनाश्रमी न तिष्ठेत्तु दिनमेकमिति स्मृतेः ॥

118 तद्भूताधिकरणम् । ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ 1

458 नातद्भावो नैष्ठिकस्य पुनर्नैयादिति श्रुतेः । नियन्त्रणाच्च तद्रूपाभावेभ्य इति जैमिनिः ॥

॥ न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ 2

459 अधिकारानुरूपं च प्रायश्चित्तं न विद्यते । आरूढो नैष्ठिकमिति स्मृत्या च तदभावतः ॥

॥ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ 3

460 उपपातकमाहुस्तत् प्रायश्चित्तं तु विद्यते । मधुभोजनतुल्यत्वात् तेषां विद्या तु वर्तताम् ॥

॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ 4

461 पातकित्वेऽप्युभयथा बहिर्मृतास्तु ते सदा । आचाराच्चापि दृश्यन्ते शुद्धा अपि च निष्कृतेः ॥

119 स्वाम्यधिकरणम् । ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ 1

462 उद्गीथोपासनं चात्र यजमानस्य युज्यते । कर्तर्येव फलश्रुत्येत्यात्रेयो दहरादिवत् ॥

॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ 2

463 ऋत्विग्भिः कार्यमित्येव ह्यौडुलोमिमुनेर्मतम् । साङ्गानुष्ठितये चैव तेषां वरणमिष्यते ॥

120 सहकार्यन्तरविध्यधिकरणम् । ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ 1

464 यज्ञदानादिवन्मौनं विद्यावत्सु विधीयते । प्रकृष्टं मननं शब्दाद्बाल्यपाण्डित्ययोः परम् ॥

॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ 2

465 गृहिणा चोपसंहारः स खल्वेवमिति श्रुतौ । सर्वेषामपि विद्याया भावात्तेषां च लक्षकः ॥

॥ मौनवदितरेषामप्युपदेशात् ॥ 3

466 मुनौ भैक्षादिनिर्देशोऽप्यन्येषामुपलक्षकः । यज्ञादीनां च धर्माणां उपदेशादिति स्थितम् ॥

121 अनाविष्काराधिकरणम् । ॥ अनाविष्कुर्वन्नन्वयात् ॥ 1

467 अनाविष्करणं स्वस्य महिम्नो बाल्यमुच्यते । विद्यया चान्वयात्तस्य तथान्यस्याप्यनन्वयात् ॥

122 ऐहिकाधिकरणम् । ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ 1

468 अप्रस्तुते प्रतीघाते तदैव ध्यानमैहिकम् । अन्यथा त्वन्यदैवेति ध्यानोत्पत्तावनिर्णयः ॥

123 मुक्तिफलाधिकरणम् । ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ 1

469 एवं मुक्त्यर्थविद्याया उत्पत्तावप्यनिर्णयः । ब्रह्मनिष्ठापचारादेरभावे तदवस्थितेः ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥

इति श्रीमद्वेदमार्गेत्यादिविरुदावळीमेदुराणां श्रीमदहोबिलमठदिव्यास्थाने चतुरधिकचत्वारिंशत्संख्यासंख्यातपट्टाभिषेकपरिमण्डितानां श्रीवण्शठकोप श्रीवेदान्तदेशिकयतीन्द्रमहादेशिकानां कृतिषु ब्रह्मसूत्रार्थपद्यमालिकायां तृतीयाध्यायः ॥

## ॥ अथ चतुर्थाध्यायस्य प्रथमः पादः ॥

124 आवृत्त्यधिकरणम् । ॥ आवृत्तिरसकृदुपदेशात् ॥ 1

470 आवृत्तमसकृच्चैव वेदनं सफलं भवेत् । ध्यानपर्यायशब्देन वेदनस्योपदेशतः ॥

॥ लिङ्गाच्च ॥

471 तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा । इति स्मृत्याऽपि चावृत्तमसकृद्वेदनं भवेत् ॥

125 आत्मत्वोपासनाधिकरणम् । ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ 1

472 आत्मेत्येव परं ध्येयमुपगच्छन्त्युपासकाः । त्वं वा अहमिति श्रुत्या स त आत्मेति बोधनात् ॥

126 प्रतीकाधिकरणम् । ॥ न प्रतीके न हि सः ॥ 1

473 नात्मत्वेन प्रतीकेषु ध्यानं कार्यं विचक्षणैः । उपासितुः प्रतीको हि नैवात्मा मनआदिकः ॥

॥ ब्रह्मदृष्टिरुत्कर्षात ॥ 2

474 मनआदौ ब्रह्मदृष्टिः युक्ताऽस्योत्कर्षतो भवेत् । राजदृष्टिस्तु भृत्ये हि फलायाभ्युदयाय च ॥

127 आदित्यादिमत्यधिकरणम् ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ 1

475 उद्गीथेषु च कर्माङ्गेष्वादित्यादेर्मतिर्भवेत् । आदित्यादिर्हि चोद्गीथात् उत्कृष्टो भवतीत्यतः ॥

128 आसीनाधिकरणम् । ॥ आसीनस्सम्भवात् ॥ 1

476 आसीनो वेदनं कुर्यात् आसीनस्यैव संभवात् । एकाग्रता तु मनसः नान्यथा संभवेदिह ॥

॥ ध्यानाच्च ॥ 2

477 निदिध्यासनशब्देन ध्यानरूपत्वबोधनात् । उपासनस्य च सदा चित्तैकाग्र्यमपेक्षितम् ॥

॥ अचलत्वं चापेक्ष्य ॥ 3

478 निश्चलत्वं तु संप्रेक्ष्य पर्वतादिषु दृश्यते । ध्यानवाचोयुक्तिरिति ह्यासीनस्यैव तद्भवेत् ॥

॥ स्मरन्ति च ॥ 4

479 तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । इति स्मृत्यापि चैकाग्र्यमुपास्तौ हि विधीयते ॥

॥ यत्रैकाग्रता तत्राविशेषात् ॥ 5

480 यत्रैकाग्र्यं भवेत्तत्र ह्युपासनमिहोच्यते । मनोनुकूलं इत्येतद्वाक्यादेवाविशेषतः ॥

129 आप्रयाणाधिकरणम् ॥ आप्रयाणात् तत्रापि हि दृष्टम् ॥ 1

481 उपासनं तदावृत्तमाप्रयाणात् प्रतीयते । आवर्तनीयमित्येव स खल्वेवमिति श्रुतेः ॥

130 तदधिगमाधिकरणम् । ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ 1

482 विद्याप्राप्तौ तु तच्छक्त्या ह्यघयोः परपूर्वयोः । न श्लिष्यते प्रदूयन्त इत्यश्लेषविनाशिता(ते) ॥

131 इतराधिकरणम् । ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ 1

483 पुण्यस्यापि भवेदेवमश्लेषश्च विनाशिता । विद्यार्थानां तु पुण्यानां शरीरपतनात्परम् ॥

132 अनारब्धकार्याधिकरणम् । ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ 1

484 अप्रवृत्तफले एव विद्ययाऽत्र विनश्यतः । तस्य तावच्चिरमिति प्रारब्धस्यावधेः श्रुतेः ॥

133 अग्निहोत्राद्यधिकरणम् । ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ 1

485 अग्निहोत्रादि विदुषा कर्तव्यं यावदायुषम् । विद्याख्यकार्यवृद्ध्यर्थं यज्ञेनेत्यादिदर्शनात् ॥

॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ 2

486 साधुकृत्यां सुहृद इत्युभयोः पुण्यकर्मणोः । अन्यापि प्रतिबद्धा च साधुकृत्या भवेदिति ॥

॥ यदेव विद्ययेति हि ॥ 3

487 यदेव विद्यया चेति श्रुत्या तदपि सूच्यते । विद्याविहीनाः क्रतवः प्रतिबद्धफला इति ॥

134 इतरक्षपणाधिकरणम् । ॥ भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ 1

488 आरब्धकार्ये त्वितरे भोगेनैव विनश्यतः । अद्य कालान्तरे वाऽपीत्यथ ब्रह्म समश्नुते ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

## ॥ अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

135 वागधिकरणम् ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ 1

489 संयोग एव वाचोऽत्र मनसा न भवेल्लयः । वागभावे मनोवृत्तेः दर्शनाच्छब्दतोऽपि हि ॥

॥ अत एव सर्वाण्यनु ॥ 2

490 अनु वाचं त्विन्द्रियाणां संपत्तिर्मनसि श्रुतेः । संपद्यमानैर्मनसि त्विन्द्रियैरिति शब्दतः ॥

136 मनोधिकरणम् । ॥ तन्मनः प्राण उत्तरात् ॥ 1

491 सर्वेन्द्रियसमायुक्तं प्राणे संयुज्यते मनः । मनः प्राण इति श्रुत्या परयैतद्धि कथ्यते ॥

137 अध्यक्षाधिकरणम् । ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ 1

492 देहाध्यक्षेऽत्र जीवे तु प्राणः संयुज्यते हि सः । उत्क्रामति समायाति तथाऽहमिति शब्दतः ॥

138 भूताधिकरणम् । ॥ भूतेषु तच्छ्रुतेः ॥ 1

493 प्राणश्च जीवसंयुक्तः युक्तस्स्याद्भूतपञ्चके । सर्वभूतमयत्वं च जीवस्य श्रुतिराह हि ॥

॥ नैकस्मिन् दर्शयतो हि ॥ 2

494 एकस्मिन् प्राणसंबन्धः तेजसीति न युज्यते । कार्याक्षमत्वादेकस्य त्रिवृत्करणशंसनात् ॥

139 आसृत्युपक्रमाधिकरणम् । ॥ समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ 1

495 नाडीप्रवेशपर्यन्तं समोत्क्रान्तिर्भवेद् द्वयोः । शरीरात्यागतो यत् स्यात् अमृतत्वं तदुच्यते ॥

॥ तदापीतेस्संसारव्यपदेशात् ॥ 2

496 अत्र ब्रह्मेति वचनात् ध्यानामृतमिहाह हि । सशरीरस्य चाऽऽप्राप्तेः संसारव्यपदेशतः ॥

॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ 3

497 प्रतिब्रूयादिति श्रुत्या सूक्ष्मदेहोपलब्धितः । संसारबन्धोऽत्रादग्धः ध्यानामृतमिहाश्नुते ॥

॥ नोपमर्देनातः ॥ 4

498 अत्रब्रह्मेति वचनात् अमृतत्वं तु सर्वथा । बन्धोपमर्दान्नोदेति ध्यानं चामृतमेव हि ॥

॥ अस्यैव चोपपत्तेरूष्मा ॥ 5

499 सूक्ष्मस्यास्मिन् वर्तमानत्वोपपत्तेश्च तद्गुणः । ऊष्मोपलभ्यते चेति मुक्तः सूक्ष्मेण गच्छति ॥

॥ प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ 6

500 प्राणोत्क्रान्तिनिषेधाच्चामृतत्वं ह्यत्र चेन्न तत् । जीवान्निषेधः स्पष्टो हि शारीरान्न निषेधनम् ॥

॥ स्मर्यते च ॥ 7

501 ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् । इति स्मृत्या हि चोत्क्रान्तिः विदुषोऽपि प्रसिद्ध्यति ॥

140 परसम्पत्त्यधिकरणम् । ॥ तानि परे तथा ह्याह ॥ 1

502 भूतसूक्ष्माणि परमे संपद्यन्ते हृदि स्थिते । तेजः परस्यामिति च श्रुत्यैतदवगम्यते ॥

141 अविभागाधिकरणम् । ॥ अविभागो वचनात् ॥ 1

503 अविभागश्च संपत्तिः परमात्मनि युज्यते । पूर्ववाक्यस्थसंपत्तिवचनावर्तनादिह ॥

142 तदोकोधिकरणम् । ॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ 1

504 ज्वलिताग्रं भवेत्स्थानं विद्याशक्त्या गतिस्मृतेः । मूर्धन्ययैति तत्तुष्टहार्ददर्शितमार्गवान् ॥

143 रश्म्यनुसाराधिकरणम् । ॥ रश्म्यनुसारी ॥ 1

505 सूर्यस्य रश्मीनुत्क्रान्तस्त्वनुसृत्यैव गच्छति । एतैरेवेति वाक्ये च दृश्यते ह्यवधारणम् ॥

144 निशाधिकरणम् । ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् ॥ 1

506 निशामृतस्य विदुषः ब्रह्मप्राप्तिर्न चेन्न हि । आदेहात् कर्मसंबन्धस्त्वतो ब्रह्माप्तिदर्शनात् ॥

145 दक्षिणायनाधिकरणम् । ॥ अतश्चायनेऽपि दक्षिणे ॥ 1

507 पूर्वोक्तहेतोर्विदुषस्त्वयने दक्षिणेऽपि च । मृतस्यापि भवेदेव ब्रह्मप्राप्तिस्तु तत्क्षणात् ॥

॥ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ 2

508 शुक्लकृष्णे गती चैते योगिनां सर्वदा पुनः । अनुसन्धानविषयौ स्मर्येते इति निश्चितम् ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

146 अर्चिराद्यधिकरणम् । ॥ अर्चिरादिना तत्प्रथितेः ॥ 1

509 एकोऽर्चिरादिः सर्वत्र ह्युच्यते तेन गच्छति । मार्गेणैवेति तस्यैव प्रत्यभिज्ञानतः श्रुतौ ॥

147 वाय्वधिकरणम् । वायुमब्दादविशेषविशेषाभ्याम् ॥ 1

510 वायुं संवत्सरादूर्ध्वं गच्छेन्निर्देशतः श्रुतौ । देवलोको वायुरिति ह्यविशेषविशेषतः ॥

148 वरुणाधिकरणम् । ॥ तटितोऽधि वरुणस्संबन्धात् ॥ 1

511 विद्युतोऽनन्तरं त्वत्र निवेश्यो वरुणो भवेत् । तटितो मेघवर्तित्वात् संबन्धादिति चोच्यते ॥

149 आतिवाहिकाधिकरणम् । ॥ आतिवाहिकास्तल्लिङ्गात् ॥ 1

512 एतेऽर्चिरादयः सर्वे देवता आतिवाहिकाः । गच्छन्तं गमयन्तीति लिङ्गादेव पराज्ञया ॥

॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ 2

513 तटितो वैद्युतेनैव विदुषां नयनं भवेत् । स एनानिति तेनैव ब्रह्मप्राप्तिश्रुतेरिह ॥

150 कार्याधिकरणम् । ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ 1

514 कार्यमेव ह्युपासीनान् नयन्त्यत्रातिवाहिकाः । उपपत्त्या गतेरेवं बादरिर्मनुते मुनिः ॥

॥ विशेषितत्वाच्च ॥ 2

515 प्रजापतेः स्सभां वेश्म प्रपद्य इति वाक्यतः । प्रजापतिमुपासीनान्नयन्त्यत्रातिवाहिकाः ॥

॥ सामीप्यात्तु तद्व्यपदेशः ॥ 3

516 प्रजापतेर्ब्रह्मपुत्रभावात् सामीप्यचिन्तया । ब्रह्मशब्देन तस्यैव व्यपदेशस्तु युज्यते ॥

॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ 4

517 ब्रह्मलोकात्यये विद्वान् ब्रह्मणा सह तत्परम् । प्राप्नोति ब्रह्म चेत्यादिशंसनाच्च तदुच्यते ॥

॥ स्मृतेश्च ॥ 5

518 ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । इति स्मृतेश्च धातारमुपासीनान् नयन्ति हि ॥

|| परं जैमिनिर्मुख्यत्वात् || 6

519 परमेव ह्युपासीनान् नयन्त्यत्रातिवाहिकाः । ब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति जैमिनिः ॥

|| दर्शनाच्च || 7

520 अर्चिरादिकया गत्या ब्रह्मप्राप्तेश्च दर्शनात् । परं ज्योतिरिति श्रुत्यामेतदेव हि युज्यते ॥

|| न च कार्ये प्रत्यभिसन्धिः 8

521 नैव प्रत्यभिसन्धिश्च कार्ये भवति वै यतः । वाक्यशेषपरामर्शाद्बन्धान्मुक्तस्य शंसनात्

|| अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च || 9

522 प्रतीकालम्बनाद्भिन्नान् नयन्तीत्यातिवाहिकाः । पूर्वत्र दोषान्मनुते तत्क्रतोर्बादरायणः ॥

|| विशेषं च दर्शयति || 10

523 प्रतीकालम्बनानां तु फलस्याल्पत्वदर्शनात् । यावन्नाम्नो गतमिति तद्भिन्नान् गमयन्त्यतः ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥

## || अथ चतुर्थाध्यायस्य चतुर्थः पादः ||

151 सम्पद्याविर्भावाधिकरणम् । || सम्पद्याविर्भावस्स्वेनशब्दात् || 1

524 परं ब्रह्मोपसंपन्ने स्वाविर्भावस्त्विहोच्यते । स्वेन रूपेणेति शब्दाद्गुणानां सिद्धता भवेत् ॥

|| मुक्तः प्रतिज्ञानात् || 2

525 मुक्तस्वरूपमेवात्र स्वशब्देनानुकथ्यते । एतमेव तु भूयोऽनुव्याख्यास्यामीति बोधनात् ॥

|| आत्मा प्रकरणात् || 3

526 आविर्भूतगुणस्त्वत्र जीव इत्यवगम्यते । य आत्मेत्याद्युपक्रान्तजीवप्रकरणं हि तत् ॥

152 अविभागेन दृष्टत्वाधिकरणम् । || अविभागेन दृष्टत्वात् || 1

527 ब्रह्मणस्त्वविभागेन स्वात्मानं तु तदाऽनघः । मुक्तोऽनुभवति स्पष्टमैतदात्म्यमिति श्रुतेः ॥

153 ब्राह्माधिकरणम् । || ब्राह्मेण जैमिनिरुपन्यासादिभ्यः || 1

528 मुक्तोऽपहतपाप्मत्वमुखैर्ब्रह्मगुणैर्युतः । आविर्भवत्युपन्यासात् इति जैमिनिराह हि ॥

|| चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः || 2

529 ज्ञानतन्मात्ररूपेण मुक्त आविर्भवेदिह । तन्मात्रस्यैव ताद्रूप्यात् औडुलोमिरितीच्छति ॥

|| एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः || 3

530 स्वप्रकाशस्य पूर्वोक्तगुणानामपि कीर्तनात् । भावाद्विरोधो ह्यनयोः नेत्येवं बादरायणः ॥

154 सङ्कल्पाधिकरणम् । || सङ्कल्पादेव तच्छ्रुतेः || 1

531 ज्ञात्यादिप्राप्तयः सर्वाः सङ्कल्पादेव सन्ति हि । सङ्कल्पादेव पितरः इत्यादिश्रुतिराह हि ॥

|| अत एव चानन्याधिपतिः || 2

532 सत्यसङ्कल्पतावत्त्वात् मुक्तस्य परमात्मितः । निषेधविधिवश्यत्वं न च तस्य तु विद्यते ॥

155 अभावाधिकरणम् । ॥ अभावं बादरिराह ह्येवम् ॥ 1

533 अशरीरं वाव सन्तमिति मुक्तस्य तत्र तु । अभावं च शरीरादेः बादरिर्मनुते मुनिः ॥

भावं जैमिनिर्विकल्पामननात् ॥ 2

534 एकधा भवतीत्यादिश्रुत्या मुक्तस्य तत्र च । शरीरेन्द्रियसद्भावं जैमिनिर्मनुते मुनिः ॥

॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ 3

535 अशरीरं च मुक्तं तु सशरीरं च मन्यते । बादरायण आचार्यो द्विविधं द्वादशाहवत् ॥

॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ 4

536 स्वेन सृष्टशरीरादिकरणाभाववान् यदा । तदा स्वप्न इव ब्रह्मसृष्टैः करणवान्भवेत् ॥

॥ भावे जाग्रद्वत् ॥ 5

537 स्वेनैव सृष्टदेहादिभावे जाग्रत एव हि । पुरुषस्य यथा भोगः मुक्तस्यापि तथा भवेत् ॥

॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ 6

538 दीपस्यैकस्थलेस्थस्य प्रभयाऽन्यत्र वर्तनम् । यथा तथैव जीवस्य ज्ञानाद्देहान्तरेष्वपि ॥

॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ 7

539 प्राज्ञेनेत्यादिवचनं सुषुप्तौ मरणे तथा । अज्ञानमोहौ वदति श्रुत्या ह्याविष्कृतं तथा ॥

156 जगद्व्यापारवर्जाधिकरणम् । ॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ 1

540 जगद्व्यापारवर्जं तन्मुक्तैश्वर्यमिति श्रुतम् । ब्रह्मणः प्रक्रमाच्चैवं जीवस्यात्र त्वसन्निधेः ॥

॥ प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ 2

541 नेमांल्लोकानिति श्रुत्या जगद्व्यापार उच्यते । आधिकारिकलोकस्थवस्तुभोगो हि कथ्यते ॥

॥ विकारावर्ति च तथा हि स्थितिमाह ॥ 3

542 सविभूति परं ब्रह्म मुक्तोऽनुभवति स्वराट् । यदा ह्येवैष इत्युक्ते जीवस्य ब्रह्मणि स्थितेः ॥

॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ 4

543 सृष्ट्यादिकं नियमनं परस्येति स्मृतेः श्रुतेः । अहं सर्वस्य तस्माद्वा एतस्मादिति गम्यते ॥

॥ भोगमात्रसाम्यलिङ्गाच्च ॥ 5

544 ब्रह्मणा सह कामानित्यस्माल्लिङ्गाच्च सर्वथा । भोगमात्रे ब्रह्मसाम्यं मुक्तानां तु भवेदिति ॥

॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ 6

545 मुक्तस्यापुनरावृत्तिः शब्दादेवावगम्यते । ब्रह्मणोऽपि हि सद्भावे प्रमाणं शब्द एव हि ॥

इति ब्रह्मसूत्रार्थपद्यमालिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

इत्थं नरहरिचरणद्वन्द्वैकान्ताखिलात्मभावोऽयम् । सूत्रार्थपद्यमालां चक्रे वेदान्तदेशिको यतिराट् ॥

सन्तो विशुद्धधिषणा विमत्सराः साधुसंगतां सूत्रैः । तद्भावकुसुमरम्यां मालामेतां वहन्तु हृदि नित्यम् ॥

इति श्रीमद्वेदमार्गेत्यादिबिरुदावलीमेदुराणां श्रीमदहोबिलमठदिव्यास्थाने चतुरधिक-चत्वारिंशत्संख्यासंख्यातपट्टाभिषेकपरिमण्डितानां श्रीवण्शठकोप श्रीवेदान्त-देशिकयतीन्द्रमहादेशिकानां कृतिषु ब्रह्मसूत्रार्थपद्यमालिका संपूर्णा ॥

—o—o—o—

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ।

# शारीरकाधिकरणक्रमबोधिनी ॥

1 वेदान्तार्ययतीन्द्रेण सच्छात्रानुजिघृक्षया । शारीरकाधिक्रियाणां क्रियते क्रमबोधिनी ॥
2 जिज्ञासाधिकृतिः पश्चात् जन्माद्यधिकृतिस्ततः । शास्त्रयोनित्वाधिकृतिः ततः पश्चात् समन्वयः ॥
3 ईक्षत्यधिकृतिः पश्चादानन्दमय इष्यते । पश्चादन्तरधीकार आकाशाधिकृतिस्ततः ॥
4 प्राणाधिकरणं पश्चाज्ज्योतिर्नाम तथा विदुः । इन्द्रप्राणस्तत आद्याद्ये त्वेकादश विदुर्बुधाः ॥
5 अथ सर्वत्रप्रसिद्धिमत्तृनाम ततो विदुः । अन्तराधिकृतिं पश्चादन्तर्याम्यधिकारकम् ॥
6 अदृश्यत्वादिगुणकं वैश्वानरमथोविदुः । आद्यद्वितीयपादेऽतः षट्चाधिकृतयः स्थिताः ॥
7 द्युभ्वाद्यधिकृतिः पश्चाद्भूमाधिकरणं तथा । अक्षराधिकृतिः पश्चात् भवेदीक्षतिकर्म च ॥
8 दहराधिकृतिः पश्चात् प्रमिताधिकृतिस्तथा । देवताधिकृतिः पश्चान्मधुनाम्नी त्वधिक्रिया ॥
9 अपशूद्राधिकरणं शेषः प्रमित ईरितः । पश्चादर्थान्तरत्वादिव्यपदेशो दशेह च ॥
10 अथानुमानिकं पश्चाच्चमसाधिकृतिस्तथा । संख्योपसंग्रहः पश्चात् कारणत्वमिहोच्यते ॥
11 जगद्वाचित्वाधिकारो वाक्यान्वय उदीरितः । प्रकृत्यधिकृतिः सर्वव्याख्यान मिहचाष्टकम् ॥
12 द्वितीये स्मृत्यधिकृतिर्योगप्रत्युक्तिरेव च । विलक्षणत्वाधिकृतिः पश्चाच्छिष्टापरिग्रहः ॥
13 भोक्त्रापत्तिः ततः पश्चादारम्भणमिहोच्यते । इतरव्यपदेशः स्युदुपसंहारदर्शनम् ॥
14 कृत्स्नप्रसक्तिनाम स्यादथाधिकरणं ततः । स्यात् प्रयोजनवत्त्वञ्च द्वितीयाद्ये दश स्थिताः ॥
15 रचनानुपपत्तिस्तु महद्दीर्घमुदीरितम् । समुदायाधिकरणमुपलब्धिरिहोच्यते ॥
16 सर्वथानुपपत्तिस्तु तथैकस्मिन्नसंभवः । पशुपत्यधिकारोऽथ भवेदुत्पत्त्यसंभवः ॥
17 द्वितीयस्य द्वितीये स्युरेवमष्ट ततः परम् । वियन्नामाधिकरणं तेजोधिकरणं ततः ॥
18 आत्माधिकरणं पश्चात् ज्ञाधिकार उदीरितः । अथ कर्त्रधिकारोऽथ परायत्त मिहोच्यते ॥
19 अंशाधिकरणञ्चेति सप्ताधिकृतयस्त्विह । प्राणोत्पत्त्यधिकारोऽथ सप्तगत्यभिधो नयः ॥
20 प्राणाणुत्वं ततो वायुक्रियाधिकरणं तथा । श्रेष्ठाणुत्वं ततो ज्योतिराद्यधिष्ठानमुच्यते ॥
21 इन्द्रियाधिकृतिः संज्ञामूर्तिक्लप्ति रथोच्यते । द्वितीयस्य तुरीयेऽस्मिन् अष्टाधिकृतयः स्थिताः ॥
22 तदन्तरप्रतिपदं प्राहुः पश्चात् कृतात्ययम् । अथानिष्टादिकार्यैवं तत्स्वाभाव्यापत्तिरुच्यते ॥
23 अथ नातिचिरं च स्यादन्याधिष्ठितमेव हि । तृतीये प्रथमे पादे षट्चाधिकृतयः स्थिताः ॥
24 सन्ध्याधिकरणं पश्चात् तदभावस्समीर्यते । कर्मानुस्मृतिशब्दादिर्मुग्धाधिकरणं ततः ॥
25 अथ चोभयलिंगं स्यादहिकुण्डलमेव च । पराधिकरणं पश्चात् फलाधिकरणं तथा ॥
26 तृतीयस्य द्वितीये तदष्टाधिकृतयः स्थिताः । अथ स्यात् सर्ववेदान्तप्रत्ययं चान्यथात्वकम् ॥
27 सर्वाभेदाधिकरणमथानन्दाद्यधिक्रिया । कार्याख्यानाधिकरणं समानाधिकृतिस्तथा ॥
28 संबन्धाधिकृतिः पश्चात्सम्भृत्यधिकृतिस्तथा । अथो पुरुषविद्याख्या वेधाद्यधिकृतिस्ततः ॥
29 अथ हान्यधिकारः स्यात् सांपराय इहोच्यते । अथानियम एव स्यादक्षरध्यधिकारकः ॥
30 अन्तरत्वाधिकरणं कामाद्यधिकृतिस्तथा । तन्निर्धारस्यानियमः प्रदानाधिकृतिस्तथा ॥

31 लिंगभूयस्त्वाधिकृतिः पश्चात्पूर्वविकल्पकः । शरीरेभाव एवांगावबद्धाधिकृतिस्तथा ॥
32 भूमज्यायस्त्वाधिकारस्ततः शब्दादिभेदकः । विकल्पाधिकृतिः पश्चात् स्याद्यथाश्रयभावकः ॥
33 तृतीयस्य तृतीयेऽतः षड्विंशति रधिक्रियाः । पुरुषार्थाधिकरणं स्तुतिमात्राधिकारकः ॥
34 पारिप्लवाधिकरणमग्नीन्धन मिहोच्यते । सर्वापेक्षाधिकरणं तथा शमदमादि च ॥
35 सर्वान्नानुमतिः पश्चाद्विहितत्वाधिकारकः । विधुराधिकृतिः पश्चात् तद्भूताधिकृतिस्तथा ॥
36 स्यात् स्वाम्यधिक्रिया पश्चात् सहकार्यन्तराख्यकम् । अनाविष्करणं पश्चादैहिकाधिकृतिस्तथा ॥
37 अथ मुक्तिफलश्चाहुरेवं पञ्चदशेरिताः । आवृत्त्यधिक्रिया पश्चादात्मत्वोपासनं तथा ॥
38 प्रतीकाधिकृतिः पश्चादादित्यादिमतिस्तथा । आसीनाधिकृतिः पश्चादाप्रयाणाधिकारकः ॥
39 तदधिगमा(प्राप्त्य)धिकृति रितराधिकृतिस्तथा । स्यादनारब्धकार्यश्चाप्यग्निहोत्रादि रिष्यते ॥
40 इतरक्षपणश्चैव पादेऽत्रैकादश स्थिताः । अथ वागधिकारः स्यात् मनोधिकरणं तथा ॥
41 अध्यक्षाधिकृतिः पश्चाद्भूताधिकरणं तथा । आसृत्युपक्रमः पश्चात् परसंपत्तिरुच्यते ॥
42 अविभागाधिकरणं तदोकोधिकृतिस्तथा । अथ रश्म्यनुसारश्च निशाधिकरणं तथा ॥
43 दक्षिणायन मित्येवं पादेऽत्रैकादश स्थिताः । अथार्चिराद्यधिकृतिरथ स्या द्वाय्वधिक्रिया ॥
44 वरुणाधिकृतिः पश्चादातिवाहिक उच्यते । कार्याधिकरणंचेति पञ्चाधिकृतयः स्थिताः ॥
45 संपद्याविर्भाव एवं त्वविभागेनदृष्टता । ब्राह्माधिकरणं पश्चात् संकल्पाधिकृतिस्तथा ॥
46 अभावाधिकृतिः पश्चाज्जगद्व्यापारवर्जमोम् । तुरीयस्य तुरीयेऽस्मिन् रससंख्याः प्रकीर्तिताः ॥
47 शारीरकाधिकरणनामक्रमविबोधिनीम् । वेदचूडार्ययोगीत्थं शिष्यप्रार्थनयाऽकरोत् ॥

—o—•—o—

॥ श्रीः ॥

## अधिकरणसूत्रसंख्याविषयबोधिनी ॥

1 जिज्ञासायां सूत्रमेकं विचारो ब्रह्मणस्त्वथ । जन्माद्यधिकृतावेकं तद्ब्रह्मेति यतो जगत् ॥
2 एकं तु शास्त्रयोनित्वे शास्त्रेणैवावगम्यता । समन्वयेऽप्येकमेव पुरुषार्थतयान्वयः ॥
3 ईक्षत्यधिकृतावष्ट सच्छब्दो ब्रह्मवाचकः । तथानन्दमयेऽप्यष्ट मुक्तप्राचुर्यात् परः पुमान् ॥
4 द्वे अन्तरधिकारे स्तः सूर्ये दृश्यः परःपुमान् । आकाशाधिकृतावेकं भूतादन्यः स सर्वकृत् ॥
5 प्राणाधिकरणेऽप्येकं योगाद्ब्रह्म परं गुणैः । स्युर्ज्योतिरधिकारे च चत्वार्यग्न्यादितः परम् ॥
6 इन्द्रप्राणे च चत्वारि प्राणेन्द्रात्मा ह्युपास्यते । अष्ट सर्वत्र प्रसिद्धे जीवादन्यो मनोमयः ।
7 चत्वार्येवात्त्रधिकृतौ संहर्ता जगतोऽस्य सः । अन्तराधिकृतौ षट् स्युः जीवबिंबसुरे(रवी)तरः ॥
8 अन्तर्यामिणि च त्रीणि पृथिव्याद्यन्तरः परः । अदृश्यत्वादिगुणके त्रीणि ब्रह्म परात्परम् ॥
9 वैश्वानरे नवैवाग्निदेवताजाठरेतरः । द्युभ्वाद्यधिकृतौ षट् च यस्मिन्निति नरात् परः ॥
10 भूमाधिकरणे द्वे च भूमयुक्तो नरात् परः । अक्षराधिकृतौ त्रीणि प्रधानाज्जीवतः परः ॥
11 एकमीक्षतिकर्माधिकारे धातुः परं तु तत् । दहरे दश सूत्राणि ह्याकाशात् जीवतःपरः ॥
12 चत्वारि प्रमितेऽत्र द्वे अङ्गुष्ठप्रमितः परः । देवताधिकृतौ पञ्च देवादिष्वप्युपासनम् ॥

13 त्रीण्येव मध्वधिकृतौ वस्वाद्या अप्युपासते । अपशूद्रे सप्त चैव शूद्राणां नास्त्युपासनम् ॥
14 अन्ये प्रमितशेषे द्वे ब्रह्म कंपनकारणम् । त्रीणि चार्थान्तरत्वादौ बद्धान्मुक्तात्परःपुमान् ॥
15 सप्तानुमानिकेऽव्यक्तमचित्कार्यं वपुर्मतम् । चमसे त्रीण्यजा ब्रह्मात्मिका चमसवन्नहि ॥
16 संख्योपसंग्रहे त्रीणि सांख्यतत्त्वं तु नोच्यते । द्वे कारणत्वाधिकृतौ वाक्यानां ब्रह्मवाचिता ॥
17 जगद्वाचित्वतस्त्रीणि ब्रह्म कर्म जगत् श्रुतौ । वाक्यान्वये च चत्वारि द्रष्टव्यः परमःपुमान् ॥
18 प्रकृत्यधिकृतौ षट् स्युरुपादानमपि स्वयम् । एकं तु सर्वव्याख्याने व्याख्याता न्यायतत्समे ॥
19 द्वे स्मृत्यधिकृतौ सूत्रे कापिलस्मृत्यनादरः । एकं तु योगप्रत्युक्तौ धातुर्योगो निरस्यते ॥
20 विलक्षणत्वे च नव गोमयात् वृश्चिकादिवत् । शिष्टापरिग्रहे ह्येकं त्याज्या अन्येऽप्यवैदिकाः ॥
21 भोक्त्रापत्तौ तथैवैकं देहित्वेऽपि न भोक्तृता । आरम्भणे षट्सूत्राणि ब्रह्मानन्यज्जगद्भवेत् ॥
22 इतरव्यपदेशे त्रीण्यन्यो जीवात् परः पुमान् । द्वे स्यातामुपसंहारे क्षीरवन्निरपेक्षता ॥
23 कृत्स्नप्रसक्तौ षड्ब्रह्म निरंशं सर्वकारणम् । स्युः प्रयोजनवत्वे च पञ्च लीलैव राजवत् ॥
24 रचनानुपपत्तौ च नवाव्यक्तं न कारणम् । महद्दीर्घे तु सप्तैव परमाणुर्नकारणम् ॥
25 समुदाये दशाण्वादिमूलसंघातदुस्स्थता । त्रयं चैवोपलब्धौ स्यात् ज्ञानादर्थोऽन्य उच्यते ॥
26 सर्वथानुपपत्तौ च ह्येकं शून्यं न कारणम् (संभवि) । एकस्मिन्नथ चत्वारि सत्त्वासत्त्वविरुद्धता ॥
27 चत्वारि स्युः पशुपतौ हेयः सर्वः शिवागमः । उत्पत्त्यसंभवे चत्वार्यादेयं पाञ्चरात्रकम् ॥
28 वियन्नाम्नि नवैव स्युराकाशोऽप्यात्मनो भवेत् । तेजोधिकरणेऽप्यष्टावुत्पत्तिस्तच्छरीरकात् ॥
29 आत्माधिकरणेत्वेकमात्मा नित्यो न जायते । चतुर्दश ज्ञाधिकारे ज्ञाता ज्ञानं स वर्णितः ॥
30 सप्तैव कर्त्रधिकृतौ ज्ञातुरेव हि कर्तृता । परायत्ते तु सूत्रे द्वे ब्रह्माधीना तु कर्तृता ॥
31 अंशे त्वेकादशैव स्युः जीवानां तच्छरीरता । प्राणोत्पत्तौ त्रयं प्राणा अहङ्कारात् (इन्द्रियाणि) भवन्तिहि ॥
32 सप्तगत्यां द्वयश्चैव ह्यक्षाण्येकादश ध्रुवम् । प्राणाणुत्वे द्वयं चाहुरिन्द्रियाणुत्वमुच्यते ॥
33 वायुक्रियायां चत्वारि विशेषापन्न वायुता । श्रेष्ठाणुत्वेप्येकमेव प्राणोऽप्यणुरितीरितः ॥
34 द्वे ज्योतिराद्यधिष्ठाने परादग्न्यादिकर्म तत् । इन्द्रियाधिकृतौ द्वे च श्रेष्ठान्ये त्विन्द्रियाणि ते ।
35 संज्ञामूर्तौ त्रयं क्लृप्तिःपरस्यैव त्रिवृत्कृतः । तदन्तरे सप्त जीवः सह भूतैश्च गच्छति ॥
36 कृतात्यये च चत्वारि ह्यागच्छति शुभाशुभैः । दशानिष्टादिकारिस्थान्यघी चन्द्रं न गच्छति ॥
37 तत्स्वाभाव्ये त्वेकमेषं त्वाकाशसदृशो भवेत् । एकं नातिचिरेऽप्येवं विशेषाच्छीघ्रमत्र हि ॥
38 चत्वार्यन्याधिष्ठिते तु वपुषान्यस्य युज्यते । सन्ध्याधिकरणे षट् च स्वाप्नस्रष्टा परःपुमान् ॥
39 तदभावे द्वयं चैव नाडीयुक्परमात्मनि । कर्मानुस्मृतिशब्दे स्यादेकं सुप्तः प्रबुध्यते ॥
40 मुग्धाधिकरणेऽप्येकं मरणात् प्राग्दशाहि सा । द्वयलिंगोपञ्चदश निर्दोषः स शुभः परः ॥
41 चत्वार्यहौकुण्डले स्युः जडानां तच्छरीरता । पराधिकरणे सप्त प्राप्यंनो कारणात् परम् ॥
42 चत्वार्येव फले विष्णुः फलंदातेति निश्चितः । पञ्चैव सर्ववेदान्ते ह्यभिन्ना दहरादिधीः ॥
43 चत्वारि चान्यथात्वे वाज्युद्गीथोपास्तिरन्यथा । सर्वाभेदेत्वेकमेव प्राणोपासनमेकधा ॥
44 सप्ताऽऽनन्दाद्यधिकृतौ ते सर्वोपासनानुगाः । कार्याख्याने त्वेकमप्सु प्राणवासस्त्वचिन्तनम् ॥
45 समानाधिकृतावेकं शांडिली तु न भिद्यते । संबन्धाधिकृतौ त्रीणि विद्या भिन्नाऽक्षिसूर्ययोः ॥
46 एकं तु संभृतौ द्युव्याप्त्यादि नाल्पाश्रयासु हि । एकं पुरुषविद्यायां विद्याभेदश्च निश्चितः ॥
47 वेधाद्यधिकृतावेकं वेदाधीत्यंगमेव तत् । एकं तु हान्यधिकृतौ हान्युपायनधीयुतिः ॥
48 सांपराये तु पञ्चैव वपुस्त्यागेऽघमोचनम् । एकश्चानियमे सूत्रं सर्वेषामर्चिरादिका ॥

49 द्वे चाक्षरध्यधिकृतौ सर्वास्वस्थूलतादिकम् । त्रीण्यन्तरत्वे नोषस्तकहोलोपास्तिभिन्नता ॥
50 कामाद्यधिकृतौ त्रीणि दहरैक्यं स्थलत्रये । एकं तन्निर्धारणे नोद्गीथविद्या सदा क्रतौ ॥
51 प्रदानाधिकृतावेकं दहरावृत्तिरिन्द्रवत् । एकं तु लिंगभूयस्त्वे सर्वोपास्यःश्रियःपतिः ॥
52 सप्त पूर्वविकल्पे तु विद्याङ्गत्वं मनश्चितः । द्वयं शरीरभावे तु मुक्तरूपमुपास्यते ॥
53 द्वयमंगावबद्धेऽनुशाखमुद्गीथवेदनम् । भूमज्यायस्त्व एकं स्याद्वैश्वानरसमस्तता ॥
54 शब्दादिभेदे त्वेकं स्याद्विद्या नाना प्रकीर्तिताः । विकल्पाधिकृतौ द्वे च विद्यानां न समुच्चयः ॥
55 षड्यथाश्रयभावे तु न क्रत्वंगमुपासनम् । विंशतिः पुरुषार्थे तु विद्यातः फलमिष्यते ॥
56 स्तुतिमात्रे च सूत्रे द्वे विधी रसतमादिषु । पारिप्लवे द्वे आख्यानं विद्याविध्यर्थमेव हि ॥
57 एकमग्नीन्धने विद्या नाग्न्यपेक्षोर्ध्वरेतसाम् । एकं तु सर्वापेक्षायां गृहिविद्यात्वपेक्षते ॥
58 शमाद्यधिकृतावेकमुपेतस्स्याच्छमादिभिः । सर्वान्नानुमतौ चत्वार्यापत्स्वेव हि सा भवेत् ॥
59 विहितत्वे च चत्वारि केवलाश्रमकर्म च । विधुरे चैव चत्वारि विद्याऽनाश्रमिणामपि ॥
60 चत्वारि चैव तद्भूते न विद्या पतितस्य तु । द्वे च स्वाम्यधिकारे स्तः उद्गीथध्यानमृत्विजः ॥
61 सहकार्यन्तरे त्रीणि मौनमङ्गं परं भवेत् । अनाविष्कार एकं स्यात् बाल्यं माहात्म्यगूहनम् ॥
62 एकमैहिक उत्पाद उपास्तेर्विघ्नवर्जने । एकं मुक्तिफले चैव ब्रह्मविद्या च पूर्ववत् ॥
63 आवृत्त्यधिकृतौ द्वे च वेदनावृत्तिरुच्यते । आत्मत्वोपासने त्वेकं स्वात्मेत्येव ह्युपासनम् ॥
64 द्वे प्रतीके दृष्टिविधावङ्गं नात्मेत्युपास्यते । आदित्यादिमतावेकमुद्गीथेऽर्कादिदर्शनम् ॥
65 आसीनाधिकृतौ पञ्च त्वासीनस्यैव तद्भवेत् । आप्रयाणे त्वेकमेव प्रायणान्तमुपासनम् ॥
66 तस्याधिगम एकं स्यात्तदैवाघविमोचनम् । इतराधिकृतावेकं पुण्यानामपि पूर्ववत् ॥
67 अनारब्धे त्वेकमेव प्रारब्धान्यद्विनश्यति । त्रीण्येव चाग्निहोत्रादौ विद्यार्थं कार्यमेव तत् ॥
68 इतरक्षपणे चैकं भुक्त्वारब्धं तु मोक्षभाक् । द्वे वागधिकृतौ वाचो मनस्संपत्तिरिन्द्रियैः ॥
69 मनोधिकरणे त्वेकं मनः प्राणे तु युज्यते । अध्यक्षाधिकृतावेकं प्राणश्चात्मनि युज्यते ॥
70 भूताधिकरणे च द्वे आत्मा भूतेषु युज्यते । आसृत्युपक्रमे सप्त ह्युत्क्रान्तिरुभयोस्समा ॥
71 एकं च परसंपत्तौ हार्दे जीवस्तु युज्यते । अविभागेऽप्येकमेव योगश्चात्राऽपृथक्स्थितिः ॥
72 तदोकोधिकृतावेकं ब्रह्मनाड्यैव गच्छति । एकं रश्म्यनुसारे तु रश्मीनाश्रित्य गच्छति ॥
73 निशाधिकरणेऽप्येकं मृतो निश्यपि गच्छति । दक्षिणेऽप्ययने च द्वे अर्चिरादिस्तदाऽपि हि ॥
74 अर्चिरादौ सूत्रमेक सर्वत्रैकार्चिरादिका । एकं तु वाय्वधिकृतौ वायुमब्दात्स गच्छति ॥
75 वरुणाधिकृतावेकमन्ते तु वरुणादयः । द्वे चातिवाहिके स्यातां नेतारस्त्वर्चिरादयः ॥
76 दश कार्ये ब्रह्मविदो नयन्त्यात्मविदोऽप्यमी । संपद्याधिकृतौ त्रीणि विकासः प्राप्तितः फलम् ॥
77 अविभागेनदृष्टत्वेऽप्येकं पश्येत्तदात्मकम् । ब्राह्माधिकरणे त्रीणि ज्ञानाकारो गुणैस्सह ॥
78 संकल्पाधिकृतौ द्वे च मुक्तः संकल्पतः सृजेत् । अभावे सप्त मुक्तस्तु सतनुश्चातनुर्मतः ॥
79 जगद्व्यापारवर्जाख्ये षट्सूत्राणि परात्मना । भोगमात्रेण तुल्यत्वं मुक्तानामिति निश्चितम् ॥
80 शारीरकाधिकरणप्रमेयं सूत्रसंख्यया । वेदचूडार्ययोगीत्थं संजग्राह सतां मुदे ॥

—o—o—o—

## अध्यायपादाधिकरणसूत्रसंख्या

लक्ष्मीनृसिंहं संसेव्य गुरुपारंपरीं तथा । अध्यायपादाधिकृतिसूत्राणां गणनोच्यते ॥

अध्यायानां चतुर्णां तु सूत्रसंख्या गुरूत्तमैः । शुभाशीरिति संप्रोक्ता सारावळ्यां कृपावशात् ॥

पादास्तु षोडश प्रोक्ताः संख्या चैव तु चिन्मयी । तथाधिकरणानां तु स्वमतस्थापनाय वै ॥

(प्रत्यध्यायं अधिकरणसंख्या)

पञ्चत्रिंशत् त्रयस्त्रिंशत् पञ्चपञ्चाशदत्रहि । त्रयस्त्रिंशत् पृथक् प्रोक्ताः चिन्मयीति समुच्चये ॥

(प्रत्यध्यायं सूत्रसंख्या)

अष्टात्रिंशत् शतं चैव ह्याद्येऽध्याये प्रकीर्तिता । शतं चैकोनपञ्चाशत् द्वितीयेऽध्याय उच्यते ॥

द्व्यशीतिश्च शतं चैव तृतीयेऽध्याय उच्यते । षट्सप्ततिश्च सूत्राणि तुरीयाध्यायगोचराः ॥

(प्रतिपादं सूत्रसंख्या)

द्वात्रिंशत्त्वादिमे पादे त्रयस्त्रिंशत् द्वितीयके । चतुश्चत्वारिंशदथ तुरीये नव विंशतिः ॥

षट्त्रिंशत् पञ्चमे च द्विचत्वारिंशत्तु षष्ठके । सप्तमे तु द्विपंचाशत् एकोना विंशतिः परे ॥

विंशत्या सप्त नवमे चत्वारिंशत् परे त्वथ । एकादशे चतुष्षष्टिः एकपञ्चाशदुत्तरे ॥

एकोनविंशतिः पश्चात् विंशतिस्तु चतुर्दशे । अपरस्मिन् पञ्चदशे विंशतिर्द्वेच षोडशे ॥ १०

(प्रतिपादं अधिकरणसंख्या)

एकादश च षट् चेति दशाष्टाध्याय आदिमे । दशाष्ट सप्त चाष्टेति द्वितीयेऽध्याय उच्यते ॥

षडष्ट षड्विंशतिश्च तृतीये दश पञ्च च । एकादश तुरीये चाप्येकादश च पञ्च षट् ॥

(प्रत्यधिकरणं सूत्रसंख्या)

जिज्ञासाधिकृतावेकं जन्मादावेकमेव च । एकं तु शास्त्रयोनित्वेऽप्येकमेव समन्वये ॥

ईक्षत्यधिकृतावष्ट ह्यष्टानन्दमयेऽपि च । द्वे चैवान्तरधिकृतावाकाशेऽप्येकमेव च ॥

प्राणाधिकरणेऽप्येकं चत्वार्येव तु ज्योतिषि । इन्द्रप्राणे च चत्वारि द्वात्रिंशत् पाद आदिमे ॥

सर्वत्रप्रसिद्धावष्ट चत्वार्येव हि चात्तरि । अन्तराधिकृतौ षट् चाप्यन्तर्यामिणि च त्रयम् ॥

अदृश्यत्वादिगुणके त्रीणि वैश्वानरे नव । आद्ये द्वितीयपादे तु त्रयस्त्रिंशदितीष्यते ॥

द्युभ्वाद्यधिकृतौ षट् च भूमाधिकरणे द्वयम् । अक्षराधिकृतौ त्रीणि ह्येकमीक्षतिकर्मणि ॥

दहरे दश सूत्राणि प्रमिताधिकृतौ द्वयम् । देवताधिकृतौ पञ्च त्रयं मधुनि चाह हि ॥

अपशूद्रे सप्त चैव द्वे शेषप्रमिते तथा । त्रीणि चार्थान्तरत्वादौ त्रिंशच्चापि चतुर्दश ॥ २०

सप्तानुमानिके चैव चमसाधिकृतौ त्रयम् । संख्योपसङ्ग्रहे त्रीणि कारणत्वे द्वयं भवेत् ॥

जगद्वाचित्वाधिकृतौ सूत्राणां तु त्रयं तथा । वाक्यान्वये च चत्वारि प्रकृतौ तु षडेवहि ॥
एकं तु सर्वव्याख्याने तुरीये नव विंशतिः । द्वे स्मृत्यधिकृतौ योगप्रत्युक्तावेकमेव हि ॥
विलक्षणत्वे च नव ह्येकं शिष्टापरिग्रहे । भोक्त्रापत्तावेकमेव षडारम्भणनामनि ॥
इतरव्यपदेशे त्रीण्युपसंहारके द्वयम् । कृत्स्नप्रसक्तौ षट् पञ्च स्युः प्रयोजनवत्त्वके ॥
द्वितीयस्यादिमे पादे षट्त्रिंशद्गणनोच्यते । रचनानुपपत्तौ तु नव संख्या प्रकीर्तिता ॥
महद्दीर्घे सप्त चैव समुदाये दशैव च । उपलब्धौ त्रयं चैकं सर्वथानुपपत्तिके ॥
एकत्रासंभवे चत्वार्यथो पशुपतौ तथा । पाञ्चरात्राधिकरणे चत्वार्युत्पत्त्यसंभवे ॥
द्वितीयस्य द्वितीये तु द्विचत्वारिंशदुच्यते । वियन्नाम्नि नवैवाष्ट तेजोधिकरणेत्विह ॥
आत्माधिकरणे त्वेकं ज्ञाधिकारे चतुर्दश । सप्तैव कर्त्रधिकृतौ परायत्ते द्वयं भवेत् ॥ ३०
अंशे त्वेकादशैवेति द्विपञ्चाशत्तृतीयके । प्राणोत्पत्तौ त्रयं चैकं सप्तगत्यां द्वयं भवेत् ॥
प्राणाणुत्वे द्वयं वायुक्रियायां तु चतुष्टयम् । श्रेष्ठाणुत्वेऽप्येकमेव ज्योतिरादौ द्वयं भवेत् ॥
इन्द्रिये तु द्वयं संज्ञामूर्तिक्लृप्तौ त्रयं भवेत् । द्वितीयस्य तुरीये तु पादे त्वेकोनविंशतिः ॥
तदन्तरे सप्त चैव चत्वार्येव कृतात्यये । दशानिष्टादिकृति तत्साभाव्येऽप्येकमेव हि ॥
एकं नातिचिरे चत्वार्यन्याधिष्ठित एव हि । तृतीयस्यादिमे पादे सप्तविंशतिरत्र हि ॥
सन्ध्याधिकरणे षट् च तदभावे द्वयं भवेत् । कर्मानुस्मृतिकेऽप्येकं मुग्धाधिकरणे तथा ॥
पञ्चदशोभयलिङ्गे चत्वार्येवाहिकुण्डले । पराधिकरणे सप्त चत्वार्येव फलेत्विह ॥
तृतीयस्य द्वितीये तु चतुष्षष्टिरिहोच्यते । पञ्चैव सर्ववेदान्ते ह्यन्यथात्वे चतुष्टयम् ॥
सर्वाभेदेत्वेकमेव त्वानन्दादौ हि सप्त च । कार्याख्यानेऽप्येकमेकं समानाधिकृतौ तथा ॥
संबन्धाधिकृतौ त्रीणि संभृतावेकमेव च । एकं पुरुषविद्यायां वेधादावेकमेव च ॥ ४०
एकं तु हान्यधिकृतौ सांपराये तु पञ्च च । अनियमेत्वेकमुभे अक्षरध्यधिकारके ॥
अन्तरत्वे त्रीणि चैव कामाद्यधिकृतौ त्रयम् । तन्निर्धारण एकं स्यात् प्रधानेऽप्येकमेव हि ॥
एकं तु लिङ्गभूयस्त्वे सप्त पूर्वविकल्पके । द्वयं शरीरेभावे तु द्वयमङ्गावबद्धके ॥
एकं तु भूमज्यायस्त्वेऽप्येकं शब्दादिभेदके । विकल्पाधिकृतौ द्वे च षड्यथाश्रयभावके ॥
तृतीयस्य तृतीये तु चतुष्षष्टिरिहोच्यते । विंशतिः पुरुषार्थे तु स्तुतिमात्रे द्वयं भवेत् ॥
पारिप्लवे द्वयं चैव ह्येकमग्नीन्धने भवेत् । एकं तु सर्वापेक्षायां शमादावेकमेव हि ॥
सर्वान्ने स्थात्र चत्वारि विहितत्वे चतुष्टयम् । विधुरे चैव चत्वारि तद्भूते तु चतुष्टयम् ॥
द्वे स्वाम्यधिकृतौ ज्ञेये सहकार्यन्तरे त्रयम् । अनाविष्कार एकं स्यात् ऐहिकेऽप्येकमेव हि ॥ ६०

एकं मुक्तिफलेऽप्येकपञ्चाशत्तु तुरीयके । आवृत्तौ द्वयमेवैकमात्मत्वोपासने भवेत् ॥
प्रतीकेऽपि द्वयं चैकमादित्यादिमतौ भवेत् । आसीनाधिकृतौ पञ्चाप्रयाणे त्वेकमेव हि ॥ ५०
स्यादेकं तदधिगमेऽप्येकमेवेतराख्यके । अनारब्धेत्वेकमग्निहोत्रादौ त्रयमेव च ॥
इतरक्षपणे चैकमाद्येत्वेकोनविंशतिः । द्वेवागधिकृतावेकं मनोधिकरणे भवेत् ॥
अध्यक्षादिकृतावेकं भूताधिकरणे द्वयम् । आसृत्युपक्रमे सप्त परसंपत्तिरेकधा ॥
अविभागेत्वेकमेकं तदोकोधिकृतौ भवेत् । एकं रश्म्यनुसारे तु निशायामेकमेव च ॥
दक्षिणेऽप्ययने च द्वे द्वितीये विंशतिर्भवेत् । अर्चिरादावेकमेव वायावप्येकमेव च ॥
वरुणाधिकृतावेकमुभयं त्वातिवाहिके । दश कार्ये पञ्चदश तृतीये गणना भवेत् ॥
संपद्याविर्भावनये त्रीणि सूत्राणि मन्वते । अविभागेनदृष्टत्वेऽप्येकं ब्राह्मे त्रयं भवेत् ॥
संकल्पाधिकृतौ द्वे चाप्यभावे सप्त चैव हि । जगद्व्यापारवर्जे षट् द्वाविंशतिरिहान्तिमे ॥
एकसूत्राधिकृतयः पञ्च पञ्चाशदीरिताः । द्विसूत्राश्चाधिकृतयः पञ्चविंशतिरीरिताः ॥
त्रिसूत्राश्चाधिकृतयः एकोनाविंशतिस्तथा । चतुःसूत्राधिकारानप्यष्टादश विदुर्बुधाः ॥
पञ्चसूत्राधिकृतयः पञ्चसंख्याः प्रकीर्तिताः । षट् सूत्राश्च तथा ह्यष्ट सप्तसूत्रा दश स्मृताः ॥
अष्टसूत्राणि चत्वारि चतस्रो नवसूत्रकाः । दशसूत्राधिकृतयः चतस्रः परिकीर्तिताः ॥
अंशे त्वेकादश प्रोक्ताः ज्ञाधिकारे चतुर्दश । पञ्चदशोभयलिङ्गे पुरुषार्थे तु विंशतिः ॥
अध्यायपादाधिकृतिसूत्राणां गणनां त्विह । वेदचूडार्ययोगीत्थं सञ्जग्राह सतां मुदे ॥ ६५



## सिद्धान्तपूर्वपक्षादि सूत्रसंख्या

1 लक्ष्मीनृसिंहं संसेव्य गुरुपारंपरीं तथा । सिद्धान्तपूर्वपक्षादि सूत्राणां गणनोच्यते ॥
2 तत्रारम्भे त्वधिकृतेः शतं त्रीणि च विंशतिः । सिद्धान्तसूत्रसंख्यैवं मुनिना कथिता मता ॥
3 पूर्वपक्षयुतान्याहुरेकादश बुधोत्तमाः । पूर्वपक्षप्रधानेषु मध्ये द्वाविंशतिर्मता ॥
4 सिद्धान्तसूत्रसंख्या तु पराधिकरणे त्रयम् । सिद्धान्तगुणसूत्राणि द्विषष्टिश्च शतद्वयम् ॥
5 पूर्वपक्षयुतान्येकपञ्चाशच्च गुणास्स्मृताः ॥
6 पूर्वपक्षप्रधानानां सूत्राणामेकविंशतिः । सिद्धान्तिच्छायया युक्तं सूत्रमेकं च विद्यते ॥
7 सप्तविंशतिसूत्राणि पूर्वपक्षगुणास्स्मृताः ॥
8 षट् पूर्वपक्षसूत्रणि चाधिकारेषु मध्यतः । एषां सिद्धान्तसूत्राणि षट् तत्रैव भवन्ति हि ॥
9 मुनिभिस्स्वमतेनोक्तान्याहुर्द्वादश मध्यतः । विशेषतः पूर्वपक्षखण्डनार्थतया बुधाः ॥



1 द्वात्रिंशत् प्रथमेऽध्याये द्वितीये त्वेकविंशतिः ।
एकचत्वारिंशदथ त्वेकोनत्रिंशदुत्तरे ।
सिद्धान्तसूत्रगणना त्वारम्भेऽधिकृतेर्मता ॥

2 प्रथमे द्वे द्वितीये तु चत्वार्येव च सन्ति हि ।
चत्वार्येव तृतीये तु तुरीये त्वेकमेव हि ।
पूर्वपक्षयुतानीत्थं सूत्राण्याहुर्बुधोत्तमाः ॥

3 प्रथमे त्वेकसूत्रं स्यात् द्वितीये चाष्ट सन्ति हि ।
त्रयोदश तृतीये तु त्रीण्येव त्वन्तिमे विदुः ।
पूर्वपक्षाधिकरणे सिद्धान्तांश्च वदन्ति हि ॥

4 आद्ये त्र्यशीतिसूत्राणि द्वितीये तु त्रिसप्ततिः ।
तृतीये सप्ततिस्सप्त ह्येकोनत्रिंशदन्तिमे ।
सिद्धान्तगुणसूत्राणां स्वच्छानां गणना मता ॥

5 आद्ये षोडश सूत्राणि द्वितीये पञ्चविंशतिः ।
तृतीये त्वष्ट सूत्राणि तुरीये द्वे प्रचक्षते ।
पूर्वपक्षयुतान्यत्र गुणसूत्राणि सन्ति हि ॥

6 आद्येत्वेकं द्वितीयेऽष्ट तृतीये गमना नव ।
त्रीण्यन्तिमे च सिद्धान्तिच्छायायुक् त्वेकमेव हि
पूर्वपक्षप्रधानानि त्वारम्भेऽधिकृतेर्विदुः ॥

7 प्रथमेत्वेकसूत्रं स्यात् द्वितीयेऽष्ट मतानि च ।
चतुर्दश तृतीये तु चत्वार्येवान्तिमे विदुः ॥
गुणसूत्राणि पूर्वस्मिन् पक्षे बोध्यानि सन्ति हि ॥

8 षट् पूर्वपक्षसूत्राणि तृतीयाध्यायगोचराः ।
सिद्धान्ताधिकृतेर्मध्ये द्योतमानानि सन्ति हि ॥
एषां सिद्धान्तसूत्राणि षट् तत्रैव भवन्ति हि ॥

७ प्रथमे द्वे द्वितीये तु द्वयं त्रीणि तृतीयके ।
तुरीये पञ्च चोक्तानि मुनिभिरस्वमतेन वै ॥
सिद्धान्तप्रतिकूलानि पूर्वपक्षनिराकृतेः ॥
सिद्धान्तपूर्वपक्षादिसूत्राणां मुनिसम्मता ।
गणना वेदचूडार्ययतीन्द्रैरन्वगृह्यत ॥

इति श्रीमद्वेदमार्गेत्यादिबिरुदावळीमेदुराणां श्रीमदहोबिलमठदिव्यास्थाने चतुरधिक चत्वारिंशत्-संख्यासंख्यातपट्टाभिषेकपरिमण्डितानां श्रीवण्शठकोप श्रीवेदान्तदेशिकयतीन्द्रमहा-देशिकानां कृतिषु अधिकरणसूत्रसंख्याविषयबोधिनी, अध्यायपादाधि-करणसूत्रसंख्या सिद्धान्तपूर्वपक्षादिसूत्रसंख्या च संपूर्णाः ॥

इत्थं श्रीवण्शठारिश्रुतिशिखरगुरुप्रख्ययोगिप्रवीणैः
कृत्वा प्राङ्मुद्रयित्वा प्रकटितमखिलं ब्रह्मसूत्रानुबन्धि ।
भूयस्तैः शोधयित्वा प्रहितमिह सह प्रापयद्भिः प्रकाशं
कृत्वा श्रीभाष्यटीकान्वितमखिलबुधप्रेक्ष्यमेषोऽस्मि धन्यः ॥

उत्तमूर्-ति-वीरराघवाचार्यः

उभयवेदान्तग्रन्थमाला

शुभमस्तु

॥ श्रीः ॥

भगवन्तं बादरायणं वेदव्यासमित्थमनुस्मरन्ति—

लक्ष्मीं वक्षसि मस्तके च मकुटं रम्यं जटाकल्पितं (मण्डलम्)
चिन्मुद्रामपि पुस्तकञ्च करयोः चक्रं शिरस्युज्ज्वलम्
बिभ्राणः पुरतः कमण्डलुयुतः कूर्मस्थपद्मासनः
वेदव्यासमुनिः प्रसन्नवदनः चित्ते विधत्तां पदम्—इति ।

## शारीरके औपनिषदविद्याः


| | | |
|---|---|---|
| 1-1-5 | सद्विद्या—ईक्षत्यधिकरणे | 1 |
| 1-1-6 | आनन्दमयविद्या—आनन्दमयाधिकरणे | 2 |
| 1-1-7 | उद्गीथहिरण्मयपुरुषदृष्टिः—अन्तरधिकरणे | 3 |
| 1-1-8 | उद्गीथाकाशदृष्टिः—आकाशाधिकरणे | 4 |
| 1-1-9 | प्रस्तावप्राणदृष्टिः—प्राणाधिकरणे | 5 |
| 1-1-10 | गायत्रीविद्या—कौक्षेयज्योतिर्विद्या च ज्योतिरधिकरणे | 6, 7 |
| 1-1-11 | प्रतर्दनविद्या—इन्द्रप्राणाधिकरणे | 8 |
| 1-2-1 | शाण्डिल्यविद्या—सर्वत्रप्रसिद्ध्यधिकरणे | 9 |
| 1 2-2; 1-3 6; 1-4-1 | नाचिकेतविद्या—अत्त्रधिकरणादौ | 10 |
| 1-2 3 | उपकोसलविद्या—अग्नित्रयविद्या च अन्तराधिकरणे | 11-12 |
| 1-2-4 | अन्तर्यामिविद्या (ब्राह्मणं)—अन्तर्याम्यधिकरणे | 13 |
| 1-2-5; 1-3-1; 1-3-3 | अक्षरविद्या—अदृश्यत्वादिगुणकाधिकरणादौ | 14 |
| 1-2-6 | वैश्वानरविद्या—वैश्वानराधिकरणे | 15 |
| 1-3-2 | भूमविद्या—भूमाधिकरणे | 16 |
| 1-3-3 ; 1-2-5 | गार्ग्यक्षरविद्या—अक्षराधिकरणे | 14 |
| 1-3-4 | त्रिमात्रप्रणवविद्या—ईक्षतिकर्माधिकरणे | 17 |
| 1-3-5 ; 1-3 10 | दहरविद्या—दहराधिकरणे | 18 |
| 1-3-8 | मधुविद्या—मध्वधिकरणे | 19 |
| 1-3-9 | संवर्गविद्या—सत्यकामविद्या च अपशूद्राधिकरणे | 20.21 |
| 1-4-3 | ज्योतिषांज्योतिर्विद्या—संख्योपसंग्रहाधिकरणे | 22 |
| 1-4-5 | बालाकिविद्या—जगद्वाचित्वाधिकरणे | 23 |
| 1-4-6 | मैत्रेयीविद्या—वाक्यान्वयाधिकरणे | 24 |

| | | |
|---|---|---|
| 2-4-1 | अधिकरणे—[ असद्वा इति शतपथगा श्रुतिः कारणचित्याग्निसाधननिरूपणशेषभूता ] | 25 |
| 3-1-1 | पञ्चाग्निविद्या 1. | 26 |
| 3 2-1 | बृहदारण्यकदहरविद्या 2. | |
| 3-2-5 | उभयलिङ्गाधिकरणेऽभिप्रेता माण्डूक्यविद्या 3. तत्रैव 21 सूत्रे मूर्तामूर्तब्राह्मणविद्या 4. | 27, 28 |
| 3-3-2 | उद्गीथप्राणविद्या 5. उद्गातृप्राणविद्या च 6. | 29, 30 |
| 3-3-3 | ज्येष्ठश्रेष्ठप्राणविद्या 7. | 31 |
| 3-3-7 | अहर्व्याहृतिब्रह्मविद्या 8 ; अहंव्याहृतिब्रह्मविद्या च 9. | 32, 33 |
| 3-3-9 | आयुःफलकपुरुषविद्या 10 ; न्यासविद्या च 11. | 34, 35 |
| 3-3-12 | पर्यङ्कविद्या 12. | 36 |
| 3-3-15 | उषस्तकहोलविद्या 13. | 37 |
| 3 3-17 | उद्गीथादिविद्याः 14. | 38 |
| 3-3-20 | पूर्वविकल्पाधिकरणे अग्निविद्याः 15. | 39 |
| | तत्रैव मण्डलपुरुषमृत्युसादृश्यविद्या 16; लोकम्पृणादृष्टिविद्या च 17. | 40, 41 |
| 3-3-21 | जीवात्मोपासना 18. | 42 |
| 3-3-26 | यथाश्रयभावाधिकरणे दर्शनाच्चेति सूत्रे यज्ञपवपानदृष्टिः 19. | 43 |
| 3-4-1 | पुरुषार्थाधिकरणे 13 सूत्रे ईशावास्यविद्या 20. | 44 |
| 3-4-7 | उषस्त्युपदिष्टविद्या 21, 22. | 45, 46 |


शुभमस्तु



